'सूत्रभाष्यादि शास्त्रं यत् तत् साक्षात् वेदसाधनम् ।
श्रोतव्यं स्वगुरोः स्वात्मस्वरूपप्रतिपत्तये ॥'

इत्युक्तम् । अत्र स्वात्मशब्दः न अन्तर्याम्यादिपरः, अनन्तरग्रन्थविरोधात् । अनन्तरं च

आत्मलाभात्परं नास्ति किञ्चिन्मात्रमपि द्विजाः ।
अतःस्वात्मानमीशानं लभेत स्वात्मना स्वयम् ॥

लब्धस्य लाभः अलब्धस्य लब्धव्यस्य तथैव च ।
द्विधा लाभः, स्वकं रूपं तत्र लब्धं हि सन्ततम् ॥

लब्धस्यालब्धताऽज्ञानात् लाभस्तस्यैव वेदनात् ।
स्वात्मलाभः स्वतः स्वात्मवेदनोत्पत्तिरेव हि ॥' इत्युक्त्वा

'अस्ति स्वात्मैव नैवान्यत् वस्तुतत्त्वनिरूपणे ।
व्यावहारिकदृष्ट्यैव विभाति स्वात्मनः पृथक् ॥

समस्तस्याप्यभावत्वात् भावः स्वात्मैव केवलम् ।
अस्यैवोपाधिभेदेन विभेदः कल्पितः स्वयम् ॥

नैव स्वाभाविको भेदो यतो दृश्यः स आत्मनः ।
स्वभावादेव यः साक्षी स एव परमश्शिवः ॥

तदैक्यं परमा मुक्तिः जीवसंज्ञस्य देहिनः ।
स्वत एव त्वभिन्नस्य तदैक्यं परमात्मना ॥

तदैक्याज्ञाननाशेन स्वत एव प्रकाशते ।
महदादि जगत् शून्यपर्यन्तमखिलं जडम् ॥

ब्रह्मात्मैक्यापरिज्ञानमहामायाविजृम्भणम् ।
संसारहेतुभूतस्य मूलाज्ञानस्य बाधकम् ।
ब्रह्मात्मैक्यपरिज्ञानं वेदादेव विजायते ॥' इति

इत्थं जगन्मिथ्यात्वजीवब्रह्माभेदप्रतिपादकोत्तरग्रन्थविरोधात् स्वात्मशब्दस्य अन्तर्याम्यादिपरत्वकल्पनं अयुक्तम् ।

केषाञ्चित् पुराणानां अप्रामाण्यकल्पकैरपि परैः अस्य पराशरपुराणस्य अप्रामाण्यं न शङ्कितुं शक्यम् । तत्र न तावत् कर्तृदोषात् अप्रामाण्यम् । 'पुलस्त्यवसिष्ठवरदानलब्धदेवतापरमार्थज्ञानः पराशरः परमाप्तः' इतिपरैरेव उक्तत्वात् । किञ्च पराशरपुराणे अष्टादशाध्यायान्ते शुकं प्रति अष्टादशाध्यायात्मकपुराणोपदेशानन्तरं

'मुनेः पराशरस्यास्य स्वानुभूतिप्रदायिनी ।
पार्वती परमा देवी तत्रैवाविरभूत् स्वयम् ॥'

इत्यनेन परदेवतासाक्षात्कारः पराशरस्योक्तः ॥

'विलोक्यशुकमाह्लादात् इदं वचनमब्रवीत् ।
मुनिनाऽनेन कल्याण यदुक्तं परमादरात् ।

सत्यमेव हि तत्सर्वं सत्यमुक्तं मयैव तु' इत्यनेन परदेवतया पराशरोक्तसर्वसत्यमिति प्रतिज्ञातमित्युक्तम् । तस्मात् पराशरपुराणस्य कर्तृदोषादप्रामाण्यं शङ्कितुमशक्यम् । तथा सति विष्णुपुराणस्याप्यप्रामाण्यं स्यात् ।

किञ्च विष्णुपुराणस्य सर्वोत्तरत्वे श्रुतप्रकाशिकायां चत्वारो हेतवः उपात्ताः । तथा च श्रुतप्रकाशिका—अस्य तावत् पुराणरत्नस्य प्राच्योदीच्यादिसर्वविद्वज्जनविदितस्य पुराणान्तरेभ्योऽपि प्रसिद्धिप्राचुर्यात् धर्मशास्त्रेषु मानवस्येव व्याकरणेषु पाणिनीयस्येव च सजातीयप्रबन्धेभ्यः प्रकर्षातिशयो न अपह्नोतुं शक्यते । अत एव प्रसिद्धिप्रचुर्यात् कौर्मादेरिव नष्टकोशत्वशङ्का दूरोत्सारिता । अनतिविस्तरत्वाच्च प्रक्षेपशङ्का नावतरति । परोक्तिसिद्धपरिग्रहातिशयश्चेदम्—इति ।

एतच्च हेतुचतुष्टयं पराशरपुराणेऽपि विद्यते । पराशरप्रणीतत्वादेव परोक्तिसिद्धपरिग्रहातिशयत्वमस्य सिद्धम् । अनतिविस्तरत्वाच्च प्रक्षेपशङ्का नावतरति । अनतिविस्तरत्वं च पुराणान्ते—

'अष्टोत्तरसहस्रैश्च श्लोकैरेव विनिर्मितम् ।

इदमष्टादशाध्यायैः शिवोऽत्रैव प्रदर्शितः' इतिवचनेनैव दर्शितम् । अत्र हि श्लोकानां अध्यायानां च संख्याकथनात् प्रक्षेपशङ्का निराकृता । अष्टोत्तरसहस्रश्लोकात्मकत्वात् अनतिविस्तरत्वं च सिद्धम् । अभियुक्तैः निबन्धनेषु उदाहृतत्वात् प्राच्योदीच्यादिसकलविद्वज्जनविदितत्वात् प्रसिद्धिप्राचुर्यं च सिद्धम् । तत एव नष्टकोशत्वशङ्काऽपि परास्ता ।

इत्थं हेतुचतुष्टयेनापि पराशरपुराणस्य पुराणरत्नत्वात् अप्रामाण्यशङ्कानवकाशात् तदुपबृंहितत्वात् अद्वैतश्रुतीनां अद्वैतपरत्वसिद्धिः ।

विष्णुपुराणेनाप्युपबृंहिताः अद्वैतश्रुतयः । तत्र हि उपक्रमे एव

'अविकाराय शुद्धाय नित्याय परमात्मने ।
सदैकरूपरूपाय विष्णवे सर्वजिष्णवे ॥'

इत्युक्तम् ।नेदं परेषामनुकूलम् । परैः विष्ण्वाख्यस्य परब्रह्मणः परमार्थतः कार्यकारणावस्थाद्वयाभ्युपगमात् कथं सदैकरूपरूपत्वम् ।

एवं जडभरतोपाख्याने स्पष्टं अद्वैतस्य परमार्थत्वमुक्तम् । तत्र यत्—

'परमात्मात्मनोर्योगः परमार्थ इतीष्यते ।
मिथ्यैतत् अन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः'

इत्यनेन अद्वैतस्य मिथ्यात्वमुक्तमिति—परैरुक्तम्, तत् पूर्वापरग्रन्थानभिज्ञतामूलकम् ।

तथा हि—भरतोपाख्याने राजभृत्यैः माहात्म्यापरिज्ञानात् शिबिकोद्वहने नियुक्तं जडभरतं प्रति राज्ञो वचनं 'किं श्रान्तोऽसि' इत्यादि। ततो राजानं प्रति भरतस्य वचनं

'आत्मा शुद्धोऽक्षरश्शान्तः निर्गुणः प्रकृतेः परः ।
प्रवृद्ध्यपचयौ नास्य चैकस्याखिलजन्तुषु । "इति ।

अत्र प्रत्यगात्मनः एकत्वं स्पष्टमुक्तम् । अनन्तरं 'भो भो विसृज्य शिबिकां' इत्यादि राजवचनम् । अनन्तरं भरतवचनं

'यदा समस्तभूतेषु पुमानेको व्यवस्थितः ।
तदा हि को भवान् सोऽहं इत्येतद्विफलं वचः ...... ।
शरीराकृतिभेदास्तु भूपैते कर्मयोनयः ।' इति ।

अनेन औपाधिक एवात्मभेदः न पारमार्थिक इति स्पष्टीकृतम् । एवं आत्मैक्यमुक्त्वा अनन्तराध्याये राजप्रश्नस्य भरतोत्तरं—

'श्रेयांस्येवं अनेकानि शतशोऽथ सहस्रशः ।
सन्त्यत्र परमार्थस्तु न त्वेते श्रूयतां च मे ॥' इति ।

अनेन पुत्रराज्यादिश्रेयसां अपरमार्थत्वमुक्त्वा, यज्ञादीनां केषाञ्चित् परमार्थत्वमाशङ्क्य तदपि निराकृत्य, अनन्तरं

'परमात्मात्मनोर्योगः परमार्थ इतीष्यते'

इत्यनेन जीवब्रह्मयोगस्य परमार्थत्वं आशङ्क्य

'मिथ्यैतत् अन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः ।'

इत्यनेन उक्तयोगस्य परमार्थत्वं निरस्तम् । निरस्यमानं मतमिदं भास्करादिमतं, औडुलोमिमतं, पाञ्चरात्रिकानां च मतम् । ते हि

'आमुक्तेर्भेद एव स्यात् जीवस्य च परस्य च ।
मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः' इति वदन्ति ।

ब्रह्मैव स्वाविद्यया संसरति, स्वविद्यया मुच्यते, न तु अन्यत् द्रव्यं अन्यद्रव्यात्मकतां एति-इति अद्वैत्यभिमतम् । पूर्वोक्तं मतं तु अद्वैतिनां दूष्यम् । तथा चोक्तं तैत्तिरीयकभाष्ये भगवत्पादैः—"न ह्यन्यस्य अन्यभावापत्तिः उपपद्यते । ननु तस्यापि तद्भावापत्तिः अनुपपन्नैव; न—अविद्याकृततादात्म्यापोहार्थत्वात्" इति ।

इत्थं मतान्तरस्य परमार्थत्वं निरस्य

'तस्माच्छ्रेयांसि अशेषाणि नृपैतानि न संशयः ।
परमार्थस्तु भूपाल सङ्क्षेपाच्छ्रूयतां मम ॥

एको व्यापी समः शुद्धः निर्गुणः प्रकृतेः परः ।
जन्मवृद्ध्यादिरहितः आत्मा सर्वगतोऽव्ययः ॥

परज्ञानमयोऽसद्भिर्नामजात्यादिभिर्विभुः ।
न योगवान् न युक्तोऽभूत् नैव पार्थिव योक्ष्यते ॥

तस्यात्मपरदेहेषु सतोऽपि एकमयं हि यत् ।
विज्ञानं परमार्थोऽसौ द्वैतिनोऽतथ्यदर्शिनः ॥

वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः ।
अभेदव्यापिनो वायोः तथाऽस्य परमात्मनः ॥

एकस्वरूपभेदश्च बाह्यकर्मप्रवृत्तिजः ।
देवादिभेदेऽपध्वस्ते नास्त्येव आवरणे हि सः ॥'

इति ग्रन्थेन अद्वैतस्य परमार्थत्वं द्वैतस्य मिथ्यात्वं च स्वमतमिति दर्शितम् ।

यत्त्वत्र परेषां व्याख्यानम्—

दृष्टान्ते अनेकरन्ध्रवर्तिनां वाय्वंशानां न स्वरूपैक्यं, अपि तु आकार-साम्यमेव तेषाम् । वायुत्वेन एकाकाराणां रन्ध्रभेदनिष्क्रमणकृतो हि षड्जादि-संज्ञाभेदः—इति,

यच्च श्रुतप्रकाशिकायां श्रौते आकाशदृष्टान्तेऽपि एवं कल्पनम् ,

तदयुक्तम् । दृष्टान्तस्य लोकप्रसिद्धमात्रालम्बनत्वात् । अस्ति हि आकाशमेक-मिति लोके प्रसिद्धिः । अतः तद्दृष्टान्तेन आत्मैकत्वसाधनं श्रुतिषु युज्यते । अन्यथा 'आकाशवत्सर्वगतश्च नित्यः' 'वायुर्यथैको भुवनं प्रविष्टः रूपंरूपं प्रतिरूपो बभूव' 'यथा सर्वगतं सौक्ष्म्यात् आकाशं नोपलिप्यते । सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते ॥' 'यथाऽऽकाशस्थितो नित्यं वायुस्सर्वत्रगो महान् । तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय' इत्यादिश्रुतिस्मृतिभिः आकाशवायुदृष्टान्तेन परमात्मनः एकत्वसर्वगतत्वनित्यत्वादिनिरूपणं अनुपपन्नं स्यात् । न ह्याकाशस्य वायोर्वा नित्यत्वं, उत्पत्तेः श्रुतिसिद्धत्वात् । किञ्च 'वेणुरन्ध्रविभेदेन' इति श्लोकद्वये, वायोस्सावयव-त्वादिनिरूपणेन स्वरूपभेदं प्रसाध्य तद्दृष्टान्तेन आत्मनः स्वरूभेदस्य साधने, परमात्मनः पारमार्थिकः स्वरूपभेदः साधितः स्यात् । तत्र 'तथाऽस्य परमात्मनः' इति परमात्मशब्दश्रवणात् । न च एतद्दोषभयात् अस्य श्लोकद्वयस्य प्रत्यगात्मपरत्वं शक्यं वक्तुम् । तदा 'तथाऽस्य प्रत्यगात्मनः' इति पठितव्यं स्यात् । ततश्च अयमर्थः—परमात्मैव स्वाविद्यया संसरति, तस्य कर्मकृतदेवादिशरीराख्योपाधिकल्पित एव स्वरूपभेदः, न तु पारमार्थिकः । स्वात्मज्ञानेन उपाधिनिवृत्तौ स भेदो निवर्तते—इति । अतः स्वरूपभेद एव अत्र प्रतिषिध्यत इति युक्तम् ।

किञ्च उत्तराध्याये ऋभुनिदाघसंवादात्मकं उपाख्यानमुक्त्वा,

'निदाघोऽप्युपदेशेन तेनाद्वैतपरोऽभवत् ।
सर्वभूतान्यभेदेन ददृशे स तदात्मना ॥' इति संवादं परिसमाप्य

'तथा त्वमपि धर्मज्ञ तुल्यात्मरिपुबान्धवः ।
भव सर्वगतं जानन्नात्मानमवनीपते ॥

सितनीलादिभेदेन यथैकं दृश्यते नभः ।
भ्रान्तिदृष्टिभिरात्माऽपि तथैकः सन् पृथक् पृथक् ॥

एकः समस्तं यदिहास्ति किञ्चित् तदच्युतो नास्ति परं ततोऽन्यत् ।
सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ॥

इतीरितिस्तेन स राजवर्यः तत्याज भेदं परमार्थदृष्टिः ।'
इत्यनेन आत्मैक्यज्ञानं अपवर्गसाधनमित्युक्तम् ।

तस्मात् 'परमात्मात्मनोर्योगः' इति पद्ये पाञ्चरात्रिकादिमतस्यैव प्रतिषेधः । अद्वैतसिद्धान्तस्तु प्रतिष्ठापितः ।

प्रत्युत परमतस्य प्रतिषेधः विष्णुपुराणे स्फुटमुपलभ्यते । तत्र हि 'परमात्मात्मनोर्योगः' इति पद्यात् पूर्वपद्ये

'ध्यानं नैवात्मनो भूप परमार्थार्थशब्दितम् ।
भेदकारि परेभ्यस्तु परमार्थो न भेदवान् ॥'
इत्युक्तम् ।

अत्र परमार्थवस्तुनो ध्यानं न परमार्थः इति, भेदवान् न परमार्थः इति चोक्तम् । तत् परेषां स्वसिद्धान्तविरुद्धम् । एवं उपबृंहणानुसारं श्रुतितात्पर्यविषयोऽर्थः अद्वैतसिद्धान्त एवेति स्थितः ।

किञ्च वेदवेदाङ्गव्याख्यातॄणां परमाप्तत्वेन सकललोकस्तुतानां महानुभावानां आत्मैक्यवाद एव श्रौत इत्यभिमतम्—इत्यतोऽपि अद्वैतदर्शनमेव श्रौतं दर्शनम् ।

तथा हि भट्टपादैः अर्थवादाधिकरणे 'एतेन क्रत्वर्थकर्तृप्रतिपादनेन उपनिषदां नैराकाङ्क्ष्यं व्याख्यातं' इत्यनेन ग्रन्थेन आपाततः क्रत्वर्थत्वमात्रमात्मज्ञानस्योक्त्वा, व्याकरणाधिकरणे आत्मज्ञानस्य क्रत्वर्थत्वं पुरुषार्थत्वञ्च वर्णितम् । यथोक्तं राणके—'एतच्च संसारिरूपात्मप्रतिपादनाभिप्रायम् । असंसारिरूपसगुण-

निर्गुणात्मज्ञानस्याभ्युदयनिःश्रेयससाधनत्वेन पुरुषार्थतायाः साधुशब्दाधिकरणे वक्ष्य-माणत्वात्—इति ।

व्याकरणाधिकरणे च—

'सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते ।
पराङ्गश्चात्मविज्ञानादन्यत्रेत्यवधारणात् ॥'

'आत्मज्ञानं हि संयोगपृथक्त्वन्यायेन क्रत्वर्थपुरुषार्थत्वेन ज्ञायते ।'
इत्यादिग्रन्थेन आत्मज्ञानस्य पुरुषार्थत्वमुक्तम् ।

अनेन जीवस्य ब्रह्मात्मकत्वं गम्यते । जीवब्रह्मणोर्भेदे तु जीवज्ञानस्य क्रत्व-र्थत्वात् तद्भिन्नब्रह्मज्ञानस्य पुरुषार्थत्वात् 'एकस्यतूभयत्वे संयोगपृथक्त्वं' इति न्यायो नावतरति । अत एव उत्तरत्र तरतिशोकमात्मविदित्याद्यात्मज्ञानफलश्रुतीनामर्थवादत्वं परिहर्तुं 'अप्रकरणगतानैकान्तिकक्रतुसंबन्धात्मसंबन्धानाञ्च न अञ्जनखादिरघृतादि-फलश्रुतिवदर्थवादत्वं' इत्युक्तम् । राणके च—नन्वासां फलश्रुतीनां पर्णमयीन्यायेन अर्थवादत्वस्य संबन्धग्रन्थेऽभिहितत्वात् न फलसमर्पकत्वं युक्तमित्याशङ्क्याह—अप्र-करणगतेति । न चात्मनो द्वारभूतस्यैकान्तिकः—स्वाभाविकः क्रतुसंबन्धोऽस्ति, शरीरसंबन्धोपाधिकत्वात्कर्तृत्वस्य, अशरीरिरूपात्मज्ञाने तदभावात्—इत्युक्तम् । न हीदं भेदवादे घटते, तटस्थेश्वरस्य क्रतुसंबन्धस्य गगनकुसुमायितत्वात् 'जुह्वादीना-मव्यभिचरितक्रतुसंबन्धात्तत्फलश्रुतिरर्थवादः आत्मनस्तु क्रतुसंबन्धस्यौपाधिकत्वेना-स्वाभाविकत्वान्न तज्ज्ञानफलश्रुतेः अर्थवादत्वं' इति वक्तुमशक्यत्वात् ।

किञ्च तर्कपादे शबरस्वामिना देहातिरिक्त आत्मा साधितः । तत्र भट्टपादैः— 'इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या । दृढत्वमेतद्विषयश्च बोधः प्रयाति वेदान्तनिषेवणेन' इति श्लोके देहातिरिक्ते प्रत्यगात्मनि वेदान्तानां प्रामाण्यमुक्तम् । इत्थं 'कर्त्रात्मपरा वेदान्ताः' इति निरीश्वरवादिनां मीमांसकानां मतं वेदान्तविरुद्धमनादृत्य परमात्मविवक्षया वेदान्तानां अकर्तरि प्रत्यगात्मनि प्रामाण्य-मभ्युपगम्य 'तरतिशोकमात्मवित्' 'कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्व-मिच्छन्' 'सर्वांश्चलोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्यविजानाति' 'ब्रह्मवेद ब्रह्मैव भवति' इत्याद्यात्मज्ञानफलश्रुतीनां स्वार्थपरत्वसमर्थनात् भट्टपादानां अद्वैतमौपनिषदमित्यभिमतमिति—बालानामपि सुगमम् ।

विशिष्य वेदान्ततात्पर्यनिर्णायकब्रह्मसूत्राक्षरार्थालोचनेऽपि अद्वैतदर्शनमेव वेदान्तदर्शनमिति स्फुटम् ।

तथा हि—"अथातो ब्रह्मजिज्ञासा" इत्यत्र मुमुक्षोः मोक्षसाधनं ब्रह्मज्ञानं इति सूत्रितम् । ब्रह्मज्ञानस्वरूपं च चतुर्थाध्याये सूत्रितम् । 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इति । तत्र हि फलाध्याये 'आत्मेतितूपगच्छन्ति ग्राहयन्ति च' इति ब्रह्मात्मैक्यनिरूपणपरं अधिकरणम् । तत्र—शास्त्रप्रतिपाद्यः परमात्मा किं अहमिति प्रत्यक्त्वेन ग्रहीतव्यः किं वा मदन्य इति पराक्त्वेन—इति संशय्य, अपहतपाप्मत्वादिगुणः परमात्मा, तद्विपरीतगुणः शारीरः, अतः तयोस्तादात्म्या-योगात् पराक्त्वेनैव ग्रहीतव्य इति प्रापय्य; 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' इति जाबालाः अहंब्रह्मास्मीति वाजसनेयिनश्च आत्मत्वेनैनमुपगच्छन्ति । ग्राहयन्ति च आत्मत्वेनैनं वेदवाक्यानि 'एष त आत्माऽन्तर्याम्यमृतः' 'एष त आत्मा सर्वान्तरः' इत्यादीनि । अतः अहमित्येव ग्रहीतव्यः—इति राद्धान्तितम् ।

यस्त्वत्र परेषां कल्पनम्—उपासितुरात्मेत्येवोपास्यं, उपासिता प्रत्यगात्मा स्वशरीरस्य स्वयं यथा आत्मा तथा आत्मनोऽपि परंब्रह्म आत्मा इत्येवोपासीत—इत्यर्थ इति;

तदेतत्कल्पनं पूर्वोक्तमन्वादिपरमाप्तकृततत्त्वमस्यादिमहावाक्यव्याख्यानविरो-धात् अनादर्तव्यम् । किञ्चेदं कल्पनमनुपपन्नम् । जीवात् परमार्थतो भिन्नस्य ब्रह्मणः आत्मशब्दार्थत्वाभावात् । आत्मशब्दो हि जीवपरः योगेन रूढ्या च । योगश्च वेदोपबृंहणेन दर्शितः । तथा च महाभारते 'यच्चाप्नोति यदादत्ते यच्चात्ति विष-यानिह । यच्चास्य सन्ततो भावः तस्मादात्मेति कीर्त्यते' इत्यात्मशब्दव्युत्पत्तिस्म-रणम् । अस्माद्वेदोपबृंहणात् भोक्तुरेवात्मत्वं सिद्धम् । प्रसिद्धश्चात्मशब्दो जीवे श्रुत्यादिषु—

"आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इति श्रुतिः ।

'यद्यात्मा मलिनोऽस्वच्छो विकारी स्यात् स्वभावतः ।
न हि तस्य भवेन्मुक्तिः जन्मान्तरशतैरपि' इति स्मृतिः ।

'आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गाः प्रमेयं' इति गौतमसूत्रम् ।

'नानात्मानो व्यवस्थातः' इति कणादसूत्रम् ।

'अस्ति आत्मा नास्तित्वसाधकाभावात्' इति कापिलं सूत्रम् ।

'नित्यशुचिसुखात्मख्यातिरविद्या' इति पातञ्जलं योगसूत्रम् ।

'एक आत्मनः शरीरे भावात्' इत्यतिरिक्तात्मसाधकं व्याससूत्रम् ।

'इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या ।'

इत्यभियुक्तानां वचनम् ।

'तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा' इति लौकिकं वचनम् ।

अत्र सर्वत्राप्यात्मशब्दो भोक्तरि प्रसिद्धः । इत्थं योगेन रूढ्या च आत्मशब्दस्य भोक्तृपरत्वात् तद्भिन्ने परमात्मनि वृत्तिरयुक्ता ।

किञ्च 'तदर्थ एव दृश्यस्यात्मा' इति पातञ्जलयोगसूत्रे तदर्थ एव दृश्यस्य आत्मा भवति—स्वरूपं भवतीत्यर्थः—इतिवैयासिकभाष्ये च आत्मशब्दस्य स्वरूपपरत्वदर्शनात्, जीवस्य ईश्वर आत्मेति वदता तयोरैक्यमुक्तं स्यात् । न हि भेदे सति जीवस्येश्वर आत्मा—स्वरूपं भवितुमर्हति । न हि घटस्य पट आत्मा, न वा कुड्यस्य कुसूल आत्मा ।

किञ्च जीवस्य ईश्वर आत्मेति वदता जीवस्येश्वरकार्यत्वं स्वीकृतं स्यात् । कार्यस्य हि कारणमात्मा । अस्ति हि लोके प्रसिद्धिः—मृदात्मको हि घटः तन्त्वात्मकः पटः इति । जीवस्य कार्यत्वे च अनित्यात्मवादिलोकायतादिमतप्रवेशस्स्यात् ।

किञ्च जीवं प्रति ब्रह्मण आत्मत्वे शुक्तौ रजतवत् रज्जौ सर्पवच्च ब्रह्मणि जीवः कल्पितः स्यात् । कल्पितस्याधिष्ठानमात्मा । यथोक्तं विष्णुपुराणे—'ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः । अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे' इति । उक्तञ्च कौर्मे—'ज्ञानस्वरूपमेवाहुः जगदेतद्विचक्षणाः । अर्थस्वरूपमेवाज्ञाः पश्यन्त्यन्ये कुदृष्टयः' इति । अर्थस्य ज्ञानमेव स्वरूपं, न तु तस्य स्वातन्त्र्येण स्वरूपमस्ति, कल्पितत्वात्—इति वचनद्वयस्यार्थः । ततश्च जीवस्य ब्रह्मणि कल्पितत्वे चिदाभासवादः स्वीकृतः स्यात् ।

किञ्च जीवस्य शरीरत्वात् तं प्रति ब्रह्मणः आत्मत्वमित्यनुपपन्नम् । शरीरत्वप्रतिपादकस्य यस्यात्माशरीरमित्यादिवचनस्य 'स्वे महिम्नि प्रतिष्ठितः' इत्यादिव्यपदेशवत् गौणत्वात् । मुख्यत्वे तु शरीरस्य सुखदुःखभोगसाधनत्वात् ईश्वरस्य भोक्तृत्वापत्त्या अनीश्वरत्वं स्यात् ।

अत एव श्रुतिः यस्यात्माशरीरमित्याद्युक्त्वा "नान्योऽतोस्ति द्रष्टा" इत्यनेन ब्रह्मातिरिक्तं चेतनं प्रतिषिध्य "अतोऽन्यदार्तं" इत्यनेन ब्रह्मातिरिक्तं अचेतनञ्च प्रतिषेधति । ततश्च 'यस्यपृथिवीशरीरं, यस्यात्माशरीरं' इत्यादि 'जर्तिल्यवाग्वा वा जुहुयात् गवीधुकयवाग्वा वा' इत्यादिवत् अपवादार्थैव अध्यारोपमात्रमिति गम्यते । तस्मात् जीवस्य शरीरत्वात् ब्रह्मणः आत्मत्वमिति कल्पनं अनुपपन्नम् ।

यत्तु-भोगसाधनत्वं न शरीरत्वं किंतु नियम्यत्वं शरीरत्वं–इति कल्पनं, तदप्यसारम् । तस्मिन् पक्षे हि सुतरां आत्मत्वमनुपपन्नम् । न हि नियम्यस्य भृत्यस्य प्रभुरात्मा भवति । तथा सति नियम्यानां भृत्यानां चित्रप्रतिबिम्बादिवत् नैरात्म्यं स्यात् ।

किञ्च नियम्यत्वं दुर्निर्वचम् । वागादिभिः प्रेर्यमाणत्वं नियम्यत्वमितिचेन्न । ब्रह्मणो वागाद्यभावात् । अन्यथा "अवागमनाः" इत्यादिश्रुतिविरोधात्, पृथिव्यादीनां नियम्यत्वाभावप्रसङ्गाच्च । न हि जडाः पृथिव्यादयः वागादिभिः वचनादिभिर्वा प्रेरयितुं शक्यन्ते । वचनादिव्यापारवत्त्वे ब्रह्मणः सविकारत्वं स्यात् । नापि मृदादीनां कुलालादिभिरिव हस्तादिभिः प्रेर्यमाणत्वं नियम्यत्वम् । जीवानां नियम्यत्वाभावप्रसङ्गात् । न हि निरवयवा जीवा हस्तादिभिः प्रेरयितुं शक्यन्ते । किञ्च हस्तादिमत्त्वात् अब्रह्मत्वं स्यात् । "अचक्षुःश्रोत्रं तदपाणिपादं" इति हि श्रुतिः । किञ्च प्रेरकत्वात् कुलालादिवत् सविकारत्वं स्यात् । न च अयस्कान्तन्यायेन निर्विकारस्य प्रेरकत्वमिति युक्तम् । 'पुरुषाश्मवदिति चेत् तथाऽपि' इति सूत्रे सूत्रकृतैव अयस्कान्तदृष्टान्तस्य दूषितत्वात् । तस्मात् सर्वथा ब्रह्मणः प्रेरकत्वं चिदचिद्वस्तुनोः प्रेर्यमाणत्वं च असिद्धम् । तत्सिद्धावपि तदात्मत्वमीश्वरस्य असिद्धम् । राज्ञो भृत्यान् प्रति आत्मत्वाभावात् ।

तस्मात् सर्वथा जीवभिन्ने ब्रह्मणि आत्मशब्दानुपपत्तेः 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इत्यधिकरणे परकीयं कल्पनमसारम् ।

तदेवं प्रत्यग्ब्रह्मैक्यज्ञानं मोक्षसाधनमिति ब्रह्मसूत्रेण न्यायतो निर्णीतम् ।

तदर्थं तृतीयाध्याये ज्ञानसाधनानि निरूपितानि । तत्र वैराग्यं प्रथमे पादे उत्क्रान्तिनिरूपणद्वारेणोपपादितम् । द्वितीये, आद्येन अधिकरणचतुष्टयेन त्वंपदार्थः

शोधितः । तत्र स्वप्नसृष्टेर्मिथ्यात्वेन, सुखदुःखाद्यवभासेऽपि जीवोऽसङ्ग एवेति निरूपितः । सुषुप्तौ ब्रह्मैक्येन तदसङ्गत्वं अनुभावितम् । तस्यैव पुनःप्रबोधेन नित्यत्वमुक्तम् । मूर्च्छादिविचारेण श्वासादिसर्वव्यवहारलोपेऽपि मरणे जीवनाशो न शङ्कनीयः—इति । अनन्तरं "नस्थानतोऽपि" इत्याद्यधिकरणैः तत्पदार्थः शोधितः ।

यत्तु परैः "दोषदर्शनाद्वैराग्योदयाय जीवस्यावस्थाविशेषाः निरूपिताः । इदानीं ब्रह्मप्राप्तितृष्णाजननाय प्राप्यस्य ब्रह्मणो निर्दोषत्वकल्याणगुणात्मकत्वप्रतिपादनाय आरभते नस्थानतोऽपीत्यादि इत्युक्तम् । तदयुक्तम्—छान्दोग्ये पञ्चाग्निविद्यायां उत्क्रान्तिं निरूप्य "तस्माज्जुगुप्सेत" इत्युक्तम् । याज्ञवल्क्यस्मृतौ च अवेक्ष्यागर्भवासाच्च कर्मजा गतयस्तथा" इत्यादिना गर्भवासपरलोकगमनागमनादिपर्यालोचनस्य वैराग्यहेतुत्वमुक्त्वा अनन्तरं ज्ञानं विहितम् । एवं श्रुतिस्मृतिपर्यालोचनया प्रथमपादार्थस्यैव ज्ञानसाधनवैराग्यार्थत्वं युक्तम् । स्वप्नाद्यवस्थानिरूपणस्य असङ्गत्वादिज्ञानहेतुत्वात् ब्रह्मात्मैक्यनिर्णयद्वारा मोक्षोपयोगित्वम् । बृहदारण्यके जनकयाज्ञवल्क्यसंवादे 'कतम आत्मेति' इत्यादिना 'अत ऊर्ध्वं विमोक्षायैव ब्रूहि' इत्यादिसन्दर्भपर्यालोचने मोक्षोपयोगित्वप्रतीतेः । छान्दोग्येऽपि प्रजापतिविद्यायां अवस्थात्रयनिरूपणस्य मोक्षोपयोगित्वं प्रतीयते ।

किञ्च बृहदारण्यके अवस्थात्रयनिरूपणसन्दर्भे-देहादिव्यतिरिक्तत्वं स्वप्रकाशत्वं असङ्गत्वं च स्वप्नावस्थामाश्रित्य निरूपितम् । अद्वैतत्वं अलुप्तदृष्टिस्वरूपत्वं आनन्दैकस्वभावत्वं च सुषुप्त्यवस्थामाश्रित्य प्रतिपादितम् । किमेतत्सर्वं ब्रह्मैक्ययोग्यजीवस्वरूपनिर्णयाय उपयुक्तं उत वैराग्याय ? । परिशीलयन्तु कृतबुद्धयः ।

माण्डूक्यतापनीययोश्च अवस्थात्रयं साधनं तुरीयं प्राप्यमिति मोक्षोपयोगित्वमेवोक्तम् । इत्थं श्रुतिसूत्रयोः अनुगमः अद्वैतसिद्धान्ते एव ।

यत्तु स्वप्नस्य सत्यत्वं परैः सूत्रार्थतया उक्तं तत् 'वैधर्म्याच्च न स्वप्नादिवत्' इति सूत्रविरुद्धम् । यदपि 'मायामात्रं तु' इत्यत्र मायाशब्दःआश्चर्यवाचीत्युक्तं तदपेशलम् । बृहन्नारदीयवचनविरोधात् । मायाशब्दस्य आश्चर्यपर्यायत्वं न कोशादिषु दृष्टम् । 'देवमायेव निर्मिता' इत्यत्रापि दुर्घटत्वमेव मायाशब्दार्थः । "मायामात्रमिदं द्वैतं" इति श्रुतौ तदर्थकतयैव मायाशब्दः उपबृंहणैः निरूपित इति प्रागुक्तम् । "मायया(ऽ)पहृतज्ञानाः" "तस्मिंश्चान्यो मायया सन्निरुद्धः" इत्यादौ

मायाशब्दस्य आश्चर्यार्थकत्वं अनन्वितम् । भागवतेऽपि "अविद्यमानोप्यवभाति हि द्वयो ध्यातुर्धिया स्वप्नमनोरथौ यथा" इति स्वप्नमिथ्यात्वं स्पष्टमुक्तम् । ततश्च माया-शब्दोमिथ्यापदार्थवचनः । 'मायां तु प्रकृतिं विद्यात्' 'एषा माया स्वाव्यतिरिक्तानि क्षेत्राणि दर्शयित्वा जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति' इत्याद्याश्च श्रुतयः अत्रैवार्थे समञ्जसाः ।

एवं 'नस्थानतोपि' इत्याद्यधिकरणैः तत्पदार्थः शोधितः निष्प्रपञ्चनिर्विशेषस्व-प्रकाशस्वरूप इति ।

यत्तु नस्थानतोपीतिसूत्रस्य परकीयं व्याख्यानं, तदयुक्तम्—तत्र 'उभयलिङ्गं' इत्यस्य 'सर्वत्र' इत्यनेनैव अभिसंबन्धकथनेन निषेधस्य प्रतियोग्यध्याहारक्लेशात्, उपाध्यवस्थानप्रयुक्तदोषसंबन्धाभावप्रतिपादनपरत्वेन सूत्रव्याख्यानात् तस्य च संभोगप्राप्तिसूत्रेणैव गतार्थत्वात् सूत्रस्य वैयर्थ्यापादकत्वात्, अधिकाशङ्कानिराक-रणस्य सौत्रहेतुना अलाभात् सौत्रहेतोरपि आनर्थक्याच्च ।

"भेदादितिचेन्न प्रत्येकमतद्वचनात्" इति सूत्रस्यापि परकीयव्याख्यान-मयुक्तम् । भेदादित्यस्य देहयोगरूपावस्थाभेदात् इत्यर्थकरणेन अध्याहारक्लेशात् उपस्थितिकल्पनक्लेशाच्च । अतद्वचनादित्यत्र तच्छब्दस्य दोषसंबन्धपरतया व्याख्या नेन प्रकृतावमर्शित्वस्वारस्यभङ्गाच्च ।

'अरूपदेव हि तत्प्रधानत्वात्' इति सूत्रं च निर्विशेषपरतां वेदान्तानां स्फुटयति । बहुव्रीह्यैव अर्थलाभेऽपि मतुबन्तप्रयोगः आपस्तम्बश्रौतसूत्रादिषु दृष्टः, 'असुब्वतः' इति महाभाष्यप्रयोगोऽपि ।

"आह च तन्मात्रं" इतिसूत्रस्य प्रकाशमात्रं ब्रह्म इत्यस्मिन्नेवार्थे स्वारस्यम् । यत्तु परेषां 'तन्मात्रमाह नान्यद्वाक्यान्तरावगतं निषेधति' इति व्याख्यानं, तत् न स्वरसम् । 'तदाह केवलं' इति हि तदा स्यात् ।

"प्रकृतैतावत्त्वं हि" इति सूत्रे प्रकृतपदं "अथात आदेशो नेति नेति" इति श्रुतेः ब्रह्मणि मूर्तामूर्तप्रपञ्चनिषेधार्थकत्वे एव स्वरसम् । न तु एतावत्त्वप्रति-षेधपरत्वे, एतावत्त्वस्य अप्रकृतत्वात्, अलोकसिद्धत्वाच्च । तस्य श्रौतत्वसाधने विधायनिषेधस्य प्रक्षालनाद्धीतिन्यायविषयता । अद्वैतसिद्धान्ते तु अध्यारोपापवाद-न्यायेन सार्थकता ।

एवञ्च निष्प्रपञ्चनिर्विशेषस्वप्रकाशरूपं ब्रह्म इत्येव उक्तसूत्रैः प्रतिपादितमिति युक्तम् ।

तदेवं जीवब्रह्मैक्यज्ञानोपयोगि जीवब्रह्मणोस्स्वाभाविकं रूपं सूत्रैर्निर्णीतम् ।

तदर्थं प्रपञ्चमिथ्यात्वं च सूत्रितम् । तथा हि—'असंभवस्तु सतोऽनुपपत्तेः' इति सूत्रे सतः अनुत्पत्तिरुक्ता । वियत्प्राणपादयोश्च प्रपञ्चस्य उत्पत्तिरुक्ता । तेन प्रपञ्चो न सन् इत्युक्तं भवति । 'नाभाव उपलब्धेः' इति सूत्रे दृश्यस्य प्रपञ्चस्य असत्त्वं निराकृतम् । तेन प्रपञ्चो न असन् इत्युक्तं भवति । 'नैकस्मिन्नसंभवात्' इति सूत्रे एकत्र सत्त्वासत्त्वे न संभवतः इत्युक्तम् । तेन प्रपञ्चस्य सदसद्रूपता नेत्युक्ता भवति । तदेवं प्रपञ्चः न सन् नासन् नापि सदसन् इत्युक्त्या सत्त्वेन असत्त्वेन सदसत्त्वेन वा अनिर्वाच्यत्वरूपं मिथ्यात्वं सूत्रोक्तम् । एतच्च पञ्चपादिकाकृद्भिरुपपादितं मिथ्यात्वम् ।

'प्रकृतैतावत्त्वं हि प्रतिषेधति' इति सूत्रेण "द्वे वाव ब्रह्मणो रूपे" इत्यादेः "अथात आदेशो नेतिनेति" इत्यन्तस्य तात्पर्यं निर्णीतम् । तत्र च सूत्रे प्रकृतशब्देन ब्रह्मणि प्रतीतो मूर्तामूर्तप्रपञ्च उक्तः, प्रतिषेधतीत्यनेन ब्रह्मण्येव तन्निषेध उक्तः । तेन प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं प्रपञ्चस्योक्तम् । इदमेव शुक्तिरूप्यादीनां मिथ्यात्वम् । एतच्च प्रपञ्चस्य सूत्रोक्तम् । एतच्च मिथ्यात्वं विवरणकृद्भिरुपपादितम् ।

जिज्ञासासूत्रे ब्रह्मज्ञानं जीवस्य मोक्षसाधनं सूत्रितम् । मोक्षश्च सर्वानर्थनिवृत्त्युपलक्षितं स्वप्रकाशपूर्णानन्दस्वरूपम् । तत्र आनन्दस्य स्वरूपत्वात् सर्वानर्थनिवृत्तेरेव ज्ञानप्रयोज्यत्वम् । अतश्च प्रमातृत्वकर्तृत्वभोक्तृत्वादिप्रमुखस्य सर्वस्याप्यनर्थस्य ज्ञाननिवर्त्यत्वसूचनात् प्रमातृत्वादेः मिथ्यात्वं सूचितम् । तेन प्रमेयस्य भोग्यादेः मिथ्यात्वमप्यर्थसिद्धम् । अनेन बन्धमिथ्यात्वमप्युक्तं भवति । स्पष्टञ्चैतदुपपादितं पञ्चपादिकाविवरणकृद्भिः । एवञ्च अनेन सूत्रेण ज्ञाननिवर्त्यत्वरूपं मिथ्यात्वं प्रपञ्चस्य सूचितम् । अज्ञानमूलकत्वसूचनात् । अन्यथा ज्ञाननिवर्त्यत्वं प्रपञ्चस्य न स्यात्, यतो ज्ञानमज्ञानस्यैव निवर्तकमिति ।

'आत्मनि चैवं विचित्राश्च हि' इति सूत्रेण जीवे स्वप्नप्रपञ्च इव ब्रह्मणि दृश्यप्रपञ्चः—इत्युक्तम् । अत्र आत्मशब्देन जीवस्यैव ग्रहणं युक्तम्, दृष्टान्तत्वात्,

एवंशब्देन च दृष्टान्तदार्ष्टान्तिकभावप्रतीतेः । परमात्मा] दार्ष्टान्तिकः ।[*] अत्र स्वाप्नपदार्थपर्यालोचनायां बृहदारण्यके "न तत्र रथाः" इत्यादिना स्वप्नदृश्यं निषिध्य "अथ रथान्" इति स्वाप्नसृष्टिरुक्ता । तेन स्वात्यन्ताभाववति प्रतीयमानत्वं स्वाप्नस्य व्यक्तं प्रदर्शितं भवति । एतद्दृष्टान्तकरणात् परिदृश्यमानप्रपञ्चस्य एवंरूपं मिथ्यात्वमिति सूचितं भवति । इदं च मिथ्यात्वं तत्वप्रदीपिकाकृदादिभिः उपपादितम् । 'अतस्मिंस्तद्बुद्धिः अध्यासः' इति भाष्योक्तं च ।

अनेनैव सूत्रेण प्रमाणसिद्धभिन्नत्वं प्रपञ्चस्य सूचितं भवति । स्वाप्नदृष्टान्तकरणादेव । स्वाप्नो हि न प्रमाणसिद्धः—इति संप्रतिपन्नम् । प्रमाणसिद्धत्वन्नाम दोषाजन्यज्ञानविषयत्वम् । स्वप्नो हि निद्रादिदोषाधीनज्ञानविषयः । तद्दृष्टान्तेन प्रपञ्चसृष्टिं उपपादयत् सूत्रं प्रपञ्चसृष्टेर्मिथ्यात्वोपपादने पर्यवसितम् । इदं च मिथ्यात्वं आनन्दबोधाचार्यैरुपपादितम् । अन्येषां सर्वेषां मिथ्यात्वप्रकाराणां अत्रैव अन्तर्भावः ।

बन्धमिथ्यात्वं 'उत्तराच्चेत् आविर्भूतस्वरूपस्तु' इति सूत्रेणापि स्फुटीकृतम् । दहराधिकरणे हि 'दहरः परमात्मा, उत्तरेभ्यः-अपहतपाप्मत्वादिसत्यसङ्कल्पत्वान्तेभ्यो हेतुभ्यः—इत्युक्त्वा, उत्तरात्—प्राजापत्यवाक्यात् जीवेऽपि अपहतपाप्मत्वादीनां अवगमात् न ब्रह्मासाधारणत्वमुक्तहेतूनामित्यतो न दहरस्य ब्रह्मत्वसाधकत्वम्—इत्याशङ्क्य, 'आविर्भूतस्वरूपस्तु' इत्युक्तम् । 'आविर्भूतस्वरूपो जीवः प्राजापत्यवाक्यप्रतिपाद्यः इत्युक्त्या उक्तहेतूनां ब्रह्मासाधारणत्वनिर्वाहः कर्तव्यः । स च जीवेश्वरैक्यमन्तरा न कर्तुं शक्यः । भेदे सति उक्तशङ्कायाः परिहारालाभात् । सति च ऐक्ये बन्धमिथ्यात्वं सिद्धम् । किञ्चेदं जीवस्य अपहतपाप्मत्वादिकं नित्यसिद्धं वक्तव्यम् । अन्यथा मुक्तौ आगन्तुकत्वे सम्पद्याविर्भावसूत्रविरोधः । तत्र हि सूत्रे मुक्तौ आगन्तुकरूपं निषिद्धमिति परेषामपि सम्मतम् । एवं 'पराभिध्यानात्तु तिरोहितं....' 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' इति सूत्रविरोधः । तत्र हि अपहतपाप्मत्वसत्यसंङ्कल्पत्वादेः बन्धमुक्त्योः तिरोभावाविर्भावयोरेव प्रतिपादनात् । तथा च अपहतपाप्मत्वादेः नित्यसिद्धत्वे बन्धमिथ्यात्वं दुर्वारम् । नित्यसिद्धं अपहतपाप्मत्वं हि सर्वदापाप्मरहितत्वम् । न च वस्तुतः सर्वदापाप्मरहिते पाप्मसम्बन्धः तन्मूलककर्तृत्वभोक्तृत्वसम्बन्धो वा पारमार्थिकः सम्भवति । एवं च बन्धमिथ्यात्वं सूत्रकृदभिप्रेतमिति स्फुटम् ।

तदेवं मोक्षसाधनीभूतजीवब्रह्मैक्यतज्ज्ञानोपयोगि सर्वं सूत्रोक्तं इति संक्षेपः।

ब्रह्मसूत्राणां शारीरकमीमांसाशास्त्रत्वप्रसिद्धिरपि जीवब्रह्मैक्यपरतां व्यनक्ति। ब्रह्मसूत्रेषु जीवो हि शारीरशब्देन निर्दिष्टः। शास्त्रस्यास्य शारीरकनामत्वं परेषामप्यभिमतम्। तदीयं शारीरपदव्याख्यानं तु असौत्रम्।

एवं ब्रह्मसूत्रेषु अद्वैतपरेषु सूत्रितानां अद्वैते वेदान्ततात्पर्यनिर्णायिकानां युक्तीनां सपरिकरं निरूपणाय शारीरकमीमांसाभाष्यं प्रणिन्युः श्रीमच्छङ्करभगवत्पादाचार्याः।

तस्यास्य भगवत्पादीयस्य शारीरकमीमांसाभाष्यस्य प्राधान्येन प्रवृत्तं व्याख्याप्रस्थानद्वयम्। तत्र श्रीपद्मपादाचार्यकृतपञ्चपादिकाप्रस्थानमेकम्। तस्य विस्तृता विवरणाख्या व्याख्या। विवरणेनैव पञ्चपादिकासिद्धान्तास्सर्वे सुज्ञेयाः। इदं पञ्चपादिकाप्रस्थानमाश्रित्य प्रस्थिता भाष्यव्याख्या श्रीरामानन्दमुनिप्रणीता रत्नप्रभानामिका, श्रीमदानन्दगिरिस्वामिप्रणीता न्यायनिर्णयाख्या अन्या। पञ्चपादिका तु चतुस्सूत्र्यन्तैव उपलभ्यते। परं तु उपरितनभाष्यस्यापि व्याख्यायां प्रवृत्ता स्यात्। यत आह अहङ्कारटीकायां—'विस्तरेण चैतत् सुगतमतपरीक्षायां वक्ष्यते' इति। पञ्चपादिकाविवरणे तु चतुस्सूत्र्यन्ते पञ्चपादिकाव्याख्याने अद्वैतसिद्धान्तप्रतिपाद्याः प्रमेयाः सर्वे सविमर्शं सोपपत्तिकं निरूपिताः। यतोऽप्यत्वेऽपि अद्वैतसिद्धान्तप्रक्रियाविषये कात्स्न्र्येन पञ्चपादिकाविवरणं आकरत्वेन प्रकाशते। व्यवह्रियते च अद्वैतग्रन्थकृद्भिस्तथैव, प्रमाणीक्रियते च।

अन्यत्तु आचार्यवाचस्पतिमिश्रकृतभामतीप्रस्थानम्। सा च भामती पञ्चपादिकाविवरणप्रस्थानतो वैलक्षण्येन प्रवृत्ता। यथा अवच्छिन्नो जीव इति भामती। प्रतिबिम्बो जीव इति पञ्चपादिका। विषयतया अविद्योपहितः ईश्वरः इति भामती। अविद्याबिम्ब ईश्वर इति पञ्चपादिका। शुद्धं ब्रह्म अन्तःकरणवृत्तेरप्यविषयः इति भामती। अन्तःकरणवृत्तिविषयः न तु चिद्विषयः इति पञ्चपादिका। मूलाज्ञानं शुद्धब्रह्माश्रितमिति पञ्चपादिका, जीवाश्रितमिति भामती। ब्रह्मात्मसाक्षात्कारः शब्दप्रमाणाद्भवति इति पञ्चपादिका। मनोरूपेन्द्रियेण भवतीति भामती। जगतो ब्रह्मैवोपादानं, तच्च विवर्तोपादानं, अविद्या तु दोषविधया निमित्तम्—इति भामती। अविद्या परिणाम्युपादानं ब्रह्म तु विवर्तोपादानं इति तु पञ्चपादिका। एवं बहुषु प्रक्रियासिद्धप्रमेयेषु वैलक्षण्येन प्रवृत्तमिदं अद्वैतपर्यवसायि प्रस्थानद्वयम्।

तत्र भामती तत्तदधिकरणे भाष्योक्तपूर्वपक्षं भाष्योक्तसिद्धान्तोपमर्देन परिपोष्य परिपोषितपूर्वपक्षनिरसनपुरस्सरं भाष्योक्तसिद्धान्तस्यैव भाष्येणैव व्यवस्थापनं कुर्वन्ती सती न प्रतिपदं भाष्यव्याख्याने प्रवृत्ता। तत्र तत्र घट्टार्थं विभज्य भाष्यारूढं करोति। अत एव भामत्याः भाष्यविभाग इति प्रसिद्धिः। अत्र भाष्यखण्डव्याख्यानावसरे यथायोगं मीमांसान्यायसञ्चारः बहुषु स्थलेषु क्रियमाणो दृश्यते।

कृत्स्नं शारीरकमीमांसाभाष्यं व्याचक्षाणा इयं भामती तत्रतत्र आस्तिक-नास्तिकदर्शनसिद्धान्तसिद्धानामर्थानां निरूपणे प्रसक्ते तत्तद्दर्शनप्रमाणभूतग्रन्थान् शब्दतोऽर्थतश्च निबध्नन्ती निबन्धसंज्ञां च लभते।

तमिमं भामतीनिबन्धं परमहंसपरिव्राजकाः श्रीअमलानन्दस्वामिनः वेदान्त-कल्पतर्वाख्यया व्याख्यया अलञ्चक्रुः। इयं व्याख्या अन्वर्थनाम्नी संक्षिप्तशब्दा बह्वर्था अतएव गभीरा भामतीनिबद्धानर्थान् विशदयति पोषयति व्यवस्थापयति, क्वचित् क्वचित् भाष्यपदवाक्यार्थं वर्णयति, भाष्योक्ताः श्रुतीः विवृणोति, भामतीप्रस्थाना-भिमतां प्रक्रियां भामतीमाश्रित्य तत्रतत्र विविच्य प्रदर्शयति च।

एवं बह्वर्थवहोऽयं कल्पतरुरपि, स्वार्थप्रकाशनपटीयसीं व्याख्यां आकाङ्क्षत इति अभिप्रयद्भिः श्रीनृसिंहाश्रमस्वामिभिः प्रोद्बोधिताः श्रीमदप्पयदीक्षितेन्द्राः कल्पतरुपरिमळाख्यां व्याख्यां आरचयामासुः। न केवलं इयं व्याख्या कल्पतरुं विकसयति। भाष्य - भामतीनिगूढान् भावानपि व्यञ्जयति। कल्पतर्वन्तग्रन्थलब्धं शास्त्रार्थं सविमर्शं परिष्कृत्य हस्तामलकीकरोति च।

परिमलस्यायमन्योऽप्यतिशयः—अप्रतिपत्त्यन्यथाप्रतिपत्त्यादीनां अवकाशं वारयन्ती वाक्यरचना, नव्यन्यायशास्त्रे दीधितिव्याख्यागदाधरीयवत् स्वाभिप्रेतार्थ-बोधार्थं व्याख्याननिरपेक्षता, विशदीभावः, भामतीकल्पतर्वोरुद्धृतमीमांसान्यायानां विस्तृतं विमर्शनं, कल्पतरुपर्यन्तेन ग्रन्थेन अपरिहृताः शङ्का उद्भाव्य स्वयं तत्परिहरणं, भाष्यभामतीकल्पतरूणां अवान्तरप्रमेयविषये ईषद्वैलक्षण्ये स्थिते भाष्योक्तस्यैव सोपपत्तिकं व्यवस्थापनं, तत्रतत्र अद्वैतसिद्धान्तोपरि द्वैतिभिर्विशिष्टाद्वैतिभिश्च उद्भाव्यमानानां दूषणाभासानां मूलव्याख्याव्याजेनैव अनवकाशीकरणं स्वयमपि तत्रतत्र मीमांसान्याययोजनेन अभिमतार्थव्यवस्थापनं—इत्यादिरूपः।

एवंरूपपरिमलान्तपञ्चग्रन्थीप्रतिपाद्यार्थपरिज्ञानेनैव वेदान्तमीमांसाशास्त्रार्थः

सुपरिज्ञातो भवति, कात्स्न्र्येन भाष्यभावोऽपि । अतएवाहुर्बिन्दुटीकायां श्रीब्रह्मानन्दस्वामिनः 'परिमळान्तं वेदान्तशास्त्रम्' इति ।

परं तु उक्तपञ्चग्रन्थ्याः व्याख्यानव्याख्येयभावेन प्रवृत्तत्वात् न अक्लेशेन शास्त्रार्थस्संपूर्णः सुज्ञेयो भवति इत्यभिप्रेत्य परिमलान्तशास्त्रार्थं साक्षात् भाष्यव्याख्यानेनैव बोधयितुं स्वयं च मन्तुं उत्सुकाः करुणापूर्णहृदयाः परमहंसपरिव्राजकाः श्रीमदद्वैतानन्दस्वामिनः ब्रह्मविद्याभरणाख्यां भाष्यव्याख्यां आरचयामासुः । तत्र परिमलान्तग्रन्थेषु यथावत्साकल्येन भाष्यार्थज्ञाने ये ये प्रतिपाद्यार्थाः प्रतिपादिताः कृत्स्नानपि तान् क्रोडीकृत्य तत्र तत्र भाष्यग्रन्थे समायोज्य कृत्स्नं शास्त्रार्थं सङ्ग्रथितवन्तस्ते ।

अन्यच्च–श्रीमदप्पय्यदीक्षितेन्द्राः विशिष्टशिवाद्वैतभाष्यस्य विस्तृतं व्याख्यारत्नं शिवार्कमणिदीपिकाख्यं अकार्षुः । व्याख्याव्याजेन भाष्यस्य चास्य अद्वैतपरमतात्पर्यं तत्र तत्र व्यञ्जयामासुः । कण्ठतश्च वर्णयामासुः शिवाद्वैतनिर्णयाख्येन ग्रन्थान्तरेण । तेषामयमभिप्रायः—अद्वैतपरमतात्पर्यवदेव भाष्यं ब्रह्मसूत्रभाष्यं भवितुमर्हति, यतो ब्रह्मसूत्राणि अद्वैत एव स्वरसतमानि— इति ।

एवं पूर्वोत्तरमीमांसावादनक्षत्रमालाख्यं विमर्शनप्रधानं ग्रन्थरत्नमपरं त एव दीक्षितेन्द्राः व्यरचयन् । तत्रापि अद्वैतशास्त्रार्थसम्बन्धिनोऽर्थाः केचन विमृश्य निर्धारिताः ।

तदेतेषु श्रीमद्दीक्षितेन्द्रग्रन्थेषु अद्वैतसिद्धान्तप्रमेयविशदीकरणाय बहवोऽर्थाः सङ्गृहीताः सन्ति—इत्यतः तदीयान् तानपि ग्रन्थान् पर्यालोड्य स्वीयभाष्यव्याख्यानाय अपेक्षितान् तत्रतत्र संयोजयन्ति स्म स्वीयग्रन्थेऽत्र इमे अद्वैतानन्द स्वामिनः । प्रदर्शितश्चैतत् टिप्पण्याम् ।

इदञ्च ब्रह्मविद्याभरणाख्यं व्याख्यारत्नं परिमळान्तं भामतीप्रस्थानं प्रायशः अनुसरति, परन्तु क्वचित्क्वचित् पञ्चपादिकाविवरणप्रस्थानमनुसृत्य भाष्यं व्याचष्टे । यत्कारणं पार्थक्येन परिहारं विना तत्प्रस्थानरीत्या भाष्यार्थवर्णनेनैव शङ्काविशेषाणां परिहारो लभ्यते । कचिच्च स्वीयेन पथा । ईदृशो व्याख्याप्रकारभेदः तत्र तत्र टिप्पण्यां विविच्य प्रदर्शितः ।

अत्रेदं अवधेयम्—भगवत्पादभाष्ये तत्र तत्र शङ्काग्रन्थे उल्लिखित एवार्थः भगवत्पादभाष्यप्रादुर्भावादनन्तरं प्रवृत्तैः भाष्यैः सिद्धान्तत्वेन स्वीकृतः । तेन ज्ञायते सर्वेषामपि सिद्धान्तानां आकरभूतं श्रीमच्छङ्करभगवत्पादीयं भाष्यम् ।

तदिदं विजानन्तः प्रकृतव्याख्यातारः श्रीमदद्वैतानन्दस्वामिनः तत्र तत्र शङ्काग्रन्थं परकीयसिद्धान्तसिद्धार्थयोजनेन परिपोषयन्ति । परिहारभाष्यार्थवर्णनेन तत्तत्परकीयसिद्धान्तानामनवकाशं च स्फुटयन्ति । ईदृशः एतद्व्याख्यामहिमा तत्र तत्र टिप्पण्यां विविच्य प्रदर्शितः ।

किञ्चात्र द्वैतिभिः विशिष्टाद्वैतिभिश्च उद्भाव्यमाना दूषणाभासाः दूषकानां तदीयग्रन्थानां च नामापि अनिर्दिश्य अनुद्वेगकरेणैव वचनेन शङ्कासमाधानरूपेण अपोहिताः । अयमपि विशेषः टिप्पण्यां तत्र तत्र प्रदर्शितः ।

अन्योऽप्ययं महिमा अस्य । साकल्येन परिमलान्तग्रन्थोपपादितभाष्यभावार्थ-परिज्ञानोपयुक्तं यावत्, न किमपि ततोऽतिरिक्तं अस्यां व्याख्यायां उपवर्णितम्; न च न्यूनम् । परिमलान्तस्य तु व्याख्येयमूलग्रन्थभेदात् तत्तन्मूलार्थसमर्थनार्थे तत्सम्बन्धि तदपेक्षितमर्थजातं वर्णनीयं सम्पन्नम् । अस्य तु साक्षाद्भाष्यव्याख्यारूपस्य न स निर्बन्धस्सञ्जातः । अतो भाष्यामृतमहाह्रदनिमज्जनेन तापशान्त्या निरतिशयानन्दमनुबुभूषूणां इदं व्याख्यानं अतीव हिततममिति नात्यन्तमतिशयोक्तिः ।

किञ्च 'यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि । सा सैव प्रक्रिया ज्ञेया साध्वी सा चानवस्थिता ॥' इति वार्तिकोक्तरीत्या नैकाः प्रक्रियाः अद्वैतप्रतिपत्त्युपयोगिन्यः सन्ति । तत्र न प्रक्रियाविशेषे अस्या व्याख्याया अभिनिवेशः । यत्र यत्प्रक्रियाश्रयणे भाष्यवाक्यं अक्लेशेन सुबोधं यथाश्रुतं समञ्जसतमं भवति तां प्रक्रियामाश्रित्य तं भाष्यं व्याख्याति । अनेन कश्चित् परमो लाभोऽस्माकं—यत् प्रक्रियाणां मूलभूतं भाष्यं परिज्ञायत इति ।

इमे अद्वैतानन्दस्वामिनः चोळदेशीयाः पञ्चनदक्षेत्रवासमकुर्वन् इति प्रसिद्धिः । एतेषां आश्रमगुरवः श्रीभूमानन्दस्वामिनः, विद्यागुरवः श्रीरामानन्दमुनीन्द्राः । एतेषां प्रशिष्याः श्रीअच्युतकृष्णानन्दतीर्थाः व्याख्यारचने कुशलतमा इति प्रसिद्धाः कृष्णालङ्काराख्यसिद्धान्तलेशसङ्ग्रहव्याख्याकर्तारः तैत्तिरीयकभाष्यव्याख्यावनमाला-कर्तारः भामतीविवरणकर्तारश्च ।

इयं च व्याख्या तदात्वे उपलब्धान् पञ्चषकोशान् ततस्तत आनीय समञ्ज-सपाठं कोशं आश्रित्य मुद्रापिता महामहोपाध्यायैः मादृशानां प्राचार्यस्थानापन्नैः श्रीहरिहरशास्त्रिपादैः । परन्तु मुद्रितस्य ग्रन्थस्यास्य अलाभः, ग्रन्थमहिमा च पुनर्मुद्रणे निमित्तं संपन्नम् ।

अस्य ग्रन्थस्य समग्रा आन्ध्रलिप्यांहस्तलिखितप्रतिकृतिः आन्ध्रप्रदेशान्तर्गतात् अमलापुरात् अशीतिवर्षात्प्रागानीता मद्रपुरीयहस्तलिखितपुस्तकालये विद्यते । अनया सह मुद्रितपुस्तकस्य तोलनं कृत्वा यः पाठः शुद्धतर इति प्रत्यभात् स उपरि निवेशितः, अन्यः पाठः पाठान्तरत्वेन अधस्तात् दत्तः । तद्विवेचने परं विद्वांसः प्रमाणम् । स्वमतिविमलतायै कृतं लघु टिप्पणं अत्र योजितम् ।

**तदेवंरूपग्रन्थसम्पादनमुद्रणप्रकाशनादि सर्वं येषां करुणाविलास-विजृम्भितं, येषां अनुग्रहात् परं अभिलषणीयं चिरं अनुसन्दधानो-ऽपि न पश्यामि, तेषां उदारचरितानां श्रीकाञ्चीकामकोटिपीठाधी-श्वराणां चरणनलिनयोः सविनयसाष्टाङ्गप्रणामपरम्परां विधाय, ग्रन्थमिमं सविनयं श्रद्धाभक्तिपुरस्सरं करकमलयोः समर्पयामि ।**

ग्रन्थस्यास्य मद्रपुरीसंस्कृतविद्यासमितिद्वारा प्रकटीकरणे बद्धपरिकराणां संस्कृतविद्यासमित्यध्यक्षाणां श्री एन्. रघुनाथार्यवर्याणां, संस्कृतविद्यासमितिसचिवानां श्री टि. वि. विश्वनाथार्यवर्याणां च हार्दान् अनेकान् धन्यवादान् निवेदयामि ।

अपेक्षितहस्तलिखितप्रतिकृतेः प्रदानेन उपकृतवतां मद्रपुरीयहस्तलिखित-पुस्तकालयाध्यक्षाणां सविधे भवामि भविष्यामि च कृतज्ञः ।

विना विलम्बं अस्य ग्रन्थस्य मुद्रणादिविषये संस्कृतविद्यासमितिनिर्वाहकैरव-श्यकर्तव्यानि बहूनि कार्याणि स्वयं श्रद्धया उत्साहेन निष्कामं तदातदा निर्वर्तितवन्तः निर्वर्तयन्तश्च सन्तः मम च पुरूफ्पत्रशोधनतोलनादौ बहु साहाय्यमाचरितवन्तः **मद्रपुरीयसंस्कृतकलाशालासाहित्यवेदान्ताध्यापकाः श्रीशिवरामदीक्षिताः,** पुरूफ्पत्रशोधनादिना अनुलेखनादिना यदा यदा मम यद्यदपेक्षितं तत्तत्कार्यकरणेन च बहूपकारिणः मत्सविधे प्रमाणविद्यां अध्यात्मविद्यां च अधीयानाः मद्रपुरीय विद्यालये दर्शनविभागे अध्यापकाः **श्रीवीलिनाथशर्माणश्च** श्रीपरमाचार्यानुग्रहात् श्रेयोभाजनं भूयासुः इति श्रीपरमाचार्यपादान् प्रार्थये ।

समीचीनया रीत्या मुद्रणं कृतवतां मद्रपुरीस्थरत्नमुद्रणालयाधिकृतानां कृतज्ञोऽस्मि ।

इदंग्रन्थप्रकाशने परमनिदानभूतानां जगद्गुरूणां श्रीकाञ्चीकामकोटिपीठाधीशानां चरणनलिनयोः विधाय पुनः साष्टाङ्गप्रणामपरम्पराः विरमति

श्रीपरमाचार्यशरणः

आनन्दमाघपूर्णिमा
चेन्नपुरी

**एस्. आर्. कृष्णमूर्तिशास्त्री**

॥ श्रीरामः सहायः ॥



# सभाष्यब्रह्मविद्याभरणविषयानुक्रमणिका

—: * :—

## शास्त्रयोनित्वाधिकरणम्

**द्वितीयवर्णके पूर्वः पक्षः—**

— समाप्तः चतुस्सूत्र्यन्तो भागः —



श्रीगुरुभ्यो नमः

ब्रह्मसूत्रशाङ्करभाष्यव्याख्यानं

# ब्रह्मविद्याभरणम्

श्रीमदद्वैतानन्दस्वामिविरचितम्

[1]वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युः तं नमामि गजाननम् ॥ १ ॥

[2]शङ्कराश्लेषविलसदानन्दामृतनिर्भराम् ।
विश्वोत्तंसितपादाब्जां ब्रह्मविद्यां विभावये ॥ २ ॥

---

श्रीगुरुभ्यो नमः

श्रुतिस्मृतिपुराणानामालयं करुणालयम् ।
नमामि भगवत्पादशङ्करं लोकशङ्करम् ॥
गुरूणां करुणापूर्णनिदेशबलमाश्रितः ।
स्वमत्याः शोधनकृते तनोमि लघुटिप्पणम् ॥

1. इदम्पद्यस्थाने 'श्रीगणेशाय नमः' इत्येतावन्मात्रं कोशे आन्ध्रलिपिलिखिते वर्तते ।

2. **शङ्कराश्लेषेति** शिवालिङ्गनाविर्भूतनिरतिशयानन्दपूर्णां जगद्वन्दितचरणाब्जां ब्रह्मविद्याधिष्ठात्रीं केनोपनिषत्प्रसिद्धां उमां ध्यायामि इति **एकोऽर्थः** । अखण्डब्रह्मविषयीकरणेन प्रकाशमानपूर्णानन्दप्रतिबिम्बगर्भितां परमपुरुषार्थसाधनत्वेन सर्वैरादृतां तत्त्वमस्यादिमहावाक्यजनितां अखण्डाकारवृत्तिरूपां ब्रह्मविद्यां मनसि सुस्थिरीकरोमि-प्रत्यग्ब्रह्मैक्यं अनुसन्दधे इति **अपरोऽर्थः** । व्याख्यातृत्वेन श्रीमच्छङ्करभगवत्पादानाश्रित्य स्वीयतात्पर्यविषयीभूतसर्वार्थलाभेन आनन्दपूर्णामिव रोचमानां अत एव सर्वैः वेदार्थजिज्ञासुभिः समाश्रितां अद्वैतब्रह्मविद्यासम्पादयित्रीं उपनिषदं परिशीलये इति **अन्योऽर्थः** । विभावयतेः अलङ्करणार्थेऽपि प्रयोगदर्शनात् **ब्रह्मविद्याभरण** इति स्वीयग्रन्थनामापि **सूचयति** 'ब्रह्मविद्यां विभावये' इति ।

वेदान्तनिकुरुम्बेण तात्पर्येण प्रकाशितः ।
स्वात्मानन्दैकरस्येन कल्याणाय शिवोऽस्तु नः ॥ ३ ॥

स्वानन्दाम्बुधिमग्नचित्तमनिशं निर्धूतमायामलं
कारुण्यार्जवशान्तिसौरभममुं देव्या [1]गिरां सेवितम् ।
रामानन्दमुनिं मुनीन्द्रनिकरैरासेवितं सर्वदा
चित्ते सङ्कलयामि वेदशिरसस्तत्त्वावबोधाप्तये ॥ ४ ॥

[2]मुग्धं मामनुगृह्य यः करुणया तुर्योङ्कृतिप्रस्फुर-
द्भासां वेदवतीं विकल्पगलितां विद्यां ददौ चिन्मयीम् ।
भूमानन्दपदस्थितो गुरुरसौ पूज्याधिपूज्यः सदा
चेतो मे कुरुतादलङ्कृतमतिस्वच्छैः स्वपादाम्बुजैः ॥

## अथातो ब्रह्मजिज्ञासा ॥ १ ॥

[3]अनेन सूत्रेण 'साधनचतुष्टयसम्पत्त्यनन्तरं ब्रह्म जिज्ञासितव्यम्' इति प्रतिपाद्यते । एतत्सूत्रावतारिकारूपेण 'युष्मदस्मत्प्रत्ययगोचरयोः' इत्यादिना

---

1. आ. गिरा

2. इदं पद्यं मुद्रिते नास्ति ।

3. श्रीमच्छारीरकमीमांसाशास्त्रारम्भसमर्थनपरं 'अथातो ब्रह्मजिज्ञासा' इति आदिमं सूत्रम् । तत्र न्यायतः विषयप्रयोजनसम्बन्धाधिकार्यात्मकानुबन्धचतुष्टयसद्भाव-निर्णयेन शास्त्रारम्भः समर्थ्यते । ब्रह्मशब्दार्थो विषयः । जिज्ञास्यत्वोक्तेः । परमप्रयोजनं मोक्षः । अत्र **भामती** — ब्रह्मशब्दार्थः आत्मा, 'बृहत्त्वाद् बृंहणत्वाद्वा आत्मैव ब्रह्मेति गीयते' इति शिवपुराणवचनात् । स चात्मा देहेन्द्रियबुद्धिव्यतिरिक्तः 'अहं कर्ता' इति प्रत्यक्षेण प्रमितः । कर्त्रादिरूपमेव तस्य तत्त्वम् । अतश्च ब्रह्मणः तत्त्वतो निश्चितत्वेन अजिज्ञास्यत्वात् न विषयत्वमिति विषयाभावः—इति शङ्कायां, उक्तप्रत्यक्षस्य आत्मतत्त्वाविषयकत्वेन अप्रमात्वं व्यवस्थाप्य असंदिग्धत्वेऽपि विपर्यस्तत्वात् ब्रह्मशब्दार्थस्यात्मनः तत्त्वतो जिज्ञास्यत्वसम्भवेन विषयत्वात् विषयसिद्धिः इति निरूपयितुं अहंप्रत्ययस्य विपर्यासरूपत्वव्यवस्थापनाय प्रवृत्तमध्यासभाष्यम्—इति प्रस्थिता ।

'सर्वे वेदान्ता आरभ्यन्ते' इत्यन्तेन भाष्येण [1]कर्तृत्वादिबन्धस्य आक्षेपसमाधानाभ्यां मिथ्यात्वं प्रतिपाद्यते। कथमिदमुपपद्यते—पदविधया वा वाक्यविधया वा यः सूत्रेणार्थः संगृह्यते [2]स एव भाष्ये विशदतया प्रतिपादनीयः, बन्धमिथ्यात्वं तु सूत्रेण न कथञ्चिदपि संगृहीतम्।

संगृहीतमिति वदामः—सूत्रे ब्रह्मपदं विषयनिर्देशकम्। तेन च प्रत्यगभिन्नं ब्रह्मैव विवक्षितम्। यथा चैतत् तथा [3]उत्तरत्र स्पष्टं भविष्यति। न च

---

**पञ्चपादिका तु**—ब्रह्मशब्दार्थः प्रत्यगभिन्नं ब्रह्म। तच्च असम्भवि 'अहं कर्ता इत्यादिप्रत्यक्षप्रमाणविरोधात्, अतो विषयाभावः—इति शङ्कायां विरोधपरिहारार्थं उक्तप्रत्यक्षस्य भ्रमत्वं कर्तृत्वादीनां आविद्यकत्वेन मिथ्यात्वञ्च उपवर्ण्य मिथ्याभूतकर्तृत्वादिना स्वाभाविकब्रह्मरूपतायाः अविरोधेन प्रत्यग्ब्रह्मैक्यसम्भवात् प्रत्यगभिन्नब्रह्मरूपविषयसिद्धिः इति प्रतिपादयितुं प्रवृत्तमध्यासभाष्यम्—इति प्रस्थिता।

सम्मतमेवेदं भामत्या अपि। आशङ्कनप्रकारभेदेऽपि पर्यवसितार्थाभेदात्। जिज्ञास्यं आत्मनस्तत्त्वं ब्रह्मरूपता इत्येव हि भामतीकृतामपि अभिमतम्। भामत्यां हि "शारीरकमीमांसायां प्रदर्शयिष्यामः" इति भाष्यस्थं शारीरकमीमांसापदं "शरीरमेव शरीरकम्, तत्र निवासी शारीरको जीवात्मा, तस्य त्वम्पदाभिधेयस्य तत्पदाभिधेयपरमात्मरूपतया या मीमांसा सा तथोक्ता" इति व्याख्यातम्। अत्र प्रत्यगात्मनः ब्रह्मात्मता प्रकृतशास्त्रस्य विषयः इति स्पष्टमुक्तम्।

तदेवं प्रत्यगभिन्नब्रह्मणः शास्त्रविषयत्वं प्रस्थानद्वयसम्मतम्। अतः प्रायशो भाष्यव्याख्याव्याजेन व्याख्यानव्याख्येयभावक्लेशहानेन, व्याख्यानव्याख्येयभावेनभाष्यभावप्रकाशकभामतीकल्पतरुपरिमलान्तशास्त्रार्थसङ्ग्रहरूपोऽपि अयं व्याख्याग्रन्थः पञ्चपादिकाप्रस्थानशैल्या अध्यासभाष्यं अवतारयति—'**अनेन सूत्रेण**' इत्यादिना '**सङ्गतम्**' इत्यन्तेन ग्रन्थेन।

1. **कर्तृत्वादीति** आदिशब्देन भोक्तृत्वं कामसङ्कल्पादयश्च गृह्यन्ते।

2. **स एव भाष्ये इति** अन्यथा भाष्यत्वव्याघातात्। "सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुकारिभिः। स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः" इति हि भाष्यलक्षणम्। अत्र 'सूत्रार्थो वर्ण्यते यत्र तत् भाष्यम्' इत्यभिधाने वृत्तिग्रन्थस्यापि भाष्यत्वप्रसङ्गः। तद्व्यावृत्त्यर्थं 'वाक्यैः' इति विशेषणम्। वार्तिकादिव्यावृत्त्यर्थं 'सूत्रानुकारिभिः वाक्यैः' इति। 'स्वपदानि वर्ण्यन्ते' इत्येतावन्मात्राभिधाने सङ्ग्रहविवरणरूपप्रकरणेष्वतिव्याप्तिः, इत्यत उक्तं 'सूत्रार्थो वर्ण्यते' इति।

3. **उत्तरत्र**—'ब्रह्म च वक्ष्यमाणलक्षणं' 'ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य' इति भाष्यव्याख्याने जन्मादिसूत्रभाष्यव्याख्याने च।

बन्धमिथ्यात्वं विना जीवब्रह्मैक्यं सम्भवति । [1]विरुद्धकर्तृत्वाकर्तृत्वधर्माक्रान्तयोरैक्यायोगात् । कर्तृत्वस्य मिथ्यात्वे तु न तत् अकर्तृत्वेन विरुद्ध्यते । विषमसत्ताकयोर्भावाभावयोः शुक्तौ रजतत्वतदभावयोरिव समावेशसम्भवात् । अवच्छेदकभेदेन संयोगतदभावयोरिव कर्तृत्वतदभावयोरपि समावेशोपपत्तौ मिथ्यात्वमेव किमर्थं तदुपपादनाय प्रतिपाद्यते इति तु न [2]शङ्कनीयम् । प्रत्यगभिन्नब्रह्मप्रकरणान्तर्गतैः 'असङ्गो ह्ययं पुरुषः' [बृ. उ. ४-३-१५] 'असङ्गो न हि सज्जते' [बृ. उ. ४-२-४] 'कामःसङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' [बृ. उ. १-५-३] 'स समानस्सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव' [बृ. उ. ४-३-७] इति

'निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः ।
दुःखाज्ञानमला धर्माः प्रकृतेस्ते तु नात्मनः' ॥ [वि. पु. ६-७-२२]

'सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत्'
[वि. पु. २-१२-४५]

इत्यादिभिःश्रुतिस्मृतिवाक्यैः जीवत्वावच्छेदेनापि [3]सङ्गाभावः तस्य चान्योपाधिकस्य आत्मनि मिथ्यात्वं इति [4]प्रतिपादयद्भिः प्रकारान्तरेण तदुपपादनस्य

---

1. **विरुद्धेति** न च कर्तृत्वाकर्तृत्वयोः कालभेदेन अविरोधः शङ्क्यः । तथा सति ऐक्यस्य कादाचित्कत्वापत्त्या सार्वदिकैक्यबोधकतत्त्वमस्यादिश्रुतिविरोधापत्तेः ।

2. **शङ्कनीयमिति** शङ्का चेयं आश्मरथ्याचार्याणां मतेन । ते हि सार्वदिकसत्यभेदाभेदवादिनः 'जीवत्वेश्वरत्वाभ्यां भेदः, चित्त्वेन अभेदः । नातो भेदाभेदयोर्विरोधः, अवच्छेदकभेदात् । तद्वत् कर्तृत्वतदभावयोरपि सत्ययोः' इति मन्यन्ते ।

3. मु. सङ्गाभावं ।

4. **प्रतिपादयद्भिरिति** 'योऽयं विज्ञानमयः' इति वाक्ये प्रकृतं जीवं 'अयं पुरुषः' इत्यनूद्य असङ्गत्वबोधिका 'असङ्गोह्ययं पुरुषः' इति श्रुतिः जीवत्वावच्छेदेन सङ्गाभावं प्रतिपादयति । एवं 'दक्षिणेऽक्षन् पुरुषः' इत्युपक्रान्तं जीवं 'स एषः' इत्यनूद्य 'नेति नेत्यात्मा, असङ्गो न हि सज्जते' इति बोधयन्ती श्रुतिरपि जीवत्वावच्छेदेन सङ्गाभावं प्रतिपादयति । आत्मधर्मत्वेन पराभ्युपगतानां मनस्तादात्म्येन मनोधर्मत्वं प्रतिपादयति 'कामः सङ्कल्पः' इत्यादिश्रुतिः । 'स समानस्सन्' इति श्रुतिः बुद्ध्युपाधिकस्य सतः कर्तृत्वं 'ध्यायतीव' इति श्रुतिः इवशब्देन तन्मि-

[1]निराकृतत्वात् । अतः प्रत्यगभिन्नब्रह्मरूपविषयोपपादकतया सूत्रसूचितं बन्धमिथ्यात्वमिति भाष्यमपि तत्प्रतिपादकं तेन सङ्गतम् ।

अध्यासभाष्येण च इत्थमधिकरणं सूच्यते—

वेदान्तमीमांसाशास्त्रमारम्भणीयं न वा इति विषयसम्भवासम्भवाभ्यां संशये [2]पूर्वःपक्षः नारम्भणीयमिति । [3]विरुद्धधर्माक्रान्तयोरैक्यायोगेन जीवब्रह्मैक्यं विषयो न सम्भवति । न च 'अहं कर्ता, अहं भोक्ता' इति प्रतीयमानो [4]जीव एव विषयः । तस्य प्रत्यक्षसिद्धस्य तेनैव रूपेण [5]विचारविषयत्वासम्भवात् । न च

---

ध्यात्वं च प्रतिपादयति। विष्णुपुराणमपि प्रकृतं जीवं 'अयमात्मा' इति अनूद्य 'निर्वाणमय एव' इति बोधयत् जीवत्वावच्छेदेन बन्धाभावं प्रतिपादयति। ज्ञानस्वरूपादात्मनोऽन्यस्य असत्यत्वोक्त्या धर्माणां मिथ्यात्वं 'प्रकृतेस्ते' इत्युक्त्या आत्मनि तेषामौपाधिकत्वं च प्रतिपादयति ।

**निर्वाणमय एव**—निर्वाणं मुक्तिः, 'मुक्तिः कैवल्य**निर्वाण**श्रेयोनिःश्रेयसामृतम्' इत्यमरः। स्वार्थे मयट् । मुक्तिस्वरूप एवेत्यर्थः। एवकारेण जीवत्वावच्छेदेनापि बन्धो व्यावर्त्यते ।

1. **निराकृतत्वादिति** तात्पर्याविषयतायाः ज्ञापितत्वात् इत्यर्थः। अन्यथोपपादने असङ्गत्वादिप्रतिपादकवाक्यानां ऐक्यप्रकरणपाठवैयर्थ्यापत्तेः इति भावः। प्रकरणस्य जीवब्रह्मैक्यपरता च सुषुप्त्युत्क्रान्त्यधिकरणे स्पष्टीभविष्यति ।

2. **पूर्वः पक्ष इति** आत्मवत् अनात्मनामपि सत्यत्वमेव। 'स्थूलोऽहम्' इत्यादिः देहेन्द्रियात्मव्यवहारो गौणः । 'अहं कर्ता' इत्यादिः कर्तृभोक्त्रात्मधीः कामसंकल्पादिसंसर्गधीश्च प्रमैव। आगमापेक्षया प्रत्यक्षं प्रबलम्। 'असङ्गो ह्ययं पुरुषः' इत्यादिश्रुतयः स्तुतिपराः—इति पूर्वपक्षिणोऽभिप्रायः ।

3. **विरुद्धधर्माक्रान्तयोः**—कर्तृत्वादि-तदभावरूपविरुद्धधर्मवतोः । तत्र कर्तृत्वादिकं जीवे प्रत्यक्षप्रमितम्, ब्रह्मणि तदभाववत्त्वं श्रुतिप्रमितम्। यद्यप्यैक्यमपि श्रुतिप्रमितमिति तदप्यङ्गीकर्तुं युक्तम्, तथापि नाहंब्रह्मेतिभेदप्रत्यक्षविरोधात् ऐक्ये न श्रुतिः प्रमाणम् इत्यभिप्रायः। न च शुद्धस्य जीवस्वरूपस्य ब्रह्मैक्ये न प्रत्यक्षविरोध इति वाच्यम्। अहमर्थातिरिक्ततादृग्जीवस्वरूपे प्रमाणाभावात्। न च त्वंपदार्थशोधकवाक्यानि प्रमाणानि। तेषामप्यहंकर्तेत्यादिप्रत्यक्षविरोधेन अन्यपरत्वात् इत्यभिमानः।

4. **जीव एवेति** तस्यैव बृहत्त्वात् बृंहणत्वाद्वा ब्रह्मशब्दार्थत्वसम्भवात् इति भावः ।

5. **विचारविषयत्वासम्भवादिति** अनेन भामत्युक्तः पूर्वपक्षोऽपि सङ्गृहीतः।

विभुत्वनित्यत्वादिना जीवरूपस्य सर्वज्ञत्वादिना ईश्वररूपस्य वियदादिसर्गप्रकारस्य उपासनाभेदाभेदादिप्रकारस्य च प्रमाणान्तरानधिगतस्य विचारविषयत्वं मुमुक्षूणामुपपद्यते । अद्वैतिमते प्रत्यगभिन्नब्रह्मज्ञानस्यैव मोक्षसाधनतया तदुपयोगितयैव अन्यस्य सर्वस्य विचारणीयत्वेन तदसम्भवे इतरविचारस्य [1]व्यर्थतापत्तेः ।

[2]अथ 'अहं करोमि, भुञ्जे' इत्यादिप्रत्यक्षस्य 'स्थूलोऽहं' इत्यादि-

---

1. **व्यर्थतापत्तेरिति** सिद्धान्ते व्यर्थतापरिहारप्रकारस्तु आनन्दमयाधिकरणावतरणभाष्यव्याख्यानावसरे प्रतिपादयिष्यते ।

2. 'युष्मदस्मत्' इत्यादि 'मिथ्येति भवितुं युक्तं' इत्यन्तभाष्ये भागद्वयं वर्तते । तत्र 'सुतरां इतरेतरभावानुपपत्तिः' इत्यन्तः अध्यासाभावे हेतुप्रतिपादको भागः । 'इत्यतोऽस्मत्' इत्यादिः 'मिथ्येति भवितुं युक्तं' इत्यन्तः अध्यासाभावप्रतिपादकः ।

तत्र अधिष्ठानसामान्यांश-आरोप्यसजातीयविशेष-तादात्म्यप्रमाऽऽहितसंस्कारः अध्यासे हेतुः, आत्मानात्मनोः तादृशप्रमाभावाद्धेतोः अध्यासाभावः इति **पञ्चपादिकाविवरणप्रस्थानाभिमता व्याख्या** ।

अत्र इतरेतरभावपदं विरुद्धस्वभावयोरिति पदश्च यथाश्रुतार्थकम् ।

अधिष्ठानारोप्याभिमतयोः भेदाग्रहः अध्यासे हेतुः, तदभावाद्धेतोः अध्यासाभावः इति **भामतीप्रस्थानाभिमता व्याख्या** । अत्र विरुद्धस्वभावपदं विरुद्धस्वभावत्वेन निश्चितार्थकम्, इतरेतरभावपदश्च इतरेतरभावप्रतीत्यर्थकम् । एवं व्याख्याने बीजादिकं इतरेतरभावपदव्याख्यानावसरे स्पष्टीभविष्यति ।

**प्रकृतव्याख्याग्रन्थस्तु** यद्यपि परिमलान्तं भामतीप्रस्थानं अनुसरति, तथाऽपि तत्र न निर्भरः । यत्र भाष्यग्रन्थस्वरसः तमेव प्रस्थानमनुसरति । क्वचित् भामतीप्रस्थानं, क्वचित् पञ्चपादिकाविवरणप्रस्थानं, क्वचित् स्वीयम् । एतच्च उत्तरत्र तत्र तत्र विविच्य प्रदर्शयिष्यते ।

प्रकृते च 'युष्मदस्मत्' इत्यादि 'मिथ्येति भवितुं युक्तं' इत्यन्तं भाष्यं स्वरसतरं व्याख्यातुकामा इमे व्याख्यातारः स्वीयेन पथा व्याचक्षते ।

तथा हि—'सुतरामितरेतरभावानुपपत्तिः' इत्यन्तं भाष्यं देहेन्द्रियात्मैक्याध्यासाभावं साधयति । अध्यासाभावे हेतुभूतो भेदग्रहः विरुद्धस्वभावयोरिति हेतुगर्भविशेषणेनैव सङ्गृहीतः । 'इत्यतोऽस्मत्' इत्यादि 'मिथ्येति भवितुं युक्तं' इत्यन्तं तु भाष्यं कर्तृभोक्त्रन्तःकरणात्मैक्याध्यासाभावं साधयति । तत्र चाध्यासाभावे हेतुप्रदर्शनपरं 'सुतरामितरेतरभावानुपपत्तिः' इत्यन्तं भाष्यम् । तच्च हेतुत्वं परम्परया । तद्यथा—सर्वप्रत्यययथार्थ्यवादी अत्र मुख्यः पूर्वपक्षी । यतो भाष्यकृतां 'सर्वथापि तु अन्यस्यान्यधर्मावभासतां न व्यभिचरति' इति अयथार्थप्रत्ययसमर्थने निर्भरो दृश्यते

[1]विसंवादिप्रत्यक्षसजातीयस्य [2]निरस्तसमस्तदोषाशङ्कतात्पर्योपेतागमविरुद्धस्य

'उपलभ्याप्सु चेत् गन्धं केचिद्ब्रूयुरनैपुणाः ।
पृथिव्यामेव तं विद्यादपो वायुं च संश्रितम् ॥'

[म. भा. १२-२३८-७८]

इति वचनविरुद्धस्य 'सुरभि जलं, सुरभिः पवनः' इति प्रत्यक्षस्य पार्थिवावयवसंसर्गेणेव अन्तःकरणतादात्म्येन औपाधिकधर्मावगाहितया भ्रमत्वोपपत्तौ स्वाभाविकासङ्गत्वप्रतिपादकागमबाधितानां कर्तृत्वादीनां न ब्रह्मात्मैक्यविरोधित्वमिति विषयसम्भवेन न विचारारम्भानुपपत्तिः इति चेत्

[3]न—प्रत्यक्षागमयोर्विरोधे हि प्रत्यक्षस्योपजीव्यतया[4]तदनुसारेण आगमस्यैव नयनमुचितम् । इतरथा वेदान्तार्थबोधस्यैव [5]अनुन्मेषप्रसङ्गात् । कर्तृत्वादीनामिव

---

तस्य च पूर्वपक्षिणोऽयमभिसन्धिः—यत् सिद्धान्ती 'अहं कर्ता' इत्यादिप्रत्यक्षं अप्रमां मन्यते, तथा सत्येव कर्तृत्वादेः मिथ्यात्वेन तदभावेनाविरोधात् जीवब्रह्मैक्यरूपविषयसिद्धिरिति—तन्न युक्तम्—अहंप्रत्यक्षस्य क्वचिदप्यप्रमात्वादर्शनात् ।

यदपि मन्यते 'स्थूलोऽहं' इत्यादेरप्रमात्वं दृष्टं तद्वत् स्यात् इति—तदपि न—शरीरात्मभेदप्रत्यक्षनिश्चयसद्भावेन 'स्थूलोऽहं' इत्याद्यप्रमाप्रत्ययस्यैवाभावात् । 'स्थूलोऽहं' इत्यादिर्व्यवहारस्तु गौणः । यदपि आगमविरुद्धत्वादप्रमां मन्यते—तदपि विपरीतम्—प्रत्यक्षस्यैव प्रबलत्वात्— इति ।

तमेवंरूपं पूर्वपक्षं शब्दतोऽर्थतश्च वर्णयति युष्मदस्मदित्यादि मिथ्येतिभवितुंयुक्तमित्यन्तं भाष्यं—इति प्रकृतव्याख्यातुः व्याख्याप्रकारः । तदेतत्सर्वं अध्यासाक्षेपभाष्यलभ्यमर्थजातं शङ्कातत्परिहाराभ्यां वर्णयन् पूर्वपक्षं प्रपञ्चयितुमारभते—**अथेत्यादिना** । तत्र तावत् प्रत्यक्षादागमस्य प्राबल्यमाश्रित्य आशङ्कते सिद्धान्ती—**अथेति** ।

1. **विसंवादिप्रत्यक्षसजातीयस्येति** इदं प्रत्यक्षस्य दौर्बल्ये हेतुगर्भं विशेषणम् ।

2. **निरस्तसमस्तदोषाशङ्कतात्पर्योपेतेति** इदं आगमस्य प्राबल्ये हेतुगर्भं विशेषणम् ।

3. अथेत्यादिशङ्कां प्रत्यक्षस्य आगमात् प्राबल्यसमर्थनेन निराकरोति—**न—प्रत्यक्षेत्यादिना** ।

4. **उपजीव्यतयेति** प्रबलत्वेनेति शेषः ।

5. **अनुन्मेषप्रसङ्गात्**—अनुत्पत्तिप्रसङ्गात् ।

वर्णपदतत्प्रत्यक्षादीनामपि [1]बाध्यत्वापत्त्या शुक्तिरजतादिवत् [2]कार्याक्षमत्वापत्तेः । [3]न च—तेषां तात्त्विकत्वापहारेऽपि व्यावहारिकत्वं नापह्रियते, तावन्मात्रेण च कार्यक्षमत्वमुपपन्नमिति नोपजीव्यविरोधः, उपजीव्यस्य व्यावहारिकत्वस्यानुपमर्दात् उपमर्दितस्य च तात्त्विकत्वस्यानुपजीव्यत्वात् इति—वाच्यम् । पदार्थेषु तात्त्विकत्वव्यावहारिकत्वविभागस्य श्रौतबाधनिर्धारणात् प्रागसिद्धेः । तन्निर्धारणे हि सति बाधितानां पारमार्थिकत्वानुपपत्त्या प्रातिभासिकत्वे अर्थक्रियाकारित्वानुपपत्त्या च शुक्तिरजतवैलक्षण्येन व्यावहारिकत्वं नाम धर्मान्तरं अर्थक्रियाप्रयोजकं स्वीकर्तव्यम् । तथा च प्राप्तमितरेतराश्रयत्वम्[4]—बाधे सति व्यावहारिकत्वार्थक्रियाकारित्वयोः प्रयोज्यप्रयोजकत्वं तत्त्वे च उपजीव्यविरोधपरिहारेण बाधः—इति । [5]न च उपक्रमोपसंहारैकरूप्यादिलिङ्गैः तात्पर्यस्य निष्प्रपञ्चप्रत्यगभिन्न-

---

1. **बाध्यत्वापत्त्या**—मिथ्यात्वापत्त्या—असत्यत्वापत्त्येति यावत् ।

2. **कार्याक्षमत्वापत्तेरिति**—कार्यकारित्वे अबाध्यत्वरूपं सत्यत्वं प्रयोजकम् । दृश्यते चात्र बोधरूपकार्यकारित्वं, तेन निश्चीयते—वर्णपदतत्प्रत्यक्षादिकस्य नागमेन बाध इति । ततश्च 'आगमबाधितानां कर्तृत्वादीनां' इत्ययुक्तम् । न च कर्तृत्वादितत्प्रत्यक्षादीनां अनुपजीव्यत्वात् आगमेन बाधो युक्त इति वाच्यम् । उपजीव्यजातीयस्यापि प्रबलत्वात्, दृष्टो हि प्राण्यङ्गत्वहेतुकस्य नरशिरःकपालशुचित्वानुमानस्य साध्यप्रसिद्ध्यर्थं शङ्खरूपदृष्टान्ते साध्यनिश्चयार्थं चोपजीव्यशुचित्वबोधकागमसजातीयेन 'नारं स्पृष्ट्वाऽस्थि सस्नेहं सवासा जलमाविशेत्' इति अशुचित्वबोधकागमेन बाधः इति भावः ।

3. भामत्युक्तं उपजीव्यविरोधपरिहारप्रकारं आशङ्क्य निराकरोति-**न चेति** ।

4. **इतरेतराश्रयत्वमिति** यद्यपि चन्द्रतारकादिपरिमाणप्रत्यक्षस्य आगमविरोधेन अप्रामाण्यदर्शनात् तेनापि स्वप्रामाण्यसिद्ध्यर्थं इतराविरोधस्य अवश्यापेक्षणीयत्वेन अन्योन्याश्रयतौल्यम्, तथापि औत्सर्गिकं प्रत्यक्षस्य जात्यैव प्राबल्यं इत्यभिमानः ।

ननु श्रोत्रेन्द्रियेण जायमानं प्रत्यक्षं शब्दस्वरूपं तस्य सत्यत्वं च विषयीकरोति । श्रुत्या च सत्यत्वांशप्रत्यक्षमेव बाध्यते । तच्च न श्रुतेः उपजीव्यम् । कल्पितशब्दस्यापि बोधकत्वेन शाब्दबोधार्थं तत्सत्यत्वस्य अनपेक्षितत्वात् । यच्च शब्दस्वरूपांशप्रत्यक्षं उपजीव्यं तत् न बाध्यते, विरोधाभावात् । अतो नोपजीव्यविरोधः, इत्यपि एकसत्तावादमाश्रित्य सुवचम् इति चेत्—न । तथासति प्रत्यक्षस्य सर्वथा अप्रामाण्यापत्तेरिति भावः ।

5. तात्पर्यवत्त्वेन आगमस्य प्राबल्यं भामत्युक्तं आशङ्क्य निराकरोति—**न चोपक्रमेति** । अनेन—यत् तात्पर्योपेतत्वं आगमस्य प्राबल्ये हेतुरित्युक्तं

ब्रह्मविषयस्य निर्धारणेन तन्निर्वाहार्थं प्रत्यक्षस्यातत्त्वावेदकत्वसिद्धौ उक्तगत्या व्यावहारिकत्वं कल्प्यत इति साम्प्रतम् । उपजीव्यप्रमाणविरुद्धार्थे तात्पर्यकल्पनस्यैवानुन्मेषात् । अर्थान्तरतात्पर्यकत्वे उपक्रमादिसहितवाक्यस्वारस्यभङ्गापत्तिरिति चेत्, न - इष्टत्वात् । तवापि प्रत्यक्ष[1]स्वारस्यभङ्ग आपन्नः । गृह्यमाणं ज्ञानं स्वतःप्रामाण्याभ्युपगमात् प्रमाणत्वेनैव गृह्यते ।

[2]तथा च प्रथमोपस्थितप्रामाण्यबाधोऽपि । न च चरमोपस्थितोपजीवकस्वारस्यानुसारेण प्रथमोपस्थितोपजीव्यस्वारस्यबाधो न्याय्यः । अपि तु आगमस्वारस्यबाध एव । उपजीवकगतत्वात् चरमोपस्थितत्वाच्च । अत एव 'आदित्यो [3]यूपः' [तै. ब्रा. २.१.७] 'यजमानः प्रस्तरः' [तै. सं. १.७.४] इत्यत्र [4]स्वारसिकार्थस्य प्रत्यक्षबाधेन तेजस्वित्वक्रतुनिर्वर्तकत्वगुणमादाय सामानाधिकरण्यमिति स्वीक्रियते । स्तावकवाक्येषु तथा स्वीकारेऽपि अज्ञातार्थज्ञापकेषु न प्रत्यक्षानुसार इति चेत्, न—'सोमेन यजेत' 'कृष्णलं[5] श्रपयेत्' इत्यत्र [6]प्रत्यक्षविरोधपरिहाराय मत्वर्थलक्षणोष्णीकरणपर्यन्तत्वयोः स्वीकारात्, भवद्भिरपि तत्त्वमस्यादौ भागत्यागलक्षणायाः तदर्थमेव स्वीकाराच्च ।

[7]अपि च प्रत्यक्षप्रामाण्यज्ञानं निरवकाशम्, श्रुतिस्तु [8]लाक्षणिकेऽप्यर्थे सावकाशा, अतः 'सावकाशनिरवकाशयोर्निरवकाशं बलीयः' इति न्यायेनापि

---

तन्निरस्तम् । निरस्तसमस्तदोषाशङ्कत्वं तु न प्राबल्ये हेतुः, अपि तु प्रामाण्ये । प्रामाण्यञ्च उपजीव्यप्रमाणाविरुद्धार्थेऽपि सम्भवतीति भावः ।

1. **स्वारस्यम्**—प्रतीयमानार्थे प्रामाण्यम् ।

2. असंजातविरोधित्वेन प्रत्यक्षस्य प्राबल्यमाह—**तथाचेति** । अत्र प्रत्यक्षं ज्ञानप्रामाण्यग्राहकसाक्षिरूपम् ।

3. **यूपः**—दृष्टादृष्टसंस्कारविशिष्टो दारुविशेषः । **प्रस्तरः**—दर्भमुष्टिविशेषः ।

4. **स्वारसिकार्थस्य**—शब्दशक्त्या प्रतीयमानार्थस्य ।

5. **कृष्णलः**—सुवर्णविकारभूतो माषः ।

6. **प्रत्यक्षविरोधपरिहारायेति** प्रत्यक्षविरोधः सिद्धान्तकथनावसरे उपपादयिष्यते ।

7. निरवकाशत्वेन प्रत्यक्षस्य प्राबल्यमाह—**अपि चेति** । **अवकाशः**—लब्धविषयकत्वम् ।

8. लाक्षणिके—लक्ष्ये । **मु. लाक्षणिकार्थेऽपि** ।

प्रत्यक्षप्रामाण्यज्ञानमेव बलीयः । न च व्यावहारिकप्रामाण्ये सावकाशम् । [1]एतत्परिभाषाया अद्वैतिपरि[2]कल्पिताया निर्मूलाया वस्तुव्यवस्थापकत्वायोगात् ।

[3]ननु 'स्थूलोऽहं कृशोऽहं मनुष्योऽहं अन्धोऽहं बधिरोऽहं मूकोऽहम्' इति शरीरेन्द्रियधर्माणां भासमानानां आत्मनि तत्तद्धर्म्यध्यासपूर्वकत्वं[4] वक्तव्यम् । अतो विसंवादिस्थूलोऽहमित्यादिप्रत्यक्षसजातीयस्य 'अहं करोमि' इत्यादेरपि अन्तःकरणतादात्म्याध्यासपूर्वकं तद्धर्मावगाहित्वमेवोचितम् । एवं च सम्भाविताप्रामाण्येन कथं तद्विपरीतायाः श्रुतेः अन्यथानयनम् । किं तु 'सुरभि जलम्' इति प्रत्यक्षस्येव आगमेन तद्बाध एवोचितः । उपजीव्यत्वप्रथमोपस्थितिनिरवकाशत्वानां असम्भाविताप्रामाण्ययोः सन्निपात एव प्राबल्यप्रयोजकत्वम् । 'आदित्यो यूपः' इत्यादौ च अन्यथानयने [5]गत्यन्तरमेवानुसरणीयं इति चेत्

न—स्थूलोऽहमित्येवंरूपेण शरीरात्माभेदावगाहिज्ञानस्यैवासम्प्रतिपत्तेः । आत्मशरीरयोरभेदज्ञानस्य तद्भेदाग्रहजन्यत्वेन तद्भेदग्रहे सति असम्भवात् । आत्मशरीरयोर्भेदग्रहः प्रसिद्ध एव 'मम शरीरं' इत्यभिज्ञारूपः । प्रत्यभिज्ञयाऽपि तद्भेदो गृह्यते 'य एवाहं बाल्ये पितरावन्वभूवं स एव स्थाविरे प्रणप्तृननुभवामि'

---

1. **एतत्परिभाषाया अद्वैतिपरिकल्पिताया इति** परिभाषा—आधुनिकसङ्केतितार्थकः शब्दः, आधुनिकः सङ्केतो वा । परिकल्पितायाः—**भ्रममूलिकायाः** । अबाधितविषयकं हि प्रमाणं नाम, व्यावहारिकविषयकं च बाधितविषयकम्, व्यावहारिकत्वस्य ब्रह्मज्ञानातिरिक्ताबाध्यत्वसमानाधिकरणबाध्यत्वरूपत्वात्, बाध्यत्वाघटने शुद्धब्रह्मणः शशशृङ्गस्य च व्यावहारिकत्वापत्तेः, ततश्च व्यावहारिकविषयकं बाधितविषयकमिति तत्र प्रामाण्यव्यवहारादिः भ्रममूलकः । ततश्च व्यावहारिकप्रामाण्यं नाम अप्रामाण्यमेवेति न तेन प्रामाण्यज्ञानस्य विषयसिद्धिरिति भावः ।

2. मु. कल्पिताया वस्तुव्यवस्थापकत्वासम्भवात् ।

3. प्रत्यक्षस्य प्राबल्ये हेतवः उपपादिताः, दौर्बल्ये हेतुभूतां अप्रमात्वशङ्कां आशङ्क्य निराकरोति—**'ननु स्थूलोऽहं' इत्यादिना 'श्रुतिस्वारस्यभङ्ग इति'** इत्यन्तेन ग्रन्थेन ।

4. **धर्म्यध्यासपूर्वकत्वं**—धर्मितादात्म्याध्यासव्याप्यत्वम् । तेन धर्मितादात्म्याध्यासधर्मसंसर्गाध्यासयोः पूर्वोत्तरकालीनत्वस्य अप्रामाणिकत्वेऽपि न क्षतिः ।

5. **गत्यन्तरमिति**—अतत्परागमापेक्षया प्रत्यक्षप्राबल्यरूपं हेत्वन्तरं इत्यर्थः । सिद्धान्तनिरूपणावसरे चेदं स्पष्टीभविष्यति ।

इति । न च शरीरमेवात्र प्रत्यभिज्ञायत इति वाच्यम् । प्रत्यभिज्ञाया अवस्थाद्वयानुयायिवस्तुविषयत्वात् । शरीरयोश्च परिमाणभेदेन भिन्नतया अनुयायित्वासम्भवात् । अवयवोपचयापचयाभ्यां [1]हि स्थौल्यकार्श्यादिरूपः परिमाणभेदो वाच्यः, अवयवोपचये आगतैरवयवैः पूर्वसिद्धावयविनिवेशायोग्यैः तत्साहाय्येन अवयव्यन्तरमारभ्यते, अपचये तु अवयवविश्लेषेण असमवायिकारणसंयोगनाशात् पूर्वावयविनि नष्टे अवशिष्टैः खण्डोऽवयव्यारभ्यते, इति शरीरयोर्भेदेन प्रत्यभिज्ञाविषयत्वासम्भवः । अतः प्रत्यभिज्ञाबलात् अनुयाय्यात्मा स्वीकर्तव्यः । शरीरं च नानुयायि । अतः प्रत्यभिज्ञाबलादपि तद्भेदोऽवगतः । [2]स्वप्ने च देवशरीरमात्मानमनुभूय जाग्रति मनुष्यशरीरं पश्यन्नपि प्रत्यभिजानाति 'स्वप्ने य एवाहं देवशरीरमात्मानमन्वभूवं स एवाहं मनुष्यशरीरमात्मानमनुभवामि' इति । तत्र च देहयोर्भेदः स्पष्टमनुभूयते । न च—तावता आत्मनोऽवस्थाद्वये ऐक्यं शरीरयोर्भेद इत्येतावत् सिद्ध्यति, तत्रापि परिमाणभेदात् द्रव्यभेद [3]आनुमानिकः । स्वप्नजाग्रच्छरीरयोस्तु भेदः प्रत्यक्षः, ताभ्यामात्मनो भेदस्त्वानुमानिक एव - येषु व्यावर्तमानेषु यत् अनुवर्तते तत् तेभ्यो भिन्नं यथा कुसुमेभ्यः सूत्रं, तथा चायं, तस्मात्तथा—इति, आनुमानिकभेदग्रहश्च नापरोक्षभ्रमविरोधीति—वाच्यम् । भेदकसाक्षात्कारस्य भेदसाक्षात्कारनियतत्वं[4] शुक्तित्वसाक्षात्कारेण रजतभेदसाक्षात्कारात् तावत् स्वीकर्तव्यम् । [5]प्रकृते द्वाभ्यां भेदकस्यैकत्वस्य आत्मनि साक्षात्कारात् भेदसाक्षात्कारोऽप्यवश्यम्भावी । एवं [6]बाह्यान्तःकरणाध्यासोऽपि न सम्भवति । तत्रापि 'मम

---

1. मु. **हि** नास्ति

2. आनुमानिको भेदकप्रत्यय उक्तः । प्रात्यक्षिकं भेदकप्रत्ययं दर्शयति—**स्वप्ने इत्यादिना । स्पष्टं अनुभूयते**—प्रत्यक्षविषय इत्यर्थः ।

3. **आनुमानिक इति** प्रत्यक्षेण तु 'योऽयं मम देहो बाल्ये तथा पुष्ट आसीत् स एवेदानीं वार्धके कृशः' इति अभेदस्यैव प्रतीतेः इति भावः ।

4. **नियतत्वम्**—व्याप्यत्वम् ।

5. **प्रकृते इति** एकस्मादात्मनो भेदकस्यानेकत्वस्य शरीरे साक्षात्काराभावेऽपि इति शेषः ।

6. **बाह्यान्तःकरणेति** बाह्यकरणान्तःकरणेत्यर्थः ।

चक्षुः, मम श्रोत्रं, मम मनः' इति भेदग्रहस्य सत्त्वात् । [1]कथं च बहुत्वेनावधृतानां देहेन्द्रियान्तःकरणानां प्रत्यभिज्ञावधृतैकत्वे आत्मन्यध्यासः । बहुत्वैकत्वलक्षणवैलक्षण्यग्रहस्य अभेदभ्रमपरिपन्थित्वात् ।

तथा च 'मनुष्योऽहं' इत्याद्यभेदग्रहो न सम्भवति, येन तद्दृष्टान्तेन करोमीत्यादेः अप्रामाण्यशङ्काकलङ्किततया श्रुतितो दौर्बल्यं शंक्येत । तत्सिद्धं उपजीव्यप्रत्यक्षस्वारस्यानुसारेण श्रुतिस्वारस्यभङ्ग इति ।

न चैवं 'सुरभि जलं' इत्यादिप्रत्यक्षस्याप्यागमेन बाधोन स्यादिति शंक्यम् । जले हि सौरभाश्रयचन्दनादिसम्पर्कः, पवने च पुष्पवाटिकातो निर्गत एव तथा प्रत्यय इति तत्रापि सौरभाश्रयपुष्पावयवसम्पर्कः सम्प्रतिपन्नः । तत्राकुशलानां सौरभासंसर्गाग्रहसम्भवात् जलादौ तदारोपः सम्भवतीति युक्तं स्मृतेस्तत्र विवेचकत्वम् । [2]न चैवं कर्तृत्वाद्याश्रयभूतं किंचिद्द्रव्यं संप्रतिपन्नम् । येन तदुपाधिकः कर्तृत्वादिप्रत्ययः स्यादात्मनि भ्रमरूपः ।

[3]ननु मनुष्योऽहमित्यादिप्रत्ययाभावे कथं [4]सामानाधिकरण्यव्यवहारः शब्दाभिलापरूपः 'मनुष्योऽहम्' इति । [5]व्यवहर्तव्यज्ञानाभावे व्यवहारानुपपत्तेः । न च—नायं व्यवहारस्सामानाधिकरण्यावगाही, किं तु [6]शरीरसम्बन्धावगाही,

---

1. भेदकसाक्षात्कारस्य साक्षादपि अभेदग्रहविरोधित्वमाह—**कथञ्चेत्यादिना अध्यासः**-एकस्मिन्नात्मनि अनेकेषां शरीरेन्द्रियान्तःकरणानां 'स्थूलोऽहमन्धः कर्ता' इत्येवंरूपो युगपदध्यासः ।

2. **न चैवमिति** 'कामः सङ्कल्पः' इत्यादिश्रुतिः 'लाङ्गलं जीवनं' इतिवत् औपचारिकाभेदपरा इत्यभिमानः ।

3. देहेन्द्रियात्मैक्यप्रत्ययाभावे बाधकमाशङ्कते - **ननु मनुष्योऽहमित्यादीति** । अन्धोऽहमित्यादिरादिशब्दार्थः ।

4. **सामानाधिकरण्यव्यवहारः**—अभेदव्यवहारः ।

5. **व्यवहर्तव्येति** व्यवहारः शब्दप्रयोगः, तत्र शब्दस्मृतिःकारणं, तत्र च एकसम्बन्धिज्ञानविधया व्यवहर्तव्यज्ञानं कारणं इति भावः ।

6. **शरीरसंबन्धेति** अभेदातिरिक्तस्वस्वामिभावादिरूपसंबन्धेत्यर्थः ।

[1]अर्श आद्यच्प्रत्ययसम्भवात् । अन्धादिशब्दानां विकलाङ्गवाचिनां [2]गणे पाठात् । मनुष्यादिशब्दानां तु आकृतिगणत्वात् सङ्ग्रहो भविष्यति । अचश्च 'तदस्यास्त्यस्मिन्निति मतुप्' इतिविहितमत्वर्थीयतया सम्बन्धवाचकत्वमुपपन्नमिति—वाच्यम् । 'गच्छामि कृश्यामि कुणिरहम्' इत्यादिव्यवहाराणां [3]तथा निर्वाहासम्भवात् । तत्राध्यासस्यागत्या आश्रयणे 'अन्धोऽहं' इत्यत्रापि तथैवास्तु । न च तथा सति विकलाङ्गवाचिनां गणपाठो व्यर्थस्यादिति वाच्यम् । [4]स्वरार्थतया पाठोपपत्तेः । वर्णवाचिनां हि नीलादिशब्दानां [5]मतुब्लोपेनैव सम्बन्धबोधोपपत्तौ गणपाठस्य [6]स्वर एव प्रयोजनमित्यङ्गीकरणीयम् । तत् तुल्यमन्धादिशब्देष्वपि । न च शुक्लैः प्रासादैः धवले नगरे 'शुक्लं नगरं' इति प्रयोगः शुक्लगुणयुक्तप्रासादवैशिष्ट्यबोधक इति सम्बन्धद्वयबोधनाय प्रत्ययद्वयमावश्यकमिति वाच्यम् । तत्र सन्निवेशविशेषविशिष्टा गृहा एव नगरं इत्यभ्युपगमे साक्षादेव सम्बन्धः[7]शुक्ल-

---

1. **अर्शआद्यच्प्रत्ययेति** 'अर्शआदिभ्योऽच्' (पा. सू. ५-२-१२७) इति सूत्रविहिताच्प्रत्ययेत्यर्थः ।

2. **गणे**—अर्शआदिगणे ।

3. **तथा निर्वाहेति** अच्प्रत्ययान्तत्वमाश्रित्य भेदसम्बन्धावगाहित्वसमर्थनेत्यर्थः । आख्यातान्तानां गणपाठाभावात् । विकलाङ्गवाचिनोऽपि कुणिशब्दस्य गणान्तर्भावस्य वैयाकरणासम्मतत्वात् । अच्प्रत्ययान्तत्वे 'कुणिः' इति शब्दस्य साधुत्वनिर्वाहासम्भवाच्च । अतो गमनकार्श्याद्याश्रयाभेदो वा आश्रयत्ववैशिष्ट्यं वा आत्मनि व्यवह्रियते इति वक्तव्यम् । तच्चोभयं वस्तुतः शरीरे नात्मनि । तथा च आत्मनि तादृशव्यवहारो देहात्मैक्यादिप्रत्ययरूपाध्यासाभावे न सम्भवति । अभिलापजन्यप्रतीतेः अभिलप्यमानप्रतीतिसमानविषयकत्वनियमात् , व्यवहारस्य व्यवहर्तव्यज्ञानजन्यत्वनियमात् , धर्मसंसर्गाध्यासस्य धर्मितादात्म्याध्यासव्याप्यत्वनियमाच्च इति भावः ।

4. **स्वरार्थतयेति** 'चितः' [पा. सू. ६-१-१६३] इति सूत्रविहितान्तोदात्तस्वरप्रयोजनकतयेत्यर्थः । 'अन्धो मणिमविन्दत्' इत्याद्युदाहरणम् ।

5. **मतुब्लोपेनैवेति** 'गुणवचनेभ्यो मतुपो लुक् (इष्टः)' वक्तव्यः [पा. सू. ५-२-९४ म. भा] इति विहितेनेत्यादिः । लुप्तस्य मतुपः स्मरणेनेत्यर्थः ।

6. **स्वर एव प्रयोजनमिति** न च गणपाठेन उभयसिद्धौ मतुब्लोपविधानं व्यर्थमिति शङ्क्यम् । गणापठितेभ्यः गुणान्तरवाचिभ्यः सम्बन्धबोधनिर्वाहार्थं मतुब्लोपविधानस्य आवश्यकत्वात् , तेनैव वर्णरूपगुणवचनेभ्यः सम्बन्धबोधनिर्वाहे गणपाठस्य उभयार्थत्वे गौरवात् स्वर एव प्रयोजनमिति भावः ।

7. **शुक्लत्वस्य—**शुक्लगुणस्य ।

त्वस्येति न प्रत्ययद्वयापेक्षा। गृहाधिकरणस्य स्थलस्यैव नगरत्वे तु परम्परासम्बन्धस्य एकेनैव बोधनात् न प्रत्ययद्वयापेक्षा। [1]अन्यथा 'अश्वेतत नगरं' अपुष्प्यद्वनं' इत्यादौ [2]का गतिः। अतस्सामानाधिकरण्यव्यवहारोपपादकतया देहेन्द्रियाद्यध्यासः स्वीकर्तव्यः—इति चेत्

न—भेदग्रहेणाध्यासानुपपत्तौ व्यवहारस्य गौणत्वोपपत्तेः। गृहीतभेदयोर्हि सिंहमाणवकयोः 'सिंहो माणवकः' इति व्यवहारो गौण इति सर्वसम्प्रतिपन्नम्। अध्यासवादिनाऽपि हि कायव्यूहवतां योगिनां अपरोक्षीकृताद्वैतात्मतत्त्वानां जीवन्मुक्तानां च स व्यवहारो गौणोऽवश्यमङ्गीकर्तव्यः।

तस्मात् मनुष्योऽहमिति दृष्टान्तेन अप्रामाण्यशङ्काया अनुन्मेषात् निर्णीतप्रामाण्येन उपजीव्यतया प्रबलेन प्रत्यक्षेण आगमस्याद्वैतात्मावबोधकत्वे विरोधात्[3] अर्थान्तरपरत्वमेव स्वीकर्तव्यमिति विषयाभावः। विषयाभावे च प्रयोजनमपि न सम्भवति। विषयप्रमा हि साक्षात्प्रयोजनम्। न चासम्भाविते विषये प्रमा सम्भवति। परमप्रयोजनं च प्रत्यगभिन्नब्रह्मविषयाज्ञाननिवृत्तिपूर्वकं जीवस्य नित्यसिद्धब्रह्मात्मनाऽवस्थानम्। न च तदपि सम्भवति। प्रमाणाभावेन ब्रह्मात्मताया [4]एवाभावात्, श्रुतेरन्यपरत्वस्य[5] दर्शितत्वात्। प्रमाणान्तरस्य चासम्भवात्।

अतो विषयप्रयोजनयोरभावेन शास्त्रं नारम्भणीयमित्यभिप्रेत्य विषयप्रयोजन-

---

1. **अन्यथा**—एतादृशस्थलेषु परम्परासम्बन्धबोधस्य अप्रामाणिकत्वे अनङ्गीकारे वा।

2. **का गतिरिति** गत्यभावः—प्रत्ययद्वयाभावात् विवक्षितार्थस्य बोधहेत्वभाव इत्यर्थः। 'श्विता वर्णे' इति धातोर्लङि निष्पन्नं हि 'अश्वेतत' इति रूपं, एवं 'पुष्प विकसने' इति धातोः 'अपुष्प्यत्' इति। आख्यातान्तबोध्यं श्वेतवर्णवैशिष्ट्यं साक्षात् प्रासादेष्वेव न नगरे। विकासवैशिष्ट्यं च वृक्षेष्वेव। नास्ति च प्रत्ययान्तरम्। अतः परम्परयैव नगरवनयोः तद्वैशिष्ट्यं बोध्यत इत्यङ्गीकार्य इति भावः।

3. मु. बोधकत्वविरोधात्

4. मु. एवासम्भवात्

5. **अन्यपरत्वस्य**—अन्यपरत्वेनोपपादनीयत्वस्य।

## अध्यासभाष्यम्

**युष्मदस्मत्प्रत्ययगोचरयोः विषयविषयिणोः तमःप्रकाशवद्विरुद्धस्वभावयोः इतरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि सुतरां इतरेतरभावानुपपत्तिः ;**

निर्णयोपयोगिनमध्यासमाक्षिप्य परिहरति—'**युष्मत्**' इत्यादिना **नैसर्गिकोऽयं लोकव्यवहारः**' इत्यन्तेन भगवान् भाष्यकारः ।

अत्र **युष्मत्प्रत्ययगोचरत्वं** [1]युष्मच्छब्दोल्लेखिप्रत्ययगोचरत्वं **विषयस्य** शरीरादेः । **अस्मत्प्रत्ययगोचरत्वं** अस्मच्छब्दोल्लेखिप्रत्ययगोचरत्वं **विषयिणः**-आत्मनः । अनेन च विरुद्धप्रवृत्तिनिमित्तकशब्दप्रतिपाद्यत्वेन [2]भेदग्रहो दर्शितः । यद्यपि इदंशब्दोल्लेखिप्रत्ययगोचरत्वमेव जडस्य वक्तुमुचितम् , [3]सम्बोध्यचेतनस्यैव हि युष्मच्छब्दोल्लेखिप्रत्ययगोचरत्वम् , तथापि इदंशब्दोल्लेखिप्रत्ययगोचर एव

---

1. **युष्मच्छब्दोल्लेखीति** युष्मच्छब्देन उल्लेखः—अभिलापः अस्य इति युष्मच्छब्दोल्लेखी । युष्मच्छब्दोल्लेख्येत्यर्थः । उल्लेख्येत्येव वा पाठः । एवं अस्मच्छब्दोल्लेखीत्यत्रापि । एवं च भाष्ये युष्मदस्मत्पदयोः तच्छब्दोल्लेख्ययोः लक्षणा । अतः 'प्रत्ययोत्तरपदयोश्च' [ पा. सू. ७-२-९८ ] इति सूत्रकार्यं त्वमादेशरूपं न भवति । मुख्ययोरेव सर्वादिगणपाठस्य सिद्धान्तितत्वात् मुख्ये एव सर्वनामकार्यप्रवृत्तेः । अन्यथा 'युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ [पा. सू. ८-१-२०] इति सूत्रे 'युष्मदस्मदोः' इति प्रयोगस्य असाङ्गत्यप्रसङ्गात् इति भावः ।

2. **भेदग्रहो दर्शित इति** । न चैवं सति विरुद्धस्वभावयोरिति पुनरुक्तं स्यात् इति वाच्यम् । 'ममेदं शरीरं' इति भेदग्रहोऽनेन दर्शितः, 'शरीरात्मानौ भिन्नौ' इति भेदग्रहो विरुद्धस्वभावयोरित्यनेन दर्शित इति वैलक्षण्यात् ।

3. **सम्बोध्यचेतनस्यैवेति** — सम्बोध्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नवाचको युष्मच्छब्दः । सम्बोध्यत्वञ्च वक्तुरव्यवहितशब्दजन्यबोधाश्रयत्वेनेच्छाविषयत्वम् । तादृशेच्छा च अभ्रान्तानां चेतनविषयिण्येव भवति, अचेतनानां बोधाश्रयत्वासम्भवात् । भ्रान्तिश्च न वस्तुसाधिका । तथा च सम्बोध्यचेतन एव युष्मच्छब्दबोध्यः । अभिलापजन्यप्रतीतितुल्यत्वादभिलप्यमानप्रतीतेः युष्मच्छब्दोल्लेख्यप्रत्ययगोचरत्वमपि सम्बोध्यचेतनस्यैवेत्यर्थः ।

स्वभिन्नत्वगुणयोगात् अत्यन्तविरोधख्यापनाय [1]तथोपचरितः। इदमस्मच्छब्दयोर्हि 'इमे वयं' 'अयमहमस्मि' [छा. उ ८-११-१] इति लौकिकवैदिकसामानाधिकरण्यव्यवहारप्राचुर्यात् तथाविरोधो न स्फुरति। युष्मदस्मच्छब्दयोस्तु प्रचुरसामानाधिकरण्यप्रयोगाभावात् स्फुरति विरोधः। अनेन च 'ममेदं शरीरं' इतिप्रतीतिर्दर्शिता। **तमःप्रकाशवत् विरुद्धस्वभावयोः**— तथाऽवगतयोः इति यावत्। भेदाग्रहाभावसिद्ध्यर्थं विरुद्धस्वभावत्वग्रहणमेव प्रतिपादनीयमिति तथा व्याख्यातम्। विरुद्धस्वभावत्वं च [2]परम्परानात्मत्वम्। **इतरेतरभावानुपपत्तौ सिद्धायां** तादात्म्यप्रतीत्यनुपपत्तौ सिद्धायाम्। एवं च यत् सिद्धान्तिनोच्यते शरीरात्माभेदभ्रमवत् कर्त्रात्माभेदभ्रमोऽपि सम्भवतीति, तत् निरस्तम्। 'ममेदं शरीरं' इत्यादिभेदग्रहे हि जाग्रति शरीरात्मनोरभेदभ्रम एव न सम्भवति। **तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिः**- इतरेतरभावः धर्माणां [3]व्यत्यासः, [4]तदध्यासानुपपत्तिः। धर्म्यभेदा-

---

1. **तथोपचरित इति** युष्मच्छब्दोल्लेखिप्रत्ययगोचरपदेन गौण्या वृत्त्या उक्त इत्यर्थः। गोचर इति प्रथमान्तम्। तथा च गौणत्वादपि सर्वनामकार्यं न भवति, 'गौणमुख्ययोः मुख्ये कार्यसम्प्रत्ययः' इति न्यायात् इति भावः। **तथोपचरितं** इति मुद्रितपुस्तकपाठः। तत्र गोचरपदं सप्तम्यन्तम्। युष्मच्छब्दोल्लेखिप्रत्ययगोचरपदं गौण्या प्रयुक्तं इत्यर्थः।

2. **परस्परानात्मत्वम्**—परस्परभेदः

3. **व्यत्यासः**—इतरेतरत्र भावः-संसर्गः। अयमेव धर्माणां इतरेतरभावः। धर्मिणोस्तु इतरेतरभावः-इतरेतरत्वं-तादात्म्यम्।

4. **तदध्यासानुपपत्तिरिति** एवञ्च 'तद्धर्माणामपि सुतरां इतरेतरभावानुपपत्तिः' इत्यत्रापि इतरेतरभावपदेन तत्प्रतीतिरेव विवक्षितेत्युक्तं भवति। ननु इतरेतरभावानुपपत्तिः-तत्प्रतीत्यनुपपत्तिः इति किमर्थमिदं क्लिष्टव्याख्यानम्। अधिष्ठानसामान्यांशाध्यस्यमानविशेषांशयोः क्वचिद्वास्तवतादात्म्ये सत्येव तत्प्रमितिजन्यसंस्कारापेक्षः 'इदं रजतं' इत्याद्यध्यासो दृष्टः, तदसम्भवः इह अध्यासासम्भवहेतुत्वेनोच्यत इत्यास्तां-इति चेत्; न-आत्मानात्मनोः वास्तवतादात्म्यासम्भवस्य सिद्धान्तिनाऽप्यङ्गीकृतत्वेन विरोधहेतुना तत्साधनस्य सिद्धसाधनदुष्टत्वात्। संस्कारस्य अध्यासकारणतायां प्रमितिजन्यत्वस्य अप्रयोजकत्वात्, नभोनैल्यभ्रमे व्यभिचाराच्च। नन्वेवं सति—'अतोऽस्मत्' इत्यादिभाष्ये इतरेतरभावानुपपत्त्या अध्यासाभावसाधनं दृश्यमानमनुपपन्नं स्यात्। तस्या इतरेतरभावप्रतीत्यनुपपत्तिरूपाया अध्यासाभावत्वेन साध्याविशेषात्। न च—अनुपपत्तिः उपपत्त्यभावः, भेदाग्रहरूपाध्यासोपपत्त्यभावेन हेतुना अध्यासाभावः साध्यते, अतो न साध्याविशेषः—इति वाच्यम्। भिन्नत्वेन

ध्यासाभावादेव धर्माध्यासाभावे [1]अर्थसिद्धे पुनः प्रतिपादनं शङ्काविशेषनिराकरणार्थम् ।

[2]**ननु** मास्तु धर्म्यभेदाध्यासः, तदभावेऽपि जपाकुसुमाभेदाध्यासरहिते स्फटिके जपाकुसुमारुणिम्न इव शरीरे [3]आत्मधर्मस्य चैतन्यादेरध्यासः किं न स्यात् ।

न च—तदभेदाध्यासः, तत्प्रतिबिम्बो वा [4]अगृहीतभेदः तद्धर्माध्यास-प्रयोजकः । स्फटिके चास्ति जपाकुसुमप्रतिबिम्बः स्फटिकादगृहीतभेदः । शरीरे च आत्माभेदाध्यासनिराकरणात् अगृहीतभेदः शरीरे आत्मप्रतिबिम्बो वक्तव्यः ।

---

गृहीतयोरित्यर्थकतया व्याख्यातेन 'विरुद्धस्वभावयोः' इत्यनेन हेतुगर्भविशेषणेन उक्तार्थ-लाभेन पुनः उपपत्त्यभावोक्तेः अनतिप्रयोजनकत्वात् । न च 'अहं मनुष्यः' इत्यादि-प्रतीतौ अध्यासलक्षणाभावेन अध्यासत्वाभावः साध्यत इति न साध्याविशेष इति शङ्क्यम् । अतोऽस्मत्प्रत्ययेत्यतः प्राक्तनग्रन्थेन 'अहं मनुष्यः' इत्यादिप्रतीतौ अध्यास-लक्षणाभावस्य अप्रतीतेः तत्परत्वकल्पनस्य क्लिष्टत्वात्, अतः इतरेतरभावानुपपत्ति-पदस्य इतरेतरभावप्रतीत्यभावार्थकत्वेन व्याख्यानमनुपपन्नं—इति चेत्, उच्यते-शरीरा-त्माभेदभ्रमवत् कर्त्रात्माभेदभ्रमः सम्भवतीति यत् सिद्धान्तिना सिषाधयिषितं तत्र दृष्टान्तनिरासि इतीत्यन्तभाष्यं दार्ष्टान्तिकनिरासि अवशिष्टं भाष्यं, अतो नाविशेषः । स्पष्टश्चैतत 'इत्यतोऽस्मत्' इत्यादिभाष्यावतरणे ।

1. **अर्थसिद्धे**—अर्थः—अनुमानं 'शरीरं आत्मधर्माध्यासरहितं, आत्मता-दात्म्याध्यासशून्यत्वात्, यो यत्तादात्म्याध्यासरहितः स तद्धर्माध्यासरहितः, यथा पटत्वाध्यासरहितो घटादिः' इत्येवमाकारम्, तेन निर्णीते ।

2. शङ्काविशेषनिराकरणार्थमित्युक्तं, निराकर्तव्यं शङ्काविशेषमाह—**ननु** इत्या-दिना **तन्निराकरणं च** इत्यतः प्राक्तनेन ग्रन्थेन ।

अयमत्र शङ्काग्रन्थार्थसंक्षेपः—शरीरात्मनोर्भेदनिश्चयेन धर्म्यभेदाध्यासाभावेऽपि धर्मसंसर्गाध्यासः सम्भवति, स्फटिके जपाकुसुमलौहित्याध्यासवत् । स्फटिके जपा-कुसुमप्रतिबिम्बस्येव शरीरे आत्मप्रतिबिम्बस्य भेदाग्रहसम्भवात् । आत्मनश्च नीरूप-त्वेऽपि गगनस्येव प्रतिबिम्बः सम्भवति । 'जले आलोकप्रतिबिम्ब एव, तत्र गगनप्रति-बिम्बभ्रमः' इति तु न युक्तम् । बाधकाभावात् । न च प्रतिबिम्बद्वयकल्पनागौरवं बाधकम् । आलोकप्रतिबिम्बे गगनप्रतिबिम्बभ्रमपक्षेऽपि भ्रमसिद्धस्य अनिर्वचनीयस्य गगनप्रतिबिम्बस्य अवश्याभ्युपगन्तव्यत्वेन गौरवस्य तुल्यत्वात्, बिम्बातिरिक्तप्रति-बिम्बानङ्गीकारपक्षे गौरवाभावात्, 'रूपवत एव प्रतिबिम्बः' इति नियमस्य च अप्रयोजकत्वात्—इति ।

3. आ. आत्मधर्मभूतस्य

4. मु. तदगृहीत

सोऽपि न सम्भवति । नीरूपस्य आत्मनः प्रतिबिम्बासम्भवात् । रूपवत एव प्रतिबिम्ब इति हि नियमः इति—वाच्यम् । नीरूपस्यापि गगनस्य जले प्रतिबिम्बदर्शनेन नियमभङ्गात् ।

[1]अथ जले न गगनप्रतिबिम्बः । अपि तु आलोकप्रतिबिम्ब एव गगनप्रतिबिम्ब इति भ्रममात्रम् । अतो न नियमभङ्गः । ननु—नायं नियमस्साधुः । प्रतीत्यनुसारी हि नियमः कल्पनीयः । न त्वप्रयोजकनियमानुसारेण गगनप्रतिबिम्बप्रतीतेरप्रामाण्यं कल्पयितुं युक्तम् । अन्यथा 'रूपवत एव चाक्षुषत्वं' इति 'स्वगतरूपचाक्षुषविषयत्वमेव द्रव्यस्य' इति च नियमं परिकल्प्य 'विशालं नभः' 'नीलंनभः' 'नीलं सलिलं' इत्यादिप्रतीतीनामपि [2]अन्यविषयत्वपरिकल्पनापत्तेः । यदि च—रूपवदेव चाक्षुषमिति स्वगतरूपचाक्षुषविषयत्वमेव द्रव्यस्येति च न नियमः, किं तु स्वगतेन अन्यगतेन आरोपितेन वा रूपेण सम्बद्धस्य चाक्षुषत्वं, तादृशरूपचाक्षुषविषयत्वमेव द्रव्यस्य इत्युच्येत, तदा रूपवत एव प्रतिबिम्ब इत्यपि नियमो मास्तु, यथाकथञ्चिद्रूपोपहितस्य प्रतिबिम्ब इत्येवास्तु । तथा च आकाशस्याप्यालोकरूपोपधानेन आरोपितरूपोपधानेन च प्रतिबिम्बसम्भवे किमिति तत्प्रतीतेर्भ्रमत्वं कल्प्यते । एवमात्मनोऽपि शरीररूपोपधानेन प्रतिबिम्बोऽस्तु । दृश्यते हि दर्पणादिगतनैल्याद्युपधानेनापि मुखादिप्रतिबिम्बः इति चेत्; न—येनापि हि गगनप्रतिबिम्ब इष्यतेतेनाप्यालोकप्रतिबिम्बस्तावदभ्युपगन्तव्यः । [3]अन्यथा वैशाल्यप्रतीत्यनुपपत्तेः । यत्ररूपं [4]भासते तत्रैव परिमाणभानमिति नियमात् । एवं च आलोकप्रतिबिम्बे भासमानस्य वैशाल्यस्य गगनप्रतिबिम्बगततया भानमिति भ्रमोऽपि स्वीकार्यः । तद्वरं

---

1. गगनप्रतिबिम्बवादमाक्षिपति — **अथेत्यादिना**—न रूपोपधानेन इत्यतः प्राक्तनेन ग्रन्थेन ।

2. **अन्यविषयत्वपरिकल्पनापत्तेरिति** बाह्यगगनविषयाणां इत्यादिः । आलोकगतवैशाल्यादिविषयकत्वकल्पनापत्तेरित्यर्थः । न चेष्टापत्तिः । 'अप्रत्यक्षेऽपि ह्याकाशे बालाः तलमलिनताद्यध्यस्यन्ति' इति भाष्यविरोधात् ।

3. **अन्यथेत्यादि** गगनप्रतिबिम्बमात्राभ्युपगमे कूपाधिकपरिमाणरूपस्य प्रतिबिम्बगतविशालत्वस्य अचाक्षुषत्वप्रसङ्गात् । परिमाणस्य रूपसामानाधिकरण्येनैव भाननियमात्, कूपाधःप्रदेशे नैल्यभानेऽपि मध्ये तदभानात्, कूपमध्ये परिमाणाभाने वैशाल्यप्रतीत्यनिर्वाहात् इति भावः ।

4. मु. प्रतिभासते

आलोकस्यैव प्रतिबिम्बोऽस्तु, तत्रैव गगनप्रतिबिम्बत्वभ्रममात्रम्। तलमलिनत्वादिकं च आलोकप्रतिबिम्ब एवाध्यस्यताम्। कल्पनालाघवात्। एवं च रूपवत एव प्रतिबिम्ब इति न नियमभङ्गः। रूपोपहितस्य प्रतिबिम्ब इति कल्पने तु अनन्तरासम्प्रतिपन्न आकाशप्रतिबिम्ब एव मूलम्। स तु न सम्भवति गौरवपराहतत्वात् इत्युक्तम्। बहिस्तु आकाशस्य सर्वसम्प्रतिपन्नत्वात् 'विशालं नभः' 'नीलं नभः' इति प्रतीतेर्यथार्थत्वे[1] न गौरवमिति तदुपपत्तये रूपोपहितस्य चाक्षुषत्वमित्येव स्वीक्रियते। तथा च नीरूपस्यात्मनो न प्रतिबिम्बसम्भवति। एवमपि गगनप्रतिबिम्बत्वभ्रमाश्रयः यथा जले [2]आलोकोऽस्ति, तस्मिंश्च गगनधर्मस्य तलमलिनत्वस्यारोपे स एव बाह्यगगनसदृशः तलमलिनत्वादिविशिष्टगगनत्वप्रकारकप्रत्ययविषयो भवति, [3]तादृशालोकेन कूपस्य भेदाग्रहशालिनां च 'कूपे तलमलिनत्वादिकं' इत्यपि भ्रमो भवति; एवं शरीरे आत्मप्रतिबिम्बत्वभ्रमाश्रयः कश्चिदस्ति चेत् तत्र आत्मधर्मस्य चैतन्यादेरध्यासः सम्भवेत्, तस्य चेतनत्वेनावगम्यमानस्य शरीरात् भेदाग्रहे सति तत्रापि तद्धर्माध्यासः सम्भवेत्। न तु शरीरे आत्मप्रतिबिम्बत्वभ्रमाश्रयः कश्चिदस्ति। एवं च अभेदाध्यासाभावेऽपि जपाकुसुमारुणिम्न इव आत्मधर्मस्य चैतन्यादेरध्यासोऽस्त्विति कथमुच्यत इति चेत्

[4]न—रूपोपधानेन प्रतिबिम्ब [5]इति पक्षे 'जलान्तर्गततया अपूर्वो गगनप्रतिबिम्बः कल्पनीयः' इति 'बाह्य एवाकाशो प्रतिहतैर्नायनरश्मिभिः संसृष्टे जलान्तर्गतत्वमारोप्यते' इतिवदन्तं प्रति वक्तुं न शक्यते, [6]बाह्यगगने च आलोक-

---

1. **यथार्थत्वे**—यथा भासते तथात्वे। नभोगतवैशाल्यादिविषयकत्वे इति यावत्।

2. **आलोकः**—आलोकप्रतिबिम्बः

3. **तादृशालोकेन**—तादृशेन आलोकप्रतिबिम्बेन

4. गगनप्रतिबिम्बवादं समर्थयति—**न रूपोपधानेनेत्यादिना।**

5. **इति पक्षे** इति **कथं गौरवं** इत्यनेन सम्बध्यते। गौरवं नास्तीत्यर्थः।

6. प्रतिबिम्बस्य बिम्बाभेदपक्षाश्रयणेन गगनप्रतिबिम्बकल्पनागौरवं परिहृत्य, तत्पक्षाश्रयणेनैव 'आलोकप्रतिबिम्बे भासमानस्य वैशाल्यस्य गगनप्रतिबिम्बगततया भानमिति भ्रमोऽपि स्वीकार्यः' इत्युक्तं गौरवमपि परिहरति—**बाह्यगगने इति।** गगनगततया गगनगतस्यैव भानात् इति भावः।

रूपोपहिते सर्वसम्प्रतिपन्नतया भवताऽप्यभ्युपगता वैशाल्यप्रतीतिः भ्रम इत्यपि वक्तुं न शक्यते इति, कथं गौरवम् । प्रत्युत भवत एव गौरवम् । तलमलिनत्वस्य गगनगततया सर्वप्रतीतिसिद्धस्य प्रतिबिम्बप्रत्यये आलोकगततया [1]आरोपस्य स्वीकारात् । यन्मते च अपूर्व एव प्रतिबिम्बो जले उत्पद्यते तत्रापि न वैशाल्यस्य गगनप्रतिबिम्ब गततया भानं भ्रमः । आलोकरूपोपहितस्यैव प्रतिबिम्बाभ्युपगमात् । न च प्रतिबिम्बद्वयाभ्युपगमात् गौरवम् । येनापि हि आलोकप्रतिबिम्ब एव गगनप्रतिबिम्ब [2]इति भ्रमः स्वीक्रियते, तेनापि आलोकप्रतिबिम्बाधिष्ठानो गगनप्रतिबिम्ब उत्पद्यत इति वक्तव्यम् । अनिर्वचनीयवादाभ्युपगमात् । तदस्तु जलाधिष्ठान एव । किमनया कुसृष्ट्या । अपि च गगनप्रतिबिम्बाभ्युपगमे बिम्बसदृशः प्रतिबिम्ब इति तलमलिनताप्रत्यये नापूर्वं किञ्चित् कल्पनीयम् । तदनभ्युपगमे तु आलोकप्रतिबिम्बे अक्लृप्तस्तदध्यासः कल्पनीय इति विपरीतं गौरवम् । तस्मान्नीरूपस्याप्याकाशस्य रूपोपधानेनेव आत्मनोऽपि रूपोपधानेन प्रतिबिम्बे न काचिदनुपपत्तिः ।

तथा च स्फटिके जपाकुसुमारुणिम्न इव धर्म्यध्यासाभावेऽपि शरीरे आत्मधर्मस्य चैतन्यादेरध्यासः किं न स्यादिति शङ्का ।

**तन्निराकरणं च** तद्धर्माणामपीत्यनेनेत्थं विवक्षितम् । वेदान्तिनो हि 'वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्' [ब्र. सू. ३-२-२०] इति सूत्रे वक्ष्यमाणरीत्या अन्तःकरणाद्यैक्याध्यासमापन्नस्य तद्धर्मानुविधायित्वमेव तत्र प्रतिबिम्बितत्वमिति मतम् । न तु मुख्यं सूर्यप्रतिबिम्बादिवत् । तदुपपत्तिश्च तत्रैव स्फुटीभविष्यति । अन्तःकरणाद्यैक्याध्यासश्च न सम्भवतीत्युक्तम् । अतो न तद्धर्माध्यासः ।

[3]धर्म्यभेदाध्यासाभावेऽपि नीलं सलिलमिति सलिले नैल्याध्यासो दृश्यते, एवं प्रकृते किं न स्यात्—इति शङ्कायां **सुतरामिति** । अन्यत्र यथाकथञ्चित् अस्तु नाम, परस्परधर्म्यभेदाध्यासपूर्वक एव चिज्जडयोः परस्परधर्माध्यास इति वदता सिद्धान्तिना तथा शङ्कितुमेव न शक्यं इति भावः ।

---

1. मु. आरोप्यस्य
2. मु. इति स्वीक्रियते
3. तद्धर्माणामपीत्युक्तमेव सुतरामित्यनेनापि उच्यते इति भामती ।

**इत्यतोऽस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चाध्यासः, तद्विपर्ययेण विषयिणस्तद्धर्माणां च विषयेऽध्यासो मिथ्येति भवितुं युक्तम् । तथाऽपि —**

एवं देहात्माध्यासरूपं दृष्टान्तं निरस्य तेन सम्भावनीयं बुद्ध्यात्मनोरैक्याध्यासमपि निरस्यति—**इत्यतोऽस्मत्प्रत्ययगोचरे इति** । अत्र विषयशब्दोऽन्तःकरणप्रतिपादकः । [1]**तद्विपर्ययेणेति** उत्तरत्र अध्यासः इत्यनेन सम्बध्यते । एकत्र आत्मा अधिष्ठानं अन्यत्र जडोऽधिष्ठानं इत्यध्यासयोर्वैपरीत्यम् । **मिथ्येति भवितुं युक्तमिति** । न सम्भवतीति यावत् ।

**तथापि** इत्यादेः परिहारस्यायमाशयः—

श्रुतितदन्यप्रमाणविरोधे हि श्रुतेरेव प्राबल्यं वैदिकैरभ्युपगन्तव्यं इत्युत्सर्गः । [2]'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्' इति स्मृतेः । न च इदं वचनं आगमैकसमधिगम्यस्वर्गयागादिसाध्यसाधनभावादौ तत्प्राबल्यप्रतिपादनपरम्, न तु प्रत्यक्षसाधारणात्मविषये---इति वाच्यम् । तथासङ्कोचकल्पने प्रमाणाभावात्, एकविषयानेकविरुद्धप्रमाणसन्निपाते निर्णयोपयोगितया प्राबल्यप्रतिपादनेन अपेक्षितार्थसमर्पकत्वे सम्भवति विरुद्धप्रमाणान्तराप्रसक्त्या व्यर्थत्वापादकस्य आगमैकसमधिगम्यविषयकत्वस्य कल्पयितुमनुचितत्वाच्च[3] ।

[4]उपजीव्यप्राबल्यन्यायश्च न प्रकृते सम्भवति । सामान्यन्यायस्य 'उपजीव्योपजीवकयोरेव [5]उपदेशानुपदेशत्वे विपरीतं बलाबलं' इति विशेषन्यायेन बाधात् ।

---

1. **तद्विपर्ययेणेति** विषयिणि विषयाध्यासः तच्छब्दार्थः । तद्विपर्ययेणेत्यस्य विवरणं 'विषये' इत्यन्तम् । प्रस्थानान्तरयोस्तु विषयः तच्छब्दार्थः ।
2. प्रत्यक्षस्य जात्या प्राबल्यं पूर्वपक्षोक्तं निराकरोति—**प्राबल्यमिति** । इदं मनुवचनमिति सिद्धान्तलेशसङ्ग्रहटीकाकृतः । ब्रह्मतर्कवचनमिति न्यायामृतव्याख्यातारः ।
3. **अनुचितत्वाच्चेति** अद्वैतात्मनोऽपि आगमैकसमधिगम्यत्वात्—इत्यपि बोध्यम् ।
4. उपजीव्यत्वेन प्रत्यक्षस्य प्राबल्यमुक्तं निराकरोति—**उपजीव्येति** ।
5. **उपदेशानुपदेशत्वे** इति यथायोगमन्वयः । न तु यथासङ्ख्यम् ।

न चाप्रयोजकत्वम् । अनुपदेशस्य दुष्टत्वसम्भवात् । स च दोषः क्वचिदप्रामाण्य-शङ्काकलङ्कितत्वम्, क्वचिद्विलम्बितप्रवृत्त्यादिकम् । तद्यथा—कुण्डपायिनामयने[1] श्रुतस्य 'यो होता सोऽध्वर्युः [ता. ब्रा. 25-1-5] इति वाक्यस्य, [2]विरुद्धार्थ-कयोर्होत्रध्वर्युशब्दयोः [3]सामानाधिकरण्यनिर्वाहार्थं प्रथमश्रुतहोतृशब्दानुसारेण अध्वर्यु-शब्देन लक्षणयोपस्थापिते अध्वर्युकार्ये [4]होतृविधायकत्वे स्थिते, यूपपरिव्याणे[5] करणस्य 'परिवीरसि' [तै. सं. 1-3-6] इति मन्त्रस्य [6]अन्यत्राध्वर्युप्रयोज्यस्यापि अत्र वचनानुसारेण होत्रा प्रयोगः प्राप्नोति । अतिदेशानुसारेण च होतृकार्यान्तर्गते । 'युवा सुवासाः [तै. ब्रा 3-6-1] इति [7]वर्तमानतानुवादिमन्त्रे होता [8]प्राप्नोति न चोभावपि मन्त्रौ होत्रा प्रयोक्तुं शक्यौ । परिव्याणसङ्कल्पमारभ्य तत्समाप्ति-पर्यन्तः कृत्स्नोऽपि वर्तमानकाल इति तावन्तं कालं वर्तमानतानुवादी मन्त्रः प्रयो-क्तव्यः, परिव्याणाव्यवहितपूर्वक्षणे करणमन्त्रः [9]समारम्भणीयः, इत्येककालसमावे-शात् । तत्रान्यतरबाधे वर्तमानतानुवादिमन्त्रबाध एवाश्रितः[10] । तत्र होतुरतिदेशः [11]तत्कार्यस्य च प्रत्यक्षेण 'यो होता सोऽध्वर्युः' इत्यनेन उपजीव्यः । प्राप्तोभया-नुवादेन सम्बन्धमात्रविधानात् । होतृप्राप्त्यर्थं होतृकार्यमप्युपजीव्यम् । पदार्थानां कार्यमुखेनैव विकृतिषु प्राप्तेः स्वीकारात् । न चात्र सावकाशनिरवकाशन्यायः ।

---

1. **कुण्डपायिनामयने**—तन्नामके सत्रे ।
2. **विरुद्धार्थकयोः**—अत्यन्तभिन्नार्थवाचिनोः ।
3. **सामानाधिकरण्यनिर्वाहार्थम्**—प्रतीयमानस्य अभिन्नार्थबोधानुकूलाकाङ्-क्षादिमत्त्वस्य अबाधाय ।
4. **होत्विति** कर्तृत्वेनेत्यादिः ।
5. **परिव्याणे इति** परिव्याणं—रशनया परितो वेष्टनम्
6. **अन्यत्र**—प्रकृतौ
7. **वर्तमानतानुवादीति** क्रियमाणानुवादिनोऽभिधानम् ।
8. **प्राप्नोति**—ज्योतिष्टोमात् द्वादशाहे ततो गवामयने ततः कुण्डपायिनामयने इत्येवं चोदकपरम्परया अग्नीषोमीयस्य पशोः कुण्डपायिनामयनप्राप्त्या तदङ्ग-मन्त्रप्रयोगे होता कर्तृत्वेन प्राप्नोति ।
9. मु. समापनीयः
10. **आश्रितः**—तृतीयाष्टमदशमे पूर्वमीमांसकैः न्यायतोनिर्णीतः ।
11. **तत्कार्यस्य**—'यो होता सोऽध्वर्युः' इति वचनानुसारेण होतृकर्तव्यत्वेन प्राप्तस्य अध्वर्युकार्यस्य ।

वचनस्य परिवीरसीतिमन्त्रातिरिक्तेऽप्याध्वर्यवे सावकाशत्वात् । अतः उपजीव्यस्यापि विलम्बितप्रवृत्तिकतया शीघ्रप्रवृत्तिकेन उपदेशेन बाध इत्येव स्वीकर्तव्यम् । एवं प्रकृतेऽपि सम्भाविताप्रामाण्यस्य प्रत्यक्षादेः उपदेशेन तद्विपरीतेन बाधो भविष्यति ।

[1]एवमुपजीव्योपजीवकयोरेव तात्पर्यलिङ्गसहितस्य उपजीवकस्य तद्रहितादुपजीव्यात् प्राबल्यमभ्युपगन्तव्यम् । अद्वैतविषयकोपक्रमादीनां[2] इदमेव प्रयोजनम्—यत् प्रमाणान्तरानुसारेण तत्त्वमस्यादिवाक्यस्य अर्थान्तरशङ्कानिराकरणम् । न च तथा प्रत्यक्षादेस्तत्त्वावेदकत्वमेव स्वीकर्तव्यमित्यत्र किञ्चिन्निर्बन्धकारणमस्ति । अतोऽन्यथासिद्धिशङ्काकलङ्कितप्रत्यक्षविरोधं तिरस्कृत्य तात्पर्यग्रहे[3] न काचिदनुपपत्तिः । अत एव [4]लाघवरूपतात्पर्यलिङ्गसहकृतेन[5] 'हिरण्यगर्भस्समवर्तताग्र इत्याघारमाघारयति' [ तै. 5 - 5 - 1 ] इति विधिना हिरण्यगर्भइतिमन्त्रस्यान्यथानयनमाश्रितम् । इदं हि वचनं वायव्यपशावाम्नायते—प्रकृतौ च द्वावाघारौ-प्रथमः प्राजापत्यः, द्वितीयः ऐन्द्रः समन्त्रकः । तत्रैव च मन्त्रजन्यादृष्टम् । न तु प्रथमेऽमन्त्रके । तत्र यदि आघारसामान्यप्रतिपादकेनानेन विधिना [6]मन्त्रलिङ्गस्वारस्यानुरोधेन[7] 'प्रजापतिर्वै हिरण्यगर्भः' [ तै. सं. 5-5-1 ] इत्यर्थवादस्वारस्यानुरोधेन च प्रथमाघार एव मन्त्रो विधीयेत, तदा अदृष्टं किञ्चित् परिकल्पनीयम्, तस्य [8]प्रथमाघारोपकारकत्वं तत्र मन्त्रजन्यत्वसामान्यं तद्विशेषश्चेति बहु कल्पनीयं

---

1. तात्पर्यवत्त्वस्य प्राबल्यप्रयोजकतां समर्थयति—**एवमुपजीव्येति** ।

2. मु. उपक्रमानां

3. **न काचिदनुपपत्तिरिति** एतेन - उपजीव्यप्रमाणविरुद्धार्थकत्वे तात्पर्यवत्त्वमेव न सिद्ध्यति—इति शङ्का सत्तात्रैविध्यवादे अन्योन्याश्रयशङ्का च निरस्ता वेदितव्या ।

4. **लाघवरूपतात्पर्यलिङ्गसकृतेनेति** लाघवस्य उपपत्तिरूपतात्पर्यलिङ्गे अन्तर्भावो वेदितव्यः ।

5. मु. सहकृतत्वेन

6. **मन्त्रलिङ्गस्वारस्यानुरोधेनेति** हिरण्यगर्भशब्दस्य प्रजापतिनामत्वप्रसिद्ध्या प्राजापत्याघारे मन्त्रविधिः मन्त्रलिङ्गस्वारस्यमनुरुन्धे इति भावः । मन्त्रघटकपदमुख्यार्थसम्बन्धिक्रियायां मन्त्रविनियोजकत्वं मन्त्रलिङ्गस्य स्वारस्यम् ।

7. मु. स्वारस्यानुसारेण

8. **प्रथमाघारोपकारकत्वमिति** अपूर्वजनने प्रथमाघारसहकारित्वं इत्यर्थः ।

स्यात् । द्वितीयाघारे तद्विधाने तु प्रकृतौ तस्य मन्त्रसामान्याद्दृष्टसम्बन्धः क्लृप्त इति विधेर्मन्त्रविशेषसम्बन्धमात्रपरत्वमिति लाघवरूपतात्पर्यलिङ्गोपेतेन द्वितीयाघारे मन्त्रविधानेन विनियोज्यतया विनियोगविध्युपजीव्यस्यापि[1] स्वरसतो[2] हिरण्यगर्भप्रकाशकस्य [3]लक्षणया इन्द्रप्रकाशकत्वं स्वीकृतम् । तत् सिद्धं प्रबलश्रुति-प्रमाणानुसारेण वर्णपदादिस्वरूपमात्रोपजीवनमभ्युपगम्य अनपेक्षितलौकिकप्रमाणगत-तत्त्वावेदकत्वबाधेऽपि न काचिदनुपपत्तिः ।

[4]एवं च यत् प्रामाण्यज्ञानस्य प्राथम्यं प्राबल्ये प्रयोजकमुक्तं, तत् विपरीतम् । तत्रैव हि प्रथमस्य प्राबल्यं यत्रोत्तरेण तदपेक्ष्यते । यथा 'प्रजापतिर्वरुणायाश्व-मनयत् स स्वां देवतामार्च्छत् स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत्तन्निर-वपत्' [तै. सं. 2-3-12] इत्युपक्रमेण असञ्जातविरोधिना दातुरिष्टिरिति बोधे सति 'एकवाक्यतापन्नानां सम्भूयैकार्थप्रतिपादकत्वं इति व्युत्पत्त्या [5]तमपेक्षमाणस्य 'याव-तोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणान् चतुष्कपालान्निर्वपेत्' [तै. सं. 2-3-12] इति [6]तदुपसंहारस्य [7]तद्विरोधेन प्रतिग्रहीतुरिष्टिरित्येवंरूपार्थबोधकत्वानुपपत्त्या [8]णिजर्थान्तर्भावेन दातुरेवेष्टिरित्येवंरूपार्थबोधकत्वमुपेयते । अनपेक्षत्वे तु स्वप्रमाणानु-सारेण लब्धात्मकस्य उत्तरज्ञानस्यैव प्राबल्यम् । यथा बहिष्पवमानार्थं हविर्धानात्

---

1. **विनियोगविध्युपजीव्यस्येति** मन्त्रस्येति शेषः । प्रसिद्धं मन्त्रमादाय तद्विनियोगस्य कार्यत्वात् मन्त्रविध्युपजीव्यत्वं मन्त्रस्येति भावः ।

2. **स्वरसतः**—रूढ्या ।

3. **लक्षणयेति** रूढिभिन्नत्वगुणेन योगोऽत्र लक्षणाशब्देन अभिहितः । योगेने-त्यर्थः । सूक्तस्य ऐन्द्रत्वात् योगाश्रयणं न दोष इति भावः । अर्थवादगतप्रजापति-शब्दस्यापि इदमुपलक्षणम् ।

4. असञ्जातविरोधित्वन्यायेन प्रत्यक्षस्य प्राबल्यं पूर्वपक्षोक्तं निराकरोति—**एवञ्चेति** एवञ्च—प्रत्यक्षप्रामाण्यस्य श्रुत्यनपेक्षितत्वे सिद्धे ।

5. **तमपेक्षमाणस्येति** प्रजापतिरित्याद्युपक्रमवाक्यं तच्छब्दार्थः ।

6. **तदुपसंहारस्येति** अनुपदोक्तेष्टिः तच्छब्दार्थः ।

7. **तद्विरोधेनेति** इष्ट्युपक्रमवाक्यं तच्छब्दार्थः ।

8. **णिजर्थान्तर्भावेन** प्रतिगृह्णातेः 'प्रतिग्राहयेत्' इति **अन्तर्भावितणिजर्थ-**परत्वाश्रयणेन—दानलक्षकत्वेनेति यावत् । इदमेव व्यवधारणकल्पनेत्युच्यते - यत् प्रतिगृह्णातेः प्रतिग्रहविपरीतदानार्थकत्वाश्रयणम् । आ. णिजन्तर्भावेन

बहिर्निर्गच्छतामाम्नातान्वारम्भाणां विच्छेदे कुतश्चिन्निमित्तात् प्राप्ते प्रायश्चित्तमाम्नायते 'यद्युद्गाताऽपच्छिद्येत अदक्षिणं तं यज्ञं परिसमाप्य पुनर्यजेत तत्र तद्दद्यात् यत् पूर्वस्मिन्[1] दास्यन् स्यात् यदि प्रतिहर्ता सर्ववेदसं दद्यात्' इति । तत्र विरुद्धयोः क्रमेणापच्छेदे कर्तव्यतया प्राप्तयोः समुच्चयासम्भवादन्यतरबाधेऽवश्यं स्वीकर्तव्ये पूर्वनैमित्तिककर्तव्यताज्ञानानपेक्षेण स्वप्रमाणप्राप्तेन उत्तरनैमित्तिककर्तव्यताज्ञानेन पूर्वनैमित्तिककर्तव्यताज्ञानबाध एवाश्रितः । लोके इदं रजतमिति पूर्वज्ञानस्य उत्तरेण 'नेदं रजतं शुक्तिरेव' इति ज्ञानेन बाधदर्शनात् । तथाच उत्तरेण श्रौतात्मज्ञानेन प्रत्यक्षप्रामाण्यज्ञानस्यैव बाधो भविष्यति ।

ननु[2] उत्तरज्ञानेन पूर्वज्ञानस्यबाधे नेदमुदाहरणम् । न ह्यत्र पूर्वनैमित्तिककर्तव्यताज्ञानं भ्रमरूपम् । अस्मिन्नपि प्रयोगे पूर्वनैमित्तिककर्तव्यताया उत्पन्नत्वात् । सा तु उत्तरनैमित्तिककर्तव्यतया नाश्यते, बदरे पूर्वोत्पन्ना श्यामतेव उत्तरोत्पन्नया रक्तताया, इति चेत्

न-तत्क्रतुप्रयोगे तदेव कर्तव्यम्, यत् तत्प्रधानोद्देशेन कर्तव्यतया विधीयते । तदेव च प्रयोगविधिना कर्तव्यतया विधीयते, यदङ्गविधिभिः प्रधानोपकारतया विनियुज्यते । न च विरोध्युत्तरनिमित्ताक्रान्ते क्रतौ पूर्वनिमित्तसम्बन्धिनोऽङ्गत्वं बोध्यते विधिना । [3]विचारदशायां नैमित्तिकशास्त्रद्वयं [4]पर्यालोच्य [5]तदर्थयोर्नैमित्तकयोर्विरुद्धयोः क्रमेण सम्पन्नयोःसमुच्चयासम्भवं [6]लौकिकन्यायेन उत्तरेण पूर्वस्य बाध्यत्वं च अनुसन्धाय विरोध्युत्तरनिमित्तरहितक्रतावेवाङ्गत्वबोधे विधेस्तात्पर्यं

---

1. मु. पूर्वत्र

2. अनुपदोक्तार्थे न्यायामृतोक्त अपच्छेदन्यायवैषम्यं परिहर्तुं आशङ्कते-**नन्विति** ।

3. **विचारदशायामिति** वर्तमानं इति शेषः ।

4. **पर्यालोच्येति** पर्यालोच्य अनुसन्धाय तात्पर्यं निर्धार्यते इति सम्बन्धः ।

5. **तदर्थयोर्नैमित्तिकयोरित्यादि** नैमित्तिकयोः प्रायश्चित्तयोः समुच्चयासम्भवे हेतुगर्भविशेषणं 'विरुद्धयोः' इति । उत्तरेण पूर्वस्य बाध्यत्वे हेतुगर्भविशेषणं 'क्रमेण संपन्नयोः' इति । संपन्नयोः—प्रतीतयोः ।

6. **लौकिकन्यायेन**—शुक्तिरजतज्ञानस्थलीययुक्त्या ।

निर्धार्यत इति तादृशप्रयोगे पूर्वस्य नैमित्तिकस्याङ्गत्वाभावे [1]कर्तव्यतापि नास्तीति, विरोध्युत्तरनिमित्तं भविष्यति इति द्रागेव पुरुषैर्निर्णेतुमशक्यतया तद्दोषोपप्लवेन जायमानः पूर्वनैमित्तिककर्तव्यताप्रत्ययो भ्रम एवेति, पश्चात् उत्तरनिमित्तसम्पाते तन्नैमित्तिककर्तव्यताज्ञानेनोत्तरभाविना शास्त्रानुमतेन च पूर्वं बाध्यत इति युक्तमुदाहरणम् । मीमांसकमर्यादामतिलंघयता च वक्तव्यम्—बदरश्यामतोपमितं किं पूर्वनैमित्तिकस्य कर्तव्यत्वम् ? । कृतियोग्यत्वं तावत् उत्तरनैमित्तिकेनापि न नाश्यते । कृत्युपहितत्वं तु निष्पन्नमेव न भवति । प्रधानवैकल्यप्रयोजको यदनुष्ठानाभावस्तत्त्वं[2] इति चेन्न । अनुष्ठानाभावस्य वैकल्यप्रयोजकत्वं नाम 'यस्मिन् प्रयोगे पूर्वनैमित्तिकानुष्ठानाभावः सति निमित्ते, तत्र सर्वत्रापि परमापूर्वाजनकत्वं इति [3]व्याप्तिरूपं वक्तव्यम् । तत्र विरोध्युत्तराभावे इति विशेष्यते न वा । यदि विशेष्येत, विरोध्युत्तरनिमित्तवति क्रतौ[4] पूर्वनैमित्तिकस्य, प्रधानवैकल्यप्रयोजको यदनुष्ठानाभावः तत्त्वरूपं [5]कर्तव्यत्वमेव नास्ति । द्वितीये तु नियमभङ्गः । विरोध्युत्तरापच्छेदवति तदनुष्ठानाभावेऽपि वैकल्यस्याभावात् । अथ अङ्गत्वं कर्तव्यत्वमुच्यते, तदपि न । अङ्गत्वं

---

1. **कर्तव्यतापि नास्तीति** 'पूर्वनैमित्तिककर्तव्यताप्रत्ययो भ्रम एव' इत्यनेन सम्बध्यते ।

2. **तत्त्वमिति** प्रधानवैकल्यप्रयोजकस्वाननुष्ठानकत्वं इति यावत् ।

3. **व्याप्तिरूपं वक्तव्यमिति** अन्यादृशस्य असम्भवात्, अननुष्ठानप्रधानवैकल्ययोर्हि अभावरूपतया जन्यजनकभावो न सम्भवति । नापि व्यापकत्वरूपं सम्भवति । यत्र उद्गातृमात्रापच्छेदवति क्रतौ तत्प्रायश्चित्तं कृतं कारणान्तरात् वैकल्यञ्च तत्र प्रधानवैकल्यसत्त्वेऽपि उद्गात्रपच्छेदनिमित्तकप्रायश्चित्ताननुष्ठानाभावेन व्यभिचारात् । तस्मात् व्याप्यत्वरूपं वक्तव्यमिति भावः ।

4. क्रतौ वैकल्यप्रयोजकत्वरूपं कर्तव्यत्वमेव नास्ति इति मुद्रिते पाठः । तदनन्वितं इत्यतः प्रकृतव्याख्यात्रा अनुसियमाणग्रन्थेष्वन्यतमे समानप्रकरणे परिदृश्यमाना आनुपूर्वी अत्र योजिता ।

5. **कर्तव्यत्वमेव नास्तीति** केवलस्य नैमित्तिकाननुष्ठानस्य प्रधानवैकल्यव्याप्यत्वं नास्ति । अनुपदं वक्ष्यमाणव्यभिचारात् । किन्तु सनिमित्तत्व-विरोध्युत्तरनिमित्तशून्यत्व-उभयविशिष्टप्रयोगसमवेतस्यैव । तथा च विरोध्युत्तरनिमित्तवत्क्रतुप्रयोगसमवेतस्य पूर्वनैमित्तिकाननुष्ठानस्य प्रधानवैकल्यव्याप्यत्वाभावात् प्रधानवैकल्यव्याप्यस्वाननुष्ठानकत्वरूपं कर्तव्यत्वं पूर्वनैमित्तिकस्य तत्र नास्तीत्यर्थः ।

सन्निपत्योपकारजनकत्वं, आरादुपकारजनकत्वं वा । उभयत्रापि योग्यत्वविवक्षायां तत् उत्तरेण न नाश्यते । फलोपहितत्वं तु नोत्पन्नमेव । न चागमापायिभूतमखण्डं कर्तव्यत्वं नाम धर्मान्तरं कल्प्यत इत्यत्र किञ्चित्प्रमाणमस्ति । तस्मात् न श्यामरक्तान्यायः प्रकृते उपन्यासार्हः । किं तु शुक्तितत्त्वज्ञानन्याय एव ।

ननु[1]भवतोऽप्युत्तरज्ञानेन पूर्वज्ञानस्य किंरूपो बाधो विवक्षितः । ध्वंसो वा, स्वरूपतो विषयतश्चाभावो वा । नाद्यः । [2]तस्य विभुविशेषोत्तरगुणमात्रसाधारणस्य द्विक्षणमात्रावस्थायिनां कालसाधारणस्य वा विरोध्युत्तरज्ञानासाधारणत्वानुपपत्तेः[3] । नापि द्वितीयः । लब्धात्मकयोर्ज्ञानविषययोः [4]अभावबोधासम्भवात् । उत्पत्तिप्रतिबन्धस्तु उत्तरज्ञाने असम्भावित एव । न च अप्रामाण्यबोधनं पूर्वज्ञाने उत्तरज्ञानेनैवेति नियमः । प्रतिबिम्बादिभ्रमस्थले [5]वृक्षाणामूर्ध्वाग्रताज्ञानादिना पूर्वेणाप्युत्तरज्ञाने अप्रामाण्यबोधनात् । तस्मात् पूर्वज्ञानाद्व्यावृत्तं विरोध्युत्तरज्ञानासाधारणं बाधकत्वं निर्वक्तव्यमिति चेत्, उच्यते—विषयस्य तात्त्विकत्वाभावबोधनद्वारा पूर्वज्ञानस्याप्रामाण्यबोधनमेव बाधकत्वम् । तच्चोत्सर्गत उत्तरज्ञानस्येति तावन्मात्रेणापच्छेदनयप्रवृत्तिः । यत्र [6]पूर्वज्ञानस्य प्रवृत्तिसंवादः उत्तरज्ञानस्य तद्विसंवादो लोके, वेदे च न्यायतः पूर्वस्यैव प्राबल्यं, तत्र [7]स उत्सर्गः परित्यज्यते । यथा वृक्षाणामूर्ध्वाग्रत्व

---

1. क्रमिकापच्छेदस्थले पूर्वोत्तरनैमित्तिककर्तव्यतयोर्नाश्यनाशकभावः पूर्वपक्ष्यभिमतः, स न सम्भवतीति सिद्धान्तिनोक्ते, सिद्धान्त्यभिमतः पूर्वोत्तरज्ञानयोः बाध्यबाधकभावोऽपि न सम्भवतीति प्रत्यवतिष्ठते पूर्वपक्षी—**ननु भवतोऽपीत्यादिना** । तत्र-स्वबाधकत्वं किं स्वनाशकत्वं किं वा स्वस्वविषयान्यतरत्वावच्छिन्नाभावबोधकत्वं इति विकल्पार्थः । **उत्तरज्ञानेन** उत्तरज्ञानेनैव 'कर्तुं शक्यः' इति शेषः । **अभावः**—त्रैकालिकाभावबोधनम् ।

2. **तस्येत्यादि** इत्थमत्र योजना — विभुविशेषोत्तरगुणमात्रसाधारणस्य कालसाधारणस्य वा द्विक्षणमात्रावस्थायिनां तस्य-ध्वंसकत्वस्य इति । मात्रपदं कात्स्न्यार्थिकम्

3. **अनुपपत्तेरिति** इदमुपलक्षणम्—विरोध्युत्तरज्ञानाभावेऽपि पूर्वज्ञानस्य बाधितत्वव्यवहारप्रसङ्ग इत्यपि बोध्यम् ।

4. **अभावेति**—त्रैकालिकाभावेत्यर्थः ।

5. मु. वृक्षाणामुपर्यग्रता

6. मु. पूर्वप्रमाणस्य

7. मु. 'स' नास्ति

ज्ञाने, यथा वा श्रुतिलिङ्गादौ । [1]तत्र च पूर्वज्ञानस्य बाधकत्वं श्रुतिलिङ्गादौ लोके निरुपाधिकभ्रमस्थले च उत्पत्तिप्रतिबन्धः । उत्तरस्य त्वप्रामाण्यबोधकत्वमेव । सोपाधिकभ्रमस्थले पूर्वस्यापि तथैव । वेदान्तवाक्यानां च उत्तरत्वेन [2]स्मृतिन्यायाभ्यां प्राबल्येन च लौकिकप्रमाणबाधकत्वमास्थेयम् ।

[3]उक्तगत्या व्यावहारिकत्वेन सावकाशस्य प्रामाण्यज्ञानस्य न सावकाशनिरवकाशन्यायविषयता । अस्तु वा निरवकाशता । तथापि स्थूलोऽहमित्यादिभ्रमेषु प्रामाण्यावगाहिन इव कर्त्रादिज्ञाने प्रामाण्यावगाहिनोऽपि न कचिदप्यवकाशः कल्पनीयः । [4]विशेषशास्त्रोपदेशापर्यालोचनामूलस्य तद्विषयेऽपि सामान्यशास्त्रातिदेशाभ्यां जनितस्य ज्ञानस्य हि न कश्चिदपि प्रवृत्तिसंवादी विषयः कल्प्यते [5]प्रातिभासिकत्वोपपत्तेरिति । तद्वत् [6]प्रकृतेऽपि ।

यच्च—स्थूलोऽहमित्यादिभ्रमोऽसम्प्रतिपन्नः, भेदस्य गृहीतत्वादिति । तत्र ममशरीरंममचक्षुरित्यादिरूपेण भेदग्रहः न स्थूलोऽहमित्यादिरूपस्याभेदग्रहस्य विरोधी ।

---

1. मु. तत्र ज्ञानस्य

2. **स्मृतिन्यायाभ्यां**—'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्' इति स्मृतिः । 'उपजीव्योपजीवकयोः अनुपदेशोपदेशत्वे विपरीतं बलाबलम्' 'तात्पर्यवद्वाक्यं इतरापेक्षया प्रबलम्' इति च न्यायः ।

3. निरवकाशत्वेन प्रत्यक्षस्य प्राबल्यं पूर्वपक्षोक्तं निराकरोति—**उक्तगत्येति ।** उक्तगत्या - पूर्वपक्षनिरूपणावसरोक्तप्रकारेण । व्यावहारिकत्वेन—व्यावहारिकप्रामाण्यविषयकत्वेन । न च अद्वैतिपरिकल्पिताया निर्मूलाया एतत्परिभाषाया वस्तुव्यवस्थापकत्वासंभव उक्त इति शङ्क्यम् । जात्या, उपदेशत्वात्, परत्वात्, तात्पर्यवत्वाच्च, प्रबलया अद्वैतश्रुत्या प्रत्यक्षबाधस्य व्यवस्थापितत्वेन बाधितस्यापि तस्य ज्ञानत्वेन निर्विषयत्वायोगात् उचितविषयसमर्पणेन शुक्तिरूप्यादिबुद्धिवत् अनुग्राह्यतया 'सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्यम्' सत्यञ्चानृतञ्च सत्यमभवत्' इत्यादिश्रुत्यवलम्बेन यावद्ब्रह्मज्ञानाबाध्यविषयसमर्पणात् तथाभूतविषयकत्वस्यैव व्यावहारिकप्रामाण्यमितिव्यपदेशात् तस्य च उक्तोपपत्तिसहितश्रुतिमूलत्वेन निर्मूलत्वाभावात् ।

4. विशेषशास्त्रापवादाप

5. **प्रातिभासिकत्वोपपत्तेः** — भ्रमत्वोपपत्तेः ।

6. **प्रकृतेऽपि**—कर्त्रात्मज्ञानप्रामाण्यज्ञानेऽपि

रूपान्तरेण भेदग्रहस्य रूपान्तरेणाभेदग्रहापरिपन्थित्वात् । चैत्रमैत्रयोः [1]स्वरूपतो [2]भेदेन गृहीतयोरपि [3]व्यत्यासेन भ्रमविषयत्वदर्शनात् ।

अपि चायं सम्बन्धग्रहः, न साक्षात् भेदग्रहः । स च 'स्थूलस्य शरीरं' 'घटस्य स्वरूपं' इत्यभेदेऽपि दृश्यत इति कथं ततो भेदनिश्चयः । न च द्वाभ्यां शरीराभ्यां बाल्यवार्द्धकयोरेकत्वेन प्रत्यभिज्ञारूपात् भेदकसाक्षात्कारात् आत्मनि भेदो गृह्यत इति वाच्यम् । परिणामवादे ह्यवयवोपचयापचयाभ्यां न शरीरभेदः । एकस्यैव शरीरस्य अपचयो नाम अवयवविश्लेषावस्था उपचयस्त्ववयवान्तरसंश्लेषावस्थेत्यवस्थाद्वयानुयायितया शरीरस्यैव 'य एवाहं बाल्ये पितरावन्वभूवं स एवाहं स्थाविरे प्रणप्तॄननुभवामि' इति प्रत्यभिज्ञाविषयत्वोपपत्तेः । न च अनुभवितृत्वावगाहिन्याः प्रत्यभिज्ञायाः न शरीरविषयत्वं सम्भवति तथा चानुभवितृत्वमेव भेदकमस्त्विति - शंक्यम् । तदपि हि 'य एवाहं बाल्ये पुष्टः पितरावन्वभूवं स एव स्थाविरे कृशः प्रणप्तॄननुभवामि' इति पुष्टत्वादिशरीरधर्मसामानाधिकरण्येनानुभूयते । अत एव आरम्भवादे शरीरभेदे सत्यपि न प्रत्यभिज्ञया एक आत्मा सिध्यति अवस्थाद्वयानुयायी । 'य एवाहं कृशः स एव स्थूलः' इति [4]शरीरेऽपि प्रत्यभिज्ञादर्शनात् तथा 'सत्यपि भेदे आत्मनि प्रत्यभिज्ञा' इति [5]शङ्कासमुन्मेषात् ।

'य एवाहं स्वप्ने देवः स एव मनुष्यः' इति प्रतीतिस्तु 'यदेव रजतं सैव शुक्तिः' इतिवत्[6] स्वप्नशरीरस्य मिथ्यात्वेन सर्वसम्प्रतिपन्नतया 'बाधायां सामाना-

---

1. **स्वरूपतो भेदेन गृहीतयोः** — 'अयमस्माद्भिन्नः' इति ज्ञातयोः ।

2. मु. भेदे गृहीते तयोरपि

3. **व्यत्यासेन** —चैत्रे मैत्र इति मैत्रे चैत्र इति ।

4. **शरीरेऽपीति**—परिणामभेदेन भिन्ने इत्यादिः ।

5. मु. शङ्का समुन्मिषेत्

6. **इतिवत्**—इत्याकारकप्रतीतिरिव बाधायां सामानाधिकरण्यावगाहिनी–इति सम्बन्धः । बाधायां सामानाधिकरण्यावगाहिनी – बाधा-भ्रमप्रतीतस्य वस्तुनोऽभावः, तन्निष्ठं यत् सामानाधिकरण्यं-अधिष्ठानतादात्म्यं तद्विषयिणी 'देवशरीरत्वाभाववान् मनुष्यशरीरोऽहं' इति । "न तु देवशरीरोऽहं मनुष्यशरीरः" इति शरीरद्वयानुयाय्यात्मैक्यविषयिणी । एवञ्च **स्थायितया**—उक्तैक्यरूपस्थायित्वहेतुकः यः आत्मनि देहाद्भेदनिर्णयः तत्र भेदकसाक्षात्कारविधया न उपयोगिनी इत्यर्थः । उक्तप्रतीतेः ऐक्यविषयकत्वसंशयेन ऐक्यस्य संशयात् भेदस्यापि संशय इति न भेदनिर्णयः सम्भवतीति भावः ।

धिकरण्यावगाहिनी' इतिशङ्काकलङ्किता न स्थायितया देहादात्मनि भेदनिर्णयोपयोगिनी ।

बहुत्वेन गृहीतानां देहेन्द्रियाणां एकस्मिन्नात्मन्यभेदभ्रमोऽपि न विरुद्धः । रूपान्तरेण वैलक्षण्यग्रहस्य रूपान्तरेणाभेदभ्रमाविरोधित्वादेव । यथा अधीयानानधीयानयोश्चैत्रमैत्रयोस्समीपस्थिते [1]देवदत्ते 'अधीयानो मैत्रः' इति [2]द्वयोरेकस्मिन्नभेदारोपः एवमेकस्मिन्नात्मनि बहूनां देहेन्द्रियाणामारोपोपपत्तेः ।

भेदकसाक्षात्कारश्च दोषविशेषे न भ्रमविरोधी । शङ्खत्वसाक्षात्कारेऽपि पीतिमभ्रमदर्शनात् । एवं जीवन्मुक्तानामपि प्रारब्धदोषविशेषात् सम्भावितो 'मनुष्योऽहं' इति भ्रमः पामराणामपि नास्तीति साहसमात्रम् । चार्वाकव्यतिरिक्तानां च सर्वेषामपि एतस्य भ्रमत्वे न विप्रतिपत्तिः ।

ततश्च [3]बहुषु प्रदेशेषु दृष्टाप्रामाण्यस्याहंप्रत्ययस्य कर्तृत्वाद्यंशेऽप्यप्रामाण्यसम्भवात् तत्र प्रामाण्यज्ञानस्य न क्वाप्यवकाशः कल्पनीयः । ततश्च श्रुत्यनुसारेण 'अहं कर्ता अहं भोक्ता' इति प्रत्यक्षस्य औपाधिकत्वे सिद्धे तत्र 'मम मनः कामयते' इति प्रत्यक्षसिद्धः 'कामस्सङ्कल्पः' इत्यादिश्रुतिसिद्धश्च मनोरूप उपाधिः सम्भवति । तत् सिद्धं श्रुतितदन्यप्रमाणयोर्विरोधे प्रमाणान्तरस्यान्यथानयनम् ।

कथं तर्हि 'सोमेन यजेत' इत्यादिषु सोमादिपदानां लक्षणा ।

उच्यते—तात्पर्यविषये श्रुतेः प्रमाणान्तरेण नान्यथाकरणम् । 'सोमेन यजेत इत्यत्र विशिष्टभावनैव[4] तात्पर्यविषयः । तस्याश्च सोमयागसंसर्गघटितत्वात् तात्पर्याविषयीभूतोऽपि स प्रतीयते । तथा च करणीभूतयागेन समानपदोपात्तेन [5]अवरुद्धायां भावनायां करणतया पदान्तरोपात्तस्य सोमस्य पार्थक्येनान्वयासम्भवात्,

---

1. **देवदत्ते इति** । दृश्यमानेन रूपेण चैत्रमैत्राभ्यां भेदग्रहे सत्यपि इति शेषः ।

2. **द्वयोरिति** । अधीयानत्वमैत्रत्वाकारेण चैत्रमैत्रयोः इत्यादिः ।

3. मु. बहुष्वपि

4. **विशिष्टभावनैवेति**—वाक्यान्तरविहितयागानुवादेन गुणविध्यादेः शास्त्रे निराकृतत्वात् इति भावः ।

5. **अवरुद्धायां**—निवृत्तकरणाकाङ्क्षायाम् ।

यागभाव्यकभावनामध्याहृत्य तस्यां सोमस्य करणतया 'सोमेन भावयित्वा यजेत' इतिप्रकारेण वचनव्यक्तिकल्पने अध्याहारविरुद्धत्रिकद्वयापत्तिदोषाभ्यां, यजिसामानाधिकरण्येन [1]वाक्यभेदपरिहाराय अन्वये वक्तव्ये अभेदस्य तात्पर्याविषयीभूतस्य प्रत्यक्षबाधिततया प्रत्यक्षसिद्धसाध्यसाधनभाव एव वक्तव्य इति तत्र [2]मत्वर्थलक्षणा। 'आदित्यो यूपः' इत्यादौ च स्तुतिविशिष्टवाक्यार्थ एव तात्पर्यं न मुख्यसंसर्ग इति तत्र प्रत्यक्षानुसारः। तात्पर्याविषयस्यापि यथा शब्दात् प्रत्ययः तथा देवताधिकरणे वर्णयिष्यते। तत्त्वमसीतिवाक्ये च निर्विशेष एव तात्पर्यमिति तदर्थमेव भागत्यागलक्षणाश्रयणं न प्रत्यक्षानुरोधाय।

ननु—कृष्णलं श्रपयेदित्यत्र प्रकृतितः प्राप्तस्य द्वारलोपान्निवर्तमानस्य पाकस्यैव प्रतिप्रसवविधिरिति तस्यैव तात्पर्यविषयता स्वरसतोऽवगम्यते। तत्र कथं प्रत्यक्षानुरोधेन उष्णीकरणे लक्षणाश्रयणे तात्पर्यविषये श्रुतेः प्राबल्यं इति नियमनिर्वाहः

**उच्यते**—तात्पर्यविषये श्रुतेः प्राबल्यं इत्युत्सर्गः। स तु 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलं' इति नीत्या क्वचित् प्रत्यक्षस्यात्यन्तागतिकत्वे परित्यज्यते। तत्र हि [3]विक्लत्त्यभावः प्रवृत्तिसंवादी न प्रातिभासिकः। किं तु व्यावहारिकः। तत्र पाकोऽपि यदि व्यावहारिकः कल्प्येत, तदा समानसत्ताकयोर्विरोध इति प्रपञ्चतदभावन्यायेन सत्ताभेदं परिकल्प्य तात्त्विके पाके स्वीकृते अद्वैतावबोधकप्रबलानेकवाक्यविरोधः। तत्स्वीकारेऽपि तदप्रत्यक्षत्वनिर्वाहाय तस्यावृतत्वेन [4]व्यवहाराविषयत्वं वक्तव्यम्। तथा च तद्बोधने वाक्यवैयर्थ्यमपि स्यात्। प्रातिभासिकत्वे

---

1. **वाक्यभेदपरिहाराय यजिसामानाधिकरण्येन अन्वये वक्तव्ये**—इत्यन्वयः 'सोमेन यागं भावयेत्' 'यागेन स्वर्गं भावयेत्' इति वचनव्यक्तिकल्पने प्रसज्ज्यमानस्य विध्यावृत्तिलक्षणवाक्यभेदस्य परिहारायेत्यर्थः।

2. **मत्वर्थलक्षणेति** तथासति मत्वर्थघटकसम्बन्धस्य साध्यसाधनभावरूपत्वेन न प्रत्यक्षविरोध इति भावः।

3. **विक्लत्त्यभाव इति**—पाकार्थकश्राधातोः विक्लत्तिरर्थः। 'पचेर्हि विक्लत्तिः प्रधानार्थः' इति महाभाष्योक्तेः। विक्लत्तिर्नाम पूर्वरूपरसनाशपूर्वकः रूपरसान्तरप्राप्तिः, तदभावः इत्यर्थः।

4. **व्यवहाराविषयत्वमिति**—अभिज्ञाऽभिवदनादिरूपव्यवहारायोग्यत्वमित्यर्थः।

**अन्योन्यस्मिन् अन्योन्यात्मकतां अन्योन्यधर्मांश्च अध्यस्य इतरेतराविवेकेन अत्यन्तविविक्तयोः धर्मधर्मिणोः मिथ्याज्ञाननिमित्तः सत्यानृते**

तु शुक्तिरजतादिवदपरोक्षः[1] स्यादिति प्रत्यक्षस्य [2]अत्यन्तागतिकत्वपरिहाराय वाक्यवैयर्थ्यपरिहाराय च उष्णीकरणे लक्षणा ।

तस्मात् प्रबलस्य प्रमाणस्य सति सम्भवे दुर्बलप्रमाणानुसारेणान्यथानयनायोगात् अद्वैतात्मबोधकत्वे न काचिदनुपपत्तिः श्रुतेरिति विषयसम्भवेन तत्प्रतीतिद्वारा मोक्षरूपस्य प्रयोजनस्यापि सम्भवात् आरम्भणीयं शास्त्रम् ।

ननु आरम्भणाधिकरणे, शास्त्रस्य प्राबल्यं तदनुसारेण प्रत्यक्षनयनं इत्येतत् सर्वं व्यवस्थापयिष्यते, पुनः किमर्थं इह तन्निरूपणम्

उच्यते—वक्ष्यमाण एवार्थश्शास्त्रारम्भोपयोगितया इह [3]स्मारितः । [4]अथवा बहुशो दृष्टाप्रामाण्येन प्रत्यक्षेण आत्मनि कर्तृत्वादिकं सत्यमेवेति न विश्रम्भणीयम्, अपि तु श्रुतिर्यादृशमात्मतत्त्वं बोधयति तथैव स्वीकर्तव्यमिति [5]प्रतिपादनाय । एवं तत्त्वावेदकत्वात् प्रच्युतस्य व्यावहारिकत्वेन [6]कार्योपयोगिता तत्र प्रतिपादनीया ।

अक्षरार्थस्तु—**अन्योन्यात्मकतामध्यस्य अहमिदमिति व्यवहारः, अन्योन्यधर्मांश्चाध्यस्य ममेदमिति व्यवहारः** इति योजना । अहमिदमित्यनेन

---

1. **अपरोक्षः स्यादिति**—न च शाब्दपरोक्षत्वेऽपि भ्रमानुमितिविषयस्येव प्रातिभासिकत्वं सम्भवतीति शङ्क्यम् । अपौरुषेयशब्दात्मकश्रुतिबोध्यत्वे प्रातिभासिकत्वस्यैवासम्भवात् । अनिषेध्यत्वेन साक्षात् श्रुतिजन्यबोधविषयस्य अप्रातिभासिकत्वव्याप्तेः ।

2. **अत्यन्तेत्यादि**—अत्यन्तागतिकत्वं-निर्विषयत्वं, तत्परिहाराय पाकस्य तात्त्विकत्वाङ्गीकारे वाक्यवैयर्थ्यम्, शुद्धब्रह्मान्यस्य व्यवहाराविषयस्य बोधनेन प्रयोजनाभावात् । वाक्यावैयर्थ्याय व्यावहारिकत्वाङ्गीकारे व्यावहारिकपाकाभावप्रत्यक्षस्य निर्विषयत्वम् । व्यवहारविसंवादेन पाकस्य व्यावहारिकत्वानुपपत्तिश्च । न च पाकाभावस्तात्त्विकः । शुद्धब्रह्मान्यत्वे अद्वैतहानेः । शुद्धब्रह्मानन्यत्वे व्यवहारदशायां तदप्रत्यक्षत्वापत्तेः ।

3. **स्मारित इति**—भाष्यकृद्भिरित्यादिः । पञ्चपादिकामनुसृत्येदम् ।

4. भामतीमनुसृत्याह–**अथवेति** । यद्यपि भामत्यां इह व्यावहारिकत्वेन बोध्यम् । निर्वाहः कृतः, अस्मिंश्चग्रन्थे, तथापि श्रोतृबुद्धिसौकर्यार्थं तत्सिद्धस्यैवात्रानुवादः इति

5. मु. प्रतिपादनायैव । तत्त्वा०

6. **कार्योपयोगितेति** सर्वप्रपञ्चसाधारण्येन इति शेषः ।

**मिथुनीकृत्य ‘अहमिदं’ ‘ममेदं’ इति नैसर्गिकोऽयं लोकव्यवहारः ।**

मनुष्योऽहमितिशब्दाभिलापरूपो व्यवहारः इतिशब्देन प्रवृत्तिनिवृत्त्यादिरूपश्च विवक्षितः । ममेदमित्यनेन ‘मम सुखं’ ‘मम रूपं’ इत्येवं शब्दाभिलापरूपो व्यवहारः इतिशब्देन प्रवृत्त्यादिरूपश्च विवक्षितः । व्यवहारपर्यन्तानुधावनं अध्यासाभावे व्यवहारो न स्यादिति उपपत्तिसूचनाय । न चायं गौणः । मुख्यत्वस्य तत्र सर्वानुभवसिद्धत्वात् । नाप्ययं परम्परासम्बन्धेन आत्मनि मनुष्यत्वावगाही । उत्सर्गप्राप्तस्य साक्षात्सम्बन्धस्य परित्यागानौचित्यात्, साक्षात्सम्बन्धावगाहित्वानुभवाच्च । न च विवेकिनां साक्षात्सम्बन्धस्य बाधितत्वात् परम्परासम्बन्धविषयत्वं स्वीकर्तव्यमिति वाच्यम् । तेषामपि प्रारब्धादिदोषवशेन तादात्म्याध्यासानुवृत्तौ तन्मूले साक्षात्सम्बन्धावगाहिनि व्यवहारे बाधकाभावात् । विवेकमूलकस्तु ‘नाहं मनुष्यो न च देवयक्षो भिक्षुश्च नाहं निजबोधरूपः’ इत्येव । विदुषामपि लौकिकव्यवहारे लोकसाम्यं भाष्यकार एव वक्ष्यति ‘पश्वादिभिश्चाविशेषात्’ इति । लोकानां[1]व्यवहारः लोकव्यवहारः । अध्यासव्यवहारक्रिययोः लोकस्समानः कर्तेति क्त्वाप्रत्ययः । अध्यासे निमित्तमाह—**इतरेतराविवेकेनेति** । ममशरीरमिति विवेके सत्यपि ‘नाहं मनुष्यः’ इत्येवंरूपस्य अपरोक्षस्य विवेकस्याभावात् अध्यास उपपद्यत इति तात्पर्यम् । चार्वाकनिराकरणार्थम्—**अत्यन्तविविक्तयोर्धर्मधर्मिणोरिति** । धर्मिणोर्विवेकः तादात्म्याभावः । धर्माणां विवेकः संसर्गाभावः । ननु–इतरेतराविवेकशब्दोदितो भेदाग्रहो धर्म्यारोप्योपस्थितिकालिक एवाध्यासहेतुः,[2] अध्यासप्राचीना चोपस्थितिः [3]प्रमारूपैव वक्तव्या, सा च अद्वैतवादिनो न सम्भवतीति, अत उक्तम्—**सत्यानृते मिथुनीकृत्येति** । प्रमारूपैवोपस्थितिरुपयुज्यत इति न नियमः, अप्रयोजकत्वात्—इति आरोप्यसमर्पकेणानृतशब्देन सूचितम् । मिथुनीकरणं उपस्थितिविषयत्वम् । ननु—नाप्रयोजकत्वम् । अध्यासप्राचीनोपस्थितेरपि भ्रमत्वाङ्गीकारे साऽप्युपस्थितिर्भ्रममूलेति पूर्वपूर्वभ्रमानवस्थितिस्स्यात् । न च प्रवाहानादित्वान्नदोषः । प्रलये प्रवाहविच्छेदेन तथा कल्पनायोगात् । न च तदापि पूर्वकल्पीयाध्याससंस्कारसत्त्वात् नानु-

---

1. **लोकानां**—अविवेकिनाम् । लोक इति व्यवहारः इति **पञ्चपादिका** ।

2. **अध्यासहेतुरिति**—तथैव अन्वयव्यतिरेकदर्शनात् इति भावः ।

3. **प्रमारूपैवेति**—शुक्तिरजतभ्रमस्थले तथैव दर्शनात् इति भावः ।

पपत्तिरिति शङ्क्यम् । तथासति क्वचित् संस्कारः क्वचिदध्यास इति वैरूप्यापत्तेः— इत्यत आह— **नैसर्गिक इति** । व्यवहारनैसर्गिकत्वोक्त्या तत्कारणस्याध्यासस्य [1]नैसर्गिकत्वमाक्षिप्तमिति प्रकृतशङ्कानिराकरणलाभः । सर्वत्रापि पूर्वपूर्वाध्याससंस्कार-सचिवात् भेदाग्रहात् उत्तरोत्तराध्यास इति न वैरूप्यमिति भावः ।

नैसर्गिकत्वं अनादित्वं, तत् प्रवाहान्तर्गतव्यक्तीनां न सम्भवति । जन्य-त्वात् । नापि प्रवाहस्य । तस्य क्रमिकोत्पत्तिशालिव्यक्तिव्यतिरेकाभावात् । तत् कथं नैसर्गिकत्वम्? उच्यते— द्विविधमनादित्वं स्वरूपेण प्रवाहतश्च । आद्यं अजन्या-नामेव । द्वितीयं तु जन्यानाम् । [2]तच्च द्वयोर्व्यक्त्योर्मध्ये अन्यतरव्यक्तिगतजातियुक्त-व्यक्तिं विना पूर्वकालस्यावर्तनम् । अस्तिच अध्याससंस्कारव्यक्त्योर्मध्ये अन्यतर-व्यक्तिजातीयया कयाचित् व्यक्त्या पूर्वकालस्यापि युक्तता । [3]ननु प्रलये निराश्रयः

---

1. **नैसर्गिकत्वमाक्षिप्तमिति**— एतेन 'नैसर्गिकोऽयं लोकव्यवहारः' इति भाष्यस्य 'नैसर्गिकोऽध्यासः' इत्युपसंहारभाष्येण विरोधपरिहारलाभोऽपि सूचितः । आक्षिप्ताध्यासनैसर्गिकत्वोपसंहाररूपत्वसम्भवात् । अत्र व्यवहारनैसर्गिकत्वोक्तिस्तु अध्याससद्भावे तन्नैसर्गिकत्वे च उपपत्तिसूचनाय ।

2. **तच्चेत्यादि** स्वपूर्वकालत्वव्यापकस्वसजातीयकत्वमिति यावत् । स्वसजाती-यत्वञ्च प्रकृते स्वस्वीयसंस्कारान्यतरमात्रगतजातिमत्त्वं विवक्षितम् ।

3. **अत्रेदमवधेयम्**— भुक्त्वा व्रजतीतिवत् क्रियान्तरानुपादानं, अध्यस्य नैस-र्गिकोऽयं लोकव्यवहारः इति स्वरूपमात्रपर्यवसानं, मिथुनीकृत्येति पदस्वारस्यं, 'नैसर्गि-कोऽध्यासः' इति उपसंहारभाष्यस्वारस्यं च अनुसृत्य अध्यासमिथुनीकरणलोकव्यवहा-राणां एकार्थता वर्णिता **पञ्चपादिकाप्रस्थाने** ।

शङ्काविशेषनिराकरणरूपफलविशेषलाभेन सार्थक्यं अभिप्रेत्य एकार्थत्वोपपत्तीनां गतिवर्णनपुरःसरं भिन्नार्थता वर्णिता **भामतीप्रस्थाने** ।

इयञ्च व्याख्या भामतीप्रस्थानमनुसृत्य प्रवृत्ता । परन्तु कल्पतरुकृद्भिः स्वातन्त्र्येण कृतस्य परिमले 'उपपादितस्य शङ्काविशेषपरिहारस्य भाष्यपदेनैव लाभं सम्पादयितुं 'मिथ्याज्ञाननिमित्तः' इति पदं तच्छङ्काविशेषनिराकरणपरतया अवतारयति, वर्णयति च पञ्चपादिकाप्रस्थानरीत्या तत्पदस्य अर्थं— **ननु प्रलये इत्यादिना** । मिथ्या च तत् अज्ञानं च मिथ्याऽज्ञानं, तत् निमित्तं-उपादानं यस्य सः— मिथ्याऽज्ञाननिमित्तः । भामत्यभिमतस्य मिथ्याभूतं यत् ज्ञानं-अध्यासः तद्धेतुकत्वस्य लोकव्यवहारे 'अध्यस्य लोकव्यवहारः' इति क्त्वाप्रत्ययेन अध्यासस्य पूर्वकालीनत्वोक्त्यैव लाभात् स्पष्टीकर-णस्य च प्रयोजनविशेषाभावात् पुनरुक्तिः स्यादित्यतोहेतोः अत्र भामतीप्रस्थानं नानुसृतम् ।

संस्कारो नोपपद्यते । न चान्तःकरणादिकं तदाश्रयः । तेषां सर्गश्रवणेन तदानीमसत्त्वावगमात् । नाप्यात्मा । उपाधिव्यतिरेकेण शुद्धस्य तदाश्रयत्वायोगात्, इत्यत उक्तम्—**मिथ्याज्ञाननिमित्त इति** । अनृताज्ञाननिबन्धन इत्यर्थः । व्यवहारोपादानत्वं च संस्काराध्यासद्वारा विवक्षितमज्ञानस्य । तथा च प्रलये अज्ञानस्य तदुपहितचैतन्यस्य च सत्त्वात् न आश्रयानुपपत्तिरिति भावः । सत्यानृते मिथुनीकृत्य अत्यन्तविविक्तयोर्धर्मधर्मिणोरितरेतराविवेकेन अन्योन्यस्मिन् अन्योन्यात्मकतां अन्योन्यधर्मांश्चाध्यस्य मिथ्याज्ञाननिमित्तो नैसर्गिकः अहमिदंममेदमिति लोकव्यवहारः—इति भाष्ये योजना ।

[1]सत्यानृते मिथुनीकृत्येत्यनेन अन्तःकरणादेर्मिथ्याभूतस्यापि पूर्वपूर्वाध्यासविषयत्वमुक्तम् । तन्न सम्भवति, असतोऽनृतस्य प्रतीत्ययोगात् । ननु—देहेन्द्रियादयो नात्यन्तमसन्तः, किन्तु अनिर्वचनीयाः । [2]ते च सदसद्विलक्षणाः, अतो न प्रतीत्यनुपपत्तिः इति चेत्, न—पदार्थानां सदसद्विलक्षणत्वायोगात् । सद्विलक्षणत्वं ह्यसतः असद्विलक्षणत्वं च सतः । एवं च यथा सदसत्त्वं एकस्य विरुद्धत्वान्नाङ्गीक्रियते एवमुभयविलक्षणत्वमपि विरोधादेव नाङ्गीकरणीयम् । तस्मात् सर्वं सदेव, भासमानत्वात्, आत्मवत् । न च शुक्तिरजतादौ व्यभिचारः, [3]तेषामपि सत्त्वाभ्युपगमात् ।

---

1. **सत्यानृते मिथुनीकृत्येत्यनेनेत्यादिना** 'आह कोऽयं' इत्यादिभाष्यमवतारयति । इदमवतरणं भामत्यनुसारेण । आत्मानात्मनोः भेदनिश्चयात् शास्त्रारम्भोपयोगिविषयप्रयोजनसिद्धिहेत्वध्यासाक्षेपे तस्य समाधानं कृतं 'लोकव्यवहारः' इत्यन्तेन भाष्येण । 'आरोप्यस्यानृतस्य प्रतीतिरेवायुक्ता' इति पुनरप्यध्यासाक्षेपे तत्समाधानपरं 'आह कोऽयं' इत्यादिभाष्यं 'कथं पुनः प्रत्यगात्मनि' इत्यतः प्राक्तनम् । 'कथं पुनः' इत्यादि 'तमेतमविद्याख्यं' इत्यतः प्राक्तनं भाष्यं, आत्मनोऽधिष्ठानत्वानुपपत्त्या पुनरप्यध्यासाक्षेपे तत्समाधानपरम् । ततः प्रभृति 'सर्वलोकप्रत्यक्षः' इत्यन्तं अध्यासस्य व्यवहारसामान्यहेतुत्वोपपादनेन दृढीकरणपरं अनर्थहेतुताप्रदर्शनपरञ्च—इति **भामतीव्याख्याप्रकारः** ।

निरूपयितव्योऽध्यासः 'लोकव्यवहारः' इत्यन्तेन भाष्येण स्वरूपतो निरूपितः । 'आह कोऽयं' इत्यादि 'कथं पुनः प्रत्यगात्मनि' इत्यन्तं अध्यासलक्षणप्रदर्शनपरम् । तदादि 'तमेतं अविद्याख्यं' इत्यतः प्राक्तनं अध्याससम्भावनाप्रदर्शनपरम् । तदादि 'सर्वलोकप्रत्यक्षः' इत्यन्तं अध्यासे प्रत्यक्षानुमानार्थापत्त्यागमाख्यप्रमाणप्रदर्शनपरम्—इति **पञ्चपादिकाव्याख्याप्रकारः** ।

2. मु. तेच नास्ति

3. आ. तस्यापि

**आह—कोऽयमध्यासो नामेति । उच्यते—स्मृतिरूपः परत्र पूर्वदृष्टावभासः ।**

[1]इदन्त्वेन भासमानं हि वस्तु द्व्यात्मकं शुक्त्यवयवैरजतावयवैश्चारब्धं शुक्तित्वरजतत्व-धर्मशालि । तच्च दोषाभावदशायां शुक्तित्वेन प्रतीयते, रजतत्वेन न प्रतीयते । शुक्तित्वज्ञानेन प्रतिबन्धात् । तत्रापि शुक्त्यवयवानां भूयस्त्वम्, अल्पत्वं रजताव-यवानाम् । अतो लोके शुक्तिरित्येव व्यवहारः । दोषेण च शुक्तित्वज्ञाने प्रतिबद्धे [2]रजतत्वेन प्रतीयते । दोषापगमे शुक्तित्वज्ञानेन रजतव्यवहाराभाव एव बाध इत्यु-च्यते । एवं मरुमरीचिषु तोयभ्रमेऽपि द्रष्टव्यम् । अतो नाध्याससम्भवः—इत्यभि-प्रायेणाक्षिपति–आह **कोऽयमिति** ।

परिहरति—**स्मृतिरूप इति** । ननु आक्षेपमपरिहृत्य लक्षणकथनमसङ्गतम् । न च लक्षणकथनेनैव तद्गतैः पदैः आक्षेपसमाधानं लभ्यत इति पृथक्तदकरणमिति वाच्यम् । तादृशपदानुपलम्भात् । [3]लक्षणत्वमप्येतस्य न सम्भवति । स्मृतिरूपत्वं हि यद्यपि [4]इदंरजतमित्यनुभवानन्तरं जायमानायां [5]स्मृतावस्ति, तथापि [6]परत्रेतिपदं न सम्भवति । तथा अनुभवरूपेषु भ्रमेषु स्मृतिरूपपदवल्लक्षणमसम्भवि ।

---

1. विशिष्टाद्वैत्यभिमतं सत्ख्यातिवादं उपस्थापयति—**इदन्त्वेनेत्यादिना** । यद्य-प्यस्मिन् भाष्ये 'आह—कोऽयमध्यासो नाम' इत्याक्षेपः अर्वाचीनाभिमतसत्ख्याति-वादाभिप्राय इति वक्तुं न युक्तम्, तथाऽपि अत्र भाष्ये पूर्वपक्षत्वेन सामान्यतः सूचितः सत्ख्यातिवाद एव अर्वाचीनैर्मतान्तरस्थैः प्रक्रियाविशेषरचनया सिद्धान्तत्वेनाश्रितः-इत्यभिप्रायेण अर्वाचीनोक्तमपि अत्र अवतारिकायां योजितम् । यतः 'स्मृतिरूपः परत्र पूर्वदृष्टावभासः' इति समाधानभाष्यार्थनिरूपणे अर्वाचीनप्रक्रियाया अप्यनवकाशो भवति ।

2. मु. रजतत्वेनैव

3. भाष्ये उत्तरत्र 'अध्यासो नाम अतस्मिन् तद्बुद्धिरित्यवोचाम' इति अध्यास-लक्षणं स्मार्यते । तदनुसारं 'स्मृतिरूपः' इत्यादि लक्षणवाक्यं तादृशलक्षणार्थकतया व्याख्यातुं यथाश्रुतार्थे अनुपपत्तीः प्रकटयति— **लक्षणत्वमपीत्यादिना** । न च अत्रापि 'अतस्मिन् तद्बुद्धिः' इत्येव लक्षणवाक्यं युक्तमिति वाच्यम् । अख्यातिवादसत्ख्याति-वादयोः निराकरणयुक्तेः स्पष्टत्वाय शब्दान्तरेणोक्तेः अभिमतत्वात् । यत् भामत्यां यथाश्रुतार्थमादाय सर्वत्र लक्ष्ये लक्षणसमन्वयनिर्वहणं कृतं तत् परमतानुसारेण ।

4. **इदं रजतमित्यनुभवति** शुक्तौ इत्यादिः ।

5. मु. स्मृतौ त्वस्ति

6. **परत्रेतिपदं**-परत्रेति पदार्थः । परत्रेतिपदार्थघटितं लक्षणं इति यावत् । एवं 'स्मृतिरूपपदवत्' इत्यस्याप्यर्थो बोध्यः । **न सम्भवतीति** शुक्तौ रूप्यभ्रमजन्यस्मृतौ यत्रानुभूतं तत्रैव भानात् इति **भावः** ।

किं च परत्रेतिपदेन यदि पूर्वदृष्टदेशादन्यदेशत्वं विवक्षितं, तदा अहङ्काराद्यध्यासेष्वव्याप्तिः। यस्मिन्नेव साक्षिणि पूर्वं दृष्टा अहङ्कारादयः तत्रैवाध्यासात्। यदि सत्ये इत्यर्थः, तदा जडे आत्माध्यासस्य [1]अन्योन्याध्यासमतेऽभ्युपगमात् तत्राव्याप्तिः। जडस्यानृततया 'सत्ये पूर्वदृष्टावभासः' इति लक्षणासङ्गतेः।

पूर्वदृष्टत्वं चाव्यापकम्[2]। शुक्तिरजतादेरपूर्वस्यैवाभ्युपगमात्। एवं पीतशङ्खविभ्रमेऽपि। [3]ननु 'पीतःशङ्खः' इति न शुक्तिरजतभ्रमवत् अपूर्ववस्तुविषयको भ्रमः, किं तु नायनरश्मिगतस्य पित्तद्रव्यस्य रश्मिभिस्सह शङ्खे संसृष्टस्य यः पीतिमा [4]साक्षात्सम्बन्धेन तद्विषयकः, तस्य च आरोपात् [5]पूर्वं दर्शनं सम्भवतीति न तत्र पूर्वदृष्टपदाव्याप्तिरिति चेत्, न – पित्तपीतिम्नः अयोग्यतया दर्शनासम्भवात्। अन्यथा कनकलिप्तशङ्खस्य पीतिम्नोऽन्यैर्गृह्यमाणत्ववत् पित्तद्रव्यलिप्तशङ्खस्य पीतिम्नोऽन्यैर्गृह्यमाणत्वापत्तेः। न च–दूरोत्पतितस्य विहगस्य तद्विषयकपूर्वदर्शनधाराशालिना पुरुषेणैव ग्रहणं नान्येन, एवमेतस्य पुरुषविशेषेणैव ग्रहणमिति–वाच्यम्। तथासति तच्चक्षुस्संयुक्तचक्षुषा पुरुषेण तद्ग्रहणवत् [6]तादृशेन एतस्यापि ग्रहणं स्यात्। पक्षिणोऽन्तरालदेश इव चक्षुश्शङ्खयोरन्तरालदेशेऽपि [7]तद्दर्शनं स्यात्। अत एव दोषयुक्तपुरुषेण तस्य ग्रहणमित्यपि परास्तम्। अन्तराले ग्रहणापत्तेरेव। शङ्खसमीपदेश एव तस्य ग्रहणयोग्यत्वं नान्यत्रेति कल्पनं तु पित्त-

1. **अन्योन्याध्यासमते**—सिद्धान्ते।

2. **अव्यापकमिति** अधिष्ठानभूतस्य इदमादेः पूर्वदृष्टस्य रजतादौ अध्यासे लक्षण सद्भावात् असम्भवो नोक्तः। **अपूर्वस्यैव**—पूर्वाननुभूतस्यैव।

3. 'पीतः शङ्खः' इति भ्रमः अनुभूयमानारोपः—इति वदन् अन्यथाख्यातिवादी शङ्कते—**ननु पीतः शङ्ख इत्यादिना**।

4. **साक्षात्सम्बन्धेनेति** परम्परासम्बन्धेन पीतिमावगाहित्वे प्रमात्वापत्तिरिति भावः।

5. **पूर्वं दर्शनं सम्भवतीति** संसर्गारोपकालेऽपि पित्तपीतिम्नोऽनुभूयमानत्वात् 'पीतः शङ्खः' इति भ्रमस्य नानुभूयमानारोपत्वक्षतिः। न चैवमपि आरोप्यमाणसंसर्गांशे पूर्वदर्शनाभावात् लक्षणाव्याप्तिरिति शङ्क्यम्। पीतिमसंसर्गस्य कनके पूर्वं दृष्टत्वात् इत्यभिमानात्।

6. आ. तादृशेनैव तस्यापि

7. मु. तादृशदर्शनं

द्रव्यगतपीतिमैव गृह्यत इत्यत्र प्रमाणावतारं विना अनुचितम् । [1]नील्यादिसम्पर्करहिते स्वच्छजले 'नीलं सलिलं' इति भ्रमे [2]उक्तगतेरसम्भवाच्च । तस्मात् [3]अपूर्वस्यैव पीतिमादेः उत्पत्तिरिति अव्याप्तं पूर्वदृष्टपदम् ।

ननु—पूर्वदृष्टपदं पूर्वदृष्टसजातीयपरम् । तथाच नोक्तदोषः[4] । न च पित्तदोषयुक्तस्य गर्भान्निर्गतस्य पीतिमभ्रमे सजातीयपूर्वदर्शनासम्भव इति वाच्यम् । जन्मान्तरीयस्य तत्रापि सम्भवादिति चेत्, न—एवमपि येनकेनचिद्धर्मेण साजात्यस्य सर्वसाधारणत्वात् अव्यावर्तकं पदं व्यर्थमापद्यते ।

ननु--येन प्रकारेणाध्यासः तेन प्रकारेण पूर्वदर्शनं विवक्षितम् । न च तथापि[5] [6]व्यर्थता । न हीदं लक्षणान्तर्गतम्, किं तु [7]अध्यासकारणनिरूपणपरमिति चेत्, न--संसर्गाध्यासे तदसम्भवात् । संसर्गांशे [8]निष्प्रकारकतया 'येन प्रकारेण'

---

1. नीली—श्यामवर्णो लताविशेषः । नीलमृत् आदिशब्दार्थः ।

2. उक्तगतेः—पीतशङ्खभ्रमस्थले उक्तस्य प्रकारस्य । नील्यादिगतस्य नीलिम्नः अनुभूयमानस्य जले साक्षात्संसर्गाग्राहित्वस्येति यावत् ।

3. मु. अपूर्वस्यैवोत्पत्ति

4. नोक्तदोष इति प्रातिभासिकव्यावहारिकयोः अनुगता एका रजतत्वादिजातिः अभ्युपगन्तव्या, भ्रमे तादृशजातिवैशिष्ट्यभानञ्च अभ्युपगन्तव्यम् । अन्यथा इष्टतावच्छेदकवैशिष्ट्यज्ञानाभावात् व्यावहारिकार्थिनः प्रातिभासिके प्रवृत्तिर्न स्यात् । तथा च पूर्वदृष्टकनकगतपीतरूपसजातीयत्वं प्रातिभासिके शङ्खपीतिम्नि वर्तत इति पूर्वदृष्टत्वघटित· लक्षणस्य शुक्तिरूप्यपीतशङ्खादिभ्रमेषु नाव्याप्तिरित्यर्थः ।

5. आ. तथासति

6. व्यर्थतेति अतिव्याप्त्याद्यवारकत्वात् इति भावः । न च व्यर्थविशेषणघटितस्य लक्षणत्वं युक्तं, लक्षणेन लक्ष्येतरभेदाद्यनुमाने व्याप्यत्वासिद्ध्यापत्तेः ।

7. अध्यासकारणेति पूर्वदर्शनस्य नष्टत्वसम्भवात् कथं अध्यासात् पूर्वं नियतसत्त्वं इति चेत् न—पूर्वदर्शनाधीनस्मरणस्य अध्यासकारणत्वे तात्पर्यात् । स्मरणस्य अनियतत्वात् कथं तदपीति चेत्, न—स्मृतिनियमकल्पनेनोपपत्तेः । अथ वा पूर्वदर्शनाधीनसंस्कारस्य अध्यासकारणत्वे तात्पर्यम् । अत एव 'अधिष्ठानज्ञानदोषसंस्काररूपकारणत्रितयजन्योऽध्यासः' इति विवरणादिषु संस्कारस्य अध्यासकारणत्वोक्तिः इति भावः ।

8. निष्प्रकारकतयेति विशिष्टज्ञाने संसर्गस्य केनचित् रूपेण भानेऽपि तद्रूपनिष्ठविषयतायाः प्रकारतानात्मकत्वात् इति भावः ।

इत्येवंरूपस्यासम्भवात् । सन्ति च केवलसंसर्गाध्यासाः । [1]यथा दर्पणे मुखाध्यासः । तत्र हि 'दर्पणं मुखं वा परस्परमध्यस्यते' इति नानिर्वचनीयख्यातौ वक्तुं शक्यम् । तयोर्व्यावहारिकत्वेन प्रातिभासिकाध्यासानिर्वाहात् । किं तु तयोराधाराधेयभाव एव । न च सोऽधुना केनचित्प्रकारेणानुभूयते, येन 'तत्सजातीयस्य तत्समानप्रकारोपस्थितिः कारणं' इति निरुह्येत । एवं 'रक्तः पटः' इत्यत्रापि कुसुम्भादिगतस्य रक्तिम्नः पटे साक्षात्सम्बन्धस्याभावात् सोऽध्यस्यते । [2]यदि तु— दर्पणे अपूर्वमेव मुखमुत्पद्यत इति मतम् । पटे च रञ्जकद्रव्यसम्बन्धात् वर्णान्तरमेव रञ्जकद्रव्यवर्णेन सदृशं तदुत्कर्षापकर्षानुगतोत्कर्षापकर्षशालि पटेन साक्षात्सम्बद्धं [3]जायत इति तत्र न कस्याप्यध्यासः । अपूर्वमुखाध्यासे च तत्समानप्रकारकप्रतिबिम्बसजातीयमुखविषयोपस्थितिः [4]सम्भाव्यते—इत्युच्यते, तदाऽपि चूर्णलिप्ते घटे वर्णान्तरोत्पादासम्भवात् 'शुक्लो घटः' इति साक्षात्संसर्गविषयतया [5]अध्यासत्वावश्यम्भावात् तत्रोक्तकारणासम्भवः । न च तत्रापि चूर्णोपादानभूतेषु पाषाणेषु

---

1. प्रतिबिम्बविभ्रमस्य केवलसंसर्गाध्यासत्वं प्रतिबिम्बस्वरूपसत्यत्ववादाश्रयणेन उपपादयति—**यथेत्यादिना** ।

2. प्रतिबिम्बस्वरूपमिथ्यात्ववादाश्रयणेन प्रतिबिम्बविभ्रमस्य केवलसंसर्गाध्यासत्वं आक्षिपन् शङ्कते-**यदि त्विति** ।

3. **जायत इति** दृष्टा हि हरिद्रासम्बन्धात् चूर्णे रक्तिम्नः सलिलसम्बन्धात् भूतले नीलिम्नश्च उत्पत्तिः इति भावः । रञ्जकद्रव्यवर्णात् वर्णान्तरत्वस्य उपपादकं वर्णान्तरस्य विशेषणद्वयम् ।

4. **सम्भाव्यत इति** ननु—प्रतिबिम्बस्वरूपसत्यत्ववादे दर्पणाभिहतानां नयनरश्मीनां परावृत्य स्वमुखग्राहकत्वं अङ्गीक्रियते, न तन्मिथ्यात्ववादे । तथा च तत्र प्रतिबिम्बसजातीयबिम्बमुखस्य कथं पूर्वदर्शनं सम्भाव्यते ? न च नासादिप्रदेशावच्छेदेन बिम्बमुखस्य पूर्वदर्शनं सम्भवतीति वाच्यम् । तावता नयनगोलकादिप्रतिबिम्बाध्यासानुपपत्तेः—इति चेत्—उच्यते—मुखसामान्यानुभवसंस्कारमात्रेण दर्पणे मुखविशेषाध्यासोपपत्तेः । न चैवं मुखसामान्यानुभवस्य तज्जन्यसंस्कारस्य वा मुखविशेषाध्यासहेतुत्वे चैत्रमुखदर्पणयोः सांमुख्ये सति यस्य कस्यापि मुखस्य अध्यासः स्यात् इति वाच्यम् । बिम्बभूतमुखविशेषसाम्मुख्यस्य नियामकत्वाङ्गीकारात् इति भावः । 'बिम्बभूतमुखविषयोपस्थितिः' इत्यनुक्त्वा 'मुखविषयोपस्थितिः' इति सामान्योक्त्या अयं पूर्वदर्शनसंभावनाप्रकारो ज्ञापितोऽपि ।

5. मु. अध्यासावश्य०

वह्निसम्पर्कात् श्वेतिम्न इव अपूर्वस्य अत्रापि [1]तथाविधस्य तस्य उत्पत्तिः किं न स्यादिति वाच्यम्। तत्र वह्न्यपगमेऽपि तस्यानुवर्तमानतया तथाऽङ्गीकारेऽपि चूर्णापाये तदनुपलम्भेन तथाऽङ्गीकारायोगात्। एतादृशेषु [2]संसर्गमात्राध्यासेषु नोक्तं कारणं सम्भवति। शुक्तिरजताध्यासेऽपि संसर्गांशे तन्न सम्भवति। न च संसर्गातिरिक्ताध्यास एव तस्य कारणत्वमिति शङ्कनीयम्। कुत्राप्यसम्भावितस्य [3]व्यक्तिविशेषस्य स्वप्ने [4]सजातीयपूर्वदर्शनासम्भवात्, असम्भाविते वस्तुनि जन्मान्तरीयस्यापि तस्य कल्पयितुमयोगात्। तस्मात् कथमेतदध्यासलक्षणमुपपद्यत इति चेत्—

उच्यते—इमामेवानुपपत्तिं मनसि निधाय 'अध्यासो नाम अतस्मिन् तद्-बुद्धिरित्यवोचाम' इत्यनुवादव्याजेन एतस्यार्थं स्फुटीकरिष्यति भाष्यकारः। तेन हि आरोप्याभावस्याधिष्ठाने [5]प्रतिपादनात् एकत्र समानसत्ताकयोः प्रतियोगितद-भावयोर्विरोधाद्विषमसत्ताकत्वसूचनेन, आरोप्याभावस्य च वस्तुतोऽधिष्ठानातिरेकान-भ्युपगमात् 'अधिष्ठानविषमसत्ताकस्य बुद्धिः अध्यासः' इति फलितोऽर्थः। तदनुसारेण [6]स्मृतिरूपपदं स्मर्यमाणवस्तुसादृश्यप्रतिपादकम्। तत्सादृश्यं च प्रतीतिकाले अस-त्त्वम्। परत्रेति तु अधिष्ठाने इत्यर्थकम्। तथा च अधिष्ठाने अपरोक्षतया भासमानस्य स्वरूपतोऽसत्त्वायोगात् अधिष्ठानस्य यादृशं सत्त्वं तादृशसत्त्वराहित्ये प्रतिपादिते अधिष्ठानविषमसत्ताकावभासत्वं लक्षणं पर्यवस्यति।

---

1. **तथाविधस्यतस्योत्पत्तिः**—तत्सदृशस्यापूर्वस्योत्पत्तिः। उत्पादकस्तु चूर्णलेपः।

2. मु. संसर्गाध्यासेषु

3. **व्यक्तिविशेषस्य स्वप्ने**—व्यक्तिविशेषविषयके स्वाप्नविभ्रमे

4. **सजातीयपूर्वदर्शनासम्भवादिति** ननु प्रतिबिम्बसजातीयमुखसामान्यानु-भवरूपेण पूर्वदर्शनेन तत्संस्कारेण वा मुखविशेषसान्निध्यवशात् मुखविशेषाध्यासो यथा, तथा पुरुषसामान्यानुभवरूपेण पूर्वदर्शनेन तत्संस्कारेण वा शुभाशुभहेत्वदृष्टानुरोधेन असम्भावितस्यापि तत्कालोत्पन्नस्य व्यक्तिविशेषस्य स्वाप्नविभ्रमः सम्भवतीति चेत्—सत्यम्—अध्याससामान्यकारणपरस्य भाष्यस्य संसर्गातिरिक्ताध्यासकारणप्रतिपादकत्वेन व्याख्यानायुक्ततायामेव तात्पर्यम्।

5. **प्रतिपादनादिति** 'अतस्मिन्' इत्यत्र अतच्छब्दः बहुव्रीहिः इति भावः।

6. **स्मृतिरूपपदमिति** 'अवभासे स्मृतिसादृश्यप्रतिपादकं सत् अवभास्यस्य' इति शेषः।

नन्विदमपि स्वप्नविभ्रमे न सम्भवति, तत्राधिष्ठानासम्भवात् । न च तत्र [1]साक्ष्येवाधिष्ठानम् । तस्य पारमार्थिकत्वेन प्रातिभासिकस्वाप्नपदार्थान् प्रति केवलस्याधिष्ठानत्वायोगात्, अध्यस्तरजतादौ प्रातिभासिके व्यावहारिकशुक्त्याद्यवच्छिन्नस्यैव तस्य [2]तथात्वात्, 'अहं गजः, मयि गजः' इति [3]प्रतिभासापत्तेश्च, इति चेत्—

न—अज्ञानान्तःकरणतद्धर्माणां व्यावहारिकपदार्थानवच्छिन्ने तत्र अध्यस्तानां प्रातिभासिकत्वाभ्युपगमेन 'प्रातिभासिकाध्यासे व्यावहारिकपदार्थावच्छिन्नस्यैव साक्षिणोऽधिष्ठानत्वं' इति नियमस्याप्रयोजकस्यानभ्युपगमात् । 'अहं गजः, मयि गजः' इति प्रतीतिस्तु क्वचिदिष्टैव । सर्वत्र तु न भवति । दोषवैचित्र्यात् । अविद्यादीनां प्रातिभासिकत्वञ्च 'आनावृतचैतन्यविषयतानियतस्वरूपत्वं प्रातिभासिकत्वम्, तादृशविषयतया [4]कदाचित्सम्बद्धस्वरूपत्वं व्यावहारिकत्वं' इति मतमनुसृत्य द्रष्टव्यम् । [5]यन्मते तु अविद्यातिरिक्तदोषाजन्यत्वं व्यावहारिकत्वं अविद्यातिरिक्तदोषजन्यत्वं प्रातिभासिकत्वं, तत्र[6] अविद्यान्तःकरणतद्धर्माणामपि व्यावहारिकत्वमेव[7]।

---

1. **साक्षी**—आत्मचैतन्यम् । 'आत्मनि चैवं विचित्राश्च हि' इति सूत्रादिति भावः ।

2. **तथात्वादिति** स्वप्ने व्यावहारिकपदार्थानां प्रतिभासस्य असम्भवात् अनङ्गीकाराच्च व्यावहारिकावच्छिन्नस्वाप्नाधिष्ठानमिति वक्तुमशक्यत्वात् इति शेषः ।

3. **प्रतिभासापत्तेश्चेति** शरीरान्तरेव स्वाप्नपदार्थानां सत्ताप्रतिभासादेः सिद्धान्तसिद्धत्वात् तथाभूतानाञ्च अन्तःकरणादीनां एवमेव प्रतिभासात् स्वाप्नानामपि एवं प्रतिभासापत्तिरिति भावः । यद्वा अन्तःकरणस्य व्यावहारिकत्वमुपेत्य तदवच्छिन्नस्य अधिष्ठानत्वे दोषमाह—'**अहं गजः**' '**मयि गजः**' **इति प्रतिभासापत्तेश्चेति** ।

4. मु. कदाचित्सम्बद्धत्वं

5. **यन्मते इत्यादि** न च एतन्मतानुसरणे 'प्रातिभासिकाध्यासे व्यावहारिकपदार्थावच्छिन्नस्यैव साक्षिणोऽधिष्ठानत्वं' इति नियमस्य अविद्यान्तःकरणादिषु पूर्वोक्तव्यभिचाराभावात्, अविद्यातिरिक्तनिद्रादिदोषजन्यत्वेन प्रातिभासिकानां स्वाप्नपदार्थानां उक्तनियमविरोधात् व्यावहारिकानवच्छिन्ने साक्षिणि अध्यासोक्तिरयुक्तेति शङ्क्यम् । उक्तनियमस्य अप्रयोजकत्वे एव पूर्वग्रन्थतात्पर्यात् ।

6. मु. तदा

7. मु. व्यावहारिकत्वं

एवं च स्वाप्नस्यापि अधिष्ठानभूतेन पारमार्थिकेन साक्षिणा विषमया [1]मिथ्यात्वरूपया सत्तया समन्वयात् लक्षणानुगतिः ।

ननु सिद्धान्ते 'ब्रह्मण एव सत्ता नान्यस्य' इत्यभ्युपगमात् कथं स्वाप्नेषु आत्मसत्तातो विलक्षणा सत्तेति चेत्—

उच्यते—लक्षणे सत्ताशब्देन तारत्वादिवदुत्कर्षविशेषात्मकाः केचन अखण्डोपाधिभूता[2] धर्मा विवक्षिताः । न च तत्र प्रमाणाभावः । श्रुत्या हि वियदादि-सत्तातो ब्रह्मण उत्कृष्टा सत्ता निर्दिश्यते 'सत्यस्य सत्यं....प्राणा वै सत्यं तेषामेष सत्यं' [बृ. उ. २-१-२०] इति । प्रत्यक्षेण शुक्तिरजतसत्तातो विलक्षणा सत्ता गृह्यते—रजतापेक्षया शुक्तिस्सत्येति । एवं स्वाप्नशुक्तिकादिषु तस्यामेवावस्थायामध्यस्तरजते सत्तावान्तरभेदः प्रतीतिसिद्धो द्रष्टव्यः । यद्गतमवभास्यं तत् अधिष्ठानम् । ततश्च जडेऽपि ब्रह्माधारत्वमारोपितमिति तत् अधिष्ठानम् । जडसत्तातश्च ब्रह्मसत्ता उत्कृष्टेति अधिष्ठानविषमसत्ताकावभासत्वं जडे ब्रह्माध्यासेऽप्यस्तीति लक्षणसमन्वयः । एवं तत्र तत्र लक्षणयोजना द्रष्टव्या ।

ख्यात्यन्तरवैषम्यं च स्वपक्षे अनेन सूच्यत इति तासामनादेयत्वसूचनद्वारा प्रकृताक्षेपपरिहारोऽपि सूचितः । **तार्किकपक्षे** ह्यधिष्ठानं अवभास्यस्य रजतादेः हट्टादिकं, तत्समानसत्ताकं च रजतम् । **सत्ख्यातिमते** च शुक्तिरेवाधिष्ठानम्, किं तु रजतं शुक्तिसमानसत्ताकम् । **आत्मख्यातिमते** आत्मा अधिष्ठानं, तत्समान-सत्ताकं चारोप्यम् । **अख्यातिमते** तु तार्किकवदेव सर्वम् । असंसर्गाग्रहः परं विशेषः । तेषु मतेषु अधिष्ठानविषमसत्ताकत्वाभावः । **असत्ख्यातिर्द्विधा** । शून्य-वादिनां निरधिष्ठाना । तान्त्रिकाणां [3]केषांचित् साधिष्ठाना असदारोप्या । आद्याया [4]अधिष्ठानपदेन व्यावृत्तिः । अपरायास्तु अवभासपदेन । यद्यपि लक्षणे अवभासपदं

---

1. मिथ्यात्वरूपया—मिथ्यात्वेन परिचायकेन परिचितया । अतः अध्यास-लक्षणघटकसत्ताया वक्ष्यमाणाखण्डोपाधित्वस्य न क्षतिः ।

2. मु. भूता विवक्षिताः

3. **केषांचित्**—माध्वैरनुस्रियमाणानाम्

4. **अधिष्ठानपदेन व्यावृत्तिरिति** स्वाधिष्ठानविषमसत्ताकत्वस्य असति स्वाधिष्ठानाप्रसिद्ध्या निरूपयितुमशक्यत्वात् इति भावः ।

ज्ञानसामान्यपरम्, ज्ञानसामान्यान्तर्गतपरोक्षज्ञानविषयत्वं च असतोऽपि सम्भवत्येव, तथापि रजताद्यध्यासेष्वपरोक्षेषु अवभासपदं वस्तुगत्या अपरोक्षावभासपरं पर्यवस्यतीति तेन तद्व्यावृत्तिः ।

पूर्वदृष्टपदं च क्वचित्पूर्वमारोप्यसजातीयोपस्थितिरपेक्षितेत्येतावन्मात्रपरं सत् शङ्काविशेषनिराकरणार्थम् । सा चैवम्—समानसत्ताकयोरारोप्यविशेषाधिष्ठानसामान्यांशयोरैक्यज्ञानजन्यसंस्कारोऽध्यासेनापेक्षितः, शुक्तिरजताध्यासे तथा दर्शनात् । प्रकृते च न सम्भवति, आत्मना समानसत्ताकस्यान्यस्याभावात्—इति । अप्रयोजकत्वात् नायं नियमः साधुः । अपूर्वव्यक्तिविषयस्वप्ने तदभावात् व्यभिचारदृष्टश्च ।

इदं च लक्षणं अनिर्वचनीयस्यारोप्यस्योत्पत्तिं स्वीकृत्य लक्ष्येषु सङ्गमनीयम् । न च सदसद्विलक्षणत्वं विरुद्धं । सद्विलक्षणत्वं हि बाध्यत्वम् । असद्विलक्षणत्वं च सत्स्वरूपत्वम् । तच्च सम्भवत्येव शुक्तिरजतस्य । लब्धस्वरूपं हि तत् । अन्यथा शशशृङ्गादिवत् अपरोक्षत्वानुपपत्तेः । बाधश्च एकावच्छेदेन स्वोपादाने त्रैकालिकोऽभावः । सोऽपि रजतस्य नेदंरजतमिति प्रमाणसिद्धः । तदा परं विरोधः स्यात्—यदि सद्विलक्षणत्वं निस्स्वरूपत्वं असद्विलक्षणत्वं सत्स्वरूपत्वं इत्येवं विवक्षितं स्यात् । न तु तथा विवक्षितम् । प्रकारान्तरस्य दर्शितत्वात् । न च—[1]सोऽपि प्रकारो विरुद्धः, स्वोपादाने त्रैकालिकाभावस्यायोगादिति—वाच्यम् । प्रतीत्यनुसारेण हि विरुद्धत्वमविरुद्धत्वं च व्यवस्थापनीयम् । एवं च यथा पुरुषवति भूतले 'दण्डी पुरुषो नास्ति' इति प्रतीत्या प्रतियोगितावच्छेदकविशिष्टस्यैव प्रतियोगिनोऽभावेन सह विरोधः, एवं समानसत्ताकस्यैव तेन सह विरोध इति नियमः ।

[2]एतेन—यत् सत्ख्यातिवादिनोक्तम्—शुक्तित्वाधिकरणे इदमि रजतत्वं वर्तत इति, तत् प्रत्युक्तम् । यदि तत् [3]प्रतिभाससमानकालं इष्यते, तदा [4]असन्मत-

---

1. मु. सोऽपि वि०
2. विशिष्टाद्वैत्यभिमतं सत्ख्यातिवादं निराकरोति—**एतेनेत्यादिना** ।
3. मु. प्रतिभासकाल उत्पद्यते
4. **असन्मतप्रवेश इति** न च प्रतिभाससमानकालस्यापि तस्य परैः सत्यत्वाभ्युपगमे कथमस्मन्मतप्रवेश इति वाच्यम् । प्रसिद्धरजतोत्पादकसामग्र्यभावस्य व्यवस्थापयिष्यमाणत्वेन सत्यत्वासम्भवः इत्यभिप्रायात् ।

प्रवेशः । यदि तु त्रैकालिकं कथं [1]विरोधपरिहारः । न च तत्र किञ्चित् प्रमाण-मस्ति । इदंरजतमितिप्रतीतेः तात्कालिकरजतमादायापि सम्भवात् । न च तत्र प्रसिद्धरजतोत्पादिका सामग्री सम्प्रतिपन्ना ।

ननु—त्रिवृत्करणश्रुतिबलात् शुक्त्यारम्भकद्रव्येण सह तेजसः संसृष्टतया शुक्त्यारम्भकाले तैजसैरवयवै रजतमारभ्यत इति न सामग्र्यनुपपत्तिः । न च—शुक्तौ रजतसंसर्गोऽनुपपन्नः, द्रव्यान्तरेण सहात्यन्तिकस्य द्रव्यान्तरसंसर्गस्यादर्शना-दिति—वाच्यम् । नीवारेषु व्रीहिसंसर्गस्यात्यन्तिकस्य[2] सर्वसम्प्रतिपन्नत्वात् । अत एव—दर्शपूर्णमासयोर्नित्यतया अवश्यकर्तव्यत्वे यदा [3]सकला व्रीहयो न लभ्यन्ते तदा [4]विकलान्नीवारगतानुपादाय यष्टव्यमिति व्यवस्थापितं पूर्वतन्त्रे—इति चेत्—

न—यदि तैजसैरवयवैः शुक्तिकायां रजतमारब्धं भवेत्, तदा रजतयुक्त-मृदादिदाहे रजतपरिशेषवत् शुक्तिदाहे [5]रजतपरिशेषोऽपि स्यात् । 'औषधपुट-संयुक्तस्य दाहे यथा रजतस्य न परिशेषः, किं तु भस्मीभावः, एवं शुक्तिसंयुक्तस्यापि' इति कल्पनं तु शुक्तौ सार्वकालिकरजतमस्तीत्यत्र प्रमाणावतारं विनाऽनुचितम् । त्रिवृत्करणश्रुतिः महाभूतानां संसर्गं प्रतिपादयन्ती न तत्र रजतपरिणामे प्रमाणम् । न च क्वचिन्नीवारादौ तथादृष्टमिति अन्यत्रापि तथाऽभ्युपगन्तुं युक्तं असति प्रमाणे । न च नीवारेषु व्रीहयो विद्यन्ते । रूपरससंस्थानविशेषनियतस्य व्रीहित्वस्य नीवारेषु कथञ्चिदपि अभ्युपगन्तुमशक्यत्वात् ।

तर्हि कथं तेषां प्रतिनिधित्वं कथं वा व्रीहिभिः [6]समानधर्मत्वम् ? एवम्—दर्शपूर्णमासयोः 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति नित्यत्वमुपश्रुत्य तत्र च

---

1. **विरोधेति** नेदंरजतमितिप्रमितिसिद्धेन त्रैकालिकाभावेन विरोधेत्यर्थः ।

2. **आत्यन्तिकस्य**—यावद्धर्मिस्वरूपं स्थायिनः

3. **सकलाः** — आत्यन्तिकद्रव्यान्तरसंसर्गरहिताः

4. **विकलान्**—आत्यन्तिकद्रव्यान्तरसंसर्गवतः

5. **रजतपरिशेषोऽपिस्यादिति** इदमुपलक्षणम्—शुक्तिदाहे क्षारभाववत् द्रवी-भावस्याप्युपलब्धिप्रसङ्गः, आधाने रजतशकलालाभे शुक्तिशकलोपादानप्रसङ्गः, इत्यपि बोध्यम् ।

6. **समानधर्मत्वम्**—अवघातादिः समानो धर्मः

केनचिन्निमित्तेन मुख्यद्रव्यासम्भवं भाविनं कदाचित् अनुसन्धाय विचारावस्थः पुरुषः 'व्रीहिभिर्यजेत' इति नियमशास्त्रस्य [1]आक्षेपापवादकस्य अशक्त्या तस्यां दशायाम-प्रवृत्तिमालोच्य नित्यचोदनाया द्रव्याक्षेपकताशक्तिमकुण्ठितामनुसन्दधानः, यदि कथञ्चिदपि मुख्यशास्त्रानुग्रहो भवेत् तदा तमनादृत्य न यत्किञ्चित् द्रव्यं आक्षेप्तव्यमिति निर्धार्य, व्रीहिषु यादृशरसयुक्ता अवयवाः तादृशरसयुक्ता अवयवा नीवारेष्वपि विद्यन्त इति स्मरन्, तावन्मात्रानुग्रहो मुख्यशास्त्रस्यानुसर्तव्य इति, मुख्यस्य पयसोऽलाभे नालिकेररसः तत्सदृशो लोके सन्निधाप्यत इति लौकिकन्यायसनाथाया नित्यचोदनाया अत्यन्तसदृशद्रव्याक्षेपकत्वं निर्धार्य, 'व्रीहीणामलाभे नीवारा एव प्रतिनिधेयाः' इति निश्चिनोति । 'व्रीहीनवहन्ति'—इत्यादिशास्त्राणां च अपेक्षानुसारेण पुरोडाशादिहविस्सम्पादनद्वाराऽपूर्वजनकपदार्थोद्देशेन संस्कारविधायकतया यववत् नीवाराणामपि व्रीहिभिः साधर्म्यम् । परं तु यवेषु 'व्रीहीणां मेध सुमनस्यमानः' इति मन्त्रो न प्रवर्तते । मुख्यया वृत्त्या तत्प्रकाशनसामर्थ्याभावात् । उद्भूतसादृश्याभावेन गौण्यारोपयोरप्यसम्भवात् । नीवाराणां तु सम्भवति व्रीहित्वारोपेण प्रकाशनम् । लोके हि 'यो यस्य स्थाने प्रतिनिधीयते स तेन शब्देन व्यवह्रियते, यथा विष्णुस्थाने प्रतिनिहिता प्रतिमा विष्णुशब्देन' इति प्रतिनिधेः मुख्यशब्दभाक्त्वस्य व्युत्पत्तिसिद्धत्वात् । अतो न पूर्वमीमांसकव्यवहारपर्यालोचनया शुक्तौ रजतं तात्त्विकमस्तीति ।

अस्तु वा यथाकथञ्चित्तत्र रजतावयवसमावेशः तावन्मात्रेण च रजतमिति प्रतीतेः प्रमात्वम्, रजतत्वजातेरवयवावयविसाधारण्यात् दधित्वादिवत् । वल्मीकनीवारादिषु घटत्वव्रीहित्वाद्यवगाहिषु भ्रमेषु का गतिः । घटत्वव्रीहित्वादिजातेरवयविविशेषमात्रोपरक्तत्वात् । तत्राख्यातिस्वीकारे च सैव सर्वत्रास्तु, किमनया कुसृष्ट्या अव्यापिकया । अख्यातिरपि न सम्भवतीत्यनुपदमेव वक्ष्यते ।

'निरधिष्ठाना असत्ख्यातिः' इति शून्यवादिमतं तु तर्कपाद एव निराकरिष्यते । रजतमिदमित्यत्र अपरोक्षतया इदंपदार्थे अधिष्ठाने निस्स्वरूपमेव रजतं प्रतीयते—इति मतं तु अनुभवविरोधादेवानादरणीयम् । लब्धस्वरूपस्य रजतस्य अनुभवसिद्धत्वात् ।

---

1. **आक्षेपेति**—यत्किञ्चित्प्रकृतिद्रव्यकल्पकं यत् पुरोडाशादिहविर्निष्पत्त्यन्यथानुपपत्तिरूपं अर्थापत्तिप्रमाणं तदित्यर्थः ।

सिद्धान्ते तु दोषसहिता अविद्या शुक्तिगता रजतत्वेन परिणमत इति तस्य लब्धात्मकत्वान्नानुभवविरोधः । न च उत्पत्त्यङ्गीकारे तत्त्वज्ञानेन च नाशाङ्गीकारे शुक्तिरजतसम्बन्धितया तयोरनुभवोऽपि स्यादिति वाच्यम् । प्राक्सिद्धशुक्तितादात्म्ये-नाध्यस्ते शुक्तीदंत्वसंसर्गस्येव शुक्तिगतप्राक्सिद्धत्वसंसर्गस्यापि आरोपिततया [1]उत्पत्त्यनुभवानुपपत्तेः । बाधेन त्रैकालिकाभावप्रतियोगित्वस्य ग्रहात् तदधिकरणे नाशासम्भवेन [2]तदनुभवानुपपत्तेः । परिणाम्युपादानमेव कार्यनाशाधिकरणम्, न विवर्तोपादानम् । न चैवं तत्र नाशानङ्गीकारे तस्य नित्यतापत्तिः । बाधेन हि सहाज्ञानेन परिणामिना रजतस्य सदसद्व्यवहारायोग्यत्वापादनेन अधिष्ठानमात्र-परिशेषतासम्पादनात् ।

अत एव अन्यथाख्यातिरपि निराकृता । तात्कालिकरजतमादायापि[3] प्रती-त्युपपत्तौ देशान्तरस्थरजतप्रतीतिकल्पनानुपपत्तेः । नापि देशान्तरस्थस्यासन्निकृष्टस्य भानं सम्भवति । न च रजतानुभवजन्यः संस्कारः स्मृतिर्वा तत्र प्रत्यासत्तिः । तथासति वह्न्यनुभवजन्यसंस्कारस्मृत्योः परामर्शस्य वा सत्त्वेन 'पर्वतो वह्निमान्' इति प्रत्यक्षप्रसङ्गात् । न चानुमितिसामग्र्या तत्प्रतिबन्धः । विशेषदर्शनाधीन-संशयोत्तरप्रत्यक्षानुसारेण समाने विषये प्रत्यक्षसामग्र्याः प्रबलत्वात् । न च—लौकिकप्रत्यक्षसामग्र्या एव अनुमितिसामग्रीतः प्राबल्यम्, अलौकिके तु अनुमिति-सामग्र्या एवेति पर्वतोवह्निमानित्यनुमितौ न काचिदनुपपत्तिरिति—वाच्यम् । तथात्वे स्थाणौ 'स्थाणुर्वा पुरुषो वा' इति संशयोत्तरं पुरुषत्वव्याप्यकरादिमानिति विशेषदर्शनानन्तरं पुरुष एवेति [4]प्रत्यक्षं न स्यात् । तत्र लौकिकसामग्र्या असम्भ-वात् । न च तत्र अनुमितिरूप एव भ्रमः न प्रत्यक्ष इति शङ्क्यम् । 'पुरुषं साक्षात्करोमि' इत्यनुभवात् ।

---

1. **उत्पत्त्यनुभवानुपपत्तेः** — उत्पत्त्यननुभवोपपत्तेः ।
2. **तदनुभवानुपपत्तेः**—तदननुभवोपपत्तेः ।
   उत्पत्त्यनुभवानापत्तेः, तदनुभवानापत्तेः इति वा पाठः स्यात् ।
3. मु. 'अपि' नास्ति
4. **प्रत्यक्षं**—भ्रमात्मकं प्रत्यक्षम्

[1]अस्तु वा अन्यत्रोपनीतभानम्[2] । प्रकृते तु न सम्भवति । न हि [3]चाक्षुषे 'सुरभि चन्दनं' इति ज्ञाने चन्दनत्वांशे यथा प्राकट्यं तथा सौरभांशेऽपि विद्यते–इति सर्वानुभवसिद्धम् । एवं रजतांशेऽपि अलौकिकत्वेऽभ्युपगते सौरभवत् अप्राकट्यमेव स्यात् । अपि च—यत्र यदनुभवः तत्र वा, यदवच्छेदेन यस्यानुभवः तदवच्छेदकवत्तया उपस्थिते वा, संस्कारादेरुपनयत्वम् । शुक्तौ तु रजतं प्राङ्नानुभूतम्, नापि शुक्तिगतेदंत्वावच्छेदेन, इति [4]कथं तत्रोपनीयेत ।

न च—त्वया दोषस्य अक्लृप्तं रजतस्वरूपे कारणत्वं कल्पनीयम्, तदपेक्षया व्यवहितरजतसाक्षात्कार एव तस्य कारणत्वकल्पनमुचितम्, तथासति अपूर्वरजतानङ्गीकारात् लाघवं भवतीति—वाच्यम् । भवेदेवं, यदि दोषस्य अक्लृप्तं अर्थंप्रति कारणत्वं कल्प्येत । न त्वेतदस्ति । येनापि हि देशान्तरस्थं रजतं भासत इत्युच्यते तेनापि शुक्तिरजतोभयनिरूपितं तादात्म्यं अत्रैवोत्पद्यत इति अवश्यमभ्युपेयम् । तस्य अन्यत्राप्रसिद्धेः अत्राप्यनुत्पत्तौ अपरोक्षता न स्यात् । स्वप्ने च [5]अपूर्वव्यक्तिगोचरे तत्रैव विषयस्योत्पत्तिरुपेया । तस्यान्यत्राप्रसिद्धेः । किं बहुना—स्वाप्निकानां पदार्थानां मिथ्यात्वं सन्ध्याधिकरणे निरूपयिष्यते । तेषां च 'अथ रथान् रथयोगान् पथस्सृजते' [ बृ. उ. ४-३-१० ] इति श्रुतिपर्यालोच-

---

1. ज्ञानस्य संस्कारस्य वा प्रत्यक्षविषयताप्रयोजकसन्निकर्षत्वं अभ्युपेत्याप्याह —अस्तुवेति ।

2. आ. नीतस्य प्रत्यक्षं

3. मु. चक्षुषा

4. **कथं तत्रोपनीयेतेति**—न च—यस्य प्रथमं शुक्तिशकले रजतभ्रमानन्तरं बाधो नोत्पन्नः, तत्र शुक्तिसाधारणचाकचक्यावच्छेदेन रजतत्वानुभवस्यानपोदितत्वात् पुनः शुक्तिशकलान्तरे रजतभ्रमोदयेऽन्यथाख्यातिः संभवति , तत्र यदवच्छेदेनेत्याद्युक्तरूपोपनीतभानसामग्रीसत्त्वात्, पाकरक्ते घटे श्यामोऽयमिति भ्रमोदये चान्यथाख्यातिः सम्भवति ; 'यत्र यदनुभवः ' इत्याद्युक्तरूपोपनीतभानसामग्रीसत्त्वात्—इति शङ्क्यम् । क्वचिद्विभ्रमे दोषघटितसामग्रीबलात् आविद्यकविषयोत्पत्तिक्लृप्तौ अन्यत्रापि तदुत्पत्तेरनिवारणात् । पाकरक्ते स्मृत्युपनीतश्यामवर्णप्रत्यक्षस्य, पूर्वानुभूतसौरभे पश्चात् निखननादिना गतसौरभे चन्दनखण्डे सुरभीदंचन्दनखण्डमिति स्मृत्युपनीतसौरभविषयचाक्षुष प्रत्यक्षस्येव प्रमात्वात् । तथा च भ्रमस्थले न क्वापि ज्ञानादेः प्रत्यासत्तित्वं इति ध्येयम् ।

5. **अपूर्वव्यक्तीति** मनुष्यपशुपक्षिवृक्षाद्यनेकात्मकेत्यर्थः ।

नया तत्रैवोत्पत्तिः । तत्र सर्वत्र दोषस्य कारणत्वं क्लृप्तमेवेति नावलृप्तकल्पनम्[1] ।

अपि च येन दोषस्यासन्निहितरजतसाक्षात्कारजनकत्वं कल्प्यते तेन [2]ज्ञान-प्रत्यासत्त्याद्यजन्यरजतचाक्षुषत्वेन रजतचक्षुस्सन्निकर्षस्य रजतालोकसंयोगस्य च कारणत्वं क्लृप्तं परित्यक्तव्यम्, दोषस्य च असन्निहितचाक्षुषजनकत्वं तत्प्राकट्य-प्रयोजकत्वञ्च कल्पनीयमिति भूयसी अनुभवविरुद्धा कल्पना आपद्यते । अर्थोत्पा-दकत्वं तु अन्यत्र क्लृप्तमेव । उत्पन्नस्य च [3]प्रमात्रवकुण्ठिततया अपरोक्षतायां न काचिदनुपपत्तिः । सर्वत्र [4]आपरोक्ष्ये प्रमात्रवकुण्ठनस्यैव मन्मते प्रयोजकत्वात् अत्रैव लाघवम् ।

न च—मैत्रे 'चैत्रोऽयं' इति भ्रमस्य प्रसिद्धचैत्रविषयकत्वं अवश्यं वक्तव्यम्, प्रातिभासिकचैत्रज्ञानात् प्रसिद्धचैत्रार्थिप्रवृत्तेरयोगात् । रजतसामान्य-ज्ञानाद्धि रजतसामान्यार्थिप्रवृत्तिः सम्भवति, नैवमन्यव्यक्तिज्ञानात् अन्यव्यक्त्यर्थि-प्रवृत्तिः सम्भवतीति—वाच्यम् । मैत्रे चैत्रभ्रमानन्तरं 'चैत्रो मे स्यात्' [5]इतीच्छा-पूर्विका प्रवृत्तिः । सा तु चैत्रत्वप्रकारकज्ञानाद्भवति । ज्ञानस्य स्वसमानप्रकार-केच्छाद्वारा प्रवर्तकत्वोपपत्तेः ।

न चैवं—'तदेवेदं रजतं' इति [6]प्रत्यभिज्ञा कथमुपपद्यते, प्रत्युत्पन्ने [7]पुरोवर्तिनि तत्ताया अभावात्, तत्रान्यथाख्यात्यङ्गीकारे अन्यत्रापि सैवास्त्विति—वाच्यम् । तत्तांशे परोक्षत्वेन अन्यथाख्यात्यङ्गीकारेऽपि आपरोक्ष्यस्य प्रमात्रव-

---

1. मु. कल्पनमपि । येन

2. **ज्ञानप्रत्यासत्त्याद्यजन्येति** अनुपदं 'न च त्वया' इत्यादिग्रन्थेन लौकिका-लौकिकसन्निकर्षं विनैव दोषस्य साक्षात्कारकारणतायाः पूर्वपक्षिणोक्तत्वात् इदंरजत-भ्रमस्य ज्ञानप्रत्यासत्त्याद्यजन्यत्वम् । ज्ञानस्य रजतांशे प्राकट्यस्य अनुभवसिद्धत्वादपि तस्य ज्ञानप्रत्यासत्त्याद्यजन्यत्वम् । रजतंसाक्षात्करोमीत्यनुभवाच्च तथा ।

3. **प्रमात्रवकुण्ठिततया**—प्रमातृतादात्म्येन

4. मु. अपरोक्षे

5. आ. इत्येवमिच्छा

6. **प्रत्यभिज्ञेति** भ्रमरूपा इति शेषः ।

7. **पुरोवर्तिनीति** प्रातिभासिके रजते इति शेषः ।

**तं केचित् अन्यत्रान्यधर्माध्यास इति वदन्ति ।**

कुण्ठनं विनाऽसम्भवात्[1] 'इदं रजतं' इत्यादावनिर्वचनीयत्वोपपत्तेः । [2]तत्रापि [3]वा संसर्गारोपाभ्युपगमात् [4]तस्मिन्नंशे अनिर्वचनीयत्वोपपत्तेः । तत्तांशे तु [5]सर्वप्रत्यभिज्ञासाधारण्येन स्मृतिरूपत्वं सिद्धान्ते इष्टमेव । 'पर्वतो वह्निमान्' इत्यनुमितिरूपभ्रमे तु दोषबलात्[6]वह्निरप्युत्पद्यत इति न कुत्राप्यन्यथाख्यातिः । शशशृङ्गमिति विकल्पस्तु असत्ख्यातिरेव, दोषाभावदशायामपि जायमानत्वात् ।

**तं केचिदिति** । ननु—अत्र मतान्तरोपन्यासः किमर्थः? न तावत् सम्मत्यर्थः, विरुद्धत्वात् । नापि निराकरणार्थः, दूषणानभिधानात्—इति चेत्, न—'भ्रमस्सर्वसम्प्रतिपन्नः' इत्येतावन्मात्रे संवादार्थः । यद्यपि सोऽप्यंशोऽख्यातिवादिनोऽसम्प्रतिपन्नः, तथापि तमंशं साधयित्वा [7]सम्मत्त्यर्थः । विषयांशे तु केचिदित्यस्वरसोद्भावनात् दूषणार्थः । तत्र आत्मख्यातिमते रजतं आत्मधर्मः दोषबलाद्दिदन्त्वेन प्रतीयते । न तु बहिरेव रजतमुत्पद्यते । तथासति 'नेदं रजतं' इति बाधो द्वयोः कल्पनीयः—भ्रमविषयस्य रजतस्य धर्मिणः तद्धर्मस्येदंत्वस्य च । अनिर्वचनीयमते उभयोरपि कल्पितत्वोपगमात् । मन्मते तु इदंत्वमात्रस्य बाधः, न रजतस्य । तस्य आत्मधर्मस्य सत्त्वाभ्युपगमात्, शून्यवादिव्यतिरिक्तानां सर्वेषां सौगतानामपि [8]आन्तरार्थेषु सत्त्वे विप्रतिपत्त्यभावात् । तत्र इदंत्वरूपे बाधिते तत् आन्तरत्वेन पर्यवस्यति । [9]तन्मतमाह—**तं केचित् अन्यत्र**—शुक्तौ बाह्यायां **अन्यधर्माध्यासः**—आत्मधर्मस्य रजतस्य योऽवभासः स एवाध्यासः **इति वदन्ति** ।

---

1. **इदंरजतमित्यादाविति** रजतस्येति शेषः ।
2. **तत्रापि**—तत्तांशेऽपि मु. अत्रापि
3. वाकारः चार्थे
4. **तस्मिन्नंशे**—संसर्गांशे
5. **सर्वप्रत्यभिज्ञेत्यादि** अन्यथा प्रमात्मकप्रत्यभिज्ञायां तत्ताभानस्य अनिर्वाहात् ।
6. मु. वह्निरुत्पद्यत
7. मु. सम्प्रतिपत्त्यर्थः
8. आ. आन्तरपदार्थेषु
9. मु. "तन्मतमाह" नास्ति ।

एतदपरे न क्षमन्ते—रजतस्यान्तरत्वे प्रमाणाभावात्। नह्यान्तरत्वेन कुत्रापि भ्रमस्थले प्रमास्थले वा केचित् रजतमनुभवन्ति। तथा हि सति 'अहं रजतं' 'मयि रजतं' इति वा प्रत्ययः स्यात्। 'इदं रजतं' इत्येव तु सर्वत्र प्रत्ययः। ननु—सर्वत्र मास्तु आन्तरत्वम्, भ्रमस्थले तु तथा किं न स्यात्, इदंत्वस्य बाधात् इति चेत्, न—इदंत्वं सन्निहितत्वम्। तद्बाधे असन्निहितत्वं पर्यवस्यति। तच्च आपणादिगतस्य प्रसिद्धमेव। अतो न बाधेन आत्माकारत्वं व्यवस्थापयितुं [1]शक्यम्। न च आपणादिगतस्य प्रत्यक्षत्वानुपपत्तिः। न ह्यख्यातिवादे तस्य प्रत्यक्षत्वमभ्युपगम्यते। किं तु पूर्वानुभववशात् रजतस्य स्मृतिः। पुरोऽवस्थितस्य शुक्त्यादेः दोषबलाच्छुक्तित्वेनावभासाभावः, चक्षुस्सन्निकर्षवशादिदन्त्वेन ग्रहणम्। दोषवशादेव च विषयज्ञानयोर्विद्यमानोऽपि भेदो न गृह्यते। तावन्मात्रेण च इदंरजतमिति व्यवहारो रजतार्थिप्रवृत्तिश्च। [2]न त्वनिर्वचनीयान्यथाख्यातिमतवत् अपूर्वो विषयः विशिष्टज्ञानं वा संसर्गावगाहि किञ्चित् अभ्युपगम्यते। [3]असंसर्गाग्रहेण प्रवृत्त्युपपत्तौ अतिरिक्तकल्पने गौरवात्। अपि च तन्मते क्वचित् ज्ञानस्याप्रामाण्येऽभ्युपगते ज्ञानत्वरूपसाधारणधर्मदर्शनात् सर्वत्राप्रामाण्यशङ्काप्रसरो भवेत्। तथा च न कुत्रापि पुरुषो निष्कम्पं प्रवर्तेत। [4]निष्कम्पप्रवृत्तिमात्रे अप्रामाण्यशङ्काविरहस्य प्रामाण्यनिश्चयस्य वा प्रयोजकत्वात्। सति संशये [5]उभयोरप्यसम्भवात्। न चैवं—दोषाभावस्थलेऽपि विशिष्टज्ञानं मास्तु, असंसर्गाग्रहेण [6]सर्वत्रोपपत्तेरिति—वाच्यम्। तत्र संवादिप्रवृत्त्यात्मककार्यवैलक्षण्यस्य साधारणेनासंसर्गाग्रहेणासम्भवात्। असाधारणकारणापेक्षायां संसर्गोपस्थितिः विलक्षणं कारणं कल्प्यते, न च तत्कल्पने किञ्चित् अनाश्वासादिरूपं

---

1. मु. युक्तम्।

2. **नत्वित्यादि** अनिर्वचनीयख्यातिमत इव अपूर्वः—पूर्वाननुभूतः विषयः, उक्तमते अन्यथाख्यातिमत इव च संसर्गविषयकं विशिष्टज्ञानं वा नाभ्युपगम्यते इत्यर्थः।

3. **असंसर्गाग्रहेणेति** संसर्गः-तादात्म्यं, असंसर्गः-भेदः, भेदाग्रहेणेत्यर्थः।

4. **निष्कम्पप्रवृत्तीत्यादि** निष्कम्पत्वं-विसंवादित्वधीशून्यत्वम्, विषयिताविशेषो वा। **अप्रामाण्यशङ्काविरहस्येति** नैयायिकमताभिप्रायेण। **प्रामाण्यनिश्चयस्येति** स्वमताभिप्रायेण।

5. मु. उभयोरसम्भवात्

6. मु. सर्वोपपत्तेः

**केचित्तु यत्र यदध्यासः तद्विवेकाग्रहनिबन्धनो भ्रम इति ।**

बाधकमस्ति, इत्यतो भ्रमो नाम न ज्ञानान्तरमस्ति । भ्रमत्वप्रसिद्धिस्तु विसंवादिप्रवृत्तिजनकत्वमात्रेण [1]द्वयोरेव ज्ञानयोः उपपद्यते । भेदग्रहश्च भेदाग्रहाभावः । तस्मिन् सति प्रवृत्तिः न जायते । भेदाग्रहस्य कारणस्याभावे प्रवृत्त्यनुपपत्तेः । प्रवृत्त्यभाव एव च बाध इत्युच्यते । तदिदमाह—**केचित्त्विति** । **यत्र यदध्यास** इति अन्येषां वादिनां प्रसिद्धिः, **तद्विवेकाग्रहनिबन्धनः**—तयोः—इदंरजतयोः **विवेकस्य—भेदस्य अग्रहः निबन्धनं**—स्वरूपं यस्य भेदाग्रहस्य [2]स एव भ्रमः इत्यर्थः ।

अत्रायमस्वरसः—भेदाग्रहात् प्रवृत्तिः इतिमतमसङ्गतम् । प्रवृत्तौ प्रवृत्तिविषयज्ञानं इष्टोपस्थितिश्च कारणं न भेदाग्रहमात्रं इति परस्यापि संप्रतिपन्नम् । तत्र भेदाग्रहोऽप्यधिकं कारणं किमर्थमिति पृष्टे परेणेत्थं वक्तव्यम्—यत्र 'इदं यत्किञ्चित्, रजतं तत्' इति पुरोवर्तिनो देशात् भिन्नदेशे रजतं गृह्यते तत्र इष्टोपस्थितौ सत्यामपि पुरोदेशे न प्रवर्तते, पुरोवर्तिनो रजतस्य च असंसर्गग्रहात् । अतोऽसंसर्गग्रहस्य प्रतिबन्धकत्वात् तदभावः कारणं—इति । तथासति इष्टाभेदग्रहस्य निवृत्तिप्रतिबन्धकतया [3]तदग्रहो निवृत्तौ कारणमिति [4]इदं रजतमित्यत्र तव मते [5]उभयोस्समावेशात् [6]प्रवृत्तिनिवृत्त्योः तटस्थ एव पुरुषो भवेत् । यदि तु

---

1. **द्वयोरेव ज्ञानयोरिति** स्वरूपतो विषयतश्च भिन्नं अगृहीतभेदकं नैरन्तर्येणोत्पन्नं ज्ञानद्वयं भ्रमइति व्यवह्रियते इत्यर्थः । पक्षान्तरं तु वक्ष्यते ।

2. **स एव भ्रम इति** निरन्तरोत्पन्नयोः ज्ञानयोः स्वरूपतो विषयतश्च भिन्नयोः भेदाग्रहः भ्रमइतिव्यवहारविषयः इत्यर्थः ।

3. **तदग्रह इति** इष्टाभेदः तच्छब्दार्थः । तदभाव इत्येव पाठः स्यात् , अत्र इष्टाभेदग्रहः तच्छब्दार्थः ।

4. **इदंरजतमित्यत्रेति** भ्रमात्मके इत्यादिः ।

5. **उभयोस्समावेशादिति** भ्रमस्थले दोषात् पुरोवर्तीष्टभेदाग्रहः तव सम्प्रतिपन्नः । अन्यथा तत्र प्रवृत्त्यभावप्रसङ्गः । पुरोवर्तीष्टाभेदाग्रहोऽपि तत्र त्वया अङ्गीकार्यः । अन्यथा भ्रमात्मकविशिष्टज्ञानाङ्गीकारापत्तेः । एवञ्च पुरोवर्तीष्टभेदाग्रहः पुरोवर्तीष्टाभेदाग्रहश्चेत्युभयोः प्रवृत्तिनिवृत्तिहेत्वोः तत्रैकत्र सत्त्वादित्यर्थः ।

6. **प्रवृत्तिनिवृत्त्योस्तटस्थः**—उदासीनः—प्रवृत्तिनिवृत्त्यन्यतरशून्य इति यावत् । विरुद्धयोः प्रवृत्तिनिवृत्त्योः युगपत् एकत्रासम्भवात् इति भावः ।

भावाभावयोर्मध्ये भावस्य लघुत्वात् इष्टभेदग्रह एव निवृत्तौ कारणं, तदा प्रवृत्तावपि इष्टाभेदग्रह एव कारणमस्तु। यदि तु [1]भ्रमस्थले [2]पुरोवर्तीष्टाभेदग्रहस्याप्रसिद्ध-तया तदभावो न सम्भवतीत्युच्येत, तदा [3]प्रमास्थले [4]पुरोवर्तीष्टभेदग्रहस्याप्रसिद्ध-तया तदभावोऽपि न सम्भवतीति तुल्यम्। यदि [5]तु—पुरोवर्तिनि इष्टभेदग्रहविषय-त्वाभाव एव[6] प्रयोजकः,[7] तत्र च नानुपपत्तिः, घटादौ इष्टभेदग्रहविषयत्वस्य प्रसिद्धतया रजते तदभावस्य सुलभत्वात्—इत्युच्येत, तदा, इष्टाभेदग्रहविषयत्वस्य रजते प्रसिद्धतया पुरोवर्तिनि शुक्त्यादौ तदभाव [8]एव [9]कारणमिति अख्यातिवादिना प्रवृत्तिनिवृत्त्योस्ताटस्थ्यं वा स्वीकर्तव्यं, प्रवृत्तौ पक्षपाते [10]विशिष्टज्ञानस्य निवृत्तौ कारणत्वं वदता प्रवृत्तावपि वा तथैव स्वीकर्तव्यम्। [11]लाघवयुक्तेरुभयत्रापि तुल्यत्वात्।

अपि च येन विशिष्टज्ञानस्य कारणत्वमुच्यते तन्मते [12]एकमेव [13]कारणं, संसर्गविषयत्वकल्पनेनैवासंसर्गग्रहस्थरुप्यावृत्तिसिद्धेः। परेण तु प्रतिबन्धकाभावतया असंसर्गग्रहः [14]कारणान्तरं कल्पनीयमिति महत् गौरवम्।

---

1. **भ्रमस्थले इति** मन्मते इत्यादिः। इष्टभिन्ने पुरोवर्तिनि इत्यर्थः।

2. मु. 'पुरोवर्ति' नास्ति

3. **प्रमास्थले इति** त्वन्मते इत्यादिः। इष्टे पुरोवर्तिनि इत्यर्थः। इदंरजत-मिति प्रमास्थले रजतभेदग्रहाङ्गीकारे भ्रमज्ञानस्वीकारापत्तिः। न च प्रमास्थले विशिष्टज्ञानं प्रवृत्तौ कारणं भ्रमस्थले भेदाग्रहः इति नोक्तदोष इति शङ्क्यम्। अननुगमापत्तेः। कार्यवैलक्षण्यस्य अर्थसमाजसिद्धत्वसम्भवात् इति भावः।

4. मु. 'पुरोवर्ति' नास्ति

5. मु. 'तु' नास्ति

6. आ. 'तत्र' इत्यधिकम्

7. **प्रयोजक इति** प्रवृत्तौ इत्यादिः

8. मु. 'एव' नास्ति।

9. **कारणमिति** निवृत्तौ इत्यादिः

10. **विशिष्टज्ञानस्य**—इष्टभेदविशिष्टज्ञानस्य।

11 **लाघवयुक्ते** — भावाभावयोर्मध्ये भावस्यैव लघुत्वं इति पूर्वोक्तयुक्तेः।

12. **एकमेवेति**—भ्रमप्रमास्थलद्वयेऽपि इत्यादिः। प्रवृत्तौ इति शेषः।

13. आ. 'तत्' इत्यधिकम्।

14. **कारणान्तरं**—भ्रमस्थले प्रमास्थलीयकारणात् अन्यत्।

अपि च रङ्गरजतयोः 'इमे रजते' इत्यत्र अंशद्वये तुल्यतयोल्लेखेऽपि 'रङ्गांशे असंसर्गाग्रहः रजतांशे संसर्गग्रहः' इति वदता अनुभवानुसारः[1] परित्यक्तः। तत् 'अस्तु रजतांशेऽप्यसंसर्गाग्रहः, मास्तु च कुत्रापि विशिष्टज्ञानम्, अर्धजरतीयस्यान्याय्यत्वात्' इत्येव स्वीकर्तुं युक्तम्। अथ—न तथा युक्तम्, तथात्वे संवादिप्रवृत्तिरूपकार्यवैलक्षण्यं न स्यात्—इत्युच्यते, तदा प्राप्तं अपरमपि गौरवम्। विशिष्टज्ञानजन्यतायां प्रवृत्तित्वस्यैवावच्छेदकत्वसम्भवे[2] तत् परित्यज्य [3]संवादिप्रवृत्तित्वस्य तथात्वकल्पनात्, प्रवृत्तिमात्रे इष्टासंसर्गाग्रहः कारणं संवादिप्रवृत्तौ विशिष्टज्ञानं कारणमिति प्रकारद्वयकल्पनाच्च। मन्मते तु सर्वत्र प्रवृत्तित्वेन लघुना विशिष्टज्ञानत्वेन एकेनैव कार्यकारणभावग्रहात् नास्ति गौरवमिति स्पष्टमेव। प्रवृत्तौ संवादित्वं हि [4]इष्टफलसमर्थवस्तुविषयत्वम्, तच्च [5]अर्थसमाजग्रस्तमिति[6] न कार्यतावच्छेदककोटौ निवेशनीयम्। न चैवंसति भ्रमरूपं विशिष्टज्ञानं किञ्चित् कल्पनीयमिति तवापि गौरवमिति वाच्यम्। तस्य लाघवतर्कनिष्पन्नकार्यकारणभावग्रहमूलकतया [7]फलमुखत्वेनादोषत्वात्।

अपि च—निर्धूमे वह्निमति पर्वते जायमानायां वह्निविषयकसदनुमितौ यत्र 'वह्निव्याप्यधूमवान्' इति परामर्शः, तत्र परेण पक्षे धूमासंसर्गाग्रहविषयत्वाभाव एव

---

1. आ. 'तावत्' इत्यधिकम्।
2. आ. सम्भवेऽपि।
3. मु. संवादिविषयप्रवृत्तित्वस्य
4. आ. उद्दिष्टफल।
5. मु. अर्थसत्तासमाज

6. **अर्थसमाजग्रस्तं**—सामग्रीद्वयादिसमावेशप्रयुक्तम्। प्रवृत्तिसामग्री विशिष्टज्ञानम्। संवादित्वसामग्री प्रवृत्तिविषयनिष्ठ इष्टफलजनकतावच्छेदकधर्मवत्त्वादिकम्। तथा च नीलघटत्वादिवत् संवादिप्रवृत्तित्वं न कस्यचित्कार्यतावच्छेदकं इत्यर्थः।

7. **फलमुखत्वेन**—फलं प्रकृतकार्यकारणभावग्रहः, तदनन्तरभावित्वेन। **अदोषत्वात्**—प्रथमोत्पन्नकार्यकारणभावग्रहाप्रतिबन्धकत्वात्। न हि पश्चादुत्पद्यमानं गौरवज्ञानं प्रथमस्योत्पत्तौ प्रतिबन्धकं भवति। प्रथमस्योत्पत्तिसमये तस्य अलब्धस्वरूपत्वात् इत्यर्थः। न च गौरवज्ञानानन्तरं प्रथमोत्पन्नेऽप्रमात्वनिश्चयात् तत् त्यज्यते इति वाच्यम्। तथासति प्रथमगृहीतायाः कार्यान्विते शक्तेः पश्चात् सिद्धार्थे दर्शनात् त्यागापत्तेः, न चैतत्तवेष्टं इति भावः।

कारणं वाच्यमिति अनुमितिमात्रे हेतोः पक्षासंसर्गाग्रह एव कारणत्वेन स्वीकर्तव्यः । वैरूप्यकल्पनाया अनुचितत्वात् । तथा च 'इदं रजतं' इति भ्रमस्थले इष्टसाधनताव्याप्यरजतत्वासंसर्गाग्रहस्य इदमंशे सम्पन्नतया कारणानुसारेण 'इदमिष्टसाधनं' इति भ्रमरूपानुमितिः केन वारयितुं शक्या । प्रत्यक्ष इव अनुमितावर्थसत्ताया अनपेक्षितत्वात्, अन्यथा भूतभविष्यतोरनुमितिर्न स्यात् । एवं रजतत्वांशे असंसर्गाग्रहवादिनोऽपि इष्टसाधनतांशे भ्रमरूपविशिष्टज्ञानं [1]गलग्रहन्यायेन प्राप्नोत्येव, तत् किमादावेवपलायनेनेति रजतत्वांशेऽपि तदस्तु ।

अपि[2] च सत्यरजतस्थले 'नेदं रजतं' इति ज्ञानस्य न रजतासंसर्गविषयत्वं वक्तुं शक्यत इति तत्रापीष्टासंसर्गाग्रहस्य सत्त्वात् प्रवर्तेत ।

अथ स्वातन्त्र्यं तत्र नास्ति, तच्च भेदप्रतियोगित्वेनानुपस्थितत्वम्; तत्र वक्तव्यम्—[3]किं तत् पृथग्भूतं कारणं उत इष्टविशेषणतया असंसर्गाग्रहे स्वीक्रियते ? तत्र न तावद्द्वितीयः । 'नेदं रजतं' इति भ्रमस्थले भेदप्रतियोगित्वेनानुपस्थितेष्टभेदाग्रहस्य द्वितीयपक्षेपर्यवसितस्य कारणस्य [4]विद्यमानत्वात् । अयं हि विशिष्टाभावो 'नेदं रजतं' इति भ्रमस्थले इष्टभेदाग्रहरूपस्य विशेष्यस्य अभावमादाय, इष्टस्य भेदप्रतियोगित्वेन उपस्थिततया भेदप्रतियोगित्वेनानुपस्थितत्वरूपविशेषणाभावमादाय च सिद्ध्यतीति, यदर्थं विवक्षितं तत् न सिद्ध्यति । अपि च [5]एतद्विवक्षाभावे नेदंरजतमिति प्रमास्थले प्रवृत्तिर्न प्रसज्यते । भेदग्रहस्य सत्त्वेन तदभावस्याभावात् । विवक्षायां तु तत्र विशेष्यसत्त्वेऽपि भेदप्रतियोगित्वेनोपस्थिततया विशेषणाभावमादाय विशिष्टाभावः सिद्ध्यतीति तत्रापि प्रवृत्तिः प्रसज्यत एव । किं बहुना, भेदप्रतियोगित्वेनानुपस्थितेष्टभेदग्रहस्य प्रतियोगिनोऽप्रसिद्ध्या तदभाव एव न प्रसिद्ध्यति । इष्ट-

---

1. **गलग्रहन्यायेन**—अनिच्छतोऽपि बलात्कारेण ।

2. **अपि चेत्यादि** रजते 'नेदं रजतं' इति भ्रमस्थले अन्यथाख्यातिस्वीकारापत्तिभिया 'इदं' इति 'न रजतं' इति ज्ञानद्वयस्य त्वया स्वीकर्तव्यत्वेन पुरोवर्तिनि इष्टभेदाग्रहसत्त्वं इति भावः ।

3. मु. 'किं' नास्ति

4. **विद्यमानत्वादिति** पुरोवर्तिनि प्रवृत्त्यापत्तिरूपस्य पूर्वोक्तदोषस्य तादवस्थ्यात् इति शेषः । दोषतादवस्थ्यमुपपादयति—**अयं हि** इत्यादिना ।

5. **एतद्विवक्षाभावे इति** पूर्वोक्तं स्वातन्त्र्यं एतच्छब्दार्थः ।

भेदग्रहस्थले इष्टस्य भेदप्रतियोगित्वेन उपस्थितिनियमात् तथानुपस्थितेष्टभेदग्रहस्य[1] दुस्सम्पादत्वात् प्रतियोग्यप्रसिद्ध्या तदभावाप्रसिद्धौ तादृशविशिष्टाभावस्य कारणत्वं दूरोत्सारितमिति न द्वितीयकल्पः सङ्गच्छते ।

अथ इष्टभेदाग्रह एकं कारणं इष्टस्य भेदप्रतियोगित्वेनानुपस्थितत्वमपरं कारणं इत्याद्यः पक्षः स्वीक्रियते, तदा गौरवं तावत् स्पष्टमेव । 'इदं रजतं घटनिष्ठभेदप्रतियोगि' इति ज्ञाने च प्रवृत्तिर्न स्यात् । भेदप्रतियोगित्वेनोपस्थित-तया तदभावस्याभावात् ।

अथ—[2]पुरोवर्ति[3]गृह्यमाणसंसर्गकभेदप्रतियोगित्वेनानुपस्थितत्वम् । 'इदं रजतं घटनिष्ठभेदप्रतियोगि' इत्यत्र तु [4]घटगृह्यमाणसंसर्गकभेदप्रतियोगित्वेन उपस्थितावपि पुरोवर्तिगृह्यमाणसंसर्गकभेदप्रतियोगित्वेन [5]अनुपस्थितत्वमस्ति । अतो नानुपपत्तिरिति चेत्, न–तथा सति 'नेदं रजतं' इति भ्रमस्थले अख्यातिवादिना[6] भेदे पुरोवर्तिगृह्यमाणसंसर्गकत्वस्य [7]वक्तुमशक्यतया, भेदप्रतियोगित्वेनोपस्थिति-रूपस्य विशेष्यस्य[8]सत्त्वेन केवलाभावस्य वक्तुं अशक्यत्वेपि पुरोवर्तिगृह्यमाण-संसर्गकत्वरूपविशेषणाभावमादाय विशिष्टाभावः प्राप्नोतीति तत्र प्रसज्यत एव प्रवृत्तिः ।

[9]अथ—[10]पुरोवर्त्यगृहीतासंसर्गकभेदप्रतियोगित्वेनानुपस्थितत्वम् । तच्च

---

1. मु. भेदाग्रहस्य

2. **पुरोवर्तिगृह्यमाणसंसर्गकेति** स्वातन्त्र्यं इत्यादिः, गृह्यमाणपुरोवर्तिसंसर्गके-त्यर्थः । एवं घटगृह्यमाणसंसर्गकेत्यस्याप्यर्थः । एवं उत्तरत्राप्यर्थो बोध्यः ।

3. आ. पुरोवर्तिनिगृह्य० । एवमुत्तरत्रापि ।

4. आ. घटे गृह्य

5. मु. नोपस्थित

6. मु. वादिनो

7. **वक्तुमशक्यतयेति** अयथार्थज्ञानस्वीकारापत्तिभिया इत्यादिः ।

8. मु. सत्त्वे

9. **अथेति** स्वातन्त्र्यमितिशेषः ।

10. आ. पुरोवर्तिन्यगृही

'नेदं रजतं इति भ्रमेऽपि न सम्भवत्येव । [1]तत्र हि यथा पुरोवर्तिगृहीतसंसर्गको न भवति भेदः, तथा पुरोवर्तिगृहीतासंसर्गकोऽपि न भवति । ततश्च [2]पुरोवर्त्यगृहीता-संसर्गकभेदप्रतियोगित्वेनोपस्थितत्वात् रजतस्य [3]अनुपस्थितत्वरूपस्वातन्त्र्यं तत्र नास्तीति न प्रवृत्तिः । [4]'इदं रजतं[5] घटनिष्ठभेदप्रतियोगि' इत्यत्र तु रजतभेद-संसर्गाभावरूपस्य रजताभेदस्य पुरोवर्तिनि गृहीततया पुरोवर्तिन्यगृहीतासंसर्गको न भवति रजतभेद इति, भेदप्रतियोगित्वेनोपस्थितिरूपविशेष्यस्य सत्त्वेन केवलाभावस्य वक्तुमशक्यत्वेऽपि पुरोवर्त्यगृहीतासंसर्गकभेदप्रतियोगित्वेनोपस्थितिरूपस्य विशिष्टस्य प्रतियोगिनोऽभावःसंभवतीति न तत्र प्रवृत्त्यनुपपत्तिरिति चेत्—न—[6]परमते यथा 'इदं' 'न रजतं' इति अधिकरणसंसर्गग्रहं विना सप्रतियोगिकभेदग्रहरूपो ऽसंसर्गाग्रहः, एवं 'इदं न' 'रजतं' इति प्रतियोगिसंसर्गग्रहं विना साधिकरणक-भेदग्रहरूपोऽसंसर्गाग्रहस्संभवतीति तत्र प्रवृत्तिः स्यात् । स्वातन्त्र्यस्य तत्रापि सम्भवात् । तत्र हि पुरोवर्तिन्यधिकरणे गृहीतसंसर्गत्वेन [7]पुरोवर्त्यगृहीतासंसर्गको भवति भेदः । रजते च तत्प्रतियोगित्वस्याग्रहात् पुरोवर्त्यगृहीतासंसर्गकभेदप्रति-योगित्वेनानुपस्थितत्वमस्तीति ।

अथ - भेदप्रतियोगित्वेनानुपस्थितत्वमित्यनेन भेदप्रतियोगित्वासंसर्गाग्रहाभावो विवक्षितः । एवं च निष्प्रतियोगिकोपस्थितिस्थले यथा रजते भेदप्रतियोगित्वसंसर्ग-ग्रहो नास्ति एवं भेदप्रतियोगित्वासंसर्गग्रहोऽपि नास्तीति तत्र भेदप्रतियोगित्वा-

---

1. **तत्रहियथेति** अख्यातिवादे हि अयथार्थज्ञानाङ्गीकारापत्तिभिया 'नेदंरजतं' इति भ्रमस्थले 'इदं' इति 'न रजतं' इति ज्ञानद्वयाङ्गीकारात् तेन पुरोवर्तिनि रजतभेद-संसर्गस्य रजतभेदासंसर्गस्य वा न ग्रहणं इति भावः ।

2. आ. पुरोवर्तिन्यगृही

3. **अनुपस्थितत्वरूपेति** पुरोवर्त्यगृहीतासंसर्गकभेदप्रतियोगित्वेनानुपस्थितत्व-रूपेत्यर्थः ।

4. मु. 'इदं' नास्ति

5. **इदं रजतमिति** रजतं इदमर्थः । 'इदं रजतं घटनिष्ठभेदप्रतियोगि' इति विशिष्टज्ञानमिदं अख्यातिवादेऽपि ।

6. **परमते यथेति** नेदं रजतमिति भ्रमस्थले इति शेषः । अख्यातिवादे चात्र ज्ञानद्वयमिति न विस्मर्तव्यम् ।

7. मु. पुरोवर्तिन्यगृही०

संसर्गाग्रहस्य विद्यमानतया तदभावो नास्तीति न तत्र स्वातन्त्र्यम् । 'इदं रजतं घटनिष्ठभेदप्रतियोगि' [1]इत्यत्र भेदप्रतियोगित्वसंसर्गग्रहसत्त्वेन[2] तदसंसर्गाग्रहाभावो यद्यपि न विद्यते, तथापि भेदे पुरोवर्त्यगृहीतासंसर्गकत्वं नास्तीति पुरोवर्त्यगृहीतासंसर्गकभेदप्रतियोगित्वासंसर्गाग्रहाभावरूपं स्वातन्त्र्यं तत्र संभवतीति न काचिदनुपपत्तिरिति चेत्, न—एवमपि '[3]इदं रजतं घटनिष्ठभेदप्रतियोगि' इति भ्रमस्थले अभेदग्रहस्य[4] वक्तुमशक्यतया पुरोवर्त्यगृहीतासंसर्गको भवति भेदः, तत्प्रतियोगित्वेनोपस्थिते रजते प्रतियोगित्वासंसर्गाग्रहोऽपि[5] विद्यत इति विशेषणविशेष्ययोरुभयोरपि सत्त्वात् न विशिष्टाभावरूपं स्वातन्त्र्यं सम्भवतीति तत्र प्रवृत्तिर्न स्यात् ।

अपि च रङ्गरजतयोः 'इदं रजतं नेदं' इति विपरीतभ्रमस्थले रङ्गे प्रवृत्तिर्नस्यात् । [6]तत्र पुरोवर्तिनि रङ्गे अगृहीतासंसर्गको भवति रजतभेदः, तत्प्रतियोगित्वेन च रजतस्योपस्थितत्वात् पुरोवर्त्यगृहीतासंसर्गकभेदप्रतियोगित्वासंसर्गाग्रह एव विद्यत इति न तदभावरूपं स्वातन्त्र्यं सम्भवतीति ।

किं बहुना, 'इदं रजतं' इति प्रसिद्धभ्रमस्थलेऽपि नोक्तस्वातन्त्र्यसम्भवः । तत्र पुरोवर्तिन्यां शुक्तौ अगृहीतासंसर्गकभेदस्य[7] रजते प्रतियोगित्वं यथा न गृह्यते तथा प्रतियोगित्वासंसर्गोऽपि न गृह्यत इति पुरोवर्त्यगृहीतासंसर्गकभेदप्रतियोगित्वासंसर्गाग्रहसत्त्वात् न तदभावरूपं स्वातन्त्र्यं सम्भवतीति तत्रापि प्रवृत्तिर्न स्यात् ।

यच्चोक्तं क्वचित् ज्ञानस्याप्रामाण्ये सर्वत्रापि प्रामाण्यसंशयापत्त्या निष्कम्प-

---

1. **इत्यत्रेति**—प्रमास्थले रजते इति शेषः ।

2. मु. ०त्वेनासंसर्गा०

3. **'इदं रजतं घटनिष्ठभेदप्रयोगि' इतिभ्रमस्थले इति** अत्र इदमर्थो वस्तुतः शुक्तिः । अत्र च ज्ञानद्वयमख्यातिवादे 'इदं' इति ग्रहणं 'घटनिष्ठभेदप्रतियोगि रजतं' इति स्मरणं घटनिष्ठभेदप्रतियोगित्वविशिष्टरजतविषयकम् ।

4 **अभेदग्रहस्य**—पुरोवर्तिनि रजतभेदसंसर्गाभावरूपाभेदग्रहस्य । मिथ्याज्ञानस्वीकारप्रसङ्गेनेत्यादिः ।

5. मु. 'अपि' नास्ति ।

6. आ. तत्र हि

7. आ. रजतभेदस्य

प्रवृत्तिर्न स्यादिति, तन्न–परस्यापि [1]हि क्वचिद्विद्यमानासंसर्गाग्रहाङ्गीकारे सर्वत्रापि तत्संशयापत्त्या निष्कम्पप्रवृत्तिर्न स्यादिति तुल्यम् । अतः परेणापि निष्कम्पप्रवृत्ति-रित्थमुपपादनीया ।

तत्र यदि परतस्त्ववाद आश्रीयते, तदा तदनुसारेण ।

स च वाद इत्थं–तद्वति तत्प्रकारकज्ञानत्वं[2] प्रामाण्यम्[3] । इदं च सर्वेषामपि सम्प्रतिपन्नम् । यद्यपि सिद्धान्ते इदं शुक्तिरजतज्ञानसाधारणम्, तदप्रामाण्यं[4] चाभ्यु-पगम्यते ; तथाप्यनेनोपाधिना सिद्धान्ते तत् प्रमाणमेव उपगम्यते । प्रवृत्तावपि [5]तावदेवोपयुज्यते । तज्ज्ञानेनैव[6] तदभाववत्ताज्ञानप्रतिबन्धसम्भवात् । अप्रामाण्या-भ्युपगमस्तु बाध्यत्वाभिप्रायेण । परतस्त्वमते च न प्रामाण्यज्ञानं प्रवृत्तौ कारणं शक्यते वक्तुम् । अनवस्थापातात् । तथा हि-प्राथमिकानुव्यवसायेन प्रामाण्यघटकी भूतस्तद्वत्तांशो न गृह्यते [7]अनभ्यासदशापन्नजलादिज्ञाने प्रामाण्यसंशयानुसारात् । घटकाज्ञाने तद्घटितं प्रामाण्यमपि न गृह्यते । किन्तु समीपोपसर्पणानन्तरं वह्नित्व-प्रकारकज्ञानविषयीभूते दाहादिसामर्थ्योपलम्भे 'इदं ज्ञानं दाहसमर्थे वह्नित्वप्रकारकं' इति प्रतीते तेन विशिष्टेन धर्मेणानुमीयते[8] । एवं यथासम्भवं तत्रतत्रान्येऽप्युपाया-स्सम्भवन्तीति अभ्युपगमः । तत्र यदि प्रवृत्तिप्रतिबन्धकीभूताप्रामाण्यप्रतीतिविघट-

---

1. मु. 'हि' नास्ति

2. आ. ज्ञानं

3. आ. प्रमाणम्

4. आ. तदप्रमाणं

5. **तावदेवेति**—एवेन अबाध्यत्वव्यावृत्तिः ।

6. **तज्ज्ञानेनैवेति** तद्वत्त्वं तच्छब्दार्थः ।

7. **अनभ्यासदशापन्नेति** प्राथमिकेत्यर्थः । अभ्यासो हि नाम पुनः पुनः प्रयोगः क्रियाभ्यावृत्तिः, विषयस्य चाभ्यस्तता भूयोभूयः प्रवृत्तिः, तद्दशायां न प्रमात्व-संशयः, यथा स्वशरीरग्रहे निजगृहकुड्यस्तम्भादिप्रतिभासे वा सहस्रकृत्वः प्रवृत्ति-संवादज्ञानबलात् न प्रमात्वसंशयः-इति जयन्तभट्टः । तथा च, अभ्यासः—घटवत्तादि ज्ञानानन्तरं साफलप्रवृत्तेः पौनःपुन्यम्, तस्मिन् सति या दशा–पूर्वजातज्ञाने प्रामाण्य-व्याप्यसफलप्रवृत्तिजनकत्वज्ञानसाहित्यं, तद्विशिष्टभिन्नेत्यर्थः ।

8. **अनुमीयते इति** प्रामाण्यमिति शेषः । इदं वह्निज्ञानं प्रमा, दाहसमर्थविशे-ष्यकत्वविशिष्टवह्नित्वप्रकारकत्वात्, यन्नैवं तन्नैवं यथा अप्रमा-इत्यनुमानाकारः ।

कतया[1] प्रामाण्यज्ञानस्य कारणत्वमभ्युपगम्येत, तदा प्रामाण्यग्रहकारणीभूतलिङ्ग-ज्ञानेऽपि अप्रामाण्यज्ञानस्य प्रामाण्यानुमितिप्रतिबन्धकत्वात् तदनुमितौ लिङ्गज्ञान-प्रामाण्यज्ञानमपि कारणं भवेत् । एवं [2]तत्तत्प्रामाण्यानुमितौ तत्तल्लिङ्गज्ञानप्रामाण्य-[3]ज्ञानं इत्यनवस्था । अतोऽप्रामाण्यज्ञानाभाव एव प्रवृत्तौ कारणम् । स च क्वचि-त्स्वारसिकः[4] । यत्र त्वप्रामाण्यज्ञानं केनचित्कारणेनावतरति तत्र प्रामाण्यज्ञाने यत्नानुसरणमिति सर्वत्र प्रामाण्यज्ञानानपेक्षणात् नानवस्था । एवं यदि—त्वयाप्युत्पन्ने ज्ञाने यत्र स्वारसिकः असंसर्गाग्रहत्वज्ञानाभावः, तत्र तावतैव प्रवृत्तिः, यत्र तु दोष-सहकृतसामग्रीजन्यत्वज्ञानेनासंसर्गाग्रहत्वज्ञानं तत्र [5]यत्नान्तरानुसरणमिति [6]प्रवृत्तौ प्रामाण्यज्ञानस्य कारणत्वं परित्यज्य उच्यते ; तदन्यस्यापि[7] तुल्यम् ।

यदि च भावाभावयोर्मध्ये भावस्यैव लघुत्वात् अप्रामाण्यज्ञानविघटकतया प्रामाण्यज्ञानस्यैव प्रवृत्तौ कारणत्वमुच्यते, तदा तु प्रामाण्यस्य स्वतस्त्वं अनवस्था-परिहारायाभ्युपेयम् ।

तदित्थं—ज्ञानस्य स्वप्रकाशत्वे अस्वप्रकाशत्वे वा यत्र सविषयकं ज्ञानं भासते तत्र सर्वत्र तद्गतं प्रामाण्यं [8]भासत एवेति उत्सर्गः । परतस्त्ववादिनाऽपि हि वह्निज्ञाने भासमाने वह्नित्वप्रकारकत्वं तज्ज्ञाने यद्विशेष्यं तद्विशेष्यकत्वं च भासत इति अभ्युपगतमेव, प्रकारविशेष्ययोः परं वैशिष्ट्यमात्रं न भासत इत्युच्यते । तन्निर्बन्धमात्रम् । योग्यस्य[9] अभानकल्पनाया विरुद्धत्वात् । अयोग्यत्वे च कदापि

---

1. **अप्रामाण्यप्रतीतिविघटकतयेति** प्रामाण्यज्ञानस्य कारणत्वसंभावनायां युक्तिमात्रमिदम्, न तु अप्रामाण्यप्रतीतिविघटनद्वारा प्रामाण्यज्ञानस्य कारणत्ववर्णने तात्पर्यम् । तथा सति अप्रामाण्यप्रतीतिविरहस्थले प्रामाण्यज्ञानस्य अनपेक्षाप्रसङ्गात् । तथा च अप्रामाण्यप्रतीत्यभावप्रयोजकतयेति तदर्थः ।

2. मु. तत्र तत्र प्रामा०　　3. मु. ज्ञानमपि

4. **स्वारसिकः** स्वप्रतियोग्युत्पत्तिकारणाभावप्रयुक्तः ।

5. मु. यत्नान्तरमनुसरणीयम्

6. **प्रवृत्तौ प्रामाण्यज्ञानस्य कारणत्वं परित्यज्येति** उक्तपरित्याग एव पूर्वोक्तं प्रामाण्यपरतस्त्ववादानुसरणम् ।

7. **अन्यस्यापि**–भ्रमस्थले विशिष्टज्ञानाङ्गीकर्तुरपि　　8. मु. गृह्यत एव

9. **योग्यस्येति** ज्ञानत्वमिव प्रमात्वमपि योग्यमिति भावः ।

न भासेतेति प्रामाण्यग्रह एव लुप्तो भवेत् । न चैवं जलादिज्ञाने प्रामाण्यसंशयो न स्यादिति वाच्यम् । यथा दोषवशात् योग्यत्वेऽपि स्थाणुत्वांशे निश्चयो न भवति एवं प्रामाण्यांशेऽपि सम्भवात् । एवं च सति चक्षुरुन्मीलनानन्तरं 'इदं जलं जलत्वेन जानामि'इति व्यवहारोऽपि सङ्गच्छते । अत्र हि जले जलत्ववैशिष्ट्यं ज्ञाने च जलविशेष्यकत्वे सति जलत्वप्रकारकत्वं च व्यवह्रियते । इदमेव च जलज्ञानस्य प्रामाण्यम् । स्वतःप्रामाण्यानभ्युपगमे च अयं व्यवहारो न स्यात् ।

अपि च तदनभ्युपगमे अनुमानेनापि तत् ग्रहीतुं न शक्यते । तत्र लिङ्गानिरूपणात् । न च 'इदं वह्निज्ञानं प्रमाणं, दाहसमर्थे वह्न्यर्थिप्रवृत्तिजनकत्वात्' इत्येवंरूपं अनुमानं सम्भवतीति वाच्यम् । एवमपि ज्योतिष्टोमादिवाक्यजन्यज्ञाने प्रामाण्यानुमितौ तादृशं लिङ्गं न सम्भवति । एतादृशलिङ्गज्ञानं हि प्रवृत्त्यनन्तरं यत्र फलजननसामर्थ्योपलम्भः तत्रैव । ज्योतिष्टोमादिवाक्ये तु प्रवृत्तेः प्रागेव प्रामाण्यनिर्धारणमपेक्षितम्, अन्यथा निष्कम्पप्रवृत्त्यनुपपत्तेः ।

नापि गुणजन्यत्वलिङ्गकानुमानं सम्भवति, प्रमाया गुणजन्यत्वस्यैवासम्प्रतिपत्तेः । तत्र गुणशब्देन किं चक्षुर्गतं रूपं विवक्षितं, उत भूयोऽवयवेन्द्रियसन्निकर्षः, [1]स्थूलावयवसन्निकर्षो वा, यावद्विषयेन्द्रियसन्निकर्षो वा, विशेषणवद्विशेष्येन्द्रियसन्निकर्षो वा, अर्थयथार्थज्ञानं[2] वा ।

तत्र न तावच्चक्षूरूपं तथा सम्भवति । तस्य हि चाक्षुषप्रमायां गुणत्वं वक्तव्यम् । तत्तु न सम्भवति, तस्यास्तज्जन्यत्वे प्रमाणाभावात् । न च व्यञ्जकतेजोरूपत्वेन आलोकरूपवत् तस्य जनकत्वमिति वाच्यम् । उद्भूतस्यैव तथाविधस्य जनकत्वात् । चक्षूरूपस्य चानुद्भूतत्वात् । उद्भूतानुद्भूतसाधारण्येन लाघवाद्व्यञ्जकरूपत्वेनैव जनकत्वेऽपि तादृशगुणजन्यत्वस्य सर्वप्रमासाधारण्यं[3] न सम्भवति ।

---

1. मु. स्थूलावयवि

2. मु. याथार्थ्यज्ञानं

3. **सर्वप्रमासाधारण्यं न सम्भवतीति** चाक्षुषप्रमाभिन्न-प्रमासु कारणत्वाभावात् इति भावः । 'प्रमाऽसाधारण्यं न सम्भवति' इति पाठे चक्षुषेव चक्षुरूपेणापिजन्यताया भ्रमसाधारणत्वादिति भावः ।

अत एव भूयोऽवयवेन्द्रियसन्निकर्षोपि[1] न गुणः । तस्य स्थूलावयविप्रत्यक्ष-प्रमायां कारणत्वेऽपि सर्वत्र तज्जन्यत्वस्य प्रामाण्यानुमितिलिङ्गत्वासम्भवात् । न च तस्यामपि तस्य कारणत्वम् । भूयोऽवयवेन्द्रियसन्निकर्षाभावेऽपि यत्किञ्चित्प्रदेशे सन्निकर्षमात्रेण तदवच्छेदेन स्थूलावयविप्रत्यक्षदर्शनात् । न च सर्वावयवावच्छेदेन स्थूलावयविप्रत्यक्षप्रमायां स कारणमिति वाच्यम् । यदवयवावच्छेदेन यत्र सन्निकर्षः तदवयवावच्छेदेन तस्य प्रत्यक्षत्वमिति [2]विशेषकारणादेवोपपत्तौ पृथक्कारणकल्पनायाः[3] अयोगात् ।

नापि स्थूलावयवावच्छेदेन सन्निकर्षः स्थूलावयविप्रत्यक्षप्रमायां गुणः । [4]द्व्यणुकाद्यवच्छेदेन सन्निकर्षे भ्रमस्याप्यनुदयेन[5] तस्य प्रमायां असाधारणकारणरूप-गुणत्वानुपपत्तेः ।

नापि यावद्विषयेन्द्रियसन्निकर्षो गुणः । तस्यापि भ्रमसाधारणत्वेन प्रमां प्रत्यसाधारणकारणगुणत्वानुपपत्तेः । [6]न हि यावद्विषयेन्द्रियसन्निकर्षं विना परमते भ्रमोऽपि सम्भवति । यदि तु दोषवशात् असन्निकृष्टस्यैव रजतादेर्भानं सम्भवती-त्युच्यते, तदा निधिशास्त्रोक्ताञ्जनादिवशात् असन्निकृष्टस्यैव निधेर्भानं सम्भवतीति यावद्विषयसन्निकर्षः प्रमायामपि गुणो न स्यात् ।

न च विशेषणवद्विशेष्येन्द्रियसन्निकर्षो गुणः । 'लोहितःस्फटिकः' इति [7]भ्रमेऽपि हि परम्परासम्बन्धेन विशेषणवतो विशेष्यस्य सन्निकर्षोऽस्तीति [8]अस्यापि

---

1. मु. 'अपि' नास्ति

2. **विशेषकारणादेवेति** तत्तत्प्रदेशप्रत्यक्षमात्रार्थं उक्तविशेषकारणस्य आवश्य-कत्वात् इति भावः ।

3. मु. कारणत्वकल्पनायाः

4. **द्व्यणुकाद्यवच्छेदेनेति** स्थूलावयविनि इत्यादिः । द्व्यणुकस्य सूक्ष्मावयव-त्वात् इति भावः । परमाणुः आदिशब्दार्थः ।

5. **भ्रमस्याप्यनुदयेनेति** भ्रमं प्रत्यपि स्थूलावयवावच्छेदेन सन्निकर्षस्य कारण-तया इति शेषः ।

6. **नहीति** असन्निकृष्टभाने अतिप्रसङ्गेन शुक्तिरजतादिष्वपि संस्कारस्य स्मृतेर्वा सन्निकर्षत्वस्य परैः अभ्युपेयत्वात् इति भावः ।

7. **भ्रमेऽपीति** लौहित्यस्य साक्षात्सम्बन्धावगाहिनि इत्यादिः ।

8. मु. तस्यापि

न प्रमां प्रति असाधारण्यम् । न च येन सम्बन्धेन विशेषणवत्तावगाहि ज्ञानं तेन सम्बन्धेन विशेषणवद्विशेष्येन्द्रियसन्निकर्षो न भ्रमसाधारण इति वाच्यम् । यत्तत्पद-घटितत्वेनाननुगतस्य [1]अनुगतधर्मावच्छिन्नकार्यप्रयोजकत्वासम्भवात्, परेण यावद्विष-येन्द्रियसन्निकर्षस्य विशेषणवद्विशेष्यसन्निकर्षस्य च प्रत्यक्षप्रमायामेव गुणत्वाङ्गीकारेण [2]असार्वत्रिकत्वाच्च ।

नापि प्रमामात्रे अर्थयथार्थज्ञानं कारणम् । घटादिप्रमायां व्यभिचारेण[3] तस्य कारणत्वानुपपत्तेः । यदि तु—वक्तृवाक्यार्थयथार्थज्ञानस्य शाब्दप्रमायां कारण-त्वात् 'यद्विशेषयोः कार्यकारणभावः बाधकं विना तत्सामान्ययोरपि'[4] इति न्यायेन प्रमामात्रेऽर्थयथार्थज्ञानस्य कारणत्वं कल्प्यते, यत्र चास्मदीयं तादृशं ज्ञानं न सम्भवति तत्रेश्वरीयं तत् स्वीक्रियते—इत्युच्यते तदा शाब्दभ्रमे वक्तृवाक्यार्थ-भ्रमस्यापि [5]कारणत्वदर्शनात् यद्विशेषयोरिति न्यायात् भ्रममात्रे प्रति भ्रमस्य कारणत्वं प्रकल्प्य यत्रास्मदीयभ्रमो न सम्भवति तत्रेश्वरभ्रमस्य कारणत्वं कल्प्यत इति ईश्वरे भ्रमोऽपि सिध्येत् । ननु—तदभाववति तत्प्रकारकं ज्ञानं भ्रमः, तद-पेक्षया तदभाववज्ज्ञानं लघु । तदेव भ्रमे [6]कारणमस्तु । तदाश्रयतायां चेश्वरस्य न कोऽपि विरोधः । एवं च सति प्रमायामपि तद्वत्ताज्ञानमेव कारणमस्त्विति आपाद-नन्तु नानिष्टम् । तावताऽपि प्रमाया गुणजन्यत्वसिद्धेः [7]तदाश्रयतया ईश्वरसिद्धेश्च—

---

1. **अनुगतधर्मः**—प्रमात्वम् । न च कार्यतावच्छेदकं तद्वति तत्प्रकारकत्वरूपं प्रमात्वमपि अननुगतसम्बन्धघटिततद्वत्त्वघटितत्वात् अननुगतमेवेति शङ्क्यम् । सम-वायेन घटत्ववति समवायेन घटत्वप्रकारकत्वस्य सर्वघटप्रमाऽनुगतत्वात्, उक्तसन्नि-कर्षरूपगुणस्य विशेष्यव्यक्तिभेदेन भिन्नत्वात् इति भावः । मु. धर्मावच्छेदेन

2. आ. तस्यासार्व०

3. **व्यभिचारेणेति**—घटादिप्रत्यक्षप्रमातः पूर्वं घटप्रमायाः सत्त्वनियमादर्श-नादिति भावः ।

4. मु. 'अपि' नास्ति

5. मु. कारणत्वकल्पनात्

6. **कारणमस्त्विति**—धर्मिज्ञानरूपस्य तस्य सर्वत्र भ्रमात्पूर्वं सुलभत्वात् इति भावः ।

7. **तदाश्रयतयेति**—तद्वत्ताज्ञानरूपो गुणः तच्छब्दार्थः ।

इति चेत्, न—तदभाववज्ज्ञानस्य[1] विशेषणविषयस्य[2] प्रमायामपि कारणतया तदभाववज्ज्ञानत्वेन भ्रमासाधारणकारणत्वानुपपत्तेः । न च तदभाववद्विशेष्यकज्ञानं भ्रमे कारणम् । विशेषणज्ञानस्यापि प्रमाप्राचीनस्य रजतमित्येवंरूपस्य रजताभाववद्विशेष्यकत्वात् । नापि [3]तदभाववद्भ्रमविशेष्यविशेष्यकज्ञानं कारणम् । तदपेक्षया भ्रमत्वस्यैव लघुतया[4] कारणतावच्छेदकत्वसम्भवे न तद्घटितं गुरु कारणतावच्छेदकमुपेयम् । अतो यद्विशेषयोरितिन्यायेन प्रमामात्रे यथार्थज्ञानं कारणं वक्तुं न शक्यत इति न गुणजन्यत्वलिङ्गकानुमानं सम्भवति ।

ननु—पित्तादिदोषे न श्वैत्यादिप्रमा तदभावे तत्प्रमा इत्यन्वयतिरेकाभ्यां पित्तदोषस्य तत्प्रमाप्रतिबन्धकत्वं तदभावस्य कारणत्वं च तस्यामुपेयम् । एवमन्यत्रापि यथायथं दोषतदभावयोः [5]प्रमाप्रतिबन्धकत्वं कारणत्वं चाभ्युपेयमिति दोषाभावजन्यत्वलिङ्गकमनुमानं सम्भवतीति चेत्—न—दोषस्य प्रतिबन्धकत्वेऽपि तदभावस्य कारणत्वासम्भवात् । न हि कारणीभूताभावप्रतियोगित्वं प्रतिबन्धकत्वम् । किं तु सत्यां सामग्र्यां कार्यानुत्पादप्रयोजकत्वम् । इतरथा व्यभिचारादिज्ञानानां [6]अनुमितिप्रतिबन्धकत्वाभावप्रसङ्गात् । अव्यभिचारज्ञानस्यैव तद्विरोधिनः अनुमितौ कारणत्वाभ्युपगमेन व्यभिचारज्ञानाभावस्य प्रतिबन्धकाभावत्वेऽपि कारणत्वानङ्गीकारात् ।

अत एव उत्पत्तावपि परतस्त्वं परास्तम् । भ्रमप्रमासाधारणज्ञानसामग्रीतोऽधिकसामग्रीजन्यत्वमेव प्रमायाः परतस्त्वम् । सा चाधिका सामग्री गुणो वा दोषाभावो

---

1. **तदभाववज्ज्ञानस्येति**—वस्तुतो यः तदभाववान् तज्ज्ञानस्येत्यर्थः । तदभाववत्त्वेन ज्ञानन्तु भ्रमविरोधित्वात् न भ्रमकारणं इति भावः ।

2. **विशेषणविषयस्य**—'घटवद्भूतलं' इत्यत्र विशेणीभूतघटादिविषयकस्य ।

3. **तदभाववद्भ्रमविशेष्येति**—तदभाववत् यत् भ्रमविशेष्यं तदित्यर्थः ।

4. **लघुतयेति**—भ्रमविशेष्यस्य आरोप्याभाववत्त्वनियमात् तदभाववत्त्वविशेषणं व्यर्थम्, भ्रमविशेष्यविशेष्यकज्ञानत्वन्तु भ्रमत्वापेक्षया गुरु इति भावः ।

5. मु. तत्तत्प्रमाप्रति०

6. **अनुमितिप्रतिबन्धकत्वाभावप्रसङ्गादिति**—'विरोध्यविषयकज्ञानस्य प्रतिबन्धकत्वं जनकज्ञानविघटकत्वेनैव' इति वदतां नैयायिकानां कारणीभूताभावप्रतियोगित्वेनानभ्युपगतस्यापि प्रतिबन्धकत्वव्यवहारस्येष्टत्वेन न इष्टापत्तिसम्भव इति भावः ।

**अन्ये तु यत्र यदध्यासः तस्यैव विपरीतधर्मत्वकल्पनामाचक्षते - इति। सर्वथापि त्वन्यस्यान्यधर्मावभासतां न व्यभिचरति। तथाच लोकेऽनुभवः—शुक्तिका हि रजतवदवभासते, एकश्चन्द्रः सद्वितीयवत् - इति।**

वेति ते वदन्ति, तच्चोक्तगत्या न सम्भवतीति। न चैवं जन्यप्रमात्वमाकस्मिकं स्यादिति शङ्कनीयम्। जन्यज्ञानत्वं भ्रमप्रमासाधारणज्ञानसामग्रीमात्रप्रयोज्यम्, नाकस्मिकम्। प्रमात्वं तु तद्वति तत्प्रकारकत्वरूपं यत्तच्छब्दार्थघटितत्वात् अननुगतं न अनुगतं किञ्चित् कारणमपेक्षते। ततश्च भ्रमप्रमासाधारणज्ञानसामग्र्यतिरिक्तकारणानपेक्षत्वरूपं उत्पत्तावपि प्रमायाः स्वतस्त्वं सिध्यति।

ननु—ज्ञप्तिस्वतस्त्ववादिनाऽपि यत्र दोषवशादप्रामाण्यसंशयः तत्र ज्ञानग्राहकसामग्र्यैव प्रामाण्यं गृह्यत इति नाभ्युपगतम्, तत्र च तन्निश्चयार्थं दोषासहकृतसामग्रीजन्यत्वलिङ्गकानुमानं अन्यद्वा प्रामाण्यनिश्चायकं किञ्चिदुपेयमिति तदेव सर्वत्र [1]प्रामाण्यज्ञाने परतस्त्ववादिनोऽपि भविष्यतीति चेत्, न—योग्यधर्मस्य प्रामाण्यस्य सर्वत्र धर्मिग्राहकेण ग्रहणं इत्युत्सर्गेण इदंजलंजलत्वेनजानामीति व्यवहारानुसारिणा प्रथमप्रामाण्यज्ञानस्यापि धर्मिग्राहकसामग्रीजन्यत्वसिद्धौ सर्वत्र यत्नान्तरानुसरणस्यानुचितत्वात्। ततश्च प्रामाण्यस्वतस्त्वसिद्धौ न अख्यातिवादिना सर्वत्रानाश्वासदोष आपादयितुं शक्यते।

ननु—ज्ञानस्वप्रकाशत्वमते स्वतस्त्वं नोपगन्तुं युक्तम्। घटज्ञाने हि स्वगतं घटत्वप्रकारकत्वे सति घटत्ववद्विशेष्यकत्वरूपं प्रामाण्यं[2] स्वस्वरूपञ्च अवभासत इत्युपगमे [3]तत्र प्रामाण्यप्रकारकत्वे सति प्रामाण्यवद्विशेष्यकत्वं [4]प्रामाण्यान्तरमपि भासत इत्यापन्नम्[5]। न चैतद्युज्यते। तथा सति तत्र [6]अनन्तप्रामाण्यसमावेशेन

---

1. मु. प्रथमप्रामाण्यज्ञाने
2. **प्रामाण्यम्**—घटत्वघटितं घटत्वांशे प्रामाण्यम्।
3. **तत्र**—घटज्ञाने।
4. **प्रामाण्यान्तरम्**—प्रथमप्रामाण्यांशे तदघटितं प्रामाण्यम्।
5. **इत्यापन्नमिति**—प्रामाण्यान्तरं सम्पन्नम्, प्रामाण्यघटकसर्वोपाधिस्फुरणाभ्युपगमाच्च भासत इत्यापन्नम्, न्यायतौल्यात् इति भावः।
6. **अनन्तप्रामाण्येति**—द्वितीयप्रामाण्यघटितप्रामाण्यान्तरं तत्प्रामाण्यघटितप्रामाण्यान्तरं इत्येवंरीत्या अनन्तप्रामाण्येत्यर्थः।

तेषां सर्वेषामपि भानकल्पनमनुभवविरुद्धं आपद्यते—इति चेत् न। स्वप्रकाशत्ववादिना प्रामाण्यस्वतस्त्वं हि 'घटं घटत्वेन जानामि' इति व्यवहारानुसारेण कल्प्यते। अयं च व्यवहारः आद्यं यत् घटत्वांशे प्रामाण्यं तत्रैव। नैवं प्रामाण्यांशेऽपि ज्ञानस्य यत् प्रामाण्यं तत्रापि 'इदं प्रमाणज्ञानं प्रमाणत्वेन जानामि' इति व्यवहारोऽस्ति। अतो घटत्वांशे प्रामाण्यग्रहे तज्ज्ञाने यत् प्रामाण्यप्रकारकत्वप्रामाण्यवद्विशेष्यकत्वं प्रामाण्यांशे ज्ञानप्रामाण्यघटकं [1]तदयोग्यमिति कल्प्यते। अतो नानन्तप्रामाण्यग्रहापादनं सम्भवतीति।

एवं मतान्तरेष्वस्वरसं सूचयित्वा स्वमतमुपसंहरति—**अन्ये तु यत्र यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पनामाचक्षत इति**। अधिष्ठानस्य शुक्त्यादेः विषमसत्ताकरजताद्यात्मकतां [2]अनिर्वचनीयतां आचक्षत इत्यर्थः। न च अन्येतित्युक्त्या मतान्तरोपन्यासोऽयमिति शङ्कनीयम्। स्वमतोपन्यासेऽपि हि भाष्ये तथा व्यवहारो दृश्यते 'आत्मा स भोक्तुरित्यपरे' इत्यादौ। [3]रजतादिमिथ्यात्वं लोकप्रसिद्ध्यापि द्रढयति—**तथा च लोक इति**। अत्र वियदादेर्ब्रह्मण्यारोपं सम्भावयितुं आद्यो दृष्टान्तः। एकस्यैव ब्रह्मणो जीवेश्वररूपेण भेदे अपरो दृष्टान्तः।

ननु—नायं व्यवहारः रजतादेर्मिथ्यात्वं प्रतिपादयति, किं तु शुक्तिभानस्य रजतभानतुल्यताम्, [4]क्रियासादृश्यप्रतिपादकत्वात् वतिप्रत्ययस्य—इति चेत्, न—अयं हि व्यवहारो 'नात्र रजतं मिथ्यैव रजतम्' इति तात्पर्येणेति सर्वलोकप्रसिद्धम्। अतः प्रयोगानुसारेण [5]यथा सादृश्यार्थयोरपि वतिप्रत्ययेवशब्दयोः दूरादागच्छन्

---

1. **तदयोग्यमितीति**—'योग्यत्वेऽपि तदस्फुरणं' इत्यपि वक्तुं युक्तम्। न च स्वप्रकाशज्ञानगतत्वेन तत्स्फुरणावश्यम्भावः। तद्गतगुणत्वद्रव्यत्वादिवत् अस्फुरणसम्भवात्। एतेन 'योग्यधर्मस्य प्रामाण्यस्य' इति पूर्वग्रन्थविरोधः परिहृतो भवति। न च प्रामाण्यस्य स्वाश्रयसहभाननियमरूपस्वतस्त्वाभ्युपगमात् स्फुरणावश्यम्भाव इति शङ्क्यम्। उक्तनियमस्य औत्सर्गिकत्वेन क्वचिदपवादे बाधकाभावात् इति ध्येयम्।

2. **अनिर्वचनीयतामिति**—रजतादेरित्यादिः। इदं 'अन्ये तु' इत्यादिभाष्यवाक्यं विशिष्टज्ञानसमर्थनपरतया **भामत्या** व्याख्यातम्, शून्यख्यातिनिराकरणपरतया **पञ्चपादिकया** व्याख्यातम्, अत्र तु स्वमतप्रदर्शनपरतया व्याख्यातम्।

3. मु. रजतमिथ्यात्वं

4. तेन तुल्यं क्रिया चेत् वतिः '[पा. सू. ५. १. ११५] इति पाणिन्यनुशासनात्।

5. मु. 'यथा' नास्ति

**कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषयतद्धर्माणाम् ? सर्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यस्यति, युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वं ब्रवीषि ।**

देवदत्त इव देवदत्तवत् इत्यादौ [1]उत्कटकोटिकसंशयरूपसम्भावनार्थत्वमुपेयते, एवं प्रयोगानुसारेण अत्रापि वतिप्रत्ययस्य मिथ्यात्वमर्थो भविष्यतीति न काचिदनुपपत्तिः । अत्र शुक्तिग्रहणं वस्तुगतिमनुरुध्य, भ्रमदशायां शुक्तिकोल्लेखस्यासम्भवात् ।

एवं प्रत्यक्षप्राबल्यानुसारेण भासमानस्यानृतत्वानुपपत्त्या च कृतयोरध्यासाक्षेपयोः प्रत्यक्षस्य दौर्बल्यव्युत्पादनेन अरोपितस्य भानसमर्थनेन च परिहारो दर्शितः । इदानीं स्वप्रकाशस्य निरंशस्य ब्रह्मणोऽधिष्ठानत्वं न सम्भवतीति आक्षेपः क्रियते—**कथ पुनरिति ।**

अयमाशयः—अपरोक्षाध्यासे आरोप्यवस्तुविनिर्मुक्ततया [2]अधिष्ठानस्य सामान्यांशगोचरं अपरोक्षज्ञानं विशेषांशाज्ञानं च अपेक्षितम् । 'इदं रजतं' इत्याद्यध्यासेषु तथादर्शनात् । न सर्वात्मनैव भासमानत्वम्, न वा सर्वात्मनैवाभासमानत्वम् । इदं च प्रत्यगात्मनि अन्तःकरणाध्यासे न सम्भवति । यस्य हि सांशस्य ज्ञानान्तरेण जन्येन भानं तस्य अंशभेदसम्भवात् करणदोषेण विशेषांशज्ञानप्रतिबन्धे सति सामान्यांशगोचरं इन्द्रियेण ज्ञानं जायत इति युक्तम् । प्रत्यगात्मा तु निरंशः नापि जन्यं ज्ञानं तद्विषयम् । तव मते तस्य स्वप्रकाशतया स्वरूपभूतेन नित्यज्ञानेनैव भानाभ्युपगमात् । अतो नित्यज्ञानस्य करणदोषवशात् सामान्यांशमात्रावगाहित्वं विशेषांशानवगाहित्वमिति तावद्वक्तुं न शक्यते । तदिदमाह—**प्रत्यगात्मन्यविषय इति ।** बुद्ध्यादिभ्यस्सांशेभ्यः प्रातिलोम्येन निरंशत्वरूपेण अञ्चति - वर्तते इति प्रत्यगात्मा, निरंश इति यावत् । अविषय इत्यनेन अध्यासोपयुक्तसामान्यांशमात्रग्रहणराहित्यमुक्तम् । ततश्च नाध्यास इत्यर्थः । उक्तमर्थं लोकदृष्ट्या साधयति —**सर्वो हीति ।** पुरोऽवस्थिते - अपरोक्षे, विषये - सामान्यात्मना गृहीते । ननु— सिद्धान्ते आत्मनः स्वरूपज्ञानविषयत्वमेव न स्वीक्रियते । वृत्तिज्ञानविषयत्वं तु स्वीक्रियते । परमार्थतस्सांशत्वाभावेऽपि काल्पनिकं सांशत्वमप्यस्ति । बुद्ध्यादि-

---

1. उत्कटत्वं कोटित्वं च विषयताविशेषः

2. मु. अधिष्ठानसामा०

**उच्यते—न तावदयमेकान्तेनाविषयः, अस्मत्प्रत्ययविषयत्वात् ,**

सहितत्वमेकोंऽशः, तद्विनिर्मुक्तत्वमपरोंऽशः । उभयानुस्यूतं स्वरूपमात्रं सामान्यांशः । ततश्च पूर्वपूर्वाध्यासविषयीकृते अहमित्येवंरूपेण भासमाने आत्मनि बुद्ध्यादिविनिर्मुक्तत्वांशाग्रहणादुत्तरोत्तराध्यास उपपद्यत इति, अत आह—**युष्मत्प्रत्ययापेतस्येति** । युष्मत्प्रत्ययः-युष्मच्छब्दोल्लेखी प्रत्ययः, इदमित्येवंरूप इति यावत् । तदपेतः—इदमित्येवमप्रतीयमानः । ततश्च यदि वृत्तिविषयत्वं स्वीक्रियेत इदमित्येवं प्रतीतिः स्यात् । घटादीनां वृत्तिविषयाणां तथा दर्शनात् । नापि बुद्ध्याद्यतिरिक्त त्वांशाग्रह इति वक्तुं शक्यते । तव मते अरोपिताभावस्याधिष्ठानमात्रतया आत्मस्वरूपे गृह्यमाणे तदग्रहासम्भवात् । अपि च वृत्तिविषयत्वेऽभ्युपगम्यमाने आत्मनोऽविषयत्वमितिसिद्धान्तविरोधः । न च स्वरूपज्ञानाभिप्रायेणाविषयत्वमिति न विरोध इति वाच्यम् । वृत्तिज्ञानाभ्युपगमे तावन्मात्रेणैवात्मव्यवहारोपपत्तौ तदतिरिक्तं स्वरूपभूतं स्वप्रकाशं ज्ञानं इत्यभ्युपगमस्यैव निर्मूलत्वापत्तेः । अपि च [1]आत्मनस्स्वाश्रितवृत्तिविषयत्वाभ्युपगमे कर्तृकर्मत्वविरोधस्स्यात् । अतो नात्मन्यध्याससम्भवतीति भावः ।

परिहरति—**उच्यत इति** । यत्तावदुक्तं आत्मनो विषयत्वे अविषयत्वं न स्यात् कर्तृकर्मत्वविरोधश्च स्यादिति, तन्नेत्याह—**न तावदिति** । यथा घटवति भूतले नीलघटो नास्तीत्युक्त्या न [2]एकान्तेन घटाभावो विवक्ष्यते, एवं अहंप्रत्ययविषयत्वेनाभ्युपगते आत्मनि स्वरूपज्ञानविषयत्वाभावोक्त्या न एकान्तेन विषयत्वाभावो विवक्षितः । नापि कर्तृकर्मत्वविरोधः । स्वरूपज्ञानं प्रति हि न मुख्यविषयत्वरूपं कर्मत्वं विवक्ष्यते । [3]स्वविषयत्वेनस्वप्रकाशत्वानभ्युपगमात् । एकस्मिन् विषयविषयिभावविरोधात् । किं तु स्वरूपज्ञानजन्यव्यवहारविषयत्वरूपं अमुख्यं विषयत्वम् । वृत्तिविषयत्वं तु मुख्यमुपेयते । येन हि ज्ञानं निरूप्यते स एव ज्ञानस्य विषय इत्युच्यते, अहमितिज्ञानं च आत्मना निरूप्यत इति यथा घटज्ञाननिरूपकतया

---

1. **आत्मनः**—अहमितिभासमानस्यात्मनः ।

2. **एकान्तेन घटाभावः**—घटाधिकरणत्वविरोध्यभावः—घटसामान्याभाव इति यावत् ।

3. **स्वविषयत्वेनेति**—अभेदे तृतीया । अहमनुप्रविष्टस्यानिदमंशस्येत्यादिः ।

घटो विषयो भवति स्वज्ञानस्य एवमात्मापि अहमितिज्ञानस्य । आत्मनो वृत्तिविषयत्वमपि नास्ति इति तत्र तत्र ग्रन्थकृतां व्यवहारस्तु 'तदप्यात्मनि न पारमार्थिकं' इति कृत्वा । व्यावहारिकं तदिष्यत एव । न चेदमप्यनुपपन्नं एकस्मिन्नेव ज्ञाने तस्यैव विषयत्वं तस्यैवाश्रयत्वमिति । दृश्यते हि 'अहं सुखी' इत्यादिप्रत्यये तस्यैव विषयत्वं तस्यैवाश्रयत्वमिति । न च दृष्टेऽनुपपत्तिः । [1]यदि तत्र रूपभेदेन[2] परिहारः [3]अहंत्वेनाश्रयत्वं सुखित्वेन विषयत्वमिति, प्रकृतेऽपि तर्हि अहंत्वेन विषयत्वं वृत्तिपरिणामित्वेनाश्रयत्वमिति न काचिदनुपपत्तिः । न च—वृत्तिविषयत्वे इदमित्येव प्रत्ययस्स्यात् न अहमिति । न च चैतन्यविषयकत्वमहमित्याकारे प्रयोजकम् । 'घटोऽयं स्फुरति' इत्यादिप्रत्ययानां [4]चैतन्यविषयकत्वेऽपि अहमित्युल्लेखाभावात् । अतो वृत्तिविषयत्वे कथं अहमित्युल्लेखः—इति वाच्यम् । वृत्तिविषयत्वं हि न इदमित्युल्लेखे प्रयोजकम् । किं तु अन्तःकरणशबलितात्मभिन्नत्वमेव । तच्छबलितत्वं तु अहमित्युल्लेखे प्रयोजकम् । [5]श्रीकृष्णाद्यवतारेषु तु भगवतः [6]तथा व्यवहारः, यथा शरीरित्वप्रयोजकपुण्यपापाद्यसंसर्गेऽपि शरीरित्वम्, एवं 'अहं सर्वस्य प्रभवः' [भ.गी. १०.८] इत्युपपद्यते । अस्मदादिव्यवहार एव ह्येतत् प्रयोजकमिति न काचिदनुपपत्तिः । न च तथाव्यवस्थायां प्रमाणाभावः । 'अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते'

---

1. मु. न च

2. **रूपभेदेनेति**—पञ्चाग्निविद्यायां उपासनकर्मत्वप्रयुक्तविरोधस्येवेति भावः ।

3. **अहन्त्वेन**—अन्तःकरणविशिष्टरूपेण ।

4. **चैतन्यविषयकत्व इति** स्फुरणस्य चैतन्यरूपत्वात् इति भावः ।

5. ननु श्रीकृष्णादेः 'अहं सर्वस्य प्रभवः' 'अत्मानं मानुषं मन्ये' 'योऽहं यस्य यतश्चाहम्' इत्यादिः अहमिति व्यवहारः श्रूयते । न तस्य अन्तःकरणात्मकाहङ्कारसम्बन्धः सम्भवति । श्रुतिस्मृतिपुराणैः तस्य ईश्वरत्वनिश्चयात् । न हीश्वरे अहङ्कारसम्भवः । 'अहमिहैव' इत्यनुभवेन अहङ्कारस्य परिच्छिन्नत्वात्, ईश्वरस्य च सर्वात्मकत्वात् । न च व्यापकाहङ्कारे प्रमाणमस्ति । शरीरयोगस्य शुद्धसत्त्वमाययोपपत्तेः न तस्य तत्र अहङ्कारगमकत्वम् । किञ्च स्वरूपावरणरहितस्य तस्य परिच्छिन्नाहङ्काराभिमानाख्यं तच्छबलितत्वं न सम्भवति । दुःखादिधर्मिणश्चाहङ्कारस्य ईश्वरे न हि सम्भवः । प्रसिद्धाहङ्कारविलक्षणस्य अहङ्कारत्वासम्भवश्च । ततश्च अहमित्युल्लेखे उक्तं प्रयोजकं न सम्भवति—इत्याशङ्क्याह—**श्रीकृष्णेत्यादि** ।

6. मु. तथाविधव्य०

## अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेः ।

[भ.गी ३.२७] इति स्मृत्या 'अहङ्कारश्चाहङ्कर्तव्यं च' [प्र.उ.३.८] इति वाक्येन अन्तःकरणचतुष्टयान्तर्गततयाप्रतिपादिताहङ्कारतादात्म्यभ्रमरूपमोहस्यैव अहमित्यभिमानप्रयोजकत्वाम्नानात् ।

नन्वहमितिवृत्तिविषयत्वाङ्गीकारे तावतैव [1]आत्मव्यवहारोपपत्तौ किमिति स्वप्रकाशस्वरूपत्वमात्मन इष्यत इत्यत आह—अपरोक्षत्वाच्चेति । प्रत्यगात्मस्वरूपायाः [2]प्रसिद्धेः अपरोक्षत्वादित्यर्थः । अयमाशयः—[3]आत्मा हि जन्तुमात्रस्य सन्देहविपर्ययपरोक्षापरोक्षप्रमास्थले तदभावदशायां च एकरूपतया [4]आत्मत्वेनापरोक्षो निर्णीतः प्रथते । आन्तराश्च ज्ञानादयः सहोत्पत्तिविनाशाभ्यां अव्यभिचरितप्रकाशाः । तदेतत्सर्वं स्वप्रकाशं ज्ञानादिसाक्षिणं[5] विहाय प्रकारान्तरेणोपपादयितुं न शक्यते । तथा हि—तार्किकमते तावदनुव्यवसायगम्यं ज्ञानम् । न चोत्पन्ने ज्ञाने नियमेन तदनुव्यवसायोऽस्तीति शक्यते वक्तुम् । तथा सति आन्तरज्ञानधाराणामविच्छेदप्रसङ्गेन [6]बाह्यव्यवहार एव लुप्तः स्यात् । एवं [7]ज्ञानोत्पत्त्यादिकमपि [8]कदाचिदेव प्रकाशमानं स्यात् । न च तन्मते ज्ञानोत्पत्तिः प्रत्यक्षीकर्तुं शक्यते ।

---

1. मु. आत्मत्वव्यव०

2. **प्रसिद्धेः**—ज्ञप्तेः, **अपरोक्षत्वात्**—स्वयम्प्रकाशत्वात् ।

3. **आत्मा**—अहंरूपो जीवः **प्रथते**—अहमिति प्रतीयते । सुप्तिप्रलयनिरोधसमाध्यन्यकाले इत्यादिः ।

4. मु. 'आत्मत्वेन' नास्ति

5. **ज्ञानादिसाक्षिणं विहायेति** ज्ञानादयः—योग्यात्मविशेषगुणत्वेन पराभिमताः, तदीयोत्पत्तिविनाशौ, अहमर्थश्च । तेषां **साक्षी**—तदीयविकारशून्यत्वे सति तद्बोद्धा—तत्प्रकाशकः—तत्प्रकाशस्वरूपः, तदभावे इत्यर्थः ।

6. **बाह्यव्यवहारः**—बाह्यपदार्थज्ञानम् । तैः युगपज्ज्ञानद्वयोत्पत्त्यनङ्गीकारात् इति भावः ।

7. **ज्ञानोत्पत्त्यादिकमिति**—आदिशब्देन ज्ञानादीनां ध्वंसः परस्परं भेदश्च गृह्यते ।

8. **कदाचिदेवेति**—ज्ञानोत्पत्तिस्तु वक्ष्यमाणप्रकारेण सर्वदा न प्रकाशेत इत्येव वक्तुं युक्तम् । **प्रकाशमानं**—अपरोक्षम् ।

प्रत्यक्षे हि विषयस्य कारणत्वं वक्तव्यम्। ततश्च ज्ञानोत्पत्त्यनन्तरक्षणे तद्विषयेण प्रत्यक्षेण भवितव्यमित्यापन्नम्। तस्यां च दशायां उत्पत्तेरभावः, तस्याः [1]क्षणिकत्वात्। विषयाभावकालं च ज्ञानं न तत्र प्राकट्यप्रयोजकम्। एवं आत्मनोऽपि नाव्यभिचरितप्रकाशत्वं शक्यं तन्मते वक्तुम्। न हि स्वगतविशेषगुणानवगाहिद्रव्यप्रत्यक्षं तन्मते सम्भवति। तथा च आत्मनः अव्यभिचरितप्रकाशत्वाय [2]आन्तरपदार्थज्ञानधाराभ्युपगमे बाह्यपदार्थज्ञानलोप एव स्यात्। न चानुभवानुसारिणा आत्मादीनामव्यभिचरितप्रकाशत्वं नास्तीति शक्यते वक्तुम्। अनुभवापलापे च शून्यवादिमतमेवास्थेयम्, किमर्धजरतीयेन। अपि च देवतादिध्यानकाले नानुव्यवसायः शक्यते वक्तुम्। ध्यानसामग्र्या इच्छाघटितत्वेन ध्येयव्यतिरिक्तध्यानान्तर्गतवृत्तिविषयानुव्यवसायप्रतिबन्धकत्वात्[3]। ततश्च 'एतावन्तं कालं ध्यायन्नेवासम्' इति अनुसन्धानं अनुपपन्नं स्यात्। अतः साक्षिरूपः प्रकाशः सर्वदा आत्मतद्धर्मावभासकोऽनुस्यूतोऽस्तीति स्वीकर्तव्यम्।

ननु—प्राभाकरमते ज्ञानं स्वप्रकाशम्। तत्र चात्मा आश्रयतया भासते घटादिकं च विषयतया। तन्मते ज्ञानाकारश्च 'घटमहं जानामि' इत्येवंरूपः। तथाच आत्मनि किञ्चिज्ज्ञानं सदा वर्तत एवेति ज्ञानात्मनोरव्यभिचरितप्रकाशत्वमुपपद्यत इति न नित्यसाक्ष्यभ्युपगन्तव्य इति चेत्—

न—तन्मतेऽपि सुखादीनामव्यभिचरितप्रकाशता न स्यात्। ज्ञानोत्पत्तिश्च न प्रत्यक्षा स्यात्। अपि च तन्मते भासमानतायां बहूनि प्रयोजकानि कल्पनीयानि। आत्मनि ज्ञानाश्रयत्वं, ज्ञाने ज्ञानाभिन्नत्वं, घटादौ ज्ञानविषयत्वम्। तदपेक्षया वरं ज्ञाने क्लृप्तं ज्ञानाभिन्नत्वमेव सर्वत्र भासमानतायां प्रयोजकमाश्रयितुम्। तच्च वेदान्तिन एवोपपद्यते। आत्मनो ज्ञानरूपत्वाङ्गीकारात्, विषयाणां च ज्ञानरूपब्रह्माध्यस्तत्वाङ्गीकारात्। न चैतत् नित्यज्ञानाभ्युपगमं विना वक्तुं शक्यते। अनित्यज्ञानस्यात्माभेदासम्भवात्, विषयाणां च जन्यज्ञानाध्यस्तत्वायोगात्। अध्यासे

---

1. **क्षणिकत्वादिति**—कार्यस्य आद्यक्षणसम्बन्धरूपत्वादुत्पत्तेः, आद्यक्षणस्य च द्वितीयक्षणेऽसत्त्वात् इत्यर्थः।

2. **आन्तरपदार्थेति** योग्यात्मविशेषगुणात्मकेत्यादिः।

3. **प्रतिबन्धकत्वादिति** इच्छायाः सर्वतो बलवत्त्वात् इति भावः।

हि अधिष्ठानं प्रागेवाध्यासात् [1]भासमानतया लब्धसत्ताकमपेक्षितम्। न चैतत् जन्यस्य घटप्रत्यक्षस्य सम्भवति। तस्य घटजन्यस्य घटात्प्रागेव [2]लब्धसत्ताकतया भासमानत्वानुपपत्तेः। एवं च सति सर्वत्र 'घटः स्फुरति' 'ज्ञानं स्फुरति' 'आत्मा स्फुरति' इति व्यवहारः स्फुरणतादात्म्यविषयकः उपपन्नो भवति। परमते च आत्मनि ज्ञानाश्रयताविषयकः, ज्ञाने तदभेदविषयकः, घटादौ ज्ञानविषयताविषयक इति वैरूप्यं भवेत्।

ननु वेदान्तिनोऽपि भासमानतायां नैकरूपं प्रयोजकं सम्भवति। न हि यथा आत्मनः स्वरूपैक्यं ज्ञानेन स्वीक्रियते एवं विषयाणामप्यध्यस्तानाम् पारमार्थिकेन स्वरूपैक्यासम्भवात्। अतः क्वचित् स्वरूपैक्यं क्वचिदाध्यासिकं तादात्म्यं भासमानतायां प्रयोजकमिति नैकरूपं प्रयोजकं सम्भवति। एवं स्फुरतीतिव्यवहारोऽपि आत्मांशे स्वरूपैक्यं विषयांशे आध्यासिकं तादात्म्यमवगाहत इति नैकरूप इति चेत्—

न—अभेदो हि द्विरूपः। स्वरूपैक्यरूपः, सत्तावच्छेदकभेदाभावरूपः तादात्म्यापरपर्यायश्च। तत्र यद्यपि स्वरूपैक्यं ज्ञानविषययोर्न संभवति, तथापि तादात्म्यं सम्भवत्येव। यो हि भेद [3]इदमिदमिति स्पष्टसामानाधिकरण्यव्यवहारप्रयोजको न भवति स [4]सत्तावच्छेदक इत्युच्यते। विषयज्ञानयोर्भेदस्तु 'इदं सर्वं यदयमात्मा' [बृ. उ. २ - ४ - ६] इति ज्ञानस्वरूपात्मना सामानाधिकरण्यव्यवहारप्रयोजक इति न सत्ताया अवच्छेदकः। तादृशतादात्म्यं च ज्ञानं [5]प्रति आत्मविषययोस्समानमिति न वैरूप्यम्। न चैवं ज्ञानतादात्म्यस्य सार्वकालिकत्वात् विषयाणां सदैव भासमानता स्यादिति वाच्यम्। भासमानतायां ज्ञानाभेदो हि साधारणं कारणं तद्विषयेषु चाक्षुषवृत्त्यादिकं विशेषकारणमपेक्षते।

---

1. **भासमानतयेति** ज्ञापकहेतौ तृतीया।

2. **लब्धसत्ताकतयेति** प्रयोज्यत्वं तृतीयार्थः।

3. मु. इदमितिस्पष्ट

4. **सत्तावच्छेदक इति** दण्डघटयोर्भेदः सत्तावच्छेदकः, दण्डघटयोः सत्ताभेदात्। मृद्घटयोर्भेदः सत्तानवच्छेदकः तयोः सत्तैक्यात्।

5. मु. प्रत्यगात्म

नित्यसाक्ष्यभ्युपगम एव च सुषुप्तिनिरोधसमाधिकालयोः [1]आत्मा अव्यभिचरितप्रकाश इति वक्तुं शक्यते। न हि सुषुप्तौ जन्यज्ञानं सम्भवति। तस्यां दशायां 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिंच्छेते' [बृ. उ. २ - १ - १७] इति बाह्यान्तःकरणलयाम्नानात्। इन्द्रियाणां प्राणशब्दोदितानां विज्ञानं—ज्ञानजननानुकूलां शक्तिं विज्ञानेन—स्वरूपभूतेन आदाय—निरुध्य शेते—इति हि तदर्थः। न च—तस्यां दशायां इन्द्रियाणां लयेऽपि अहंवृत्तिस्सम्भवति अविद्यावृत्तिरूपा। अन्यथा 'सुखमहमस्वाप्सं' इति परामर्शो[2] न स्यात्, अहंवृत्त्यभावे अहन्तायाः प्रागननुभूतायाः परामर्शविषयत्वायोगात्। तवापि हि सुषुप्तौ आत्मा अव्यभिचरितप्रकाश इत्यत्र अयमेव [3]परामर्शो लिङ्गमिति - वाच्यम्। 'तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरं एवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरं' इति तस्यां दशायां बाह्याभ्यन्तरविषयस्य जन्यज्ञानस्य [4]निषेधात्। विशिष्य च अहमितिज्ञानं निषिद्धम्। 'नाह खल्वयमेवं सम्प्रत्यात्मानं जानाति अयमहमस्मीति नो एवेमानि भूतानि' [छा. उ. ८ - ११ - १] इति। न च—अयमहमस्मीत्यनेन ब्राह्मणोऽहमित्येवंरूपेण निषेधः, न त्वहमितिज्ञानसामान्यरूपेणेति—शङ्कनीयम्। एवं ह्यनेन ब्राह्मणादिशरीरज्ञानं नास्तीत्युक्तं भवेत्। तथासति तस्य शरीरस्य भूतान्तर्गततया नो एवेमानि भूतानीत्येव तज्ज्ञाननिषेधे सिद्धे पृथङ्निषेधो व्यर्थ एव स्यात्। तस्मादहन्त्वज्ञाननिषेध एव तत्र क्रियते। न चैवं तज्ज्ञानाभावे तस्य परामर्शविषयता न स्यादिति वाच्यम्। न हि सुखमहमस्वाप्समिति ज्ञानं अहन्तांशे परामर्शरूपम्। अपि तु तद्व्यतिरिक्तांश एव। सुषुप्तौ हि [5]तज्ज्ञानं नास्तीत्युक्तम्। नापि तत्स्वरूपमस्ति। अन्तःकरणतादात्म्यापन्नो ह्यात्मा तदाश्रयः। न च तस्यां दशायामन्तःकरणमस्ति। इन्द्रियसामान्यस्य लयाम्नानात्। 'गृहीता वाग्गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मनः'

---

1. **आत्मा**—अविद्योपाधिकं जीवस्वरूपम्, न तु प्रमातृरूपम्।
2. **परामर्शः**—स्मृतिः
3. मु. व्यवहारो०
4. मु. प्रतिषेधात्
5. **तज्ज्ञानम्**—अहन्त्वज्ञानम्

[बृ. उ. २ - १ - १७] इत्यत्र हि केषां चिदिन्द्रियाणां ग्रहणं सर्वोपलक्षणार्थम्। तदेषां प्राणानामिति सामान्योपक्रमात्। '[1]एवमेवास्मादात्मनःसर्वे प्राणा व्युच्चरन्ति' [बृ. उ. २ - १ - २०] इति जीवाधीनाया उत्पत्तेराम्नानाच्च। अहन्तायास्तु तत्कालसञ्जाताया: अनुभव एव सुखमहमस्वाप्समिति। न चैकस्य ज्ञानस्य क्वचिदंशे परामर्शरूपत्वं क्वचिदंशेऽनुभवरूपत्वं च विरुद्धमिति शङ्कनीयम्। प्रत्यभिज्ञाया: तत्तांशे स्मृतिरूपत्वस्य अंशान्तरेऽनुभवरूपत्वस्य च इष्टत्वात्। एवं निरोधसमाधावपि सर्ववृत्तिनिरोधस्य श्रुतिस्मृतियोगशास्त्रप्रसिद्धतया तस्यामपि जन्यज्ञानासम्भवेन 'एतावन्तं कालं निरुद्धचित्त एवासं' इतिपरामर्शानुसारेण निरोधसाक्ष्यभ्युपगन्तव्य:।

ततश्च नित्यज्ञानसिद्धौ 'ज्ञानमुत्पन्नं, ज्ञानं विनष्टं, अहं ज्ञानवान्' इत्यादिव्यवहारो वृत्तिज्ञानोपाधिक इत्यवगन्तव्यम्।

नन्वेवमात्मनो नित्यं प्रकाशमानत्वे तस्मिन्नज्ञानविषयत्वासम्भवात् कथमध्यास:। न च स्वरूपेण भासमानत्वेऽपि निरतिशयानन्दत्वप्रपञ्चविनिर्मुक्तत्वाद्याकारेणाभासमानत्वात् तेनरूपेणाज्ञानविषयत्वमस्तीति वाच्यम्। न हि तव मते निरतिशयानन्दत्वादिकं स्वरूपात् व्यतिरिच्यते। तथा च स्वरूपे भासमाने कथं तेषामभासमानता। अपि च तेषां स्वरूपाद्व्यतिरेके अखण्डाकारवृत्तावपि तेषां न भानं स्यात्, तस्या: स्वरूपमात्रविषयत्वात्। एवं च अखण्डाकारवृत्तिदशायां यावत् स्वरूपं भासते, तावदेवाधुनापि भासत इति आधुनिकस्य स्वरूपप्रकाशस्य अज्ञानानिवर्तकत्वे अखण्डाकारवृत्तिरप्यज्ञानानिवर्तिका स्यात्। अपि च अधुना यावदेव स्वरूपं भासते तावदेव मोक्षदशायामपि। अतश्च आधुनिकस्य [2]स्वरूपभानस्य अपुरुषार्थत्वे मोक्षस्यापि पुरुषार्थता न स्यात्। तस्मात् अद्वैतवादिन: स्वप्रकाशात्माभ्युपगमो विरुद्ध इति चेत्—

न—भासत एवाधुनाप्यात्मस्वरूपम्। तच्च भानं नाज्ञानविरोधि। न ह्यधिष्ठानस्वरूपभानमात्र[मज्ञान](मारोप)विरोधीति शक्यमुपगन्तुम्। तथा सति 'इदं

---

1. मु. 'एतस्मादात्मन: सर्वे प्राणा यथाऽयतनं विप्रतिष्ठन्ते' इति स्वस्वायतनरूपेषु गोलकेषु पुनर्जाग्रदारम्भे जीवाधीनाया विशेषणप्रतिष्ठारूपाया उत्पत्तेराम्नानाच्च'। अयं पाठोऽर्थश्च कौषीतकिब्राह्मणानुसारी।

2. **स्वरूपभानस्येति** निरतिशयानन्दाभिन्नेत्यादि:।

रजतं' इति भ्रमो न स्यात्। तत्रापीदन्ताया अधिष्ठानस्वरूपभूताया भानात्। नापि—[1]अधिष्ठानासाधारणस्वरूपभानम्, इदन्ता च न तथा—इति। 'शङ्खः श्वेतः' इत्यधिष्ठानासाधारणस्वरूपभानेऽप्यज्ञानानिवर्तनात्। नाप्यधिष्ठानासाधारणस्वरूपापरोक्षज्ञानं तथेति। तथासति इयं शुक्तिरित्याप्तोपदेशात् अज्ञाननिवृत्तिर्न स्यात्। न च—सोपाधिकभ्रमेष्वपरोक्षज्ञानं अन्यत्र तु परोक्षमपरोक्षं वा अज्ञाननिवर्तकमिति, शुक्तिरजतादिभ्रमाणां परोक्षापरोक्षसाधारण्येन ज्ञानमात्रमज्ञाननिवर्तकं पीतशङ्खादिविभ्रमेषु तु अपरोक्षज्ञानमेवाज्ञाननिवर्तकमिति—शक्यते वक्तुम्। न हि शुक्तिरजतादिभ्रमव्यावृत्तं पीतशङ्खादिभ्रमेष्वनुगतं सोपाधिकभ्रमत्वं निरूपयितुं शक्यते। शुक्तिरजतादिभ्रमेऽपि सादृश्यादिदोषस्यैव उपाधित्वसम्भवात्। न हि पित्तादिदोष एवोपाधिः न सादृश्यादिदोष इत्यत्र किंचिद्व्यवस्थापकमस्ति। तस्मात् प्रमाणानुसारेण यादृशभ्रमे यत् ज्ञानं प्राप्नोति निवर्तकतया, तत्तथैव स्वीकर्तव्यम्। आत्मविषयाज्ञाननिवर्तकतया च शास्त्रबलात् वेदान्तवाक्यजन्यज्ञानमेव प्राप्तमिति तदेव निवर्तकमास्थीयते। तदपि ह्यधिष्ठानतत्त्वावगाह्येवेति। लोकेऽपि ह्यधिष्ठानतत्त्वावगाह्येव ज्ञानं अज्ञाननिवर्तकमिति तावता लोकदृष्टनिवर्त्यनिवर्तकभावानुसारात्[2] न स्वर्गयागादिसाध्यसाधनभाववदत्यन्तमदृष्टरूपता। लोके च न सर्वं ज्ञानं अधिष्ठानतत्त्वावगाहि आरोपनिवर्तकम्, शङ्खश्वैत्यानुमितौ व्यभिचारात्। ततस्तत्रापरोक्षज्ञानमेव पैत्यभ्रमनिवर्तकमिति लोकादेवावगम्यते। प्रपञ्चविभ्रमे तु स्वरूपप्रकाशस्य प्रपञ्चविभ्रमेण सहानुवर्तमानतया तस्य विभ्रमानिवर्तकत्वे विशेषकारणापेक्षायां स विशेषः वेदान्तवाक्यजन्य [3]आत्मसत्तानिश्चयरूपो वृत्तिविशेषः प्रपञ्चविभ्रमविरोधीति शास्त्रबलादवधार्यते।

ननु च—विभ्रमे यावदेव स्वरूपं भासते तदनधिकविषयकस्य अखण्डाकारज्ञानस्य कथं निवर्तकता? भ्रमाधिकविषयस्यैव तस्य तन्निवर्तकताया लोके दर्शनात् इति

---

1. **अधिष्ठानासाधारणस्वरूपेति** व्यावर्तकधर्मविशिष्टं व्यावर्तकधर्मोपलक्षितं वा यत् संशयविपर्ययविरोधिस्वरूपं तदित्यर्थः

2. मु. ०सारः। न स्वर्गं

3. श्रवणादेःप्राक्तननिश्चयव्यावृत्यर्थं **सत्तानिश्चयेति**। सत्तानिश्चयो नाम भासमानप्रमात्वकनिश्चयः। श्रवणादिभ्यः प्राचीनस्तु आवृतप्रमात्वकः। अत एव तदा वादिविप्रतिपत्तिप्रयुक्ततात्पर्यसंशयरूपदोषाधीनः प्रमात्वसंशयः।

चेत्, न—अमानधिकविषयाणामपि तन्निवर्तकत्वदर्शनात् । यथा 'तटाकतीरे घोषः' इति 'येन केन चित् कपालेन तुषोपवापः कर्तव्यः' इति च भ्रमवतः पुरुषानुद्दिश्य तीरत्वमात्रप्रकारकेण तात्पर्येण प्रयुक्तात् 'गङ्गायां घोषः' इति वाक्यात् कपालत्वमात्रप्रकारकेण तात्पर्येण प्रयुक्तात् 'पुरोडाशकपालेन तुषानुपवपति' इति वाक्याच्च 'तीरे घोषः' 'कपालेन तुषोपवापः कर्तव्यः' इत्येव बोधो दृश्यते । न हि तत्र भ्रमे भासमानयोः तीरकपालयोःशाब्दबोधे कोऽपि विशेषो गृह्यते भ्रमाधिकविषयः । तत्र चेत् सामग्रीविशेषजन्यत्वेन शाब्दबोधस्य [1]भ्रमनिवर्तकत्वम्, स च सामग्रीविशेषः शाब्दबोधात् प्राक् तीरस्य गङ्गासम्बन्धित्वेनोपस्थितिः, कपालस्य पुरोडाशसम्बन्धित्वेनोपस्थितिः, [2]दृश्यते ह्यन्यत्रापि सामग्रीवैचित्र्यादेव विषयवैलक्षण्याभावेऽपि किञ्चिज्ज्ञानं कार्यविशेषप्रयोजकं किंचिन्नेति, तद्यथा—अयं प्रशस्त इत्युक्ते न तथा [3]प्रीतिर्भवति, यथा सदसदनेकगुणकीर्तनपूर्वकं लक्षणया प्राशस्त्योक्तौ, अत एव वेदे न कण्ठत एव 'प्रशस्तः' इत्येवंरूपेण कर्म स्तूयते, किं तु सदसदनेकगुणकीर्तनपूर्वकं लक्षणयैव; तर्हि प्रकृतेऽपि तुल्यम् । वेदान्तवाक्यजन्यज्ञानेऽपि हि निष्प्रपञ्चत्वोल्लेखिनी प्राचीना वाच्यार्थविषयिणी उपस्थितिरस्त्येव ।

अपि च—लोके भ्रमाधिकविषयस्यैव भ्रमनिवर्तकत्वं दृष्टं अस्तु नाम । तस्मिन् भ्रमनिवर्तके [4]सामग्रीविशेषजन्यत्वमपि दृष्टमेव । एवं च वक्ष्यमाणया रीत्या वेदान्तानामखण्डार्थत्वसिद्धौ तस्य च ज्ञानस्य प्रपञ्चविरोधित्वे शास्त्रबलात्सिद्धे [5]तदनुसारेणापि सामग्रीविशेषजन्यत्वमेव निवर्तकतायां प्रयोजकमाश्रयणीयम् । लोके उभयथाऽपि सम्भवात् । न तु तद्विरोधेन भ्रमाधिकविषयत्वम् ।

---

1. **भ्रमनिवर्तकत्वमिति** 'तर्हि प्रकृतेऽपि तुल्यं' इत्यनेन सम्बद्ध्यते । सचेत्यादिग्रन्थः सामग्रीविशेषाद्युपपादकः ।

2. **दृश्यतेहीति** 'अङ्गीकृतश्च नैयायिकैः' इत्यपि बोध्यम् । उक्तं हि प्रत्यक्षचिन्तामणौ—'समूहालम्बनात्तु विशिष्टज्ञानस्य विशेषः कारणकृतः' इति प्रमालक्षणवादे ।

3. मु. प्रतीति

4. **सामग्रीविशेषः**—दोषाभावादिघटिता सामग्री ।

5. **तदनुसारेणापीति** अपिना पूर्वोक्तव्यभिचारो गृह्यते ।

ततः साक्षिणि स्वतो भासमानेऽपि नाविद्यासम्बन्धविरोध इति नाध्यासानुपपत्तिः। एवञ्च यत् पूर्वपक्षिणोक्तं निरंशे स्वप्रकाशे कथमध्यास इति, तदपाकृतम्। स्वप्रकाशस्यापि अविद्यासम्बन्धाविरोधितया अध्यासाधिष्ठानत्वोपपत्तेः।

[1]यद्यपि साक्षिस्वरूपभूतानन्दः सदा भासत एव, अत एव निरतिशयितः आत्मनि प्रेमा। तथापि तत्र अनाद्यविद्यावशात् दुःखाद्यपुरुषार्थसम्बन्धोऽपि आरोपितः। तथा तारतम्यापन्नतत्तद्विषयसम्पर्कजनितवृत्तितादात्म्याध्यासात् साक्षिण्यपि तारतम्यमध्यस्तम्। ततश्च आनन्दे अनुभूयमानेऽपि अन्य इतोऽधिक आनन्दोऽस्तीति भ्रमः, स मया अनवाप्त इत्येवं भ्रमान्तरम्, [2]ततश्चाकृतार्थतेति। तत्त्वज्ञानेन तु अविद्यायां निवर्तितायां उक्तभ्रमविनाकृतं केवलं स्वरूपं भासत इति संसारमोक्षयोर्वैलक्षण्यम्—संसारदशायां हि दुःखं अनवाप्तत्वभ्रमरूपानन्दानवाप्तिश्च, मोक्षदशायां तु दुःखाभावः अनवाप्तत्वभ्रमनिवृत्तिरूपानन्दावाप्तिश्च।

न च मोक्षदशायामविद्यानिवृत्त्यभ्युपगमे ब्रह्मातिरिक्ताया निवृत्तेः विद्यमानतया द्वैतापत्तिरिति वाच्यम्। अधिष्ठानपरिशेषाभ्युपगमेन ब्रह्मातिरिक्तपदार्थानभ्युपगमात्। एतदुक्तं भवति—[3]आरोपितपदार्थानां हि, यथा घटादीनां स्वोपादाने परिणामवादरीत्या उपादानस्यैवावस्थान्तरापत्तिरूपः आरम्भवादे ध्वंसात्मकः नाशः, तदभिव्यञ्जकं च कपालतच्छकलादिकम्; नैवंविधः शुक्त्यादौ रजतादीनाम्। न हि तत्र रजतस्य तत्त्वज्ञानबाधितस्य किंचिच्छकलादिकमुपलभ्यते, येन घटादिनाशतुल्यता स्यात्। किं तु यथा कालत्रयेऽपि शशशृङ्गस्य सदसद्व्यवहारायोग्यत्वरूपं निस्स्वरूपत्वम्, नापि तेन निस्स्वरूपेण शशशृङ्गेण कस्यचिद्वस्तुनः सद्वितीयत्वम्, एवं तत्त्वज्ञानेन, प्राग्लब्धस्वरूपस्य रजतस्य निस्स्वरूपत्वमापाद्यते। न च तत्र तत्त्वज्ञानापादितनिस्स्वरूपत्वेन रजतेन भावाभावव्यवहारायोग्येन शुक्तेः सद्वितीयता।

---

1. 'निरतिशयानन्दस्वरूपस्यात्मनः स्वप्रकाशत्वे सर्वदाभासमानत्वावश्यम्भावात् संसारमोक्षयोरविशेषप्रसङ्गः' इति पूर्वपक्षावसरोक्तं आशङ्क्य परिहरति—**यद्यपीत्यादिना**।

2. **ततश्च**—तादृशानन्दाभिलाषरूपपिशाचीग्रस्तत्वात् **अकृतार्थता**—अप्राप्तप्राप्तव्यता।

3. **आरोपितपदार्थानां हीति** 'रजतादीनां' इत्युत्तरेण सम्बद्ध्यते।

**नचायमस्ति नियमः— पुरोऽवस्थिते एव विषये विषयान्तरमध्यसितव्य-मिति। अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ति। एवमविरुद्धः प्रत्यगात्मन्यप्यनात्माध्यासः। तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति**

तदेतत् सर्वानुभवसिद्धम्। एवमात्मतत्त्वज्ञानेनापि अविद्यादेः कृत्स्नस्य निस्स्वरूप-तापादनात् तत्त्वज्ञानोत्तरमधिष्ठानपरिशेषेण न द्वैतापत्तिः। तथा च श्रुतिः— 'अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थम्मन्यते स आत्मा स विज्ञेयः' [मा. उ. ७] 'यत्र त्वस्य सर्व-मात्मैवाभूत्तत् केन कं पश्येत्' [बृ. उ. ४ - ५ - १५] इत्याद्या अधिष्ठानपरिशेषतां दर्शयति।

अतः स्वप्रकाशत्वे न काचिदनुपपत्तिः। एवं च—यत् पूर्वपक्षिणोक्तं विषय त्वाभावे अध्यासो न स्यादिति, तदप्यपाकृतम्। न ह्यारोपे अधिष्ठानस्य विषयतया भानमपेक्षितम्, गौरवात्। किं तु [1]भानमात्रम्। तच्च स्वप्रकाशस्य स्वत एव, जडस्य तु ज्ञानविषयतयेत्यन्यदेतत्। भाष्ये आत्मनोऽपि विषयत्वप्रतिपादनं तु वस्तुगतिमनुरुध्य तदपि वक्तुं शक्यत इत्यभिप्रायेण।

[2]यच्चोक्तं आरोप्यविनिर्मुक्ततया आरोपात् पूर्वमधिष्ठानज्ञानमपेक्षितमिति, तत्र-नीलिमारोपात् पूर्वं आरोप्यविनिर्मुक्ततया आकाशभानाभावेऽपि नीलिमारोपदर्श-नात्—इत्यभिप्रेत्याह—**अप्रत्यक्षेऽपी**ति। यद्यप्युपरि नीलिमारोपेण मध्ये चालोक-गत[3]वैशाल्यारोपेणाकाशः प्रत्यक्षः, तथापि तद्विनिर्मुक्ततया केवलः प्रत्यक्षो न भवतीत्यर्थः। तलं—अवाङ्मुखकटाहाकारत्वम्। अहम्ममेतिप्रतीतेरध्यासत्वं अविद्या-

---

1. **भानमात्र**मिति—विवरणानुसारिणी व्याख्येयम्। तदुक्तं विवरणे 'न ताव-दयमेकान्तेनाविषयः, अस्मत्प्रत्ययविषयत्वात्' इति भाष्याभिप्रायवर्णनावसरे—एक-स्मिन् विज्ञाने द्वयोः सम्भिन्नतया अवभास एव अपेक्ष्यते, विषयतया अवभास इति विशेषणायोगात्—इति। 'तथाविशेषणे गौरवात्' इत्याश्रमस्वामिभिर्व्याख्यातम्।

2. प्रस्थानान्तरवैलक्षण्येन 'अप्रत्यक्षेऽपि' इत्यादिभाष्यं व्याख्यातुं पूर्वपक्षनि-रूपणावसरोक्तामाशङ्कामनुवदति—**यच्चोक्तमिति**। उक्तशङ्कानिरासस्य भाष्यवाक्यादेव लाभः वैलक्षण्येन व्याख्यायां बीजम्।

3. आ. वैशद्या०

**मन्यन्ते। तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुः।**

**तत्रैवं सति यत्र यदध्यासः तत्कृतेन दोषेण गुणेन वा अणुमात्रेणापि स न संबध्यते।**

**तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः, सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि।**

त्वप्रसिद्ध्या द्रढयति—**तमेतमिति**। तथा च स्मृतिः—'अहम्ममेत्यविद्येयं व्यवहारस्तथाऽनयोः' [वि. पु. ६-७-१००] इति। ननु—साक्षिस्वरूपभूतं ज्ञानं न अज्ञानविरोधि, एवं वृत्तिरपि नाज्ञानविरोधिनी, तस्या अन्तःकरणपरिणामरूपाया जडत्वात्। अतः कथं अविद्यानिवृत्तिः—इत्याशङ्क्य, केवलसाक्षिणो विरोधित्वाभावेऽपि, यथा केवलानां सौरकिरणानां तृणादिदाहकत्वाभावेऽपि सूर्यकान्तमणि-[1]निविष्टानां तद्दाहकत्वं एवं वेदान्तजन्यवृत्तिनिविष्टस्य साक्षिणोऽविद्यानिवर्तकता भविष्यतीत्यभिप्रेत्याह—**तद्विवेकेन चेति**। तयोः – आत्मानात्मनोः 'आत्मा सत्यः अनृतोऽनात्मा' इत्येवंरूपेण विवेकेन सम्पन्नं यत्–[2]वस्तुस्वरूपं [3]आत्मरूपं अवधारणं—अवधारणात्मकवृत्त्यभिव्यक्तं, सैव विद्येत्यर्थः।

एवं च यत् शास्त्रानारम्भवादिनोक्तं – कर्तृत्वभोक्तृत्वयुक्तस्य कथं तद्राहित्यं इति, तत्तस्य मिथ्यात्वनिरूपणेन परिहृतमित्याह—**तत्रैवं सतीति**।

[4]पूर्वोक्तमध्यासकृतत्वं व्यवहारस्य शङ्काविशेषनिराकरणेन व्युत्पादयितुं पुनरुपक्षिपति–**तमेतमविद्याख्यमिति**। ननु—अविद्यायाः दोषरूपत्वात् दुष्ट-

---

1. मु. निष्ठानां

2. मु. वस्तु स्वरूपभूतं आत्मस्वरूपं अवधारणात्मक

3. वस्तुस्वरूपं च तत् अवधारणं च इति कर्मधारयमभिप्रेत्य व्याचष्टे—**आत्मरूपमिति**। अत्र 'तमेतं' इति 'तद्विवेकेन च' इति 'तत्रैवं सति' इति च भाष्यवाक्यानि प्रस्थानान्तरवैलक्षण्येन अवतार्य व्याख्यातानि। तत्रायमाशयः—शास्त्रारम्भोपयोगिविषयप्रयोजनसाक्षात्सम्बद्धशङ्काविशेषनिराकरणसिद्ध्युपयोग्यर्थपरतया व्याख्यानमुचितमिति।

4. **पूर्वोक्तम्**—'अध्यस्य नैसर्गिकोऽयं लोकव्यवहारः' इति भाष्योक्तम्।

**कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति । उच्यते— देहेन्द्रियादिष्वहंममाभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः । न हि इन्द्रियाण्यनुपादाय प्रत्यक्षादिव्यवहारः संभवति ।**

पुरुषसंयुक्तानां इन्द्रियादीनां प्रमां प्रति करणत्वासम्भवात् प्रत्यक्षादीनां प्रामाण्यप्रसिद्धिः कथं, कथं वा श्रुतिस्मृत्यादीनां शास्त्रत्वप्रसिद्धिः । अलौकिकार्थप्रमापकं हि शास्त्रमित्युच्यते—इत्यभिप्रेत्य शङ्कते—**कथमिति** । अविद्यावत्पुरुषविषयाणि—तादृशपुरुषाश्रयाणि—तत्प्रमातृकाणीत्यर्थः । ततश्च 'शुक्तिरजतादिज्ञानजनकमप्रमाणं अन्यत् प्रमाणं' इति सर्वलोकप्रसिद्धव्यवस्थानुपपत्तिरिति भावः ।

प्रामाण्यम् द्विविधम्—संवादिप्रवृत्तिजननयोग्यज्ञानजनकत्वलक्षणं अबाधितवस्तुविषयकज्ञानजनकत्वलक्षणं च । आद्यं लौकिकवैदिकप्रमाणसाधारणम् । द्वितीयं तु ब्रह्मप्रमाणस्यैव । शुक्तिरजतज्ञानजनकस्य तु नोभयथापीति न तत्र प्रमाणत्वव्यवहारः । एतादृशप्रमाणप्रेरकतायामहङ्काराद्यध्यासरूपदोषोऽनुकूल एव, न प्रतिकूलः । असङ्गस्यात्मनः अहङ्काराद्यध्यासं विना प्रमाणप्रेरकत्वासम्भवात् । तादृशप्रामाण्यपरिपन्थित्वं तु बाधस्यैव । स च यावद्ब्रह्मज्ञानं नास्ति लौकिकप्रमाणानामिति व्यावहारिकं प्रामाण्यं तेषामुपपद्यते । वेदान्तानां तु न कदापि प्रमेयबाधोऽस्तीति तत्त्वावेदकत्वं तेषामुपपद्यते—इत्यभिप्रेत्य परिहरति—**उच्यत इति** । [1]प्रमातृत्वं हि प्रमाणप्रेरकत्वं प्रमां प्रत्याश्रयत्वं च । उभयमप्यध्यासाधीनम् । कूटस्थस्य स्वत एव प्रेरणारूपव्यापारासम्भवात् । प्रमा च चैतन्यप्रतिबिम्बविशिष्टोऽन्तःकरणपरिणामः । स न केवलस्यात्मनः सम्भवति, अपरिणामित्वात् । चैतन्यप्रतिबिम्बश्च न केवलेनान्तःकरणेन सम्भवति । अतः प्रमास्वरूपोपयोगितया अन्तःकरणात्मनोरध्यास एषितव्यः । प्रमा च इन्द्रियाणां प्रेरणे फलम् । ततश्च इन्द्रियप्रवृत्तौ प्रेरणा प्रमा च आत्मन्यपेक्षितेति तदुभयोपयोगितया अध्यासः प्राप्नोतीत्याह—**देहेन्द्रियादिष्विति** । आदिशब्देनान्तःकरणं गृह्यते । प्रमातृत्वं प्रत्यन्तःकरणमाश्रयकोटौ

---

1. **प्रमातृत्वं हीत्यादि** प्रमातृत्वं हि प्रमां प्रति कर्तृत्वम्, तच्च स्वातन्त्र्यम्, तच्च इतरकारकाप्रयोज्यस्य सकलकारकप्रयोक्तृत्वम् । इदमेव प्रमाणप्रेरकत्वम् । एवं सविषयकज्ञानादिकर्तृत्वं तदाश्रयत्वमपि । एवं उभयं प्रमातृत्वशब्दार्थः इति भावः ।

इदंव्याख्याग्रन्थानुसारं 'न च प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्ति' इत्युपरितन वाक्यरहितो भाष्यपाठः स्यात् इति भाति ।

न च अधिष्ठानमन्तरेण इन्द्रियाणां व्यापारः संभवति । न च अनध्यस्तात्मभावेन देहेन कश्चिद्व्याप्रियते । न च एतस्मिन् सर्वस्मिन्नसति असङ्गस्यात्मनः प्रमातृत्वमुपपद्यते । (नच प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्ति ।) तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति ।

पश्वादिभिश्चाविशेषात् । यथा हि पश्वादयः शब्दादिभिः श्रोत्रादीनां संबन्धे सति शब्दादिविज्ञाने प्रतिकूले जाते ततो निवर्तन्ते, अनुकूले च प्रवर्तन्ते—यथा दण्डोद्यतकरं पुरुषमभिमुखमुपलभ्य मां हन्तुमयमिच्छतीति

निविष्टं, इन्द्रियादि[1] उपकरणतया । प्रमाणप्रवृत्तौ प्रमातृत्वमुपयुज्यते इत्युक्तम्, प्रमाणप्रवृत्तिः[2] किमर्थेत्यपेक्षायामाह—**न हीति** । इन्द्रियपदं प्रमाणमात्रोपलक्षणम् । प्रत्यक्षादीत्यादिपदमनुमित्यादिसङ्ग्राहकम् । अत्र असम्भवे [3]व्यवहारः कर्ता अनुपादाने [4]प्रमातेति अनुपादायेत्यस्य नसम्भवतीत्यनेन नान्वयः । किं तु 'अनुपादाय यो व्यवहारः प्रमातुः, स न सम्भवति' इत्यन्वयो ग्राह्यः । तथासति 'समानकर्तृकयोः पूर्वकाले' इति अनुशासनानुगुण्यं भवति । नन्विद्रियाणां प्रवृत्तौ प्रमात्रोपादानं[5] किमर्थमपेक्षितमित्याशङ्क्य, जडानां प्रवृत्तिश्चेतनप्रेरणां विना न सम्भवतीत्याह—**न चाधिष्ठानमन्तरेणेति** । अधिष्ठानं–चेतनव्यापारविषयत्वम् । ननु शरीरमेव प्रेरकमस्त्वित्याशङ्क्य, तस्य जडतया चेतनतादात्म्यं विना प्रेरकत्वं [6]न सम्भवतीत्याह—**न चानध्यस्तात्मभावेनेति** । उक्तया रीत्या प्रमातृत्वोपयोगितया श्रुतिस्मृतिसिद्धासङ्गत्वनिर्वाहाय अध्यास एषितव्य इत्याह—**न चैतस्मिन्निति** ।

ननु—प्रत्यक्षादिव्यवहारस्याध्यासमूलत्वे विवेकिनां तद्व्यवहारो न स्यात्, शास्त्रजन्यज्ञानरूपस्य विवेकस्य अध्यासविरुद्धत्वात्–इत्याशंक्याह—**पश्वादिभिश्चेति** ।

---

1. **इन्द्रियादि** इत्यादिपदेन शरीरं गृह्यते ।
2. मु. **प्रवृत्तिस्तर्हि** किम०
3. **व्यवहारः**—व्यवह्रियते अनेनेति व्युत्पत्त्या प्रत्यक्षादिप्रमाणफलम् ।
4. **प्रमातेतीति** कर्तृभेदात् इति शेषः
5. **उपादानम्**—प्रेरणम् ।
6. **न सम्भवतीति** सम्भवे सुषुप्तावपि सम्भवेत् इति भावः ।

**पलायितुमारभन्ते, हरिततृणपूर्णपाणिमुपलभ्य तं प्रति अभिमुखीभवन्ति, एवं पुरुषा अपि व्युत्पन्नचित्ताः क्रूरदृष्टीनाक्रोशतः खड्गोद्यतकरान् बलवत उपलभ्य ततो निवर्तन्ते, तद्विपरीतान् प्रति प्रवर्तन्ते, अतः समानः पश्वादिभिः पुरुषाणां प्रमाणप्रमेयव्यवहारः । पश्वादीनां च प्रसिद्धोऽविवेकपुरस्सरः प्रत्यक्षादिव्यवहारः । तत्सामान्यदर्शनात् व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यवहारस्तत्कालः समान इति निश्चीयते ।**

**शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी न अविदित्वाऽऽत्मनः-परलोकसंबन्धं अधिक्रियते, तथापि न वेदान्तवेद्यमशनायाद्यतीतमपेतब्रह्मक्षत्रादिभेदमसंसार्यात्मतत्त्वमधिकारेऽपेक्ष्यते, अनुपयोगादधिकारविरोधाच्च । प्राक् च तथाभूतात्मविज्ञानात् प्रवर्तमानं शास्त्रं अविद्यावद्विषयत्वं नातिवर्तते । तथा हि 'ब्राह्मणो यजेत' इत्यादीनि शास्त्राणि आत्मनि वर्णाश्रमवयोऽवस्थादिविशेषाध्यासमाश्रित्य प्रवर्तन्ते ।**

सङ्ग्रहवाक्यं विवृणोति । **यथाहीति** । द्विविधा हि विवेकिनः । केचिद्देहातिरिक्तात्ममात्रपर्यवसितविवेकाः, केचिदशनायाद्यतीतात्मपर्यन्तविवेकाः । तत्र आद्यो विवेकः कर्तृत्वादिभ्रमविरोधी न भवत्येव । ततश्च न तस्य ज्योतिष्टोमादिप्रवृत्तिविरोधित्वम् । तेन च शरीरतादात्म्याध्यासस्यानपोदितत्वात् पश्वादितुल्यतया इष्टसाधनताज्ञाने प्रवृत्तिर्लौकिकी अनिष्टसाधनताज्ञाने निवृत्तिश्च मनुष्योऽहमित्याद्यभिलापश्च उपपद्यते । सति हि दोषे जातमपि देहातिरिक्तात्मज्ञानं न देहतादात्म्याध्यासविरोधि । अत एव देहातिरिक्तात्मज्ञानवन्तोऽपि अस्माकमिदमिष्टसाधनमिति वदन्तः अंगुल्या शरीरमेव निर्दिशन्ति लौकिकव्यवहारेषु । विवेककृतस्तु तेषां व्यवहारः—नाहं मनुष्यो देहपातोत्तरं परलोके फलं भविष्यतीति । अशनायाद्यतीतात्मज्ञानं तु तेषां लौकिकवैदिकप्रवृत्त्युपयोग्येव न भवति । प्रत्युत दृढस्तन्निश्चयः अविश्वासापादकतया वैदिकप्रवृत्तिविरोध्येव । येषामपि दृढोऽशनायाद्यतीतात्मनिश्चयः तेषामपि प्रारब्धदोषवशात्[1] मात्रया अध्यासोऽनुवर्तत इति तत्कृतो 'ब्राह्मणोऽहं भुञ्जे' इत्यादिव्यव-

---

1. मु. वशात् देहे आत्माध्यासः

हार उपपद्यते–इति ग्रन्थार्थः । वेदस्यापि लौकिकभ्रमानुवादित्वं दृश्यत इत्याह—
[1]**तथा हि ब्राह्मणो यजेतेति ।**

[2]**ननु**—ब्राह्मणो यजेतेत्यादौ ब्राह्मणादिशब्दानां साक्षात्सम्बन्धेन ब्राह्मणत्व-प्रकारकात्मविशेष्यकज्ञानजनकत्वे हि अध्यासजनकत्वं भवेत्, ब्राह्मणत्वादेः शरीरगत-तया आत्मनि साक्षात्सम्बन्धाभावात् । न त्वेतदस्ति । ब्राह्मणादिशब्दानां, साक्षात्प-रम्परासम्बन्धौदासीन्येन यत्र ब्राह्मणत्वं वर्तते तत्प्रतिपादकत्वस्य, शरीरप्रतिपादक-त्ववत् शरीरविशिष्टप्रतिपादकत्वस्य वा, [3]व्युत्पत्तिसिद्धत्वात् । न च तथात्वे अध्यासजनकत्वम् । परम्परासम्बन्धेन ब्राह्मणत्वस्य ब्राह्मणशरीरवैशिष्ट्यस्य वा आत्मनि विद्यमानत्वात् ।

साक्षात्परम्परासाधारण्येन ब्राह्मणत्वाश्रयप्रतिपादकत्वं वा ब्राह्मणशरीर-विशिष्टप्रतिपादकत्वं वा कथं व्युत्पत्तिसिद्धम् ?

इत्थं–सन्ति तावन्नीलादिशब्दाः । ते च 'नीलं रूपं' इति गुणेऽपि प्रयुज्यन्ते 'नीलो घटः' इति गुणिन्यपि । तत्र चोभयत्रापि शक्तिरेव । उभयत्रापि अनुपपत्तिप्रतिसन्धानं विना बोधकत्वस्य प्रयोगप्राचुर्यस्य च तुल्यतया 'गुणे एव शक्तिः गुणिनि तु लक्षणा' इति नियन्तुमशक्यत्वात् । यैरपि गुणिनि लक्षणेत्युच्यते तेषामपि मते गङ्गायां घोष इतिवत् नेयं लक्षणा किं तु निरूढेति तैरपि वाचो-युक्त्यन्तरेण गुणिनो मुख्यार्थत्वं स्वीकृतप्रायमेव ।

तत्र च नीलादिपदेषु यद्येकैव शक्तिरभ्युपेयते, तदा यत्र नीलत्वं वर्तते तत्र सर्वत्र नीलपदस्य शक्तिरुपेया, तच्च परम्परया घटेऽपि वर्तते इति नीलगुण इव घटेऽपि नीलत्वप्रवृत्तिनिमित्तेनैव नीलशब्दस्य शक्तिरित्येकैव शक्तिः । एवं च नीलशब्दस्य प्रकारशब्दतया प्रकारिपर्यन्तत्वदर्शनेन अन्येऽपि प्रकारशब्दाः

---

1. मु. 'तथा हि' नास्ति

2. 'मनुष्योऽहम्' 'ब्राह्मणोऽहम्' इत्यादिप्रतीतीनां प्रमात्वमेवेति वदतां विशिष्टाद्वैतिनां मतं परिशीलयितुं तन्मतं उत्थापयति—**ननु ब्राह्मण इत्यादिना ।**

3. **व्युत्पत्तिसिद्धत्वात्**—शक्तिग्राहकप्रमाणेन निश्चितत्वात् । तच्च प्रमाणं अनुप-पत्तिप्रतिसन्धानं विना बोधकत्वस्य प्रयोगप्राचुर्यस्य च अन्यथाऽनुपपत्तिरूपं अर्थापत्ति-प्रमाणं अनुमानं वा ।

प्रकारिपर्यन्ता इत्युपेयते । न चैवं—रूपादिशब्दानामपि प्रकारशब्दतया द्रव्यपर्यन्तता स्यात् । प्रकारो नाम अपृथक्सिद्धो धर्म इत्युच्यते । अपृथक्सिद्धत्वं च तेन सह तस्य भवति, यो यस्माद्विश्लिष्य न तिष्ठति । नीलादयश्च न द्रव्याद्विश्लिष्य तिष्ठन्ति । अतस्तद्वाचकाश्शब्दाः प्रकारशब्दा इत्युच्यन्ते । तच्च रूपादिशब्देऽपि तुल्यमिति प्रकारशब्दानां प्रकारिपर्यन्तत्वे रूपादिशब्दानामपि तत् प्राप्नोतीति—वाच्यम् । न हि सर्वेषां प्रकारशब्दानां प्रकारिपर्यन्तत्वम् । किं तु येषां प्रवृत्तिनिमित्तं प्रकारिणि वर्तते तेषामेव तत्पर्यन्तत्वम् । नीलत्वादीनां च 'नीलो घटः' इति प्रतीत्यनुसारेण परम्परासम्बन्ध आधारतानियामक इत्युपेयते । अतो नीलादिशब्दाः प्रकारिपर्यन्ताः । रूपत्वादीनां परम्परासम्बन्ध आधारतानियामको न भवति । 'रूपं घटः' इति प्रतीतेरभावात् । अतो न तेषां प्रकारिपर्यन्तत्वम् । एवं च ब्राह्मणादिशब्दानामपि प्रकारशब्दतया प्रकारिपर्यन्तत्वं एकयैव शक्त्या सिद्ध्यति । ब्राह्मणादिशरीरमपि [1]हि आत्मविश्लेषे विशीर्णं भवतीत्यात्मना अपृथक्सिद्धं [2]भवतीत्यात्मनि प्रकारः । न चैवं शरीरादिशब्दानामपि आत्मपर्यन्तत्वं शङ्कनीयम् । रूपत्वादिवत् शरीरत्वस्यापि परम्परासम्बन्धो नाधारतानियामकः, 'शरीरमहं' इति प्रतीतेरभावात् । ब्राह्मणत्वस्य तु परम्परासम्बन्धो [3]नीलत्ववत् भवत्याधारतानियामकः । 'ब्राह्मणोऽहं' इति प्रतीतेः ।

यदि तु—नीलशब्दस्य द्रव्ये नीलत्वप्रवृत्तिनिमित्तकशक्त्यपेक्षया नीलगुणप्रवृत्तिनिमित्तकं शक्त्यन्तरमेवोपेयमित्युच्यते, अन्यथा नीलिमेत्यादौ नीलगुणप्रत्ययो न स्यात्, भावप्रत्ययानां [4]प्रकृतिप्रतिपाद्यप्रकारवचनत्वात् । नीलत्वप्रवृत्तिनिमित्तकशक्तिपक्षे तस्यैव प्रकृतिप्रतिपाद्यप्रकारतया नीलगुणस्य तदभावेन भावप्रत्ययार्थता न स्यात् । गुणप्रवृत्तिनिमित्तकत्वपक्षे तु न काचिदनुपपत्तिः—इति, तदापि प्रकारशब्दस्य प्रकारिपर्यन्तत्वं दृष्टमेवेति ब्राह्मणादिशब्दानामपि शक्तिद्वयकल्पनया उभयवाचकतायां न काचिदनुपपत्तिः । 'ब्राह्मणोऽहं' इति प्रयोगस्यात्रापि विद्य-

---

1. मु. 'हि' नास्ति

2. आ. भवत्यात्मनःप्रकारः

3. आ. नीलत्वादिवत्

4. **प्रकृतिप्रतिपाद्यप्रकारेति** प्रकृत्यर्थतावच्छेदकीभूतधर्मेत्यर्थः ।

मानत्वात् । एवं च 'ब्राह्मणो यजेत' इत्यादिश्रुतेः प्रमाजनकत्वे सम्भवति न भ्रमजनकत्वं कल्पयितुमुचितमिति चेत्—

[1]न–प्रकारशब्दानां प्रकारिपर्यन्तत्वमिति नियमस्तावत् न सम्भवति । शरीरादिशब्दानामपि तथात्वेन शरीरिपर्यन्तत्वस्य रूपादिशब्दानां रूपिपर्यन्तत्वस्य च प्रसङ्गात् । न च–येषां शब्दानां प्रवृत्तिनिमित्तं धर्मिपर्यन्तं तेष्वेव प्रकारशब्देष्वयं नियमः । रूपादिशब्दानां प्रवृत्तिनिमित्तं तु न धर्मिपर्यन्तम् । तत्र परम्परासम्बन्धस्याधारतानियामकत्वाभावादिति–वाच्यम् । नीलत्वादीनां परम्परासम्बन्ध आधारतानियामकः न रूपत्वादीनाम्–इत्यत्र नियामकाभावात् । न च 'नीलो घटः' इतिवत् 'रूपं घटः' इति प्रतीतिर्नास्तीत्यतः तथा व्यवस्था आश्रीयत इति युक्तम् । किमियं प्रत्यक्षप्रतीतिः उत शाब्दी नीलत्वघटयोराधाराधेयभावावगाहिनी? न तावत् प्रत्यक्षप्रतीत्या तयोराधाराधेयभावोऽवगाह्यते । अपि तु नीलगुणे नीलत्वं गुणस्य च घटे [2]समवायः, तथा रूपत्वस्य रूपे रूपस्य च घटे सम्बन्धः, इति कोऽत्र विशेषः । न च नीलत्वघटयोराधाराधेयभावानवगाहने 'नीलो घटः' इत्युल्लेखो न स्यादिति वाच्यम् । तादृशोल्लेखो हि प्रत्यक्षप्रतीतेः समानाधिकरणनीलघटरूपशब्दद्वयानुरागकृतः, न तु नीलत्वाधारताकृतः । तयोस्सामानाधिकरण्यं तु नीलशब्दस्य द्रव्ये शक्तत्वादेव । अत एव शाब्दप्रत्ययोऽपि नाधारतानियामकः । तस्यापि गुणविशिष्टद्रव्यविषयकत्वात् । प्रमाणान्तरसिद्धं सम्बन्धमादाय हि लौकिकशब्दानां बोधकत्वम् । न तु स्वत एव किञ्चिदर्थसाधकत्वम् । अतो 'नीलो घटः' इति शब्दसामानाधिकरण्यात् न नीलत्वघटयोराधाराधेयभावः । नीलशब्दस्य च द्रव्ये शक्तिः नीलत्वप्रवृत्तिनिमित्तेन एकैवास्तु, गुणप्रवृत्तिनिमित्तेन भिन्ना वा अस्तु । न तत्र निर्बन्धः । परं तु नीलिमेत्यादिप्रयोगानुसारेण गुणप्रवृत्तिनिमित्तायाश्शक्तेरावश्यकत्वे तयैव सामानाधिकरण्यव्यवहारोपपत्तौ उत्सर्गतः प्राप्तः साक्षात्सम्बन्ध एव नीलत्वप्रवृत्तिनिमित्तकशक्तिघटक इति न तस्यां परम्परासम्बन्धोऽपि घटक आश्रयितुं युक्तः । एवं च 'नीलो घटः' इत्युल्लेखिन्याः प्रत्यक्षप्रतीतेः तयोश्शब्दयोस्सामानाधिकरण्यस्य च नीलत्वघटयोरक्लृप्ताधाराधेयभावकल्पनां विनैवोपपत्तौ न तदपूर्वं कल्पनीयम् । गौरवात् ।

---

1. एवमुत्थापितं परेषांमतं निरसितुमारभते-**नेत्यादिना**
2. **समवाय इति** अवगाह्यते इत्यनुषङ्गः । एवं 'घटे सम्बन्धः' इत्यत्रापि ।

अपि च प्रकारशब्दानां प्रवृत्तिनिमित्ताश्रये सर्वत्र शक्त्यभ्युपगमे नीलिम-शब्दस्यापि घटपर्यन्तता स्यात् । तत्र हि इमनिच्प्रत्ययो नीलगुणाभिधायकः । भावप्रत्यया हि सर्वनामतुल्याः [1]प्रकारतासम्बन्धेन प्रकृतिजन्यामुपस्थितिं [2]प्रयोगोपाधिं कृत्वा तं तमर्थं [3]साक्षादेवाभिदधति । ततश्चात्र इमनिच्प्रत्ययो नीलत्वं प्रवृत्ति-निमित्तीकृत्य नीलगुणाभिधायी । स च प्रकारशब्दः । तत्प्रवृत्तिनिमित्तं च [4]परोक्त-रीत्यैव घटेऽपि वर्तत इति तस्यापि घटपर्यन्तता स्यात् । एवमरुणिमादिशब्देष्वपि द्रष्टव्यम् । अतो न प्रकारशब्दानां प्रकारिपर्यन्तत्वमिति नियमस्सम्भवति ।

ननु—मास्त्वयं नियमः । उत्सर्ग एवायमस्तु । स च क्वचित् रूपादि-शब्देषु बाधकवशात् परित्यज्यते । तावन्मात्रेणापि मनुष्यादिशब्दानां आत्मपर्य-न्तता सिध्यतीति चेत्—

न—न हि क्वचित् सञ्चारदर्शनमात्रेण बहुषु रूपरसादिशब्देषु व्यभिचारे सत्यपि उत्सर्गः कल्पयितुं शक्यते । अन्यथा नीलादिशब्ददृष्टान्तेनैव एकसम्बन्धि-वाचकस्य शब्दस्य सम्बन्ध्यन्तरपर्यन्तत्वमित्युत्सर्गं प्रकल्प्य गङ्गायां घोष इति प्रयोगेऽपि गङ्गाशब्दस्तीरं शक्त्यैव बोधयतीति वक्तुं शक्यमिति लक्षणैव दत्तजला-ञ्जलिः स्यात् । तस्मात् येषां नीलारुणादिशब्दानां धर्मिपर्यन्तत्वं दृष्टं [5]तेषामेव तद्व्यवस्थितम् । न तु तद्दृष्टान्तेन असत्यनुशासने प्रकारशब्दानां प्रकारिपर्यन्तत्वं प्रकल्प्य अन्यत्रापि शक्यं सञ्चारयितुम् ।

ननु—मास्तु प्रकारशब्दानां प्रकारिपर्यन्तत्वम् । तथापि यथा नीलशब्दस्य द्रव्यपदसामानाधिकरण्यात् द्रव्ये शक्तिः कल्प्यते एवं ब्राह्मणादिशब्दानामप्या-त्मनि शक्तिः कल्पनीया आत्मपदसामानाधिकरण्यनिर्वाहाय—इति चेत्—

---

1. **प्रकारतासम्बन्धेन प्रकृतिजन्यामुपस्थितिम्** — प्रकृतिजन्योपस्थिति-प्रकारताम् ।

2. **प्रयोगोपाधिमिति** । तत्पदजन्यबोधाविषयत्वे सति तत्पदजन्यबोधविषय-व्यावर्तकत्वं तत्पदप्रयोगोपाधित्वम् ।

3. **साक्षादेव**—तेन तेन विशेषरूपेण, न तु प्रकृतिजन्योपस्थितिप्रकारत्वेन सामान्यरूपेण ।

4. **परोक्तरीत्या**—परम्परया ।

5. आ. तेष्वेव

न – यथा रजतपदस्य शुक्तौ शक्त्यन्तराभावेऽपि रजताभेदभ्रममादाय रजतमिदमिति सामानाधिकरण्यं व्यवह्रियते तथा मनुष्योऽहमिति सामानाधिकरण्यस्य अभेदभ्रममादायोपपत्तौ न शक्त्यन्तरं कल्पनीयम् । विवेकिनामपि तादृशभ्रम उपपादित एवेति तेषामपि व्यवहारो न शक्त्यन्तरकल्पकः । अभेदभ्रमश्च मनुष्यत्वाकारेणैव न शरीरत्वाकारेणेति प्राक् निरूपितम् । अतो न शरीरपदसामानाधिकरण्यव्यवहारः । एवं च—'मनुष्योऽहं' इति व्यवहारवत् 'शरीरमहं' इति व्यवहाराभावात् मनुष्यत्वस्य परम्परासम्बन्ध आधारताप्रयोजको न शरीरत्वस्येति कल्पनमपि निरस्तम् । क्लृप्तेन सकलवैदिकसम्मतेन मनुष्यत्वाकारेणतादात्म्यभ्रमेण उपपत्तौ 'मनुष्योऽहं' इति सामानाधिकरण्यस्य अक्लृप्ताधाराधेयभावप्रयोजकत्वानुपपत्तेः । एवं च–शरीरवाचकानां शब्दानां शरीरिणि मनुष्यादिशब्ददृष्टान्तेन शक्तिः इत्यपि [1]कल्पनं अपास्तम् । मनुष्यशब्दस्य उक्तगत्या आत्मनि शक्तिकल्पनं विनैव 'मनुष्योऽहं' इति सामानाधिकरण्यस्योपपादिततया दृष्टान्तस्यासिद्धेः ।

न च तथासति 'ब्राह्मणो यजेत' इत्यादिश्रुतेः भ्रमजनकतया अप्रामाण्यप्रसङ्ग इति शङ्कनीयम् । बोध्यबुद्ध्यनुसारेण तत्सिद्धार्थानुवादकत्वात् । लोकसिद्धभ्रमानुवादकतामात्रेण अप्रामाण्याप्रसक्तेः । दृश्यते हि लोकसिद्धभ्रमानुवादकत्वमन्यत्रापि । 'य उदगान्महतोऽर्णवाद्विभ्राजमानः सरिरस्य मध्यात् स मा वृषभो रोहिताक्षस्सूर्यो विपश्चिन्मनसा पुनातु' [ तै. आ. ४-९२ ] इति, वस्तुगत्या मेरुं प्रदक्षिणीकुर्वन्नप्यादित्यः समुद्रतीरवासिनां समुद्रात् उद्गत इव प्रतिभातीति तद्भ्रमसिद्धं समुद्रादुद्गतत्वं श्रुत्या अनूद्यते । तथा [2]'तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति' [ छा. उ. ५-९-२ ] इति पञ्चाग्निविद्यागतवाक्यमपि लोकप्रसिद्धशरीरतादात्म्यभ्रमानुवादकम् । यो दिष्टं[3] गतः स एवाग्नौ प्रक्षेप्तुं नीयत इति हि तदर्थः । एवं 'नेक्षेतोद्यन्त-

---

1. **कल्पनमिति** जीवजगतोः ब्रह्मशरीरत्वं प्रकल्प्य जीवजगद्वाचकानां शब्दानां सर्वेषां शरीरित्वाभिमते ब्रह्मणि शक्तिः इति कल्पनम् ।

2. **तं प्रेतं दिष्टमिति** प्रेतं—मृतं, दिष्टं—परलोकं प्रति कर्मणा निर्दिष्टं इति भाष्यम् । परलोकाय कर्मभिरादिष्ट इति कल्पतरुः । मरणपर्याये दिष्टान्तपदे तु दिष्टपदं कर्मफलार्थकम् ।

3. **दिष्टं गत इति** लोकान्तरं गतो जीवात्मा, अग्नौ प्रक्षेप्तुं नीयमानं शरीरं, तयोस्तादात्म्यं विना उक्तवाक्यार्थानिर्वाह इत्यर्थः । अत्र दिष्टपदं कर्मफलभूतपरलोकपरम् ।

**अध्यासो नाम अतस्मिंस्तद्बुद्धिरित्यवोचाम । तद्यथा– पुत्रभार्यादिषु विकलेषु सकलेषु वा अहमेव विकलः सकलो वेति बाह्यधर्मानात्मन्यध्यस्यति, तथा देहधर्मान्–स्थूलोऽहं, कृशोऽहं, गौरोऽहं, तिष्ठामि, गच्छामि, लङ्घयामि च इति । तथेन्द्रियधर्मान्—मूकः, काणः, क्लीबः, बधिरः, अन्धोऽहम् इति । तथाऽन्तःकरणधर्मान् कामसङ्कल्पविचिकित्साध्यवसाया-**

मादित्यं नास्तं यन्तं कदाचन । नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥ ' [मनु. ४-३७] इत्यादीन्यपि उदाहार्याणि । अत्र वारिस्थत्वं भ्रमसिद्धमनूद्यते ।

न च—यन्मते परम्परासम्बन्धेन शक्तिद्वयेन वा ' ब्राह्मणो यजेत' इत्यादि-वाक्यं प्रवर्तते तत्र प्रमितिसिद्धार्थानुवादकत्वमित्युत्सर्गोऽनुसृतो भवति, तव तु स परित्यक्तः स्यादिति—वाच्यम् । परस्यापि हि साक्षात्सम्बन्धेनप्रवृत्तिनिमित्तप्रकारक-ज्ञानजनकत्वमित्युत्सर्गपरित्यागः प्राप्त एव । परं तु क्वचिदाधारतानियामकः परम्परा-सम्बन्धः क्वचिन्नेति कल्पनं शक्तिद्वयकल्पनं [1]बोध्यमतिक्लेशश्चेत्यधिकम् ।

ततश्च ' ब्राह्मणो यजेत ' इति वाक्यं वर्णाध्यासमाश्रित्य प्रवर्तत इति सिद्धम् ।

'अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत् ।' [मनु. ३-२ ] इत्याश्रमाध्यासः । ' तं चेदेतस्मिन् वयसि किञ्चिदुपतपेत् ' [ छा. उ. ३-१६-२ ] इति वयोऽवस्थयो-रध्यासः ।

अध्यासमुदाहर्तुं [2]पूर्वोक्तं लक्षणं स्मारयति—**अध्यासो नामेति** । उदाहरति—**तद्यथेति** । यद्यपि भेदग्रहस्य विद्यमानतया पुत्रादिधर्माणां शरीर-धर्माणां कृशत्वादीनामिव नाध्यास आत्मनि सम्भवति, तथापि पुत्रादिकृतशरीरोप-चारजनितं स्वात्मनि सुखभाक्त्वं पुत्रादिसाकल्यवैकल्यप्रयुक्तसाकल्यवैकल्ययोग्यं अध्यस्य सुखवैकल्यसाकल्याभ्यां तद्विशिष्टस्यात्मनो वैकल्यसाकल्ये अनुसन्दधानः पुत्रे

---

1. **बोध्यमतिक्लेशः**—बोध्यस्य–उपदेश्यस्य या मतिः—अन्तःकरणं, तस्य क्लेशः-तत्रतत्र परम्परासम्बन्धस्य आधारतानियामकत्वसदसद्भावनिर्णायकसामग्रीसम्पा-दनप्रयुक्तः क्लेशः । मु. बोध्यम् । अति०

2. **पूर्वोक्तमिति** 'स्मृतिरूपः परत्र पूर्वदृष्टावभासः अध्यासः' इति अध्यासलक्षण-वाक्यस्य अतस्मिंस्तदबुद्ध्यर्थकतया पूर्वं व्याख्यातत्वात् अस्य लक्षणस्य पूर्वोक्तत्वम् ।

**दीन्। एवं अहंप्रत्ययिनं अशेषस्वप्रचारसाक्षिणि प्रत्यगात्मनि अध्यस्य तं च प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेण अन्तःकरणादिष्वध्यस्यति। एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूपः कर्तृत्वभोक्तृत्वप्रवर्तकः सर्वलोकप्रत्यक्षः। अस्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते।**

विकले 'अहमेव विकलः' सकले 'सकलः' इति व्यवहरतीति बाह्यधर्मप्रयुक्तसाकल्यवैकल्याध्यास एव बाह्यधर्माध्यासो विवक्षितः। अहंप्रत्ययिनं–अहङ्कारम्। अध्यासस्यानन्तत्वं आत्मतत्त्वज्ञानं विना नाशरहितत्वम्।

एवं कर्तृत्वादिबन्धस्याध्यस्तत्वं[1] प्रसाध्य तत्प्रसाधनफलभूतां विषयप्रयोजनयोस्सिद्धिमाह—**अस्यानर्थहेतोः प्रहाणायेति**। अहमित्यभिमानस्य प्रवृत्तिजननद्वारा अनर्थहेतुत्वं प्रसिद्धमेव। बन्धस्य सत्यत्वे हि तत्त्वज्ञाननिवर्त्यता न स्यात् निष्प्रपञ्चात्मज्ञानं तत्त्वज्ञानं च न स्यात्। मिथ्यात्वे तु शुक्तिरजतादिवत् तत्त्वज्ञाननिवर्त्यता सिद्ध्यति, रजतसंसर्गे विद्यमानेऽपि नेदंरजतमिति तत्वज्ञानवत् निष्प्रपञ्चात्मज्ञानं[2] तत्त्वज्ञानमपि[3] भवतीति सफलं बन्धमिथ्यात्वनिरूपणम्। आरभ्यन्ते-अध्यापकैः [4]पाठ्यन्त इत्यर्थः।

नन्वत्र वेदान्तजन्यज्ञानस्य [5]साक्षात्कारात्मकप्रतिपत्तिरूपस्यात्मैकत्वविषयकस्य अनर्थात्मकबन्धनिवृत्तिः प्रयोजनमुच्यते। नैतदुपपद्यते–वेदान्तजन्यज्ञानस्य शाब्दबोधात्मकस्य प्रमाणस्वभावपर्यालोचनया साक्षात्कारत्वानुपपत्तेः, तदनुपपत्तौ च अनर्थनिवर्तकत्वमपि न सम्भवति, अपरोक्षाध्यासरूपे अहङ्काराद्यनर्थे अपरोक्षज्ञानस्यैव निवर्तकत्वात्।

---

1. मु. अध्यासत्वं
2. आ. ज्ञानमपि
3. आ. 'अपि' नास्ति
4. मु. पठ्यन्ते
5. **साक्षात्कारात्मकप्रतिपत्तीति** 'आत्मैकत्वविद्याप्रतिपत्तये' इति भाष्ये प्राप्त्यर्थकप्रतिपत्तिशब्दवैयर्थ्यमाशङ्क्य साक्षात्कारात्मकतालाभार्थं प्रतिपत्तिपदं इत्युक्तं पञ्चपादिकायाम्, उपपादितश्चैतत् विवरणे, तदनुसारेणेदं व्याख्यानम्।

ननु च ज्ञानस्यापरोक्षत्वं न करणविशेषप्रयुक्तम्, किं तु अपरोक्षार्थसम्बन्धप्रयुक्तम्। ततश्च 'यत् साक्षात् अपरोक्षात् ब्रह्म' [बृ. उ. ३-४-१] इतिशास्त्रात् ब्रह्मणो नित्यापरोक्षतया वेदान्तजन्यमपि ज्ञानं अपरोक्षब्रह्मसम्बन्धितया अपरोक्षमेव भविष्यतीति चेत्—

न—अपरोक्षार्थसम्बन्धिज्ञानमपरोक्षमिति वदता अर्थस्यापरोक्ष्यं किंरूपं विवक्षितमिति वक्तव्यम्। न तावदपरोक्षज्ञानविषयत्वम्, इतरेतराश्रयापातात्।

नापि चैतन्याभिन्नत्वम्, व्यवहितस्यापि घटाद्यवच्छिन्नचैतन्यस्य [1]स्वाभाविकचैतन्याभेदशालितया तादृशघटस्य आध्यासिकचैतन्याभेदशालितया च अपरोक्षत्वापातात्।

नापि—अभिव्यक्तचैतन्याभिन्नत्वं तत्, अभिव्यक्तिश्चावरणनिवृत्तिः, सा व्यवहिते वृत्तिसंसर्गाभावात् न सम्भवतीति—युक्तं वक्तुम्। तादृशचैतन्येन यदि [2]वास्तविकोऽभेदो विवक्षितः तदा पूर्वोक्तदोषस्तदवस्थ एव। अन्तःकरणावच्छिन्नचैतन्यस्याभिव्यक्ततया तेन [3]व्यवहितचैतन्यघटयोः वास्तविकस्याभेदस्य[4] विद्यमानत्वात्।

नापि—तादृशचैतन्येन स्फुरदभेदो विवक्षितः, व्यवहिते विद्यमानोऽप्यभेदो न स्फुरतीति—युक्तम्। तथासति सुखादीनामपरोक्षता न स्यात्। तेषां [5]संसर्गाध्यासाभ्युपगमेन [6]अभेदस्य [7]स्फुरत्ताया अभावात्।

नापि—निवृत्तभेदोपाधिकचैतन्याभेदशालित्वम्, व्यवहितेच अन्तःकरणावच्छेदतदनवच्छेदरूपभेदोपाधेर्विद्यमानतया न निवृत्तभेदोपाधिकाभेदशालित्वमिति—

---

1. **स्वाभाविकेति** इदमभेदे विशेषणम्।

2 **वास्तविकः—**स्वरूपसन्। अभासमान इति यावत्।

3. **व्यवहितेति** व्यवहितघटाद्यवच्छिन्नेत्यर्थः।

4. **अभेदस्य—**व्यवहितघटाद्यवच्छिन्नचैतन्ये स्वाभाविकस्य तादृशघटादौ आध्यासिकस्य अभेदस्य।

5. **संसर्गाध्यासेति** 'अहं सुखी' इत्यनुभवात् 'अहं सुखं' इत्यननुभवाच्च इति भावः।

6. आ. तत्राभेदस्य

7. **स्फुरत्तायाः—**भासमानतायाः।

युक्तम् । तथासति चरमसाक्षात्कारोत्पत्तिदशायां चैतन्यस्यापरोक्षता न स्यात् । तदा अविद्याया भेदोपाधेर्विद्यमानत्वात्[1] ।

नापि स्वव्यवहारानुकूलचैतन्याभेदशालित्वम् । आनुकूल्यस्य चैतन्य-विशेषणत्वे व्यवहितघटादौ [2]पूर्वोक्तदोषस्तदवस्थ एव । स्वव्यवहारानुकूलेन जीवचैतन्येन वस्तुगत्या अभेदस्य विद्यमानत्वात् । स्फुरत्ताविवक्षायां च सुखादौ दोषस्तदवस्थ एव । आनुकूल्यस्य अभेदविशेषणत्वे तु असम्भवः । अनुमेयस्य वृत्ति-कृतचैतन्याभेदाभावेऽपि[3] व्यवह्रियमाणतया व्यभिचारेण व्यवहारे जीवचैतन्या-भेदस्यानुकूलत्वाभावात् ।

नापि निवृत्तावरणचैतन्याभेदशालित्वं तत् । निवृत्तावरणत्वस्य आपरोक्ष्यज्ञाना-धीनज्ञानत्वेन आपरोक्ष्यस्य तद्घटितत्वेऽन्योन्याश्रयात् । तस्मात् न अपरोक्षार्थसम्ब-न्धित्वं ज्ञानस्यापरोक्षत्वम् । अर्थापरोक्ष्यस्यैव दुर्ज्ञानत्वात् ।

तस्मादेवं ज्ञानापरोक्षत्वं वक्तव्यम् । स्वाविषयविषयकज्ञानाजन्यज्ञानत्वं ज्ञाने अपरोक्षत्वम् । विशेषणज्ञानजन्यविशिष्टज्ञाने अव्याप्तिवारणाय स्वाविषयविषयकेति । विशेषणस्यापि विशिष्टज्ञानविषयत्वात् नाव्याप्तिः । न चैवमपि दण्डीति विशिष्ट-ज्ञानात् प्राक् 'दण्डकुण्डले' इति यत्र विशेषणज्ञानं तत्र कुण्डलस्य विशिष्टज्ञाना-विषयत्वादव्याप्तिरिति वाच्यम् । स्वाविषयविषयकत्वं यस्य ज्ञानस्य वस्तु-गत्या[4] जनकतावच्छेदककोटिनिविष्टं तदजन्यत्वस्य विवक्षितत्वात् । उक्तज्ञानस्य च कुण्डलविषयत्वं न तथेति तादृशज्ञानजन्यत्वेऽपि न दोषः ।

---

1. **विद्यमानत्वादिति** अविद्यानिवृत्तिं प्रति चरमसाक्षात्कारस्य हेतुतया चरम-साक्षात्कारोत्पत्तिद्वितीयक्षणे एव अविद्याया निवृत्तेः इति भावः । अज्ञाननिवृत्तिः ज्ञान-स्वरूपा घटप्रागभावनिवृत्तेः घटस्वरूपत्ववत्—इति मते तु नायं दोषः ।

2. **पूर्वोक्तदोषः**—जीवचैतन्येनस्वाभाविकाभेदवता व्यवहितावच्छिन्नचैतन्येन आध्यासिकाभेदवत्त्वात् व्यवहितस्यापि अपरोक्षत्वापत्तिः इति दोषः ।

3. **चैतन्याभेदाभावेऽपीति** तत्तदाकारधीवृत्तिमुल्लासमात्रादपि भवति व्यवहारे चैतन्याभेदस्य अनपेक्षितत्वात् अभाव इति भावः ।

4. **वस्तुगत्येति** स्वाविषयेत्यनेनान्वेति । वस्तुनो गतिः—स्थितिः—सत्ता । सत्तामात्रेण स्वाविषयत्वं विषयस्य विवक्षितम्, न तु तद्घटितरूपेण जनकत्वं विवक्षितम् । अन्यथा व्याप्तिज्ञानादेः व्याप्त्यादिविषयकत्वेनैव जनकतया अनुमित्य-

ईश्वरज्ञानस्योपादानगोचरज्ञानत्वेन 'बहुस्याम्' [छा. उ. ६-२-३] इतिवत् 'इदं ज्ञानं अस्य स्यात्' इति सङ्कल्परूपेण वा जनकत्वेन तज्जन्यतया अव्याप्तिवारणाय [1]अनैश्वरेत्यपि विशेषणीयम् ।

तथा सगुणध्यानजन्यस्य 'मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके' [छा. उ. ८-१२-५] इति श्रुतिसिद्धस्य ब्राह्मलौकिकपित्रादिकामसाक्षात्कारस्य स्वाविषयविषयकोपासनारूपज्ञानजन्यतया[2] तत्राव्याप्तिवारणाय अदृष्टाद्वारकेत्यपि विशेषणीयम् । न च सगुणोपासनाया अप्युपास्यसाक्षात्काररूपदृष्टद्वारतया पुनरपि स दोषस्तदवस्थ एव[3] इति शङ्कनीयम् । न हि तत्र तावन्मात्रमेव द्वारम्, पारलौकिकफलतया अदृष्टमपि तत्र द्वारभूतमस्त्येव ।

न चैवमपि[4] कोलाहलस्थलीयस्वपुत्रादिशब्दसाक्षात्कारस्य बुभुत्साद्वारा साक्षात्कारगतेष्टसाधनताज्ञानजन्यतया तत्र अव्याप्तिरिति शङ्कनीयम् । बुभुत्सया अन्यथासिद्धस्य तस्य साक्षात्काराजनकत्वात् । बुभुत्सापि शब्दान्तरगोचरसाक्षात्कारप्रतिबन्धिका । तस्मिन् प्रतिबद्धे [5]स्वसामग्रीवशादेव पुत्रादिशब्दसाक्षात्कार इति न तत्राव्याप्तिशङ्कापि ।

न चैवमपि 'सर्वं व्याप्तिज्ञानं अनुमितिकारणम् व्याप्तिज्ञानत्वात्' इत्येवमनुमितिस्थले अनुमितेस्सर्वव्याप्तिगोचरतया कारणीभूतव्याप्तिज्ञानविषयोऽपि व्याप्तिविशेषो विषयो भवतीति तत्रातिव्याप्तिरिति वाच्यम् । 'यत्र यत्र व्याप्तिज्ञानत्वं तत्र

---

विषयविषयकत्वादिना अजनकतया उक्तलक्षणस्य अनुमित्यादावतिव्याप्तिः स्यात् इत्यर्थः ।

1. **अनैश्वरेत्यपीति** ज्ञानमिति शेषः । स्वसमानाधिकरणत्वेन विशेषणेऽपि उक्तदोषवारणं सम्भवतीति ज्ञेयम् ।

2. **उपासनारूपज्ञानजन्यतयेति** ध्यानस्य ज्ञानसन्ततिरूपत्वं—इति मताभिप्रायेणेदम् । ध्यानस्य विधेयत्वं ज्ञानरूपत्वे न सम्भवति, अतो न ज्ञानरूपता, अपि तु आहार्यवृत्तिरूपता—इति मते तु अदृष्टाद्वारकेति जनकताविशेषणं न देयम् । द्वारभूतोपास्यसाक्षात्कारजन्यतामादाय अव्याप्तिवारणाय तु अदृष्टासहकृतत्वं ज्ञानविशेषणं देयम् ।

3. मु. 'एव' नास्ति

4. मु. 'अपि' नास्ति

5. **स्वसामग्रीवशादेवेति—एवश्च** तत्र बुभुत्साया अप्यकारणत्वं इति भावः ।

तत्र अनुमितिकारणत्वं' इति व्याप्तिज्ञानस्य साध्यतावच्छेदकानुमितिकारणत्वत्व-व्याप्यतावच्छेदकव्याप्तिज्ञानत्वत्वादिविषयतया अनुमितेः तदविषयतया च नातिव्याप्तिः । न चैवमपि साध्यतावच्छेदकव्याप्यतावच्छेदकविषयकव्याप्तिज्ञानमिति पक्षीकारे स दोषस्तदवस्थ इति शङ्क्यम् । तत्र साध्यतावच्छेदकव्याप्यतावच्छेदकयोस्सामान्यधर्ममात्रेण विषयीकारात् सामान्यधर्ममात्रानवच्छिन्नतया यःस्वविषयो न भवतीति विवक्षया तद्दोषवारणसम्भवात् ।

न च—एवमप्यभावज्ञानेऽतिव्याप्तिः, तस्य ज्ञानाभावजन्यतया ज्ञानाजन्यत्वात् इति—वाच्यम् । न हि तत्र अनुपलब्धिरूपज्ञानाभावमात्रं कारणम्, किं तु [1]योग्यतासहकृतम् । योग्यता च भेदसाक्षात्कारे प्रतियोगितादात्म्यज्ञानप्रसञ्जनरूपा संसर्गाभावस्थले प्रतियोगिसंसर्गज्ञानप्रसञ्जनरूपेति, तर्करूपाया योग्यतायाः स्वाविषयविषयतया तज्जन्ये अभावज्ञाने नातिव्याप्तिः । न चैवं प्रत्यभिज्ञायास्तत्तांशेऽतिव्याप्तिः । चरमज्ञानपदस्य अनुभवपरत्वात् । प्रत्यभिज्ञायाश्च तत्तांशे स्मृतिरूपतया न दोषः । इदं च नित्यानित्यज्ञानसाधारणमपरोक्षत्वमिति न कोऽपि दोषः ।

तादृशज्ञानजन्यव्यवहारयोग्यत्वं[2] च अर्थस्य अपरोक्षत्वम् । शाब्दज्ञानस्य च स्वाविषयविषयकशब्दतच्छक्त्यादिज्ञानजन्यतया नोक्तलक्षणसङ्गतिरिति नापरोक्षत्वम् । ततश्च कथं वेदान्तजन्यज्ञानस्य [3]अविद्यानिवर्तकत्वमुच्यत इति चेत्—

सत्यम् । यद्यपि शब्दादपरोक्षज्ञानं उक्तगत्या न सम्भवति, तथापि निर्विचिकित्सशाब्दज्ञानानन्तरं तत्समानविषयिण्या आदरदीर्घकालनैरन्तर्ययुक्तया भावनया संस्कृतेन चित्तेन अविद्यानिवर्तकः आत्मविषयकस्साक्षात्कारो जायते । मनसश्च कर्तृत्वादिविशिष्टात्मसाक्षात्कारकरणत्वं क्लृप्तमेव । विशुद्धात्मसाक्षात्कारे तु 'दृश्यते त्वग्र्यया बुद्ध्या' [क-उ. ३-१२-१२] इति श्रुतिप्रामाण्यात् उपासनाजनितसंस्कारो विशेषसहकारीति कल्प्यते । यद्यपि भावनाजनितस्य विधुरादिगतकामिन्यादिसाक्षात्कारस्य प्रायशो विसंवादो दृश्यत इति अत्रापि शुद्धात्मसाक्षात्कारे

---

1. **योग्यतासहकृतमिति** योग्यताविशिष्टं इत्यर्थः । योग्यानुपलब्धेरेव प्रमाणत्वात् इति भावः ।

2. मु. व्यवहारविषययोग्यत्वं

3. मु. अपरोक्षत्वमुच्यते

भावनानिष्पन्नतारूपसाधारण्याद्विसंवादशङ्का भवेत्, तथापि सा शङ्का निर्णीतप्रामाण्यस्वसमानाकारौपनिषदात्मज्ञानानुसन्धानेनोन्मूलनीया । न हि समानाकारयोर्ज्ञानयोः किञ्चिज्ज्ञानं संवादि किञ्चिन्नेति प्रतिपन्नम् । एवं परैर्निराकृतं शाब्दापरोक्षं तथैवानुसरतां **भामतीमतानुयायिनां** पक्षे परम्परया शाब्दज्ञानस्य अनर्थनिवर्तकत्वमिति [1]भाष्यार्थो द्रष्टव्यः ।

**विवरणानुयायिनस्तु** न शाब्दापरोक्षनिराकरणं अनुमन्यन्ते[2] । तथा हि— अपरोक्षार्थगोचरव्यवहारजनकत्वयोग्यज्ञानत्वमेव ज्ञानस्यापरोक्षत्वम् । न तु स्वाविषयविषयकज्ञानाजन्यज्ञानत्वम् । 'अयमस्मात् परः' 'अयमस्मात् अपरः' इति कालकृतपरत्वापरत्वप्रत्यक्षयोः [3]स्वाविषयविषयकबहुतरतपनपरिस्पन्दाल्पतरतपनपरिस्पन्दान्तरितजन्मत्वावगाह्यपेक्षाबुद्धिजन्ययोरव्याप्तेः, 'अयमेकः' 'अयमेकः' इत्याद्यपेक्षाबुद्धिजन्यद्वित्वादिसाक्षात्कारे अव्याप्तेश्च, विशिष्टमातापितृजन्यत्वज्ञानजन्ये ब्राह्मणत्वादिसाक्षात्कारे अव्याप्तेश्च[4] । न चोपदेशोपनीतं विशिष्टमातापितृजन्यत्वमपि ब्राह्मणत्वसाक्षात्कारविषय इति न विशिष्टमातापितृजन्यत्वज्ञानस्य स्वाविषयविषयत्वमिति वाच्यम् । न ह्युपनीतं सर्वं सर्वत्र भासत इति नियमः । तथासति परामर्शोपनीतस्य लिङ्गादेरपि[5] लैङ्गिकज्ञानविषयतापत्त्या अनुमितौ सर्वत्र अतिव्याप्त्यापत्तेः । स्वपदघटिततया अननुगतेश्च ।

---

1. **भाष्येति** 'अस्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते' इति भाष्येत्यर्थः ।

2. मु. संमन्यन्ते

3. आ. स्वाविषयविषयकसंयुक्तसंयोगबहुत्वाल्पत्वावगाह्यपेक्षा०

4. **अव्याप्तेश्चेति** इदमुपलक्षणम्—अनुपलब्धिरूपेण ज्ञानाभावेन जन्ये अभावज्ञाने अतिव्याप्तेश्च । स्वाविषयविषयकतर्कजन्यत्वेऽपि ज्ञानाजन्यत्वात् । सिद्धान्ते तर्कस्य ज्ञानरूपत्वाभावात् । न्यायमतानुसारेण तर्कस्य ज्ञानरूपत्वाङ्गीकारेऽपि, प्रसञ्जनाभावेऽपि घटाभावज्ञानोत्पत्त्या पूर्वोक्तप्रसञ्जनयोग्यत्वस्यैव अभावज्ञानहेतुत्वेन उक्तयोग्यत्वस्य ज्ञानरूपत्वाभावात् । न च अभावज्ञानं लक्ष्यम् । इन्द्रियाजन्यत्वेन प्रत्यक्षत्वाभावात् । शाब्दापरोक्षानङ्गीकर्तृभामतीकारमते प्रत्यक्षत्वस्य करणनिबन्धनत्वात् ।

5. मु. ०नीतस्यापि लिङ्गादेः

अर्थापरोक्ष्यघटितमपि ज्ञानापरोक्ष्यं वक्तुं न शक्यत इत्युक्तमिति चेत्, न—भवेदेतदेवम्, यद्यर्थापरोक्ष्यं दुर्निरूपं स्यात्। [1]अभिव्यक्तचैतन्याभिन्नतयाभासमानत्वमर्थापरोक्ष्यमित्येवंरूपेण सुनिरूपमेव हि तत्। न च संसर्गाध्यासविषयेषु 'अहं सुखी, इच्छामि' इत्येवमाकारेण प्रतीयमानेषु साक्ष्यभिन्नतया भासमानत्वाभावात् अव्याप्तिरिति वाच्यम्। तेषां अहन्त्वाकारेण चैतन्यस्य [2]संसर्गाध्यासाधिष्ठानत्वेऽपि स्फुरणात्मना[3] तादात्म्याध्यासोपपत्तेः। तथा च 'सुखं स्फुरति' इत्यनुभवः। दृष्टं च आकारभेदेन अध्यासवैलक्षण्यं शरीरत्वाकारेण संसर्गाध्यासविषये मनुष्यत्वाकारेण तादात्म्याध्यासविषये च शरीरे। ततश्च स्फुरणाभिन्नतया भासमानेषु सुखादिषु नाव्याप्तिः। न चानुमेयादावतिव्याप्तिः। अभिव्यक्तचैतन्याभिन्नतया भासमानत्वाभावात्[4]

---

1. **अभिव्यक्तचैतन्येति** घटादौ प्रत्यक्षे विषये अभिव्यक्तंघटाद्यधिष्ठानचैतन्यमादाय लक्षणं सङ्गमनीयम्। संसारदशायामपि ब्रह्मणः अभिव्यक्तेन साक्षिचैतन्येन वस्तुतोऽभेदे सत्यपि ब्रह्मणो जीवं प्रत्यपरोक्षत्वाभावात् अभिव्यक्तचैतन्याभेदमात्रं न अर्थापरोक्ष्यं भवतीति भासमानत्वपर्यन्तानुधावनम्। तथा च अभिव्यक्तचैतन्याभेदाभिव्यक्तिमत्त्वं अर्थापरोक्ष्यं इति फलितम्। संसारदशायां जीवब्रह्मणोः अज्ञानकृतभेदस्य तदभेदाभिव्यक्तिप्रतिबन्धकत्वात् ब्रह्मणः नोक्तमर्थापरोक्ष्यं इति भावः।

2. मु. संसर्गाधिष्ठानत्वेऽपि

3. **स्फुरणात्मनेति** प्रत्यक्षे घटादावपि 'अहं घटः' इत्यननुभवात् 'घटः स्फुरति' इत्यनुभवमादायैव अर्थापरोक्ष्यलक्षणस्य सङ्गमनीयत्वादितिभावः। न च 'घटः स्फुरति' इत्यनुभवे घटस्य स्फुरणाश्रयत्वमेव भाति न तु स्फुरणाभेद इति वाच्यम्। 'घटः स्फुरति' इति शब्दप्रयोगे आख्यातस्य आश्रयार्थकत्वाङ्गीकारेण स्फुरणाश्रयाभेदभानेन तन्मूलभूते प्रत्यक्षेऽपि स्फुरणाश्रयाभेदभानात्, स्फुरणाश्रयाभेदभानस्यैव स्फुरणाभेदभानरूपत्वात्, स्वप्रकाशचैतन्यतत्स्फुरणयोः ऐक्येन आश्रयाश्रयिभावस्य औपचारिकत्वात्, उपचारस्य च शब्दधर्मत्वात् 'स्फुरति' इति शब्दप्रयोगे एव स्फुरणतदाश्रयभावेन भेदभानात्। तथा च 'स्फुरति' इति प्रत्यक्षे स्फुरणद्वित्वानुपलम्भात् स्फुरणाभेद एव भासते इति अर्थापरोक्ष्यलक्षणं निरवद्यम्। विवेचितमेतत् अच्युतकृष्णानन्दतीर्थैः। आख्यातस्य आश्रयत्वार्थकत्वेऽपि नानुपपत्तिः। चैतन्यरूपस्फुरणघटयोर्हि परस्पराध्यासः। तथा च तयोः परस्परतादात्म्यम्। तादात्म्येन आश्रयत्वं च तादात्म्यमेवेति स्फुरणाश्रयत्वभानस्य स्फुरणाभेदभानरूपत्वात्—इति।

4. **भासमानत्वाभावादिति** परोक्षे विषये वृत्तिसंसर्गाभावेन तदधिष्ठानचैतन्यं नाभिव्यक्तम्, अभिव्यक्तेन साक्षिचैतन्येन अधिष्ठानचैतन्यस्य वास्तवाभेदसत्त्वेऽपि

न चैवमपि[1]—अभिव्यक्तिरत्रावरणनिवृत्तिः, तत्रच अपरोक्षज्ञानं प्रयोजकम् । ततश्च अपरोक्षार्थगोचरव्यवहारजननयोग्यत्वलक्षणस्य ज्ञानापरोक्ष्यस्य आवरणनिवृत्तिप्रयुक्ततया[2] अन्योन्याश्रयः—इति शङ्कनीयम् । अर्थस्याभिव्यक्तिर्हि न निरुक्तज्ञानापरोक्ष्याधीना । किं तु केषांचिदर्थानां अविद्यान्तःकरणतद्धर्मतदवच्छिन्नचैतन्यानां [3]स्वत एव । बाह्यघटादीनां तु वृत्तिसंसर्गाधीना । ततश्च बाह्ये घटादौ यत ज्ञानं स्वकारणमहिम्ना योग्यविषयसंसर्गेणोदेति तत् तत्र आवरणनिवर्तकम् । गन्धादेस्तु चाक्षुषवृत्तावयोग्यत्वादेव वृत्तिसंसर्गेऽपि न आवरणनिवृत्तिः । एवं धर्माधर्मादावपि । नचैवं—हृदयादिगोचरानुमितेः अन्तःकरणस्य हृदयस्थितिदशायां जायमानायाः तत्संसर्गेण निष्पत्तेः आवरणनिवर्तकता स्यात् । न च तस्य धर्मादिवदयोग्यत्वमेव, तथासति विशसनादिना बहिर्निर्गतस्याप्यभिव्यक्तिर्न स्यात्—इति वाच्यम् । न हि हृदयादिगोचरानुमितिः स्वकारणमहिम्ना विषयसंसृष्टा । या यत्करणजन्या यद्विषया वा जायमाना विषयेण नियततया संसृष्टैवोदेति सा खलु स्वकारणमहिम्ना [ स्वविषयमहिम्ना वा ] विषयसंसृष्टेत्युच्यते । चक्षुरादिकरणिका करणमाहात्म्यात् नियतविषयसंसर्गा । प्रत्यग्विषया तु विषयमहिम्ना । न हि काचिदपि वृत्तिः प्रतीचा संसर्गरहिता जायते । तस्य वृत्तिषूपादानत्वात्[4] । हृदयगोचरा त्वनुमितिः न तथा । न ह्यनुमानं वृत्तिसंसर्गे प्रयोजकम् । वह्न्याद्यनुमाने व्यभिचारात् । नापि हृदयरूपविषयमहिम्ना । हृदयाद्बहिर्निर्गतान्तःकरणावयवावच्छेदेन जायमानायाः हृदयविषयवृत्तेः हृदयसंसर्गनियमाभावात् ।

ततश्च वेदान्तजन्यज्ञानस्य प्रत्यगभिन्नब्रह्मविषयस्य विषयमहिमाधीनतत्संसर्गशालितया निरतिशयानन्दगोचरावरणनिवर्तकता, प्रतीचश्चाभिव्यक्तचैतन्यस्वरूपा-

---

नाभेदाभिव्यक्तिः, ततश्च अधिष्ठानचैतन्याभेदस्य भासमानत्वेऽपि अभिव्यक्तचैतन्याभेदस्य अभासमानत्वात् अभिव्यक्तचैतन्याभेदाभिव्यक्तिमत्त्वरूपं अर्थापरोक्ष्यं न परोक्षस्य विषयस्येति भावः ।

1. मु. 'अपि' नास्ति

2. मु. प्रयोजकतया

3. **स्वत एव**—आवरणाभावादेव । साक्षिचैतन्यरूपाभिव्यक्तचैतन्याध्यस्ततयैव सिद्धेः ।

4. **उपादानत्वात्**—विवर्तोपादानत्वात्, अधिष्ठानत्वादिति यावत् ।

त्मना [ भासमानस्य ] अपरोक्षार्थतया तद्विषयव्यवहारजननयोग्यस्य वेदान्तजन्यवृत्तिरूपस्य वा स्वरूपभूतस्य वा ज्ञानस्य अपरोक्षत्वं च। ततश्च 'दशमस्त्वमसि' इतिवाक्यजन्यमपि ज्ञानं साक्षिविषयतया अपरोक्षम्। एवं पर्वताद्यंशे अनुमितेरप्यपरोक्षत्वम्।

न चैवं आवरणनिवृत्तौ ज्ञाने अपरोक्षत्वातिरिक्तस्य विषयसंसर्गस्य प्रयोजकतायाः स्वीकारात् किमर्थं वेदान्तजन्यज्ञानस्यापरोक्षत्वप्रसाधनमिति शङ्कनीयम्। यद्यदावरणनिवर्तकं तत् सर्वं अपरोक्षमिति नियमः प्रकृते बाधितो माभूदिति। 'नेदं रजतं, किं तु शुक्तिः' इतिपरोक्षज्ञानं तु विक्षेपांशाज्ञानमात्रनिवर्तकम् [1]न त्वावरणमपि निवर्तयति।

न चैवं—अध्ययनगृहीतवेदान्तजन्यज्ञानस्यापि साक्षिगोचरस्य श्रवणादेः पूर्वं अज्ञाननिवर्तकता स्यात् अपरोक्षत्वात्—इति वाच्यम्। निदिध्यासनपर्यन्तं तत्तद्दोषप्रतिबद्धस्य अज्ञानानिवर्तकत्वात्। तत्र च श्रवणनिवर्तनीयो दोषः 'इदं वाक्यं प्रत्यगभिन्नब्रह्मपरं न सम्भवति' इति प्रमाणासम्भावनारूपः। मननिवर्तनीयश्च 'विरुद्धतया भासमाने प्रतीचि कथं ब्रह्माभेदः' इति प्रमेयासम्भावनारूपः। निदिध्यासननिवर्तनीयस्तु [2]कर्तृत्वाद्यध्यासस्य स्वरसवाहितारूपो विपरीतभावनात्मकः। अतो निदिध्यासनान्तैः साधनैः प्रतिबन्धकेष्वपनीतेषु जायमानं वेदान्तवाक्यजन्यं ज्ञानं अविद्यां नाशयत्येव।

न च—यन्मते मानसं ज्ञानं अविद्यानिवर्तकं तस्य निदिध्यासनानन्तरं वेदान्तवाक्यानुसन्धानं नापेक्षितम्, शाब्दापरोक्षवादिनस्तु तत्कल्पनं निर्मूलमिति-शङ्कनीयम्। 'ओमित्यात्मानं युञ्जीत' [म. ना. १७ - १५] इत्यादिभिः शास्त्रैः, तापनीयश्रुत्यादिपर्यालोचनया [3]महावाक्यसमानार्थस्य प्रणवस्य ध्यानकालेऽप्यनुसन्धान

---

1. **न त्वावरणमपीति** विषयगताज्ञानातिरेकेण प्रमातृगताज्ञाने प्रमाणाभाव इति भावः।

2. **कर्तृत्वाद्यध्यासस्य स्वरसवाहितारूप इति** पूर्वजन्मस्वसकृदनुभवजन्यो वासनासङ्घः स्वरसः, तेन प्रवहनशीलः स्वरसवाही। अतिनिरूढवासनाप्रयुक्तः कर्तृत्वाद्यध्यासप्रवाह इति समुदितार्थः। मु. कर्तृत्वाध्यासस्य

3. प्रणवस्य महावाक्यसमानार्थत्वमुपपादितं नृसिंहोत्तरतापनीये प्रथमखण्डे, विवृतं द्वितीयादिखण्डेषु, व्याख्यातश्च श्रीविद्यारण्यस्वामिभिः।

प्रतिपादनेन अखण्डाकारचरमवृत्तिकालेऽपि [1]तदनुस्मरणस्य श्रुतिसम्मतत्वात् । अस्मिंश्च पक्षे भाष्यं[2] न परम्पराभिप्रायं व्याख्येयम् ।

एवं 'तं त्वौपनिषदं पुरुषं पृच्छामि' [बृ. उ. ३-९-२६] इति श्रुतिप्रतिपन्नमुपनिषदेकगम्यत्वं 'आचार्यवान् पुरुषो वेद तस्य तावदेव चिरम्' [छा.उ. ६-१४-२] इति आचार्याधीनस्य शाब्दज्ञानस्य जन्मान्तरनिवृत्तप्रायसकलदोषपुरुषविशेषे प्रारब्धमात्रावशेषरूपजीवन्मुक्तिसाधनत्वं 'तस्मै मृदितकषायाय तमसः पारं दर्शयति' [छा. उ. ७-२६-२] इति दृशिधातूपात्तसाक्षात्काररूपत्वं, 'तद्धास्य [3]विजज्ञौ' [छा. उ. ६-१६] इति विशिष्टज्ञानरूपत्वं च उपपद्यते । [4]तथा 'तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनम् । ज्ञाने त्वनाहते[5] तस्मिन् सर्वं ब्रह्ममयं भवेत् ॥' इति बृहन्नारदीयवचनं 'तत्त्वमस्यादिवाक्योत्थं यज्जीवपरमात्मनोः । तादात्म्यविषयं ज्ञानं तदिदं मुक्तिसाधनम् ॥' इति वाक्यवृत्तौ भगवत्पादवचनं च सङ्गच्छते ।

ब्रह्मणश्च मनोगम्यत्वं 'यन्मनसा न मनुते' [के. उ-१-५] इति श्रुत्या निषिद्धम् । न च सा श्रुतिः 'दृश्यते त्वग्र्यया बुद्ध्या' [क. उ-३-१२] इति श्रुत्यनुसारेण अशुद्धमनोविषयेति वाच्यम् । 'येनाहुर्मनो मतं' इति वाक्यशेषस्य मनोमात्रपरतया तदैकरूप्याय पूर्वत्रापि मनोमात्रग्रहणस्योचितत्वात् । 'दृश्यते' इति श्रुतिस्तु मनसः उपादानतया कारणत्वाभिप्राया भविष्यति । दृश्यते च तावन्मात्राभिप्राया अन्यत्रापि तृतीया 'मनसा ह्येव पश्यति मनसा शृणोति' [बृ. उ. १-५-३] इत्यादौ । न हि चाक्षुषादिज्ञाने मनसः करणत्वं सम्भवति । एवं [6]वेदान्तप्रमाणकेऽपि ब्रह्मसाक्षात्कारे भविष्यति । न च शब्दगम्यत्वमपि निषिद्धं 'यतो वाचो निवर्तन्ते' [तै. उ. २-९] इति । तत्र हि प्रवृत्त्यभावरूपा निवृत्तिः प्रतिपाद्यते । वाचश्चार्थप्रवृत्तिश्शक्तिरूपेति तन्निषेधेऽपि लक्षणया औपनिषदत्वे न काचिदनुपपत्तिः ।

---

1. **तदनुस्मरणस्य**—महावाक्यानुसन्धानस्य

2. **भाष्यम्**—शाब्दज्ञानस्य अनर्थनिवर्तकत्वप्रतिपादकं 'अनर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते' इत्यादि भाष्यम् ।

3. मु. विजज्ञाविति विजज्ञावितीति

4. मु. 'तथा' नास्ति

5. **अनाहते**—अप्रतिबद्धे

6. **वेदान्तप्रमाणके**—वेदान्तकरणके

**यथाचायमर्थः सर्वेषां वेदान्तानां तथा वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्यामः ।**

**वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्य इदमादिमं सूत्रम्—**

## अथातो ब्रह्मजिज्ञासा ॥ १ ॥

**तत्र अथशब्दः आनन्तर्यार्थः परिगृह्यते न अधिकारार्थः, ब्रह्मजिज्ञासाया**

ननु—वेदान्तानामात्मैकत्वप्रतिपत्तिः प्रयोजनमिति कथमुच्यते । प्रपञ्च-सृष्ट्यादीनां, तदनुगुणतया ब्रह्मणि सर्वज्ञत्वादिगुणबृन्दस्य च तत्र तत्र प्रतिपादन-दर्शनात्—इत्याशङ्क्य, अध्यारोपप्रक्रियया अपवादशेषभूतानां तद्वाक्यानां प्रत्यग-भिन्नब्रह्मण्येव तात्पर्यमिति वक्ष्यमाणैर्न्यायैः स्पष्टं भविष्यतीत्याह—**यथा चायमर्थ इति** ।

ननु—वेदान्तानामेव ब्रह्म प्रतिपाद्यम्, तत् कथमस्य शास्त्रस्य विषयः—इत्याशङ्क्य–'साक्षाद्विषयत्वासम्भवेऽपि वेदान्तद्वारा विषयो भविष्यति । सूत्ररूपस्य शास्त्रस्य तात्पर्यनिर्णयानुकूलयुक्तिज्ञानं साक्षात्प्रयोजनम् । युक्तयो विषयः । युक्ति-ज्ञानमेव मीमांसेत्युच्यते । मीमांसाया वेदान्तवाक्यं[1] विषयः । तात्पर्यनिर्णयः प्रयोजनम् । वाक्यस्य च ब्रह्म विषयः तज्ज्ञानं प्रयोजनमिति परम्परया सूत्राणां ब्रह्म विषयः'—इत्यभिप्रेत्याह—**वेदान्तमीमांसाशास्त्रस्येति** । व्याचिख्यासितस्येत्यनेन स्वग्रन्थस्य सूत्रार्थज्ञानं साक्षात्प्रयोजनमिति दर्शितम् । आदिमं सूत्रं इत्यनेन विषयादिप्रतिपादनद्वारा[2] [3]कृत्स्नशास्त्रोपोद्घातसङ्गतिर्दर्शिता ।

सूत्रपदानि व्याचष्टे—**तत्रेति** । ननु 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' [अमर–नाना] इति बहुष्वर्थेष्वनुशिष्टस्य कथं सहसा आनन्तर्यार्थत्वनिश्चयः–

---

1. **वेदान्तवाक्यं विषय इति** मीमांसायाः वेदान्तवाक्येषु तात्पर्यनिर्णायक-तात्पर्यलिङ्गात्मकयुक्तिज्ञानरूपत्वात् वेदान्तविषयकत्वम् । इत्थञ्च वेदान्तविषयकमीमांसा-जनकशास्त्रं वेदान्तमीमांसाशास्त्रशब्दार्थः पर्यवसितः ।

2. मु. प्रतिपत्तिद्वारा

3. आ. द्वारा उपोद्घात

इत्याशङ्क्य, अर्थान्तराणामनुपपन्नत्वं प्रकृते दर्शयति—**नाधिकारार्थ इत्यादिना।** जिज्ञासा हि ज्ञानेच्छा, शास्त्रेण च तत्प्रतिपादने क्रियमाणे [1]तदारम्भार्थकत्वं सूत्रस्याथशब्दस्य भविष्यति, न च तदस्ति—इत्यभिप्रायेणाह—**ब्रह्मजिज्ञासाया इति।**

ननु[2]—जिज्ञासाशब्दस्य विचारेऽपि प्रचुरः प्रयोगो दृश्यते 'तद्विजिज्ञासस्व [तै. उ. ३-१] स विजिज्ञासितव्यः' [छा. उ. ८ - ७] इत्यादिश्रुतौ। न च तत्रेच्छा प्रतिपाद्या। तस्या विध्यनन्वयित्वात्। 'तस्मात् ब्रह्म जिज्ञासितव्यं' इति च भाष्यकारप्रयोगः। ततश्च जिज्ञासापदस्य विचारार्थकत्वपक्षे तस्य सूत्रैः क्रियमाणतया तदारम्भार्थकत्वमथशब्दस्योपपद्यते। न च—आरभ्यत इत्यनुक्त्वाऽपि विचारे क्रियमाणे तदारम्भस्य ज्ञातुं शक्यतया तत्प्रतिपादनवैयर्थ्यमिति वाच्यम्। तथा सति 'ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः' [भ. गी. ७ - २]। 'व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्व' [बृ. उ. २ - ४ - ४] इत्यादावपि 'वक्ष्यामि' 'व्याख्यास्यामि' इत्यादिप्रतिज्ञाकरणं व्यर्थं स्यात्। तत्र यदि '[3]त्वामस्मि

---

1. **तदारम्भार्थकत्वम्**—इच्छाप्रतिपादनारम्भार्थकत्वम्—प्रतिपाद्यतया इच्छारम्भार्थकत्वमिति यावत्। इच्छायाः विषयसौन्दर्यज्ञानमात्राधीनतया पुरुषकृत्यसाध्यायाः कर्तव्यत्वेनप्रारम्भासम्भवात्।

2. 'अवयवशक्त्या ज्ञानेच्छाबोधकमिदं जिज्ञासापदं' इति भामत्यनुसारेण अथशब्दस्य आरम्भार्थकत्वासम्भवो निरूपितः। 'लक्षणया विचारबोधकमिदं जिज्ञासापदं' इति विवरणपक्षे आरम्भार्थकत्वसम्भवमाशङ्क्य निराकरोति—**नन्वित्यादिना** अनुचितत्वादित्यन्तेन। यद्यपि आरम्भशक्तत्वरूपं आरम्भार्थकत्वं अस्याप्यथशब्दस्य अस्त्येव, तथाऽपि आरम्भबोधकत्वं अत्र नास्तीति भाष्यार्थः। नानार्थकशब्दानां तात्पर्यवशात् अर्थविशेषस्यैव बोधकतायाः सर्वसम्प्रतिपन्नत्वात्।

3. **त्वामस्मि वच्मीत्यादि** 'अस्मि' इति पदं अहमर्थे। अत्र 'वच्मि' इत्यनुपयुक्तार्थम्, तदनुपादानेऽपि वचनक्रियाप्रतीतेः। 'त्वां' 'अस्मि' इति पदे अपि अनुपयुक्तार्थे। सम्बोध्यतयैव वचनकर्मतावगतेः, 'वच्मि' इत्युत्तमपुरुषेणैव अस्मदर्थस्य तत्कर्तृत्वप्रत्ययात्। 'आत्मीयां' इति पदमपि अनुपयुक्तार्थम्। आत्मीयाया एव मतेः सर्वैरास्थानात्। अतः एतावानर्थोऽत्र द्योत्यते—यतोऽत्र विदुषां—असाधारणज्ञानवतां समवायः—एकवाक्यतापन्नः समुदायः तिष्ठति, तस्मात् आत्मीयां—अप्रतार्यां प्रमाणपरिगृहीतां मतिं आस्थाय—अवलम्ब्य अत्र स्थितिं—सावधानस्थितिं विधेहि, इति त्वां—उपदेशार्हं अहं—आप्तः वच्मि—उपदिशामि—इति। स्पष्टश्चैतत् काव्य-

**अनधिकार्यत्वात् । मङ्गलस्य च वाक्यार्थे समन्वयाभावात् । अर्थान्तर**

वच्मि विदुषां समवायोऽत्र तिष्ठति[1] आत्मीयां मतिमास्थाय[2]स्थितिमत्र विधेहि तत् ॥' इति [3]नटीं प्रति सूत्रधारवचने अहंवच्मीत्यस्य वैयर्थ्यं माभूदिति वचनसामान्य-प्रतिपादकस्य वच्मीत्यस्य उपदेशात्मकवचनविशेषे लक्षणां स्वीकृत्य तदर्थस्य [4]अवश्यकर्तव्यताद्योतनफलकत्वमुपेयते, तथा 'अहं—सखा[5] भर्ता वा गुरुसमीपत आज्ञारूपोपदेशग्राह्यमपि अर्थं लालित्येन प्रतिपादयामि' इति विशेषपरं सत् अधुनै-वावश्यं सावधानतया ग्राह्यमिति द्योतयतीति न वैयर्थ्यम्, तर्हि प्रकृतेऽपि [6]अधिकारमात्रपरस्याथशब्दस्य अधिकारिविशिष्टारम्भविशेषलक्षणामुपेत्य अधिकार्य-भावादनारम्भणीयमितिशङ्कानिवृत्तिद्योतनफलकत्वमुपेयम्—इति चेत्

न—आनन्तर्यार्थत्वे तत्प्रतियोगिविवेकादिप्रतिपादनद्वारा अधिकारिविशे-षलाभफलकत्वे सम्भवति अधिकारिसामान्यलाभफलकस्यारम्भार्थकत्वस्यानुचितत्वात् ।

ननु—मङ्गलार्थता तर्ह्यस्तु । न च तस्यानन्वयः । 'ब्रह्मजिज्ञासा मङ्गलं' इति स्तुतिपरत्वोपपत्तेः—इत्याशङ्क्य, शास्त्रारम्भे तदुपयोगितया अधिकारिबोधन-सम्भवे न व्यर्थप्रायस्तुतिपरत्वं कल्पनीयमित्याह—**मङ्गलस्य चेति** । ननु—[7]शास्त्रादौ मङ्गलमाचरितव्यम्, ततो मङ्गलार्थत्वे न व्यर्थता—इत्याशङ्क्य, सत्यं मङ्गलमाचरितव्यम् । तदर्थं न मङ्गलप्रतिपादनमपेक्षितम् । न हि मङ्गलप्रतिपादन-मात्रेण मङ्गलाचारस्सिद्धो भवति । अपि तु तदनुष्ठानेन । तच्च अथशब्दोच्चारणं

---

प्रकाशप्रदीपोद्योतेषु । इदंदृष्टान्तेन 'नच आरभ्यते' इत्यादिशङ्कासमाधानं **शिवार्क-मणिदीपिकायामुक्तम्** ।

1. मु. वर्तते आ. विद्यते

2. मु. आ. ०मादाय

3. **नटीं प्रति सूत्रधारवचने इति** विद्वत्सभां गच्छन्तं आप्तं प्रति कस्यचि-दुक्तिरियं इति तु नागेशः ।

4. मु. अवश्यवक्तव्यता

5. 'ज्ञानं तेऽहं' इत्यत्र सखा [कृष्णः] 'व्याख्यास्यामि ते' इत्यत्र भर्ता [याज्ञवल्क्यः] ।

6. **अधिकारेति** आरम्भेत्यर्थः ।

7. **शास्त्रादाविति** सूत्रकृतेति शेषः । नन्वित्यादिशङ्कातत्समाधाने **शिवार्क-मणिदीपिकायां** उपपादिते ।

[1]तदनुसन्धानं वा । तथा च स्मृतिः 'ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ।' इति । अत्र हि माङ्गलिकाविति (तदस्य) 'प्रयोजनं' [ पा. सू. ५-१-१०९ ] इत्यधिकारविहितठञ्प्रत्ययान्तम् । ततश्च [2]तदनुसन्धानस्य तदुच्चारणस्य वा मङ्गलत्वे, विषयतया तत्राथशब्दस्य कारकत्वात् मङ्गलप्रयोजनकत्वमुपपद्यते । तच्च आनन्तर्याद्यर्थान्तरपरत्वेऽपि सिध्यतीत्याह— [3]**अर्थान्तरप्रयुक्त एव ह्यथशब्द इति ।**

[4]एतेन–भाष्यकृता मङ्गलं कुतो न कृतम्, न च निबद्धं ग्रन्थादौ–इति शङ्का निरस्ता । नित्यसन्ततात्मतत्त्वानुसन्धानेन हि भगवता भाष्यकृता मङ्गलं न कृतमिति न शङ्कनीयम् । ग्रन्थतो निबन्धनं च शिष्याणामाचारप्रदर्शनार्थम् ।

---

1. आ. तदनुध्यानं

2. आ. तदनुध्यानस्य

3. **अर्थान्तरप्रयुक्त एव हीति** एवकारोऽवधारणार्थः । सर्वत्र अथशब्दः मङ्गलप्रयोजनक एव, न तु मङ्गलवाचको वा तल्लक्षको वा । अतो मङ्गलस्य अशब्दार्थस्य वाक्यार्थे विशेष्ये विशेषणतया समन्वयो न सम्भवति । तथा च अर्थान्तरबोधक एव सन् मङ्गलप्रयोजनकः—इति **भामती** ।

अथशब्दो मङ्गलवाचकः । अथापि अत्रत्याथशब्दः न मङ्गलबोधकः । मङ्गलस्य कर्त्रादिकारकान्यतमभावे प्रमाणाभावात् कारकान्तराणां विद्यमानत्वाच्च ब्रह्मजिज्ञासायां न भेदसम्बन्धेनान्वयः । प्रशंसापरतया अर्थवादत्वप्रसङ्गात् न अभेदेनान्वयः । अतश्च वाक्यार्थे समन्वयाभावात् नात्र मङ्गलबोधकः । अर्थान्तरबोधक एव सन् मङ्गलप्रयोजनकः—इति **विवरणम्** । **इदञ्च व्याख्यानं** विवरणानुसारेण अत्र प्रवृत्तम् । एवकारोऽवधारणार्थक एव । 'आनन्तर्याद्यर्थान्तरपरत्वेऽपि' इति अपिशब्दः अर्थान्तरबोधकत्वस्य मङ्गलप्रयोजनकत्वस्य च अविरोधप्रदर्शनाय ।

4. श्रुतप्रकाशिकातत्त्वटीकयोः विशिष्टाद्वैतिभिरुक्तं दूषणं आभासीकरोति—**एतेनेत्यादिना** एतेन—अर्थान्तरपरत्वेऽपि मङ्गलफलकत्वसमर्थनेन । श्रुतप्रकाशिकायां हि— शाबरशाङ्करयोस्तु ईश्वरानभ्युपगमात् जीवब्रह्मभेदानभ्युपगमाच्च नमस्यानादरः इत्युक्तम्, तदसङ्गतम्—जीवब्रह्मभेदाभ्युपगन्तृभिरपि श्रीमध्वाचार्यैः तत्त्वसङ्ख्यानाख्य प्रकरणारम्भे नमस्याया अकरणात् नमस्यानादरे प्रयोजकोक्तेरसङ्गतेः । तत्र जयतीर्थीयटीकायां मानसादेरपि मङ्गलत्वमुक्तम् । "मङ्गलाचारः केषुचित् ग्रन्थेषु अदृष्टोऽपि निमित्तफलाभ्यामुन्नेयः" इति तत्त्वटीकायां तदीयैरेवोक्तम् । यत्तु तत्त्वटीकायां— युष्मदर्थानुसन्धानस्यैव प्राथम्यात्, मध्यलघुत्वेन वह्निदैवत्यस्य रगणस्य निवेशाच्च

**प्रयुक्त एव ह्यथशब्दः श्रुत्या मङ्गलप्रयोजनो भवति । पूर्वप्रकृतापेक्षायाश्च**

[1]तच्च[2]अथशब्दव्याख्यानेनैव आचारप्रदर्शनं स्फुटं भविष्यतीति न तदर्थं निबन्धनं कृतम् ।

ननु—पूर्वप्रकृतापेक्षार्थत्वं अथशब्दस्य दृष्टम् । यथा 'आत्मा नित्यः, अथानित्यः?' इति विप्रतिपत्तिवाक्ये । नन्वत्र प्रकृतापेक्षां किं तेनैव रूपेणाथशब्दः प्रतिपादयति, उत तां प्रयोगोपाधिं कृत्वा प्रकृतं अनित्यशब्देन विशेष्यतयाऽपेक्ष्यमाणमात्मानमेव प्रतिपादयति । नाद्यः । तथा सत्यनन्वयात् । आत्मा नित्यः [3]प्रकृतापेक्षा अनित्य [4]इति किं केन सङ्गतं स्यात् । [5]न द्वितीयः । तथा सति 'आत्मा नित्यः, आत्मा अनित्यः' इति एकस्मिन्वाक्ये विशेष्यस्य द्विरुपादानं व्यर्थं स्यात् इति चेत्, न–द्वे एते वाक्ये । एकेन आत्मा नित्य इत्युक्ते अन्येन अथ अनित्य इति हि प्रयुज्यते । ततश्च विप्रतिपत्तिरूपत्वमप्युपपद्यते । तत्राथशब्दस्य प्रकृतापेक्षां प्रयोगोपाधिं कृत्वा आत्मप्रतिपादकत्वं दृष्टम् । तद्वत् प्रकृते किं न

---

न मङ्गलाचरणमिदमिति । तन्न युक्तम्—अध्यासाक्षेपाय अनात्मविविक्तात्मतत्त्वानुसन्धानस्यैव तत्र कृतत्वात् । स्पष्टश्चैतत् पञ्चपादिकाविवरणयोः । शब्दोच्चारणानुसन्धानयोः तत्र मङ्गलत्वाविवक्षणात् रगणनिवेशस्य न दोषत्वम् । ईश्वरानभ्युपगमोक्तिश्च अद्वैतभाष्यादर्शनमूला । ईश्वराभ्युपगमस्य आत्मगृहीत्यधिकरणे स्पष्टमुक्तत्वात् । जीवब्रह्मभेदानभ्युपगमोक्तिश्च तथैव । सूत्रभाष्ये बहुत्र तदभ्युपगमस्य उपपादितत्वात् । न चैवमद्वैतहानिः । स्वरूपैक्यस्य विशिष्टयोर्भेदस्य च अविरोधात् । परैरपि विरुद्धविशेषणानां भेदकत्वस्य जन्माद्यधिकरणे उक्तत्वात् । परन्तु विशेषणमिथ्यात्वात् भेदमिथ्यात्वं इति विशेषः । काठकमाण्डूक्यतैत्तिरीयोपनिषद्भाष्यप्रारम्भे अद्वैताचार्याणां नमस्यायां आदरदर्शनात् नमस्यानादरे हेतूक्तिश्चासङ्गता—इत्यलं परकीयसिद्धान्तापरिज्ञानमूलकदूषणविमर्शनेन ।

1. मु. ततश्च

2. **अथशब्दव्याख्यानेनैवेति** सावतरणेन 'अर्थान्तरप्रयुक्त एव ह्यथशब्दः श्रुत्या मङ्गलप्रयोजनो भवति' इति भाष्यवाक्यरूपेणेत्यर्थः ।

3. मु. पूर्वप्रकृतापेक्षा

4. आ. इत्युक्ते

5. मु. नापि

**फलत आनन्तर्याव्यतिरेकात् ।**

**सति चानन्तर्यार्थत्वे यथा धर्मजिज्ञासा पूर्ववृत्तं वेदाध्ययनं नियमेनापेक्षते एवं ब्रह्मजिज्ञासाऽपि यत् पूर्ववृत्तं नियमेनापेक्षते तद्वक्तव्यम् । स्वाध्यायानन्तर्यं तु समानम् । नन्विह कर्मावबोधानन्तर्यं विशेषः ।**

स्यात्—इत्याशङ्क्य, तथा सति अत्र जिज्ञासयाऽपेक्ष्यमाणं स्वहेतुतयाऽऽक्षिप्तत्वात् प्रकृतं च विवेकादिकमेव पर्यवस्यति, ततश्चानन्तर्यार्थत्वपक्षे योऽर्थस्सिध्यति सोऽस्मिन् पक्षेऽपि सिध्यतीति प्रतिपादयति—**पूर्वप्रकृतापेक्षायाश्चेति** । परं तु विप्रतिपत्त्यारम्भ एव तदर्थकाथशब्दप्रयोगस्साधुः वृद्धव्यवहारानुसारादिति—फलत—इतिशब्दगतेन काक्वा सूच्यते ।

एवं कस्यचित् प्रष्टुः अप्रस्तुतत्वात्, ब्रह्मजिज्ञासा कृत्स्नेति प्रतिपादनस्यानर्थक्यात् तथा सति अधिकार्यलाभाच्च, प्रश्नकारत्स्न्यार्थयोरप्यनुपपन्नत्वं द्रष्टव्यम् ।

ननु—आनन्तर्यार्थत्वपक्षेऽपि वेदाध्ययनमेव तत्प्रतियोगिभूतमस्तु । 'स्वाध्यायोऽध्येतव्यः' [तै. आ. २. १९] इति विधिना हि स्वाध्यायस्य यद्यत् प्रयोजनं तत्सर्वमधीतेनैव संपादनीयमिति नियमिततया, वेदान्तवाक्यानुसन्धानजन्यस्य तत्तात्पर्यनिर्णयद्वारा तदर्थावबोधफलकस्य च वेदान्तविचारस्य वेदान्तविषयकदृढसंस्कारापेक्षतया स्वाध्यायप्रयोज्यस्य अध्ययननियमापेक्षत्वात्, धर्मविचारवत् ब्रह्मविचारेऽपि अध्ययनानन्तर्यस्यावश्यकत्वात्—इत्याशङ्क्य, तथापि तत् न पुष्कलकारणम्, विचारद्वयसाधारणत्वात्, अतो विशेषकारणमन्यदपि वक्तव्यमित्याशयवानाह—**स्वाध्यायेति** । स्वाध्यायपदं तदध्ययनपरम् ।

**नन्विति** । [1]अत्र किं कर्मावबोधस्य [2]पुष्कलकारणत्वं शङ्क्यते, किं वा

---

1. 'नन्विह कर्मावबोधानन्तर्यं विशेषः' इति भाष्येण पूर्वपक्षत्वेनोक्तमर्थं सिद्धान्तत्वेन स्वीचक्रुः अर्वाचीनाः श्रीभास्कररामानुजादयो भाष्यकृतः । एतत्पूर्वपक्षे निराकृते अर्वाचीनसिद्धान्तानां अनवकाशो भविष्यतीत्याशयेन विवरण–परिमल–वादनक्षत्रमालाद्युक्ताभिः पराभिमताभिश्च उपपत्तिभिः इमं पूर्वपक्षं परिपोषयति निराकर्तुं—**अत्रेत्यादिना** 'तत् सिद्धं कर्मविचारानन्तरमेव ब्रह्मविचारः' इत्यन्तेन ग्रन्थेन ।

2. **पुष्कलकारणेति** सामग्रीत्यर्थः, **अव्यवहितपूर्वत्वसम्बन्धेनफलविशिष्टेति** यावत् ।

तदन्तर्गतिमात्रम् । नाद्यः । विवेकादीनामन्येषामपि श्रुतिस्मृतिसिद्धानां विद्यमानत्वात् न कर्मावबोध एव सामग्री वेदान्तविचारे । न द्वितीयः। तत्रापि किं विविदिषाद्वारा ब्रह्मविचारोपयुक्ततया तदानन्तर्यं अथशब्दार्थतया विवक्षितम्, उत ब्रह्मविचारकालेऽपि कर्मणां करणीयतया तदानन्तर्यं अथशब्दार्थ इति । नाद्यः—आनन्तर्योक्तिद्वारा अधिकारिविशेषणसमर्पको ह्यथशब्दः । ततश्च कर्मावबोधानन्तर्ये तद्बोधस्य कर्मविचारं विना असिद्धेः विचारितकर्मत्वमधिकारिविशेषणं लभ्यते। न च विविदिषोपयुक्तस्य विचारितकर्मत्वस्य अधिकारिविशेषणत्वमत्र वक्तव्यम् । 'अधिकारं विना कृतमकृतं' इति शङ्कानिराकरणद्वारा यन्निर्णय उपयुज्यते, तदेवाधिकारिविशेषणम् । वेदान्तविचारे च उत्कटविविदिषादिनिर्णयेनैव तादृशशङ्काया निराससम्भवात् न विविदिषाप्राचीनस्य विचारितकर्मत्वस्य पृथङ्निर्णयोऽपेक्षितः, तस्य विविदिषाद्वारैव विचारोपयुक्तत्वात् । द्वितीये तु कर्मसहितवेदान्तविचारस्य ततः प्राक् कर्मविचारं विना कर्तुमशक्यतया वेदान्तविचारारम्भे कर्मसमानकाले विचारितकर्मत्वनिर्णय उपयुक्तो भवेत् । न तु [1]तदस्ति, कर्मानुष्ठानसहित एव ब्रह्मविचारः स्वकार्योपयुक्तः—इत्यत्र प्रमाणाभावात् ।

ननु विविदिषावाक्येन कर्मणां [2]मोक्षार्थत्वविधानात् ज्ञानैकसाध्ये मोक्षे तद्द्वारा कर्मोपयोगस्य वक्तव्यतया ज्ञानसाधनैश्श्रवणादिभिस्समुच्चितानि कर्माणि भविष्यन्तीति चेन्न । विविदिषावाक्यं विविदिषार्थमेव कर्माणि विधत्त इति 'अत एव चाग्नीन्धनाद्यनपेक्षा' [ब्र. सू. ३. ४. २५] इत्यादिभिस्सूत्रैर्हि निरूपयिष्यते ।

तस्मात् कथं कर्मविचारतदवबोधानन्तर्यं ब्रह्मविचारस्येति चेत्—

उच्यते—अत्र हि 'येनास्मिन् जन्मनि कर्मविचारः कृतः तेनैव वेदान्तविचारः कर्तुं शक्यते नान्येन' इति शङ्को मन्यते । [3]तथाहि अस्मिन् शास्त्रे

---

1. **तत्**—ब्रह्मविचारकाले कर्मणां करणीयत्वम् ।

2. **मोक्षार्थेति**—विषयसौन्दर्यज्ञानजन्यायां इच्छायां कर्मणामनुपयोगात् ज्ञानेन मोक्षे जनयितव्ये कर्माणि सहकारीणि सम्पद्यन्ते, 'विविदिषन्ति' इत्यत्र प्रकृतिः मोक्षलाक्षणिकी इति भावः ।

3. ब्रह्मविचारस्य कर्मविचारानन्तर्यसमर्थनाय कर्मब्रह्मविचारयोः एककर्तृकत्वं निरूपयति—**तथाहीत्यादिना** ।

निर्विशेषब्रह्मविद्याया निरूपणं सविशेषब्रह्मविद्याया दहरोपासनादिरूपायाः कर्मानवबद्धायाः तदवबद्धायाश्चान्तरादित्यादिविद्याया भविष्यति । [1]तन्निरूपणं च तदनुष्ठानार्थम् । तत्र कर्मावबद्धोपासनस्य कर्मसमुच्चयः स्पष्ट एव । दहराद्युपासनानामपि 'अग्निहोत्रादि तु तत्कार्यायैव' [ब्र - सू. ४ - १ - १६] इत्यधिकरणे कर्मसमुच्चयो निरूपयिष्यते । निर्विशेषविद्यानुष्ठानकालेऽपि, 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' [भ. गी. ३ - २०] इति निर्विशेषब्रह्मवित्त्वेन श्रुतिस्मृतिप्रसिद्धानां जनकादीनां कर्मदर्शनात् कर्मकर्तव्यता अवगम्यते । न च— कर्मणैवहिसंसिद्धिमिति वाक्यं विद्यानुष्ठानकाले न जनकादिषु कर्म प्रतिपादयति, किंतु तेषु विविदिषोपयुक्तं कर्म प्रतिपादयतीति—समञ्जसम् । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' [ बृ. उ. ४ - ४ - २२ ] इति वाक्ये ब्राह्मणग्रहणेन विविदिषोपयुक्ते कर्मणि ब्राह्मणानामेवाधिकारात् । न च विविदिषाकामस्याधिकारिणोऽर्थसिद्धस्य उद्देश्यतया[2] न ब्राह्मण्येन विशेषणं युक्तमिति वाच्यम् । 'राजा स्वाराज्यकामो राजसूयेन यजेत' इत्यत्र राजकर्तृकप्रयोगविधिपक्षे राजकर्तृके प्रयोगे तदन्यस्यासामर्थ्येनाधिकारासम्भवात् यथा राजत्वस्यार्थादधिकारिकोटिप्रवेशः, [3]फलयागसम्बन्धविधिपक्षे प्राप्तयागोद्देशेन फलसम्बन्धस्य राजत्वजातेश्च कर्त्रवच्छेदद्वारा विधानासम्भवेऽपि फलसम्बन्धमात्रविधिं स्वीकृत्य कर्तृविशेषापेक्षायां स्वाराज्यकामपदं राजानुवादकपदसमभिव्याहारेण वस्तुगत्या [4]तत्परमेव पर्यवस्यतीति स एवार्थात् कर्ता [5]अधिकारी च भविष्यतीति वा स्वीकियते, तद्वत् प्रकृतेऽपि भविष्यतीत्यतो विविदि-

---

1. मु. निरूपणं

2. **उद्देश्यतयेत्यादि** यज्ञादीनां विद्यालक्षणफले विनियोगपरे विधौ विद्याकामस्याधिकारः सिद्ध एव । तथा च ब्राह्मण्यविशिष्टस्य विद्याकामस्याधिकारो विवक्षित इति स्वीकृत्य ब्राह्मणपदस्य अधिकारिविशेषणसमर्पकत्वं वक्तुं न शक्यते । विधेययज्ञादिनिरूपितोद्देश्यताया विद्याकाममात्रे पर्यवसानसम्भवेन ब्राह्मण्यरूपविशेषणस्य अनाकाङ्क्षिततया विद्याकामं प्रति विशेषणत्वेनान्वयायोगात्, विशिष्टस्योद्देश्यत्वकल्पने गौरवाच्च, विद्याकामब्राह्मणयोः प्रत्येकमुद्देश्यत्वे च वाक्यभेदप्रसङ्गात्—विद्याकामो यज्ञादीननुतिष्ठेत्, ब्राह्मणो यज्ञादीननुतिष्ठेत् इति—इति भावः ।

3. मु. फलयागविधिसम्बन्ध

4. **तत्परमेवेति** अन्यथा राजपदवैयर्थ्यप्रसङ्ग इति भावः ।

5. **अधिकारी**—फलस्वामी भोक्ता ।

षार्थे कर्मणि ब्राह्मणानामेवाधिकारात् जनकादिषु दृश्यमानं कर्म मोक्षार्थमेव भविष्यतीति ज्ञानैकसाध्ये मोक्षे ज्ञानाङ्गतया तस्य निवेशो वक्तव्य इति निष्प्रपञ्चब्रह्मसाक्षात्कारोपयुक्तायां तदुपासनायां कर्मसाहित्यं सिद्धं भवति ।

अपि च प्रत्यवायपरिहारार्थमपि उपासनाकाले नित्यनैमित्तिकानि कर्माणि कर्तव्यानि । ततश्च वेदान्तशास्त्रनिरूपणीया सर्वाप्युपासना कर्मसमुच्चितैवेति तत्तदुपासनाफलकामेनाधिकारिणा वेदान्तविचारमात्रेण कर्मसमुच्चिततत्तदुपासनायाः कर्तुमशक्यतया कर्मविचारोऽपि कर्तव्यः प्राप्नोतीत्युभयोरेकः कर्ता सिध्यति ।

[1]अपि च पूर्वोत्तरमीमांसयोरेकपुरुषाध्येतव्यताप्रयोजकं एकग्रन्थत्वमपि शक्यं व्युत्पादयितुम् । [2]अथातो धर्मजिज्ञासेत्यत्र हि अथशब्देन कृत्स्नवेदाध्ययनानन्तर्यमुच्यते । अतश्शब्देन कृत्स्नस्य वेदस्य[3] विवक्षितार्थत्वमुच्यते । तदनुसारेण धर्मशब्दः [4]कृत्स्नवेदार्थपर इत्येव वक्तुमुचितम् । कृत्स्नवेदाध्ययनस्य हि कृत्स्नवेदार्थविचारे एवानन्तर्योक्तिरुचिता । तदेकदेशाध्ययनमेव धर्मशब्दस्य यथाश्रुतार्थत्वे आनन्तर्यप्रतियोगितया वक्तुमुचितम् । उपनिषदध्ययनानन्तर्यस्य धर्मविचारेऽनुपयोगात् । एवं कृत्स्नवेदविवक्षितार्थत्वहेतुरपि धर्मशब्दस्य वेदार्थपरतां न्यायतौल्यादुपदर्शयति । धर्मस्य हि वेदविवक्षितत्वाद्विचारणीयत्वे उच्यमाने यो यो वेदविवक्षितः स विचारणीय इति प्राप्नोति । ततश्च उपनिषदर्थस्यापि विचारणीयता प्राप्नोति, वेदविवक्षितत्वाविशेषात् ।

अथवा धर्मशब्दः अलौकिकश्रेयस्साधनताप्रवृत्तिनिमित्तकः सन् ज्योतिष्टोमादिवत् ब्रह्मणोऽपि शक्त्यैवाभिधायकः । 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते' [कौ. उ. ३-८] इति श्रुत्या ब्रह्मणोऽपि श्रेयस्साधनताबोधनात् । ननु—श्रेयस्साधन(ता)मात्रार्थत्वे श्येनादीनामपि तथात्वात् धर्मता स्यात् । तद्व्यावृत्त्यर्थं [5]बलवदनिष्टाननुबन्धित्वमपि वक्तव्यम् । ततश्च न ब्रह्म-

---

1. कर्मब्रह्मविचारयोः नियतपौर्वापर्योपयोगिनि एककर्तृकत्वे परोक्तं पूर्वोत्तरमीमांसयोरैकशास्त्र्यं हेतुमुपपादयितुमारभते—**अपि चेत्यादिना** ।

2. तत्र एकप्रतिज्ञाक्रोडीकृतत्वात् ऐकशास्त्र्यं निरूपयति—**अथात इत्यादिना** ।

3. मु. 'वेदस्य' नास्ति

4. **कृत्स्नवेदार्थपर इति** तथा च अजहल्लक्षणिको धर्मशब्द इत्यर्थः ।

5. **बलवदनिष्टाननुबन्धित्वम्**—बलवदनिष्टाप्रयोजकत्वम् ।

साधारण्यम्, एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते' [कौ. उ. ३-८] इति वचनेन ब्रह्मणोऽपि बलवदनिष्टानुबन्धित्वावगमात्[1]–इति चेत्, न–बलवद-निष्टाननुबन्धित्वं किं साधनविशेषणं उत श्रेयोविशेषणम्। आद्येऽपि, किं [2]तद्विना-भूतत्वं बलवदनिष्टानुबन्धित्वं उत तज्जननयोग्यत्वम्। नाद्यः। श्येनादीनामपि प्राय-श्चित्ते सति नरकाजनकतया तद्विनाभूतत्वात् ध र्मता स्यात्। द्वितीये तु 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ' इति वचनानुसारेणाभिचारफलकत्वस्यापि सिद्धौ नित्यप्रयोगेऽपि सत्यामभिचारकामनायां वैरिविपत्तिफलकत्वस्यापि सम्भवात् बलवदनिष्टजननयोग्यत्व-मस्तीति धर्मता न स्यात्। नापि श्रेयोविशेषणं तदिति द्वितीयः पक्षः। तथा सति श्येनादीनां धर्मता स्यात्। तज्जन्यश्रेयसोऽनिष्टानुबन्धित्वाभावात्[3]। [4]तस्मादेवं बलवदनिष्टाननुबन्धित्वं वक्तव्यम्। बलवदनिष्टप्रयोजकश्रेयोगतोद्दे[5]श्यताप्रतियोग्य-नुष्ठाननिष्पन्नभिन्नताविशिष्टत्वम्। तच्च श्रेयस्साधनविशेषणम्। उद्देश्यताया अनि-ष्टप्रयोजकत्वं [6]स्वजन्ययागानुष्ठानद्वारकं बोध्यम्। ततश्च यदा वैरिविपत्तिकामनां

---

1. मु. बन्धित्वात्

2. **तद्विनेति** बलवदनिष्टं तच्छब्दार्थः। **अविनाभूतत्वं**—व्याप्यत्वम्, तदुपधायकत्वमिति यावत्।

3. मु. ॰नुबन्धनाभावात्

4. शिवार्कमणिदीपिकायां, यथाश्रुते प्रसज्ज्यमानानां अत्र अनुपदमुक्तानां दूषणानां परिहाराय बलवदनिष्टाननुबन्धित्वं द्वेधा परिष्कृतम्–फलजननापेक्षितसर्वसहिते **यस्मिन्ननु**ष्ठिते फलान्यतज्जन्यापूर्वनाशकाभावे च सति बलवदनिष्टजननार्थं प्रयोगान्तरं नापेक्ष्यते **तत्** बलवदनिष्टानुबन्धि, तद्भिन्नत्वं बलवदनिष्टाननुबन्धित्वम्। इदं श्रेय-स्साधनविशेषणम्। यद्वा—**यत्फलोद्देशः** अनुष्ठाने बलवदनिष्टप्रयोजको न भवति **तत्त्वं** बलवदनिष्टाननुबन्धित्वम्। इदन्तु श्रेयसो विशेषणम्। तत्र आद्यं परिष्कारं वर्णयति—**तस्मादेवमित्यादिना**। अतिप्रसङ्गान्तरवारणार्थं दलद्वयं तत्र प्रविष्टम्। ब्रह्मणि बलवद-निष्टाननुबन्धित्वोपपादनाय तन्नापेक्षितमित्यभिप्रेत्य तदघटितं अत्र निरुक्तम्।

5. **उद्देश्यताप्रतियोग्यनुष्ठानेति** उद्देश्यतानिरूपककृतीत्यर्थः।

6. **स्वजन्येति** स्वं—उद्देश्यता, तज्जन्यं—तत्प्रयुक्तं यागानुष्ठानम्। श्रेयो-निष्ठायां यागानुष्ठानजनकतायां इच्छाविषयत्वरूपाया उद्देश्यताया अवच्छेदकत्वात् यागानुष्ठानप्रयोजकत्वम्। यद्वा **उद्देश्यता** विषयतासम्बन्धेनेच्छा। सा च यागानुष्ठाने जनिकेति स्वजन्येति यथाश्रुतमस्तु।

विना दर्शपूर्णमासावनुष्ठीयेते, तथा [1]तत्फलपापक्षयगतोद्देश्यताया नरकप्रयोजकत्वा-भावेन तत्प्रतियोग्यनुष्ठाननिष्पन्नस्य कर्मणो निरुक्तं बलवदनिष्टाननुबन्धित्वमस्त्येवेति न दोषः। वैरिविपत्त्यर्थप्रयोगे तु निरुक्तं नास्तीति श्येनादिवत् तस्याधर्मत्वमेव। निरुक्तं बलवदनिष्टाननुबन्धित्वं ब्रह्मणोऽप्यस्ति। तस्यानुष्ठेयत्वाभावेन अनुष्ठान-निष्पन्नभिन्नतायास्सत्त्वात्। ततश्च निरुक्तेन प्रवृत्तिनिमित्तेन धर्मशब्दः कर्मब्रह्म-साधारणो भविष्यति। ततश्च 'अथातो धर्मजिज्ञासा' इति प्रतिज्ञा कर्मब्रह्म[2]विचार-साधारणीति सिद्धम्।

एवमेकप्रतिज्ञाक्रोडीकृतत्वात् अथातोधर्मजिज्ञासेत्यारभ्य अनावृत्तिश्शब्दादि-त्यन्तं अन्तर्गतेन सङ्कर्षकाण्डेन सह विंशतिलक्षणीरूपमेकं शास्त्रं [3]इति सिध्यति।

ननु—सङ्कर्षेण सह[4] षोडशलक्षणी कर्ममीमांसा जैमिनिकृता, चतुर्लक्षणी ब्रह्ममीमांसा बादरायणकृता, जैमिनिबादरायणयोश्च विरुद्धसिद्धान्ताभिनिवेशोऽव-गम्यते। 'शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः।' [ब्र सू. ३-४-२] 'परामर्शं जैमिनिरचोदना चापवदति हि' [ब्र. सू. ३-४-१८] इति सूत्राभ्यां ब्रह्म-सन्न्यासापलापं जैमिनिमतत्वेनानूद्य 'अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्' [ब्र. सू. ३-४-८] 'अनुष्ठेयं बादरायणःसाम्यश्रुतेः' [ब्र. सू. ३-४-१९] इति सूत्राभ्यां ब्रह्मसन्न्यासयोः स्वीकारः बादरायणमतत्वेन दर्शितः। ननु 'परं जैमिनिर्मुख्यत्वात्' [ब्र. सू. ४-३-१२] 'तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः' [ब्र. सू. ३-४-४०] इति सूत्राभ्यां ब्रह्मसंन्न्यासयोरुपगमो जैमिनिमतत्वेनापि दर्शित इति चेन्न—'विप्रतिषेधाच्चासमञ्जसम्' [ब्र. सू. २-२-१०] इति न्यायेन सांख्यमतवत् जैमिनिमतमपि पूर्वोत्तरवचनविरोधेनाना-देयमिति सूचनाय [5]तत्प्रदर्शनोपपत्तेः। ततश्च विरुद्धसिद्धान्ताभिनिविष्टकविकृत ग्रन्थयोः कथमेकत्वम्।

---

1. मु. तत्प्रयोगफल
2. मु. 'विचार' नास्ति
3. मु. 'इति' नास्ति
4. मु. 'सह' नास्ति
5. मु. तद्दर्शं०

अपि च ग्रन्थयोरप्यस्ति विरोधः । [1]'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते' [जै. सू. १-२-१] इत्यक्रियार्थानामप्रामाण्यमाशंक्य, [2]'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः [जै. सू. १-२-७] इति तेषामेव विधिस्तावकत्वेन प्रामाण्यं व्यवस्थापितं जैमिनिना । इदं वेदान्तवाक्यसाधारणमपि प्रतीयते, आम्नायशब्दस्य वेदमात्रपरत्वात् । बादरायणेन तु 'शास्त्रयोनित्वात्' [ब्र. सू. १-१-३] इति वेदान्तानां ब्रह्मणि प्रामाण्यं उपक्षिप्य 'तत्तु समन्वयात्' [ब्र. सू. १-१-४] इति सूत्रेण अर्थवादाधिकरणोक्तं वेदान्तानां क्रियाशेषत्वं पूर्वपक्षीकृत्य स्वातन्त्र्येण ब्रह्मणि प्रामाण्यं प्रतिष्ठापितम् । तथा [3]नवमे देवतानिराकरणं जैमिनितन्त्रे दृश्यते । बादरायणेन तु देवताविग्रहादिकं मन्त्रार्थवादादिप्रामाण्याभ्युपगमेन 'तदुपर्यपि बादरायणः सम्भवात्' [ब्र. सू. १-३-२६] इत्यत्र व्यवस्थापयिष्यते ।

तत् कथं एवंसत्येकप्रबन्धत्वमिति चेत् ।

न तावत् विरुद्धमताभिनिविष्टकविकृतत्वमेकग्रन्थत्वविरोधि । विरुद्धाभिप्रायशालिनोरपि कश्चिदर्थविशेषं[4] उद्दिश्य [5]समयबन्धपूर्वकमेकप्रबन्धनिर्मातृत्वोपपत्तेः ।

---

1. **आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते** इति । **आम्नायस्य**—वेदस्य **क्रियार्थत्वात्**—'तद्भूतानां क्रियार्थेन समाम्नायः' इति क्रियार्थत्वावगमात्, **अतदर्थानां**—अक्रियार्थानां अर्थवादादीनां आनर्थक्यं—प्रयोजनवदर्थशून्यत्वं, **तस्मात् अनित्यं उच्यते** अक्रियार्थकं सर्वम् । अनित्यशब्दोऽयं अनित्यलौकिकवाक्यसादृश्यपरस्सन् अप्रामाण्यमाह । तस्मादप्रामाण्यमुच्यते । इति सूत्रार्थः ।

2. **विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः** इति । **विधीनां**—विधेयार्थानां **स्तुत्यर्थेन**—स्तुतिरूपार्थप्रतिपादकत्वेन **विधिना**—विधिवाक्येन सह एकवाक्यत्वात् **स्युः**—प्रयोजनवदर्थवन्तः स्युः ।

3. **नवमे**—नवमप्रथमचतुर्थाधिकरणे **देवतानिराकरणं** देवताविग्रहादिपञ्चकनिराकरणम् । विग्रहो हविषां भोगः ऐश्वर्यञ्च प्रसन्नता । फलप्रदानमित्येतत् पञ्चकं विग्रहादिकम्, तन्निराकरणं 'अतिथौ तत्प्रधानत्वं अभावः कर्मणि स्यात् तस्य प्रीतिप्रधानत्वात्' इति यजनस्य आतिथ्यवैषम्यप्रदर्शनेन प्रदर्शितम् ।

4. **अर्थविशेषम्**—प्रयोजनविशेषम्

5. **समयबन्धः**—कर्तव्यनियमः

दृश्यते हि विरुद्धमताभिनिविष्टयोः वामनजयादित्ययोः काशिकाख्यैकप्रबन्धनिर्मातृत्वम् ।

ग्रन्थतस्तु विरोधो नास्त्येव । 'अथातो धर्मजिज्ञासा' [जै. सू. १-१-१] इति हि द्वे प्रतिज्ञे । एका विंशतिलक्षणीसाधारणी । तस्यां धर्मशब्दः कर्मब्रह्मसाधारणः । द्वितीया तु कर्मकाण्डमात्रविषया । तस्यां धर्मशब्दः कर्ममात्रपरः । प्रतिज्ञाद्वयं च आवृत्त्या एकेन सूत्रेण सुसम्पादमेव । सूत्राणामावृत्त्या अनेकार्थत्वस्यालङ्कारत्वात् । अत एव [1]'अथातश्शेषलक्षणम्' [जै. सू. ३-१-१] इति सूत्रं 'द्विलक्षण्याः परं शिष्टं यावत् किञ्चन लक्षणम् । तत्सर्वं वक्तुमारब्धमथातश्शेषलक्षणम् ।' इति अवशिष्टदशाध्यायीप्रतिज्ञापरत्वेन [2]व्याख्याय तृतीयाध्यायप्रतिज्ञापरत्वेनापि [3]व्याख्यातम् । [4]'शेषः परार्थत्वात्' [जै. सू. ३-१-२] इति सूत्रं तु द्वितीयप्रतिज्ञायां [5]लक्षणप्रतिपादकतया[6] सङ्गतम् । तद्वत् 'चोदनालक्षणोऽर्थो धर्मः' [जै. सू. १-१-२] इति सूत्रं द्वितीयप्रतिज्ञायां लक्षणप्रतिपादकतया समनुगतं भविष्यति । तत्र च कर्मणि चोदनायाः प्रामाण्ये प्रतिज्ञाते तत्प्रामाण्यनिरूपणं प्रथमाध्यायार्थत्वेन प्रतिज्ञायते [7]'तस्य निमित्तपरीष्टिः' [जै. सू. १-१-३] इति । तदनुसारेण आम्नायस्येति सूत्रे चोदनासमभिव्याहृतानामेव सिद्धार्थपरत्वेन प्रतीयमानानां अप्रामाण्यमाशङ्क्य विधिनात्वेकवाक्यत्वादिति सूत्रेण तेष्वेव विधेयस्तावकत्वमुच्यत इति न वेदान्तविषयकशास्त्रयोनित्वात्तत्तुसमन्वयादितिसूत्रयोर्विरोधः ।

---

1. **अथाऽतश्शेषलक्षणम्** इति । **अथ**—कर्मभेदनिरूपणानन्तरं, **अतः**–शेषशेषिभावस्य तद्भेदाधीनत्वात्, **शेषलक्षणं**—शेषाध्यायः प्रारभ्यते इत्यर्थः ।

2. **व्याख्यायेति** 'अथवाऽस्तु इदमेवैकं तृतीयं शेषलक्षणम् । तदेव सूत्रितं वक्तुं अथातः शेषलक्षणम् ।' इतीति शेषः ।

3. **व्याख्यातमिति** तन्त्रवार्तिककृद्भिः इत्यादिः

4. **शेषः परार्थत्वात्** इति । **परार्थत्वात्**-परः अन्यः अर्थः—प्रवृत्युद्देश्यः यस्य तत्त्वात् **शेषः**–शेषपदवाच्यः [भवति]

5. **लक्षणेति** शेषशब्दार्थेत्यादिः । प्रतिज्ञायामिति सप्तम्यर्थो घटकत्वं शेषशब्देऽन्वेति ।

6. मु. प्रतिपादनपरतया

7. **तस्य निमित्तपरीष्टिः** इति । **तस्य**-धर्मस्य **निमित्तं**-ज्ञाने हेतुः, प्रमाणमिति यावत्, तस्य **परीष्टिः**–परीक्षा, कर्तव्येति शेषः ।

[1]'न देवता[नां]देवतान्तराभावात्' [शा. बा. ६-१-५] इति सूत्रेण 'न देवानां कर्मण्यधिकारः स्वोद्देश्यदेवतान्तराभावात्' इति प्रतिपादयता मन्त्रार्थवादप्रामाण्यानुसारेण देवतादिकं जैमिनिना स्वीकृतमेवेति तदीयतन्त्रगतं नावमिकाधिकरणं 'अपूर्वमेव [2]धर्माणां प्रयोजकम्, न देवता, तस्यास्तत्र गुणत्वात्' इत्येवमर्थपरम्, न तु देवतास्वरूपादिनिराकरणपरम्। देवतायाश्च गुणत्वं देवतोद्देश्यकत्यागरूपे यागे उद्देश्यकारकत्वेनेति, तत्[3] सत्यपि फलदातृत्वेन प्राधान्ये न तेन[4] विरुध्यते। अतो न ग्रन्थतो विरोध इति सिद्धमेकग्रन्थत्वं विंशतिलक्षण्याः।

एकश्च ग्रन्थः कृत्स्नः [5]एकेनैवाध्येतव्यः। ततश्च पूर्वोत्तरमीमांसाध्ययनस्यैककर्तृकत्वे सिद्धे युगपदध्येतुमशक्यत्वात् क्रमापेक्षायां यथा [6]अग्निहोत्रहोमयवागूपाकयोः [7]आर्थक्रम आश्रीयते—पूर्वं यवागूपाकः ततोऽग्निहोत्रहोमः, यवागूपाकं विना यवागूरूपद्रव्यासिद्धौ होमस्यैवानिष्पत्तेः, तथा पूर्वमीमांसाया उत्तरमीमांसापेक्षणात् सैव पूर्वं कर्तव्या आर्थक्रमानुसारेण। पूर्वमीमांसागतः प्रामाण्यविचारः श्रुत्यादिविषयकः सर्वत्रापि वेदान्तविचारे अपेक्षितः। शब्दान्तरादिभिः कृतो धर्मभेदविचारो विद्याभेदविचारे अपेक्षितः। श्रुतिलिङ्गादितत्प्राबल्यविचारः प्रायशोऽपेक्षितः। सर्वत्र श्रुत्यादिभिः कृतः क्रमविचारः सृष्ट्यादिक्रमे अर्चिरादि[8]मार्गपर्वक्रमे च अपेक्षितः। [9]अतिदेशविचारोऽपि 'तस्यैतस्य तदेव रूपं यदमुष्य रूपम्' [छा. उ. १-६] इत्यादिवाक्यार्थनिर्णये अपेक्षितः। 'प्रदानवदेव तदुक्तम्' [ब्र. सू. ३-३-४३]

---

1. 'न देवता[नां]देवतान्तराभावात्' इत्येतत् जैमिनिसूत्रत्वेनैवोक्तं परिमले वादनक्षत्रमालायाश्च। परन्तु इदानीन्तने सूत्रपाठे नोपलभ्यते। शाबरभाष्ये तु उपलभ्यते। सूत्रत्वमेव तु प्रकृतोपयोगि। अतः सूत्रपाठे प्रामादिकः त्यागः स्यात्।

2. **धर्माणां** अवघातादीनाम्

3. **तत्**—गुणत्वम्

4. **तेन**—प्राधान्येन

5. **एकेनैवेति** अन्यथा भागभेदेन द्वाभ्यामधीते 'कृत्स्नोऽधीतः' इति व्यवहारापत्तिः इति भावः।

6. मु. अग्निहोत्रयवा०

7. मु. अर्थात् क्रम

8. मु. मार्गक्रमे

9. मु. अतिदेशादिवि०

'कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम्' [ ब्र. सू. ३-३-२६ ] इत्यादौ सम्मतित्वेन पूर्वमीमांसागतन्यायानां उदाहृतत्वात् तदर्थज्ञानार्थमप्यपेक्षा अस्त्येव ।

तथा पाठानुसारेण क्रमस्सिध्यति । स्वाध्यायोऽध्येतव्य इति विधिना, क्रमविशेषविशिष्टमक्षरराशिं स्वाध्यायशब्दोदितं अधीयीतेति विधाने, व्युत्क्रमेणाध्ययने क्रियमाणे स्वाध्यायाध्ययनत्वासम्भवात् स्वाध्यायाक्षराणां यः क्रमः तदनुसारी अध्ययनक्रम इति पर्यवसिते वर्णानां स्वतः क्रमासम्भवात् पाठोपाधिकः क्रमः प्राप्नोति । स च पाठोऽध्ययनविधिना विधीयमानोऽध्येतृगतः अक्षरक्रमकल्पको न भवति । [1]तस्यैवाद्यापि क्रमविशेषाज्ञानात् । किं तु अनादिसम्प्रदायागतः पूर्वपूर्वाध्यापकपाठः । ततश्च यथा पूर्वपूर्वाध्यापकपाठानुसारेणाध्ययनक्रमः कल्प्यते, तथा तदनुसारेण विचारक्रमोऽपि कल्पनीयः । तथा च कर्मकाण्डस्य पूर्वं पाठात् ज्ञानकाण्डस्य अनन्तरं पाठात् तद्विचारयोरपि तथैव क्रमः प्राप्नोति ।

मुख्यक्रमानुसारेणापि विचारयोः क्रमः । [2]यथा हि आग्नेयैन्द्रहविषोः पुरोडाशसान्नाय्ययोः प्रयाजशेषाभिघारणे आग्नेयस्य प्रथममनुष्ठेयतया तदङ्गस्य प्रयाजशेषाभिघारणस्य प्रथममनुष्ठानम्, एवं स्वाध्यायाध्ययनेन अर्थज्ञानं भावयेदिति [3]वचनव्यक्तिपक्षे अध्ययनस्य अर्थज्ञानरूपफलं प्रति करणतया प्राधान्यात् पूर्वकाण्डाध्ययनस्य च प्रथमं कृतत्वात् [4]तदङ्गभूतः प्रथमकाण्डविचारोऽपि प्रथमं कर्तव्यः।

एवं प्रवृत्तिक्रमानुसारेणापि क्रमः। यथा 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति' इति विहितानां एकस्मिन् काले प्राजापत्यानां साङ्गानां साहित्येनानुष्ठाने प्राप्ते, पङ्क्तिपरिवेषणन्यायेन तदङ्गभूतानां उपाकरणादीनां एकमङ्गं प्रथमं सर्वेष्वनुष्ठाय द्वितीयं तदनन्तरं अनुष्ठेयमिति स्थिते, अङ्गसाहित्याय प्रथमाङ्गानुष्ठानावसरे यः पशुः

1. **तस्यैव**—अध्येतुरेव ।

2. मु. तथा

3. **वचनव्यक्तीति** [अध्ययनविधि] वाक्यविपरिणामेत्यर्थः। पक्षोऽयं प्राभाकराणाम् ।

4. 'धर्मे प्रमीयमाणे तु वेदेन करणात्मना । इतिकर्तव्यताभागं मीमांसा पूरयिष्यति' इति भट्टवचनेन अर्थज्ञानकरणभूतं स्वाध्यायं तदध्ययनं वा प्रति मीमांसायाः उपकरणतया अङ्गत्वं इति **तदङ्गभूत** इत्युक्तम् ।

**न – धर्मजिज्ञासायाःप्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः ।**

प्रथमं संस्कृतः द्वितीयाङ्गानुष्ठानमपि तमारभ्यैव कर्तव्यमिति, तथा [1]अधीतेन वेदेन अर्थज्ञानं भावयेदिति वचनव्यक्तिपक्षे अध्ययनस्य वेदं प्रत्यङ्गत्वात् यस्य भागस्य अध्ययनरूपमेकमङ्गं प्रथममनुष्ठितं तमारभ्य विचाररूपं द्वितीयमप्यङ्गमनुष्ठेयमिति प्राप्नोति ।

तत् सिद्धं कर्मविचारानन्तरमेव ब्रह्मविचार इति ।

एतत्सर्वमभिप्रेत्योक्तं—**नन्विह कर्मावबोधानन्तर्यं विशेष इति ।** कर्माव-बोधानन्तर्योक्त्या तत्कारणीभूतकर्मविचारानन्तर्यमपि अर्थादुक्तं भवति ।

**न—धर्मजिज्ञासायाः प्रागपि अधीतवेदान्तस्येति ।** अयमाशयः—विचारयोरेककर्तृकत्वे सिद्धे क्रमसामान्यापेक्षायां क्रमविशेषनियामकान्यर्थादीनि वक्तुं शक्यन्ते । तत्र एककर्तृकत्वमेव नास्ति—इति ।

[2]यत्तावदुक्तं विविदिषावाक्ये ब्राह्मणग्रहणस्य विवक्षितत्वात् जनकादिषु दृश्य-मानं कर्म मोक्षार्थमेवेति, तन्न–विविदिषावाक्येन, यादृशा नित्यनैमित्तिककर्मप्रयोगाः पापक्षयार्थत्वेन प्रसिद्धाः तेषां विविदिषासंयोगमात्रं क्रियते—इति ‘सर्वथापि त एवोभयलिङ्गात्’ [ब्र. सू. ३-४-३४] इत्यत्र निरूपयिष्यते । ततश्च प्राप्तकर्मो-द्देशेन फलसम्बन्धविधौ ब्राह्मणत्वस्य कर्तृविशेषणतया विधाने वाक्यभेदः स्यात् । न च–तदनुवादमात्रेण आख्याताक्षिप्तः कर्ता वस्तुगत्या स एव पर्यवसितो भवति राजास्वाराज्यकामोराजसूयेनयजेतेतिवाक्यइवेति—युक्तम् । राजसूयस्यानिर्ज्ञातकर्तृ-विशेषतया कर्त्राकांक्षायां तथाऽभ्युपगमेऽपि त्रैवर्णिकतयानिर्ज्ञातकर्तृकाणां भावनानां विविदिषावाक्ये विविदिषार्थत्वेन विधीयमानानां कर्तृविशेषानपेक्षतया अनुवादमात्रेण विशेषपर्यवसानासम्भवात् । तस्मात् तत्र ब्राह्मणपदं त्रैवर्णिकोपलक्षणमेव[3] । ततश्च जनकादिषु दृश्यमानस्य कर्मणो विविदिषार्थत्वे न कोऽपि विरोधः ।

---

1. **अधीतेनेत्यादि** पक्षोऽयं भाट्टानाम् ।

2. कर्मब्रह्मविचारयोरेककर्तृकत्वे पूर्वपक्षोक्ता युक्तीरनूद्य निराकर्तुमारभते—**यत्ता-वदित्यादिना** ।

3. **त्रैवर्णिकोपलक्षणमेवेति** न चैवं ब्राह्मणपदवैयर्थ्यम् । ब्राह्मणस्य मुख्याधि-कारज्ञापनार्थतया सार्थक्योपपत्तेः । विवेचितमिदं **सिद्धान्तलेशसङ्ग्रहतट्टीकयोः** ।

न च प्रत्यवायपरिहारार्थान्यग्निहोत्रादीनि निर्विशेषविद्यानुष्ठानकाले सम्भवन्ति । निर्विशेषविद्यानुष्ठाने श्रवणमनननिदिध्यासनरूपे हि [1]परिव्राज एवाधिकारोऽवगम्यते 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति[बृ. उ. ४-४-२२] इति वचनेन । तत्र हि मोक्षार्थतया पारिव्राज्यविधानात् ज्ञानैकसाध्ये मोक्षे साक्षात्कारणत्वासम्भवेन द्वारापेक्षायां, 'तस्माज्ज्ञानं [2]पुरस्कृत्य सन्न्यसेदिह बुद्धिमान् [ना. प. उ. ३-१६] इति श्रुतिवचनेन 'निस्सारमेव संसारं दृष्ट्वा सारदिदृक्षया । प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः ॥' [3]इति स्मृत्या च द्वारतया ज्ञानस्य प्रतिपादनात्, तत्रापि प्रमाणसाध्ये द्वारापेक्षायां 'सन्न्यस्य श्रवणं कुर्यात्' इति वचनेन श्रवणस्य द्वारताप्रतिपादनात्, श्रवणे च दृष्टेन चित्तविक्षेपाभावेन उपयोगसम्भवे नादृष्टं कल्पनीयमिति अवघातविधिवत् प्रकारान्तरेण चित्तविक्षेपाभावसम्पादनं [4]वारयत् नियमविधिः पर्यवस्यति । न चैवं 'ब्राह्मणो निर्वेदमायात्' [मु. उ. १-२-१२] 'ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' [बृ. उ. ३. ५] इति श्रुत्या 'मुखजानामयं धर्मो वैष्णवं लिङ्गधारणम् । बाहुजातोरुजातानां नायं धर्मः प्रशस्यते ॥' इति स्मृत्या च ब्राह्मणानामेव [5]सन्न्यासविधानात् जनकादिष्वात्मविद्यादर्शनमनुपपन्नं[6] स्यादिति—वाच्यम् । तेषां 'दिने दिने च वेदान्तश्रवणात् भक्तिसंयुतात् । गुरुशुश्रूषया लब्धात् कृच्छ्राशीतिफलं लभेत् ॥' इति पापक्षयार्थस्य,[7] प्रतिषेधाभावेन शूद्रादिवत् करणे प्रत्यवायाभावेन वेदान्तार्थनिर्णयरूपदृष्टप्रयोजनार्थस्य च सम्भवात् । तच्च जन्मान्तरे [8]विद्यापरिपाकोपयुक्तं

---

1. **परिव्राजएवाधिकार इति** विवरणानुसरणेनैतत् ।

2. आ. समुद्दिश्य

3. **इति स्मृत्येति** इदमपिपद्यं यद्यपि नारदपरिव्राजकोपनिषदि वर्तते, तथाऽपि अङ्गिरःप्रोक्तत्वेन पराशरमाधवीयोक्तेः स्मृतिमपि उक्तार्थे प्रमाणतया वक्तुं स्मृत्येत्युक्तम् ।

4. **वारयदिति** 'सन्न्यस्य श्रवणं कुर्यात्' इति वचनं इति शेषः ।

5. आ. सन्न्यासनियमात्

6. **आत्मविद्यादर्शनमनुपपन्नमिति** जनकादीनां सन्न्यासाभावेन वेदान्तश्रवणासम्भवात् आत्मविद्याया असम्भव इति भावः ।

7. **पापक्षयार्थस्येति** अदृष्टार्थत्वस्याप्युपलक्षणमेतत् । तेन श्रवणस्य जन्मान्तरीयविद्योपयोगित्वस्य नानुपपत्तिः ।

8. **विद्यायाः परिपाकः**—अप्रतिबन्धः

भविष्यति । सन्न्यासिनस्तु तत्त्वसाक्षात्कारोपयुक्तसकल[1]वैदिकाङ्गसहितश्रवणाधिकारसम्भवात् असति [2]प्रतिबन्धे अस्मिन्नेव जन्मनि विद्या परिपच्यते । दहराद्युपासनया देवत्वं गतानां तु वैदिककर्मकृतचित्तविक्षेपनिवृत्तेः [3]स्वत एव विद्यमानतया [4]स्वयन्दिने बर्हिषि लवननियम इव सन्न्यासनियमो न प्रवर्तत इति प्रैषाद्युच्चारणपूर्वकवैदिकलौकिककर्मपरित्यागात्मकसन्न्यासनियमाभावेऽपि ब्रह्मलोक एव विद्यापरिपाकसम्भवात्, क्रममुक्तिफलकसगुणविद्याविधानान्यथानुपपत्त्या सन्न्यासं विनाऽपि विद्यापरिपाक इति कल्पनोपपत्तेश्च अपुनरावृत्तिश्रवणे न काचिदनुपपत्तिः । अतो विवेकादिसम्पन्नस्य मोक्षपर्यन्तश्रवणाधिकारिणः परिव्राजः अग्निहोत्रादिकर्मसु अधिकाराभावेन तदकरणे प्रत्यवायाभावात् न निर्विशेषविद्यानुष्ठानकाले कर्माणि कर्तव्यानि । अतो न निर्विशेषविद्याधिकारिणि विचारितकर्मत्वस्योपयोगोऽस्ति ।

न च अत्र सविशेषविद्यानां कर्मसमुच्चितानां निरूपणमस्तीत्येतावता विचारितकर्मत्वस्याधिकारे निवेशः सम्भवति । निर्विशेषविद्याधिकारिणि हि न तस्योपयोग इत्युक्तम् । अतः पृथगधिकारं निरूप्य तेनाधिकारिणा सविशेषाधिकरणानां सङ्गतिर्वक्तव्या[5] । [6]न चैतत् वक्ष्यमाणाभिः तत्तदधिकरणप्रस्तावे सङ्गतिभिः सविशेषविचाराणां विवेकादिसाधनसम्पन्नाधिकारिकर्तव्यप्रधाननिर्विशेषविचारान्तर्गतिसम्भवे कल्पयितुं युक्तम् ।

---

1. **वैदिकाङ्गम्**—सन्न्यासादि

2. **प्रतिबन्धे इति** जन्मान्तरप्रापकप्रारब्धकर्मणा इत्यादिः

3. **स्वत एव विद्यमानतयेति** देवानां वैदिककर्मानुष्ठानाप्रसक्त्या तत्त्यागरूपस्य सन्न्यासस्य तेष्वसम्भवाच्च—इत्यपि बोध्यम् ।

4. **स्वयं दिने इति** स्वयंछिन्ने इत्यर्थः । चातुर्मास्ये, स्वयं-पूर्वमेव छिन्नं बर्हिः विनियुज्यते, न तु चातुर्मास्यार्थं बर्हिर्लवनं अपेक्षितं इत्यर्थः । तथा च श्रुतिः—'स्वयं दिनं बर्हिः' इति । दितमिति वक्तव्ये दिनमितिछान्दसम् ।

5. **वक्तव्येति** स्यात् इति शेषः ।

6. **नचैतदिति** एतत्—पृथगधिकारिनिरूपणादि । नन्वेवं सगुणविद्यानुष्ठानं कस्यापि न सिद्ध्येत् । एतच्छास्त्रविचारमन्तरेण हि तदनुष्ठानं न सम्भवति । एतच्छास्त्रविचारे च ब्रह्मलोकान्तसकलफलविरक्तस्य त्यक्तसमस्तकर्मणः निर्विशेषप्रेप्सया तज्जिज्ञासोरेवाधिकार इष्यते-इति चेत्, उच्यते-सगुणविद्यापेक्षिणां, अङ्गावबद्धोपासनापेक्षिणां

**यथा च हृदयाद्यवदानानामानन्तर्यनियमः, क्रमस्य विवक्षितत्वात्, न तथेह क्रमो विवक्षितः, शेषशेषित्वे अधिकृताधिकारे वा प्रमाणाभावात् धर्मब्रह्मजिज्ञासयोः ।**

ततश्च विचारद्वयस्य एककर्तृकत्वे प्रमाणाभावेन क्रमसामान्यापेक्षाया एवाभावात् अनियमेन क्रमविशेषाप्रसक्तेः न पाठादीनां क्रमनियामकानां प्रकृतयोर्विचारयोर्निवेशस्सम्भवतीत्याह—**यथा चेति** । 'हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः' इत्यादिवाक्यविहितानां हृदयाद्यवदानानां एकस्मिन् पशौ शेषिणि शेषभूतानां, 'चमसेनापः प्रणयेत् गोदोहनेन पशुकामस्य' इति वाक्येन पश्वर्थतया विहितस्य गोदोहनस्य च दर्शपूर्णमासाङ्गभूताप्प्रणयनाश्रितस्य दर्शपूर्णमासाधिकृताधिकारतया, समानकर्तृकत्वे प्राप्ते क्रमसामान्यस्य विवक्षितत्वात्, पाठादिभिः पश्वङ्गैरवदानानां दर्शपूर्णमासाङ्गैर्गोदोहनस्य आनन्तर्यनियमाख्यः क्रमविशेषः स्वीक्रियते; नैवं कर्मब्रह्मविचारयोः शेषशेषित्वमधिकृताधिकारत्वं वा अन्यदपि पूर्वतन्त्रप्रसिद्धं समानकर्तृकताप्रयोजकं किञ्चिदस्ति, प्रमाणाभावादित्यर्थः ।

अपि च पाठादिभिः विचारक्रमःसम्पादयितुमपि न शक्यते । एकस्मिन् हि न्याये व्युत्पादिते व्यवहितविप्रकृष्टानि पूर्वोत्तरवाक्यानि [1]बहूनि निर्णीतानि भवन्ति । तत्र कथं यद्वाक्यं पूर्वमधीतं [2]तद्वाक्यं पूर्वं[3] विचारणीयं अनन्तरमधीतमनन्तरं विचारणीयमिति नियन्तुं शक्यम् । अत एव हि जैमिनिबादरायणाभ्यां न पाठक्रमेणैव सूत्राणि प्रणीतानि । अन्यथा हि, यथा वेदभाष्यादिषु श्रुतिक्रमेणैव व्याख्यानमारच्यते, तथा अधिकरणक्रमोऽपि स्यात् ।

---

कर्मठानां च तदनुष्ठानप्रकाराद्यवगतिः विचारितैतच्छास्त्रेभ्योऽन्वेषणीया, गत्यन्तराभावात् । अभ्युपगम्यते हि कर्मविचारप्राचीनसन्ध्यावन्दनाध्ययननियमाद्यनुष्ठानार्थं निषादरथकारकर्तृकस्थपतीष्ट्याधानानुष्ठानार्थं च तत्तदवगतिः स्वयमविचारिततत्तद्वाक्यानामेव हितैषिवचनमात्रादिति । एतेन—सगुणोपासनासहकारिकर्मानुष्ठानापेक्षितः कर्मावबोध इति तदानन्तर्यमथशब्दार्थं इति **विशिष्टाद्वैतिनां** व्याख्या निरस्ता वेदितव्या ।

1. मु. 'बहूनि' नास्ति

2. मु. तद्वाक्यमेव

3. आ. पूर्वमेव

## फलजिज्ञास्यभेदाच्च ।

यच्चोक्तं वेदप्रामाण्यादिनिरूपणे पूर्वतन्त्रापेक्षाऽस्तीति, तन्न—इहापि हि 'अत एव च नित्यत्वं' [ ब्र. सू. १ - ३ - २१ ] इति वेदप्रामाण्यं, 'प्रत्यक्षानुमानाभ्यां' [ब्र. सू. १ - ३ - २८ ] इति प्रत्यक्षानुमानशब्दाभ्यां श्रुतिस्मृति व्यवहारात् श्रुतेर्निरपेक्षत्वं स्मृतेः [1]वेदानुमापकत्वं स्वमूलतया इत्यपि प्रतिपादनात् स्मृतिप्रामाण्यं तस्याः श्रुतितो दौर्बल्यं, 'नानाशब्दादिभेदात्' [ब्र. सू. ३ - ३ - ५८] इति शब्दान्तरादिकं, 'द्युभ्वाद्यायतनं स्वशब्दात्' [ब्र. सू. १ - ३ - १] आकाशस्तल्लिङ्गात्' [ब्र. सू. १-१-२२] 'तथा चैकवाक्यतोपबन्धात्'[ब्र.सू. ३-४-२४] 'प्रकरणात्' [ ब्र सू. १ - ३ - ६ ] इत्यादिभिः श्रुतिलिङ्गादीनां 'श्रुत्यादिबलीयस्त्वाच्च न बाधः' [ब्र. सू. ३-३-४९] इति तेषां यथायथं प्राबल्यस्य 'विपर्ययेण तु क्रमोऽत उपपद्यते च' [ब्र. सू. २ - ३ - १४] 'वायुमब्दादविशेषविशेषाभ्यां' [ब्र सू. ४-३-२] इति क्रमप्रमाणस्य 'अतिदेशाच्च' [ब्र. सू. ३-३-४६] इत्यतिदेशस्य च स्वरूपं, सूत्रकृतैव निरूपयिष्यते । व्याख्यानेन स्पष्टीकरणं तु पूर्वोत्तरमीमांसासाधारणम् । तदुक्तमित्यादौ सम्मतित्वेनोपक्षिप्तानां न्यायानां त्ववगमः इहैव व्याख्यातॄणां वचनैः स्पष्टीभविष्यति । अन्यथा बौद्धाद्यधिकरणेषु तत्प्रक्रियासंग्राहकसूत्रार्थावबोधे का गतिः । न हि तदर्थं बौद्धादिशास्त्राध्ययनानन्तर्यमपि सूत्रगताथशब्दार्थो वर्णनीयः ।

[2]यच्च पूर्वोत्तरमीमांसयोः शास्त्रैकत्वमुक्तं, तत् न सम्भवतीत्याह—**फलजिज्ञास्यभेदाच्चेति** । शास्त्रं हि वाक्यविशेषः । तस्य एकत्वे प्रयोजकमेतत् – 'अर्थैकत्वादेकं वाक्यं साकांक्षं चेद्विभागे स्यात्' [ जै. सू. २-१-४६] इति सूत्रे यद्यर्थशब्दः प्रयोजनपरः तदा एकफलत्वमेकवाक्यतायां प्रयोजकम् , यदा प्रधानविशेष्यपरः तदा तदेकत्वमिति यथायथम् । प्रकृते द्वयमपि नास्तीति दर्शयितुं उभयग्रहणम् । पूर्वोत्तरमीमांसयोरर्थभेदः तद्ग्रन्थपर्यालोचनया अवगम्यते ।

---

1. मु. वेदानुमानापेक्षत्वं स्व०

2. पूर्वोत्तरमीमांसयोरेककर्तृकत्वे हेतुत्वेनोक्तं यत् तयोरैकशास्त्र्यं तस्य भाष्यवाक्येनैव निराकरणं लम्भयितुं अवतारयति —**यच्च पूर्वेति** ।

न च—अवान्तरार्थभेदेन अवान्तरवाक्यभेदे सत्यपि महावाक्यैक्यवत् धर्मब्रह्मरूपावान्तरार्थभेदे सत्यपि वेदार्थरूपो वा अलौकिकश्रेयस्साधनरूपो वा एको महावाक्यार्थो भविष्यतीति प्रकृते महावाक्यमेकमित्युच्यत इति—वाच्यम् । तादृशैकवाक्यताग्राहकप्रमाणाभावात् ।

यत्तावदुक्तं प्रतिज्ञासाधारण्यं, तन्न सम्भवति—धर्मशब्दस्य प्रथमसूत्रस्थस्य चोदनासूत्रानुसारेण ज्योतिष्टोमादिमात्रपरत्वावगमात् । चोदनासूत्रं हि 'चोदना चोपदेशश्च विधिश्चैकार्थवाचकाः ।' इत्यभियुक्तव्यवहारानुसारेण निर्णीतविधिपदैकार्थ्यचोदनाशब्दसहितं अलौकिकविधिगम्यश्रेयस्साधनत्वमेव[1] धर्मशब्दप्रवृत्तिनिमित्तं दर्शयति । न च 'एतत् प्रथमसूत्रस्य प्रतिज्ञाद्वयपरत्वमभ्युपेत्य द्वितीयप्रतिज्ञान्तर्गतधर्मशब्दव्याख्यानपरं' इति क्लिष्टकल्पनायां किञ्चिन्नियामकमस्ति । न च प्रथमसूत्रान्तर्गतधर्मशब्दस्य धर्मब्रह्मोभयसाधारण्ये कृत्स्नवेदाध्ययनानन्तर्यप्रतिपादकेनाथशब्देन कृत्स्नवेदविवक्षितार्थत्वरूपहेतुप्रतिपादकेनातश्शब्देन चावगते तन्निर्वाहाय तथा [2]कल्पनमिति वाच्यम् । वेदविवक्षितार्थत्वहेतुर्हि यदि व्याप्त्यभिप्रायेण प्रयुक्तस्स्यात्, तदा खलु वेदविवक्षितत्वाद्धर्मस्य विचारणीयत्वे उच्यमाने तत्सामान्याद्ब्रह्मणोऽपि विचारणीयत्वं प्राप्नोतीति धर्मशब्दः उभयपरःस्यात् । तत्र यदि यो यो वेदविवक्षितः स विचारणीय इति व्याप्तिः प्रतिपाद्यते, तदा दृष्टान्तालाभः । यदि तु यो यो विवक्षितार्थः सोऽधीतवेदविचारणीय इति व्याप्तिर्विवक्षिता, तदा असच्छास्त्रविवक्षितोऽप्यर्थोऽधीतवेदविचारणीय इत्यपि दूषणं प्राप्नोति । तस्मान्नायं व्याप्त्यभिप्रायेण प्रयुज्यते । किं तु 'विषनिर्हरणादिमन्त्रवत् प्रतीयमानेऽर्थे वेदस्य तात्पर्याभावात् तद्विचारो व्यर्थः प्रमाफलपर्यवसानासम्भवात्' इति शङ्कायां 'अविवक्षाकारणाभावात् वेदस्य स्वार्थे विवक्षाऽस्त्येवेति धर्मविचारः कर्तव्यः' इत्येतावन्मात्रमुच्यते । न तु तत्र वेदस्य कृत्स्नत्वमपि [3]आहत्योच्यते । किं तु पूर्वकाण्डस्येति विशिष्य नोच्यते । तथोक्तौ हि तद्व्यावर्त्यो वेदान्तभाग इति सोऽविवक्षितार्थ इति शङ्का प्रसरेत्, तत्सामान्यात् पूर्वकाण्डार्थोऽप्यविवक्षितो-

1. आ. साधनताकत्वमेव

2. मु. कल्पनीयमिति

3. **आहत्य**—अशब्दतार्थे अन्तर्भाव्य मु. आहत्यैवोच्यते

ऽस्त्विति पुनः शङ्का प्रसरेदिति । अथशब्देनापि धर्मविचारस्य वेदाध्ययनानन्तर्योक्तौ न वेदः पूर्वभागेन विशेषयितुं शक्यते । पूर्वभागमात्राध्ययनस्य स्वाध्यायविधिविहितत्वाभावेन तदानन्तर्योक्तिर्निर्मूला स्यादिति । ततश्च–शङ्काविशेषोन्मेषोमाभूदिति अथातश्शब्दार्थयोः पूर्वभागानिवेशमात्रेण, लक्षणसूत्रपर्यालोचनया प्रतीयमानं सूत्रार्थं परित्यज्य अर्थान्तरकल्पनमनुचितम् । न च–धर्मशब्दस्य धर्मब्रह्मोभयसाधारण्याभावे 'ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः । ते सर्वेऽपि वदन्त्येनं कृष्णं धर्मं सनातनम् ॥' [महाभार] इति धर्मशब्दस्य परमेश्वरसाधारण्येन व्यवहारोऽनुपपन्नस्स्यादिति–वाच्यम् । यथा 'प्रणम्रेषु महीपेषु प्रसादो मूर्तिमानयम्' इति मूर्तप्रसादरूपत्वेन स्तुतिपरं तथा सनातनधर्मत्वेन [1]स्तुतिपरमेतत् न शक्तिनिर्णायकम् । अत एव बादरायणेनापि 'फलमत उपपत्तेः' [ब्र. सू. ३-२-३८] इति अतश्शब्देन प्रकृतं ब्रह्म फलदातृत्वेन[2]उपक्षिप्य तत्प्रतिद्वन्द्वितया जैमिनीयमतोपन्यासे ज्योतिष्टोमादिमात्रपरो धर्मशब्दः 'धर्मं जैमिनिरत एव' [ब्र. सू. ३-२-४०] इति प्रयुक्तः । 'यज्ञेन यज्ञमयजन्त देवाः तानि धर्माणि प्रथमान्यासन्' इति सृष्ट्यारम्भे देवैः क्रियमाणे धर्मे प्रथमत्वव्यवहारोऽपि धर्मशब्दस्योभयसाधारणत्वं व्यावर्तयति । अन्यथा ततःपूर्वं ब्रह्मरूपधर्मस्य विद्यमानतया देवानुष्ठीयमानयज्ञस्य प्रथमधर्मत्वं न स्यात् । अतो न धर्मपदशक्तिपर्यालोचनायामपि साधारणी प्रतिज्ञा लभ्यते ।

'आम्नायस्य क्रियार्थत्वात् आनर्थक्यमतदर्थानां तस्मादनित्यमुच्यते' इति पूर्वपक्षसूत्रपर्यालोचनया वेदान्तर्गतसिद्धवस्तुप्रतिपादककृत्स्नवाक्यसाधारणः पूर्वपक्षः प्रतीयते । तदनुसारेण सिद्धान्तोऽपि [3]सर्वसाधारण इत्येव प्रतीयते । न च तत् क्लेशेन व्याख्याय शास्त्रैकत्वसमर्थने किञ्चन प्रमाणमस्ति । न च यथाश्रुतजैमिनिसूत्रपर्या-

---

1. मु. स्तुतिपरमेव। तत्

2. आ. उपस्थाप्य

3. **सर्वसाधारण इति** अत एव **अर्थवादाधिकरणे वार्तिककारैः** 'वायुर्वै क्षेपिष्ठा' इत्याद्यर्थवादानां विधिशेषत्वसमर्थनानन्तरमुक्तम्—एतेन उपनिषदामपि नैराकाङ्क्ष्यं व्याख्यातम्-इति । यत्तु व्याकरणाधिकरणे वार्तिककारैः उपनिषदां स्वातन्त्र्येण अभ्युदयनिश्श्रेयससाधनत्वमुक्तम्—तत् ब्रह्मापलापभीरूणां तेषां स्वमनीषिकयैव, न तु सूत्रकाराभिमततया । जैमिनीयवैयासिकसूत्राणां स्फुटविरोधस्य दर्शनात् । अनुपदं उदाहृतमेतत् । विस्तरस्तु **वादनक्षत्रमालायां** द्रष्टव्यः ।

लोचनया विरोधेऽवगम्यमानेऽपि बादरायणेन तेषां स्वाविरुद्धमर्थान्तरं प्रकल्प्य तदेकग्रन्थतया सूत्राणि प्रणीतानीति कल्पनायां किंचित् नियामकमस्ति । तन्मतोप मर्दकतयैव सूत्रप्रणयनस्य स्वरसत: प्रतीयमानत्वात् ।

[1]न च–' पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिता: । वेदा: स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ ' [या. स्मृ. आ. ३] इति मीमांसाया एकत्वेन व्यवहारोऽस्ति, तयोर्द्वित्वे पञ्चदशसङ्ख्याकत्वं विद्यास्थानानां स्यादिति–वाच्यम् । तथात्वे पुराणानामप्येकग्रन्थता स्यात् । एवं न्याययोरप्येकग्रन्थता स्यात् । न चैकवेदार्थोपयोगितया तदिष्टमेवेति वाच्यम् । तथात्वे [2]चतुर्दशत्वमपि विद्यास्थानानां न स्यात् । तस्मात् एकेन मीमांसात्वेन धर्मेण भिन्नग्रन्थयोरपि[3] क्रोडीकारमभिप्रेत्य चतुर्दशत्वेन परिगणनमिति न तावता एकग्रन्थत्वसिद्धि: ।

[4]अस्तुवा एकग्रन्थत्वसिद्धि: । तथापि कथं कृत्स्नमेकेनाध्येयमिति सिध्यति । न हि ' एको ग्रन्थ: कृत्स्न एकेनाध्येय: ' इत्यत्र किञ्चिन्नियामकमस्ति । अपि तु यस्य यावानंश उपयुक्त: तेन तावदध्येयम् । न हि ज्वरनिवृत्तिकामेन तन्निवर्तकौषधपरिज्ञानाय ज्वरचिकित्सामारभ्य वाजीकरणान्तं [5]कृत्स्नं वैद्यशास्त्रं पठनीयम् । तत्र 'तथा निर्बन्धकशास्त्राभावात् अधिकारिभेदाच्च न कृत्स्नचिकित्साशास्त्राध्ययनमेकेन' इति यद्युच्येत, तत् प्रकृतेऽपि तुल्यम् । अधिकारिभेदस्य दर्शितत्वात्–कर्मावबोधकामस्तत्राधिकारी ब्रह्मावबोधकामो वेदान्तविचारे इति । न च विचारशास्त्रद्वयमेकेनपठनीयमित्यत्र किञ्चिद्वचनमस्ति । स्वाध्यायविधिस्त्वक्षरावाप्तिपर्यन्तो न विचारद्वयस्यैककर्तृकत्वं प्रयोजयतीति ' अध्ययनमात्रवत: ' [ब्र. सू ३-४-१२] इति सूत्रे स्पष्टं भविष्यति । अतो व्यर्थमैकशास्त्र्यप्रसाधनं नचोपपद्यते–इति सिद्धम् ।

---

1. शतदूषण्युक्तमाशङ्क्य, निराकरोति—**न चेत्यादिना**

2. **चतुर्दशत्वमपीति** चतुर्वेदातिरिक्तानां सर्वेषां पुराणादीनां एकवेदार्थोपयोगित्वात् तेषामेकत्वं स्यात् , ततश्च विद्यास्थानपञ्चकमेव स्यात् इति भाव: ।

3. मु. ' अपि ' नास्ति

4. प्रौढ्या ऐकशास्त्र्यमभ्युपेत्यापि कर्मविचारानन्तर्यस्य अथशब्दार्थत्वं **निरस्यति —अस्तुवेति**

5. मु. ' कृत्स्नं ' नास्ति

**अभ्युदयफलं धर्मज्ञानं, तच्च अनुष्ठानापेक्षम् । निःश्रेयसफलं तु ब्रह्मज्ञानं, न चानुष्ठानान्तरापेक्षम् । भव्यश्च धर्मो जिज्ञास्यो न ज्ञानकालेऽस्ति, पुरुषव्यापारतन्त्रत्वात् । इह तु भूतं ब्रह्म जिज्ञास्यं नित्यनिर्वृत्तत्वान्न पुरुष-**

सङ्ग्रहवाक्यं विवृण्वन् फलभेदं विवृणोति—**अभ्युदयेति** । कारणमभिलक्ष्य उदेतीत्यभ्युदयः—उत्पद्यमानं स्वर्गादिकं, तत्फलकं धर्मज्ञानम् । ननु यागादेरेव स्वर्गादिफलकत्वम्, तत्कथं धर्मज्ञानस्य ? इत्याशङ्क्य, स्वजन्ययागानुष्ठानद्वारा इत्याह–**तच्चेति** । ततश्च कर्मविचारस्यापि ज्ञानद्वारा स्वर्गादिकं फलम्, तच्चोत्पद्यमानतया अनित्यमिति अनित्यफलाद्विरक्तस्य न कर्मविचाराधिकार इति भावः । न च दृढविविदिषार्थं तत्राधिकार इत्यपि शङ्कनीयम् । जन्मान्तरकृतैः कर्मभिरपि तत्सिद्धिसम्भवात् । **निःश्रेयसेति** । नितरां श्रेयो निःश्रेयसं, ब्रह्मस्वरूपभूतं नित्यं सुखम् । तत्फलकं ब्रह्मज्ञानम् । तच्च कर्मज्ञानवत् न स्वोत्पत्त्यनन्तरं फलात्प्राचीनं [1]आन्तरमनुष्ठानमपेक्षते । ततश्च मोक्षस्य न ज्ञानोत्पाद्यतया ज्ञानफलत्वम्, अपि तु कण्ठचामीकरवत् ज्ञानाभिव्यङ्ग्यतया । ततश्च ज्ञानफलस्य न कर्मफलवदनित्यत्वमिति भावः । मोक्षजनकब्रह्मज्ञानफलकत्वं विचारस्य चित्तदोषनिवृत्तिद्वारकं द्रष्टव्यम् । ततश्च विचारयोः फलभेदात् भेदः ।

जिज्ञास्यभेदमाह—**भव्यश्चेति** । उत्पद्यमानो भव्यः । भव्यत्वं विशदयति–**न ज्ञानकाल इति** । ततश्च ज्ञानजन्यचिकीर्षया यत्ने सति यागादिर्धर्मो भवति । ततश्च धर्मजिज्ञासासूत्रगतधर्मशब्दो वस्तुगत्या जन्यं यच्छ्रेयस्साधनं तदेव प्रतिपादयतीति प्रथमसूत्रपर्यालोचनयैव विषयवैलक्षण्यं सिद्धं कर्मविचारे । एवं ब्रह्मविचारेऽपि कर्मविचारवैलक्षण्येन प्रथमसूत्रपर्यालोचनयैव विषयस्सिध्यतीत्याह—**इहेति** । भूतं–निर्विकारम् । तदेव व्युत्पादयति—**नित्येति** । नित्यनिर्वृत्तत्वं–सदा सिद्धस्वभावत्वम्, विकारायोग्यत्वादित्यर्थः । निर्विकारत्वात् न पुरुषव्यापारापेक्षा । पुरुषव्यापारजन्यधर्माश्रयस्यैव पुरुषव्यापारापेक्षा भवति ।

ननु–वेदान्तानामुपासनापरत्वात् उपासनायाश्च विधिबोधितश्रेयस्साधनताकरूपतया धर्मशब्दार्थत्वात् वेदान्तविचारोऽपि धर्मजिज्ञासासूत्रेण प्रतिज्ञातः, ब्रह्म-

---

1. **आन्तरमिति** अनुष्ठानान्तरापेक्षमितिभाष्ये अनुष्ठानश्च तत् आन्तरञ्चेति कर्मधारय इति भावः । आन्तरं अनुष्ठानं चिकीर्षा यत्नश्च ।

**व्यापारतन्त्रम् । चोदनाप्रवृत्तिभेदाच्च । या हि चोदना धर्मस्य लक्षणं सा स्वविषये नियुञ्जानैव पुरुषमवबोधयति। ब्रह्मचोदना तु पुरुषमवबोधयत्येव । केवलं अवबोधस्य चोदनाजन्यत्वात् न पुरुषोऽवबोधे नियुज्यते । यथा अक्षार्थसन्निकर्षेणार्थावबोधे तद्वत् ।**

**तस्मात् किमपि वक्तव्यं यदनन्तरं ब्रह्मजिज्ञासोपदिश्यत इति । उच्यते—नित्यानित्यवस्तुविवेकः, इहामुत्रार्थभोगविरागः, शमदमादिसाधनसंपत्, मुमुक्षुत्वं च ।**

जिज्ञासासूत्रं तु अथातश्शेषलक्षणमितिवत् उपासनारूपावान्तरधर्मविचारप्रतिज्ञापरं भविष्यति—इत्याशङ्क्याह—**चोदनाप्रवृत्तिभेदाच्चेति** । चोदना–कर्मब्रह्मकाण्डसाधारण्येन अज्ञातज्ञापकं वाक्यम्, तस्य प्रवृत्तिः–तात्पर्येण बोधजननशक्तिः, तस्याः विषयवैलक्षण्येन विलक्षणत्वादित्यर्थः । उक्तशङ्कानिरासद्वारा[1] समुच्चयद्योतनार्थश्चकारः । वेदान्तानां निर्विशेषप्रकरणगतानामखण्डवस्तुमात्रपरत्वं प्राधान्येन न तूपासनापरत्वमिति समन्वयसूत्रे व्युत्पादयिष्यते । अतो वेदान्तार्थो धर्मजिज्ञासासूत्रे न संगृहीत इति भावः । सङ्ग्रहवाक्यं विवृणोति—**याहीति** । लक्षणं-प्रमाणम् । नियुञ्जाना-प्रवृत्तिजनकं यागादिगतेष्टसाधनताज्ञानं आदधाना । [2]अवबोधयत्येवेत्येवकारेण [3]पर्यवसानगत्या निर्विशेषवाक्यजन्यबोधस्य प्रवृत्तिजनकत्वं व्यावर्त्यते । ननु निर्विशेषवाक्यानां शाब्दबोधविधिपरत्वमस्तु—इत्याशङ्क्य, योऽर्थः प्रमाणजन्यज्ञानानन्तरं पुरुषयत्नमपेक्ष्य सिध्यति तत्रैव प्रमाणानां प्रवर्तकत्वम्, न तु स्वजन्यज्ञान एव, यत्नं विनैव [4]प्रमाणव्यापारमात्रेण सिद्धत्वादित्याह—**अवबोधस्येति** ।

---

1. **शङ्कानिरासद्वारेति** तथा च न साधकान्तरसमुच्चयः, किन्तु बाधकाभावसमुच्चयः इति भावः । भामत्यान्तु जिज्ञास्यभेदे साधकान्तरसमुच्चय इत्युक्तम् । अत्र तु शङ्काविशेषनिराकरणपरतया अवतारितत्वात् एवं व्याख्यातम् । उक्तशङ्कानिराकरणस्य भाष्यवाक्येन लाभः प्रयोजनम् ।

2. मु. अववोधयत्येवकेवलमित्येवकारेण

3. मु. ' पर्यवसानगत्या ' नास्ति

4. **प्रमाणव्यापारमात्रेणेति** भाष्ये ' केवलं ' इति पदं चोदनेत्यनेन सम्बध्यते इति भावः ।

**नित्यानित्यवस्तुविवेक इति** । [1]नन्वत्र नित्यानित्यवस्तुविवेकस्य वैराग्यं तस्य शमादिसम्पत् तस्या मोक्षेच्छा तस्या ब्रह्मजिज्ञासा फलत्वेनावगम्यते क्रमानुसारेण । तत्र नित्यानित्यवस्तुविवेकस्य नित्यवस्तुभूतमोक्षेच्छां विनैव अनित्ये वस्तुनि वैराग्यहेतुत्वं न सम्भवति । अनित्यपदार्थासक्तो हि यदि नित्यं स्वानुकूलं कंचित्पदार्थमवगम्य तमिच्छन् तदुपायं स्वकृतिसाध्यमवगच्छति तदैवानित्याद्वस्तुनो विरक्तो भवति, नान्यथा ।

अस्तु तर्हि[2] सत्यासत्यविवेको वैराग्यहेतुः—अनृतासक्तो हि सत्यवस्तुप्राप्तिमननुसन्धायैव भोग्यस्यानृतत्वज्ञानमात्रात् ततो विरज्यतीति, नैतदपि सम्भवति —अनृततया स्वाप्नपदार्थानवगच्छन्नपि कामुकः तेषां सुखसाधनतां अवगम्य तदुपयोगिमन्त्रौषधसेवादौ प्रवर्तमानो दृश्यते ।

अपि च वैराग्यं नाम तस्मिन् तस्मिन् विषये तत्तद्विषयानुरागासमानकालीना तत्तद्विषयानुरागप्रागवस्थैव । तस्याश्च स्वतोऽसाध्यत्वेऽपि परिपाल्यतया साध्यत्वम् । तत्र च इच्छाप्रतिबन्धकस्यैवोपयोगः । इच्छाप्रतिबन्धकं च तत्तद्वस्तुनो बलवद्दुःखसाधनताज्ञानमेव । अतः कथं [3]नित्यानित्यवस्तुविवेकस्य वैराग्यहेतुत्वमिति चेत्—

उच्यते—[4]'सांसारिकफलं सर्वमनित्यं' इति ज्ञानवतः 'सांसारिकभोगवियोगावश्यम्भावेन अवश्यमेतस्माच्छोकाख्यं दुःखं भविष्यति' इति अनित्यवस्तुविवेको दुःखसाधनताज्ञानद्वारा वैराग्यहेतुः । तत्र च दुःखसाधनताज्ञानमपि न सर्वदा रागप्रतिबन्धकम् । आस्तिककामुकस्य तस्मिन् सत्यपि [5]निषिद्धे प्रवृत्तिदर्शनात् । किं तु तस्मिन् दुःखे असहिष्णुताख्यद्वेषदशायाम् । तत्र च यस्य स्थिर-

---

1. **विवरणोक्तं** नित्यानित्यवस्तुविवेकशब्दार्थं आक्षिपति—**नन्वत्र** इत्यादिना ।

2. उक्ताक्षेपसमाधानपरतया परिमले उपपादितं **भामत्युक्तं** आशङ्क्य निराकरोति—**अस्तु तर्हीत्यादिना** ।

3. **नित्यानित्यवस्तुविवेकस्य**—नित्यानित्यवस्तुविवेकशब्दार्थस्य

4. **विवरणाभिमतमर्थं** समर्थयति—**सांसारिकेत्यादिना** ।

5. मु. निषेधे

भोगसम्भावनायामेव [1]अस्थिरभोगसम्पर्कजनितदु:खे तादृशो द्वेष: स तदा ततो विरक्तो भवति। यस्य तु तदाऽपि न स द्वेष: नासौ स्थिरभोगसम्भावनायामपि ततो विरज्यति। पुमिच्छाया नियन्तुमशक्यत्वात्। एवं च यस्य जन्मान्तरसुकृतवशात् दु:खमात्रे सदा तादृशो द्वेष:, तस्य कृतं स्थिरभोगसम्भावनया वैराग्यं प्रति। तादृशपुरुषधौरेयाभिप्रायेण भाष्ये अयं क्रम:।

[2]एवं पदार्थानां असत्यतानिश्चयोऽपि वैराग्यहेतु:। यस्य हि कृम्यादिसादृश्येनानुसन्धीयमानान्नादिभोजनं जुगुप्साबीभत्सावैरस्याद्यपरपर्यायचेतोविकारात्मकदु:खजनकम्, यस्य वा गर्दभयानादिकं सङ्कोचाख्यदु:खजनकम्, तादृश: पुरुष: ततो निवर्तेत इति सर्वलोकप्रसिद्धम्। एवमसत्यत्वेनानुसन्धीयमानवस्तुभोगो यस्य 'बुध्वाऽप्यत्यन्तवैरस्यं य: पदार्थेषु दुर्मति:। बध्नाति वासनां भूयो नरो नासौ स गर्दभ:।' इति अभियुक्तकृतमुपालम्भमनुसन्दधानस्य तादृशदु:खजनक: [3]स ततो विरक्तो भवत्येव। न हि कस्यचित् निर्लज्जस्य स्वाप्नभोगेष्वपि कामना वर्तेत इति ईश्वरानुग्रहलब्धसत्वशुद्धेरपि [4]तया भाव्यम्। [5]एवं 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति' [छा. उ. ७-२३] इति श्रुतौ सत्यभूमप्रतिद्वंद्वित्वेन निर्दिष्टं अल्पं असत्यं दु:खविनिर्मुक्तसुखयुक्तं न भवतीति प्रतिपादनात्, तद्वाक्यं [6]अनुसन्दधानस्य पदार्थेष्वसत्यत्वबुद्धौ दु:खसाधनताज्ञानं भवतीति पुरुषविशेषस्य विवेको वैराग्यं प्रति हेतुर्भवति।

[7]एवं पुरुषभेदेन वैराग्यहेतु: सांसारिकेषु विषयेषु यादृशो विवेक: सम्भावित:

---

1. मु. अस्मिन् भोग

2. **भामत्यभिमतमर्थं** समर्थयति—**एवं पदार्थानां** इत्यादिना

3. मु. 'स' नास्ति

4. मु. तथा

5. **एवं यो वै भूमेति** भाष्ये 'इत्यादि:' इति आदिशब्देन भूमवाक्यं सङ्गृहीतम्। अतश्च सत्यासत्यविवेकस्यापि नित्यानित्यवस्तुविवेकशब्दार्थत्वं भाष्याभिप्रेतम्। सिद्धान्ते अनित्यत्वस्य असत्यत्वव्याप्यत्वात् 'अनित्यफलतां दर्शयति' इति भाष्यमप्यविरुद्धं इति भाव:।

6. आ. अधीयानस्य

7. उभयविधविवेकविवक्षाया: प्रयोजनं दर्शयति—**एवं पुरुषेति**

**तेषु हि सत्सु प्रागपि धर्मजिज्ञासाया ऊर्ध्वं च शक्यते ब्रह्म जिज्ञासितुं ज्ञातुं च, न विपर्यये। तस्मात् अथशब्देन यथोक्तसाधनसंपत्त्यानन्तर्यमुपदिश्यते।**

स सर्वोऽपि इह विवक्षितः। तादृशविवेकश्च ईश्वरार्पणबुद्ध्या [1]अनुष्ठितैः कर्मभिः ईश्वरानुगृहीतस्य स्वत एव भवति अध्ययनात्प्रागपि कस्यचित्। अधीतसाङ्गस्वाध्यायस्य कस्यचित्तु कर्मविचारलब्धमतिकौशलेन। न तत्र आग्रहः। तदभिप्रायेणोक्तं—**प्रागूर्ध्वं च धर्मजिज्ञासाया इति।**

[2]अयं च विवेकः अधीतसाङ्गस्वाध्यायस्य 'अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवति' इत्येवमादिवाक्यं पश्यतः शङ्काकलङ्कित (इव) [एव] भवति।

---

1. **अनुष्ठितैरिति** जन्मान्तरेषु इत्यादिः। **स्वत एव**—कर्मविचारं विनाऽपि।

2. उक्तस्य नित्यानित्यवस्तुविवेकस्य वेदान्तमीमांसाध्ययनात् प्राक् सम्भवोपपादनेन विशिष्टाद्वैतिनामाक्षेपाणां अनवसरं दर्शयति—'**अयश्च**' इत्यादिना' निर्णयो दृढो भवेत्' इत्यन्तेन।

मध्वचन्द्रिकाकृद्भिरपि विशिष्टाद्वैतिनामाक्षेपोऽयं निराकृतः—'...नास्त्यकृतः कृतेन' इत्यादिश्रुतित आपाततो वा, श्रुतिमूलहितैषिपित्रादिवाक्येन वा... श्रद्धामात्रेण नित्यानित्यविवेकसिद्धेः। अन्यथा त्वन्मतेऽपि अपशूद्रमधिकारे ज्ञाते अशूद्रस्यैतच्छास्त्रविचारे प्रवृत्तिः, प्रवृत्तौ च एतच्छास्त्रेण अपशूद्रमधिकारज्ञानं इत्यन्योन्याश्रयस्स्यात्। तथा अध्ययनविधावपि, अधीते स्वाध्याये 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यादिवाक्येन अष्टवर्षत्वादेरधिकारिविशेषणत्वज्ञापनं तज्ज्ञाने च अध्ययने प्रवृत्तिरिति अन्योन्याश्रयस्स्यात्। तथा ब्रह्मज्ञानस्य अनन्तस्थिरफलत्वनिश्चये तदर्थिनो ब्रह्मविचारे निःशङ्कप्रवृत्तिः विचारेण च तन्निश्चयः इत्यन्योन्याश्रयः स्यात्। फलज्ञानं सम्भावनात्मकं चेत्, विवेकोऽपि तथाऽस्तु। यद्यपि त्वन्मते पूर्ववृत्तेन कर्मविचारेण कर्मणामल्पास्थिरफलत्वं निश्चितम्, तथाऽपि न तन्निश्चय एव नित्यफलार्थिनो ब्रह्मविचारे प्रवृत्तिहेतुः, भिन्नविषयत्वात् अतिप्रसङ्गाच्च। नापि कर्मणामल्पास्थिरफलत्वनिश्चयसहितो ब्रह्मज्ञानस्यापाततोऽनन्तस्थिरफलत्वसन्देहः तद्धेतुः, अन्यस्यानुपायत्वनिश्चयेन ततो निवृत्तिमात्रसिद्धावपि तस्योपायत्वानिश्चये तदुपेयार्थिनः तत्र निश्शङ्कमप्रवृत्तेः। 'परीक्ष्य लोकान् ......निर्वेदमायात्......गुरुमेवाभिगच्छेत्' इत्यादौ विवेकादीनां श्रवणाङ्गोपसत्तेः पूर्वभावश्रुतेः कथं श्रवणानन्तरभावित्वम्। न च नित्यानित्यविवेकमात्रं विचारफलं, येन तद्वैयर्थ्यं स्यात्' इति।

तथापि तद्वाक्यमन्यथाव्याख्येयमित्येतावन्मात्रम् अनित्यताप्रतिपादकवाक्यार्थे ईश्वरानुग्रहलब्धदृढविश्वासबलात् स्वत एव [1]सम्भावयति कश्चित्, कश्चित्तु तावन्मात्रोपयोगिनं न्यायं स्वत एवानुसन्धत्ते, कश्चित् पुनः प्रथमसूत्राध्ययनेन सा शङ्का अपोदिता भविष्यतीत्याप्तोपदेशं लब्ध्वा तदध्ययनेन तां शङ्कां निवर्तयतीति न[2] काचिदनुपपत्तिः।

एतेन—आत्मा नित्यः सत्य इति वा विवेके शास्त्राध्ययनात् प्रागेव सञ्जाते तदध्ययनं व्यर्थं स्यादिति शङ्का–निरस्ता। तादृशोऽप्यात्मा किमेकः उत बहवः, सगुणो वा निर्गुणो वा, ईश्वरभिन्नो वा अभिन्नो वा—इत्येवमादिविचारणीयांशसद्भावात्।

अत एव च—संसारानित्यत्वे वा तदसत्यत्वे वा प्रागेव निर्णीते तदनित्यत्वप्रतिपादकानि तदसत्यत्वप्रतिपादकानि च उत्तराधिकरणानि व्यर्थानि स्युः। यदि तु तत्तदधिकरणनिवर्तनीयशङ्काविशेषनिराकरणपूर्वकं उत्पन्नस्यैव विवेकस्य दृढतासम्पादकानि [3]तानि, तर्हि तासु शङ्कासु अनिवर्तितासु अदृढो विवेकः कथं वैराग्यं सम्पादयेत्—इति शङ्का निरस्ता। अवशिष्टाश्शङ्काः उत्तरत्र निराकरिष्यन्त इति अध्यापकवचनेनैव तद्दार्ढ्योपपत्तेः। कथमन्यथा, स्वर्गकामाधिकरणनिवर्तनीयकर्मनिष्फलत्वशङ्कासञ्जातकर्मविचारनिष्फलत्वशङ्कायां 'कर्मविचारः परम्परया स्वर्गादिफलोपयोगी' इति विचारशास्त्राध्ययनप्रवर्तको निर्णयो दृढो भवेत्।

ततश्च उक्तरूपाद्विवेकात् सांसारिकभोगाद्विरक्तस्य शमादिसम्पत्। आदिपदेन 'तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति' [बृ. उ. ४-४-२३] इत्यादिश्रुत्युक्तानि गृह्यन्ते। ततो मुमुक्षुत्वम्।

ननु मुमुक्षायामधिकारिविशेषणत्वेन गृहीतायां ततः प्राचीनान्यर्थाल्लभ्यन्त इति पृथगुपादानं व्यर्थमिति चेत्, न—मुमुक्षा हि निर्दुःखसुखाभिलाष एव। स च सर्वसाधारणो नाधिकारिविशेषणं अपि तु उत्कटः इति वक्तव्यम्। तदुत्कटत्वं

1. मु. सम्भवति कस्यचित्
2. मु. ०न कदाचिदनु०
3. मु. 'तानि' नास्ति

चाधिकारिणा अवश्यं निर्णेतव्यम् । अन्यथा 'सर्वकर्मसन्न्यासपूर्वकं श्रवणारम्भे उत्कटमुमुक्षाया अभावे च फलपर्यवसायिश्रवणासम्भवात् व्यर्थः प्रयासःस्यात्' इति शङ्काकुलस्य श्रवणे प्रवृत्त्यसम्भवात् । उत्कटमुमुक्षा च सैवोच्यते, या विवेकादि-परम्परया सञ्जाता । अतः तदुत्कटत्वाभिव्यञ्जकतया विवेकाद्युपन्यासोऽपि आवश्यकः ।

[1]न च शमादीनां प्राक्सिद्धत्वे 'शमदमाद्युपेतस्स्यात्' इति विद्यानुष्ठानकाले तेषामनुष्ठेयत्वप्रतिपादनं व्यर्थं स्यादिति वाच्यम् । प्राक्सिद्धानां तेषां विद्यास्वरूपो-पयोगितया परिपालनावश्यम्भावेन तत्परिपालनोपयोगियत्नविशेषापेक्षणात् । स च यत्नो दोषदर्शनप्रसङ्ख्यानादिरूप इति ।

तत्सिद्धं अथशब्देन विवेकाद्यानन्तर्यमेवोच्यत इति ।

अत्रेयमाशङ्का भवति—आत्मैव नित्यः तद्व्यतिरिक्तं ब्रह्मलोकान्तं सकल-लौकिकवैदिककर्मसाध्यं फलमनित्यम्, 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' [छा. उ. ८ - १ - ६] इत्यादिश्रुतेः—इत्येवंरूपेण नित्यानित्यवस्तुविवेकाद्वैराग्यं भवतीत्युक्तम् । तन्न सम्भवति–'अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवति' 'अपाम सोमममृता अभूम' 'स्वर्गे लोके न भयं किञ्चनास्ति न तत्र त्वं न जरया बिभेति । उभे तीर्त्वा अशनायापिपासे शोकातिगो मोदते स्वर्गलोके' [कठ. उ. १-१२ ] इत्यादिवाक्यैः कर्मफलानामपि नित्यत्व-शोकादिरहितत्वप्रतिपादनात् । न च 'यत्कृतकं तदनित्यं' इति न्यायेन चिरकाल-स्थायित्वमात्रप्रतिपादनपराणि तानीति शङ्कनीयम् । वचनविरोधे [2]न्यायस्याभास-त्वात्—इति ।

---

1. विशिष्टाद्वैतिभिरुद्भावितं दूषणमाशङ्क्य निराकरोति—**न च शमादीना-मिति ।** मध्वचन्द्रिकाकृद्भिरपि इदं दूषणं आभासीकृतम्—"शमादीनां निदिध्यास-नाङ्गत्वेऽपि 'प्रशान्तचित्ताय शमान्विताय...प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इत्यादि-वाक्यावगतं श्रवणाङ्गत्वं च न विरुद्धम्" इति ।

2. **न्यायस्याभासत्वादिति** 'अक्षय्यं ह वै' इत्यादेः विशेषशास्त्रत्वेन 'तद्यथेह' इत्यादिसामान्यशास्त्रापेक्षया प्रबलत्वाच्च इत्यपि बोध्यम् ।

**अतःशब्दो हेत्वर्थः । यस्माद्वेद एव अग्निहोत्रादीनां श्रेयःसाधनानां अनित्यफलतां दर्शयति 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र**

न केवलेन न्यायेन तस्यान्यथानयनम्, अपि तु न्यायोपोद्बलितश्रुत्यनुसारेण । तद्यथेहेत्यादिश्रुतिः यत्कृतकंतदनित्यमितिन्यायं 'तद्यथेह कर्मचितो लोकः क्षीयते' इत्यंशेनानूद्य कर्मफलस्यानित्यत्वं प्रतिपादयति । अतः सा उपपत्तिरूपतात्पर्यलिङ्गोपोद्बलिता तद्रहितात् 'अक्षय्यं ह वै चातुर्मास्ययाजिनः' इत्यादि वाक्यात् विशेषरूपादपि बलवती । एवम् 'आत्तो वै सशरीरः प्रियाप्रियाभ्याम्' [छा. उ. ८-१२-१] इत्यपि वचनं 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' [छा. उ. ८-१-२१] इति अन्वयव्यतिरेकरूपोपपत्त्यात्मकतात्पर्यलिङ्गोपोद्बलितं 'स्वर्गे लोके' इति वाक्याद्बलीयः । विशिष्य च हिरण्यगर्भस्यैव भयादिकमाम्नायते 'सोऽबिभेत्, स वै नैव रेमे' [बृ. उ. १-४-२] इत्यादि । तत्र का कथा अन्येषां तल्लोकं गतानां भयादौ । तस्मादक्षय्यवाक्यं आपेक्षिकामृतत्वाभिप्रायेण व्याख्येयम् । तथा चोपबृंहितं 'आभूतसम्प्लवं स्थानममृतत्वं हि भाष्यते' इति । 'स्वर्गे लोके' इति वाक्यञ्च नतत्रत्वमितिवाक्यशेषानुसारेण मृत्यु[1]जराशनायादिकृतं दुःखं वारयदपि पारतन्त्र्यादिकृतं न वारयतीति परिहारः ।

अमुमर्थं द्योतयितुं अतश्शब्दः । तत्र–यद्यतश्शब्देन अथशब्दोक्तं साधनचतुष्टयं परामृश्यते, तदा अथशब्दोक्तस्यैव पुनरतश्शब्देन परामर्शं कृत्वा तस्य जिज्ञासां प्रति हेतुत्वं प्रतिपाद्यत इति वक्तुमयुक्तं, आनन्तर्यप्रतिपादकेनैवाथशब्देन एतदर्थसिद्धेः–इति शङ्का स्यात् । तन्निराकरणमेवम्—अतश्शब्देन मुख्यया वृत्त्या साधनचतुष्टयसंपत्ति[2]मात्रपरामर्शेऽपि लक्षणया लब्धात्मकत्वेन तत् परामृश्यते । तेन च अलब्धात्मकत्वशङ्का तदुपोद्बलकतया च अक्षय्यमित्यादिवाक्यं सूच्यते । तत्परिहारश्च लक्षितेन लब्धात्मकत्वेन लभ्यते । तदुपपत्तितया तद्यथेत्यादिवाक्यं सूच्यते । एतत्सर्वमभिप्रेत्याह—**अतश्शब्दो हेत्वर्थ इति** । 'यस्माद्वेद एव' इत्यादिवाक्यं आभिप्रायिकार्थकथनपरम् ।

---

1. मु. 'जरा' नास्ति ।
2. **सम्पत्तिः**—परिपाकः–फलजननौन्मुख्यमितियावत्

**पुण्यचितो लोकः क्षीयते' ( ८ - १ - ६ ) इत्यादिः, तथा ब्रह्मज्ञानादपि परं पुरुषार्थं दर्शयति 'ब्रह्मविदाप्नोति परम्' ( तैत्ति २ - १ ) इत्यादिः, तस्माद्यथोक्तसाधनसंपत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्या ब्रह्मणो जिज्ञासा ब्रह्म-जिज्ञासा ।**

ननु सांसारिकफलस्यानित्यत्वावधारणं वैराग्यद्वारा शमादिसम्पत्त्युपयुक्तमस्तु, आत्मनित्यत्वावधारणं तु क्वोपयुज्यते—इत्याशङ्कयाह—**तथा ब्रह्मज्ञानादिति** । अयं भावः—आत्मनित्यतामवगत्य तस्य 'विज्ञानमानन्दं ब्रह्म' [ बृ. उ. ३-९ ] इति आनन्दरूपतामवगच्छन् तं कामयते, तदुपायं च ज्ञानं 'ब्रह्मविदाप्नोति परम्' [ तै. उ. २-१ ] इति निर्धार्य तं जिज्ञासते । ततश्च मुमुक्षाद्वारा ब्रह्मजिज्ञासाया-मात्मनित्यत्वावधारणमुपयुज्यते—इति ।

ब्रह्मजिज्ञासेत्यत्र ब्रह्मणे जिज्ञासा इति [1]केचिद्विगृह्णन्ति । तेषामयमाशयः—ब्रह्मणो हि निवृत्तावरणत्वेन फलरूपत्वम् । [2]तज्ज्ञानोपयोगितया चतुर्थीसमास [3]एषितव्यः । ननु—'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः [ पा. सू. २-१-३६] इति सूत्रेण किल चतुर्थीसमासो वक्तव्यः । तस्य चायमर्थः—चतुर्थ्यन्तं पदं चतुर्थी-प्रकृतिप्रतिपाद्यसाधनवाचिना अर्थादिभिश्च शब्दैः समस्यत इति । 'यूपदारु, द्विजार्थः सूपः, कुबेरबलिः' इत्यादीनि चतुर्थीगर्भविग्रहाण्युदाहरणानि । तदर्थे-त्यंशस्य चेदं ब्रह्मजिज्ञासेत्युदाहरणं वक्तव्यम् । तन्न सम्भवति । 'विकृतिः प्रकृत्या' इति वार्तिकेन तस्य प्रकृतिविकारभाव एव [4]नियमात्—इति चेत्, न—तेनैव 'अश्वघासादिषु उपसङ्ख्यानम्' इति प्रकृतिविकारभावाभावेऽपि अश्वघा-सादिशब्देषु चतुर्थीसमासस्य प्रतिप्रसूतत्वात् । अश्वघासादेश्चाकृतिगणत्वात् ब्रह्मजि-ज्ञासाशब्दोऽपि तदन्तर्गतो भविष्यति । अत एव 'शास्त्रेण धर्मनियमः' [ पस्पशा ] इति वार्तिकव्याख्यानावसरे 'धर्माय नियमः' इति विग्रहो महाभाष्ये दर्शितः—इति । तान्निराकर्तुं स्वाभिमतं विग्रहं दर्शयति—**ब्रह्मणो जिज्ञासेति** । अयमाशयः—

---

1. **केचित्**—पूर्वेषु वृत्तिकारेषु केचित्

2. आ. तज्ज्ञापनोप०

3. **एषितव्य इति** अत एव 'धर्माय जिज्ञासा धर्मजिज्ञासा' इति चतुर्थीसमासः शबरस्वामिभिः समाश्रित इति भावः ।

4. **नियमादिति** अन्यथा 'रन्धनाय स्थाली' 'अवहननाय उलूखलं' इत्या-दावपि समासप्रसङ्ग इति भावः ।

'विकृतिः प्रकृत्या' इति वचनं 'ब्राह्मणसूपः' इत्यादौ चतुर्थीसमासव्यावृत्त्यर्थं पृथक् न कर्तव्यम्। सूत्रकृतैव प्रकृतिविकारभावस्य ज्ञापितत्वात्। तदर्थेत्युक्त्वा पुनः अर्थादीन् पृथङ्निर्दिशति। तन्निर्देशो व्यर्थः प्राप्नोति। 'द्विजार्थः' 'कुबेरबलिः' इत्यादीनामपि तादर्थ्यप्रतिपादकत्वेन तदर्थेत्येव समाससिद्धेः। [1]अतः पृथगर्थादीन्निर्दिशन्[2] तदर्थेत्यत्र विवक्षाविशेषं गमयति। तत्र प्रकृतिविकृतिभावे तादर्थ्यस्य स्पष्टत्वात् स एव तेन विवक्ष्यते। अतोऽतिप्रसङ्गाभावात् तद्वचनं न कर्तव्यमिति तद्वार्तिकं महाभाष्ये प्रत्याख्यातम्। कथं तर्ह्यश्वघासादौ[3] इत्याशङ्क्य, तत्रापि चतुर्थीसमाससिध्यर्थं पृथग्वचनं न कर्तव्यम्, षष्ठीसमासेनैव तादृशरूपसिद्धेः, स्वरे विशेषाभावाच्च[4]। ततश्च महाभाष्यपर्यालोचनया अश्वघासादिषु [5]षष्ठीसमास एवेति ब्रह्मजिज्ञासापदेऽपि स एवैषितव्यः। अत एव 'धर्माय नियमः—इति न विग्रहकथनम्, किं तु षष्ठीगर्भविग्रहेणैव व्युत्पादने क्रियमाणे सम्बन्धसामान्यप्रतिपादिकायाः षष्ठ्याः तादर्थ्ये पर्यवसानाभिप्रायम्' इति [6]तद्व्याख्यातृभिरुक्तम्।

ननु—ब्रह्मशब्दस्य 'इदं ब्रह्म इदं क्षत्रम्' [बृ. उ. २-२] इति ब्राह्मणजातौ 'इदं ब्रह्मायाति, इदमागच्छति' [बृ. उ. ४-३] इति जीवे 'तस्मादेतत् ब्रह्म नाम रूपमन्नं च जायते' [मु. उ. १. १. ९] इति हिरण्यगर्भे प्रयोगो दृश्यते। 'सत्यं

---

1. मु. 'अतः' नास्ति

2. मु. अर्थादिनिर्देशात्

3. घास इत्या०

4. **विशेषाभावाच्चेति** इति समाहितं इति शेषः।

5. **षष्ठीसमास एवेति** न चैवं रन्धनस्थालीत्यादिः षष्ठीसमासः स्यादिति वाच्यम्। इष्टापत्तेः। न चैवं प्रकृतिविकारभावनियमवैयर्थ्यम्। चतुर्थीसमासवारणेन साफल्यात्। न च चतुर्थीषष्ठीसमासयोरविशेषः। शाब्दबोधे सम्बन्धस्य सम्बन्धत्वेन तादर्थ्यत्वेन च भानेन विशेषात्।

6. **तद्व्याख्यातृभिरुक्तमिति** अत एव—धर्माय जिज्ञासा इति शबरस्वामिवचनं षष्ठीसमासलब्धार्थिकार्थप्रदर्शनपरम्, न तु विग्रहप्रदर्शनपरम्, 'तस्य ज्ञातुं इच्छा' इति निगमनवाक्येन षष्ठीसमासविभावनात्—इति कुमरिलभट्टपादैर्व्याख्यातमित्यपि बोध्यम्। आत्मनेपदपरस्मैपदशब्दयोः प्रकृतिविकारभावाभावेऽपि तादर्थ्यसमासस्तु 'वैय्याकरणाख्यायां चतुर्थ्याः' इत्यलुग्विधानसामर्थ्यात्। न च तस्मादेव ज्ञापकात् सर्वत्रापि तादर्थ्यसमासः शङ्कनीयः। तथा सति बलिरक्षितग्रहणवैयर्थ्यापत्तेः।

**ब्रह्म च वक्ष्यमाणलक्षणं 'जन्माद्यस्य यतः' इति। अत एव न ब्रह्मशब्दस्य जात्याद्यर्थान्तरमाशङ्कितव्यम् ।**

**ब्रह्मण इति कर्मणि षष्ठी न शेषे, जिज्ञास्यापेक्षत्वाज्जिज्ञासायाः, जिज्ञास्यान्तरानिर्देशाच्च ।**

ज्ञानमनन्तं ब्रह्म' [तै. उ २-१ ] इति परमात्मनि च। अतः सूत्रगतो [4]ब्रह्मशब्दः किंपरः– इत्यत आह—**ब्रह्म चेति**। 'जन्माद्यस्य यतः' इत्यत्र त्रिविधपरिच्छेद-शून्यं मायिकसकलजगत्कर्तृत्वोपादानत्वलक्षितं सत्यत्वादिधर्मिमात्रस्वरूपं श्रुतिप्रमाणकं व्यवस्थापयिष्यते, तदेवात्र ब्रह्मशब्देन ग्राह्यमिति भावः ।

ननु—षष्ठीगर्भसमासेऽपि शेषषष्ठ्येव प्रकृते ग्राह्या, न कर्मषष्ठी। तथा हि सति ब्रह्मकर्मक एव विचारः प्रतिज्ञातः स्यात्। तथा च समन्वयादिविचारस्याप्रति-ज्ञाततया शास्त्रे तद्ग्रथनमसङ्गतं स्यात्। शेषषष्ठीपक्षे तु ब्रह्मसम्बन्धिविचारस्य प्रति-ज्ञालाभात् समन्वयादिविचारस्यापि परम्परया ब्रह्मसम्बन्धित्वात् न तद्ग्रथनमसङ्गतं भविष्यति—इति यो मन्यते तं प्रत्याह—**ब्रह्मण इति कर्मणीति** अयमाशयः— येनापि शेषषष्ठीगर्भःसमासः स्वीक्रियते, तस्यापि न साक्षात्प्रमाणादिविचारो ब्रह्मजिज्ञासेतिप्रतिज्ञया संगृहीतः। अपि तु सम्बन्धसामान्यस्य विशेषपर्यवसानाव-श्यंभावात् वक्ष्यमाणसूत्रपर्यालोचनया ब्रह्मस्वरूपतत्प्रमाणादिपर्यवसानं वक्तव्यमिति क्लेश एव। तथापर्यालोचनायां कर्मषष्ठीगर्भसमासपक्षेऽपि ब्रह्मकर्मकविचारप्रतिज्ञया प्रमाणादिविचारोऽपि प्रतिज्ञातो भवत्येव। प्रमाणादिविचारं विना ब्रह्मविचारस्य फलपर्यवसायित्वासम्भवात्। फलपर्यवसायिब्रह्मविचारस्यैव प्रतिज्ञाविषयत्वात्। अपि च–प्रमाणादिविचारोऽपि 'इदं ब्रह्मणि प्रमाणम्, इदं ब्रह्मप्राप्तिसाधनम्, इदं ब्रह्म-ज्ञानफलम्' इत्येवंरूपेण क्रियमाणो ब्रह्मविषयो भवत्येवेति न तेषामसङ्गतत्वम्। परं तु सविषयाया जिज्ञासायाः कर्मांशे उत्थिताकांक्षत्वात् तत्परित्यज्य सम्बन्धांशे आकांक्षामुत्थाप्य ब्रह्मजिज्ञासापदस्य सम्बन्धसामान्यपरत्वकल्पनमनुचितमिति ।

ननु कर्मषष्ठीपक्षे कर्तृकर्मणोःकृतीति षष्ठी वक्तव्या। तस्याश्च समासो निषिद्धः 'प्रतिपदविधाना च षष्ठी न समस्यते' [पा. सू. वा. २-२-१०] इति। या हि पदविशेषं निमित्तीकृत्य षष्ठी विधीयते, यथा—'ज्ञोऽविदर्थस्य करणे' [पा. सू. २-३-५१] इत्येतेन अविदर्थस्य-अज्ञानार्थस्य प्रवृत्त्याद्यर्थस्य जानातेः करणे

ननु शेषषष्ठीपरिग्रहेऽपि ब्रह्मणो जिज्ञासाकर्मत्वं न विरुध्यते, संबन्धसामान्यस्य विशेषनिष्ठत्वात्। एवमपि प्रत्यक्षं ब्रह्मणः कर्मत्वमुत्सृज्य सामान्यद्वारेण परोक्षं कर्मत्वं कल्पयतो व्यर्थः प्रयासः स्यात्। न व्यर्थः, ब्रह्माश्रिताशेषविचारप्रतिज्ञानार्थत्वात्—इति चेत्—

न—प्रधानपरिग्रहे तदपेक्षितानामर्थाक्षिप्तत्वात्। ब्रह्म हि ज्ञानेनाप्तुमिष्टतमत्वात् प्रधानम्। तस्मिन् प्रधाने जिज्ञासाकर्मणि परिगृहीते यैर्जिज्ञासितैर्विना ब्रह्म जिज्ञासितं न भवति तान्यर्थाक्षिप्तान्येवेति न पृथक्सूत्रयितव्यानि। यथा राजाऽसौ गच्छतीत्युक्ते सपरिवारस्य राज्ञो गमनमुक्तं भवति तद्वत्।

श्रुत्यनुगमाच्च। 'यतो वा इमानि भूतानि जायन्ते' (तैत्ति० ३।१) इत्याद्याः श्रुतयः 'तद्विजिज्ञासस्व तद्ब्रह्म' इति प्रत्यक्षमेव ब्रह्मणो जिज्ञासाकर्मत्वं दर्शयन्ति। तच्च कर्मणिषष्ठीपरिग्रहे सूत्रेणानुगतं भवति।

तस्मात् ब्रह्मण इति कर्मणि षष्ठी।

षष्ठी 'सर्पिषो ज्ञानं—सर्पिषा कारणेन प्रवृत्तिः' इत्येवं करणार्थे जानातियोगं निमित्तीकृत्य विहिता, तादृशी प्रतिपदविधानेत्युच्यते। ततश्च कृद्योगं निमित्तीकृत्य कर्तृकर्मणोर्विधीयमाना प्रतिपदविधाना भवत्येवेति कथं समासः। ननु 'कृद्यो[गा]-(गलक्षणा) च षष्ठी समस्यते' [पा. सू. वा. २-२-९] इति प्रतिप्रसवबलात् समासो भविष्यतीति चेत्, न—कृद्योगलक्षणाया अपि कर्मषष्ठ्याः 'कर्मणि च' [पा. सू. वा. २-२-१४] इत्यनेन सूत्रेण निषेधात्। तस्मात् कर्मषष्ठीपक्षे समासो नोपपद्यत इति चेत्—

उच्यते—'कर्मणि च' इति सूत्रं न कर्मषष्ठीमात्रस्य [1]समासप्रतिषेधकम्। तथासति 'तृजकाभ्यां कर्तरि' [पा. सू. २-२-१५] इत्यनेन कर्त्रर्थतृजकाभ्यां षष्ठ्या न समास इत्येवमर्थकेन 'ओदनस्य पाचकः[2]' 'ओदनस्य भोक्ता'

1. मु. 'समास' नास्ति।

2. मु. भोजकः

इत्युदाहरणसिध्यर्थं पृथङ्निषेधो व्यर्थः स्यात् । ओदनस्य कर्मतया कर्मणिचेत्यनेनैव रूपसिद्धेः । अतः कर्मणिचेतिसूत्रे चशब्द इतिशब्दसमानार्थकः । ततश्च कर्मणीतिशब्दमुच्चार्य कर्तृनिषेधपूर्वकं या षष्ठी कर्मणि परिशेषिता सा न समस्यते—इति तदर्थो ग्राह्यः । ततश्च 'उभयप्राप्तौ कर्मणि' [पा. सू. २-३-६६] इति सूत्रस्य विषये षष्ठीसमासो न भवतीति पर्यवसितोऽर्थः ।

नन्वयमपि तस्य विषयो भवत्येव । तस्य ह्ययमर्थः—उभयोः—कर्तृकर्मणोः यत्र प्राप्तिः [1]कृत्प्रत्यययोगे, तत्र 'कर्तृकर्मणोः कृति' [पा. सू. २-३-६५] इत्यनेन उभयत्र षष्ठीप्राप्तौ, कर्मण्येव भवति न कर्तरीति परिसङ्ख्यारूपः[2] । ततश्चात्रापि साधनचतुष्टयसम्पन्नस्य कर्तुः स्वशब्देनोपादाने सति उभयप्राप्तेस्सम्भवात् उभयत्र षष्ठीप्राप्तौ उभयप्राप्तौकर्मणीति परिसङ्ख्या प्राप्नोत्येवेति चेत्—

न—उभयप्राप्तौकर्मणीतिसूत्रे 'कृत्वोऽर्थप्रयोगे' [पा. सू. २-३-६४] इति व्यवहितसूत्रात् प्रयोग इत्यनुवर्तते । ततश्च कर्तृकर्मगतविशेषप्रतिपादनतात्पर्यकप्रयोगे कर्मण्येव—इति तदर्थः । [3]यथा—आश्चर्यो गवां दोहोऽगोपेन—इति । अत्र हि आश्चर्यत्वसम्पादनाय अजादिवैलक्षण्येन दुर्दोहत्वं कर्मणः प्रतिपादयितुं गोरूपेण निर्देशोऽपेक्षितः । तथा दोग्धुरकुशलत्वप्रतिपादनाय गोपालभिन्नत्वेन निर्देशोऽपेक्षितः । प्रकृते तु न कर्तृकर्मोभयगतविशेषप्रतिपादनपरं सूत्रम् । किं तु विचारे पुष्कलकारणविषयप्रयोजनानि दर्शयितुम् । अतो नायमुभयप्राप्तिसूत्रविषयः ।

ननु—तथासति 'अन्तर्धौ येनादर्शनमिच्छति' [पा. सू. १-४-२८] इत्यत्र येनेति तृतीया न स्यात् । [4]अन्तरङ्गप्रत्यासत्त्या गम्यमानस्यात्मनः यत्कर्तृकं अन्तर्धाननिमित्तं दर्शनाभावमिच्छति तस्य कर्तुः अपादानसंज्ञा भवति, यथा उपाध्यायादन्तर्धत्ते—इत्येवमपादानसंज्ञापरत्वेन कर्तृकर्मगतविशेषप्रतिपादनातात्पर्यकत्वात्

---

1. मु. कृत्प्रयोगे

2. मु. रूपा

3. मु. 'यथा' नास्ति

4. **अन्तरङ्गप्रत्यासत्त्या** अविनाभावसंबन्धेन । अन्तर्धानस्य अदर्शनकर्मणश्च व्याप्यव्यापकभावः संप्रतिपन्न इति ।

**ज्ञातुमिच्छा जिज्ञासा। अवगतिपर्यन्तं ज्ञानं सन्वाच्याया इच्छायाः कर्म, फलविषयत्वादिच्छायाः। ज्ञानेन हि प्रमाणेन अवगन्तुमिष्टं ब्रह्म। ब्रह्मावगतिर्हि पुरुषार्थः, निश्शेषसंसारबीजाविद्याद्यनर्थनिबर्हणात्।**

**तस्मात् ब्रह्म जिज्ञासितव्यम्।**

—इति चेत्, न—तत्राप्यपादानसंज्ञां प्रति निमित्ततया अदर्शनकर्तृत्वेनादर्शन-कर्मत्वेन चान्तर्धानसम्बन्धितया[1] कर्तृकर्मप्रतिपादनतात्पर्यकत्वसम्भवात्।

अथवा (कर्मणि प्रतिषेधे) 'अकाकारयोरप्रतिषेधः [पा. सू. वा. २-३-६६] इति वार्तिकवचनेन—'अप्रत्ययात्' [पा. सू. ३-३-१०२] इति सूत्रेण प्रत्यया-न्तेभ्यः अकारप्रत्ययो भवतीति विहिते अकारप्रत्यये 'धात्वर्थनिर्देशे ण्वुल् वक्तव्यः' [पा. सू. वा. ३-३-१०८] इति ण्वुल्प्रत्ययादेशे अके च '[2]बिभित्सा भेदिका वा रुद्रस्य जगतः' इत्युदाहरणयोः 'उभयप्राप्तौ कर्मणि' इति प्रतिषेधो न प्रवर्तते—इति प्रतिपादितम्। ततश्च ब्रह्मजिज्ञासापदस्य अकारप्रत्ययान्तत्वात् उभयप्राप्तौकर्म-णीति प्रतिषेधो न प्रवर्तते। अतः कर्तृकर्मणोःकृतीत्येव प्रकृते षष्ठी। तस्याश्च न समासनिषेधः।

ननु—सुखं दुखाभावो वा साक्षादिच्छाविषयः, तत्साधनतया अन्यः, तत् कथं ज्ञानस्य इच्छाविषयत्वम्, तत्राह—[3]**अवगतिपर्यन्तमिति**। अवगतिः—अविद्यानिवर्तको वृत्तिरूपः साक्षात्कारः, तत्साधनं विचारजनितं तात्पर्यावधारणरूपं जिज्ञासेत्यत्र प्रकृतिप्रतिपाद्यं इत्यर्थः। तत्र हेतुमाह—**फलविषयत्वादिति**। सुखदुःखाभावविषया साक्षादेव फलविषया। तत्साधनविषया तु [4]विशेषणविधया। तात्पर्यावधारणं च सत्तानिश्चयरूपशाब्दज्ञानद्वारा साक्षात्कारोपयोगि। तदिदमाह—**ज्ञानेन हीति**। अवगतेश्च अविद्यानिवर्तकतया पुरुषाभिलषितत्वमित्याह—**ब्रह्माव-गतिर्हीति**।

---

1. **अन्तर्धानसंबन्धितयेति** संबन्धोऽत्र अविनाभावः। तृतीयार्थो ज्ञाप्यत्वं अदर्शनकर्तृत्वे अदर्शनकर्मत्वे चान्वेति।

2. आ. बीभत्सा

3. **अवगतिपर्यन्तमिति** बहुव्रीहिः। पर्यन्तं—फलम्

4. **विशेषणविधयेति** फलविषयेति शेषः। इच्छाविशेष्ये इष्टसाधने इष्टस्य विशेषणत्वात् इत्यर्थः।

**तत्पुनर्ब्रह्म प्रसिद्धमप्रसिद्धं वा स्यात् । यदि प्रसिद्धं न जिज्ञासितव्यम्, अथाप्रसिद्धं नैव शक्यं जिज्ञासितुमिति ।**

[1]ततश्चायं सूत्रार्थः—साधनचतुष्टयसम्पत्त्यनन्तरं तद्धेतुका ब्रह्मजिज्ञासा भवतीति । जिज्ञासापदान्तर्गतज्ञाधातूपात्तं ब्रह्मणि वेदान्ततात्पर्यावधारणमपि ब्रह्मकर्मकं भवत्येवेति तद्द्वारा जिज्ञासाया ब्रह्म विषयः । यद्यपि ब्रह्मणि वेदान्ततात्पर्यावधारणेच्छारूपा ब्रह्मजिज्ञासा उक्तप्रणाडिकया तात्पर्यनिर्धारणस्येष्टसाधनतामवगच्छतः साधनचतुष्टयसम्पत्त्यभावेऽपि भवत्येव, तथापि न सा साक्षात्कारपर्यन्तविचारप्रयोजिका । किं तु साधनचतुष्टयसम्पत्त्यनन्तरं उत्कटजिज्ञासैव । कामुको हि सांसारिकफलासक्तः तज्जनितदुःखमङ्गीकृत्यैव वैषयिकं सुखं बहुमन्यमानः तदुपयोगिनं इहामुत्रगमनरूपं संसारं न निविवृत्सति । विरक्तस्य तु संसारकृतोपभोगाभावात्[2] तत्कृते दुःखे आत्यन्तिकद्वेषो भवति । ततः तन्निवृत्तिं कामयते । ततश्च विरक्तस्य निरतिशयानन्दप्रेप्सारूपा मुमुक्षा संसारनिविवृत्सासहिता भवति । एषैव उत्कटमुमुक्षेत्युच्यते । तादृशमुमुक्षाप्रयुक्ता च जिज्ञासा सूत्रोपात्तेति न विवेकाद्यानन्तर्यानुपपत्तिः । [3]तया च जिज्ञासया स्वविषयप्रयोजकतया विचार आक्षिप्यते । तदभिप्रायेण जिज्ञासितव्यमिति उपसंहारवाक्ये तव्यप्रत्ययप्रयोगः । अत्र आक्षिप्तविचारं प्रति जिज्ञासापदोपात्तं ज्ञानं साध्यम् । ज्ञानस्य च उक्तपरम्परया अधिकारिविशेषणीभूतमुमुक्षाविषयो मोक्षः फलम् । तथा च [4]श्रुत्यर्थाभ्यां अयं सूत्रार्थः पर्यवसितः—विवेकादिदार्ढ्यानन्तरं तद्दार्ढ्यस्य च तद्यथेहेत्यादिवचनपर्यालोचनया उपपत्तेः परम्परया मोक्षसाधनीभूतवेदान्ततात्पर्यनिर्धारणाय वेदान्तवाक्यानि विचारयेदिति ।

**तत्पुनरिति** । ब्रह्मज्ञानेच्छा हि 'ब्रह्मज्ञानमिष्टसाधनम्' इति ज्ञानं विना न सम्भवति । तज्ज्ञानं च विशेषणीभूतब्रह्मज्ञानं विना न सम्भवति । ब्रह्मज्ञानं च

---

1. भामत्यनुसारं सूत्रार्थं वर्णयितुमारभते—**ततश्चायमिति**

2. मु. ०पयोगाभावात्

3. मु. तथा

4. आ. शक्त्याक्षेपाभ्यां

**उच्यते—अस्ति तावद्ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्तिसमन्वितम् ।**

वेदान्तेभ्य एव वक्तव्यम् । तेषां च यदि निर्णयजनकत्वमिष्यते, तदा विचारं विनैव निर्णयस्य सिद्धत्वात् व्यर्थो विचारः । यदि तु तेभ्यः ब्रह्मनिर्णयो न भवति, तदा तदज्ञाने जिज्ञासैव न भवेत् । न च संशयरूपां प्रसिद्धिमादाय ब्रह्मजिज्ञासा समर्थयितुं शक्यते, वेदान्तानां संशयजनकत्वानुपपत्तेः । ततः कथं जिज्ञासापूर्वको विचारः कर्तव्यः? इति शङ्काभिप्रायः ।

**उच्यत इति** । अस्मिन् हि शास्त्रे 'तत्त्वमसि' 'अयमात्मा ब्रह्म' इति जीवब्रह्माभेदबोधकवाक्यानि, 'सत्यं ज्ञानमनन्तं ब्रह्म' 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' 'यस्सर्वज्ञस्सर्ववित्' (यस्य ज्ञानमयं) इत्यादीनि तत्पदार्थप्रतिपादकानि, 'असङ्गो ह्ययं पुरुषः' 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' 'स समानस्सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव' इत्यादीनि त्वम्पदार्थप्रतिपादकानि च वाक्यानि विचारयिष्यन्ते सपरिकरं कृत्स्नेन शास्त्रेण । तानि च विचारात्प्रागेव अधीतसाङ्गस्वाध्यायं प्रति अर्थावबोधकान्येव । ततश्च ब्रह्मप्रसिद्धिः । [1]एवं ब्रह्मशब्दादपि तत्पदार्थप्रसिद्धिः । तस्य हि [2]बृहत्त्वं प्रवृत्तिनिमित्तम् । तच्च त्रिविधपरिच्छेदशून्यत्वम् । ततश्च यद्यन्यो जगत्कर्ता स्यात् जगदुपादानं वा, ततः तमादाय वस्तुपरिच्छेदप्राप्तेः [3]बृहत्त्वं न स्यात् । अतो ब्रह्मैव जगत्कर्त्रुपादानरूपं सिध्यत् तदुपयोगितया[4] सर्वज्ञं सर्वशक्ति-

---

1. विवक्षितस्वरूपस्य ब्रह्मणो भाष्योक्ता वेदान्तेभ्यः प्रसिद्धिः उपपादिता । अथ भाष्योक्तामेव ब्रह्मशब्दव्युत्पत्त्या नित्यशुद्धत्वादिसर्वशक्तिमत्त्वान्तार्थप्रतीतिं समर्थयति—**एवं ब्रह्मशब्दादपीत्यादिना** । एतेन—ब्रह्मशब्दात् सविशेषस्यैव प्रतीतेः न निर्विशेषं ब्रह्मशब्दात् सिद्ध्यतीति **विशिष्टाद्वैतिनां** आक्षेपो निरस्तः ।

2. मु. ब्रह्मत्वं

3. मु. ब्रह्मत्वं

4. **तदुपयोगितयेति** सर्वज्ञत्वं कर्तृत्वोपयोगि सर्वशक्तिसमन्वितत्वं उपादानत्वोपयोगीति भावः

समन्वितं सिध्यति । [1]तत्रापि जगतः पारमार्थिकत्वे वस्तुपरिच्छेदराहित्यं न सिध्यतीति तस्य मिथ्यात्वमुपक्षिप्य परमार्थतस्तद्राहित्यरूपं नित्यशुद्धत्वादिकं उपक्षिपति । तथा अहमितिप्रत्ययेऽपि त्वम्पदार्थः प्रसिध्यति ।

[2]न चैतावता विचारानारम्भः । यद्यपि विचारात्प्रागेव 'अशनायाद्यतीतो जीवः सकलवेदान्तप्रतिपाद्यं परं ब्रह्म' इति स्वरसतः अधीतसाङ्गस्वाध्यायस्य बोधो भवति, तथाऽपि अनभ्यासदशापन्नजलादिज्ञानवत् स बोधः चित्तदोषवशात् आपातरूप इत्युच्यते । तत्र यथा जलज्ञाने अप्रामाण्यशङ्का एवं प्रकृतेऽपि नानाविधाश्शङ्काः भवन्ति । तत्र अहमितिप्रतीतिविषयः शरीरमेवेति **चार्वाकाः** । इन्द्रियाण्येवेति **तदेकदेशिनः** । मन एवेति[3] **तादृशाः** । क्षणिकविज्ञानमिति **सौगताः** । शून्यमिति[4] **तदेकदेशिनः** । एते च सर्वे वेदाप्रामाण्यवादिनः सर्वामेव वैदिकप्रतीतिं अप्रमामेव वदन्ति । अस्ति देहादिविलक्षणः स्थिरः कर्तृत्वादिविशिष्टः इति **नैयायिका मीमांसकाश्च** । ते तु अविनाशितया जीवप्रतिपादकानि वाक्यानि यथाश्रुतान्येव व्याचक्षते । असङ्गत्वादिप्रतिपादकस्त्वागमो न यथाश्रुतो ग्राह्यः इति वदन्ति । **साङ्ख्यास्तु**—भोक्तैवात्मा न कर्ता भोक्तृत्वं च स्वप्रकाशचिद्रूपत्वमेव इति वदन्तः, असङ्गत्वादिप्रतिपादक आगमो यथाश्रुतार्थ एव, परं तु जीवानां भिन्नत्वात् तदैक्यप्रतिपादक आगमो न यथाश्रुतो ग्राह्यः—इति वदन्ति । एवं त्वम्पदार्थशोधक-[5]वाक्येषु वैदिकानामेव विप्रतिपत्तयः । **मीमांसकास्साङ्ख्याश्च** ईश्वरं नेच्छन्ति । ते सर्वज्ञत्वादिप्रतिपादकमागमं अन्यथा व्याचक्षते । **तार्किकादयोऽपि** ईश्वरमभ्युपगम्य तस्य निर्विशेषतां जीवाभिन्नतां चानिच्छन्तः अस्थूलादिवाक्यानि तत्त्वमस्यादिवाक्यानि च अन्यथा व्याचक्षते । सिद्धान्ते तु तानि यथाश्रुतान्येव । तत्र

---

1. मु. तस्यापि

2. **न चैतावतेत्यादि** एतेन—वेदान्तशब्दजन्यज्ञानस्य मोक्षसाधनत्वे ब्रह्मशब्दात् निर्विशेषप्रतीतिसम्भवे च विचारशास्त्रवैयर्थ्यमिति **शतदूषण्युक्तं** दूषणं अपास्तम् ।

3. आ. एवेत्यपि

4. आ. ०मित्यपि

5. आ. बोधकवाक्येषु

ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते, [बृं(बृ)हतेर्धातोरर्थानुगमात्।

सर्वस्यात्मत्वाच्च ब्रह्मास्तित्वप्रसिद्धिः। सर्वो ह्यात्मास्तित्वं प्रत्येति, न न अहमस्मीति। यदि हि न आत्मास्तित्वप्रसिद्धिः स्यात्, सर्वो लोको न अहमस्मीति प्रतीयात्। आत्मा च ब्रह्म।

यदि तर्हि लोके ब्रह्म आत्मत्वेन प्रसिद्धमस्ति ततो ज्ञातमेवेति अजिज्ञास्यत्वं पुनरापन्नम्।

न—तद्विशेषं प्रति विप्रतिपत्तेः। देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृता जना लौकायतिकाश्च प्रतिपन्नाः। इन्द्रियाण्येव चेतनान्यात्मेत्यपरे। मन इत्यन्ये। विज्ञानमात्रं क्षणिकमित्येके। शून्यमित्यपरे। अस्ति देहादिव्यतिरिक्तः संसारी कर्ता भोक्तेत्यपरे। भोक्तैव केवलं न कर्तेत्येके। अस्ति तद्व्यतिरिक्त ईश्वरः सर्वज्ञः सर्वशक्तिरिति केचित्। आत्मा स भोक्तुरित्यपरे।

एवं बहवो विप्रतिपन्ना युक्तिवाक्यतदाभाससमाश्रयाः सन्तः। तत्र अविचार्य यत्किंचित्प्रतिपद्यमानो निःश्रेयसात्प्रतिहन्येत, अनर्थं च इयात्।

तस्मात् ब्रह्मजिज्ञासोपन्यासमुखेन वेदान्तवाक्यमीमांसा तदविरोधितर्कोपकरणा निःश्रेयसप्रयोजना प्रस्तूयते।

सिद्धान्तव्यतिरिक्तेषु पक्षेषु यानियानि तत्तन्मतोपष्टम्भकतया वचनानि उदाह्रियन्ते याश्च युक्तयः, तासामाभासत्वं प्रतिपादनीयम्, सिद्धान्तोदाहृतवचनानां युक्तीनां च तत्तदाशङ्कानिराकरणपूर्वकं व्यवस्थितत्वं च व्युत्पादनीयम्। तदभावे तत्तद्वादिवाक्यश्रवणक्षुब्धचित्तस्य स्वोद्भावितशङ्काभिश्च क्षुब्धचित्तस्य उत्पन्नमपि साङ्गाधीतवेदवाक्यजनितं ज्ञानं नानाविधशङ्कारूपचित्तदोषकलुषितं [1]आपातरूपमेव स्यादिति तात्पर्यार्थः।

---

1. **आपातरूपमिति** आपातत्वं-प्रतिबद्धत्वं अप्रमात्वेन सन्दिग्धत्वं आवृतप्रमात्वकत्वं वा। अविद्यानिवृत्तिरूपफलानुपधायकत्वं इति यावत्।

सर्वशक्तिसमन्वितमित्येतदनन्तरं वेदान्तेभ्यः प्रसिद्धमिति शेषः। **ब्रह्मशब्दस्य हीति।** अयं हिशब्दः चार्थे द्रष्टव्यः। तथासति उपपत्त्यन्तरोपन्यासपरता स्पष्टा भवति। **सर्वस्यात्मत्वाच्चेति।** सङ्ग्रहवाक्यमेतत्। तत्र ब्रह्मास्तित्वप्रसिद्धिरित्यमुमंशं अन्वयेन व्यतिरेकेण च व्याचष्टे—**सर्वो हीति।** अहमस्मीति न प्रत्येतीति न, किं तु प्रत्येत्येव—इति योजना। ततश्च [1]विवक्षितार्थलाभः। **नाहमिति।** न प्रतीयादित्यन्वयः। **आत्मा स भोक्तुरिति।** भोक्तुस्स्वरूपमीश्वरः इति सिद्धान्तिन इत्यर्थः।

**वेदान्तवाक्यमीमांसा तदविरोधितर्कोपकरणेति।** यद्यपि 'सदेवेत्यादिवाक्यं [2]प्राधान्येन ब्रह्मप्रतिपादकम्, ब्रह्मविषयकोपक्रमोपसंहारैकरूप्याद्यनेकब्रह्मविषयपरमतात्पर्यग्राहकलिङ्गसमन्वयात्'[3] इत्येवंरूपेण युक्त्यनुसन्धानात्मिका वेदान्तमीमांसाऽपि तर्क एव, तथाऽपि तत्र शङ्काविशेषनिराकरणाय गुणसूत्रैः प्रदर्श्यमाना युक्तयः उपकरणत्वेन विवक्षिताः। अथवा सूत्रकृता संगृहीतानां श्रुत्यादीनां तद्बलाबलस्य च संगृहीतस्य विशदीकरणाय अध्वरमीमांसाव्याख्यातृभिरुक्तं प्रमेयं इह भाष्यकारादिभिरुद्गृह्यते, तत् उपकरणभूतं द्रष्टव्यम्। एवं 'स्मरन्ति च' 'अपि च सप्त' 'तत्रापि च तद्व्यापारादविरोधः' 'आचारदर्शनात्' 'बहिस्तूभयथाऽपि स्मृतेराचाराच्च' इति नरकादिप्रतिपादकतया कर्मसमुच्चयप्रतिपादकतया आरूढपतितबहिष्कारप्रतिपादकतया च स्मृत्याचारा उपन्यस्ताः। स्मृतिषु च अनुमानशब्दप्रयोगात् वेदानुमापकत्वं दर्शितम्। श्रुतौ च प्रत्यक्षशब्दप्रयोगात् स्वातन्त्र्येण प्रामाण्यं दर्शितम्। तत्र च सर्वत्र तर्कशास्त्रोक्तमनुमानादिलक्षणमुपयुक्तम्। तदिह व्याख्यातृभिरुपन्यस्यते। एवं अपशूद्राधिकरणे, संवर्गविद्यायां जानश्रुतौ प्रयुक्तः शूद्रशब्दः न जातिवचनः किं तु व्यक्तिवचनः—इत्युक्तम्। 'समाननामरूपत्वात्' [ब्र. सू. १-३-३०] इति सूत्रेण इन्द्रादिशब्दानां

---

1. **विवक्षितार्थलाभ इति** ब्रह्मास्तित्वप्रसिद्धिः विवक्षितोऽर्थः। तल्लाभश्च प्रतीत्यभावनिषेधे एव। न तु 'नाहमस्मि' इति प्रतीतेः निषेधे। अतः उक्तयोजनैव विवक्षिता इति भावः।

2. **प्राधान्येन**—अनन्यशेषतया

3. **समन्वयादिति** समन्वयः-वैशिष्ट्यम्।

## २ जन्माद्यधिकरणम्

**ब्रह्म जिज्ञासितव्यमित्युक्तम्। किंलक्षणं पुनस्तद्ब्रह्म इत्यत आह भगवान् सूत्रकारः—जन्माद्यस्य यत इति।**

जातिवचनत्वमाश्रितम्। तत्र तर्कशास्त्रोक्तं जातिव्यक्त्यादिलक्षणनिरूपणं उपयुक्तम्। तत्सर्वमत्र व्याख्यातृभिर्विशदीक्रियते। तदिह उपकरणतया विवक्षितम् ॥ १ ॥

**इति जिज्ञासाधिकरणम् ॥ १ ॥**

विषयादिसम्भवात् ब्रह्मजिज्ञासा आरम्भणीयेत्युक्तम्। तामारभते भगवान् सूत्रकारः—जन्माद्यस्ययत इति।

पूर्वोत्तराधिकरणयोस्सङ्गतिं वक्तुं वृत्ताधिकरणप्रमेयानुवादपूर्वकं उत्तराधिकरणमवतारयति—**ब्रह्म जिज्ञासितव्यमित्युक्तमिति**। स्वाभिमतं किञ्चिद्वस्तु असाधारण्येन निर्दिश्य तत्र प्रमाणोपन्यासः कर्तव्यः। अत एव च उत्तरत्र 'इदं ब्रह्मणि प्रमाणं' इत्येवं व्यवहारः। अतः प्रमाणोपन्यासात् प्रागेव असाधारण्याय लक्षणमुखेन ब्रह्म निर्देष्टव्यम्। अन्यथा हि प्रमाणोपन्यासोऽनाकाङ्क्षिताभिधानमेव स्यात्। अतः प्रथमसूत्रेण ब्रह्मस्वरूपतत्प्रमाणादिविचारेषु सर्वेषु प्रतिज्ञातेष्वपि लक्षणमुखेन ब्रह्मस्वरूपं प्रथमं निरूप्यते।

[1]तत्र च यत्र सर्वं विशेषजातं कल्पितं यच्च सत्यज्ञानानन्दादिपदार्थेषु धर्मिभूतमखण्डं वस्तुगत्या स एव ब्रह्मशब्दविशेष्यभूतोऽर्थः जन्मादिसूत्रेण प्रतिज्ञायते। तत्र 'शास्त्रयोनित्वात्' 'तत्तु समन्वयात्' इति सूत्राभ्यां प्रमाणं सर्वे वेदान्ता इत्युपन्यस्यते। ईक्षत्याद्यधिकरणमारभ्य अवान्तरकिञ्चिद्वाक्यपर्यालोचनया अन्यपरत्वमाशङ्क्य कृत्स्नेनाध्यायेन तत्रैवोपनिषदां प्रामाण्यं उत्सर्गापवादाभ्यां दृढीक्रियते।

---

1. व्याख्यानव्याख्येयभावेन भामतीकल्पतरुपरिमलेषु प्रतिपादितं न्यायरक्षामणौ पूर्वोत्तरपक्षाभ्यां रचितं अर्थजातं भाष्यव्याख्याव्याजेन निरूपयितुं आरभते—**तत्र च यत्रेत्यादिना**। आदित आरभ्य इयमेव शैली अस्य व्याख्याग्रन्थस्य - इत्येतत् उपक्रम एव टिप्पण्यामुक्तम्।

अत्रायं विशयः—जगज्जन्मादिकारणत्वं सत्यादिष्वभिन्नमखण्डं धर्मिमात्रं च ब्रह्मलक्षणं सम्भवति वा न वेति। तत्र आद्यं तटस्थलक्षणमित्युच्यते। यो हि धर्मोऽसाधारणः सन्नेव कदाचिद्धर्मिणा सम्बध्यते स तटस्थलक्षणमित्युच्यते। यथा छत्रचामरादिकं राज्ञः। आद्यलक्षणे चायं तदर्थसंशयः—किं तत् विरुद्धं अविरुद्धं वेति। द्वितीये तु तत् अखण्डं स्वरूपं प्रसिद्धं अप्रसिद्धं वेति। ततश्च पूर्वाधिकरणेन आक्षेपिकी सङ्गतिः। ब्रह्म विचारणीयमित्युक्तम्। तत् न सम्भवति। विरोधाप्रसिद्धिभ्यां ब्रह्मलक्षणस्यैवासम्भवात्। लक्षणं विना प्रधानादिव्यावृत्ततया तन्निर्णयासम्भवात् तद्विचारस्य व्यर्थतापत्तेः—इति।

तत्र पूर्वः पक्षः—जगत्कारणत्वं ब्रह्मलक्षणं न सम्भवति। निर्विशेषस्य तस्य जगत्कारणत्वासम्भवात्। न हि कृतकत्वं नित्यस्य वस्तुनो लक्षणं भवति। एवं, सत्याद्यात्मत्वं स्वरूपलक्षणमित्युच्यते यथा चन्द्रस्य प्रकृप्रकाशत्वाभिव्यङ्ग्यं चन्द्रत्वम्, तदपि न सम्भवति। तत्र किं सत्यत्वादिधर्म एव लक्षणं, उत तद्धर्मी। नाद्यः। विरोधादेव। न द्वितीयः। सत्यज्ञानानन्दादिष्वभिन्नस्य सर्वधर्मविनिर्मुक्तस्य धर्मिणोऽप्रसिद्धत्वात्। न च श्रुत्यैव तादृशधर्मिमात्रप्रसिद्धिः। यज्जगज्जन्मादिकारणं ब्रह्म तत् सत्यज्ञानानन्दात्मकमित्येवंरूपेण प्रवृत्तायाः श्रुतेः कारणत्वसत्यत्वादिरूपोद्देश्यताविधेयतावच्छेदकानेकधर्मसंसृष्टतया ब्रह्मबोधिकायाः सकलधर्मविनिर्मुक्तधर्मिमात्रबोधकत्वासम्भवात्। अपि च सर्वत्र धर्म एव लक्षणं [1]भवति, तत्कथं धर्म्येव स्वरूपलक्षणमिति। एतदभिप्रायेणाह—**किं लक्षणं पुनरिति**।

सूत्रे यच्छब्देन [2]सत्यादिलक्षणं संगृहीतम्। यतः—सत्यादिरूपादित्यर्थः।

---

1. मु. 'भवति' नास्ति

2. **सत्यादिलक्षणं सङ्गृहीतमिति** 'तस्य च निर्णयवाक्यं' इति भाष्यमावलम्ब्योऽयमर्थः। एतेन स्वरूपलक्षणस्य सूत्रानारूढत्वशङ्का परास्ता वेदितव्या।

[1]अयमत्र परिहाराभिप्रायः—यथा ह्यर्थवादवाक्येषु [2]मुख्येऽर्थे उद्देश्यविधेयसंसर्गबोधे सत्यपि [3]लक्षणीये स्तुतिरूपे न तत्संसर्गो भासते, तद्वत् सत्यादिवाक्येषु द्वारभूते वाच्यार्थे तद्भानेऽपि लक्षिते धर्मिमात्रे तन्न भासत इति लक्षणया धर्मिमात्रबोधकत्वमुपपद्यते। एवं च [4]यथा पुरोडाशकपालेनेत्यत्र धर्मिमात्रलक्षणा तद्वत् प्रकृतेऽपि स्वीक्रियत इति श्रुतितस्तत्प्रसिद्धिरुपपद्यते।

नन्वेवमपि यथा लक्षितेन प्राशस्त्येन विधिपदोपात्तानां यागदेवतादीनां संसर्गो भासते, एवमत्रापि पर्यवसिते बोधे पदान्तरार्थसंसर्गभानं नियतमिति कथमेतस्य सकलधर्मातीतवस्तुमात्रबोधकता। यत्किञ्चिद्धर्मसंसृष्टतया बोधे तु न त्वदभिमतब्रह्मस्वरूपसिद्धिः।

उच्यते——पर्यवसिते बोधे पदान्तरार्थसंसर्गभानमावश्यकमिति नियमोऽप्रयोजको नानुस्रियते। न च—तथा ज्योतिष्टोमादिवाक्ये दृष्टमिति तावन्मात्रेण तथा स्वीकर्तुं युक्तम्। तथासति लौकिकवाक्यानां प्रमाणान्तरप्रसिद्धार्थे एव प्रामाण्यं न तु कविप्रतिभामात्रसिद्धे प्रमाणान्तररहिते दृष्टमिति ज्योतिष्टोमादिवाक्येष्वप्यलौकिकोऽर्थो न सिध्येत्। यदि तु तत्र वेदवाक्यानां तात्पर्यस्य गृहीतत्वात् लोकदृष्टनियमानादरेण तथाभूतोऽर्थस्स्वीक्रियते तर्हि [5]प्रकृतेऽपि तुल्यम्।

अपि च प्रकृष्टप्रकाशश्चन्द्र [6]इत्यादिलक्षणवाक्येषु पदान्तरार्थसंसर्गगोचर-

---

1. **अयमत्र परिहारेति** अत्र शङ्कापरिहारग्रन्थे 'वाक्यात् सविकल्पकबोध एव जायते न तु कदाचिदपि निर्विकल्पकबोधः' इति वदतां **विशिष्टाद्वैतिनां** आक्षेपस्य निरासो लभ्यते इत्यवधेयम्।

2. **मुख्येऽर्थे उद्देश्यविधेयसंसर्गबोधे इति** शक्यार्थविषयकबोधे उद्देश्यविधेयसंसर्गभानेऽपीत्यर्थः।

3. **लक्षणीये स्तुतिरूपे न तत्संसर्गो भासत इति** अर्थवादिकपदशक्यार्थसंसर्गः तत्संसर्गपदार्थः। स्तुतिरूपलक्ष्यार्थविषयकबोधे स न भासते इत्यर्थः।

4. **यथा पुरोडाशकपालेनेत्यादि** उपपादितमेतत् आत्मस्वप्रकाशत्वविचारे प्रमाणचिक्कविषयस्यापि ज्ञानस्य अज्ञानप्रमादिनिवर्तकत्वसमर्थनावसरे।

5. **प्रकृतेऽपि तुल्यमिति**। ब्रह्मप्रातिपदिकार्थमात्रस्य बुभुत्सितत्वात् तन्मात्रे तात्पर्यग्रहात् तन्मात्रस्य वाक्यार्थत्वमित्यर्थः। तदेतत् उदाहरणेन स्पष्टयति— **अपि चेति**।

6. **मु. इतिलक्षण**

[1]प्रमितिजनकत्वाभावो दृष्टः । न च—लक्षणवाक्येऽस्मिन् प्रकृष्टप्रकाशपदं हेतुगर्भ विशेषणम्, चन्द्रपदं च चन्द्रेतरव्यावृत्ततया वा चन्द्रपदवाच्यतया वा चन्द्रपरम्, ततश्च प्रकृष्टप्रकाशः अचन्द्रव्यावृत्त इति वा चन्द्रपदवाच्य इति वा तत्र बोधः । तत् कथं तस्य पदान्तरार्थसंसर्गागोचरतयाचन्द्रस्वरूपमात्रबोधकतेति—वाच्यम् । तस्य हि वाक्यस्य न प्रकृष्टप्रकाशवैशिष्ट्यपरत्वम्, न वा चन्द्रेतरतारकादिव्यावृत्तिपरत्वम् । उभयोरपि प्रत्यक्षेण गृहीतत्वात् । नापि चन्द्रपदवाच्यत्वपरत्वम् । 'चन्द्रत्वमिति जातिविशेषः, तं प्रवृत्तिनिमित्तीकृत्य तदाश्रये चन्द्रपदं प्रवर्तते' इति [2]प्रागेव आप्तोपदेशाल्लाभात् । न च तथापि व्यक्तिविशेषे तद्वाच्यत्वं न गृहीतमिति वाच्यम् । वस्तुतःप्रकृष्टप्रकाशाश्रयव्यक्तिविशेषस्यैव [3]तदुपदेशविषयत्वात् । तस्मात् अज्ञातं[4] चन्द्रत्वमेव वाक्यतात्पर्यविषय इति तदेव वाक्येन बोध्यते ।

ननु–चन्द्रत्वजातिरपि प्रत्यक्षेण गृहीता । प्रकृष्टप्रकाशत्वस्य तदभिव्यञ्जकस्य ग्रहणे सति तदग्रहणस्य वक्तुमनुचितत्वात् । अभिव्यञ्जकसमानवित्तिवेद्यत्वाज्जातेः । अथ–गृहीताऽपि चन्द्रत्वजातिः नाज्ञातताविनिर्मुक्ता भवति, उपदेशं विना जातस्य ज्ञानस्य [5]प्रत्यक्षरूपस्याप्यापातत्वोपपत्तेः । अत एव 'अयं चन्द्रो न वा' इति संशयो दृश्यते । अथ वा अभिव्यञ्जकतया यदभिव्यञ्जकं गृहीतं तत्समानवित्तिवेद्यत्वमेव जातेः । न त्वभिव्यञ्जकत्वाग्रहणदशायामपि । अत एव भास्वररूपत्वेन सुवर्णे गृहीते शीतस्पर्शवत्तया च करकायां गृह्यमाणायामपि भास्वररूपशीतस्पर्शयोस्तेजस्त्वजलत्वाभिव्यञ्जकताज्ञानाभावदशायां न तत्र तदुभयग्रहणम् । ततश्च उपदेशात्प्राक् प्रकृष्टप्रकाशे गृह्यमाणेऽपि न चन्द्रत्वजातिसाक्षात्कारः । उपदेशेन तु प्रकृष्टप्रकाशानुवादेन चन्द्रस्वरूपे बोधिते वाच्यार्थबोधदशायामुपस्थितं प्रकृष्ट-

---

1. आ. प्रमितिपरत्वा०

2. **प्रागेव**—'प्रकृष्टप्रकाशश्चन्द्रः' इत्युपदेशात् पूर्वमेव ।

3. **तदुपदेशेति** कर्मधारयः, 'प्रकृष्टप्रकाशश्चन्द्रः' इत्युपदेशात् प्राक्तनवाक्येत्यर्थः ।

4. **अज्ञातमिति** प्रकृष्टप्रकाशाश्रये इत्यादिः । न चैवं चन्द्रत्वसंसर्गावगाहिप्रमाजनकत्वापत्त्या चन्द्रलक्षणवाक्यस्य अखण्डार्थत्वं न स्यादिति वाच्यम् । पदान्तरार्थसंसर्गानवगाहित्वस्यैव अखण्डार्थलक्षणघटकत्वेन अदोषात् । वक्ष्यते चैतत् ।

5. मु. प्रत्यक्षस्याप्या०

[1]प्रकाशत्वमेव चन्द्रत्वाभिव्यञ्जकं कल्पयतीति अर्थादभिव्यङ्ग्याभिव्यञ्जकभावग्रहः, शाब्दस्तु चन्द्रस्वरूपग्रह एव—इति चेत्, तर्हि प्राचीनोपदेशजनितं वाच्यत्वज्ञानमपि आपातरूपमेवेति शक्यं वक्तुम् । तत्रापि हि 'प्रकृष्टप्रकाशः चन्द्रपदवाच्यो वा न वा' इति प्रकृष्टप्रकाशश्चन्द्र इत्युपदेशात् प्राक् संशयोऽनुवर्तत एव । अभिव्यञ्जकताग्रहात् प्राक् प्रकृष्टप्रकाशे गृह्यमाणेऽपि चन्द्रत्वं न गृहीतं—इति कल्पने तु, अभिव्यञ्जकतापरमेव वाक्यमस्तु । स्वरूपमेव शाब्दं अभिव्यञ्जकता तु आर्थीत्यत्र नियामकाभावात्—इति चेत्—

उच्यते—तात्पर्यानुसारेण वाक्यार्थो वर्णनीयः । तत्र यदि वाच्यवाचकभावाभिप्रायेण यदि वा व्यङ्ग्यव्यञ्जकभावाभिप्रायेण प्रश्नः तदा तत्परत्वमेवास्तु, न तत्राग्रहः । यदा तु चन्द्रशब्दवाच्यत्वाश्रयो यो व्यक्तिविशेषः स क इति प्रष्टुरभिप्रायः, तदा तन्मात्रपरतैव प्रकृष्टप्रकाशवाक्यस्य ।

ननु—तदाऽपि व्यक्तिविशेषबोधनार्थं प्रकृष्टप्रकाशत्ववैशिष्ट्यं बोधनीयमेव, अन्यथा व्यावर्तकोपस्थितिं विना व्यक्तिविशेषालाभात् । अपि च— प्रष्टुः [2]यावत् बुभुत्सितं [3]तावत् अवश्यंवक्तव्यमित्येव नियमः, न तु तदबुभुत्सितमवक्तव्यमित्यपि । अन्यथा, काश्याः को मार्ग इति [4]मार्गप्रश्ने तद्व्यतिरिक्तानां मार्गचिह्नानां गिरिनद्यादीनां निरूपणं न स्यात् । यदि तु मार्गप्रतिपत्त्युपयोगितया तदपि प्रष्टुर्बुभुत्सितमेव, तदा प्रकृष्टप्रकाशत्वमपि तथाऽस्तु—इति चेत्—

उच्यते—यत्र हि बुभुत्सितवस्तुप्रतिपत्त्युपयोगि अज्ञातं भवति तत्र प्रष्टु, र्जिज्ञासा भवत्येवेति तादृशमार्गचिह्नादिषु वाक्यतात्पर्यस्य प्रश्नं विना स्वीकारेऽपि, प्रकृते सम्बोधनीयेन प्रकृष्टप्रकाशसम्बन्धस्य जिज्ञासिते व्यक्तिविशेषे अवगतत्वेन तदभिधाने न वक्तुस्तात्पर्यम् । परं तु तदनुवादं विना व्यक्तिविशेषस्य बोधयितुमशक्यतया तदर्थं द्वारतया अभिधानमात्रं तत्र प्रकृष्टप्रकाशस्य । यथा च 'तीरत्व-

---

1. मु. प्रकाशमेव
2. मु. यद्यत्
3. मु. तत्तावद०
4. मु. 'मार्ग' नास्ति

प्रकारेणैव तीरविशेषोपस्थितिर्भवतु' इत्यभिप्रायेण प्रयुक्तस्य गङ्गायांघोषइति वाक्यस्य गङ्गासम्बन्धित्वेनतीरबोधाजनकत्वेऽपि गङ्गापदवाच्यस्य प्रवाहविशेषस्य तीरान्तरे सम्बन्धाभावेन तदुपस्थापनशक्त्यभावात् तीरविशेष एव स्वरूपेण बोध्यते, तद्वत् प्रकृष्टप्रकाशसंसर्गतात्पर्यरहितस्यापि व्यक्त्यन्तरबोधकतायां सामर्थ्याभावादेव व्यक्तिविशेषोपस्थापकत्वमुपपद्यते ।

एवं चन्द्रत्वमात्रतात्पर्येण प्रयुक्तस्य 'प्रकृष्टप्रकाशश्चन्द्रः' इति वाक्यस्य पदान्तरार्थसंसर्गगोचरप्रमितिजनकत्वेनाखण्डार्थत्वेऽभ्युपगम्यमाने तज्जन्यज्ञानस्य 'अयमसौ वा चन्द्रः' इति संशयनिवर्तकत्वेन चन्द्रोऽस्मीतिवाक्यजन्यस्य[1] तदनिवर्तकत्वेन च सामग्रीविशेषजन्यत्वमेव संशयादिनिवर्तकतायां फलबलात् प्रयोजकमास्थेयम् ।

न च वाक्यस्य पदान्तरार्थसंसर्गगोचरप्रमितिजनकत्वमेव न सम्भवतीति शङ्कनीयम् । आकाङ्क्षादिसामग्र्यां सत्यां तदजनकत्वस्य वक्तुमशक्यत्वात् । दृष्टं च अर्थवादवाक्यानां अवान्तरवाक्यविधया प्राशस्त्यरूपार्थबोधकतायां पदान्तरार्थसंसर्गगोचरप्रमितिजनकत्वम् । इयांस्तु विशेषः—प्रकृष्टप्रकाशवाक्ये चन्द्रप्रातिपदिकोपात्तस्य लक्ष्यतावच्छेदकस्य चन्द्रत्वस्य चन्द्रे संसर्गो भासते, इह तु सत्यादिवाक्ये ब्रह्मणि ब्रह्मपदोपात्तस्य ब्रह्मत्वस्य संसर्गोऽपि न भासते । सर्वत्र ब्रह्मप्रकरणे आम्नातैः 'अथात आदेशो नेति नेति' [बृ. उ. २-३-६] 'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' [छा. उ. ७-२४] 'नान्तःप्रज्ञं नबहिःप्रज्ञं नोभयतःप्रज्ञं नप्रज्ञानघनं न प्रज्ञं नाप्रज्ञं अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते' [मा. उ. ७] 'आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किञ्चन मिषत्' [ऐ. उ. १ - १] 'सदेव सोम्येदमग्र आसीत्' [ छा. उ. ६-२-१ ] इत्यादिवाक्यैः ब्रह्मस्वरूपस्य सकलधर्मातीतत्वप्रतिपादनात् । न च—मिथ्यात्वं तावता धर्माणां सिध्यति, मिथ्याभूतानामपि वाक्यार्थकोटौ निवेशे को दोष इति—वाच्यम् । 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' [ बृ. उ. ४-४-१९ ] 'अथ यत्रान्यत् पश्यति अन्यच्छृणोत्यन्यद्विजानाति तदल्पम्' 'उदरमन्तरं कुरुते अथ तस्य भयं भवति'

---

1. मु. अन्यभामस्य

[ तै. उ. २-६ ] इत्यादिवाक्यैःभेददर्शनस्य निन्दितत्वात्, 'ब्रह्मविदाप्नोति परम्। सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन्' इति अनन्तपदेन मोक्षजनकज्ञानविषयतया सर्वधर्मातीत(त्व)स्य प्रतिपादनाच्च ।

अयं च मन्त्रः 'प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्। वचसां आत्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्। [वि. पु. ६-७-५३] इति पराशरेण वस्तुमात्रबोधनपरतया व्याख्यातः । अत्र प्रत्यस्तमितभेदमित्यनन्तपदं, सत्तामात्रमिति सत्यपदं, अगोचरंवचसामिति 'यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। नबिभेति कुतश्चन' इत्युपसंहारैक[1]रूप्यमुपक्रमस्य, आत्मसंवेद्यंतज्ज्ञानमिति स्वप्रकाशनित्यज्ञानपरतया ज्ञानपदं, ब्रह्मसंज्ञितमिति ब्रह्मविदाप्नोतिपरमितिसङ्ग्रहवाक्येन लक्षणवाक्यस्यैकवाक्यत्वं च व्याख्यातम् । [2]अत्र संज्ञितमिति संज्ञापदोपादानं वस्तुमात्रबोधकत्वेऽप्यार्थिकार्थपरतया नेयम् ।

ननु सत्यत्वादिधर्माणां मिथ्यात्वे ब्रह्मणः सत्यादिरूपता न सिध्येदिति चेत्— किं सत्यत्वादिवैशिष्ट्यं न सिध्येदित्युच्यते, सत्यत्वादीनां मिथ्यात्वे बाध्यत्वादिरूपधर्मान्तरं सम्भवेदिति वा ? आद्ये इष्टापत्तिः । व्यावहारिकसत्यत्वादिवैशिष्ट्याङ्गीकारेऽपि परमार्थतस्तदनङ्गीकारात् । न द्वितीयः । न हि बाध्यत्वरूपं धर्मान्तरं ब्रह्मणि स्वीकृत्य शुक्तिरजतादिवत् सत्यत्वं निषिध्यते । किं तु 'अथात आदेशो नेति नेति' इत्यादिश्रुतिप्रतिपादितनिर्धर्मकवस्तुस्वरूपपर्यालोचनया । [3]तत्र कथं बाध्यत्वरूप[4]धर्मान्तरसम्भवः ।

न च सत्यज्ञानानन्द[5]पदार्थानां परस्परं [6]प्रत्येकं च भिन्नतयाऽवगतानां

---

1. मु. ०रूप्यमुक्तम्। अस्य

2. ब्रह्मसंज्ञितं इत्युक्त्या ब्रह्मलक्षणवाक्यस्य ब्रह्मपदवाच्यत्वेनब्रह्मपरत्वमुक्तं इतिशङ्कावारणार्थमाह—अत्रेति ।

3. तत्र कथं धर्मान्तरसम्भव इति अयमर्थः—विरुद्धत्वेनाभिमतयोरेकनिषेधे अपरसत्त्वं तत्रैव, यत्र तयोः एकबाधकबाध्यत्वं नास्ति, यथा शुक्तिरजते सत्यत्वमिथ्यात्वयोः। ब्रह्मणि तु 'नेति नेति' इति सर्वधर्मनिषेधेन सत्यत्वमिथ्यात्वयोः एकबाधकबाध्यत्वात् न एकनिषेधे अपरसत्त्वम्—इति ।

4. मु. धर्मसम्भवः

5. मु. ०नन्दादिप०

6. प्रत्येकमिति परमते सत्यं ज्ञानं आनन्दश्च प्रत्येकं अनेक इति भावः ।

कथमेकब्रह्मासाधारणरूपत्वसिद्धिरिति शङ्कनीयम् । अत एव ब्रह्मासाधारणस्वरूपप्रतिपादकवाक्यात् अभेदे त्रयाणां सिद्धे, घटाद्युपाधिकस्सत्यभेदः वृत्त्युपाधिको [1]ज्ञानानन्दभेद इति, धर्मी तु [2]सर्वानुस्यूत एक इति च सिध्यति ।

यच्च धर्मिमात्रपरत्वे लक्षणवाक्यता न स्यादिति, तदिष्टमेव । न हि सत्यज्ञानानन्दाभिन्नं धर्मिमात्रं मुख्यं लक्षणमिति[3] वदामः । अपि तु तदवगम इतरव्यावृत्ति[4]बुद्धावुपयुज्यत इति तस्य लक्षणत्वोपचारः ।

न चैकवस्तुमात्रबोधकत्वे 'चन्द्रश्चन्द्रः' इतिवत् 'ब्रह्म ब्रह्म' इतिवच्च असाङ्गत्यमिति युक्तम् । पर्यायपदानां हि शक्तिग्राहकवाक्यादन्यत्र सहप्रयोगस्याव्युत्पन्नतया तादृशसमभिव्याहारस्यासाङ्गत्यम् । इह तु सत्यादिपदानां भिन्नप्रवृत्तिनिमित्तकतया न सहप्रयोगानुपपत्तिः । सत्यशब्दे अबाध्यत्वं, ज्ञानानन्दपदयोस्तु ज्ञानत्वानन्दत्वरूपो जातिविशेषः । स च तार्किकमते पदार्थविशेषः सामान्यात्मकः, अस्मन्मते तत्तदुपाध्युपहितं ब्रह्मैव इत्यन्यदेतत् ।

न चैकधर्मिमात्रपर्यवसाने पदान्तरवैयर्थ्यम् । [5]वाच्यार्थोपस्थितिदशायामनेकधर्मविशिष्टैकधर्मिबोधकतया बाध्यत्वादिभ्रमव्युदासपूर्वकं[6] व्यक्तिविशेषोपस्थापनोपयोगित्वात् ।

तत् सिद्धं सत्यादिवाक्यस्याखण्डार्थत्वम् । तत्त्वं च पदान्तरार्थसंसर्गागोचरप्रमितिपरवाक्यत्वम् । संसर्गागोचरेत्युक्ते प्रकृष्टप्रकाशवाक्ये अव्याप्तिः, तज्जन्यज्ञानस्य चन्द्रे [7]चन्द्रत्वसंसर्गावगाहित्वात्, अतः पदान्तरेति । न च प्रकृष्टप्रकाश-

---

1. **ज्ञानानन्दभेद इति** सत्यादीनां परस्परं भेदोऽपि औपाधिकः । अनुपदमेव द्रक्ष्यति ।

2. मु. सर्वत्रानु०

3. आ. ०मिति च संप्रदायः

4. आ. बुद्ध्योप०

5. मु. पदार्थोपस्थिति

6. **भ्रमव्युदासपूर्वकमिति** तथा चायं क्रमः-प्रथमं व्यावर्तकधर्मविशिष्टबुद्धिः, ततो व्यावृत्तत्वबुद्धिः, ततो व्यावृत्त्युपलक्षितस्वरूपमात्रबोधः—इति ।

7. मु. चन्द्रत्वावगाहि

शब्दलक्षितधर्मिणः अभेदस्य चन्द्रपदार्थे भानात् तद्दोषतादवस्थ्यमिति शङ्कनीयम् । अभेदस्य स्वरूपमात्रतया उभयगतत्वाभावेन संसर्गरूपत्वाभावात् । अखण्डवाक्य-तात्पर्यविषयीभूतज्ञानविषयत्वं च अर्थस्य अखण्डत्वम् ।

तथा च उक्तरीत्या सत्यादिवाक्यस्य सर्वधर्मविनिर्मुक्तवस्तुमात्रबोधकतोपपत्तौ श्रुतिप्रसिद्धं स्वरूपलक्षणमिति सिद्धम् ।

एवं जगज्जन्मादिकारणत्वं यतोवेत्यादिवाक्यप्रसिद्धं ब्रह्मलक्षणं नोक्तस्वरूपेण विरुध्यते । मायिकस्य जगत्कारणत्वस्य अनृततया परमार्थतो निर्धर्मस्वरूपेण विरोधानुपपत्तेः । एवं च यथा 'यद्रजतमभात् सा शुक्तिः' इति आरोपितेन रजतेन शुक्तिर्लक्ष्यते, एवं आरोपितेन जगज्जन्मादिकारणत्वेन ब्रह्म लक्ष्यते । [1]आरोपितत्वेऽपि तस्य ब्रह्मण्येवासाधारणत्वात् ।

ननु लक्षणद्वयोपन्यासस्य किं प्रयोजनम् ? इदम्—यथा चन्द्रं दिदर्शयिषुरासः प्रथमं दिगन्तरगतनक्षत्रादिभ्यो दृष्टिं वारयितुं 'शाखायां चन्द्रः' इति अधिकरणतया सम्बन्धविशेषेण शाखायुपलक्षणमुपादत्ते, ततश्च दिगन्तरव्यावृत्तचक्षुषः चन्द्रसमीपवर्तितारकादिषु चन्द्रभ्रमो मा भूदिति तत्स्वरूपं प्रकृष्टप्रकाशात्मकं बोधयते, एवं हि बोध्यबुद्धिः सुखेन चन्द्रेऽवतारिता भवति ; एवं 'ब्रह्मविदाप्नोति परं' इत्युपश्रुत्य ब्रह्मशब्दस्य अनेकत्र प्रयोगदर्शनात् मुमुक्षुभिज्ञासो ब्रह्मशब्दार्थः क इति बुभुत्सोः जगत्कारणत्वोपन्यासेन येषु जीवादिषु जगत्कारणत्वं न सम्भवति तेषां सृज्यकोटौ निविष्टतया स्रष्टृत्वासम्भवात् तेभ्यो व्यावृत्तबुद्धेरपि सम्भवज्जगत्कारणभावेषु प्रधानादिषु [2]ब्रह्मत्वभ्रमनपनेतुं स्वरूपलक्षणं उपन्यस्यते । न हि जडानां प्रधानादीनां ज्ञानादिस्वरूपतोपपद्यते । ततश्च आद्यं लक्षणं केभ्यश्चिद्व्यावृत्तिनिश्चयपूर्वकं बुद्धिस्थिरीकरणार्थम्, द्वितीयं तु सकलभ्रमनिवृत्तिपूर्वकं वस्तुस्वरूपसत्तानिश्चयार्थम् ।

---

1. आरोपितत्वेऽपीति एतेन-आरोपितस्य लक्षणत्वे प्रधानादिष्वपि आरोपसंभवेन तत्रातिव्याप्तिरिति परोक्तदूषणं निरस्तम् । वक्ष्यमाणरीत्यानिमित्तत्वघटितस्य तस्य जडे आरोपासंभवात् ।

2. ब्रह्मभ्रम०

[1]अपि च—ब्रह्मण एव जगत्कारणत्वानुपन्यासे, 'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इतिश्रुतिसहकृतेन[2] ब्रह्मशब्देन त्रिविधपरिच्छेदशून्यं वस्तु लक्ष्यत्वेन निर्दिष्टम्, [3]तत्र स्वरूपलक्षणमात्रोक्तावेवंशङ्का भवेत्—उक्तस्वरूपमपि ब्रह्म कथं त्रिविधपरिच्छेदशून्यम्, जगतः तदुपादानस्य तन्निमित्तस्य चान्यस्य वस्तुनो विद्यमानत्वात्। अतः तन्निवृत्तये यज्जगज्जन्मादिकारणं तद्ब्रह्मेति बोधनीयम्। ततश्च जगत्कारणमन्यदिति भ्रमः ब्रह्मण एव कारणताबोधादपगतो भवति। जगतश्चोपादानं ब्रह्म इत्यवगते जगदधिष्ठानं ब्रह्मेति पर्यवस्यति। तत्र [4]ब्रह्मशब्दोपात्ते सर्ववस्त्वभावे बोधिते स्वाधिष्ठानगताभावप्रतियोगित्वरूपं मिथ्यात्वं जगतः सिध्यतीति 'जगतोऽन्यस्य वस्तुनो विद्यमानतया कथं त्रिविधपरिच्छेदशून्यता[5]' इति शङ्कानिवारणं लभ्यते।

अत एव जगदुत्पत्तिस्थितिलयकारणत्वं ब्रह्मलक्षणत्वेन निर्दिश्यते। उत्पत्तिमात्रकारणत्वादिकमपि हि [6]ब्रह्मासाधारणमेव। परं तु एकैकमात्रकारणत्वोक्तौ, ततोऽन्यत्र अन्यदेव कारणमस्तीति तेन च वस्तुपरिच्छेदप्राप्तिरिति शङ्का नापगता स्यात्। उत्पत्तिस्थितिलयानां त्रयाणामपि ब्रह्म कारणमिति प्रतिपादने तु न काचिदाशङ्का प्रसरति।

---

1. ननु विशिष्यावगत्यर्थं अवश्यापेक्षितेन स्वरूपलक्षणेनैव सर्वतो व्यावृत्तलक्ष्यस्वरूपावगतिः सम्भवतीति तटस्थलक्षणवैयर्थ्यमेव—इति **विशिष्टाद्वैतिनां** शङ्कां निरस्यति—**अपि चेत्यादिना**।

2. **श्रुतिसहकृतेनेति** न च—किमर्थं श्रुतिसहकारोक्तिः, ब्रह्मशब्देनैव तल्लाभात्—इति शङ्क्यम्। ब्रह्मशब्दस्य निरतिशयबृहत्त्ववाचित्वाभावात् बृहत्त्वमात्रवाचित्वात्, तेन देशकालपरिच्छेदशून्यतामात्रं ब्रह्मशब्दात् लभ्यते—इति **विशिष्टाद्वैतिशङ्कानिराकरणार्थं** तदुक्तेः। किंरूपं बृहत्त्वं इति जिज्ञासानिवृत्त्यर्थं तदुपपादकश्रुत्यन्तरापेक्षाया युक्तत्वात्। न च तटस्थलक्षणोक्तिः परिभाषामात्रमिति **विशिष्टाद्वैतिदूषणं** युक्तम्। सनत्सुजातीये 'यामांशभागस्य......'[२-४४] इति पद्ये प्रसिद्धत्वात्।

3. मु. 'तत्र' नास्ति

4. **ब्रह्मशब्दोपात्ते सर्ववस्त्वभावे** इति व्यधिकरणे सप्तमी।

5. मु. 'शून्यता' नास्ति।

6. **ब्रह्मासाधारणमेवेति** अत एव जगद्वाचित्वाधिकरणे जगदुत्पत्तिकारणत्वमात्रं ब्रह्मलिङ्गत्वेनोक्तमिति भावः।

## जन्माद्यस्य यतः ॥ २ ॥

**जन्म—उत्पत्तिः आदिः अस्येति तद्गुणसंविज्ञानो बहुव्रीहिः ।**

अपि च 'असंसारि चेतनं किमपि नास्ति' इति मन्यमानस्य, सर्वधर्मातीतमसंसारि ब्रह्म जीवस्य पारमार्थिकं स्वरूपमिति सहसा बोधयितुं न शक्यम् । अतः, कार्यस्यांकुरादेः केनचित् कर्त्रा भवितव्यमिति लोकसिद्धार्थानुवादपूर्वकं असंसारिवस्तु लोकदृष्ट्या सम्भावनीयम् । तत्सम्भावनायां तस्य पारमार्थिकं स्वरूपं श्रुत्या सुबोधं भवतीति तटस्थतया स्वरूपेण च लक्षणतो ब्रह्मबोधनप्रयोजनम् ।

अमुं सूत्रार्थं मनसि निधाय सौत्रपदानि व्याचष्टे—जन्म उत्पत्तिरिति । सूत्रे 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति' इति श्रुत्यनुसारेण जन्मादीनां त्रयाणां ग्रहणं विवक्षितम् । तत्र यदि अतद्गुणसंविज्ञानबहुव्रीहिर्विवक्षितस्स्यात्, तदा स्थितिलययोरेव ग्रहणं प्राप्नुयात्, न त्रयाणाम् । अतस्त्रितयलाभाय [1]तद्गुणसंविज्ञानबहुव्रीहिः[2] विवक्षितः । तत्रापि, यदि जन्म आदिः येषां ते जन्मस्थितिभङ्गाः इति विग्रहे इतरेतरयोगद्वन्द्वघटितं विशेष्यं गृह्येत, तदा 'जन्मादयोऽस्य यतः' इति सूत्रापत्त्या यथाश्रुतसूत्रमसमर्थितं स्यात् । तन्माभूदिति समाहारद्वन्द्वघटितं विशेष्यं विवक्षितम् । तत्र हि 'सर्वो द्वन्द्वो विभाषया एकवद्भवति' इत्यनेन एकवचनं 'स नपुंसकं' इत्यनेन 'समाहारे द्विगुर्द्वन्द्वश्च क्लीबं स्यात्' इत्येवमर्थकेन नपुंसकलिङ्गं च सिध्यति । ततश्च जन्मादीति पदम् ।

ननु—जन्मनः किं कृत्स्नप्रपञ्चापेक्षया आदित्वम्, उत स्थितिभङ्गावपेक्ष्य ? नाद्यः । जन्मनोऽपि प्रपञ्चान्तर्गततया स्वनिरूपितादित्वासम्भवात् । न द्वितीयः ।

---

1. **तद्गुणसंविज्ञानेति** तच्छब्देन बहुव्रीह्यर्थोऽन्यपदार्थ उच्यते । तस्य गुणत्वेन संविज्ञानं यस्मिन् समासे स तद्गुणसंविज्ञानः । सर्वस्य विशेषणत्वे समासासम्भवात् समासार्थैकदेशो विशेषणमिति लभ्यते ।

2. मु. ॰व्रीहिसमासो

जन्मस्थितिभङ्गं समासार्थः। जन्मनश्चादित्वं श्रुतिनिर्देशापेक्षं वस्तुवृत्तापेक्षं च। श्रुतिनिर्देशस्तावत्, 'यतो वा इमानि भूतानि जायन्ते' (तै. उ ३।१) इत्यस्मिन् वाक्ये जन्मस्थितिप्रलयानां क्रमदर्शनात्। वस्तुवृत्तमपि, जन्मना लब्धसत्ताकस्य धर्मिणः स्थितिप्रलयसंभवात्। अस्येति प्रत्यक्षादिसंनिधापितस्य धर्मिण इदमा निर्देशः। षष्ठी जन्मादिधर्मसंबन्धार्था।

तथासति त्रितयलाभासम्भवात्—इत्याशङ्कयाह—जन्मनश्चेति। श्रुत्या वा तथा निर्देशो किमालम्बनमित्याशङ्कयाह—वस्तुवृत्तापेक्षं चेति। यद्यपि जन्मापि त्रितयान्तर्गतं, तथापि त्रितयमध्ये जन्म प्रथमभागो भवतीति तदादित्वेन त्रितयसमुदायो निर्देष्टुं शक्यत एवेति भावः। सङ्ग्रहवाक्यं विवृणोति—श्रुतिनिर्देशस्तावदित्यादिना।

नन्विदंशब्दस्य प्रत्यक्षसन्निहितवस्तुनिर्देशकत्वात् सूत्रे न सर्वजगत्कारणत्वलाभः—इत्याशङ्कयाह—अस्येति। प्रत्यक्षादीति। 'इदं सर्वमसृजत, यदिदं किञ्च' [तै. उ. २-६] इति [1]प्रत्यक्षादिसन्निधापितसकलजगत्कारणत्वस्य श्रुतिषु प्रतिपादनात् तदनुसारेण सूत्रेऽपि तथैव ग्रहणमिति भावः। ननु—जन्मादिशब्देन त्रितयसमुदायस्य प्रतिपादनात् तस्यैव प्रकृत्यर्थेन जगता सह षष्ठ्या सम्बन्धः प्रतिपादितो भवेत्, न तु जन्मस्थितिप्रलयैः समुदायिभिः—इत्याशङ्कयाह—षष्ठीति। यत्किञ्चिदेकोपाध्यवच्छिन्नाः पदार्था एव समुदाय इति समुदायसमुदायिनोर्भेदाभावात् नोक्तानुपपत्तिरिति भावः।

ननु–सूत्रे यत इति पञ्चम्यन्तात्तसिल्प्रत्ययो वक्तुमयुक्तः। किमियं 'यतो वा इमानि भूतानि जायन्ते' इति श्रुताविव अपादानपञ्चमी, किं वा जाड्याद्बद्ध इतिवत् हेतुपञ्चमी? नाद्यः। 'जनिकर्तुः प्रकृतिः' [पा. सू. १-४-३०] इति सूत्रेण उत्पत्त्यर्थकधातुसमभिव्याहारे एव तस्या विधानात्। इह तु जन्मादिशब्देन त्रितयसमुदायग्रहणात्। अपि च तथात्वे हेतुत्वस्याग्रहात् उपादाननिमित्तत्वयोरुभयोरपि ग्रहणं न स्यात्। नापि हेतुपञ्चमी। 'विभाषा गुणेऽस्त्रियाम्' [पा. सू.

---

1. प्रत्यक्षादिसन्निधापितेति इदमः सन्निहितवाचित्वं, सन्निधिश्च प्रतीतिसामान्यं, न तु प्रत्यक्षप्रतीतिमात्रं–इति भावः।

## यत इति कारणनिर्देशः ।

२-३-२५] इति गुणवाचकेभ्य एव तद्विधानात्–इत्यत आह—यत इति ।
'हेतौ' [पा. सू. २-३-२३] इति सूत्रेण हेत्वर्थे तृतीया विधीयते । '[1]इतराभ्योऽपि दृश्यन्ते' [पा. सू. ५-३-१४] इति ततोऽपि तसिल्प्रत्ययो भविष्यति । ततश्च यत इति सौत्रपदं तृतीयान्तात्तसिल्प्रत्ययेन सिद्धं कारणत्वसामान्यं प्रतिपादयति । अस्य च [2]श्रुतिपर्यालोचनया उपादानत्वे सति निमित्ततायां पर्यवसानं लभ्यते । अथवा 'विभाषा गुणेऽस्त्रियाम्' इति सूत्रे विभाषेतियोगविभागाद्वा अगुण इति प्रश्लेषाद्वा 'दण्डाद्घटः, पुत्रात्प्रमोदः, धूमाद्वह्निमान्' इत्यादिप्रयोगनिर्वाहः, तथेहापि भविष्यतीति भावः ।

ननु–'एतेन प्रतिपद्यमाना इमम्मानवमावर्तं नावर्तन्ते' [छा. उ. ८-१४-६] इत्यत्र प्रतिपद्यमाना इति पदेनोपस्थितस्य प्रतिपत्तिवर्तमानकालस्य 'मानवावर्तविशेषणत्वेनप्रयुक्तेन इममितिशब्देन स्वैवयर्थ्यपरिहारार्थं [3]मानवावर्तव्यावर्तकतया को विशेषः प्रतिपादनीयः' इति साकांक्षेण परामर्शात्, 'अर्चिरादिमार्गेण ब्रह्मलोकं गच्छन्तो यस्मिन् मानवे गताः तस्मिन्नेव मानवे नावर्तन्ते' इत्येवमर्थपर्यवसानाय 'मार्गप्रतिपत्तिसमानकालमिमं मानवमावर्तं नावर्तन्ते' इति वर्तमानार्थकत्वं इममितिशब्दस्य स्वीकृतम् । तद्वत् प्रकृतेऽपि 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतौ इमानीतिशब्दस्य सूत्रे च अस्येतिशब्दस्य वर्तमानार्थतां स्वीकृत्य वर्तमानजगदुत्पत्त्यादिप्रतिपादकत्वमेव किं न स्यात्–इत्याशङ्क्य ; श्रुताविमानीतिशब्दो न अवर्तमानाद्वर्तमाने व्यावृत्तिबोधनार्थः । यतोवेत्यादिवाक्यं हि 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' इति वाक्यप्रतिपन्नां सृष्टिमनुवदति । तच्च वाक्यं श्लोकान्तर्गतानन्तपदोपात्तत्रिविधपरिच्छेदशून्यत्वप्रतिपादकम्, अतोऽतीतानागतवर्तमानसकलवियदादिकारणत्वेन प्रतिपादकं ब्रह्मण इति, यतोवेत्यादिवाक्यमपि पुरोवादानुसारेण अतीतादिसाधारण्येन सर्वजगत्कारणत्वप्रतिपादनपरम् । तत्र न इमानीतिशब्दः अतीतादिभ्यो व्यावृत्तिबोधनार्थो वक्तुं शक्यते । किं तु प्रत्यक्षादिसन्निधापितं जगत्प्रकारं

---

1. मु. अन्याभ्योऽपि दृश्यते
2. श्रुतिपर्यालोचनयेत पर्यालोचनं प्रकृत्यधिकरणे करिष्यते ।
3. मानवावर्तान्तरव्यावर्तको विशेषः

**अस्य जगतो नामरूपाभ्यां व्याकृतस्य अनेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाऽप्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात् सर्वशक्तेः कारणाद्भवति तद्ब्रह्मेति वाक्यशेषः ।**

परामृशतीति वक्तव्यम् । तथा च सति एतादृशे जगति ब्रह्मणोऽन्यः कर्ता न सम्भवतीति कर्त्रन्तरव्यासेधेन सप्रयोजनं प्रकृतोपयोगि च इदमितिशब्दो विशेषणं भविष्यतीतितात्पर्येण श्रुतिसूत्रगतेदंशब्दोपात्तप्रकारं जगद्विशेषणैर्विशदयन् ब्रह्मजिज्ञासेत्यत्र विद्यमानस्य ब्रह्मपदस्य प्रथमान्ततया विपरिणामेन अनुषङ्गं तत्पदाध्याहारं भवतिपदाध्याहारं च कृत्वा सूत्रवाक्यार्थं कथयति—**अस्येत्यारभ्य वाक्यशेष इत्यन्तेन** ।

**नामरूपाभ्यां व्याकृतस्य** इति विशेषणेन, कर्तारं [1]विनाऽपि जगदुत्पद्यत इति निरीश्वरपक्षो व्यावर्तितः । घटो हि, नाम्ना घट इत्येवंरूपेण कम्बुग्रीवाद्यात्मना रूपेण च यथा भविष्यति तथा यतितव्यमिति सङ्कल्पपूर्वकं क्रियमाण एव, तादृशनामरूपाभ्यां व्यक्तो भवति, तद्वदंकुरादिकमपि नामरूपव्यवस्थितं तदनुकूलसङ्कल्पाश्रयं कर्तारमाक्षिपतीति, न निरीश्वरपक्षः समञ्जसः ।

**व्याकृतस्य** इत्यनेन उत्पत्तेः प्राक् अव्याकृतनामरूपसद्भावसूचनात्, उत्पत्तेः प्राक् कार्यप्रागभाव एवेति परमाणुभ्योऽसदेव द्व्यणुकादिकं जायत इति तार्किकमतवैलक्षण्यं सूचितम् ।

श्रुतौ सृज्यसमर्पक इदंशब्दो बहुवचनान्ततया प्रयुक्तः । सूत्रे एकवचनान्ततया प्रयोगेण, इदंशब्दोपात्तं सृज्यं यस्य दृष्ट्या एककार्यमिव भवतीति सूचनेन, 'अयं च लोकः परश्च लोकः सर्वाणि च भूतानि अस्यैव............निश्वसितानि' [बृ. उ. ४-६-११] इतिवचनैकवाक्यतासूचनेन इदं सर्वं एककार्यवदप्रयत्नेनैव करोतीति सूचनेन, 'एक ईश्वरः इदं सर्वं कथं कुर्यात्' इति शङ्का दूरत एव निरस्ता भवति । यो हि निश्वासवदप्रयत्नेनैव सर्वं करोति तत्र इदं न करोतीति का शङ्का । ततश्च निरतिशयं सर्वज्ञत्वं सर्वशक्तित्वं च भगवतस्सिद्धं भवति । अतस्सोऽप्यत्र यतश्शब्देनार्थो विवक्षित इत्यभिप्रेत्योक्तं—**यतःसर्वज्ञात्सर्वशक्तेरिति** । **अनेक-**

---

1. मु. विना जग०

**कर्तृभोक्तृसंयुक्तस्य** इत्यनेन जीवानां सृज्यकोटौ निवेशात् तेषां जगत्कर्तृत्वं न सम्भवतीति[1] सूचितम् । **प्रतिनियतेति** । किञ्चित्कार्यं प्रति देशो नियतो भवति । यथा कृष्णमृगादौ । किञ्चित्प्रति नियतः कालः । यथा रसालमञ्जरीणां उद्भेदे वसन्तरूपः । एवं निमित्तक्रिययोरपि यथायथं नैयत्यं द्रष्टव्यम् । एतादृशविभागाभिज्ञो हि तत्र कर्ता भवति । जीवैस्तु तत् मनसाऽपि चिन्तयितुमशक्यं, दूरे तत्करणशक्तिः—इत्यभिप्रेत्याह— **मनसाऽपीति** ।

अनेन च भाष्येण 'कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम्' [श्वे. उ. १-२] इतिश्वेताश्वतरमन्त्रार्थः संगृहीतः । स्वभावादेव सर्वं भवतीति स्वभावपक्षः । नियतिः—अदृष्टम् । किमपि नियामकं नास्तीति यदृच्छापक्षः । योनिः—प्रधानम् । पुरुषो जीवः । एते सर्वेऽपि निरीश्वरकारणपक्षाश्चिन्त्याः ।

तत्र प्रधानादिपूर्वपक्षा ईक्षत्यधिकरणमारभ्य निराकरिष्यन्ते । जीवपूर्वपक्षस्तु श्रुत्यन्तरावलम्बनः [2]अन्यत्र न निराकृतः इहैव सूत्रसूचितेन सर्वज्ञत्वसर्वशक्तित्वेन निराचिकीर्षितः । तथा हि प्रश्नोपनिषदि—'अथ हैनं सुकेशा भारद्वाजः पप्रच्छ । भगवन् हिरण्यनाभः कौसल्यो राजपुत्रो मामुपेत्यैनं प्रश्नमपृच्छत-षोडशकलं भारद्वाज पुरुषं वेत्थ । तमहं कुमारमब्रुवं नाहमिमं वेद' [प्र. उ. ६-१] इत्युपक्रम्य 'तं त्वा पृच्छामि क्वासौ पुरुषः' इति पिप्पलादं प्रति भारद्वाजप्रश्ने षोडशकलं पुरुषं प्रस्तुत्याम्नायते—'इहैवान्तश्शरीरे सोम्य पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्तीति । स ईक्षाञ्चक्रे कस्मिन्न्वहमुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति । स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च' इति । अत्र प्राणोत्क्रान्तिप्रतिष्ठाभ्यां उत्क्रान्तिप्रतिष्ठावत्त्वं शरीरान्तस्स्थत्वं च जीवलिङ्गम् । तदनुसारेण प्राणादिनामान्तषोडशकलास्रष्टृत्वमपि जीवस्यैव स्वीकर्तव्यम् । ततश्च

---

1. मु. ०तीत्युक्तम्

2. **अन्यत्र न निराकृत इति** जगद्वाचित्वाधिकरणं 'यस्य वा एतत् कर्म' इति श्रुतिगतस्य कर्मपदस्य ब्रह्मसमन्वयानानुगुण्यनिराकरणपरम्, न तु जीवपूर्वपक्षनिराकरणपरं इति भावः ।

**अन्येषामपि भावविकाराणां त्रिष्वेवान्तर्भाव इति जन्मस्थितिनाशानामिह ग्रहणम् ।**

सर्वाणि कारणवाक्यानि जीवपराण्येव यथाकथञ्चिद्व्याख्येयानि, न तु ब्रह्मपराणि, निर्धर्मकस्य जगत्कारणत्वविरोधात्—इति शङ्को मन्यते ।

परिहारस्तु—सर्वासूपनिषत्सु सर्वज्ञत्वादिभिस्संसारिष्वसम्भवद्भिर्गुणैः जगत्कारणं प्रतिपाद्यते । जीवाश्च हिरण्यगर्भादयोऽपि सृज्यकोटौ निवेश्यन्ते 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' [श्वे. उ. ६-१८] इत्यादिभिर्वचनैः । न च तानि सर्वाण्येकेन वचनेन अन्यथा नेतुं युक्तानि । न च निर्धर्मके जगत्कारणत्वादिविरोधः इति प्रागेव व्युत्पादितम् । अतः प्रश्नोपनिषद्वाक्यमपि परब्रह्मपरमेव । तत्र जीवलिङ्गं जीवरूपेण ब्रह्मैव संसरतीत्यभेदाभिप्रायम् । अत एव ब्रह्मज्ञानैकसाध्यममृतत्वं प्रकृतषोडशकलपुरुषद्रष्टुः 'एवमेवास्य परिद्रष्टुः' इत्यादिना 'स एषोऽकलोऽमृतो भवति' इत्यन्तेन नदीसमुद्रविलयनदृष्टान्तपूर्वकं प्रतिपादितम् । 'एतावदेवाहमेतत् परं ब्रह्म वेद नातः परमस्ति' इति च अन्ते उपसंहृतमिति ।

ननु जन्मादिभ्यस्त्रिभ्योऽन्येऽपि भावविकारा वृद्धिविपरिणामापक्षयरूपाः प्रसिद्धाः, तेऽपि कुत आदिशब्देन न गृहीताः—इत्याशङ्क्याह—**अन्येषामपीति ।** वृद्धिस्तावदवयवोपचयरूपा उत्पत्तिरेव, विपरिणामोऽपि त्रिविधः—धर्मलक्षणो मृदादेर्घटादिरूपः, लक्षणलक्षणोऽतीतत्ववर्तमानत्वानागतत्वादिरूपः, अवस्थालक्षणः [1]चिरातीतत्वातिवर्तमानत्वात्यन्तानागतत्वादिरूपः, [2]तत्तद्धर्मविशिष्टतया उत्पत्तिरेव, अपक्षयस्तु अवयवविश्लेषः नाशान्तर्गत एवेति त्रिष्वेवोत्पत्त्यादिषु[3] वृद्ध्यादीनामन्तर्भाव इत्यर्थः ।

ननु—यतोवेत्यादिश्रुतिवाक्यं उदाहृत्य अवशिष्टानां तेष्वेवान्तर्भाव इति क्लेशेन व्याख्याने किं प्रयोजनम्, 'जायते अस्ति वर्धते विपरिणमते अपक्षीयते नश्यति' इत्येवं यास्कवचनमेव कुतो नोदाह्रियते—इत्याशङ्क्य, तदुदाहरणे

1. मु. चिरातीतत्वादिवर्त०

2. मु. तद्धर्म

3. मु. ०षु अन्तर्भाव

**यास्कपरिपठितानां तु ‘जायतेऽस्ति’ इत्यादीनां ग्रहणे तेषां जगतः स्थितिकाले संभाव्यमानत्वात् मूलकारणादुत्पत्तिस्थितिनाशा जगतो न गृहीताः स्युरित्याशङ्क्येत, तन्मा शङ्कीति, या उत्पत्तिर्ब्रह्मणः तत्रैव स्थितिः प्रलयश्च त एव गृह्यन्ते। न यथोक्तविशेषणस्य जगतो यथोक्तविशेषणमीश्वरं मुक्त्वा अन्यतः प्रधानादचेतनादणुभ्योऽभावात्संसारिणो वा उत्पत्त्यादि संभावयितुं शक्यम्। नच स्वभावतः, विशिष्टदेशकालनिमित्तानामिहोपादानात्।**

मूलकारणाज्जगदुत्पत्तिः [1]गृहीता न स्यात्। तद्धि वचनं पौरुषेयं मूलप्रमाणमपेक्षमाणं यतोवेत्यादिवाक्यं नोपस्थापयति। अर्थप्रत्यभिज्ञानाभावात्। अतः प्रत्यक्षमेव वक्तव्यम्। न च मूलकारणं तद्विषयः। तस्यालौकिकत्वात्। न च ऋषेस्तद्दर्शनं योगमाहात्म्यात् कल्पनीयम्। कल्पकाभावात्। ‘जायते’ इति वचनस्य सृष्ट्यनन्तरं भौतिकेषु षड्भावविकारान् दृष्ट्वा प्रणीतमिति कल्पनस्य [2]सम्भवात्। अतः तदुदाहरणेमूलकारणाग्रहणशङ्कानिवृत्त्यर्थं, योत्पत्तिर्ब्रह्मणस्सकाशाज्जगतः या च तत्रैव ब्रह्मणि जगतस्स्थितिः यश्च तत्रैव ब्रह्मणि प्रलयो जगतः ते यतोवेत्यादिवाक्योदाहरणपूर्वकं गृह्यन्त इत्याह—**यास्केत्यादिना गृह्यन्त इत्यन्तेन**। पूर्वोक्तजगद्विशेषणव्यावर्त्यमाह—**न यथोक्तविशेषणस्येति**। अभावादिति शून्यवादिमतोपन्यासः। **विशिष्टेति**। तत्तत्कार्योचितेत्यर्थः।

यद्यप्यत्र प्रश्नोपनिषद्वाक्यजनिता जीवाशङ्कैव निराकरणीया, अन्यासां प्रधानादिगोचरशङ्कानां अधिकरणान्तरेषु निराकरिष्यमाणत्वात्; तथाऽपि यथा प्रधानादिभ्यो न सम्भवति तथा संसारिणोऽपि न सम्भवतीति उपमानोपमेयभावेन योजनीयम्[3]।

---

1. मु. संगृहीता

2. **सम्भवादिति** न च यास्कवचनस्य स्मृतित्वात् मूलश्रुत्यनुमानमिति वाच्यम्। दृष्टमूलाभावे एव तदनुमानात् इति भावः।

3. **योजनीयमिति** ‘प्रधानादचेतनात्’ ...इत्यादिभाष्यं इत्यादिः।

**एतदेवानुमानं संसारिव्यतिरिक्तेश्वरास्तित्वादिसाधनं मन्यन्ते ईश्वरकारणिनः ।**

अस्मिन् सूत्रे यज्जगत उत्पद्यमानत्वमुक्तं [1]इदमेव हेतूकृत्य 'अदृष्टाद्वारक-जन्यकृत्यजन्यानि जन्यान्यंकुरादीनि उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यानि, उत्पद्यमानत्वात्, घटवत्' [2]इतिप्रकारेण संसारिव्यतिरिक्तमीश्वरं साधयन्तीत्याह—**एतदेवेति** । ततश्च यत् स्वयं पूर्ववाक्ये, यथोक्तविशेषणस्य जगतः संसारिणस्स-काशादुत्पत्तिर्नसम्भवतीत्युक्तं, तत् युक्तिकुशलानामपि सम्मतमिति भावः ।

मन्यन्त इति तन्मते अस्वरसोद्भावनम् । तद्यथा–अनेन हि जगदुत्पत्त्यु-पयोगिकृत्यादिमान् एकः तद्गतं कृत्यादिकं च नित्यं सर्वविषयं च यदि सिध्येत्, तदा खलु संसारिवैलक्षण्यं [3]तस्मिन् सिध्येत् । न तु तदस्ति । कार्यत्वहेतोस्तत्र सामर्थ्याभावात् । स हि तत्र कर्तारमपेक्षते । तदेकत्वे कृत्यादीनां [4]नित्यत्वादौ च उदासीन एव ।

लाघवतर्कसहकृतः तदेकत्वादिकं साधयिष्यतीति चेन्न । एकत्वं किं एकत्व-रूपसङ्ख्यावैशिष्ट्यं अनुमितिविषयतया उपनयति, किं वा अनेकत्वाभाववैशिष्ट्यम्? नाद्यः । प्रत्येकं बहूनामप्यंकुरादिकर्तॄणामेकत्वसम्भवात् न विवक्षितार्थसिद्धिः । न द्वितीयः । न हि, यत् अग्रे वस्तुलाघवपर्यवसितं स्वानुग्राह्यप्रमाणजन्यज्ञानस्य विषयगौरवमापादयति तत् प्रमाणसहकारितया क्लृप्तं लाघवम् । अत एव पुरोवर्ति-ज्ञानस्य इष्टभेदग्रहदशायां प्रवृत्तिजनकत्वाभावेन तादृशप्रतिबन्धकव्यावृत्तयेऽधिक-कारणविवक्षाप्रसक्तौ प्रवृत्तिकारणताग्रहविषयतया अग्रे व्यधिकरणप्रकारकज्ञानान्तर-कल्पनाराहित्यरूपलाघवानुसन्धानं न इष्टभेदग्रहाभावमुपनयति 'प्रवृत्तिः इष्टभेदग्रह-विरोधिकारणजन्या [5]तत्प्रतिबद्धयत्वात्' इति । स्वानुग्राह्यप्रमाणजन्यज्ञानस्य

---

1. मु. तदेव
2. **इति प्रकारेण**—इत्यादिन्यायप्रयोगेण । तत्त्वचिन्तामण्युक्तोऽयं प्रयोगः ।
3. मु. 'तस्मिन्' नास्ति
4. मु. नित्यत्वे
5. मु. तत्प्रतिबद्ध०

गुरुविषयतापादकत्वात्। अपि तु 'भाविगौरवं सोढ्वाऽपि स्वानुग्राह्यप्रमाणजन्यज्ञानस्य विषयलघुतापादकं [1]इष्टाभेदग्रहरूपत्वमेव पुरोवर्तिज्ञानस्य कारणताकोटौ अवच्छेदकं कल्पनीयम्, भावरूपतया स्वरूपतो लाघवात्, समीचीनज्ञानस्थले ज्ञानवित्तिवेद्यतयोभयसम्मततया उपस्थितितोऽपि लघुत्वात्, कारणतावच्छेदककोटौ निवेशकल्पनेन कारणान्तरकल्पनाभावरूपलाघवसम्भवाच्च' इत्यनुसन्धानमेव उक्तप्रमाणस्य पुरोवर्तिज्ञाने इष्टाभेदविषयोपनायकं कल्प्यते। अतो न लाघवानुसारेण अनेकत्वाभावविशिष्टकर्तृसिद्धिः।

अपि च नात्र भाविगौरवमपि। न हि, कर्तृमात्रसिद्धावपि एकः कर्ता न सिध्येदिति वदता क्लृप्तजीवव्यतिरिक्ता एव बहवः कर्तार आपाद्यन्ते, येन गौरवग्रस्ततया तदापादनमनुन्मिषितम्। किं तु क्लृप्तेष्वेव जीवेषु जगत्कर्तृत्वमस्तु। न चासम्भवः तेषां जगत्कृतौ। अस्मदादीनामसम्भवेऽपि महामहिमशालिनामगस्त्यविश्वामित्रादिसदृशानां तत्सम्भवात्। प्रसिद्धं हि विश्वामित्रागस्त्ययोः अस्मदाद्यसम्भावितमप्यभिनवसर्गाम्बुधिचुलुकीकरणादिकम्। योगशास्त्रे च योगमाहात्म्यं सृष्ट्याद्युपयोगि प्रतिपादितम्। एवं च क्लृप्तानामेव जीवानां तत्कृत्यादीनां च जगदुत्पत्त्युपयोगित्वे धर्ममात्रकल्पनमेव अपूर्वेश्वरतत्कृतितद्गतजगदुपयोगित्व[2]धर्मधर्मिकल्पनाद्वरम्। अतो विपरीतं गौरवमिति शङ्काकलङ्कितो हेतुः कथमलौकिकमर्थं साधयेत्।

अपि च कर्त्रेकत्वसाधनविपरीतसाधनमपि जगत उपलभ्यते विचित्रमहाकार्यत्वरूपम्। यद्धि विचित्रं महत् गोपुरप्रासादादिकं तत् सर्वं क्रमभाव्यसर्वविषयज्ञानादिभिरनेकैश्शिल्पिभिः क्रमशः क्रियमाणं दृष्टम्, जगदपि विचित्रमहाकार्यत्वात्तथास्त्विति कथं नित्यसर्वविषयज्ञानादिमानेकः कर्ता सिध्येत्।

अपि च कृत्यादिषु जन्यत्वे लाघवात् कृतित्वादिकमेव[3] प्रयोजकम्। न तु जैवकृतित्वादिकमपि। गौरवात्। ततश्च 'या या कृतिः सा सर्वापि जन्या' इत्यादिव्याप्तिविरोधात् नित्यकृत्यादिसिद्धिः कथं स्यात्।

---

1. मु. इष्टभेदग्रहरूपमेव
2. मु. 'धर्म' नास्ति
3. मु. °मेव तत्र प्र°

**नन्विहापि तदेवोपन्यस्तं जन्मादिसूत्रे ।**

अपि च यथा किञ्चित्कार्यं ससम्प्रदानकं किञ्चित् नेति, [1]यथा किञ्चित्कार्यं [2]सापादानकं किञ्चित् नेति, तथा किञ्चित् सकर्तृकं किञ्चित् नेत्यस्तु । एवं च लोके कृतत्वेन घटादिव्यवहारः अकृतत्वेनांकुरादिव्यवहारश्चोपपद्यते ।

नन्वेवं तार्किकोक्तानुमानस्यात्यन्तासङ्गतत्वे किमर्थं तन्मतोपन्यासः एतदेवानुमानमितिवाक्येन कृत इति चेत्—

उच्यते—यद्यपि हैतुकस्य सा युक्तिः निर्णयोपयोगिनी न भवति, तथाप्यौपनिषदस्य श्रुत्यर्थपरिशोधकतया निर्णयोपयोगिनी भवत्येव । जगतः कर्ता कश्चिदस्ति वा न वेति सन्दिहानं प्रति यत्र यत्र घटादिषु कार्यत्वमस्ति तत्र सर्वत्र सकर्तृकत्वं दृष्टमिति कर्तृकारकस्य [3]सम्प्रदानादिकारकवत् स्पष्टव्यभिचारनिर्णयाभावात् उक्तशङ्काशूके सत्यपि कार्यत्वं भूयोगृहीतसहचारतया कर्तुरस्तित्वकोटिमुत्कटामापादयति । तावन्मात्रेण सम्भावितमतिर्बोध्यः श्रुत्या सुखेन बोधयितुं शक्य इति । तदेकत्वतत्सर्वज्ञत्वाद्यंशे तु उपन्यस्तानेकयुक्तिविरोधात् सम्भावनाऽपि न भवति । तथाऽपि सर्वज्ञत्वैकत्वादिसंशये दुर्बलाया अपि एकत्वसर्वज्ञत्वकोटेः यत्किञ्चित्तार्किकोपन्यस्तयुक्त्याभाससन्दब्धायाःतावन्मात्रेण श्रुतिसाहाय्यमाचरन्त्याः श्रुत्याऽनुवादात् दृढता भवति । सोऽयं वनसिंहन्यायो ह्रदनक्रन्यायश्च । ह्रदनक्रयोः सिंहवनयोश्च परस्परं वियुक्तयोः धीवरशबराभ्यां प्रधर्षणीयता भवति, संयुक्तयोस्तु परस्परं साहाय्यमाचरतोर्दुर्धर्षता भवति, तद्वद्युक्त्यागमयोरपि द्रष्टव्यमिति तात्पर्यार्थः ।

उक्तमर्थमाक्षेपसमाधानाभ्यामुपपादयति—**नन्विहापीति** ।

यथा हि चोदनासूत्रं 'यश्चोदनाप्रमाणकस्स धर्मः' 'चोदनाप्रमाणगम्यो धर्मः' इति वचनव्यक्तिद्वयेन लक्षणप्रमाणोभयपरम्, एवं जन्मादिसूत्रमपि 'यज्जगज्जन्मादिकारणं तत् ब्रह्म' 'यज्जगज्जन्मादिकारणं तत् ब्रह्म अस्ति' इति वचनव्यक्ति-

---

1. आ. तथा
2. आ. सोपादानकं
3. मु. सम्प्रदानकारकवत्

**न—वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणाम्। वेदान्तवाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्ते। वाक्यार्थविचारणाध्यवसाननिर्वृत्ता हि ब्रह्मावगतिः, न अनुमानादिप्रमाणान्तरनिर्वृत्ता। सत्सु तु वेदान्तवाक्येषु जगतो जन्मादिकारणवादिषु तदर्थग्रहणदार्ढ्याय अनुमानमपि वेदान्तवाक्याविरोधि प्रमाणं भवत् न निवार्यते, श्रुत्यैव च सहायत्वेन तर्कस्याभ्युपेतत्वात्। तथाहि—'श्रोतव्यो मन्तव्यः' (बृ. उ. २।४।५) इति श्रुतिः 'पण्डितो मेधावी गन्धारानेवोपसंपद्येत एवमेवेहाचार्यवान् पुरुषो वेद' (छा. उ. ६।१४।२) इति च पुरुषबुद्धिसाहाय्यमात्मनो दर्शयति।**

द्वयेन लक्षणप्रमाणोभयपरम्। ततश्च अनुमानमेव कार्यत्वलिङ्गकं तेन सूच्यताम्। ततश्च कथं तस्मिन्नस्वरससूचनमिति[1] शङ्कते—**नन्विति।**

शास्त्रयोनित्वाधिकरणपर्यालोचनया प्रमाणतया [2]अत्र श्रुतिरेव सूत्रितेति परिहरति—**न—वेदान्तेति।** न चेहापि प्रमाणतया शास्त्रे उदाहृते शास्त्रयोनित्वाधिकरणं व्यर्थं स्यादिति वाच्यम्। [3]विरुद्धत्वाशङ्कानिराकरणार्थत्वादस्य[4]। **वेदान्तवाक्यानीति।** उत्तरसूत्रगतशास्त्रशब्दस्वारस्यादित्यर्थः। उत्तरसूत्रस्य वा शास्त्रे किमर्थ निर्बन्ध इत्याशङ्क्याह—**वाक्यार्थेति। अध्यवसानेति।** विचारितवेदान्तवाक्यजन्यशाब्दबोधरूपाध्यवसानेत्यर्थः। ब्रह्मावगतिः—अविद्यानिवर्तको वृत्तिविशेषरूपः साक्षात्कार इत्यर्थः। **नानुमानादीति।** 'नावेदविन्मनुते तं बृहन्तं' [शा. उ. ४] इति श्रुतेः, अलौकिके तस्मिन् अनुमानायोगाच्चेति भावः। एवं तर्हि सर्वात्मना अनुमानानुपयोगः स्यादित्याशङ्क्य, प्रमेयासम्भावनानिवृत्तौ तदुपयोग इत्याह—**सत्सु तु वेदान्तवाक्येष्विति।** अनुमानस्य साक्षात्कारोपयोगे प्रमाणमाह—**श्रोतव्यो मन्तव्य इति।** तस्करैर्गन्धारदेशेभ्यः पिहितनेत्रं पुरुषमानीय वने

---

1. मु. मितिभावः। शास्त्र

2. मु. 'अत्र' नास्ति

3. **विरुद्धत्वेति** श्रुत्युक्तजगत्कारणत्वरूपस्य लक्षणस्य लक्ष्यस्वरूपविरुद्धत्वेत्यर्थः। आ. विरुद्धत्वादि

4. **अस्य**—जन्माद्यधिकरणस्य।

**न धर्मजिज्ञासायामिव श्रुत्यादय एव प्रमाणं ब्रह्मजिज्ञासायाम् । किंतु श्रुत्यादयोऽनुभवादयश्च यथासंभवमिह प्रमाणम्, अनुभवावसानत्वाद्भूतवस्तुविषयत्वाच्च ब्रह्मज्ञानस्य ।**

[1]अतिजने विसृष्टं स्ववृत्तान्तकथनपूर्वकं क्रोशन्तमुपलक्ष्य नेत्रपिधानदूरीकरणपूर्वकं 'अस्यां दिशि गन्धाराः' इति साधुना कृतोपदेशं तदुपदिष्टदिशं पुरस्कृत्य गच्छन्तं प्रकृत्य आम्नातं पण्डितोमेधावीति वाक्यं, यथा प्रकृतः पुरुषः उपदेशस्य सम्यग्गृहीतत्वात् पण्डितः तत्र ऊहापोहसमर्थत्वात् मेधावी गन्धारदेशान् प्राप्नोति एवमेवेह आचार्यवान् पुरुषो लब्धाचार्योपदेशः तदुक्तार्थपरिष्कारकुशलश्च यो भवति स एवात्मतत्त्वं वेदेति प्रतिपादयत्, पूर्वोक्तस्य मेधावित्वस्य एवंशब्देन परामर्शात् आत्मतत्त्वापरोक्ष्ये युक्तिमभ्यनुजानाति । [2]अत एव च सूत्रकृता प्रत्यक्षादिविषयविवेचिका युक्तयो द्वितीयाध्याये निबद्धाः ।

ननु यथा जैमिनिना 'प्रत्यक्षादिप्रमाणविषयस्यानृतत्वेऽपि न लौकिकव्यवहारविरोधः' इति निर्णयाद्युपयोगिनो न्यायाः स्वशास्त्रे उपेक्षिताः एवं बादरायणेनापि कुतो नोपेक्षिताः—इत्याशङ्क्याह—**न धर्मजिज्ञासायामिति । प्रमाणमिति ।** उपन्यसनीयमिति शेषः । ननु धर्मब्रह्मजिज्ञासयोरेतादृशवैषम्ये किं नियामकमित्याशङ्क्याह—**अनुभवावसानत्वादिति ।** धर्मजिज्ञासा हि स्वर्गादिरूपपुरुषार्थसिद्ध्यर्थं स्वप्रमेयानुष्ठानावसाना । ब्रह्मजिज्ञासा तु मोक्षरूपपुरुषार्थावसानाय स्वप्रमेयस्य ब्रह्मणः अप्रतिबद्धसाक्षात्कारपर्यवसाना । तत्र च प्रत्यक्षादिविषयविवेचनरूपमननाभावे आचार्योपदेशपूर्वकमुपासनया तत्त्वसाक्षात्कारेऽपि प्रत्यक्षादिविरोधानुसन्धानक्षुभितचित्तस्य अयं साक्षात्कारो विधुरपरिभावितकामिनीसाक्षात्कारवत् न तत्त्वनिष्ठः, प्रत्यक्षविरुद्धेऽर्थे श्रुतितात्पर्यायोगेन मूलप्रमाणविकलत्वादितिशङ्काकलङ्कसम्भवात् मननापेक्षा । तथा च श्रुतिः 'तत्त्वेव भयं विदुषोऽमन्वानस्य' [तै. उ. २-७.] इति । अतः आवश्यकमस्मिन् शास्त्रे युक्तिनिबन्धनम् । ननु—यथा विरुद्धयोस्समबलयोश्शास्त्रयोर्विकल्पमाश्रित्य विरोधः परिह्रियते, तद्वत् प्रकृतेऽपि सप्रपञ्चत्व-

---

1. मु. अतिसृष्टं

2. **अत एव**—युक्त्यनुसन्धानस्य आत्मतत्त्वापरोक्ष्योपयोगित्वादेव ।

**कर्तव्ये हि विषये नानुभवापेक्षाऽस्तीति श्रुत्यादीनामेव प्रामाण्यं स्यात्, पुरुषाधीनात्मलाभत्वाच्च कर्तव्यस्य। कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं लौकिकं वैदिकं च कर्म, यथा—अश्वेन गच्छति, पद्भ्यां अन्यथा वा, न वा गच्छतीति। तथा 'अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति' 'उदिते जुहोति, अनुदिते जुहोति' इति। विधिप्रतिषेधाश्च अत्रार्थवन्तः स्युः, विकल्पोत्सर्गापवादाश्च।**

**न तु—वस्तु, एवं नैवम्, अस्ति नास्तीति वा—विकल्प्यते। विकल्पनास्तु पुरुषबुद्ध्यपेक्षाः। न वस्तुयाथात्म्यज्ञानं पुरुषबुद्ध्यपेक्षम्। किं**

निष्प्रपञ्चत्वयोर्विकल्पसम्भवात् प्रत्यक्षादिप्रमितसप्रपञ्चत्वस्य सत्यत्वेऽपि कादाचित्कीं निष्प्रपञ्चतामादाय आत्मनि निष्प्रपञ्चत्वसाक्षात्कारोऽपि प्रमाणमस्तु—इत्याशङ्कयाह—**भूतेति**। भूतं-पुरुषेच्छानधीनम्। यद्धि पुरुषेच्छाधीनं तद्विकल्प्यते, सप्रपञ्चत्वनिष्प्रपञ्चत्वे तु न तथेति भावः।

सङ्गृहीतं हेतुद्वयं विवृणोति—**कर्तव्ये हीत्यादिना भूतवस्तुविषयत्वादित्यन्तेन**। पुरुषाधीनात्मलाभत्वाच्चेत्येतद्विवृणोति—**पुरुषेणेति**। लौकिकमुदाहरति—**यथाऽश्वेनेति**। **अन्यथा वेति**। उन्मत्तादिसादृश्येनेत्यर्थः। वैदिकमन्यथाकरणमुदाहरति—**अनुदित इति**। ननु वैदिकस्यापि कर्मणः पुरुषेच्छाधीनत्वे विधिप्रतिषेधौ व्यर्थौ स्यातामित्याशङ्कयाह—**विधिप्रतिषेधाश्चेति**। पुरुषेच्छासिद्ध्यर्थमेव इष्टसाधनताबोधी विधिरपेक्षितः करणाय, पुरुषेच्छाप्रतिबन्धाय अनिष्टसाधनताबोधी निषेधोऽकरणायापेक्षितः, अतो न तयोर्वैयर्थ्यमिति भावः। ननु विधिप्रतिषेधयोरेकस्मिन्नेव षोडशिग्रहादौ कथं निवेशस्स्यात् विरुद्धत्वात्—इत्याशङ्कयाह—**विकल्पेति**। यथा सामान्यविशेषशास्त्रयोर्विरोधपरिहाराय उत्सर्गापवादरूपः प्रकार आश्रीयते, तद्वद्विरुद्धयो[1]स्समबलयोः अतिरात्रे षोडशिग्रहविधिनिषेधयोः विरोधपरिहाराय विकल्प आश्रीयत इत्यर्थः।

एवं कर्तव्ये विकल्पमाश्रित्य विरोधपरिहारमुक्त्वा सिद्धे वस्तुनि न विकल्पसम्भव इत्याह—**नत्विति**। एकः प्रकारविकल्पः। अपरो वस्तुस्वरूपविकल्पः। ननु स्थाणुर्वा पुरुषो वेति सिद्धे वस्तुन्यपि विकल्प उपलभ्यते, नेत्याह—**विकल्प-**

1. मु. समानकालयोः

तर्हि. वस्तुतन्त्रमेव तत् । न हि स्थाणावेकस्मिन् स्थाणुर्वा पुरुषोऽन्यो वेति तत्त्वज्ञानं भवति । तत्र पुरुषोऽन्यो वेति मिथ्याज्ञानम् । स्थाणुरेवेति तत्त्वज्ञानं, वस्तुतन्त्रत्वात् । एवं भूतवस्तुविषयाणां प्रामाण्यं वस्तुतन्त्रम् ।

तत्रैवं सति ब्रह्मज्ञानमपि वस्तुतन्त्रमेव, भूतवस्तुविषयत्वात् ।

**ननु भूतवस्तुत्वे ब्रह्मणः प्रमाणान्तरविषयत्वमेवेति वेदान्तवाक्यविचारणा अनर्थिकैव प्राप्ता ।**

**न—इन्द्रियाविषयत्वेन संबन्धाग्रहणात् । स्वभावतो विषयविषयानास्त्विति ।** अयं हि कोट्युपस्थित्यादिकारणवशात्, यादृशं वस्तुस्वरूपं तद्विपरीतरूपावगाहिसंशय एव, न तु विकल्पः । [1]तस्य निश्चयरूपत्वात् । अत एव, व्रीहिभिर्यवैर्वा यष्टव्यमिति सन्दिहानं प्रति 'व्रीहिभिर्वा यजेत, यवैर्वा यजेत' इतिवाक्यं विकल्पजनकमपि निश्चायकं भवति । विकल्पस्य प्रमारूपत्वे च न पुरुषबुद्धिमात्रमुपयुक्तम् । किं तु यादृशं वस्तुस्वरूपं [2]तदवगाहित्वमपि । ततश्च कर्तव्ये वस्तुनि विरुद्धकोटिद्वयावगाहिनामपि ज्ञानानां वस्तुतत्त्वानुसारित्वात् प्रामाण्यमुपपद्यते, न सिद्धे वस्तुनि, तादृशज्ञानस्य तत्त्वानुसारित्वाभावादित्यर्थः ।

प्रकृतमुपसंहरति—**तत्रैवमिति** । वस्तुतन्त्रमेव सत् प्रमाणमित्यर्थः । अतोऽप्रतिबद्धसाक्षात्कारोपयोगितया [3]युक्तिसूत्रणमावश्यकमिति भावः ।

ननु—यत् सिद्धार्थप्रतिपादकं तत् प्रमाणान्तरमूलकं वाक्यं भवति, यथा—नद्यास्तीरे पञ्च फलानि सन्तीतिवाक्यम् । ततश्च वेदान्तानामपि सिद्धार्थबोधकत्वे प्रमाणान्तरमूलता प्रसज्येतेति शङ्कते—**नन्विति ।**

न हि भूतवस्तुविषयत्वं प्रमाणान्तरमूलकतायां वाक्यस्य प्रयोजकम् । तथानियमे प्रमाणाभावात् । अपि तु अर्थं प्रमाणान्तरेणोपलभ्य तदनुसारेण रचितत्वम् । ब्रह्मणश्च प्रमाणान्तरायोग्यतया नार्थमुपलभ्य रचितत्वं ब्रह्मप्रतिपादकानां वेदान्तानां वक्तुं शक्यते—इति परिहरति—**नेति** । संगृहीतं हेतुं विवृण्वन् प्रत्यक्षाविषयत्वमाह—**स्वभावत इति** । रूपादिहीनत्वात् 'पराञ्चि खानि व्यतृणत् स्वयम्भूः'

---

1. **तस्य**—विकल्पस्य ।
2. मु. तादृशावगा०
3. **युक्तिसूत्रणमिति** द्वितीयाध्याये इत्यादिः ।

णीन्द्रियाणि, न ब्रह्मविषयाणि। सति हीन्द्रियविषयत्वे ब्रह्मणः, इदं ब्रह्मणा संबद्धं कार्यमिति गृह्येत। कार्यमात्रमेव तु गृह्यमाणं किं ब्रह्मणा संबद्धं किमन्येन केनचिद्वा संबद्धमिति न शक्यं निश्चेतुम्।

तस्माज्जन्मादिसूत्रं नानुमानोपन्यासार्थं, किं तर्हि, वेदान्तवाक्यप्रदर्शनार्थम्। किं पुनस्तद्वेदान्तवाक्यं यत् सूत्रेणेह लिलक्षयिषितम्? 'भृगुर्वै वारुणिः। वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति' इत्युपक्रम्याह—'यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति' (तै. उ. ३-१)। तस्य च निर्णयवाक्यम्—'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते।

[क. उ. ४-१] इत्यादिश्रुतेश्च [1]न ब्रह्मण इन्द्रियविषयत्वमिति भावः। ततश्च 'यत् कार्यं तत् सर्वज्ञत्वादिगुणविशिष्टकर्तृकं' इति [2]विशिष्य व्याप्तिग्रहात् 'कार्यं सकर्तृकं' इति [3]सामान्यव्याप्तिग्रहेण नाभिलषितवस्तुसिद्धिरित्याह—**सति हीति**।

एवं लौकिकशब्दागोचरत्वमपि यथायथं द्रष्टव्यं इत्यभिप्रेत्योपसंहरति—**तस्मादिति**। विजिज्ञासस्वेति मध्यमपुरुषापेक्षितसम्बोध्यचेतनप्रदर्शनार्थं सोपक्रमं वाक्यमुदाहरति—**भृगुरिति**। अधीहि-अध्यापयेत्यर्थः। ननु—नानेन वाक्येन अलौकिको वस्तुविशेषो ब्रह्मशब्दार्थ इति निश्चयस्सम्भवति, 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इति वाक्येन आनन्दशब्देन प्रसिद्धानन्दानुवादेन पूर्वोक्तजगत्कारणतायाः पर्यवसानकरणात्। ततश्च प्रसिद्धस्य लौकिकानन्दस्य अदृष्टादिवत् शास्त्रप्रामाण्यात् कारणत्वं प्राप्नोतीत्याशङ्कयाह—**तस्य चेति**। नानेन वाक्येन लौकिकानन्दमुद्दिश्य जगत्कारणता विधीयते, तथा सति शब्दासन्निहिततया लौकि-

---

1. **न ब्रह्मण इत्यादि** ननु 'पराञ्चि खानि' इति मन्त्रमुदाहृत्य ब्रह्मण इन्द्रियाविषयत्वोक्तिरयुक्ता, 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्' इति तन्मन्त्रोत्तरार्ध एव विद्वदिन्द्रियग्राह्यताया उक्तत्वात्—इति चेत्—सत्यम्—तत्र श्रवणादिवासितेन्द्रियग्राह्यत्वोक्तावपि शब्दमनपेक्ष्य स्वातन्त्र्येणेन्द्रियग्राह्यत्वस्य निराकरणे विरोधाभावात्, 'ऐक्षत्' इति शाब्दापरोक्षस्यैवोक्तिसम्भवाच्च इति भावः।

2. मु. 'विशिष्य' नास्ति

3. मु. 'सामान्य' नास्ति

आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति ' (तै. उ. ३-६ ) इति । अन्यान्यप्येवंजातीयकानि वाक्यानि नित्यशुद्धबुद्धमुक्तस्वभावसर्वज्ञस्वरूपकारणविषयाणि उदाहर्तव्यानि ॥ २ ॥

आनन्दस्य तदनुवादे क्लेशः स्यात्, तन्माभूदिति यतोवेत्यादिश्रुतिप्रसिद्धं जगत्कारणमुद्दिश्य तस्य आनन्दस्वरूपता बोध्यते । तत्र च सत्यादिवाक्यैकवाक्यतया यज्जगज्जन्मादिकारणं सर्वज्ञत्वादिगुणगणोपबृंहितं तत् सत्यादिरूपं त्रिविधपरिच्छेदशून्यमिति वचनव्यक्त्या स्वाभिमतवस्तुस्वरूपसिद्धिरित्यभिप्रेत्याह—अन्यान्यपीति ॥ २ ॥

**इति जन्माद्यधिकरणम् ॥ २ ॥**

'अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदस्सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि ' [बृ. उ. ४-४-११] इति वाक्यं विषयः । तत् किं वेदे स्वतन्त्रमीश्वरं कर्तारं प्रतिपादयति उत नेति संशयः ।

तत्र पूर्वः पक्षः—न प्रतिपादयतीति । तथा सति 'वाचा विरूप नित्यया' [ऋ. सं. अ. ६. अ. ६५] इतिवचनावगतनित्यत्वविरोधापत्तेः ।

ननु च—उभयोश्श्रुतित्वाविशेषे नित्यत्वप्रतिपादकवचनानुरोधेनैव निश्वसितश्रुतेस्स्वार्थप्रतिपादनाक्षमत्वमिति कथं [1]नियम्यत इति चेत्—

उच्यते—निश्वसितश्रुतिर्हि यथाश्रुता गृह्यमाणा, यथा व्यासादिर्भारतादावादिकर्ता तथा परमेश्वरोऽपि वेदे आदिकर्तेति प्रतिपादयतीति वक्तव्यम् । ततश्च भारतादिवद्वेदस्यापि पौरुषेयत्वं प्राप्नोति । ततश्च[2]मूलभूतपौरुषेयज्ञानप्रामाण्याप्रामाण्यसंशये वेदस्यापि तथा सन्दिग्धता स्यात् । न च तत्कर्तुरीश्वरस्य सर्वज्ञतया निर्णीतत्वात् तस्मिन् लौकिकपुरुषवद्भ्रमादिपुरुषदोषाणां न शङ्कास्पदत्वमिति वाच्यम् । सर्वज्ञतया ईश्वरनिर्णयो ह्यनुमानान्न सम्भवतीत्युक्तम् । वेदादेव तन्निर्णये च प्राप्तमन्योन्याश्रयत्वं—वेदप्रामाण्यनिर्णये सर्वज्ञत्वादिनिर्णयः तन्निर्णये च भ्रमादिशङ्कानिरासपूर्वकं वेदप्रामाण्यनिर्णयः—इति । अतः कृत्स्नवेदाप्रामाण्यापादकं

---

1. मु. निश्चीयत इति
2. आ. तन्मूल

तद्वचनम् । नित्यत्ववचनं तु वेदापौरुषेयतां न विरुणद्धीति तदादर एवोचितः । न च—अपौरुषेयत्वेऽपि कथं प्रामाण्यनिर्वाहः । इदमेव ह्यपौरुषेयत्वं, यत् प्रमाणान्तरेणार्थमुपलभ्य तदनुसारेण रचितत्वाभावः । न चैतावता प्रामाण्यं सम्भवति । तथासति काकतालीयसम्पन्नस्यालौकिकार्थगोचरस्य प्रमाणान्तरबाधरहितस्य अर्थज्ञानं विना विरचितस्य 'नालिकेरसलिलपानेन स्वर्गो भवति' इत्यादिवाक्यस्यापि वेदतुल्यतया प्रामाण्यं स्यादिति—वाच्यम् । अस्मिन् हि वाक्ये पुरुषविशेषविनिर्मितत्वं प्रत्यक्षेण गृह्यते । तस्य च वाक्यस्य अर्थज्ञानं विना रचितत्वात् भ्रमवञ्चनादिमूलत्वासम्भवेऽपि प्रमादमूलत्वं सम्भवत्येव । न ह्यप्रमत्तस्तथा वाक्यं रचयति । अतः स्वतन्त्रकर्तृकत्वेनानुसन्धीयमानेषु वाक्येषु प्रमामूलकत्वानुसन्धानं विना न प्रामाण्यनिर्णयः । वेदस्य तु तादृशपुरुषजन्यत्वे प्रमाणाभावात् न कर्तृगतदोषमूलत्वाशङ्का नापि लौकिकबाधोपलब्धिरिति आकाङ्क्षादिमत्तया योग्यवाक्यत्वेन ज्ञानजनकस्य उत्सर्गतः प्राप्तं प्रामाण्यं अनपोदितमेव भवति । तस्मात् अपौरुषेयतया वेदप्रामाण्यनिर्वाहार्थे [1]सम्प्रदायप्रवर्तकत्वाभिप्रायं निश्वसितवाक्यं व्याख्येयमिति ।

सिद्धान्तस्तु—सत्यं वेदस्यापौरुषेयत्वेन प्रामाण्यम् । न तु तद्विरोधि निश्वसितवाक्यम् । तेन हि वाक्येन कश्चिदतिनिपुण उपाध्यायः सुप्त्वोत्थितः अनायासेन वेदान् माणवकेभ्यः पूर्वं यथाऽध्यापितवान् तथैवाध्यापयति पुनरपि, एवमीश्वरोऽपीति प्रतिपाद्यते । परं तु लौकिकाध्यापकस्य वेदप्राप्तिरुपाध्यायान्तराधीना । ईश्वरस्तु पूर्वकल्पेऽपि स्वयमेव उपाध्यायान्तरमनपेक्ष्य यथाऽवस्थितान् वेदान् मन्वादिभ्योऽध्यापयामास, ततः प्रलये स्वस्मिन्नेव संस्कारावशेषान् वेदान् सृष्ट्यारम्भे यथावस्थितानेव स्मृत्वा मन्वादिभ्योऽध्यापयामासेति, लौकिकोपाध्यायवदेव सम्प्रदायप्रवर्तकत्वमेवास्थीयते । न च एतावन्मात्रेण भारतादिवत् पुरुषबुद्धिप्रभवत्वं शङ्कितुं शक्यते । भारतादिकं स्वयं प्रमाणान्तरेणार्थमुपलभ्य हि तदनुसारेण अपूर्वां वर्णावलीं मनसाऽऽलोच्य रचितमिति भारतादिवचनैरेवावगम्यते । वेदे तु यद्यपि, निश्वसितश्रुत्या '[2]अष्टादशानामेतासां विद्यानां भिन्नवर्त्मनाम् ।

---

1. **सम्प्रदायः**—अध्यापकाध्येतृपरम्परा ।

2. **अष्टादशानामिति** 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रञ्च विद्याह्येताश्चतुर्दश । आयुर्वेदो धनुर्वेदो गान्धर्वश्चैव ते त्रयः । अर्थशास्त्रं चतुर्थन्तु विद्याह्यष्टादशैव ताः ।' [वि. पु. ३. ६. २८-२९] इत्युक्तानाम् ।

आदिकर्ता कविस्साक्षाच्छूलपाणिरिति श्रुतिः ॥' इति वचनेन च सृष्ट्यारम्भे वेदकर्तृत्वावगमात् उपाध्यायान्तरानपेक्षत्वम्, आदिकवित्वेन च निरूपणात् विवक्षापूर्वकं कर्तृत्वमवगम्यते; तथापि पूर्वस्मिन् कल्पे यादृशी वर्णावली यच्च तात्पर्यं तदनुसन्धाय अस्मिन्नपि कल्पे तथैव करोतीति उपगम्यते। न चैतावता पूर्वकल्पीयक्रमादिसापेक्षतामात्रेण तस्य स्वातन्त्र्यं विहन्यते। न हि यादृशः कटः पूर्वं रचितः तमाकारमनुसन्धाय क्रयादिव्यवहारार्थं तादृशमेव पुनः कटं सृजतः तत्र स्वातन्त्र्यविघातो भवति। एवं च सति 'धाता यथापूर्वमकल्पयत्' [म. ना. उ. ६-३] इत्यादिवचनमनुसृतं भवति।

न चैतादृशेन ईश्वरकृतत्वेन वाचाविरूपनित्ययेति वचनं विरुध्यते। तद्धि वचनं न [1]आहत्यैव वेदस्य नित्यत्वं प्रतिपादयति। [2]वर्णानां नित्यत्वेऽपि, न वर्णा एव वेदः, अपि तु क्रमविशेषेण स्वरविशेषेण च विशिष्टाः, नित्यानां विभूनां च वर्णानां न देशतः कालतो वा क्रमस्सम्भवति, स्वरोऽपि न स्थानविशेषनिष्पत्तिप्रयुक्तो नित्येषु सम्भवति, अपि तु तदभिव्यञ्जकध्वन्युपाधिक एव [3]क्रमादिः स्वीकर्तव्यः, ततश्च विशेषणीभूतक्रमादेस्तदुपाधेर्ध्वनेश्चानित्यतया कथं वेदः स्वरूपेण नित्यःस्यात्। तस्मात् [4]प्रवाहनित्यताभिप्रायमेव तद्वचनमुपेयम्। तच्च अस्माकमपि सम्मतमेव।

न च वेदस्य परमेश्वरकृतत्वाभ्युपगमे सिद्धान्ते अपौरुषेयत्वाभ्युपगमो विरुध्यत इति वाच्यम्। तार्किकैर्हि [5]यादृशं पौरुषेयत्वमभ्युपेयते, प्रमाया गुणजन्यत्वाभ्युपगमात् ईश्वरप्रमाधीनं तन्मूलस्य वेदस्य प्रामाण्यं यथा कालिदासादिवाक्यार्थप्रमाधीनं तत्कृतस्य वाक्यस्य प्रामाण्यं, नैवमुपेयते। तदभिप्राया सिद्धान्ते अपौरुषेयत्वोक्तिः तत्रतत्र। ततश्च 'कर्तृज्ञानप्रामाण्यसंशये वेदेऽपि प्रामाण्यसंशयः, न चेश्वरस्य परमाप्तत्वं वेदप्रामाण्यनिर्णयं विनाऽधिगन्तुं शक्यम्' इत्यादिपूर्वपक्ष-

---

1. **आहत्य**—साक्षात्—स्वरूपेण।

2. **वर्णानां नित्यत्वेऽपीति** 'कथं वेदः स्वरूपेण नित्यः स्यात्' इत्यनेन सम्बद्ध्यते।

3. मु. स्वरादिः

4. **प्रवाहनित्यता**—कालत्वव्यापकस्वसजातीयकत्वम्।

5. **यादृशं पौरुषेयत्वमभ्युपेयते इति** नैवमुपेयते इत्यनेन सम्बद्ध्यते।

३. शास्त्रयोनित्वाधिकरणम्

**जगत्कारणत्वप्रदर्शनेन सर्वज्ञं ब्रह्मेत्युपक्षिप्तम्, तदेव द्रढयन्नाह—**

# शास्त्रयोनित्वात् ॥ ३ ॥

**महत ऋग्वेदादेः शास्त्रस्य अनेकविद्यास्थानोपबृंहितस्य**

दूषणानां अनवसरः । [1]न चेदमपौरुषेयत्वं मीमांसकमर्यादया उपेयते । ते हि सृष्टिप्रलयादिकमनङ्गीकृत्य अध्यापकाध्येतृपरम्परामविच्छिन्नां स्वीकृत्य स्वतन्त्रमीश्वरं [2]वक्तारं नेच्छन्ति । येन निश्वसितश्रुतिर्विरुध्येत । तस्मादादिकर्तुरीश्वरस्याभ्युपगमात् तस्यापि पूर्वपूर्वकल्पानुसारेणैव वेदविरचनोपगमात् वेदस्य च योग्यवाक्यत्वेनैव असति बाधे प्रमाजनकत्वोपगमात् [3]अनादितात्पर्योपगमाच्च न श्रुतिस्मृतिविरोधः, [4]नापि सापेक्षत्वापादनम्—इति ।

ततश्च **शास्त्रस्य**—वेदस्य [5]**योनिः**—कारणं, तथाभूतत्वात् इति सूत्रार्थः ।

अत्रेयं शङ्का भवति—निश्वसितश्रुतेर्वेदनित्यत्वश्रुतेश्चाविरोधोपपादनपूर्वकं वेदस्येश्वरकृतत्वप्रतिपादनं वियत्पाद एव सङ्गतम्, न त्वत्र । अपि च शास्त्रयोनित्वादिति हेतोः साकांक्षता साध्यालाभात्—इति । तां निराकर्तुमाह—**जगत्कारणत्वेति** । ततश्च [6]पूर्वाधिकरणोपक्षिप्तसर्वज्ञत्वदृढीकरणार्थत्वात् नासङ्गतिः । सर्वज्ञमिति पदाध्याहारेण ब्रह्मपदानुषङ्गेण च सूत्रं पूरणीयं—वेदकर्तृत्वात् ब्रह्म

---

1. **न चेदमपौरुषेयत्वं मीमांसकमर्यादया उपेयते** इति 'येन निश्श्वसितश्रुतिर्विरुद्ध्येत' इत्यनेन सम्बद्ध्यते ।

2. मु. 'वक्तारं' नास्ति

3. **अनादितात्पर्यम्**—तत्प्रमानुकूलशक्तिः तात्पर्यम्, तच्च अनादि ।

4. **नापि सापेक्षत्वापादनं इतीति** 'सिद्धान्तः' इति पूर्वेण सम्बद्ध्यते ।

5. मु. योनित्वात्—कारणत्वात्

6. **पूर्वाधिकरणोपक्षिप्तेति** उपक्षिप्तं-आक्षिप्तं—अर्थात् ज्ञापितम् । यद्वा, 'यतः' इति यच्छब्देन उपस्थापितम्, उपस्थापनप्रकारश्च पूर्वाधिकरणे 'यतः सर्वज्ञात्' इति भाष्यावतरणिकायां द्रष्टव्यः ।

सर्वज्ञमिति । न चैवं सति पूर्वाधिकरणगुणसूत्रतापत्त्या अधिकरणान्तरता न स्यादिति शङ्क्यम् । पूर्वाधिकरणाक्षिप्तसर्वज्ञत्वे हेत्वन्तरसमर्पकतया तदुपयोगित्वेऽपि तस्यैवासिद्धस्य हेतोस्साधकतया अधिकरणान्तरत्वोपपत्तेः ।

निर्विशेषवस्तुविचारात्मके शास्त्रे [1]सर्वज्ञत्वनिरूपणं क्वोपयुज्यते ? पूर्वाधिकरणापेक्षितजीवव्यावृत्तिप्रतिपादने । सर्वज्ञत्ववत् [2]सर्वशक्तित्वमपि तद्व्यावृत्तावुपयुज्यत इति तदपि कुतो न निरूप्यते ? निरूपितप्रायमेव हि तदपि । 'अस्य निश्वसितमेतत्' इत्यत्र वैदिकप्रपञ्चोत्पत्त्यनन्तरं 'अयं च लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैव निश्वसितानि' [बृ. उ. ४-४-११] इति लौकिकप्रपञ्चस्यापि निश्वसितन्यायेन सृष्टिराम्नाता । ततश्च सर्वशक्तित्वमपि सिद्धम् । तदपि शास्त्रयोनित्वसूत्रेण [3]सूचितमेव । [4]आहत्य तु नोक्तम् । वेदांशे शङ्काविशेषस्येव निराकरणीयस्य लोकांशे अभावात् ।

शास्त्रयोनित्वहेतुकं सर्वज्ञत्वसाधकं सूत्रप्रणीतमनुमानं प्रपञ्चयति—**महत इत्यादिना सर्वज्ञत्वमित्यन्तेन** । महत इत्यादि कारणंब्रह्मेत्यन्तं हेतुवाक्यम् । न हीदृशस्येत्यादि सर्वज्ञादन्यतस्सम्भवोऽस्तीत्यन्तं व्यतिरेकमुखेन सर्वज्ञत्वप्रतिज्ञापरम् । यद्यद्विस्तरार्थंशास्त्रमित्यादि प्रसिद्धंलोके इत्यन्तं उदाहरणवाक्यम् । किमुवक्तव्यमित्यादि श्रुतेरित्यन्तं उपनयः । तस्येत्यादि निगमनम् । महत इति ग्रन्थतोऽर्थतश्च महत्त्वं विवक्षितं निरतिशयसार्वज्ञ्योपपादनाय[5] । ग्रन्थतो महत्त्वविवरणम्—**ऋग्वेदादेरिति** । अर्थतो महत्त्वं विवृणोति—**अनेकेति** । 'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च

---

1. **सर्वज्ञत्वेति** सविशेषगतेत्यादिः ।

2. **सर्वशक्तित्वमपीति** न च तत् पूर्वाधिकरणेन नाक्षिप्तमिति शङ्क्यम् । सर्वशक्तित्वमन्तरा जगत्कारणत्वानुपपत्त्या तेन तस्याप्याक्षेपात् ।

3. **सूचितमेवेति** बृहदारण्यकषष्ठमैत्रेयीब्राह्मणगतनिश्वसितश्रुत्युदाहरणमुखेनेति भावः । अत एव 'किमु वक्तव्यं......सर्वशक्तिमत्वं चेति' इति सूत्रार्थवर्णनपरं भाष्यं समञ्जसम् ।

4. **आहत्य**—साक्षात्—कण्ठतः—वाच्यवृत्त्या ।

5. मु. सार्वज्ञ्योपपादनात्

**प्रदीपवत् सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य योनिः—कारणं ब्रह्म । न हीदृशस्य शास्त्रस्य ऋग्वेदादिलक्षणस्य सर्वज्ञगुणान्वितस्य सर्वज्ञादन्यतः संभवोऽस्ति ।**

[1]चतुर्दश' [इत्येवमनेकेत्यर्थः] । शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षडङ्गानि । उपबृंह्मणीयाश्चत्वारो वेदाः । तत्र पुराणानि, सृष्ट्यादिप्रतिपादक वाक्यानि परकृतिपुराकल्परूपानर्थवादांश्च प्राधान्येनोपबृंह्मयन्ति । प्रसङ्गादद्वैतभागं कर्मभागं चोपबृंह्मयन्ति । न्यायशास्त्रं तु प्रमाणप्रमेयलक्षणनिरूपणेन पदार्थान् विविच्य ज्ञापयदुपबृंह्मयति । पूर्वोत्तरमीमांसे तु तात्पर्यनिर्णयद्वारा उपयुक्ते । धर्मशास्त्रं तु श्रुतमनुमितं वा विधिभागं उपबृंह्मयति । शिक्षा तु स्थानकरणादिनिरूपणपरा[2] स्वाध्यायोऽध्येतव्यइतिविध्यर्थमुपबृंह्मयति । कल्पस्तु प्रयोगनिरूपणार्थं उपयुक्तः । व्याकरणं तु अस्मिन्नर्थे इदं पदं साध्विति पदार्थान् व्याकरोति । निरुक्तं तु तेषुतेषु पदेषु यौगिकमर्थं प्रतिपादयति । छन्दश्शास्त्रं तु वेदगतान् गायत्र्यादिशब्दान् लक्षणमुखेन विशदयति । ज्योतिषं तु 'पौर्णमास्यां पौर्णमास्या यजेत अमावास्यायाममावास्यया यजेत' इत्यादिनोपात्तं कालविशेषं व्यवस्थापयति । तथा च तत्तदेकदेशव्याख्यानाय बहवो महर्षयः पुराणादिनिबन्धनप्रणेतारो यत्र प्रवृत्ताः तस्य महार्थत्वं व्यक्तमेवेति भावः । **प्रदीपवदिति** । अनेन स्पष्टज्ञानजनकत्वं विवक्षितम् । तथा च न [3]सन्देहाज्ञान[4]विपर्यासजनकतया वेदस्याप्रामाण्यमिति । नन्वाधुनिकपुरुषपाणिगतवराटकसंख्याद्यप्रतिपादकतया कथं सर्वावद्योतकत्वं इत्यत आह—**सर्वज्ञकल्पस्येति** । ईषदूनस्सर्वज्ञः सर्वज्ञकल्पः । करणे कर्तृत्वोपचारात् 'इगुपधज्ञाप्रीकिरः कः' [पा सू. ३-१-१३५] इति कप्रत्ययो द्रष्टव्यः । **सर्वज्ञकल्पस्य योनिः** इत्यनेन च, शास्त्रस्य योनिः–शास्त्रयोनिः तस्य भावः तस्मात् इति सूत्रे विग्रहो दर्शितः । **सर्वज्ञगुणान्वितस्येति** । सर्वज्ञस्य कर्तुः सर्वविषयकज्ञानजननानुकूला कर्तृकारकशक्तिर्गुणः, वेदे तु तादृशज्ञानानुकूला करणकारकशक्तिः । तयोश्च

---

1. मु चतुर्दशेति.
2. मु. निरूपणद्वारा
3. आ. सन्देहज्ञान
4. **अज्ञानेति** अज्ञानजनकत्वम्—अबोधकत्वम् ।

**यद्यद्विस्तरार्थं शास्त्रं यस्मात् पुरुषविशेषात् संभवति, यथा व्याकरणादि पाणिन्यादेः ज्ञेयैकदेशार्थमपि, स ततोऽप्यधिकतरविज्ञान इति प्रसिद्धं लोके।**

शक्त्योः सर्वविषयकज्ञानजननानुकूलशक्तित्वेन सादृश्यात् सर्वज्ञशक्तिरूपगुणसदृशगुणान्वितस्येत्यर्थो द्रष्टव्यः।

अत्रायं प्रयोगः—वेदकर्तृत्वेन निश्वसितश्रुतिप्रतिपादित ईश्वरः वेदानधीन [1]वेदार्थतदधिकार्थगोचरज्ञानवान्, उपाध्यायान्तरमनपेक्ष्य कृत्स्नवेदकर्तृत्वात्। मन्वादीनामपि वेदार्थतदधिकवर्णावलीविशेषादिरूपार्थज्ञानं वर्तते। परं तु तत् वेदाधीनम्। ईश्वरज्ञानस्य तद्वैलक्षण्यद्योतनाय वेदानधीनेत्युक्तम्। ततश्च, यस्य वेदं विना वेदार्थतदधिकार्थगोचरं ज्ञानं तस्य आधुनिकपुरुषविशेषपाणिगतवराटकसङ्ख्याज्ञानमपि कैमुतिकन्यायेन सिध्यतीत्यभिप्रेत्य भाष्ये 'न हि सर्वज्ञादन्यतस्सम्भवोऽस्ति' इत्युक्तम्।

वेदं विना उक्तरूपज्ञानसिद्धावपि सर्वज्ञत्वं कथं सिध्यतीति चेत्, उच्यते—परमेश्वरस्य वेदकर्तृत्वेन निरुक्तसाध्यपर्यवसानं उपायान्तराभावात् [2]स्वशक्तिमादाय पर्यवस्यतीति वक्तव्यम्। ततश्च यस्य शक्तिर्वेदार्थतदधिकार्थज्ञानजननक्षमा तस्य इतरविषयमपि ज्ञानमस्तीत्यत्र को विवादः। न च 'सर्वज्ञः' इत्येव कुतस्साध्यनिर्देशो न क्रियत इति वाच्यम्। वक्ष्यमाणव्याप्तेस्तत्र सामर्थ्याभावात्। आधुनिकोपाध्यायस्य वेदार्थज्ञानविधुरस्यापि वेदकर्तृत्वमस्तीति तद्व्यावृत्त्यर्थं कृत्स्नवेदकर्तृत्वम्। तदपि मन्वादिषु विद्यत इति तद्व्यावृत्त्यर्थम् उपाध्यायान्तरमनपेक्ष्येति। मन्वादीनां त्वीश्वर एव उपाध्यायः। यद्यप्युपाध्यायान्तरानपेक्षत्वेनैव आधुनिकोपाध्यायव्यावृत्तिर्लभ्यते, तथापि घुणाक्षरन्यायेन वेदसमानानुपूर्वीकं स्वत एव यदि कश्चिद्रचयेत् तद्व्यावृत्त्यर्थं कृत्स्नेत्यपि विशेषणमावश्यकम्।

अत्र सामान्यव्याप्तिमाह—**यद्यद्विस्तरार्थमिति**। अत्र 'यो विवक्षापूर्वकं यद्वाक्यं रचयति स तदर्थतदधिकार्थज्ञानवान्' इति व्याप्तिर्विवक्षिता। यथा व्याकरणादिकर्ता पाणिन्यादिरिति दृष्टान्तः। **ज्ञेयैकदेशार्थमपीति** व्याकरणविशेषणम्।

---

1. मु. वेदार्थाधिक
2. **स्वशक्तिमिति** परमेश्वरस्य शक्तिः ज्ञानपरिणामिनी माया, चैतन्यरूपा वा।

तच्च, वेदैकदेशार्थपरिष्कारोपयोगिव्याकरणकर्तुरपि पाणिनेः लोके सर्वज्ञत्वप्रसिद्धिरस्ति ततस्सकलवेदकर्तुरीश्वरस्य सर्वज्ञत्वे का शङ्का इति द्योतनाय। व्याप्तौ च विवक्षां विना वाक्यरचयितुश्शुकादेः न वाक्यार्थज्ञानमस्तीति व्यभिचारव्यावृत्तये विवक्षापूर्वकत्वं विशेषणम्। तच्च भाष्ये पुरुषविशेषपदेन सूचितम्। अस्याश्च सामान्यव्याप्तेः पक्षे पर्यवसाने सति वेदस्यापि विवक्षापूर्वकं रचितत्वं लभ्यते। ततश्च— 'अस्त्वीश्वरस्य कृत्स्नवेदकर्तृत्वम्, तावता वेदरचने उपयुक्तं वर्णावलीज्ञानमेवेश्वरस्य सिध्येत्, न तु तदर्थज्ञानमपि' इति शङ्का-निरस्ता। अर्थज्ञानं विना अस्माच्छब्दादयमर्थावगमोऽस्त्विवतिविवक्षाया असम्भवात्।

न च अर्थज्ञानपूर्वकं विवक्षापूर्वकं च वेदकर्तृत्वाभ्युपगमे वेदस्य सापेक्षत्वमिति वाच्यम्। वेदस्य विवक्षापूर्वकमीश्वरः कर्तेति, निश्वसितश्रुत्या 'तदेव ब्रह्म परमं कवीनाम्' [म. ना. उ. १-६] इति श्रुत्या चावगन्तव्यम्, न तु प्रकारान्तरेण। ततश्च योग्यवाक्यत्वेन निर्दोषत्वेन च प्रागेव प्रामाण्यमवधारणीयम्। अतोऽनेन वाक्येन स्वोपजीव्यतयाप्रागेवावधृतप्रामाण्याविघातेनैव कर्ता प्रतिपादनीय इति तत्प्रतिपाद्यः परमेश्वरो निर्दोष एव सिध्यतीति तत्प्रमासापेक्षत्वेऽपि न अप्रामाण्यापादकसापेक्षत्वप्रसङ्गः। [1]परं त्वीश्वरस्य निर्दुष्टतयापरमाप्तत्वनिर्णयात् प्रागेव वेदप्रामाण्यनिर्णयस्यावश्यकतया न तदर्थमीश्वरज्ञानप्रामाण्यनिर्णयोऽपेक्षित इति वस्तुस्थितिः। ततश्च विवक्षोपयोगितया वेदार्थज्ञानमीश्वरस्य सिध्यतीति प्रकृतसाध्यसिद्धौ न कोऽपि विवादः।

ननु—यदि वेदार्थज्ञानमीश्वरस्य स्वीक्रियते, तदा 'स प्रजापतिरात्मनो वपामुदखिदत्' [तै. सं. २ - १ - १] 'स्तेनंमनोऽनृतवादिनीवाक्' 'शृणोत ग्रावाणः' [तै. सं. १-३-१३] इत्यादिमन्त्रार्थवादप्रतिपाद्यासदर्थगोचरमपि तस्मिन् ज्ञानं प्राप्नुयात्। ततश्च कथं निर्दुष्टतयेश्वरसिद्धिः। असदर्थावगाहिज्ञानस्य दोषमूलत्वात्—इत्याशङ्क्योक्तं–**यद्यद्विस्तरार्थं शास्त्रमिति**। अत्र 'प्रथने वावशब्दे' [पा. सू. ३-३-३३] इति सूत्रेण वावुपसर्गे उपपदे अशब्दधर्मिके प्रथने गम्यमाने [2]स्तृधातोः घञ् भवतीति प्रतिपादकेन 'ऋदोरप्' [पा. सू. ३ - ३ - ५७] इति

---

1. आ. परमेश्वरस्य

2. मु. स्तृधातोस्तृधातोश्च

**किमु वक्तव्यं—अनेकशाखाभेदभिन्नस्य देवतिर्यङ्मनुष्यवर्णाश्रमादिप्रविभागहेतोः ऋग्वेदाद्याख्यस्य सर्वज्ञानाकरस्य अप्रयत्नेनैव लीलान्यायेन**

सूत्रापवादभूते घञि कृते विस्तार इति स्यात्, तन्माभूदिति अर्थशब्दस्य वस्तुसामान्यवाचकस्य धर्मरूपवस्तुविशेषे पर्यवसानं कृत्वा विस्तररूपोऽर्थो धर्मो यस्येति विगृह्य ऋदोरबिति सूत्रेण ऋकारान्तादुकारान्ताच्च अप्प्रत्ययो भवतीति प्रतिपादकेन अप्प्रत्ययमाश्रित्य [1]विस्तृतमित्यर्थकं [2]विस्तरार्थमिति [3]स्वीकर्तव्यम् । शास्त्रपदं हितसाधनताबोधकशब्दराशिपरम् । ततश्च हितसाधनं प्ररोचयितुं [4]शब्दप्रपञ्च एव स्तेनादिवाक्यम्, न तु [5]तत्र स्वार्थे तात्पर्यपर्यवसानमस्तीत्यभिप्रायः । न च प्ररोचनोपयोगिन्यसदर्थालम्बने [6]तात्पर्यपर्यवसानविधुरे ज्ञानेऽभ्युपगम्यमाने परमेश्वरस्य आप्तत्वं विहन्यते भ्रान्तत्वं वा प्राप्नोति । लोके हि औषधपानादिकं प्ररोचयितुं शिखावर्धनादिकमसदपि प्रतिपादयन्तो वृद्धाः परमाप्ता एव प्रमाणभूता एव च भवन्ति । तत् कस्य हेतोः । यथाकथञ्चित् बाल औषधं पिबत्विति तात्पर्यात् । एवं सर्वोऽपि जनः यथाऽधिकारं सन्मार्गे प्रवृत्तो भवत्विति असदर्थमाहरतोऽपीश्वरस्य परमाप्तत्वे प्रमाणत्वे च न काचिदनुपपत्तिः ।

**किमु वक्तव्यमिति** । अनेकेत्यादिविशेषणविशिष्टस्य ऋग्वेदाद्याख्यस्य अस्येत्यादिश्रुतेः यस्मात् सम्भवः तस्य सर्वज्ञत्वादिकं किमुवक्तव्यमित्यन्वयः ।

---

1. **विस्तृतमित्यर्थकमिति** तथा च विस्तरार्थमित्यत्र विस्तरशब्दः शब्दप्रपञ्चार्थक इति भावः ।

2. मु. विस्तरमिति

3. **स्वीकर्तव्यमिति** पदं इत्यादिः ।

4. **शब्दप्रपञ्च एवेति**—एवञ्च ऋग्वेदादिरूपे शास्त्रे अर्थवादादिबहुले शब्दमात्रस्यैव प्रपञ्चो नार्थस्येति विस्तरार्थविशेषणेन ज्ञापनात् वेदस्य ब्रह्मज्ञानस्य च तुल्यविषयत्वभ्रान्तिर्निवर्तिता भवति, तेन वेदार्थाधिकविषयज्ञानवत्त्वं अबाधितं सिद्ध्यतीति भावः ।

5. आ. तत्तत्स्वार्थे

6. **तात्पर्यपर्यवसानविधुरे ज्ञाने इति** अयं भावः—ईश्वरस्य वैदिकासदर्थोपाख्यानाद्यर्थविषयज्ञानवत्त्वेऽपि तस्य ज्ञानस्य प्रमित्युपयोग्याहार्यज्ञानत्वात् न तेन

पुरुषनिःश्वासवत् यस्मान्महतोभूताद्योनेः संभवः, 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' (बृ. उ. ४-४-१२) इत्यादिश्रुतेः, तस्य महतो भूतस्य निरतिशयं सर्वज्ञत्वं सर्वशक्तिमत्त्वं च—इति ।

अथवा, यथोक्तमृग्वेदादिशास्त्रं योनिः-कारणं-प्रमाणं अस्य ब्रह्मणो यथावत् स्वरूपाधिगमे । शास्त्रादेव प्रमाणात् जगतो जन्मादिकारणं ब्रह्म अधिगम्यते-इत्यभिप्रायः । शास्त्रमुदाहृतं पूर्वसूत्रे 'यतो वा इमानि भूतानि जायन्ते' इत्यादि । किमर्थं तर्हीदं सूत्रं, यावता पूर्वसूत्र[एव](णैव) एवंजातीयकं शास्त्रमुदाहरता शास्त्रयोनित्वं ब्रह्मणो दर्शितम् । उच्यते—तत्र सूत्राक्षरेण स्पष्टं शास्त्रस्यानुपादानात् जन्मादि केवलमनुमानमुपन्यस्तं इत्याशङ्क्येत, तामाशङ्कां निवर्तयितुमिदं सूत्रं प्रववृते शास्त्रयोनित्वादिति ॥ ३ ॥

'अयं च लोकः परश्च लोकः' इत्यादिवाक्यपर्यालोचनलभ्यार्थकथनं सर्वशक्तिमत्त्वं चेति । अत्र शास्त्रयोनित्वादितिहेतुसमर्थनोपयोग्यधिकरणे, पूर्वपक्षे वेदस्येश्वरकृतत्वानभ्युपगमात् न कृत्स्नप्रपञ्चकारणत्वमीश्वरस्य, सिद्धान्ते तु तदङ्गीकारात् कृत्स्नप्रपञ्चकारणत्वं निर्व्यूढमिति ।

एवं शास्त्रकर्ता ईश्वर इत्यभिप्रायं सूत्रं व्याख्याय, शास्त्रैकगम्य ईश्वर इत्यभिप्रायेण सूत्रं व्याचष्टे—अथवेति । अत्र 'तं त्वौपनिषदं पुरुषं पृच्छामि' [बृ. उ. ३-९-२६] 'नावेदविन्मनुते तं बृहन्तं' [शाट्या. उ. ४ काठ. ३-९] इत्यादिशास्त्रं विषयः । तत् किं वेदैकगम्यत्वमीश्वरस्य प्रतिपादयति उत नेति संशयः । एवं च सति यदि वेदैकगम्यो न भवेदीश्वरः प्रमाणान्तरगम्यत्वादिति, तदा प्रमाणान्तरगम्ये वेदस्य तात्पर्याभावात् तद्विचारो न कर्तव्य इति पूर्वपक्षे फलम् । सिद्धान्ते तु तद्वैपरीत्यम् ।

---

भ्रान्तिमत्त्वप्रसक्तिः । न ह्यभावप्रमित्युपयोग्यधिकरणगोचरप्रतियोगितदवच्छेदकारोपवन्तः पुरुषाः धर्मार्थप्रमित्युपयोगिकपोताख्यायिकाहंसकाकोपाख्यानादिरचनामूलारोपवन्तो वाल्मीकिकृष्णद्वैपायनादयो भ्रान्ता इति व्यपदिश्यन्ते । किञ्च, यत् सत्तानिश्चयरूपं न भवति न.तेनान्यत्रान्यवैशिष्ट्यावगाहिनाऽपि भ्रान्त इति व्यपदिश्यते । न हि शुक्तौ रजतत्ववैशिष्ट्यज्ञानवानिव 'अस्य पुरोवर्तिनि रजतत्ववैशिष्ट्यावगाहिज्ञानं अप्रमाणं' इति तदीयभ्रान्तिविषयतया पुरोवर्तिनि रजतत्ववैशिष्ट्यं गृह्णन् भ्रान्तिज्ञोऽपि भ्रान्त उच्यते—इति ।

४ समन्वयाधिकरणम्

**कथं पुनर्ब्रह्मणः शास्त्रप्रमाणकत्वमुच्यते, यावता 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' (जै. सू. १-२-१) इति क्रियापरत्वं**

तत्र 'जगज्जन्मादिकारणं सर्वज्ञं सर्वशक्तिसमन्वितं परं ब्रह्म परमार्थगत्या त्रिविधपरिच्छेदशून्यं सत्यज्ञानानन्दात्मकं प्रत्यगभिन्नम्' इति प्रतिपादनार्थं शास्त्रं नापेक्षितम्। जगज्जन्मादिकारणत्वस्य अनुमानेन सिद्धत्वात्, तेनैव [1]लाघवानुगृहीतेन सर्वज्ञत्वादेरपि सिद्धत्वात्, भेदप्रपञ्चस्य च दृश्यत्वहेतुना मिथ्यात्वसिद्धेः, भेदमात्र-मिथ्यात्वे च जीवब्रह्मणोरैक्यस्यापि सिद्धतया, प्रत्यगभिन्नब्रह्मणश्च 'अहमस्मि सदा भामि कदाचिन्नाहमप्रियः' इति सत्यादिरूपतायाः प्रत्यक्षसिद्धतया, न शास्त्रेण किञ्चित्कृत्यमिति तंत्वौपनिषदमित्यादिवाक्यं यथाकथञ्चिन्नेयमिति पूर्वः पक्षः।

सर्वज्ञेश्वरसिद्धिरनुमानाद्यथा न भवति तथा प्रागेवोक्तम्। न च दृश्यत्वहेतु-मात्रेण मूलभूतश्रुतिरूपप्रमाणाभावे भेदमिथ्यात्वं प्रत्यक्षादिप्रमाणविरोधनिरासपूर्वकं निरूपयितुं शक्यम्। अतो मूलभूतं श्रुतिप्रमाणमेव परमात्मस्वरूपनिरूपणोपयोगि। उक्तानुमानं तस्मिन् मूलभूतप्रमाणे विद्यमाने तमर्थं सम्भावयत् तत्रोपयुज्यते। एतच्च सर्वमत्रवक्तव्यमेव नन्विहापीत्यादिभाष्येण [2]प्रागुपपादितम्। ततश्चायं सूत्रार्थः—ब्रह्म शास्त्रप्रमाणकम्, शास्त्रैकगम्यत्वात्—इति ॥ ३ ॥

**इति शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥**

'सदेव सोम्येदमग्र आसीत्' [छा. उ. ६-२-१] इत्येवमादीनि वेदान्त-वाक्यानि पूर्वाधिकरणे ब्रह्मप्रमाणतया व्यवस्थापितानि प्राधान्येन ब्रह्म प्रतिपादयन्ति किं वा अन्यशेषतयेति, प्राधान्येन प्रतिपादने फलनिरपेक्षत्वयोस्सदसद्भावाभ्यां संशये, पूर्वः पक्षः—न स्वातन्त्र्येण ब्रह्म प्रतिपादयन्ति, अपि तु अन्यशेषतया—इति। ब्रह्मणोऽक्रियारूपस्य प्रतिपादने वेदान्तानां फलं न लभ्यते इत्यमुमर्थं जैमिनीय-सूत्रोदाहरणपूर्वकं दर्शयति—**कथंपुनरिति**।

**आम्नायस्येति**। आम्नायस्यक्रियार्थत्वादितिसूत्रे, यो भागः साक्षात् क्रियां न प्रतिपादयति मन्त्रार्थवादादिरूपः तमुदाहृत्य विचारितं—किमयं स्वार्थपरः उत

---

1. मु. लाघवाद्यनु॰

2. **प्राक्**—जन्माद्यधिकरणे।

**शास्त्रस्य प्रदर्शितम् । अतो वेदान्तानामानर्थक्यं, अक्रियार्थत्वात् । कर्तृ-देवतादिप्रकाशनार्थत्वेन वा क्रियाविधिशेषत्वं, उपासनादिक्रियान्तरविधानार्थत्वं वा । न हि परिनिष्ठितवस्तुस्वरूपप्रतिपादनं संभवति, प्रत्यक्षादिविषयत्वात्परिनिष्ठितवस्तुनः । तत्प्रतिपादने च हेयोपादेयरहिते पुरुषार्थाभावात् ।**

नेति । तत्र पूर्वः पक्षः—स्वार्थपर एवेति । न च—तत्प्रतिपादने प्रयोजनं न लभ्यते । क्वचिच्च 'अग्निर्हिमस्य भेषजं' इत्यादौ प्रमाणान्तरसिद्धार्थता, 'स्तेनं मनोऽनृतवादिनी वाक्' इत्यादौ च [1]प्रमाणान्तरविरुद्धार्थता प्रतीयते । तत् कथं तत्परत्वमिति—वाच्यम् । न ह्येतावता प्रतीयमानोऽर्थः परित्यक्तुं शक्यते । निष्फलत्वादिकं प्राप्नोतीति चेत् तदप्यस्तु । न हि 'यथा निष्फलत्वादिकं न प्रसज्यते तथा कृत्स्नोऽपि वेदो व्याख्येयः' इत्यत्र निर्बन्धे किञ्चिन्नियामकमस्ति । तस्मादर्थवादादयो यथाश्रुतार्था एवेति [2]पूर्वपक्षप्रतिपादकं आम्नायस्येतिसूत्रम् । तथा चायमर्थः—वेदस्य क्रियाप्रयोजनकत्वात् तस्य च प्रयोजनस्य यजेतेतिविधिवाक्येष्वेव सम्भवात् क्रियारूपप्रयोजनरहितानां आनर्थक्यम्, प्रयोजनान्तरस्यासम्भवात् । अतोऽर्थवादादिकं अनित्यं–लौकिकवाक्यसदृशमिति ।

सिद्धान्तस्तु—भवेदेतदेवम्, यदि 'प्रयोजनवदबाधितानधिगतार्थत्वमेव वेदस्य' इत्यत्र किञ्चिन्नियामकं न भवेत्, अस्ति तु नियामकम् । स्वाध्यायस्य हि उत्सर्गतः प्राप्तप्रामाण्यसंरक्षणे सम्भवति न तत्परित्यागो न्याय्यः । 'अध्येतव्यः' इत्यध्ययनविधिश्च प्रयोजनवदर्थपरतां स्वाध्यायस्य बोधयति । तच्च प्रयोजनं प्रवृत्तिनिवृत्तिप्रतिपादकयोर्विधिप्रतिषेधयोः इष्टप्राप्तिरनिष्टनिवृत्तिश्च अर्थान्तरलक्षकतां

---

1. **प्रमाणान्तरविरुद्धार्थतेति** मनसः परद्रव्यापहरणरूपं स्तेयं बाधितम् । अनृतमेव वदति न तु सत्यं इति अनृतवादिनी, ताच्छीलिको णिनिः । वाचश्चेदं अनृतवदनैकस्वभावत्वं बाधितम्, सत्यवदनस्यापि दर्शनात् इति भावः ।

2. **पूर्वपक्षप्रतिपादकं आम्नायस्येति सूत्रमिति** जैमिनीये इदं पूर्वपक्षसूत्रमपि सत् पूर्वपक्ष्युक्तं अक्रियार्थानामानर्थक्यमङ्गीकृत्यैव अर्थवादानां विध्येकवाक्यतया प्रामाण्याद्युपपादनात् प्रकृताधिकरणपूर्वपक्षिणां जैमिनीयानामेव अनुकूलम् । सिद्धान्तिनस्तु दूष्यम् । दूष्यसूत्रोपन्यासस्तु सिद्धान्तिनः तस्मिन्नर्थे विश्वासार्हता न भवतीत्येवमर्थः ।

विनैव लभ्यते, अर्थवादादीनां तु विधिनिषेधोपयुक्तार्थलक्षकतां विना न लभ्यत इति तत्समभिव्याहृतानां अर्थवादादीनां तदुपयुक्तस्तुत्यादिलक्षकतामुपेत्य प्रयोजनवत्त्वं प्रामाण्यं च समर्थनीयम्—इति । तथा च सूत्रं 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः' इति । विधिग्रहणं निषेधस्याप्युपलक्षणम् । स्तुतिपदं निन्दाया अप्युपलक्षणम् । ततश्च विधिनिषेधयोः (तावत्) प्ररोचनाद्वेषयोरभावे प्रवृत्तिनिवृत्तिसम्पादकत्वासम्भवात् प्ररोचनाद्वेषापेक्षयोः, अर्थवादानां च प्रयोजनसाकाङ्क्षाणां स्तुतिनिन्दा[1]लक्षणया प्ररोचनाद्वेषसम्पादकत्वसम्भवात्, अवगतैकवाक्यतानिर्वाहार्थं यथायथं स्तुतिनिन्दालक्षणां प्राप्ता अर्थवादाः प्रमाणं स्युः—इति सूत्रार्थः ।

एवं—मन्त्राणामपि अध्ययनविधिपरिगृहीतानां प्रयोजनमपेक्षमाणानां प्रकरणादिना कर्मसु विनियोगेन कर्मोपकारकत्वेऽवगते, किं दृष्टविधया कर्मोपकारकत्वं उतादृष्टविधयेति सन्दिह्य 'येनाप्यनुष्ठेयार्थप्रकाशनं दृष्टप्रयोजनमुच्यते तेनापि, उपायान्तरेण उपदेष्ट्रादिवचनेन सम्भवदप्यनुष्ठेयार्थप्रकाशनं मन्त्रनियमबलात् व्यावर्त्य नियमांशे अदृष्टं स्वीकर्तव्यम् । ततश्चावश्यकत्वाददृष्टकल्पनस्य किमनुष्ठेयार्थप्रकाशकत्वकल्पनाक्लेशेन । ततश्च प्रयाजादिवत् मन्त्रोच्चारणमप्यदृष्टार्थम्' इति पूर्वपक्षं कृत्वा, 'भवेदेवं यद्यनुष्ठेयार्थप्रकाशनं कल्प्यं स्यात् । न तु तथा । शक्त्या लक्षणया वा लोकत एव तस्य क्लृप्तत्वात् । एवं च यस्मिन्नंशे दृष्टं न सम्भवति तत्रैव—नियमांशे अदृष्टं कल्पनीयम्, न तु सर्वत्र[2] । तथा च मन्त्रविनियोगविधेर्लाघवं भवति, पाक्षिकाप्राप्त्यंशपरिपूरणमात्रफलकत्वात् । अदृष्टार्थत्वे तु अत्यन्ताप्राप्तप्रापकतया गौरवं स्यात् । तस्मात् इषेत्वेत्यादीनां [3]छिनद्मीत्यादिपदाध्याहारं कृत्वा अनुष्ठेयार्थप्रकाशकतया कर्मोपकारकत्वमास्थेयम्' इति सिद्धान्तितम् ।

ततश्च सिद्धवस्तुप्रतिपादकवेदभागस्य [4]क्रियापरशेषतया प्रयोजनवत्त्वं समर्थनीयम् ।

अपि च—सिद्धस्य वस्तुनः प्रमाणान्तरयोग्यतया सापेक्षत्वं प्रसज्यते, क्रियायाश्च धर्मत्वेन प्रमाणान्तरायोग्यत्वात् न तत्परत्वे सापेक्षत्वं प्रसज्यत इति,

---

1. मु. लक्षणप्ररो०
2. सर्वत्र—मन्त्रोच्चारणांशेऽपि ।
3. मु. छिनद्मीति पदा०
4. मु. क्रियापदशेषतया

**अत एव 'सोऽरोदीत्' इत्येवमादीनामानर्थक्यं मा भूदिति 'विधिना**

वेदान्तानां स्वार्थपरत्वे क्रियापरत्वासम्भवात् क्रियापरत्वसिद्ध्यर्थं क्रियाशेषभूतदेवतादिस्तावकत्वं स्वीकर्तव्यम्। यदि तु कर्मप्रतिपादकविधिभ्यो दूरपठिततया तत्समभिव्याहाराभावात् न कर्मस्तावकत्वमित्युच्येत, तदा वेदान्तपठितोपासनाविध्येकवाक्यतामुपेत्य उपास्यसमर्पकताऽस्तु। ततश्च—अन्यपरेभ्यो वेदान्तेभ्यो ब्रह्मसिद्धिर्देवताधिकरणन्यायेन[1] वक्तव्या, न च प्रमाणान्तरविरोधे तन्न्यायप्रवृत्तिरिति तत्त्वमस्यादिवाक्यानां प्रमाणान्तरविरुद्धार्थतया 'वाचं धेनुमुपासीत' [बृ. उ. ५.८] इतिवत् आरोपितजीवब्रह्माभेदमादायैवोपासनाविधिः पर्यवसितो भविष्यतीति—न [2]प्रत्यक्षादिबाधकत्वमपि वेदान्तानां भविष्यति।

**उपासनादिक्रियान्तरविधानार्थत्वंवेत्यन्तं** सङ्ग्रहवाक्यम्। **नहीत्यारभ्य** तद्विवरणम्। **परिनिष्ठितं**—क्रियानन्वितम्।

**सोऽरोदीदित्येवमादीनामिति।** 'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं यदश्रु अशीर्यत तद्रजतं हिरण्यमभवत्तस्माद्रजतं हिरण्यमदक्षिण्यमश्रुजं हि यो बर्हिषि ददाति पुराऽस्य संवत्सरात् गृहे रुदन्ति' [तै. सं. १-५-१] इति वाक्यं अश्रुप्रभवरजतस्य बर्हिषि[3]दाने संवत्सरात्पुरा गृहे रोदनं भवतीति प्रतिपादनद्वारा [4]रजतनिन्दायां

---

1. **देवताधिकरणन्यायेन**—प्रमाणान्तरप्राप्तिविरोधयोरसतोः अन्यपराण्यपि वाक्यानि यथाश्रुतवाक्यार्थे प्रमाणानि भवन्ति—इति न्यायेन। देवताविग्रहादिसदसद्भावमधिकृत्य प्रवृत्तेऽधिकरणे सूत्रितत्वादस्य न्यायस्य देवताधिकरणन्यायत्वेन शास्त्रे व्यवहारः।

2. **प्रत्यक्षेति** जीवब्रह्मभेदघटपटादिस्वरूपतत्सत्यत्वादिग्राहकप्रत्यक्षेत्यर्थः। प्रत्यक्षादीत्यादिपदेन विरुद्धधर्माश्रयत्वार्थक्रियाकारित्वहेतुकानुमानं ग्राह्यम्।

3. मु. निधाने

4. **रजतनिन्दायां पर्यवस्यतीति** रजतनिन्दायां—रजतदाननिन्दायाम्। **निन्दा**—बलवदनिष्टजनकता। **पर्यवस्यति**—लाक्षणिको भवति। न च रजतदानस्य संवत्सरात्प्राग्रोदनरूपबलवदनिष्टजनकत्वस्य उक्तवाक्येनैव प्रतिपादनात् प्रतिपादनद्वारा निन्दायां पर्यवसानोक्तिः अयुक्तेति वाच्यम्। सत्यपि बर्हिषि रजतदाने संवत्सरात् प्राक् रोदनस्य क्वचित्क्वचिददर्शनेन उक्तवाक्यस्य पारलौकिकबलवदनिष्टजनकतालक्षकतायाः अवश्याश्रयणीयत्वात्—इति भावः।

**त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः' (जै. सू. १-२-७) इति स्तावकत्वेनार्थवत्त्वमुक्तम्। मन्त्राणां च 'इषे त्वा' इत्यादीनां क्रियातत्साधनाभिधायित्वेन कर्मसमवायित्वमुक्तम्। न क्वचिदपि वेदवाक्यानां विधिसंस्पर्शमन्तरेणार्थवत्ता दृष्टा उपपन्ना वा। न च परिनिष्ठिते वस्तुस्वरूपे विधिः संभवति, क्रियाविषयत्वाद्विधेः। तस्मात् कर्मापेक्षितकर्तृदेवतादिस्वरूपप्रकाशनेन क्रियाविधिशेषत्वं वेदान्तानाम्। अथ प्रकरणान्तरभयात् नैतदभ्युपगम्यते, तथाऽपि स्ववाक्यगतोपासनादिकर्मपरत्वम्।**

पर्यवस्यति। तच्च बर्हिषिरजतंनदेयमितिनिषेधशेषभूतम्। आदिपदेन'वायुर्वै क्षेपिष्ठा देवता' इत्यादिवाक्यं संगृह्यते। **स्तावकत्वेनेति**। निन्दकत्वेनेत्यपि द्रष्टव्यम्।

ननु—यदि विधिपरत्वमेव वाक्यस्य वक्तव्यमिति निर्बन्धः तदा वेदान्तानां [1]यथाश्रुतार्थत्वेऽपि न काचिदनुपपत्तिः, सिद्धेऽपि ब्रह्मणि [2]उत्पत्तिविधिसम्भवात्, अज्ञातज्ञापनं हि उत्पत्तिविधिरित्युच्यते—इत्याशङ्क्याह—न चेति। **क्रियाविषयत्वादिति**। यथा हि प्रयोजनपर्यवसानं भविष्यति तथा वाक्यार्थो वर्णनीयः। न चाज्ञातस्य वस्तुनो ज्ञापने तस्य ज्ञानस्य प्रवृत्तिपर्यवसानाभावे प्रयोजनं लभ्यते। अतोऽज्ञातज्ञापनमपि क्रियाविषयमेव [3]स्वीकर्तव्यम्। यथा 'अग्निहोत्रं जुहुयात्' इति। तेन हि वाक्येन अग्निहोत्रनामिकायां होमरूपायां क्रियायां बोधितायां, तस्य होमस्य 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति वाक्येन स्वर्गसाधनतायां बोधितायां, तज्जन्यस्य स्वर्गस्य तत्कर्तृस्वर्गकामपुरुषसम्बन्धे बोधिते, 'सायं जुहोति' 'प्रातर्जुहोति' इतिवाक्याभ्यामनुष्ठानविशेषे बोधिते, तत्र पुरुषः प्रवर्तते। नैवं सिद्धब्रह्मबोधमात्रेण [4]प्रवृत्तिशेषतां विना पुरुषः प्रवर्तते। ततश्च चतूरूपस्य विधेः यस्मिन् विषये अवकाशः तत्रैव पुरुषः प्रवर्तते। स च क्रियायामेव। तत्र यद्यपि अग्निहोत्रंजुहुयादित्येवं[5] यथा अग्निहोत्रहोमेन स्वस्येष्टं भवति तथा होमे व्याप्रियेतेति

---

1. **यथाश्रुतार्थत्वेऽपीति** अक्रियार्थत्वेऽपीत्यर्थः।
2. मु. उत्पत्यादिविधि०
3. **स्वीकर्तव्यमिति** उत्पत्तिविधिरिति इत्यादिः
4. **प्रवृत्तिशेषतां**—प्रवृत्तिविषयक्रियाशेषताम्
5. **इत्येवमिति** इत्येवंरूपेणेत्यर्थः। 'एकेनैव वाक्येन' इत्यनेन सम्बद्ध्यते।

**तस्मात् न ब्रह्मणः शास्त्रयोनित्वमिति प्राप्ते, उच्यते—**

## तत्तु समन्वयात् ॥ ४ ॥

**तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । तत्–ब्रह्म सर्वज्ञं सर्वशक्ति जगदुत्पत्ति-**

एकेनैव वाक्येन उत्पत्तिविनियोगाधिकार[1]प्रयोगरूपाश्चत्वारोऽपि प्रकारा लभ्यन्ते । **उत्पत्तिः** अज्ञातज्ञप्तिः । [2]फलसाधनताबोधनं **विनियोगः** । फलस्य कर्तृसम्बन्ध-[3]बोधनं **अधिकारः** । तच्च आत्मनेपदेन क्वचित्, सर्वत्र च विधिबलात् । न हि तज्जन्यफलस्य स्वेन सम्बन्धाभावे [4]तत् पुरुषः करोति । अतो विधिना स्वस्य प्रवर्तकतानिर्वाहार्थं तत्[5] आक्षिप्यते । अनुष्ठेयताबोधनं **प्रयोगः** । तथापि—तत्त-द्विशेषबोधनार्थं वाक्यान्तराणामावश्यकतया तेभ्य एव विनियोगादिलाभे अग्निहोत्रं जुहुयादितिवाक्यं उत्पत्तिविधिरित्युच्यते । प्रयोगाद्यंशे वाक्यान्तरप्राप्तार्थानुवादक-त्वात् तत्र तात्पर्याभावेन न विनियोगादिविधित्वेन व्यवह्रियते । अतोऽज्ञातज्ञापन-रूपस्यापि विधेः फलवत्प्रवृत्तिपर्यवसायिनः क्रियाविषयत्वमेव न सिद्धवस्तुविषय-त्वमिति भावः ।

तच्छब्दः सूत्रे प्रकृतब्रह्मपरामर्शार्थः । अधिकारादेव ब्रह्मलाभेऽपि, जन्मादि-सूत्रे यादृशं ब्रह्म निरूपितं तादृशे ब्रह्मणि प्रमाणोपन्यासपरः उत्तरसन्दर्भः इति प्रतिपादनार्थं पुनःपरामर्श इति द्योतयन् शास्त्रयोनि[6]पदं प्रथमान्ततया विपरिणमय्य तदनुषङ्गेण [7]द्वितीयव्याख्यानानुसारेण सूत्रं व्याचष्टे । **तुशब्द इत्यादिना** ।

---

1. मु. प्रयोगाश्चत्वा०

2. **फलसाधनतेति** क्रियायाः फलसाधनत्वस्येव अङ्गानां प्रधानशेषत्वस्य बोधनमपि विनियोग एव । स्थालीपुलाकन्यायेन तु एकोपादानम् ।

3. मु. बोधोऽधिकारः

4. **तत्**—फलसाधनम्

5. **तत्**—फलस्य कर्तृसंबन्धः ।

6. मु. योनित्वादितिपदं

7. **द्वितीयव्याख्यानानुसारेणेति** शास्त्रयोनिपदस्य इत्यादिः ।

**स्थितिलयकारणं वेदान्तशास्त्रादवगम्यते । कथम् ? समन्वयात् । सर्वेषु हि वेदान्तेषु वाक्यानि तात्पर्येण एतस्यार्थस्य प्रतिपादकत्वेन समनुगतानि ।**

पूर्वपक्षिणा क्रियाशेषतया ब्रह्म प्रतिपाद्यत इत्युक्तम्, तद्व्यावृत्त्यर्थस्तुशब्दः । तथा च यज्जगज्जन्मादिकारणं वस्तुतस्त्रिविधपरिच्छेदशून्यं सत्यादिरूपं ब्रह्म, तत् क्रियाशेषतां विनैव शास्त्रयोनि—वेदान्तादवगम्यते इति प्रतिज्ञा[1] लभ्यते ।

पूर्वपक्षोक्तयुक्तिं मनसि निधाय शङ्कते—**कथमिति** ।

समन्वयादिति सौत्रहेतुगतसंपदलभ्यार्थकथनपूर्वकं उक्तशङ्कां परिहरति—**समन्वयादिति** । संशब्दः तात्पर्यार्थकः । तात्पर्यं द्विविधम् । 'अस्माच्छब्दादेतदर्थबोधो भवतु' इति वक्तृविवक्षारूपं गुणप्रधानपदार्थसाधारणम् । अपरं तु तत्प्रतीत्युद्देश्यकत्वरूपं प्रधानपदार्थासाधारणम् । यथा कृत्स्नस्य दर्शपूर्णमासप्रकरणस्य 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इतिवाक्यप्रतिपाद्यायां भावनायाम् । तेन हि वाक्येन 'दर्शपूर्णमासनामकैर्यागैः यथा स्वर्गो भवति तथा व्याप्रियेत' इति प्रतिपादिते यागकरणकस्वर्गभाव्यकव्यापारस्य सामान्येन जातां प्रतीतिं, स्वकार्यभूतां प्रवृत्तिं जनयितुं भावनाविशेष[2]रूपमपेक्षमाणां, अन्यानि वाक्यानि भावनाविशेषरूपं समर्पयन्ति स्वजन्यावान्तरवाक्यार्थज्ञानद्वारा [3]उपकुर्वन्तीति यागकरणकभावनाप्रतीत्युद्देश्यकत्वं कृत्स्नस्य वाक्यस्येति । द्विविधे तात्पर्ये आद्यस्य तात्पर्यस्य [4]अन्वयादित्यनेनैव लाभे संशब्दो व्यर्थस्स्यादिति द्वितीयमेव तात्पर्यं संशब्देन विवक्षितम् । प्रतिपाद्यप्रतिपादकभावो हि वाक्यस्यार्थेनान्वयः । [5]यत्र न वक्तृविवक्षा न तत्र वाक्यस्य प्रतिपादकता । तथा च तत्प्रतीत्युद्देशेन [6]ब्रह्मप्रतिपादकत्वादिति हेतुभागार्थः ।

---

1. **इति प्रतिज्ञेति** आर्थिकीयं प्रतिज्ञा । वेदान्ताः उक्तरूपे ब्रह्मणि प्रमाणानि—इत्येव प्रतिज्ञास्वरूपम् । अत एव 'तत्प्रतीत्युद्देशेन ब्रह्मप्रतिपादकत्वात् इति हेतुभागार्थः' इति अनुपदं वक्ष्यमाणं सङ्गच्छते ।

2. मु. 'रूप' नास्ति ।

3. मु. तामुप

4. मु. अन्वयादित्येव

5. **यत्र**—यस्मिन् विषये

6. मु. 'ब्रह्म' नास्ति ।

**'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्'** (छा. उ. ६-२-१)

एतादृशतात्पर्यं कथं ब्रह्मणीत्याशङ्क्य 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥' इति अभियुक्तप्रसिद्धतात्पर्य-लिङ्गेषु, 'गतिसामान्यात्' [ब्र. सू. १-१-१०] इति सूत्रोक्तं नानाशाखास्वेकैनैव-रूपेणप्रतिपादनात्मकमभ्यासविशेषं दर्शयति—**सदेवेति ।**

नन्वत्र कथं सूत्रकृता 'समन्वयात्' इति सिद्धवत् परं प्रति हेतुरुपादी-यते । यदि तु वक्ष्यमाणैरीक्षत्याद्यधिकरणैः तत्तद्वाक्योदाहरणपूर्वकं तस्य साधयिष्य-माणत्वादित्यभिप्रायेण, तर्ह्युत्तराधिकरणेषु उपक्रमोपसंहारादिकमेव प्रतिपादनीयम् । तेषामेव प्रकृताधिकरणहेतूकृतसमन्वयसाधकत्वात् । न तु श्रुतिलिङ्गादिकम् । तेषां गुणप्रधानपदार्थसाधारणत्वात् । ननु उपक्रमोपसंहारादयोऽप्युच्यन्ते—'प्राणस्तथा-नुगमात्, वाक्यान्वयात्[1]' 'आनन्दमयोऽभ्यासात्[2]' 'कार्याख्यानादपूर्वम्[3]' 'तन्निष्ठस्य मोक्षोपदेशात्, अस्मिन्नस्य च तद्योगं शास्ति[4]' 'स्वाप्ययात्, तद्धेतुव्यपदेशाच्च[5]' 'ब्रह्मदृष्टिरुत्कर्षात्' [6]इत्यादिषु [7]उत्तरसूत्रेषु । तर्हि श्रुति-लिङ्गादीनां किमर्थमुपदेशः- इति चेत्—

उच्यते—यत्प्रतीत्युपयोगिश्रुतिलिङ्गादिकमादावन्ते च दृश्यते यस्मिन् पदनिकुरुम्बे तद्वाक्यं तदुपक्रमोपसंहारमुच्यते । एवं [8]श्रुत्यादीनां पौनःपुन्यं अभ्यासो नाम । ततश्चोपक्रमादेस्स्वरूपलाभोपयोगितया श्रुतिलिङ्गादिकमपेक्षितमेवेति तदपि सूत्रकृता निरूप्यते । न चैवमावश्यकत्वात् [9]श्रुत्यादिभिरेवोपपत्तौ [10]उपक्रमादिकं

---

1. अनयोः उपक्रमोपसंहारैकरूप्यं सूत्रितम् ।
2. अभ्यासोऽत्र सूत्रितः ।
3. अपूर्वत्वं अत्र सूत्रितम् ।
4. फलं अनयोः सूत्रितम् ।
5. अनयोः अर्थवादः सूत्रितः ।
6. उपपत्तिः अत्र सूत्रिता ।
7. मु. तत्तत्सूत्रेषु
8. **श्रुत्यादीनामिति** आदिशब्देन लिङ्गादिपरिग्रहः । लिङ्गाद्यनेकत्वमपि अभ्या-सत्वेन विवक्षित इति भावः ।
9. **श्रुत्यादिभिः**— श्रुत्यादिनिरूपणैः ।
10. **उपक्रमादिकं**—उपक्रमादिनिरूपणम् ।

किमर्थमिति वाच्यम् । अनेकार्थसमावेशे निर्णायकतया तदावश्यकत्वात् । तत्र उपक्रमोपसंहारैकरूप्यमेकं लिङ्गम् । तेन च–अनेकार्थगोचरश्रुतिलिङ्गादीनां एकस्मिन् [1]सन्दर्भे समाविष्टानां, अवगतैकवाक्यतानिर्वाहाय किमनुसारेण कस्य नयनं कर्तव्यं, इत्यपेक्षायां प्रबलानुसारेण दुर्बलस्य नयने स्थिते, यद्विषये उपक्रमोपसंहारैकरूप्यं लिङ्गं दृश्यते तत् प्रबलमिति–निर्धार्यते । एवमभ्यासादिष्वपि द्रष्टव्यम् । न चैवं श्रुतिलिङ्गादीनामुपक्रमोपसंहारादीनां च परस्परापेक्षतया किमपि न सिध्येदिति वाच्यम् । उपक्रमादिभिर्हि स्वरूपलाभार्थं श्रुत्यादिकमपेक्षितं श्रुत्यादिभिस्तु प्राबल्य-निर्णयार्थं उपक्रमादिकमपेक्षितमिति द्वारभेदात् न अन्योन्याश्रयो दोषावहः । दृश्यते ह्युत्पत्तिप्रतीतिरूपद्वारभेदेन [2]परस्परापेक्षत्व वह्निधूमयोः ।

ननु प्रकरणमहावाक्याभ्यां स्वरूपलाभार्थमेवोपक्रमादिकमपेक्षितम् । प्रकरणं नाम प्रधानाकांक्षा । एकार्थप्रधानकोऽनेकावान्तरवाक्यनिचयः साकांक्षो महावाक्य-मित्युच्यते । तत्र च प्राधान्यं उद्देश्यप्रतीतिविषयतारूपं वक्तृतात्पर्यनिर्णायकैरुप-क्रमादिभिरवगन्तव्यम् । लोके योऽर्थ उद्दिष्टो भवति तमेव आदावन्ते मध्ये च पुनः पुनः परामृशति । अतः प्राधान्यनिर्णयाधीनत्वात्प्रकरणमहावाक्यनिर्णयस्य कथं तेन [3]उपक्रमादिसमुन्मेष इति चेत्–

सत्यम् । अत एव श्रुतिलिङ्गावान्तरवाक्यानामेवोपक्रमादिसमुन्मेषकता कल्प्यते ।

एवमपूर्वत्वादीनामपि तात्पर्यनिर्णायकत्वम् । एतच्च सर्वं उत्तरेष्वधिकरणेषु स्पष्टीभविष्यति ।

[4]नन्वेवमपि सद्विद्यायाः सदेवसोम्येदमितिप्रतीकेन भाष्योदाहृतायाः कथं

---

1. **सन्दर्भे समाविष्टानां**—पदसमुदाये दृष्टानाम् ।

2. **परस्परापेक्षत्वं वन्हिधूमयोरिति** धूमस्योत्पत्तौ वन्ह्यपेक्षा, वन्हेः अनुमितौ धूमापेक्षा, ज्ञायमानधूमस्य वन्ह्यनुमापकत्वात्—इति भावः ।

3. **उपक्रमादिसमुन्मेषः** ' अयं एतद्विषयोपक्रमादिः ' इति निर्णयः ।

4. निर्विशेषब्रह्मापलापिनां सद्विद्यायाःसविशेषपरत्वमुपपादयतां विशिष्टाद्वैतिनां मतं परिशीलयितुमारभते परिमलन्यायरक्षामणिशिवाद्वैतनिर्णयानुसारेण—**नन्वेवमपी-त्यादिना** ।

निर्विशेषे ब्रह्मणि तात्पर्यं निर्धारयितुं शक्यते। उपक्रमोपसंहारयोः ब्रह्मविषयत्वेन क्रियाप्राधान्याभावेऽपि सविशेषस्य जीवभिन्नस्यैव ब्रह्मणः प्रतिपादनावगमात्।

उपक्रमे हि 'उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं [छा. उ. ६-१-३] इति सविशेषमेव ब्रह्म प्रतिपाद्यते। आदेशशब्दो हि शासितृपरः। आङ्पूर्वस्य दिशेः शासनार्थत्वात्। शासनं च जगन्नियमनानुकूलो व्यापारविशेषः आज्ञादिरूपः।

एकविज्ञानेन सर्वविज्ञानं च यद्यपि कार्यस्वरूपविशेषाकारमादाय न शक्यते वक्तुम्, ज्ञातेऽपि ब्रह्मणि कार्यं विशेषाकारेण हि न ज्ञायते। तथाऽपि 'तत्तदवस्था-विशेषविशिष्टं कारणस्वरूपमेव कार्यम्' इत्यारम्भणाधिकरणे निरूपयिष्यमाणं [1]कार्य-कारणानन्यत्वं स्वीकृत्य 'ब्रह्मणि विदिते उपादानतया कार्यानुप्रविष्टो ब्रह्माकारो ज्ञात एव' इत्येतदभिप्रायं सत् ब्रह्मण [2]उपादानताद्योतकमिति स्वीकर्तव्यम्। ब्रह्मणश्च उपादानत्वं यद्यपि विवर्तमाश्रित्य वक्तुं शक्यते, तथाऽपि 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' [छा. उ. ६-१-४] इति दृष्टान्ते परिणाम्युपादानस्य प्रतिपादनात् [3]परिणामितया ब्रह्म विवक्षितम्।

अतः सप्रपञ्चमेव उपादानभूतं निमित्तकारणं च ब्रह्म अवगम्यते।

तथा 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' [छा. उ. ६-२-१] इत्यत्रापि, इदंशब्देन [4]जगदुपादानात् तस्य सदेवेत्यनेन सृष्टेःप्रागपि सत्यत्वा-वधारणात्, अग्र इति कालस्य च तस्यां दशायां सत्ताप्रतिपादनात्, तदनन्तरं तदैक्षतेति वाक्येन सृष्ट्यनुकूलज्ञानसङ्कल्पकृतीनां प्रतिपादनात्, सविशेषपर एवोप-क्रमोऽवधार्यते।

---

1. **कार्यकारणानन्यत्वं**—कार्यस्य कारणाभेदं, न तु कारणव्यतिरेकेण कार्यस्य दुर्निरूपत्वम्। इत्थमेव विशिष्टाद्वैतिभिः तदनन्यत्वाधिकरणे स्वीयभाष्ये निरूपितम्।

2. मु. उपादानतापरमिति

3. **परिणामितयेति** स्वसमसत्ताककार्योपादनतयेत्यर्थः। 'मृत्तिकेत्येव सत्यम' इति श्रुतिः न कार्यानृतत्वपरा 'घटो मृत्तिका' इत्येव सत्यं—प्रामाणिकं, मृद्घटयोः द्रव्यैक्यं, न तु तार्किकाणामिव भिन्नद्रव्यत्वम्—इत्यर्थपरा—इति भावः।

4. **जगदुपादानात्**—जगतो बोधनात्।

मध्ये च 'सन्मूलास्सोम्येमास्सर्वाः प्रजाः सदायतनास्सत्प्रतिष्ठाः' [छा. उ. ६-८-६] इति प्रजाशब्दोदितानां जीवानां सच्छब्दोदितात् ब्रह्मणो [1]मूलमूलिभावादिना भेदप्रतिपादनमुपलभ्यते ।

'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' [छा. उ. ६-८-७] इति उपसंहारे च इदंशब्दोदितं तच्छब्देन परामृश्य तत्सत्यमिति सर्वस्य प्रपञ्चस्य सत्यत्वावधारणात्, सम्बोध्यसंबोधकभावेन श्वेतकेतूद्दालकयोर्भेदप्रतिपादनेन जीवनानात्वावगमाच्च, सप्रपञ्चतैवावगम्यते ।

अतः सद्विद्याया उपक्रमोपसंहारपर्यालोचनया परमार्थतस्सप्रपञ्चब्रह्मप्रतिपादनपरत्वावगमात् तदनुसारेण तत्त्वमसीति वाक्यमपि जीवब्रह्मभेदाविरोधेनैव व्याख्येयम् ।

[2]तथा हि—'अनृक्षरा ऋजवस्सन्तु पन्थाः' इति यथा बहुवचनस्य [3]स्वादेशः, यथा वा 'उत यत् सुन्वन्ति सामिधेनीस्तदन्वाह' इति यत्तद्भ्यां सप्तम्या लुक् भवति 'सुपां सुलुक्' [पा. सू. ७-१-३९] इति सूत्रेण, यथा वा 'गायत्रीं छन्दसां माता' इत्यत्र विभक्तिव्यत्ययेन [4]प्रथमार्थे द्वितीया, तथा तत्त्वमसीत्यत्रापि चतुर्थ्याः स्वादेशादीनामन्यतमं स्वीकृत्य तस्मै त्वमर्पणीयोऽसि[5] इत्यर्थः स्वीकार्यः, 'ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत' [म. ना. उ. २४-२] इति श्रुतेः ।

---

1. मु. मूलमूलिभावादीनामेव प्रति०

2. प्रथमसूत्रार्थनिरूपणावसाने विचारात् प्राक्तनायाः तत्त्वमसिवाक्यजन्यप्रतीतेः आपातप्रसिद्धिरूपत्वोपपादनावसरे परिमले वर्णितमर्थं अत्र योजयन् पूर्वपक्षमुत्तम्भयति- **तथाहीत्यादिना** ।

3. **स्वादेश इति** सुपांसुलुगितिसूत्रेणेत्यनेनान्वेति ।

4. **प्रथमार्थे द्वितीयेति** 'व्यत्ययो बहुलम्' इति सूत्रेणेति शेषः । यद्यपि विकरणाधिकारे अस्य सूत्रस्य पाठात् विकरणव्यत्ययपरता प्रतीयते, तथाऽपि बहुलग्रहणात् विभक्तिव्यत्ययपरताऽपि भवति । तथा च पातञ्जलं भाष्यम्—

'सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन ॥" इति ।

5. मु. 'असि' नास्ति ।

पञ्चम्या वा स्वादेशादीनामन्यतमं स्वीकृत्य तस्मात्त्वमुत्पन्नोऽसीत्यर्थः स्वीकर्तव्यः, 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतेः ।

षष्ठ्या वा तत्त्रितयं स्वीकृत्य, तस्य त्वमसि–तत्स्वामिकोऽसीति यावत्— इति प्रतिपादनीयम्, 'स कारणं करणाधिपाधिपः' [श्वे. उ. ६-९] इति श्रुतेः ।

सप्तम्या वा तत्त्रितयमुपेत्य तस्मिंस्त्वमसीत्यर्थो ग्राह्यः, 'सन्मूलास्सोम्येमास्सर्वाः प्रजाः सदायतनास्सत्प्रतिष्ठाः' इति श्रुतेः ।

शरीरशरीरिभावाभिप्रायं वा सामानाधिकरण्यं भविष्यति मनुष्योऽहमित्यादिवत्, 'यस्यात्मा शरीरम्' [बृ. उ. ३-७-२२] इति श्रुतेः[1] । 'अघोरापापकाशिनी' इत्यत्र अपापकाशिनीति प्रश्लेषवत् [2]अतत्त्वमसीति वा सआत्मातत्त्वमसीत्यत्रापि प्रश्लेषो भविष्यति ।

तस्मात् सद्विद्यायाः सप्रपञ्चजीवभिन्नब्रह्मपरत्वावगमात् कथं प्रत्यगभिन्ननिष्प्रपञ्चब्रह्मपरत्वमिति चेत्—

उच्यते—उततमादेशमित्युपक्रमो न ब्रह्मणश्शासितृत्वं प्रतिपादयति । तथात्वे कर्तरि घञं स्वीकृत्य तत्परत्वं वक्तव्यम् । न च तदुपपद्यते । 'अकर्तरि च कारके संज्ञायाम्'[3] [पा. सू. ३-३-१९] इति कर्तरि तस्य पर्युदासात् । न च करणार्थकस्यैव कर्तर्युपचारो भविष्यतीति सांप्रतम् । तथाक्लेशकल्पनायां मूलाभावात्, अक्लेशेनैवोपपत्तौ तदयोगाच्च, उपदेशेऽपि हि आङ्पूर्वस्य दिशेः प्रचुरः प्रयोग उपलभ्यते—'आदित्यो ब्रह्मेत्यादेशः' [छा. उ. ३-१९-१] 'उभयमेवादिष्टं भवति अध्यात्मं चाधिदैवतं च' [छा. उ. ३ - १८ - २] 'अथात आदेशो नेति नेति' [ बृ. उ. २-३-६ ] 'गुह्या एवादेशा मधुकृतः' [ छा. उ. ३ - ५ - १ ] 'तदादिष्टेन [4]मार्गेण' इत्यादौ । यद्यपि उपदेशादेशयोः भेदेन प्रयोग उपलभ्यते

---

1. **श्रुतेरिति** माध्यन्दिनपाठानुसारिणी इयं श्रुतिः ।

2. अतत्त्वमसीति वा प्रश्लेषो भविष्यतीति संबन्धः । 'द्वा सुपर्णा......अनश्नन्न्योऽभिचाकशीति' इति भेदश्रुतेः इति शेषः । प्रश्लेष इत्यस्य अकारस्य इत्यादिः । **प्रश्लेषः**- अन्तर्भावः ।

3. **संज्ञायामिति** संज्ञाशब्देन रूढिर्विवक्षिता इति व्याख्यातारः । अत एव रञ्जनक्रियार्थकस्य रागशब्दस्य साधुत्वमिति तेषां भावः ।

4. आ. वर्त्मनेत्यादौ

'एष आदेशः एष उपदेशः' [तै. उ. १-११-४] इति, तथापि आदेशशब्देन उपदेशसामान्ये प्रतिपादिते गोबलीवर्दन्यायेन उपदेशशब्दः चोदनात्मकोपदेश-[1]विशेषपरो भविष्यति। 'एषा वेदोपनिषत्, एतदनुशासनम्' [तै. उ. १-११-४] इत्युत्तरत्र [2]तथैव दर्शनात्। उपदेशार्थत्वस्वीकारे च कर्मणि घञं स्वीकृत्य उपदेशैकगम्यत्वेन ब्रह्मोपक्रान्तमिति लभ्यते। न च अकर्तरिचेतिसूत्रे संज्ञायामिति ग्रहणात् प्रकृते कर्मणि घञ् न सम्भवतीति वाच्यम्। 'को भवता दायो दत्तः, को भवता लाभो लब्धः' इति प्रयोगोपपत्तये [3]असंज्ञायामिति प्रश्लेषस्याप्युपगमात्। अवश्यं चोपक्रमे उपदेशैकगम्यत्वं वक्तव्यम्। श्वेतकेतुं स्वपुत्रं गुरुकुलात् सर्वान्वेदानधीत्य गृहमागतं स्तब्धं मानिनं प्रति उद्दालकस्य स्तब्धतापनोदनार्थोऽयं प्रश्नः 'उत तमादेशमप्राक्ष्यः' इति–[4]स्तब्धस्य मानिनः 'किमत्र प्रष्टव्यं स्वत एवायमर्थ ऊहितुं शक्यते' इति शङ्का मा भूदिति। एवं च 'आचार्यवान् पुरुषो वेद' [छा. उ. ६-१४-२] इत्युपसंहारस्याप्युपक्रमानुगुण्यं लभ्यते।

एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा च विवर्ताभिप्रायेणैव व्याख्येया, न तु परिणामाभिप्रायेण। वाक्यशेषानुसारात्। 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति हि[5] विकारानृततापरम्। वाचाया आरम्भणं—आलम्बनं, विकारः–घटशरावादिः। तर्हि वाक् च तदालम्बनं च विकार इति द्वयं प्राप्तम्, नेत्याह—नामधेयं–घटःशराव इति नाममात्रम्। न तु तत्र वस्तुसत्ताऽस्तीति द्योत्यते नामधेयपदेन। दृष्टं च [6]नामपदस्याभासताद्योतकत्वं 'यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम्' [भ. गी. १६-१७] इति। लोकेऽपि पुत्राभासे 'पुत्र इति नामधेयं नात्र पुत्रत्वमस्ति' इति। कथं तर्हि 'सन् घटः' इत्यादिव्यवहारः, इत्यत

---

1. मु॰ 'विशेष' नास्ति

2. **तथैव दर्शनादिति** गोबलीवर्दन्यायेनैव अर्थभेददर्शनात्, आदेशाद्यपौनरुक्त्याय अनुशासनमित्यस्य ईश्वरवचनमित्यर्थकरणात् इति भावः।

3. **असंज्ञायामिति प्रश्लेषस्येति** संज्ञायामिति प्रायिकं इति, भाष्यानुसारिणः पाणिनिसूत्रवृत्तिकृतः। असंज्ञायामिति प्रश्लेषस्य नावश्यकतेति तेषां भावः।

4. तत्र स्तब्धस्य

5. मु. 'हि' नास्ति

6. आ. नामधेयपदस्य

आह—मृत्तिकेत्येव सत्यमिति। मृत्तिकात्मनैव घटादिकं सत्यम्, न तु स्वरूपेणे-त्यभिप्रायः। [1]एवकारार्थप्रधानं चेदं वाक्यं [2]गुडजिह्विकान्यायेन मृदः सत्यत्वानु-वादपूर्वकं विकारानृततप्रतिपादनाय। एवं उत्तरेष्वपि लोहादिदृष्टान्तेषु द्रष्टव्यम्। अमुमर्थं दार्ष्टान्तिके दर्शयति 'एवं सोम्य स आदेशो भवति' इति[3]। एवंशब्देन च 'वाचारम्भणं विकारो नामधेयम्, आदेश एव सत्यः'[4] इति प्रतिपादितं भवति। [5]इत्थमेव तैजसानां पदार्थानां त्रिवृत्करणनिरूपणावसरे स्पष्टमेव प्रतिपादितं—'यदग्ने रोहित रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य अपागादग्नेर-ग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्' [छा. उ. ६-४-१] इति। अत्र अपागादग्नेरग्नित्वमिति स्पष्टमेव विकारोपमर्दो दर्शितः। अतः स्वरसतो वाचारम्भणश्रुत्या विकारानृतत्वमवधार्यते।

[6]इत्थमेव विष्णुपुराणेऽपि प्रतिपादितं—'ज्ञानस्वरूपमत्यन्तनिर्मलं पर-मार्थतः। [7]तमेवार्थस्वरूपेण भ्रान्तिदर्शनतस्स्थितम्॥' [वि. पु. १-२-६] इति। ज्ञानस्वरूपस्यैव परमात्मनोऽर्थाकारता भ्रमसिद्धेति हि श्लोकार्थः। तथा 'वस्त्वस्ति किं कुत्रचिदादिमध्यपर्यन्तहीनं सततैकरूपम्। यच्चान्यथात्वं द्विज याति भूयो न तत्तथा तत्र[8] कुतो हि तत्त्वम्॥' [वि. पु. २-१२-४१] इति। विकारवर्गे आदिमध्यान्तवर्जितं पारमार्थिकं वस्तु नास्ति, अन्यथाभवतो वस्तुत्वाभावादित्यर्थः।

---

1. **एवकारार्थप्रधानमिति** अन्ययोगव्यवच्छेदपरमित्यर्थः।

2. **गुडजिह्विकान्यायेनेति** यथा बालानां जिह्वायां, औषधं ग्राहयितुं गुडो निक्षि-प्यते, तथा विकारानृततप्रतिपादनाय मृदः सत्यत्वोक्तिः, अन्यथा शून्यवादापत्तिभिया विकारानृततां न विश्वसेत्—इति भावः

3. मु. 'इति' नास्ति

4. मु. सत्यमिति

5. मु. 'एव' नास्ति

6. इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति व्यासवचनानुसारेण, उक्तार्थिकां वाचारम्भणश्रुतिं पुराणेन उपबृंहयन्, 'विष्णुपुराणं विशिष्टाद्वैतपरं' इति विशिष्टाद्वैतिनां अभिमानं निरस्यति—**इत्थमेवेत्यादिना**

7. **तमेवेति** पूर्वस्मिन् पद्ये प्रस्तुतस्य पुरुषोत्तमस्य विशेषणमिदम्। तमेव—परमार्थतो ज्ञानस्वरूपमेव सन्तं भ्रान्त्या अर्थस्वरूपेण स्थितं इत्यर्थः। प्रणम्येति अनन्तर-पद्येनान्वयः।

8. मु. तस्य

तथा 'मही घटत्वं घटतः कपालिका कपालिका चूर्णरजस्ततोऽणुः । जनैस्स्वकर्मस्तिमितात्मबोधैराल्क्ष्यते ब्रूहि किमत्र वस्तु । [वि. पु. २-१२-४२] सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् ।' [वि. पु. २-१२-४५] इत्यादीनि प्रपञ्चानृतताप्रतिपादकानि वचनानि दर्शनीयानि । अतो विवर्तमभिप्रेत्यैव एकविज्ञानेन सर्वविज्ञानं प्रतिपादनीयम्, न तु परिणामाभिप्रायेण । मृदादिदृष्टान्ताश्च उपादानस्वरूपे ज्ञाते तदात्मना उपादेयं विज्ञातं भवतीत्येवमभिप्रायाः, [1]न तु परिणामाभिप्रायाः ।

एवं 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं' इत्यत्रापि निष्प्रपञ्चमेवात्मतत्त्वमुपक्षिप्यते । अत्र हि सच्छब्दो न सत्ताश्रयतया इदंशब्दार्थे पर्यवसितः । अपि तु ब्रह्मपरः । 'ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधस्स्मृतः ।' [भ. गी. १७-२३] इति स्मृतेः । तदैक्षतेति तच्छब्देन सत्पदार्थमाकृष्य ईक्षणादिपूर्वकस्रष्टृताप्रतिपादनात्, 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनास्सत्प्रतिष्ठाः' इति स्पष्टं तेन पदेन ब्रह्मण एव प्रतिपादनाच्च । एकमेवाद्वितीयमिति च सत्पदार्थविशेषणम् । उत्तरत्र ईक्षणादिभिस्तस्यैव विशेषणात् । 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यत्र सच्छब्दस्य स्थाने आत्मपदमुपक्षिप्य एक इति पुलिङ्गेन तस्यैव विशेषणाच्च । ततश्च अथात आदेशो नेति नेतीत्यादिश्रुतिसिद्धं यदेकमेवाद्वितीयं–सकलद्वैतशून्यं सत्तामात्रमात्मरूपं तद्व्यतिरेकेण सृष्टेः प्राक् इदं नामरूपात्मकं किमपि नासीदिति एवकारार्थप्रधानेन सदेवेत्यनेन प्रतिपाद्यते । अत्र नेतिनेतीतिश्रुतिसिद्धार्थकथनपूर्वकं प्रलयनिरूपणं,प्रलयकालस्य तदाधेयस्य प्रपञ्चसूक्ष्मरूपस्य च वस्तुतस्सत्तां निराकर्तुम् । प्रलयोपक्षेपश्च सृष्ट्युपक्षेपवत्, प्रपञ्चः कदाचित् सूक्ष्मावस्थः कदाचित् स्थूलावस्थ इत्यनेकविकारात्मको वाचारम्भणश्रुतिप्रतिपादितेन न्यायेन अनृत इति प्रतिपादनार्थः । यदाहुः—'मृल्लोहविष्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा । उपायः सोऽवताराय नास्ति भेदः कथञ्चन ।' [मा. का. ३-१५] इति । तस्मात् उपक्रमे तावत् उपदेशैकगम्यं निष्प्रपञ्चमात्मतत्त्वं सोपपत्ति प्रतिपादितम् ।

मध्येऽपि जीवब्रह्मणोरभेदः परामृश्यते । 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति । यद्यपि च परमात्मनः 'यस्सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो

---

1 आ 'न तु परिणामाभिप्रायाः' नास्ति ।

भूतेभ्योऽन्तरः' [बृ. उ. ३-७-१५] इत्यन्तर्यामिरूपेणाप्यनुप्रवेशोऽस्ति, तथापि स नेह विवक्षितः। [1]जीवेनेति विशेषणात्।

एवमुपसंहारोऽप्युपक्रमानुगुण एवोपलभ्यते 'ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति। ऐतदात्म्यमिदंसर्वमिति हि 'इदं सर्वं यदयमात्मा' [बृ. उ. २-४६] इति श्रुत्यन्तरानुसारात् सदेवसोम्येदमग्र आसीदित्युपक्रमानुसाराच्च, एष आत्मा अस्येति बहुव्रीहिं कृत्वा ततो भावप्रत्यये कृते भावप्रत्ययस्य प्रकृत्यर्थप्रकारीभूतार्थपरत्वात् बहुव्रीह्यर्थविशेषणीभूतात्मपरामर्शकत्वेन 'एष आत्मा इदं सर्वम्' इति प्रतिपादयति। 'एष आत्मा इदं सर्वम्' इत्येव वक्तव्ये, सामानाधिकरण्यं आत्मात्मीयभावेनौपचारिकं–इति शङ्का माभूदिति द्योतनाय बहुव्रीहिभावप्रत्यययोरुपादानम्। तथासति, बहुव्रीहिणैव मुख्यया वृत्त्या आत्मात्मीयभावे लब्धे पुनर्भावप्रत्ययरूपयत्नान्तरकरणं व्यर्थं स्यादिति तर्केण सा शङ्का अपोदिता भविष्यतीति। तच्च सामानाधिकरण्यं 'मृत् घटः' इति परिणामाभिप्रायेण 'रजतं शुक्तिः' इत्यारोपितबाधाभिप्रायेण इति द्वेधाऽपि सम्भवतीति, तन्निर्धारणार्थं तत्सत्यमिति वाक्यम्। तत्र हि तच्छब्दः प्रकृतमात्मानं परामृशति। तस्यैव तात्पर्यविषयतया अस्मिन् सन्दर्भे प्राधान्यात्, सआत्मेतिवाक्ये तस्यैव परामर्शेन तदैकार्थ्यानुसाराच्च। ततश्च तच्छब्देनात्मानं परामृश्य तस्य विशिष्य सत्यताप्रतिपादनं अनात्मनोऽनृततां बोधयत् पूर्वोपक्षिप्तं सामानाधिकरण्यं बाधायामेवेति[2] व्यवस्थापयति।

ततश्च तत्त्वमसीति वाक्यमपि[3] [4]स्वस्वारस्यानुसारेणोपक्रमस्वारस्यानुसारेण च यथाश्रुतमेव। न तु विभक्तिलोपादिना क्लेशेन व्याख्येयम्। अपि च स्वस्वारस्य-

---

1. **जीवेनेति विशेषणादिति** न च जीवयतीति व्युत्पत्त्या जीवशब्देन अन्तर्याम्यभिधीयते इति वाच्यम्। जीवशब्दस्य जीवात्मनि रूढत्वात्, रूढिपरित्यागे कारणाभावात्, रूढेर्योगापहारित्वाच्च, जीवेनेति विशेषणं विनैव अन्तर्यामिरूपेण प्रवेशलाभसम्भवेन जीवेनेति विशेषणवैयर्थ्यापत्तेश्च इति भावः।

2. मु. 'इति' नास्ति

3. मु. 'अपि' नास्ति

4. **स्वस्वारस्यानुसारेण** — अभेदबोधानुकूलं समानविभक्तिकपदद्वयघटितत्वं स्वस्वारस्यं, तदबाधाय।

परित्यागेन विभक्तिलोपाद्याश्रयणे व्यामोह एव शङ्कावसरप्रदर्शितवचनव्यक्तिभिः स्यात्[1] । न हि—इयमेव वचनव्यक्तिः स्वीकर्तव्या नेयमिति—किञ्चिन्नियामकमस्ति ।

ननु शरीरशरीरिभावेन योजनास्वीकारे स्वारस्यापरित्यागात् सैव स्वीकर्तव्येति भेदिपक्षेऽपि निर्धारणं लभ्यत इति चेत्—

न—शरीरवाचकानां शब्दानां शरीरिपर्यन्तत्वस्य [2]प्रागेव निराकृतत्वात् । [3]अपि च शरीरवाचकानां शरीरिपर्यन्तत्वस्वीकारेऽपि न तत्त्वमसीति वाक्यं यथाश्रुतार्थं सम्भवति । न ह्यत्र त्वंशब्दस्येश्वरशरीरभूतजीववाचकस्य ईश्वरे वृत्तिरभ्युपेयते । त्वंशब्दार्थस्य तच्छब्दार्थे विशेषणत्वाभावात् । किं तु तच्छब्दस्यैव प्रकृतपरमात्मपरामर्शकस्य त्वंशब्दार्थे [4]जीवे अभेदसम्बन्धेन विशेषणसमर्पकता । अन्यथा असीति मध्यमपुरुषो न स्यात् । त्वंशब्दार्थस्य इतरविशेषणत्वे आकांक्षाभावेन आख्यातसामानाधिकरण्यायोगात् । युष्मच्छब्दस्याख्यातसामानाधिकरण्य एव 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः' [पा. सू. १-४-१०५] इति सूत्रेण मध्यमपुरुषो विधीयते । अतः त्वंशब्दार्थस्य विशेष्यत्वमभ्युपेतव्यम् । तत्र च परमात्मपरस्य तच्छब्दस्य वृत्तिः शरीरवाचकानां शरीरिपर्यन्तत्वाभ्युपगमेऽपि न सम्भवति, ईश्वरस्य जीवं प्रति शरीरत्वाभावात् । अतो मध्यमपुरुषोपपत्तये त्वंशब्दार्थविशेष्यकमेव [5]सामानाधिकरण्यमुपेयम्[6] । एवम् 'अहं ब्रह्मास्मि'

---

1. मु. 'स्यात्' नास्ति

2. **प्रागेव**—शास्त्राणामविद्यावद्विषयत्वोपपादकभाष्यव्याख्यानावसरे एव ।

3. **अपि चेत्यादि** शिवाद्वैतविनिर्णये उपपादितमेतत् ।

4. मु. 'जीवे' नास्ति

5. **सामानाधिकरण्यं**—अभेदबोधः ।

6. **उपेयमिति** न च—त्वंशब्दः जीववाचकः जीवान्तर्यामिपर्यन्तः, शरीरवाचकानां शरीरिपर्यन्तत्वात् । जीवान्तर्यामिणि त्वम्पदार्थे तत्पदार्थविशेषणको बोधोऽभ्युपेयते, प्राधान्येन सम्बोध्याबोधकत्वेऽपि त्वंपदसमभिव्याहारमात्रेण असीति मध्यमपुरुषोपपत्तिः—इति वाच्यम् । यतः तत्र त्वंशब्दनिर्दिष्टे तच्छब्दनिर्दिष्टप्राग्वर्णितजगत्कारणपरमेश्वराभेदो बोध्यत इति असिशब्दप्रयोगादवगतेः त्वंशब्दः सम्बोध्यजीवमात्रपरः, न तु तदन्तर्यामिपर्यन्तः । सम्बोध्यं प्रति स्वात्मन इव स्वान्तर्यामिणः स्वानुभवेन वा प्राचीनोपदेशेन वा प्रसिद्धत्वाभावेन तस्य तं प्रत्युद्देश्यत्वानर्हत्वात्, प्रकृतस्य सद्रूपस्य परमेश्वरस्य कथञ्चित् स्वान्तर्यामितया प्रागुपदिष्टत्वसमर्थने तत्र तद्भेदशङ्काऽनुदयेन पौनःपुन्येन तद्बोधनानपेक्षणात् इति भावः ।

[बृ. उ. १-४-१०] इति सामानाधिकरण्यमपि उत्तमपुरुषोपपत्तये जीवविशेष्यकमेव स्वीकर्तव्यम् । दृश्यते हि त्वमहंशब्दार्थयोर्विशेषणविशेष्यभावव्यत्यासे मध्यमोत्तमपुरुषयोर्व्यत्यासः 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' इति व्यतिहारवाक्ये । तथा अन्यत्रापि 'यदग्ने स्यामहं त्वं त्वं स्या अहं स्युष्टे सत्या इहाशिषः' इति । ततश्च असीतिपदानुसारेण त्वंशब्दार्थविशेष्यके सामानाधिकरण्ये स्थिते, शरीरवाचकानां शब्दानां शरीरिपर्यन्तत्वमिति व्युत्पत्त्यभ्युपगमेऽपि स्वारस्यहानेरवर्जनीयतया, शङ्कावसरप्रदर्शितवचनव्यक्तिभिर्व्यामोह एव प्राप्नोतीति जीवब्रह्मणोस्स्वरूपाभेदमुपेत्यैव यथाश्रुतार्थोऽभ्युपेतव्यः ।

ननु—सिद्धान्तेऽपि एकधर्मिपर्यवसिततया त्रयाणां पदानां अखण्डार्थत्वाभ्युपगमेन मध्यमपुरुषस्वारस्यं परित्यक्तमेव, क्रियाकारकभावेनान्वयानभ्युपगमात् । कृत्स्नवाक्यस्वारस्यमपि परित्यक्तमेव, सर्वेषां पदानां लक्षणोपगमात्—इति चेत्, न ह्येतावता मध्यमपुरुषप्रयोगोऽसाधुर्भवति । [1]आलम्बनीभूते वाच्यार्थे अभेदसंसर्गेण तत्पदार्थप्रकारकत्वंपदार्थविशेष्यकबोधाभ्युपगमेन मध्यमपुरुषोपपादनसम्भवात् । इत्थमेव हि स्तुतिपर्यवसितेष्वर्थवादेषु मध्यमादिपुरुषाणां गतिः ।

ननु च—तव कथमभेदेन वाच्यार्थवर्णनं कर्तुं शक्यम्, विरुद्धधर्माक्रान्तयोः 'नाहं सर्वज्ञः' इति भेदेनावगतयोश्च अभेदबोधनासम्भवात् । यदि च विरुद्धधर्माणां भेदस्य च मिथ्यात्वेन पारमार्थिकाभेदबोधने विरोधो नास्तीत्युच्येत, तदा वाच्यार्थपर्यवसानमस्तु, किमखण्डवस्तुलक्षकत्वेन—इति चेत्, न हि वयं [2]वाच्यार्थान्वयानुपपत्त्या अखण्डे वस्तुनि लक्षणां स्वीकुर्मः । किं तु ब्रह्मप्रकरणे सर्वत्र भेदप्रपञ्चनिषेध[3]तन्निन्दावाक्यैः अद्वितीयवस्तुमात्रे वाक्यतात्पर्यस्य पर्यवसिततया तदुपपादनाय । ततश्च आलम्बनीभूतेऽर्थे पदस्वारस्यं न परित्यक्तमेव । पर्यवसितस्तु वाक्यार्थः तात्पर्यानुसार्येव ग्राह्य इति तदपरित्यागात् न कुत्रापि स्वारस्यहानम्, तात्पर्यानुसारेणैव महावाक्यार्थवर्णनस्य स्वारसिकत्वात् । दर्शपूर्णमासमहावाक्यार्थस्य श्रुतिलिङ्गाद्यनेक-

---

1. **आलम्बनीभूते**—द्वारीभूते । **वाच्यार्थे इति** सप्तम्यर्थविषयितायां बोधे अन्वयः ।

2. वाक्यार्थां०

3. मु. निषेधनिन्दा

प्रमाणानुसारेण तत्तत्पदलक्षणाध्याहारादिभिर्वर्ण्यमानस्यापि न स्वारसिकता अपगता भवति । तत् कस्य हेतोः । तात्पर्यानुसारित्वात् । तथा प्रकृतेऽपि भविष्यति ।

ततश्च उपक्रमोपसंहारपरामर्शैर्गतिसामान्येन च सद्विद्याया निष्प्रपञ्चप्रत्यगभिन्नब्रह्मपरत्वे स्थिते, मध्ये यानि सृष्ट्याद्युपयोगिगुणप्रतिपादकानि [1]वाक्यानि तानि 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते' इति न्यायमनुसृत्य तदुपयोगितयैव व्याख्येयानि ।

सन्मूलाइतिवाक्यं च न मूलमूलिभावादिना भेदप्रतिपादनपरम् । अपि तु 'तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ' इत्युपक्रमानुसारेण 'अस्ति सर्वप्रजानामुत्पत्तिस्थितिलयेष्वाधारभूतं सद्वस्तु' इत्येतावन्मात्रपरम् । तस्य च सद्वस्तुनः एकमेवाद्वितीयमिति प्रागेव स्वरूपं निर्णीतमिति तदनुसारेण, अन्यपरात् वाक्यात् प्रतीयमानो भेदो व्यावहारिको भविष्यतीति, न किञ्चिदेतत् ।

तत्त्वमसीत्यादौ सम्बोध्यसम्बोधकभावेन अर्थात् प्रतीयमानो भेदो न शास्त्रार्थः ।

[2]एवमुपक्रमोपसंहाराद्यनेकप्रमाणसिद्धतात्पर्यानुसारेण सद्विद्यायां अद्वैतात्मतत्त्वमेव प्रतिपाद्यत इति मनसि निधाय, [3]बादरायणेनापि मोक्षधर्मेषु श्वेतकेतुसुवर्चलोपाख्यानेन अद्वितीयात्मवस्तुपरतया सद्विद्या उपबृंहिता ।

एवं हि तत्रोपाख्यायते—[4]देवलस्य कन्या सुवर्चला जन्मान्तरसिद्धसहजब्रह्मात्मतत्त्वानुभवा तादृशं पतिमिच्छन्ती श्वेतकेतुं पितृसमीपतोलब्धात्मतत्त्वावबोधं उपश्रुत्य तं वृतवती । पित्राऽपि तस्मै निवेदिता । ताभ्यां दम्पतिभ्यां ब्रह्मनिष्ठाभ्यां वैदिककर्मानुष्ठानयुक्तं गार्हस्थ्यमाश्रित्य स्थितमिति ।

तत्र तयोरित्थं ब्रह्मोद्यकथारूपस्संवादःप्रवृत्तः—

"ततः कदाचित् भर्तारं श्वेतकेतुं सुवर्चला ।

1. **वाक्यानि**—'तदैक्षत' इत्यादीनि ।

2. अद्वैतात्मपरत्वे सद्विद्यायाः महाभारतोपबृंहणं शिवाद्वैतनिर्णये श्रीमदप्पय्यदीक्षितेन्द्रैः विस्तरेणोपपादितम् , तत् तथैवात्र योजयति—**एवमित्यादिना** ।

3. **बादरायणेनापि**—बादरायणेनैव । आन्ध्रपाठे 'अपि' नास्ति ।

4. मु. देवकन्या

पप्रच्छ को भवानत्र ब्रूहि मे तद्द्विजोत्तम ।
तामाह भगवान् वाग्मी त्वया ज्ञातो न संशयः ।
द्विजोत्तमोऽहं सुभगे सत्यव्रतपरायणः ।
सा तमाह [1]अहमात्मानं पृच्छामि हृदिशायिनम् ।
तच्छ्रुत्वा प्रत्युवाचैनां [2]स न वक्ष्यति भामिनि ।
मनसैव समायुक्तमात्मानं मन्यसे यदि ।
तन्मिथ्या गोत्रसद्भावे वर्तते देहबन्धनः ।
[3]अहमित्येष भावोऽत्र त्वयि चापि समाहितः ।
त्वमप्यहमहं सर्वमहमित्येव वर्तते ।
नात्र [4]तत् परमार्थं तद्यन्मां त्वमनुपृच्छसि ॥" इति ।

अत्र—सद्विद्यायां तत्त्वमसीत्यसकृत्पित्रोपदिष्टः श्वेतकेतुः कथमात्मानं बुध्यते इति जिज्ञासमानया सुवर्चलया कस्त्वं द्विजोत्तमेति प्रश्नः कृतः, तत्प्रश्नाभिप्राय-मवगच्छताऽपि श्वेतकेतुना 'क्रमेण सा तमर्थं बोधनीया' इति मत्वा तत्रोत्तरमुक्तम्-द्विजोत्तमेति संबोधयन्त्या त्वया ब्राह्मणोऽहमित्यवगतमेव, किमत्र प्रष्टव्यमिति । ततस्सुवर्चलया 'देहोपाधिकत्वेनात्मनि कल्पितं प्रत्यक्षं ब्राह्मण्यं न पृच्छामि, किं तु द्विजोत्तमोऽहमित्यहंशब्देन देहाद्विविक्तं यमात्मानं हृदिशायिनं निर्दिशसि तं पृच्छामि' इत्युक्ते तत्रोत्तरमुक्तम्—'अहंशब्दो मनश्शबलितात्मस्वरूपे प्रवर्तते । मनश्शबलितात्मस्वरूपं च मिथ्या ब्राह्मणकुलोत्पन्नदेहोपाधिके आत्मनि ब्राह्मण्यमिव । अतः आत्मतत्त्वजिज्ञासुभिः न अहंशब्दार्थः प्रष्टव्यः । अपि च अहंभावस्सर्व-साधारणः प्रत्यक्षसिद्धः । अतः परमार्थवस्तुजिज्ञासा चेत्, न अहम्भावः प्रश्नार्हः' इति । तदनन्तरं 'कर्तृत्वभोक्तृत्वादियुक्तं अहम्भावं यद्यनृतं त्वमवगच्छसि, तर्हि कर्तृत्वपूर्वकं वैदिकं कर्म कथमाचरसि' इति पृष्टे लोकसङ्ग्रहार्थं वैदिककर्माचरण-

1. मु. महात्मानं
2. मु. सर्वज्ञो मुनिपुङ्गवः
3. मु. इदमर्धं नास्ति
4. तत्—तस्मात् कारणात् ।

मित्युक्तम् । तदनन्तरं 'सर्वैरात्मनि प्रयुज्यमानस्याहंशब्दस्य कथं तदर्थता न स्यात्' इति मनसि निधाय शब्दार्थसम्बन्धप्रश्ने कृते 'न संयोगादिः शब्दार्थयो-स्सम्बन्धः, अपि तु वाच्यवाचकभावः' इत्युत्तरमुक्तम् । तदनन्तरं दम्पत्योरियं प्रश्नोत्तरपरम्परा ।

सुवर्चला—सदाऽहङ्कारशब्दोऽयं व्यक्तमात्मनि संश्रितः ।
न वाचस्तत्र वर्तन्त इति मिथ्या भविष्यति ॥

श्वेतकेतुः—अहंशब्दो ह्यहंभावे नात्मभावे शुभप्रभे ।
न वर्तन्ते परेऽचिन्त्ये वाचः सगुणलक्षणाः ॥

सुवर्चला—अहम्भावोऽत्र को नाम ह्यात्मभावस्तथैव च ।
तन्मे ब्रूहि यथान्यायमेवञ्चेन्मुनिसत्तम ॥

श्वेतकेतुः—मृण्मयो हि घटाभासः तादृग्भाव इहेष्यते ।
अहम्भावः, परेऽचिन्त्ये ह्यात्मभावो महान् परः ।
न वाचस्तत्र वर्तन्त इति नैव विरुध्यते ॥ इति ॥

अत्र शब्दार्थयोर्वाच्यवाचकभावसम्बन्धोऽस्ति चेत् कथमहंशब्द आत्म-वाचको न स्यादिति प्रश्ने कृते 'अहंशब्दो न आत्मनि मुख्यया वृत्त्या प्रवर्तते, किं तु अहमर्थे' इत्युत्तरमुक्तम् । ततः को नाम अहमर्थादन्य आत्मेति पृष्टे 'मृदि, [1]घटाकारवत् आत्मन्यहंभावोऽप्याभासः' इति अहमर्थादात्मनो विवेकं दर्शयित्वा कल्पिताकारोपधानेन प्रवर्तमानश्शब्दो न शुद्धाधिष्ठानपर्यन्तं प्रवर्तते रजतोपधानेन प्रवर्तमानः शुक्तौ रजतशब्द इव । अतः 'कल्पितोपाधिनिमित्तोऽहंशब्दो न शुद्धात्मनि मुख्यया वृत्त्या प्रवर्तते' इति न विरुध्यत इत्युपसंहृतम् । ततोऽहंकारा-द्विविक्त आत्मैव प्रपञ्चाधिष्ठानं ब्रह्मेति सिद्धवत्कृत्य, यथा आकाशस्य प्रपञ्चाश्रय-त्वेऽपि तदसङ्गित्वं एवं ब्रह्मणोऽप्यसङ्गित्वे श्वेतकेतुना प्रतिपादिते पुनः इमे[2] प्रश्नोत्तरे—

सुवर्चला—निर्विकारं ह्यमूर्तं च निरंशं सर्वगं तथा ।
दृश्यते च वियन्नित्यं तादृगात्मा न दृश्यते ॥

1. मु. घटाभासवत्
2. मु. 'इमे' नास्ति

'आत्मा वा इदमेक एवाग्र आसीत् [नान्यत् किञ्चन मिषत्] '

श्वेतकेतुः— त्वचा स्पृशति वै वायुमाकाशस्थं पुनः पुनः ।
तत्स्थं गन्धं तथा घ्राति ज्योतिः पश्यति चक्षुषा ॥

तमोरश्मिगणं चैव मेघजालं तथैव च ।
वर्षं तारागणं चैव नाकाशं दृश्यते पुनः ॥

आकाशस्याप्यथाकाशं सद्रूपमिति निश्चितम् ।
सदर्थे [1]कल्पितं ह्येतत् तत् सत्यं विष्णुरेव च ।
यानि नामानि गौणानि ह्युपचारात् परात्मनि ।

न चक्षुषा न मनसा न चान्येन परो विभुः ।
चिन्त्यते सूक्ष्मया बुद्ध्या वाचा वक्तुं न शक्यते ।
एतत्प्रपञ्चमखिलं तस्मिन्नेव प्रतिष्ठितम् । इति ।

अत्र—आकाशवत् प्रपञ्चाधिष्ठानं ब्रह्म कुतो न दृश्यत इति प्रश्ने 'आकाशस्थस्य वाय्वादेरेव ग्रहणमस्ति, न तु विविच्य आकाशस्य । यदा लौकिकाकाश एवेयं गतिः, तदा कैव कथा परमात्मनि ततोऽपि सूक्ष्मे । ततः सदर्थे कल्पितं सर्वम्, तच्च सद्रूपं सर्वाधिष्ठानत्वाद्व्यापकम्, तत्रोपाधिमाश्रित्य प्रवर्तमानाः शब्दाः शुद्धे साक्षात् न प्रवर्तन्ते' इत्युत्तरमुक्तम् ।

अस्यां प्रश्नोत्तरपरम्परायां 'मृण्मयो हि घटाभासः' इति दृष्टान्तोक्त्या वाचारम्भणश्रुत्यर्थः, '[2]सद्रूपमिति निश्चितम्' इति आत्मशब्देन प्रकृतस्य जीवस्य सद्रूपत्वोक्त्या तत्त्वमसीति वाक्यार्थः, 'सदर्थे कल्पितं ह्येतत् तत् सत्यं विष्णुरेव च' इत्यनेन 'ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा' इति श्रुत्यर्थश्च निष्प्रपञ्चप्रत्यगभिन्नब्रह्मप्रतिपत्त्यनुकूलो दर्शितः ।

तत् सिद्धं सद्विद्यायाः तात्पर्यग्राहकैर्लिङ्गैः क्रियाशेषतां विनैव निष्प्रपञ्चप्रत्यगभिन्नब्रह्मपरत्वम् ।

---

1. मु. कल्पितं सर्वं
2. मु. सत्स्वरूपमिति आत्म

**(ऐ. उ. १-१-१) 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यं अयमात्मा ब्रह्म सर्वानुभूः' बृ. उ २ ५-१९) 'ब्रह्मैवेदममृतं पुरस्तात्' (मु. उ. २ २-११) इत्यादीनि । न च तद्गतानां पदानां ब्रह्मस्वरूपविषये निश्चिते समन्वयेऽवगम्यमाने अर्थान्तरकल्पना युक्ता, श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् । न च तेषां कर्तृस्वरूपप्रतिपादनपरताऽवसीयते, 'तत् केन कं पश्येत्' (बृ. उ. २ ४ १३) इत्यादिक्रियाकारकफलनिराकरणश्रुतेः ।**

**आत्मा वा इदमिति ।** यथा चास्य वाक्यस्य निष्प्रपञ्चपरमात्मपरत्वं तथा 'आत्मगृहीतिः....' इत्यधिकरणे स्पष्टं भविष्यति । [1]मिषत्—चलत् ।

**तदेतदिति** । मधुब्राह्मणे पृथिव्यादिपर्यायेषु यत् सर्वात्मतया प्रतिपादितं तत् [2]एतत् ब्रह्म अपूर्वं कारणरहितम्, अनपरं—कार्यरहितम्, किं बहुना, आन्तरबाह्यसर्वद्वैतवर्जितं, सर्वानुभवरूपोऽयं आत्माऽपि ब्रह्मैवेति ।

यद्विज्ञानात् सर्वविज्ञानं प्रागुपक्षिप्तं तद्व्यतिरेकेण पुरस्तात् किमपि नास्तीत्याह—**ब्रह्मैवेति । निश्चिते इति** । निश्चायकैरुपक्रमादिभिरुपेते [3]इत्यर्थः । **श्रुतेति** । [4]श्रुतितात्पर्यविषयीभूतेत्यर्थः ।

यत्तु पूर्वपक्षिणोक्तं कर्तृस्तावकता वेदान्तानां भविष्यतीति, तन्न—'तत् केन कं पश्येत्' इत्यादिवाक्यानां कर्तृत्वादिनिषेधकानां तत्स्तावकत्वस्याप्रतीतेरित्याह—**न च तेषामिति** ।

यत्तु सिद्धवस्तुपराणां प्रमाणान्तरमूलकत्वमिति, तन्न—तथासति क्रियाप्रतिपादकानामपि 'तृप्तिकामः पचेत्' इति दृष्टान्तेन प्रमाणान्तरमूलकता किं न स्यात् ।

---

1. मु. 'मिषत्-चलत्' नास्ति । आन्ध्रपाठे वर्तते । तेन ज्ञायते-भाष्ये 'नान्यत् किञ्चन मिषत्' इत्यन्ता श्रुत्युदाहृतिः स्यात्—इति । तत्र अद्वितीयत्वप्रदर्शनार्थं तदन्तोक्तिः इति ज्ञेयम् ।

2. **एतत्**—बुद्ध्यादिसाक्षिरूपम् ।

3. **इत्यर्थ इति** एतेन 'निश्चिते' 'अवगम्यमाने' इति पुनरुक्तमिति शङ्का निरस्ता । भाष्ये **समन्वयः** तात्पर्यम् ।

4. क्रियाविधिशेषत्वेऽपि न श्रुतिवाच्यार्थहानिः, अतो व्याचष्टे—**श्रुतितात्पर्यविषयीभूतेति** ।

**न च परिनिष्ठितवस्तुस्वरूपत्वेऽपि प्रत्यक्षादिविषयत्वं ब्रह्मणः, 'तत्त्वमसि' (छा. उ. ६-८-७) इति ब्रह्मात्मभावस्य शास्त्रमन्तरेणानवगम्यमानत्वात्। यत्तु हेयोपादेयरहितत्वादुपदेशानर्थक्यमिति, नैष दोषः—हेयोपादेयशून्यब्रह्मात्मतावगमादेव सर्वक्लेशप्रहाणात्पुरुषार्थसिद्धेः।**

यदि त्वलौकिकश्रेयस्साधनताकारस्य [1]प्रमाणान्तरायोग्यतया [2]तत्पराणां 'यजेत स्वर्गकामः' इत्यादीनां न प्रमाणान्तरमूलकत्वं तदा प्रकृतेऽपि तुल्यमित्याह—**न च परिनिष्ठेति**। **हेयोपादेयेति**। हेयत्वोपादेयत्वेत्यर्थः। **सर्वक्लेशप्रहाणादिति**। पूर्वपक्षिणा हि यथा प्रयोजनं लभ्यते तथा वाक्यार्थो वर्णनीय इत्युक्तम्। तदभ्युपगम्यत एव। परं तु वेदान्तानां कर्मविध्येकवाक्यत्वे न साक्षात्तल्लभ्यते, अपि तु प्रवृत्त्यादिद्वारा। प्रत्यगभिन्नब्रह्मपरत्वे तु तज्जनितज्ञानेन सर्वानर्थमूलाया अविद्याया निवृत्तेः साक्षादेव प्रयोजनं लभ्यत इति [3]भावः।

यत्तु पूर्वपक्षिणा उपासनाविधिशेषत्वं ब्रह्मप्रतिपादकानां पदानां भविष्यतीति पक्षान्तरमुक्तम्, तत्र, यानि दहरशाण्डिल्याद्युपासनाप्रकरणगतानि तेषामुपासनाविधिशेषता उपगतैव। यानि तु निष्प्रपञ्चात्मप्रकरणगतानि, तेषां नोपासनाविधिशेषत्वम्। सर्वत्र [4]तदश्रवणात्। 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति क्वचिन्निर्विशेषब्रह्मप्रकरणे ध्यानविधिश्रवणेऽपि अहेयोपादेये जीवब्रह्मैक्ये प्रतिपादिते सति तज्ज्ञानमात्रेण क्रियाकारकात्मकस्यानर्थस्य निवृत्तेः प्रयोजनपर्यवसाने सति न उपक्रमाद्यवगतप्राधान्यभङ्गेन ध्यानविधिशेषतया ब्रह्मप्रतिपादनम्। किं तु ब्रह्मप्रतिपत्त्युपयोगितया ब्रह्मशेषतयैव [5]ध्यानप्रतिपादनम्। तदपि च ध्यानं भेदवासनानिवृत्तिपर्यन्तमेव, न तु तदनन्तरमपि। ततश्च निवृत्तभेदवासनस्य पुरुषस्य उपदेशमात्रेण सकलद्वैतनिवर्तकात्मसाक्षात्कारसिद्धेः तं प्रति

---

1. **प्रमाणान्तरायोग्यतयेति** तथा च भट्टवचनम्—'श्रेयस्साधनता ह्येषां नित्यं वेदात् प्रतीयते। ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः' इति।

2. मु. 'तत्पराणां' नास्ति

3. **भाव इति** ब्रह्मात्मतावगमादेवेतिभाष्यस्थैवकारलभ्योऽयं भावः।

4. **तदश्रवणादिति** उपासनाविधिः तच्छब्दार्थः।

5. मु. ध्यानादिप्रति०

**देवतादिप्रतिपादनस्य तु स्ववाक्यगतोपासनार्थत्वेऽपि न कश्चिद्विरोधः। न तु तथा ब्रह्मण उपासनाविधिशेषत्वं संभवति, एकत्वे हेयोपादेयशून्यतया क्रियाकारकादिद्वैतविज्ञानोपमर्दोपपत्तेः। न हि ब्रह्मैकत्वविज्ञानेनोन्मथितस्य द्वैतविज्ञानस्य पुनः संभवोऽस्ति, येन उपासनाविधिशेषत्वं ब्रह्मणः प्रतिपाद्येत।**

**यद्यप्यन्यत्र वेदवाक्यानां विधिसंस्पर्शमन्तरेण प्रमाणत्वं न दृष्टं, तथाप्यात्मविज्ञानस्य फलपर्यन्तत्वात् न तद्विषयस्य शास्त्रस्य प्रामाण्यं शक्यं प्रत्याख्यातुम्। न च अनुमानगम्यं शास्त्रप्रामाण्यम्, येन अन्यत्र**

ध्यानविधिर्निरालम्बन एवेत्याह—देवतादिप्रतिपादनस्येत्यादिना प्रतिपाद्येतेत्यन्तेन।

यद्यप्यर्थवादवाक्यानां स्वार्थपरत्वं त्यक्तं विधेयस्तावकतया च विधिपरत्वमभ्युपगतं, तथाऽपि तेषां तत् स्वार्थप्रयोजनानवाप्तेरुपगतम्, वेदान्तानां तु स्वार्थे प्रयोजनलाभेन अर्थवादेषु स्वार्थपरित्यागो [1]दृष्ट इत्येतावता [2]स्वार्थपरता त्यक्तुं न शक्यत इत्याह—**यद्यपीति**। ननु—वेदान्तवाक्यं सिद्धब्रह्मप्रमितिजनकं—इत्यनुमितिर्न सम्भवति। [3]तथाभूतस्य वैदिकवाक्यान्तरस्य अदर्शनात्, तादृशानुमित्यभावे च कथं ब्रह्मप्रमाजनकत्वं—इति यदि कश्चिच्छङ्केत, तं प्रति, तादृशानुमित्यभावेऽप्याकाङ्क्षायोग्यतादिमत्तया ब्रह्मबोधकता सम्भवत्येवेत्याह—**न चेति**। [4]अनुमानगम्यं सत् शास्त्रस्य प्रमाजनकत्वं न भवतीत्यर्थः।

---

1. मु. 'द्रष्टव्य'

2. मु. 'स्वार्थः परित्यक्तुं'

3. **तथाभूतस्य**–सिद्धब्रह्मप्रमितिजनकस्य, सिद्धार्थप्रमितिजनकस्य वा। **अदर्शनादिति** तथा च दृष्टान्ताभावेन व्याप्तिनिर्णयरूपकारणाभावात् नानुमितिः सम्भवतीत्यर्थः।

4. स्वतःप्रमात्ववादेऽपि शास्त्रप्रामाण्यस्य अनुमानेनापि ज्ञेयत्वसम्भवात् 'न चानुमानगम्यं' इति भाष्यासाङ्गत्यमाशङ्क्य भाष्यं व्याचष्टे—**अनुमानगम्यं**

**दृष्टं निदर्शनमपेक्षेत । तस्मात् सिद्धं ब्रह्मणः शास्त्रप्रमाणकत्वम् ।**

**अत्रापरे प्रत्यवतिष्ठन्ते—यद्यपि शास्त्रप्रमाणकं ब्रह्म, तथाऽपि**

एवं 'वेदान्तानां सिद्धब्रह्मपरत्वे प्रयोजनं न लभ्यत इति, लौकिकपदानां कार्यान्विते शक्तौ सत्यामपि क्रियापदैस्सत्यादिपदानामन्वयः स्वीकर्तव्यः, ततश्च सत्यादिरूपस्यब्रह्मणःप्रत्यगभेदेनोपासनाकरणिका या भावना तस्यामेव वेदान्तानां तात्पर्यात् प्रत्यक्षादिविरुद्धेंऽशे आरोपमादायैवोपासनं सम्पादनीयम्' इति शङ्का 'सिद्धवस्तुपरत्वेऽपि प्रयोजनं लभ्यते' इति व्युत्पादनेन परिहृता ।

एकदेशिनस्तु–कार्यान्विते एव पदानां शक्तिः, अन्यपरेभ्योऽपि वाक्येभ्यो ब्रह्मसत्ता च सिध्यति–इति वदन्ति । तन्मतमनुवदति—**अत्रापर इति** ।

तेषामयमाशयः— लौकिकपदार्थव्युत्पत्त्यनुसारेण वेदे वाक्यार्थो वर्णनीयः । लौकिकी च व्युत्पत्तिः पदानां कार्ये एव । तत्रैवाद्यव्युत्पत्तिग्रहसम्भवात् । न हि कोशादिभ्य आद्यव्युत्पत्तिग्रहः सम्भवति । अत्यन्ताव्युत्पन्नस्य कोशाद्यर्थज्ञानासम्भवात् । ततश्च प्रयोज्यप्रयोजकवृद्धव्यवहाराधीन आद्यशक्तिग्रहो वर्णनीयः । स च व्युत्पित्सोरेवं भवति—प्रयोजकवृद्धस्य 'घटमानय, गाम्बधान' [1]इति शब्दोच्चारणानन्तरं प्रयोज्यवृद्धेन कृतं घटानयनं गोबन्धनं च पश्यतो घटानयनगोबन्धनयोः [2]कारणतया स्वीयस्तन्यपानादिदृष्टान्तेन कृतिचिकीर्षयोर्मध्यमवृद्धगतयोरनुमाने सति चिकीर्षायाः कार्यताज्ञानमूलकत्वात् 'नूनमनेन आनयनबन्धनयोः कार्यता अवगता' इति बुद्धिर्भवति । तस्यां च बुद्धौ शब्दोच्चारणातिरिक्तस्य कारणस्य असम्भवात् प्रयोजकवृद्धोच्चारितःशब्द एव कारणमिति निर्णये, अशक्तस्य कारणत्वासम्भवात् 'एतादृशशब्दः कार्यविशेषे आनयनादौ शक्तः' इति निर्णयो भवति । ततश्च आवापोद्वापाभ्यां यथायथं, कार्यसामान्यं प्रथमावगतं अविहायैव तेषु तेषु समभि-

---

**सदिति** । तथा च—'शास्त्रस्य प्रमाजनकत्वं अनुमानगम्यं सत् भवति—उत्पद्यते इति न—इति भाष्यार्थ इति भावः । अनुमानगम्यं न भवति–अनुमानेन न भवति–इति भाष्यार्थ इति **कल्पतरुः** । मु. सम्भवतीत्यर्थः

1. मु. इत्यादि
2. मु. कार्यतया

व्याहारविशेषेषु तत्तत्कार्यविशेषप्रत्ययः । ततश्च कोशादिभ्योऽपि उपजीव्यप्राथमिकव्युत्पत्तिग्रहानुसारेण कार्यान्वित एव तत्तत्पदार्थे शक्तिग्रहः, न तु तदनन्विते— इति ।

ननु—कार्यान्विते शक्तिरित्यपि नियमो न सम्भवति । देवदत्तोगच्छतीत्यादौ गम्यादेः [1]कार्यान्वितार्थप्रतिपादकत्वासम्भवादिति—चेत्—

न—कार्ये पदानां शक्तिरित्येव नियमः न तु कार्यान्विते, तच्च कार्यं क्वचित् स्वातन्त्र्येण प्रतिपाद्यते क्वचिच्च कारकादिसम्बन्धितया—इत्येवं स्वीक्रियते । न च—अयमपि नियमो न सम्भवति 'कस्यायं पुरुषः' 'राज्ञः' इति कार्यानन्वितार्थप्रतिपादकानामपि समभिव्याहाराणां, भूयसामुपलम्भादिति—वाच्यम् । तत्रापि 'स [2]आकारणीयः' इत्यादिपदाध्याहारेणैव शाब्दबोधजनकता । तदभावे तु पदार्थासंसर्गाग्रह एव, आद्यव्युत्पत्त्यनुरोधात् ।

ननु—कार्यं विहायापि आद्यव्युत्पत्तिग्रहः सम्भवति । मात्रादयोऽङ्गुल्या घटादिकं निर्दिश्य 'अयं घटः' इति यदा शब्दं प्रयुञ्जते तदा हि बालस्य 'घटशब्दवाच्योऽयं' इति प्रतीतिर्भवति । न च—तदाऽपि कथमेषा प्रतीतिः ? 'अङ्गुलीनिर्देशपूर्वकशब्दोच्चारणं तत्र तत्र विषये शक्तिग्रहार्थम्' इति बालेन प्रागपरिज्ञानादिति—वाच्यम् । यद्यपि बालेन अङ्गुलीनिर्देशेनोच्चारणकालेऽयमर्थो न ज्ञातः 'एषोऽङ्गुलीनिर्देशश्शब्दोच्चारणसहितश्शक्तिग्रहार्थः' इति, तथापि तादृशं निर्देशं बहुधा दृष्ट्वा 'अयं शब्द एतदर्थसहचरितः' इति ज्ञातमेव । तेन च सम्बन्धेन 'सम्बन्धिदर्शनात् सम्बध्यन्तरे स्मृतिः' इति न्यायेन घटशब्दोच्चारणे बालस्य घटबोधो जायते । ततः तद्बोधनिर्वाहकतया तस्मिन्नर्थे [3]शब्दस्य शक्तिं कल्पयति—इति चेत्—

---

1. आ. कार्यान्तरान्विता०
2. **आकारणं**—आह्वानम् ।
3. मु. 'शब्दस्य' नास्ति

न—बालस्य प्राग्बोधो घटादिविषयकः घटशब्दोच्चारणे साहचर्यसम्बन्धमादाय [1]यो वृत्तः न तत्र उत्तरभाविशक्तिकल्पनमुपयुज्यते । अर्थज्ञानात् प्रागेव शक्तिज्ञान-स्यापेक्षितत्वात् । नाप्युत्तरभावितत्तदर्थज्ञानाय । यथा प्राक् शक्तिग्रहं विनैव साहचर्यज्ञानमात्रेणार्थबोध उपपन्नः उत्तरत्रापि तथैवोपपादनसम्भवात् ।

अथापि स्यात्—'पुत्रस्ते जातः' इति वाक्यात् सिद्धेऽप्याद्यव्युत्पत्तिग्रहः सम्भवति । व्युत्पित्सुर्बालो यदा देवदत्तगृहे पुत्रजन्म [2]दृष्ट्वा तद्वार्ताहारेण सह देवदत्तसमीपमागच्छति, तदा 'देवदत्त पुत्रस्ते जातः' इति वार्ताहारवाक्य-श्रवणानन्तरं हर्षपूर्वकं देवदत्तं स्नानंकुर्वाणमुपलभ्य हर्षपूर्वकस्नानकरणे देवदत्तस्य किं निमित्तमित्यालोचयन् 'मया देवदत्तस्य गृहे दृष्टं यत् पुत्रजन्म तत् नूनमनेन ज्ञातं' इति निश्चिन्वन् 'तज्ज्ञाने कारणान्तरस्याभावात् 'पुत्रस्ते जातः' इति शब्द एव तज्ज्ञाने कारणम्' इति निश्चयवान् भवेदिति ।

न स्यात्—बालेन दृष्टेषु बहुषु पदार्थेषु सत्सु इतरपदार्थज्ञानमेव कुतो हर्षपूर्वकस्नानकारणत्वेन न कल्प्यते । यदि तेषां हर्षपूर्वकस्नानकारणत्वं तेन न गृहीतमित्युच्यते, तदा इदमपि कथं गृहीतमिति वक्तव्यम् । न ह्यत्यन्ताव्युत्पन्नस्य 'पुत्रजन्म श्रुत्वा हर्षपूर्वकं स्नान्ति, पुत्रजन्म च हर्षकारणं' इत्युपदेशजनितं ज्ञानं सम्भवति । ततश्च केषुचिच्छब्देषु [3]वृद्धव्यवहारानुसारेण व्युत्पन्नस्य आप्तोपदेशेन 'पुत्रजन्म हर्षकारणं, तच्छ्रुत्वा च स्नान्ति' इति निश्चयवत एव तथाऽनुमितिपूर्वकं शब्दशक्तिग्रह इति वक्तव्यम् । ततश्च आद्यव्युत्पत्तिग्रहस्य [4]कार्यस्थल एव वक्तव्य-तया तदनुसारेण 'पुत्रस्ते जातः' इति वाक्यमपि 'अतः स्नानं कर्तव्यं' इत्यध्या-हारसंयुक्तमेव तदर्थप्रतिपादकमित्यपि निश्चिनोति ।

तत् सिद्धं सर्वेषां पदानां कार्यबोधकतयैव शाब्दज्ञानजनकत्वमिति ।

अतो लोकव्युत्पत्त्यनुसारेण वेदान्तानामपि कार्यपरत्वमेव, न तु सिद्धब्रह्म-

---

1. मु. प्रवृत्तः
2. मु. दृष्ट्वा वार्ता०
3. मु. 'वृद्ध' नास्ति
4. मु. कार्यव्युत्पत्तिस्थले

**प्रतिपत्तिविधिविषयतयैव शास्त्रेण ब्रह्म समर्प्यते, यथा यूपाहवनीयादी**

मात्रपरत्वम् । ततश्च वैदिकलिङां धात्वर्थातिरिक्तकार्यप्रतिपादकतायाः [1]स्वर्ग-कामादिपदसमभिव्याहारेण निर्णीततया वेदान्तेष्वपि उपासीतेतिलिङा धात्वर्था-तिरिक्तमेव कार्यं प्रतिपादनीयम् । कार्यं च कृतिसाध्यम् । कृतिश्च सविषया । सा च साक्षात् धात्वर्थमेव यागपाकादिकं[2] जनयति अपूर्वं तु न [3]तथेति अपूर्वस्य कृतिजन्यतायां मध्ये घटकापेक्षायां कृतेर्विषयापेक्षायां च, यथा 'यजेत स्वर्गकामः इत्यत्र विषयतया घटकतया च याग एवान्वेति तथा प्रकृतेऽप्युपासीतेत्यत्र उपासनमेव कृतेर्विषयापेक्षायां घटकापेक्षायां चान्वेति । कृतिविषय एव च अपूर्वविषय इत्युच्यते । घटक एव च करणमित्युच्यते । यदाहुः[4]—'कृति-तत्साध्यमध्यस्थो यागादिर्विषयो मतः । कार्येऽसंघटिताकारे करणत्वेन सम्मतः ॥' इति । ततश्च उपासनाविषयके कार्येऽवगते उपासनायाः ज्ञानसन्ततिरूपायाःसविषय-तया विषयापेक्षायां आत्मा विषयतया 'आत्मेत्येवोपासीत' [ बृ. उ. १-४-७ ] इति स्ववाक्ये श्रुतः सम्बध्यते । ततश्च आत्मनः अपूर्वापरपर्याये विधौ परम्परया विषयता । तदिदमुक्तम् —**प्रतिपत्तिविधिविषयतयेति** । ततश्च 'किंरूप आत्मा'

---

1. **स्वर्गकामादिपदसमभिव्याहारेणेति** 'स्वर्गकामो यजेत' इत्यत्र लिङर्थे कार्ये स्वर्गकामो नियोज्यत्वेनान्वेति । नियोज्यान्वयं विना कार्यस्य प्रतीत्यपर्यवसानात्, स्वर्गकामस्य च समभिव्याहृतपदबोध्यस्य तथाऽन्वययोग्यत्वात् । तस्य च नियोज्यत्वं 'ममेदं कार्यं' इति बोद्धृत्वम् । तदुक्तं प्राभाकरैः—नियोज्यः स च कार्यं यः स्वकीय-त्वेन बुद्ध्यते' इति । स च बोधः स्वर्गकामस्य स्वर्गसाधनत्वेन ज्ञाते विषये न भवति । धात्वर्थक्रियारूपं च कार्यं आशुतरविनाशित्वात् कालान्तरभाविस्वर्गसाधन-तया निश्चितम् । अतः स्वर्गकामपदसमभिव्याहृतलिङः धात्वर्थातिरिक्तस्थायिकार्यप्रति-पादकत्वं इति भावः ।

2. आ ०दिकं स्वविषयं जन०

3. **तथा**—साक्षात् कृतिजन्यम् ।

4. **आहुरिति** भवनाथादय इति शेषः । पद्यस्यायमर्थः-लिङा ह्यपूर्वं कार्यत्वेन अभिधेयम्, न तु अपूर्वत्वादिना । तेन रूपेण पूर्वमनुपस्थिते तत्र शक्तिग्रहासम्भवात् । कार्यत्वं च कृतिसाध्यत्वं, कृतिश्च विषयनिरूपणाधीननिरूपणा । कृतेश्च विषयः धात्वर्थो यागः । ततश्च कार्यत्वेन प्रतीतौ यागो विषयो भवति । कार्यस्वरूपसिद्धौ तु करणं भवति यागः । प्रतिपत्त्यनुबन्धो विषयः, स्वरूपसिद्ध्यनुबन्धः करणं—इति । **असङ्घटिताकारे**—अलब्धस्वरूपे ।

अलौकिकान्यपि विधिशेषतया शास्त्रेण समर्प्यन्ते तद्वत् ।

इत्यपेक्षायां 'सत्यंज्ञानमनन्तं' इत्यादिवाक्यजातं तत्स्वरूपबोधकतया उपयुक्तं भवति ।

[1]ननु सत्यादिवाक्यस्य किं उपासनाविध्येकवाक्यतां प्राप्तस्य सत्यादिरूप-ब्रह्मावबोधकत्वम्, उत तदेकवाक्यतामनापन्नस्य । नाद्यः । उपासनानियोगे हि सत्यादिपदार्थस्य साक्षात् परम्परया वा विषयत्वेनान्वयो वक्तुं न शक्यते । स्ववाक्यगताभ्यां [2]उपासनात्मभ्यामवरोधात् । न द्वितीयः । कार्यान्वयं विना वाक्यस्याबोधकत्वात् । अतो न सत्यादिरूपब्रह्मस्वरूपलाभ इति चेत्—

न—उपासनानियोगो हि स्वविषयतयाऽवगतस्यात्मनस्स्वरूपनिर्धारणमपेक्षते । सत्यादिपदार्थाश्च तत्प्रकरणपठिता वाक्यार्थीभावमपेक्षमाणाः स्वशेषितया उपासना-नियोगेनैव अन्वयं प्राप्नुवन्ति । तथा च उभयाकाङ्क्षा निवृत्ता भविष्यति । शेषशेषि-भावेनान्वय एव च ग्राङ्कग्रहणमिति प्राभाकरैर्व्यवह्रियते । ततश्च यद्यपि सत्यादि-पदार्थस्य न साक्षादुपास्यकोटौ निवेशः, तत्कोटेः समानवाक्योपात्तेनात्मना अवरुद्ध-त्वात् ; [3]तथाऽपि स्वान्वितानां सत्यादिपदार्थानां उपास्यस्वरूपापेक्षायां अवगतान्वय-निर्वाहार्थं उपासनानियोग एव तेषामात्मविशेषणतामाक्षिपतीति उपादानापरपर्याय-[4]विध्याक्षेपरूपप्रमाणसहकृतो वेदान्तवाक्यनिचयः सत्याद्यात्मकमुपास्यं समर्पयतीति न काचिदनुपपत्तिः ।

---

1. आत्मनः स्वरूपं केवलं शास्त्रप्रमाणकम्, न तु तस्य सत्यज्ञानादिरूपत्वम्—इति शङ्कते—**नन्विति** ।

2. **उपासनात्मभ्यामवरोधादिति** धात्वर्थोपासनान्वयेन साक्षाद्विषयाकाङ्-क्षायाः उपासनाविषयाकाङ्क्षारूपायाः परम्परया विषयाकाङ्क्षायाः आत्मान्वयेन शान्तत्वेन निराकाङ्क्षत्वात् इत्यर्थः ।

3. **तथाऽपीत्यादि** इत्यत्रयोजना—तथाऽपि उपासनानियोग एव उपास्य-स्वरूपापेक्षायां स्वान्वितानां, सत्यादिपदार्थानां अवगतान्वयनिर्वाहार्थं तेषामात्मविशेष-णतामाक्षिपति—इति ।

4. **विध्याक्षेपरूपप्रमाणसहकृत इति** विध्याक्षेपरूपविधिव्यापारात्मकं इदं उपादानप्रमाणं शब्दप्रमाणान्तर्भूतम्, न तु 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति

**कुत एतत्? प्रवृत्तिनिवृत्तिप्रयोजनत्वाच्छास्त्रस्य । तथा हि शास्त्रतात्पर्यविदामनुक्रमणम्–'दृष्टो हि तस्यार्थः कर्मावबोधनम्' (शाब. भा. १.१.१) इति । 'चोदनेति क्रियायाः प्रवर्तकं वचनम्' । (शाब. भा. १-१ २) 'तस्य ज्ञानमुपदेशः—' (जै. सू. १ १.५) 'तत् भूतानां क्रियार्थेन समाम्नायः—' (जै. सू. १-१ २५) 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्—' (जै. सू. १ २ १) इति च । अतः पुरुषं क्वचिद्विषयविशेषे प्रवर्तयत् कुतश्चिद्विषयविशेषान्निवर्तयच्च अर्थवत् शास्त्रम् । तच्छेषतया चान्यदुपयुक्तम् । तत्सामान्यात् वेदान्तानामपि तथैवार्थवत्त्वं स्यात् ।**

न च–नियोगपरेभ्यो वाक्येभ्यः ब्रह्मसिद्धिः देवताधिकरणन्यायेन वक्तव्या, स च प्रमाणान्तरविरोधे[1] न प्रवर्तत इति कथं प्रत्यगभिन्नं निष्प्रपञ्चं ब्रह्म एकदेश्यभिमतं शास्त्रेण सिध्येदिति—साम्प्रतम् । सप्रपञ्चत्वनिष्प्रपञ्चत्वयोश्शुक्तिरजतन्यायेन, एकस्यैव ब्रह्मणो जीवेश्वरात्मना भेदस्यौपाधिकाकाशभेदन्यायेन च उपपादयितुं शक्यतया प्रमाणान्तरविरोधपरिहारसम्भवात् । ततश्च [2]यथा—'यूपे पशुं बध्नाति, यूपमष्टाश्रीकरोति, यूपं तक्षति, खादिरो यूपो भवति' इत्यादिवाक्यपर्यालोचनया पशुनियोजनयोग्यः काष्ठविशेषः यूपशब्दार्थः, 'अग्नीनादधीत, नक्तं गार्हपत्यमादधाति, दिवाऽऽहवनीयं' इत्यादिवाक्यपर्यालोचनया आधानविशेषसंस्कृतोऽग्निराहवनीयादिशब्दार्थः, इति च पशुनियोजनादिपरेभ्यो वाक्येभ्योऽवगम्यते, तथा उपासनाविधिपरादेव वाक्यात् ब्रह्म सिध्यति ।

एतत्सर्वमभिप्रेत्याह — यद्यपि शास्त्रप्रमाणकमिति । **प्रवृत्तिनिवृत्तिप्रयोजनत्वादिति ।** विधिरूपं शास्त्रं प्रवृत्तिप्रयोजनकम् । प्रवृत्तिश्च कार्यताज्ञानाधीनेति प्रवृत्तिसिद्ध्यर्थं 'यजेत स्वर्गकामः' इत्यत्र स्वर्गकामनियोज्यकं यागविषयकं कार्यं प्रतिपाद्यते । निवृत्तिप्रयोजनकं निषेधशास्त्रम् । निवृत्तिश्च तत्तत्क्रियाप्रागभाव-

---

लौकिकवाक्यार्थज्ञानमूलकश्रुतार्थापत्तिवत् शाब्दप्रमोपजीवि तदनन्तरं प्रवर्तमानं प्रमाणान्तरं—इति गुरुमतमर्यादा । अतः विध्याक्षिप्तस्यापि श्रौतत्वम् ।

1. मु. विरुद्धे

2. मु. 'यथा' नास्ति

**सति च विधिपरत्वे यथा स्वर्गादिकामस्य अग्निहोत्रादि साधनं विधीयते एवं अमृतत्वकामस्य ब्रह्मज्ञानं विधीयते इति युक्तम् ।**

परिपालनानुकूलो यत्नविशेषः, सोऽपि कार्यताज्ञानाधीन इति 'न कलञ्जं भक्षयेत्' इत्यत्र कलञ्जभक्षणप्रागभावपरिपालनविषयकं कार्यं प्रतिपादनीयम् । ततश्च सर्वं शास्त्रं कार्यप्रतिपादकमेवेति वेदान्तानामपि कार्यप्रतिपादकत्वं स्वीकृत्य तच्छेषतयैव ब्रह्मप्रतिपादकता आस्थेयेति भावः । शास्त्रतात्पर्यविदां — वेदतात्पर्यविदाम् । अनुक्रमणं—वेदार्थसङ्ग्राहकवचनजातम् । दृष्टोहीति चोदनेतीति च शबरस्वामि-वचनम् । वेदस्य कार्यप्रतिपादनमेव दृष्टं प्रयोजनमिति, चोदनासूत्रे चोदनाशब्दः कार्यानुकूलप्रवृत्तिजनकशब्दपर इति च, वाक्यद्वयस्यार्थः। तस्येत्यारभ्य जैमिनिसूत्रा-वयवाः । कार्यस्य ज्ञानजनको विधिः—इति, तत्—तत्र सिद्धे पदार्थे विद्यमानानां कार्यप्रतिपादकेन पदेन सह समभिव्याहारो द्रष्टव्यः—इति, वेदस्य कार्यपरत्वात् अतत्पराणां आनर्थक्यं—इति च, सूत्रावयवार्थः । एतद्वचनपर्यालोचनया 'लिङा-दिभिः साक्षात् कार्यं प्रतिपाद्यते, अवशिष्टो वेदभागः तच्छेषभूतः, अन्यथा आनर्थक्यं स्यात्' इति स्पष्टमेव प्रतीयते ।

ननु—नियोगः पुरुषकृतिसाध्यतयाऽवगतः कृतिमपेक्षते । पुरुषकृतिश्च स्वविषये मयेदंकर्तव्यमितिज्ञानं विना न भवति । तत् ज्ञानं साश्रयम् । यश्च तादृशज्ञानाश्रयः स एव नियोज्यः । अतो नियोगो नियोज्यमपेक्षते । पुरुषस्य च भाविनि कार्ये 'कर्तुं शक्यं एतन्मया' इति ज्ञानं तदैव भवति यदा लोकवेदसिद्ध-कारणकलापवत्ताज्ञानं स्वस्मिन् भवति । लोकतश्च कार्यमात्रे 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायेन तत्तत्कार्यजन्यफलकामना कारणमिति इहापि नियोज्यविशेषणतया फलकामनायां लोकतस्सिद्धायां कामनाविषयीभूतम्फलमिदमिति विशिष्य निर्धारणं कथं भविष्यतीति अत आह—**सति चेति** । नन्वग्निहोत्रादौ स्वर्गादिकामनायाः नियोज्यविशेषणतया श्रुतत्वात् अस्तु तत्र नियोगस्य निराकाङ्क्षता, प्रकृते त्वमृतत्वकामना नियोज्यविशेषणतया न श्रुतेति चेत्, सत्यं न श्रुता । किं तु यथा—'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इत्यत्र रात्रिसत्रस्य नियोज्यविशेषणतया फलकामनायामपेक्षितायां 'प्रतितिष्ठन्ति ह वा इत्यर्थवादावग-तायाः प्रतिष्ठाया एव 'प्रतितिष्ठासन्ति' इति सनर्थविपरिणामं यच्छब्दस्य व्यवहि-तान्वयं चाश्रित्य, 'ये प्रतितिष्ठासन्ति त एता रात्रीरुपेयुः' इति लिङर्थकल्पनेन

**नन्विह जिज्ञास्यवैलक्षण्यमुक्तम्—कर्मकाण्डे भव्यो धर्मो जिज्ञास्यः, इह तु भूतं नित्यनिर्वृत्तं ब्रह्म जिज्ञास्यमिति। तत्र धर्मज्ञानफलादनुष्ठानापेक्षाद्विलक्षणं ब्रह्मज्ञानफलं भवितुमर्हति।**

**नार्हत्येवं भवितुम्। कार्यविधिप्रयुक्तस्यैव ब्रह्मणः प्रतिपाद्यमानत्वात्। 'आत्मा वा अरे द्रष्टव्यः' (बृ. उ. २-४-५) 'य आत्माऽपहतपाप्मा....सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' (छा. उ. ८-७-१) 'आत्मे-**

फलत्वं स्वीकृत्य, प्रतिष्ठाकामना रात्रिसत्रनियोज्यविशेषणतया कल्प्यते, तथा—'येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान् वेद तदेव मे ब्रूहि' [बृ. उ. ३-२-४-१] इति अमृतत्वसाधनप्रश्नोपक्रमात् 'एतावदरे खल्वमृतत्वम्' इति तदुपसंहाराच्च 'आत्मा वा अरे द्रष्टव्यः' इति विहितोपासनायां 'योऽमृतत्वकामः तेनात्मा द्रष्टव्यः' इति [1]वचनव्यक्त्या अमृतत्वकामना अधिकारिविशेषणं भविष्यति।

ननु—वेदान्तेषु यद्यमृतत्वकामस्य ब्रह्मोपासनं विधीयते, तर्ह्यस्मिन् वेदान्तमीमांसाशास्त्रेऽपि तदुपासनमेव प्राधान्येन विचारणीयं स्यात्। ततश्च उपासनस्यापि धर्मत्वाविशेषात् 'अथातो धर्मजिज्ञासा' इति प्रतिज्ञयैव ब्रह्मोपासनाविचारोऽपि प्रतिज्ञातः स्यात्। न च जैमिनिना उपासनारूपं ज्योतिष्टोमादिरूपं च धर्मं विचार्यत्वेन प्रतिज्ञाय उपासना न विचारितेति वक्तुं शक्यम्। अतोऽस्मिञ्छास्त्रे प्राधान्येन विचारणीयस्यार्थस्य शास्त्रान्तरेणैव विचारिततया एतच्छास्त्रारम्भो व्यर्थः प्रसज्येत। अपि च उपासनाजन्यत्वे मोक्षस्य स्वर्गादिवदनित्यता च स्यात्—इति शङ्कते—**नन्विति।**

**नार्हत्येवमिति।** 'अथातो धर्मजिज्ञासा' इत्यत्र धर्मपदं यद्यपि [2]साधारण्येन बाह्यं ज्योतिष्टोमादिकं आन्तरं च उपासनादिकं प्रतिपादयति, तथाऽपि जैमि-

---

1. **वचनव्यक्त्या**—वचनविपरिणामेन।

2. **साधारण्येन**—वेदार्थत्वेन अलौकिकश्रेयस्साधनताकत्वेन वा रूपेण। उपपादितश्चैतत् जिज्ञासासूत्रस्थाथशब्दार्थविचारावसरे पूर्वोत्तरमीमांसयोरेकशास्त्रत्वोपपादनाय।

**त्येवोपासीत' (बृ. उ. १-४-१५)। 'आत्मानमेव लोकमुपासीत' (बृ. उ. १-४ १५) 'ब्रह्म वेद ब्रह्मैव भवति' (मु. उ. ३-२-९) इत्यादिषु विधानेषु सत्सु 'कोऽसावात्मा किं तद्ब्रह्म' इत्याकाङ्क्षायां तत्स्वरूपसमर्पणेन सर्वे- वेदान्ता उपयुक्ताः—'नित्यः, सर्वज्ञः, सर्वगतः, नित्यतृप्तः, नित्यशुद्ध- बुद्धमुक्तस्वभावः' 'विज्ञानमानन्दं ब्रह्म' इत्येवमादयः। तदुपासनाच्च शास्त्र- दृष्टोऽदृष्टो मोक्षः फलं भविष्यति। कर्तव्यविध्यननुप्रवेशे तु वस्तुमात्रकथने**

विना कृतेऽपि विचारे उपासनाया अनिरूपितत्वात् अस्मिञ्छास्त्रे वक्ष्यमाणानां न्यायानां तत्रासूत्रितत्वाच्च तत्रत्यो धर्मशब्दो नोपासनापरः। किं तु तद्व्यतिरिक्त- धर्मपरः। न चोपासनासाध्यत्वेनानित्यता मोक्षस्य, 'यत् कृतकं तदनित्यं' इति लोकसिद्धन्यायस्य अमृतत्वश्रुतिबलादेव बाधनोपपत्तेः—इति भावः। **कार्यविधि- प्रयुक्तस्येति**। कार्यरूपो यो विधिः तदाक्षिप्तस्येत्यर्थः। यद्यपि ब्रह्मणो ब्रह्मादि- शब्देभ्य एवावगमात् न विधिप्रयुक्तत्वं, तथाऽपि सत्याद्यात्मना विधिप्रयुक्तत्वं भविष्यतीत्यभिप्रेत्य सङ्ग्रहवाक्यं विवृणोति—**आत्मा वा अरे इत्यादिना**। यथा च सत्याद्यात्मकस्य ब्रह्मणः विधिप्रयुक्तत्वं तथा [1]प्रागेव व्युत्पादितम्। **सोऽन्वे- ष्टव्य इति**। अन्वेषणं-विचारः। विजिज्ञासा तु, साक्षात्कारात्मकं यद्विशेषज्ञानं तदिच्छासाध्यः साक्षात्कारानुकूलो विचारादन्यो ध्यानरूपो व्यापारः। **आत्मेत्ये- वोपासीतेति**। अत्र इतिशब्दः 'क्रमादमुं नारद इत्यबोधि सः' [माघ. १-३] इत्यत्रेव द्वितीयार्थे। तथा च आत्मानमेवोपासीतेत्यर्थः। **आत्मानमेवलोकमिति**। आत्मोपासनासाध्यं फलं मोक्षोऽपि आत्मस्वरूप इत्यभिप्रेत्य लोकमिति आत्मविशे- षणम्। **शास्त्रदृष्टोऽदृष्ट इति**। [2]शास्त्रादवगतः प्रमाणान्तरानवगत इत्यर्थः।

एवं कार्यपरत्वाभावे वेदान्तानां बोधकता न स्यादिति निरूप्य, तथासति फलवत्त्वं च न स्यादित्याह—**कर्तव्येति**। ब्रह्मस्वरूपज्ञानमात्रेण मोक्षरूपफला- दर्शनात् प्रकृते नायंसर्पइति[3]वाक्यन्यायो न प्रवर्तत इत्युक्त्वा, तावन्मात्रेण फलसिद्धौ

---

1. **प्राक्**—'प्रतिपत्तिविधिविषयतयैव शास्त्रेण ब्रह्म समर्प्यते' इति भाष्याशय- निरूपणावसरे।

2. **शास्त्रादवगत इति** शास्त्रदृष्टपदव्याख्या। **प्रमाणान्तरानवगत** इति अदृष्टपदव्याख्या।

3. 'वाक्य' नास्ति।

हानोपादानासंभवात्, 'सप्तद्वीपा वसुमती' 'राजाऽसौ गच्छति' इत्यादिवाक्यवत् वेदान्तवाक्यानामानर्थक्यमेव स्यात्।

ननु वस्तुमात्रकथनेऽपि 'रज्जुरियं, नायं सर्पः' इत्यादौ भ्रान्तिजनितभीतिनिवर्तनेनार्थवत्त्वं दृष्टं, तथा इहाप्यसंसार्यात्मवस्तुकथनेन संसारित्वभ्रान्तिनिवर्तनेनार्थवत्त्वं स्यात्—

स्यादेतदेवं, यदि रज्जुस्वरूपश्रवणमात्रेणेव सर्पभ्रान्तिः संसारित्वभ्रान्तिः ब्रह्मस्वरूपश्रवणमात्रेण निवर्तेत। न तु निवर्तते, श्रुतब्रह्मणोऽपि यथापूर्वं सुखदुःखादिसंसारिधर्मदर्शनात्, 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ. उ. २-४-५) इति च श्रवणोत्तरकालयोर्मनननिदिध्यासनयोर्विधिदर्शनात्। तस्मात् प्रतिपत्तिविधिविषयतयैव शास्त्रप्रमाणकं ब्रह्माभ्युपगन्तव्यमिति।

अत्राभिधीयते—न। कर्मब्रह्मविद्याफलयोर्वैलक्षण्यात्। शारीरं वाचिकं

श्रवणानन्तरं मनननिदिध्यासनविधिवैयर्थ्यं च स्यादित्याह—**श्रोतव्योमन्तव्यइति**। श्रवणमात्रेणैव ब्रह्मज्ञानस्य सिद्धत्वादिति भावः।

एकदेशिना मोक्षस्योपासनाध्यत्वं वदता उपासनाया मानसधर्मत्वात् मोक्षोऽप्युपासनासाध्यो धर्मफलमित्युक्तं भवेत्। तत्तु न सम्भवति, मोक्षस्य धर्मफलविलक्षणत्वात्। अतः तदुपपत्तये ज्ञानफलत्वमेव मोक्षस्योपेयमिति प्रतिपादयन् एकदेशिमतं निराकरोति—**नेति**। सङ्ग्रहवाक्यं विवृणोति। **शारीरमित्यादिना**।

जैमिनिना 'अथातो धर्मजिज्ञासा' इति प्रतिज्ञाय 'चोदनालक्षणोऽर्थो धर्मः' इति सूत्रेण, अलौकिकश्रेयस्साधनं बलवदनिष्टाननुबन्धि धर्मशब्दप्रतिपाद्यमिति प्रतिपादितमिति यथाश्रुतसूत्रपर्यालोचनया अवगम्यते। उत्तरत्र अधर्मस्यापि विचारिततया तस्यापि प्रतिज्ञासिद्ध्यर्थं सूत्रद्वयेऽपि अधर्म इति पदच्छेदं कृत्वा आद्यसूत्रेणाधर्मविचारप्रतिज्ञा द्वितीयसूत्रे अर्थशब्दस्य विपरीतलक्षणया अनर्थ इत्यर्थं स्वीकृत्य बलवदनिष्टसाधनत्वं अधर्मलक्षणं च लम्भनीयम्। धर्मफलं च कृत्स्नं अधर्मफलसहितमेव।

न च—अहंग्रहोपासनारूपधर्मवशात् अत्रैव सकलपापक्षयानन्तरं अर्चिरादिमार्गप्राप्त्या ब्राह्मलौकिकसुखानुभवकाले न अधर्मफलगन्धोऽस्तीति कथं कृत्स्नं धर्मफलं

अधर्मफलसहितम् । ततश्च 'न ह वै' इति श्रुतिः ब्राह्मलौकिकशरीरव्यतिरिक्त-विषया व्याख्येयेति-वाच्यम् । तत्रापि 'स वै नैव रेमे' 'सोऽबिभेत्' इतिवचन-पर्यालोचनया हिरण्यगर्भस्यापि दुःखावगमेन तदन्येषां कैमुतिकन्यायसिद्धतया अहं-ग्रहोपासकानामपि सशरीरताप्रयुक्तं किञ्चित्पापमनुवर्तत एव । अतः कर्माधीन-शरीराणां पापफलनप्रियं नियतमेवेति 'न ह वै' इति श्रुतिः यथाश्रुतार्थैव । अयमर्थः 'ब्रह्मादिस्थावरान्तेषु प्रसिद्धे' इत्यन्तेन भाष्येण [1]दर्शितः । धर्माधर्मफलयोस्साहि-त्येऽपि-मनुष्यलोकादारभ्योर्ध्वगतेषु पापफलं स्वल्पम्, पुण्यफलमधिकम्, अधोगतेषु पापफलमधिकम्, पुण्यफलं स्वल्पम् , मनुष्यलोकेषु तु उभयफलं समानम्—इत्येवं-रूपं तारतम्यम् । धर्मफलेऽपि [2]साधनतारतम्यात् तारतम्यम् ।

न च—अहंग्रहोपासकानां सर्वेषां उपासनारूपस्य [3]धर्मस्य—क्वचिदुपासने अधिका गुणाः क्वचित् न्यूनाः, येन बाल्यमारभ्य उपासनं कृतं येन च मध्यमे-वयस्युपासनमारब्धं तेन सर्वेणापि प्रायणपर्यन्तमेव कर्तव्यम्, तथा च कालन्यून-ताधिक्ये—इत्येवंरूपेण तारतम्ये सत्यपि 'विकल्पोऽविशिष्टफलत्वात्' इति तुल्य-फलता निरूपयिष्यते । अतः कथं साधनतारतम्यात् फलतारतम्यम् । न च—साधन-तारतम्यात् फलतारतम्यमित्यपि नियन्तुं शक्यम् । दुर्बलेन बलवता च क्रियमाणे लौकिककार्ये आयासतारतम्ये सत्यपि बुद्धिमता अबुद्धिमता च क्रियमाणे वेदाध्ययने आयासतारतम्ये सत्यपि, वेतनवेदग्रहणयोः [4]फलयोः तारतम्यादर्शनात् । अतः कृत्स्नं धर्मफलं साधनतारतम्यात् तरतमभावयुक्तमिति वक्तुमशक्यम्—इति साम्प्रतम् ।

साधनतारतम्यात् फलतारतम्यमित्युत्सर्गः । तस्य क्वचित् दुर्बलबलवत्कृत-साधनस्थले प्रमाणानुसारेण अपवादे सत्यपि 'अहंग्रहोपासकानां सर्वेषामपि साधनतार-

---

1. दर्शित इति भाष्ये अस्मिन् प्रकरणे 'अधर्मोऽपि' इति अधर्मोक्त्याऽपि 'पुण्यफलभोगावसान इव उपास्तिफलभोगसमाप्तौ अधर्मफलं भोक्तव्यं' इत्येतदर्थप्रदर्श-नार्थया अयमर्थो दर्शितः—इत्यपि ध्येयम् । स्पष्टश्चैतत् कल्पतरौ । परिमले कल्पत-रूक्तोऽयमर्थः अभ्युच्चयमात्रं-इत्युक्तम् । अत्र तु-स्वातन्त्र्येण प्रकृतार्थसाधकत्वसम्पत्तये समर्थितोऽयमर्थः, उपोद्बलितश्च 'ब्रह्मादिषु' इत्यादिभाष्यप्रमाणप्रदर्शनेन ।

2. मु. साधनादितारतम्यात् धर्मतारतम्येन फलतारतम्यम्

3. धर्मस्येति 'एवंरूपेण तारतम्ये सत्यपि' इत्युत्तरेण सम्बध्यते ।

4. मु. 'फलयोः' नास्ति ।

मानसं च कर्म श्रुतिस्मृतिसिद्धं धर्माख्यं, यद्विषया जिज्ञासा 'अथातो धर्मजिज्ञासा' (जै. सू. १-१ १) इति सूत्रिता, अधर्मोऽपि हिंसादिः प्रतिषेधचोदनालक्षणत्वात् जिज्ञास्यः परिहाराय। तयोश्चोदनालक्षणयोरर्थानर्थयोर्धर्माधर्मयोः फले प्रत्यक्षे सुखदुःखे शरीरवाङ्मनोभिरेवोपभुज्यमाने विषयेन्द्रियसंयोगजन्ये ब्रह्मादिषु स्थावरान्तेषु प्रसिद्धे। मनुष्यादारभ्य ब्रह्मान्तेषु देहवत्सु सुखतारतम्यमनुश्रूयते। ततश्च तद्धेतोर्धर्मस्यापि तारतम्यं गम्यते। धर्मतारतम्यादधिकारितारतम्यम्। प्रसिद्धं च अर्थित्वसामर्थ्यादिकृतमधिकारितारतम्यम्। तथा च यागाद्यनुष्ठायिनामेव विद्यासमाधि-

तम्येऽपि फलतारतम्यं नास्ति' इत्यत्र [1]प्रमाणस्य विशिष्यानवतारात् न तत्रापवाद आश्रीयते। तथा च श्रुतिः अहंग्रहोपासकानामपि 'तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति' इति फलतारतम्यं दर्शयति। यस्य ईषदपरिपक्वमुपासनं तस्य सलोकता अन्यस्य सायुज्यं इति हि तदर्थः। एवं गुणादितारतम्येऽपि द्रष्टव्यम्। विकल्पोऽविशिष्टफलत्वादित्यत्र [2]तुल्यफलत्वप्रतिपादनं तु, ब्रह्मलोकप्राप्तिरूपं सर्वेषामुपासकानां साधारणं इत्येवमभिप्रायम्। अत एव 'एवं मुक्तिफलानियमः' इत्यत्र भाष्य एव गुणादितारतम्याधीनं ब्राह्मलौकिकफलतारतम्यं निरूपयिष्यते। तत् सिद्धं धर्मफलं तरतमभावयुक्तम्। अमुमर्थं [3]मनुष्यादारभ्येति भाष्यं प्रतिपादयति। इष्टश्रौतं, पूर्तं—स्मार्तं[4] दत्तं–दानम्। सम्पतत्यनेन अस्माल्लोकात् अमुंलोकमिति सम्पातः–पुण्यम्। यावत् पुण्यं वर्तते तावत् स्वर्गे लोके उषित्वा अनन्तरं निवर्तन्ते। अस्माद्वचनात् पुण्यफलस्य कालकृतं तारतम्यं अवगम्यते। यद्यप्यहंग्रहोपासनानां परमात्मविषयाणां 'कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्' इति [5]सूत्रे क्रममुक्तिफलकता निरूपयिष्यते, तथाऽपि साधनतारतम्याधीनं अवान्तरफले भोगरूपे तारतम्यमस्त्येव।

---

1. मु. प्रमाणविशेषानवतारात्
2. मु. तुल्यताप्रति०
3. मु. मनुष्यलोकादारभ्य। 'मनुष्यत्वादारभ्य' इति भाष्ये पाठान्तरम्।
4. स्मार्तं—वापीकूपतटाकादिनिर्माणम्।
5. मु. सूत्रेण

विशेषात् उत्तरेण पथा गमनं, केवलैरिष्टापूर्तदत्तसाधनैः धूमादिक्रमेण दक्षिणेन पथा गमनं, तत्रापि सुखतारतम्यं तत्साधनतारतम्यं च शास्त्रात् 'यावत्संपातमुषित्वा' (छा. उ. ५-१०-५) इत्यस्मात् गम्यते। तथा मनुष्यादिषु स्थावरान्तेषु सुखलवः चोदनालक्षणधर्मसाध्य एवेति गम्यते तारतम्येन वर्तमानः। तथा ऊर्ध्वगतेष्वधोगतेषु च देहवत्सु दुःखतारतम्यदर्शनात् तद्धेतोरधर्मस्य प्रतिषेधचोदनालक्षणस्य तदनुष्ठायिनां च तारतम्यं गम्यते। एवं अविद्यादिदोषवतां धर्माधर्मतारतम्यनिमित्तं शरीरोपादानपूर्वकं सुखदुःखतारतम्यं अनित्यं संसाररूपं श्रुतिस्मृतिन्यायप्रसिद्धम्।

तथा च श्रुतिः 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति यथावर्णितं संसाररूपमनुवदति 'अशरीरं वाव सन्तं न प्रियाप्रिये

श्रुतिस्मृतिन्यायप्रसिद्धमित्युक्तम्, तत्र [1]शरीरावच्छेदेनानुभूयमानस्य सुखस्य दुःखसम्पृक्ततायां श्रुतिमुदाहरति—**न ह वै सशरीरस्येति**। कर्मफलस्य सशरीरता 'तद्यथा पेशस्कारी पेशसो मात्रामपादाय अन्यन्नवतरं कल्याणतरं रूपं तनुते, एवमेवायमात्मा इदं शरीरं निहत्य अविद्यां गमयित्वा अन्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वा अन्येषां वा भूतानाम्' (बृ. उ. ४-४-४) इत्यादिश्रुतिप्रसिद्धा। एवं 'कर्मणा बध्यते जन्तुः' 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन' इत्याद्याः स्मृतयो यथासम्भवमुदाहार्याः। 'यत् कृतकं तदनित्यं' 'तरतमभावापन्नसाधनायत्तं फलं तरतमभावापन्नम्' इत्यादयो न्यायाश्चोदाहर्तव्याः।

मोक्षस्य कर्मफलवैलक्षण्यमाह—**अशरीरं वाव सन्तमिति**। 'तथा विद्वान्नामरूपाद्विमुक्तः' 'स एषोऽकलोऽमृतो भवति' इत्यादिवचनैः यदशरीरत्वं मोक्षाख्यं प्रसिद्धं तदेवेह प्रियाप्रियासंस्पर्शप्रयोजकतया उपादीयत इति भावः।

ननु—'मोक्षस्योपासनारूपधर्मकार्यत्वेऽभ्युपगम्यमाने अन्येषां धर्मकार्याणां शरीरादिसम्बन्धप्रयुक्तदुःख[2]सम्पृक्तत्वतारतम्यानित्यत्वादिदोषदुष्टतया तत्तुल्यता

---

1. मु. शरीरावच्छेदेनैवा०

2. मु. संप्रयुक्तत्व०

**स्पृशतः' (छा. उ. ८ १२-१) इति प्रियाप्रियस्पर्शनप्रतिषेधात् चोदनालक्षणधर्मकार्यत्वं मोक्षाख्यस्याशरीरत्वस्य प्रतिषिध्यत इति गम्यते। धर्मकार्यत्वे हि प्रियाप्रियस्पर्शनप्रतिषेधो नोपपद्येत।**

मोक्षेऽपि स्यात्' इत्यापादनं न सम्भवति। अशरीरंवावसन्तमित्यादिश्रुतिविरोधादेव। न हि धर्मकार्यत्वमात्रेण सामान्येन अन्यत्र दृष्टं सर्वमापादयितुं शक्यम्। यत्किञ्चित्सामान्यमादाय सर्वत्र सर्वस्यापादयितुं शक्यतया अतिप्रसङ्गापादकत्वात्। न च नित्यस्य मोक्षस्य उपासनारूपधर्मसाध्यत्वानुपपत्तिरिति वाच्यम्। मोक्षो हि ध्वंसविशेषः। देवदत्तस्य हि मोक्षो देवदत्तशरीरतत्प्रागभावासमानकालिको देवदत्तशरीरध्वंसः। मरणमात्रस्य मोक्षत्वव्यावर्तनाय देवदत्तशरीरतत्प्रागभावासमानकालिक इति विशेषणम्। देवदत्तशरीरासमानकालिक इत्युक्ते प्रलयकालिकदेवदत्तशरीरध्वंसेऽतिव्याप्तिः स्यात्। ततः तत्प्रागभावेत्यादिविशेषणम्। तावत्युक्तेऽपि, देवदत्तोपान्त्यशरीरध्वंसो यदि कदाचित् चरमशरीरोत्पत्तिकाले तदुत्पत्त्यनन्तरं वा स्यात् तदा तत्रातिव्याप्तिः, तद्व्यावर्तनाय शरीरेति विशेषणम्। [1]अन्यदीयशरीरतत्प्रागभावसमानकालिके देवदत्तशरीरध्वंसे [2]अव्याप्तिवारणाय [3]आद्यं देवदत्तपदम्। देवदत्तमुक्तिकालिके अन्यदीयशरीरध्वंसे देवदत्तमोक्षत्ववारणाय द्वितीयं देवदत्तपदम्। स च ध्वंसः कर्मजन्योऽपि नित्यो भविष्यतीति उपासनाजन्यत्वे [4]मोक्षस्य अभ्युपगम्यमाने कोऽपि दोषो नास्तीत्यभिप्रेत्य शङ्कते—**अशरीर-**

---

1. मु. अन्यदीयशरीरतत्प्रागभावासमानकालिके देवदत्तशरीरध्वंसे अतिव्याप्तिवारणाय

2. **अव्याप्तीत्यादि** न च ध्वंसस्य अविनाशित्वेन देवदत्तशरीरध्वंसस्य चरममुक्तशरीरध्वंसोत्पत्त्यनन्तरमप्यनुवर्तमानस्य, तदनन्तरं अमुक्तस्याभावात् अन्यदीयशरीरतत्प्रागभावासमानकालिकत्वसम्भवेन, देवदत्तमोक्षलक्षणस्य अव्याप्तिकथनमसङ्गतमिति वाच्यम्। उत्पत्तिक्षणावच्छिन्ने घटे गुणवत्त्वरूपद्रव्यलक्षणस्य अव्याप्तिकथनवत् अन्यदीयशरीरतत्प्रागभावाधिकरणक्षणावच्छिन्ने देवदत्तमोक्षे अव्याप्तिकथनसम्भवात्, चरममुक्तशरीरध्वंसोत्पत्तेः प्राक् देवदत्तशरीरध्वंसे देवदत्तमोक्षव्यवहाराभावप्रसङ्गस्य अव्याप्तिपदेन विवक्षणसम्भवाच्च।

3. **आद्यं**—लक्षणशरीरे आद्यम्। एवं द्वितीयमित्यत्रापि।

4. **मु.** 'मोक्षस्य' नास्ति

**अशरीरत्वमेव धर्मकार्यमिति चेत्, न—तस्य स्वाभाविकत्वात्। 'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्। महान्तं विभुमात्मानं मत्वा धीरो न शोचति' (क. उ. २-२-२१) 'अप्राणो ह्यमनाः शुभ्रः' (मु. उ. २-१-२ 'असङ्गो ह्ययं पुरुषः' (बृ उ ४-३-१५) इत्यादिश्रुतिभ्यः। अत एव अनुष्ठेयकर्मफलविलक्षणं मोक्षाख्यमशरीरत्वं नित्यमिति सिद्धम्।**

**त्वमेवेति। तस्य स्वाभाविकत्वादिति।** अयमाशयः—मोक्षो हि 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतिपर्यालोचनया स्वप्रकाशानन्दस्वरूपब्रह्मात्मकोऽवगम्यते। अतो न शरीरध्वंस एव मोक्षः। सुखस्यैव पुरुषार्थतया ध्वंसस्यापुरुषार्थत्वाच्च। 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इत्यादौ च न शरीरध्वंसो निर्दिश्यते। अपि तु [1]शरीरमिथ्यात्वघटकीभूतो योऽधिष्ठानात्मकोऽत्यन्ताभावः स एव निर्दिश्यते। न च तस्याप्युपासनारूपधर्मसाध्यता सम्भवति, स्वाभाविकत्वात्—इति। स्वाभाविकत्वे अशरीरत्वस्य श्रुतिमुदाहरति—अशरीरमिति। अत्र शरीरावस्थानकाल एव अशरीरत्वप्रतिपादनात् काल्पनिकं सशरीरत्वं स्वाभाविकमशरीरत्वं इति गम्यते। महान्तं—परिच्छेदत्रयशून्यम्। विभुं—सर्वाधिष्ठानतया सर्वपदार्थसंसृष्टम्। शुभ्रः—कलङ्करहितः।

ननु—ब्रह्मस्वरूपस्यापि मोक्षस्य कर्मसाध्यता किं न स्यात्। अनादेरपि हि दुःखप्रागभावस्य प्रायश्चित्तसाध्यतादर्शनात्। न च—प्रायश्चित्ताभावे अग्रिमक्षणे दुःखरूपः तद्ध्वंसः प्रसक्त इति प्रायश्चित्तपरिपाल्यस्वरूपे तत्साध्यत्वे सत्यपि ब्रह्मणो ध्वंसाप्रसक्तेः न तादृश्यपि साध्यता सम्भवतीति—वाच्यम्। तथासति मोक्षस्य ज्ञानसाध्यताऽपि न स्यात्। यदि तु—ज्ञानाभावे 'ब्रह्मस्वरूपभूत आनन्दो मम नास्ति' इति भ्रमसिद्धं तदसत्त्वं प्रसक्तम्, अतो यस्मिन् सति अग्रिमक्षणे यस्य सत्त्वं यदभावे यस्याभावः तत्तस्य साध्यमिति, ज्ञानाभावे ब्रह्मासत्त्वस्य भ्रमसिद्धस्य प्रसक्तेः ज्ञानसाध्यत्वमुपपद्यते—इत्युच्यते, तर्हि तथैव उपासनात्मकधर्मसाध्यता किं न स्यादिति चेत्—

---

1. **शरीरमिथ्यात्वघटकीभूत इति** शरीरतदवभासकालेऽप्यनुवर्तमानः इत्यर्थः। **ध्वंसस्य न तथेति भावः।**

**तत्र, किंचित् परिणामिनित्यं यस्मिन् विक्रियमाणेऽपि तदेवेदमिति बुद्धिः न विहन्यते। यथा पृथिव्यादि जगन्नित्यत्ववादिनाम्। यथा च साङ्ख्यानां गुणाः। इदं तु पारमार्थिकं कूटस्थनित्यं व्योमवत्सर्वव्यापि**

न—एवं हि सति, यथा [1]दुःखोत्पत्तिप्रतिबन्धकतया प्रायश्चित्तपरिपाल्यत्वं तत्प्रागभावस्य एवं मोक्षस्याप्यारोपितासत्त्वनिवृत्त्यात्मना साध्यता वक्तव्या। तत्र च न कर्मापेक्षा, आरोपितपदार्थव्यावृतेरधिष्ठानसाक्षात्कारमात्रायत्तत्वात्।

अमुमर्थं मनसि निधाय उपसंहरति—**अत एवेति**। स्वाभाविकत्वादेवेत्यर्थः। यत्तु—श्रुतिविरोधे सति सामान्यतोदर्शनमात्रेण मोक्षस्य दुःखसंपृक्तत्वाद्यापादनं न सम्भवतीति, तन्न—येन हि वक्ष्यमाणया रीत्या मोक्षस्यापूर्वजन्यत्वेऽनेकश्रुति-विरोधे सत्यपि आद्यव्युत्पत्तिग्रहस्य कार्यस्थल एव दर्शनमात्रेण उपासनापूर्वजन्यत्व-मुपेयते तं प्रति तदापादनं [2]सम्भवत्येव।

ननु नित्यस्य ब्रह्मणो मोक्षरूपस्य उत्पाद्यत्वासम्भवेऽपि प्रकारान्तरेण साध्यता स्यात्—इत्याशङ्कां निराकर्तुं नित्यं वस्तु द्वेधा विभजते—**तत्रेति**। परिणामो नाम उपजनापायशालिन्योऽवस्थाः। **पृथिव्यादीति** पृथिवी कदाचित् तृणवृक्षाद्यवस्थां प्राप्नोति, पुनः तृणादिनाशे मृदवस्थाम्। अवस्थाद्वयेऽपि पृथिवी अनुस्यूतैव। अतः सा परिणामिनित्या। एवं सर्वेषु परिणामिनित्येषु द्रष्टव्यम्। **साङ्ख्यानां गुणा इति**। सत्वरजस्तमांसि गुणाः। ते हि प्रलये साम्यात्मिकां प्रधानावस्थां प्राप्नु-वन्ति, सृष्टौ तु गुणप्रधानभावेन सुखदुःखमोहाद्यात्मकतां प्राप्नुवन्ति, अवस्था-द्वयेऽपि गुणा अनुस्यूता एव। **इदं त्विति**। 'निष्कलं निष्क्रियं शान्तं' 'कूटस्थ-मचलं ध्रुवम्' इत्यादिश्रुतिस्मृतिपर्यालोचनया [3]ब्रह्मणो निर्विकारतया कूटस्थनित्यत्व-मिति भावः। ननु कूटस्थनित्यत्वाभ्युपगमे 'तदात्मानं स्वयमकुरुत' इति श्रुति-विरोध इत्याशङ्क्य, 'वाचारम्भणं विकारो नामधेयम्' इति श्रुत्या कार्यवर्गस्या-

---

1. **दुःखोत्पत्तिप्रतिबन्धकतयेति** दुःखप्रागभावनिवृत्तिप्रतिबन्धकतयेत्यर्थः।

2. **सम्भवत्येवेति** प्रत्यक्षप्राबल्यमाश्रित्य श्रुतिविरुद्धार्थमङ्गीकर्तुः श्रुत्या प्रत्य-क्षबाधोक्तिः असङ्गता इति भावः।

3. मु. 'ब्रह्मणो निर्विकारतया' नास्ति

सर्वविक्रियारहितं नित्यतृप्तं निरवयवं स्वयञ्ज्योतिरस्वभावम्, यत्र धर्माधर्मौ सह कार्येण कालत्रयं च नोपावर्तेते। तदेतदशरीरत्वं मोक्षाख्यम्। 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्। अन्यत्र भूताच्च भव्याच्च' (क. उ. १-२-१४) इत्यादिश्रुतिभ्यः। अतः तद्ब्रह्म, यस्येयं जिज्ञासा प्रस्तुता। तद्यदि कर्तव्यशेषत्वेनोपदिश्येत, तेन च कर्तव्येन साध्यश्चेन्मोक्षोऽभ्युपगम्येत, अनित्य एव स्यात्। तत्रैवं सति यथोक्तकर्मफलेष्वेव तारतम्यावस्थितेष्वनित्येषु कश्चिदतिशयो मोक्ष इति प्रसज्येत। नित्यश्च मोक्षः सर्वैर्मोक्षवादिभिरभ्युपगम्यते। अतो न कर्तव्यशेषत्वेन ब्रह्मोपदेशो युक्तः।

नृततया न पारमार्थिककूटस्थताविरोधः इत्यभिप्रेत्योक्तं—**पारमार्थिकमिति**। कूटस्थनित्यतया न विकार्यतयासाध्यत्वमित्याह—**सर्वविक्रियारहितमिति**। प्राप्यकर्मतानिवृत्तये **व्योमवदिति**। ननु प्रत्यगभिन्ने ब्रह्मणि अशनायादिदोषसम्भवात् दोषापनयनेन संस्कार्यता स्यात्, इत्यत आह—**नित्यतृप्तमिति**। अशनायादिकं परमार्थतो नास्त्येव, आरोपितानां च तेषां निवृत्तिः न उपासनामपेक्षते, अधिष्ठानसाक्षात्कारमात्रायत्तत्वात्। अथ गुणाधानेन संस्कार्यता स्यात्, तत्राह—**निरवयवमिति**। किं प्रकाशाख्यो गुण आधातव्यः, उत ततोऽन्य एव। नाद्यः—स्वयञ्ज्योतिषः स्वतस्सिद्धप्रकाशत्वात्। निरवयवत्वं धर्मरहितत्वम्, ततश्च नान्योऽपि गुण आधातुं शक्यत इति भावः। यत्रेत्यादिना 'अन्यत्र धर्मात्' इति श्रुतिर्व्याख्याता। धर्मात् तत्कार्याच्च अन्यत्। एवं अधर्मात्तत्कार्याच्चान्यत्। तदिदमुक्तम्—**यत्र धर्माधर्मौ सहकार्येणेति**। कृताकृतं–वर्तमानम्। भव्यं–भविष्यत्। तदिदमुक्तम्—**कालत्रयं चेति**। स्वपक्षे सूत्रस्वारस्यमाह—**अत इति**। यत उपासनासाध्यो मोक्षो न भवति, अतः सूत्रकृता ब्रह्मैव विचार्यतया प्रतिज्ञातम्, उपासनासाध्यत्वे तु मोक्षस्य तदनुष्ठानोपयोगितया प्राधान्येन तद्विचार एव प्रतिज्ञातस्स्यादिति [1]भावः।

एवमुपासनासाध्यत्वे मोक्षस्यानित्यत्वादिदोषजातमापाद्य, उपासनाविषयकापूर्वसाध्यत्वाभ्युपगमेन [2]कालान्तरभाविता मोक्षस्य वक्तव्या। तथा च ज्ञानाव्यवहितो-

---

1. **भाव इति** यतः उपासनासाध्यो मोक्षो न भवति अतः यस्येयं जिज्ञासा प्रस्तुता तत् ब्रह्म—ब्रह्मैव, न तु ब्रह्मोपासनं—इति भाष्यार्थ इति भावः।

2. मु. अभ्युपगमे काला०

अपि च 'ब्रह्म वेद ब्रह्मैव भवति' (मु. उ. ३-२-९) 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' (मु. उ. २-२-८)। 'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन' (तै. उ. २-९)। 'अभयं वै जनक प्राप्तोऽसि' (बृ. उ. ४-२-४)। 'तदात्मानमेवावेत् अहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्' (बृ. उ १-४-१०)। 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' (ई. उ. ७) इत्येवमाद्याः श्रुतयो ब्रह्मविद्यानन्तरमेव मोक्षं दर्शयन्त्यो मध्ये कार्यान्तरं वारयन्ति। तथा 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च' (बृ. उ. १-४-१०) इति ब्रह्मदर्शनसर्वात्मभावयोर्मध्ये कर्तव्यान्तरवारणाय उदाहार्यम्, यथा तिष्ठन्गायतीति तिष्ठतिगायत्योर्मध्ये तत्कर्तृकं कार्यान्तरं नास्तीति गम्यते।

'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि'

तत्क्षणे मोक्षप्रतिपादकानि वचनानि विरुध्येरन्–इत्याह—अपि चेति। परावरे–उत्कृष्टनिकृष्टसर्ववस्त्वात्मके। तदात्मानमेवावेदिति। ब्रह्मणस्सर्वात्मत्वं किंविषयकज्ञानात् इत्यभिप्रायेण 'किमु तद्ब्रह्मावेत् यस्मात् तत्सर्वमभवत्' इति पृष्टे, तदात्मानमेवावेदित्युत्तरम्। तद्धैतदिति। तत्–ब्रह्म एतत्–प्रत्यग्रूपं पश्यन् वामदेवः ऋषिः 'अहं मनुरभवम्' इत्यादिसूक्तं सर्वात्मत्वप्रकाशकं प्रतिपेदे ह—इत्यर्थः। अनेन सूक्तेन वामदेवस्य सर्वात्मत्वं प्रकाश्यते। ततश्च प्रत्यगभिन्नब्रह्मज्ञानेन अविद्यायां निवृत्तायां स्वस्य सर्वात्मत्वं साक्षात्कृत्य तत्प्रकाशकं सूक्तं स्मृतवानिति पर्यवसितोऽर्थः। तिष्ठतिगायत्योर्मध्ये। [1]तदर्थयोर्मध्ये इत्यर्थः।

एवं अपूर्वद्वारकत्वे मोक्षस्योच्यमाने अव्यवहितफलताप्रतिपादकवचनविरोधमुपन्यस्य, अविद्यानिवृत्तिद्वारताप्रतिपादकवचनविरोधमुपन्यस्यति–त्वं हि नः पितेति।

---

1. 'तिष्ठतिगायत्योः' इति श्तिपा निर्देशात् धातुस्वरूपमुक्तं भवति, अविवक्षितार्थस्य धातुस्वरूपस्य च न प्रकृतोपयोगसम्भवः, अतः धात्वर्थो लक्षणीय इत्याशयेनाह—तदर्थयोरिति। प्रसिद्धा चेयं लक्षणा 'इतिकर्तव्यताऽविधेः यजतेः पूर्ववत्त्वम्' इति जैमिनिसूत्रे यजतिशब्दस्य, 'ईक्षतेर्नाशब्दम्' इति बादरायणसूत्रे ईक्षतिशब्दस्य। अतो निरूढेयं लक्षणेति अयं प्रयोगोऽनवद्यः।

(प्र. उ. ६-८) 'श्रुतं ह्येव मे भगवद्दृशेभ्यः तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवान् शोकस्य पारं तारयतु' (छा. उ. ७-१-३) 'तस्मै मृदितकषायाय तमसस्पारं दर्शयति भगवान् सनत्कुमारः' (छा. उ. ७-२६-२) इति चैवमाद्याः श्रुतयो मोक्षप्रतिबन्धनिवृत्तिमात्रमेव आत्मज्ञानस्य फलं दर्शयन्ति।

तथा च आचार्यप्रणीतं न्यायोपबृंहितं सूत्रम्—दुःखजन्मप्रवृत्तिदोष-मिथ्याज्ञानानां उत्तरोत्तरापाये तदनन्तरापायात् अपवर्गः' (न्या. सू. १-१-२) इति। मिथ्याज्ञानापायश्च ब्रह्मात्मैकत्वविज्ञानाद्भवति।

भारद्वाजादीनां षण्णामृषीणां ब्रह्मोपदेशानन्तरं गुरुं प्रति प्रार्थनावचनमेतत्। परं—पुनरावृत्तिशून्यम्। पारं—अविद्याविनिर्मुक्तम्। तारयसि—प्रापयसि। अतः अत्यन्तहितकारितया त्वमेवास्माकं पितेत्यर्थः। **श्रुतं ह्येव म इति**। इदं ब्रह्म-विद्यार्थमुपसन्नस्य नारदस्य सनत्कुमारं प्रति प्रार्थनावचनं उपक्रमगतम्। **शोकं**—शोकनिदानभूतं तमः इत्यर्थः। तरति—अतिक्रामति—नाशयतीत्यर्थः। **शोकस्य पारं तारयत्विति**। शोकातीतमात्मानं प्रापयतु इत्यर्थः। **तस्मा इति**। तत्रैवेदमुप-संहारवचनम्। मृदितकषायाय—निरस्तान्तःकरणदोषाय।

मोक्षे अविद्यानिवृत्तिः द्वारभूतेत्यत्र वृद्धसम्मतिमाह—**दुःखजन्मेति**। मिथ्याज्ञानं अनात्मसु देहादिषु आत्मत्वज्ञानम्, तस्य कार्यं रागादिः दोषः, रागादेः पुण्यपापानुकूला प्रवृत्तिः, प्रवृत्तेः कार्यं तासु तासु योनिषु जन्म, तत्कार्यं दुःखम्। [1]अत्र उत्तरोत्तरत्वं सूत्रनिर्देशक्रमानुसारेण द्रष्टव्यम्। ततश्च कारणनाशात् कार्यनाशः। मिथ्याज्ञाननिवृत्तिश्च एतत्सूत्रप्रणेतुस्तार्किकवृद्धस्य मते षोडशपदार्थतत्त्वज्ञानात् भवति, सिद्धान्ते तु प्रत्यगभिन्नब्रह्मसाक्षात्कारात् भवतीत्याह—**मिथ्याज्ञानापाय-श्चेति**।

किञ्च—येन उपासनमेव मोक्षाय विधीयत इत्युच्यते तेनेदं वक्तव्यम्। *किमिदं जीवब्रह्मणोरभेदेनोपासनं सम्पद्रूपम्? यथा [2]ब्रह्मणः मनसि विश्वदेवोपासनम्।*

---

1. मु. अत्रोत्तरत्वं

2. ब्रह्मणः—यज्ञे ऋत्विग्भूतस्य ब्रह्मणः।

तस्य [1]सम्पद्रूपता च कर्मसम्बद्धोपासनारूपतया। कर्मसम्बद्धोपासनं हि 'अथ सम्पदः' इति श्रुतिव्याख्यानावसरे बृहदारण्यकभाष्ये तद्वार्तिके च वर्णितं सम्पत्त्वेन। अल्पेषु कर्मस्वग्निहोत्रादिषु शास्त्रानुसारेण महतां कर्मणां बुद्ध्या सम्पादनं महतां कर्मणां यत् फलं तत्कामनया क्रियमाणं—सम्पदुपासनम्। अथवा—महान्ति अश्वमेधादीनि कर्माणि कार्त्स्न्येनानुष्ठातुमशक्तानां सम्भवदङ्गसाहित्येनानुतिष्ठतां अङ्गलोपकृतवैगुण्यपरिहारार्थं [2]शास्त्रानुसारेण फलसिद्धये तदङ्गाश्रितं क्रियमाणमुपासनं साङ्गस्य कर्मणो यत् फलं तत्फलसम्पादकतया सम्पन्नामकं भवतीति।

तथा च वार्तिकं—

'फलवत्कर्मणां क्वापि किञ्चित्सामान्यसंश्रयात्।
सम्पत्तिर्महतां सम्पत् अल्पीयःकर्मसूच्यते॥

यदि वा तत्फलस्यैव किञ्चित्सामान्यवर्त्मना।
सम्पादनं भवेत् सम्पत् अग्निहोत्रादिकर्मणि॥

नातिभारोऽस्ति नो बुद्धेः शास्त्रं चेत् तत्परं भवेत्।
विदुषां श्रेयसेऽतोऽध्वा न क्वचित् प्रतिहन्यते॥' इति।

ततश्च, 'याज्ञवल्क्येति होवाच कतिभिरयमद्य ब्रह्मा यज्ञं दक्षिणतो देवताभिर्गोपायतीति एकयेति कतमा सेकेति मन एवेति अनन्तं वै मनः अनन्ता विश्वेदेवाः अनन्तमेव स तेन लोकं जयति' [ बृ. उ. ३-१-९ ] इति वचनेन कर्मगोपनसाधने ब्रह्मणो मनसि विहितमुपासनं यथा सम्पद्रूपं, तथा कर्मकर्तृतया कर्माङ्गभूते आत्मनि 'आत्मा वा अरे द्रष्टव्यः' इति वचनेन विधीयमानमुपासनं सम्पद्रूपम्।

अथ वा अध्यासरूपम्। कर्मसम्बन्धं विहायैव अन्यस्मिन्नन्यदृष्टिरध्यासः। यथा 'मनो ब्रह्म' इत्यादिना विधीयमानं अध्यासरूपं, एवं 'तदिदमप्येतर्हि य एवं वेद अहं ब्रह्मास्मीति' इति विधीयमानं अध्यासरूपम्। 'आरोप्यप्रधाना सम्पत्, अधिष्ठानप्रधानोऽध्यासः' इति अध्याससम्पदोर्विभागः [3]कल्पतरौ दर्शितः।

---

1. सम्पद्रूपता—सम्पत्पदार्थता।
2. शास्त्रानुसारेण क्रियमाणं इति सम्बन्धः।
3. कल्पतरौ दर्शित इति भाष्यवार्तिकयोः प्रतिपादितं सम्पदध्यासयोर्विभागं

**न चेदं ब्रह्मात्मैकत्वविज्ञानं संपद्रूपम्। यथा 'अनन्तं वै मनोऽनन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयति' (बृ. उ. ३-१-९) इति।**

अथ वा विशिष्टक्रियानिमित्तम्। यथा—वायुर्वाव संवर्गः यदा वा अग्निरुद्वायति वायुमेवाप्येति, यदा सूर्योऽस्तमेति वायुमेवाप्येति, यदा चन्द्रोऽस्तमेति वायुमेवाप्येति, यदाऽऽप उच्छुष्यन्ति वायुमेवापियन्ति, वायुर्ह्येवैतान् सर्वान् संवृङ्क्ते इत्यधिदैवतम्, अथाध्यात्मं—प्राणो वाव संवर्गः स यदा स्वपिति प्राणमेव वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणम्मनः प्राणो ह्येवैतान् सर्वान् संवृङ्क्ते इति, तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु' इति, प्रलयविशेषे अग्न्यादिनिवृत्तावपि वायोर्विद्यमानतया स्वापकाले वागादिनिवृत्तावपि प्राणस्य विद्यमानतया तयोः 'वृजीवर्जने' इति धातुनिष्पन्नेन [1]'संवृङ्क्ते' इत्यनेन वर्जनापरपर्यायसंहरणक्रियाकर्तृत्वेन संवर्गत्वं निरूप्य तेन रूपेण ध्येयत्वं विवक्ष्यते, तथा 'अहम्ब्रह्मास्मीत्यादिवाक्यैः शरीरादिबृम्हणरूपया क्रियया जीवस्य ब्रह्मत्वेनोपासनम्।

अथ वा 'पत्न्यवेक्षितमाज्यं भवति' इत्यादिवाक्यैर्विधीयमानमीक्षणं आज्यसंस्कारतया यथा कर्माङ्गं, तथा आत्मा वा अरे द्रष्टव्य इत्यादिवाक्यैर्विधीयमानमात्मदर्शनं क्रतुकर्तृसंस्कारभूतम्।

तत्र—अनारभ्याधीतस्यात्मज्ञानस्य यथा क्रतुकर्तृसंस्कारकतया क्रत्वङ्गत्वं नास्ति तथा 'पुरुषार्थोऽतश्शब्दात्' इत्यधिकरणे स्पष्टं भविष्यति[2]।

सम्पत्पक्षेऽध्यासपक्षे च आरोपितो जीवब्रह्मणोरभेदः। विशिष्टक्रियानिमित्तत्वपक्षे च न कथञ्चिदपि जीवस्य परमात्माभेदः, अपि तु यत् शरीरादिपरिणमयितृत्वं जीवस्य तत्त्वेन उपासनम्। जीवे ब्रह्मपदसामानाधिकरण्यस्य परिणामात्मकबृम्हणक्रियाप्रयोजककर्तृत्वप्रयुक्तत्वात्।

तेषु च सर्वेषु गतिसामान्यादिरूपतात्पर्यलिङ्गोपबृम्हितजीवब्रह्माभेदप्रतिपत्तिपरवाक्यविरोधः तज्ज्ञानाच्चाविद्यानिवृत्तिद्वाराब्रह्मात्मतावस्थितिरूपफलप्रतिपादक-

---

सिद्धं कृत्वैव सम्पदुपासनानामारोप्यप्राधान्यं अध्यासशब्दितानां प्रतीकोपासनानां अधिष्ठानप्राधान्यञ्च अनादिवृद्धव्यवहारसम्प्रदायसिद्धं कल्पतरौ प्रदर्शितं इति ध्येयम्।

1. मु. वृङ्क्ते
2. आ. 'इति' इत्यधिकम्

न च अध्यासरूपम् । यथा 'मनो ब्रह्मेत्युपासीत' (छा. उ. ३-१८-१) 'आदित्यो ब्रह्मेत्यादेशः' (छा. उ. ३-१९-१) इति च मन-आदित्यादिषु ब्रह्मदृष्ट्यध्यासः ।

नापि विशिष्टक्रियायोगनिमित्तं 'वायुर्वाव संवर्गः' 'प्राणो वाव संवर्गः' (छा. उ. ४ ३-१) इतिवत् ।

नाप्याज्यावेक्षणादिकर्मवत्कर्माङ्गसंस्काररूपम् ।

संपदादिरूपे हि ब्रह्मात्मैकत्वविज्ञानेऽभ्युपगम्यमाने 'तत्त्वमसि' (छा. उ. ६-८ ७) 'अहं ब्रह्मास्मि' (बृ. उ. १४-१०) 'अयमात्मा ब्रह्म' (बृ. उ. २-५-१९) इत्येवमादीनां वाक्यानां ब्रह्मात्मैकत्ववस्तुप्रतिपादनपरः पदसमन्वयः पीड्येत ।

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः' (मु. उ. २-२-८) इति चैवमादीनि अविद्यानिवृत्तिफलश्रवणानि उपरुध्येरन् ।

'ब्रह्म वेद ब्रह्मैव भवति' (मु. उ. ३-२-९) इति चैवमादीनि तद्भावापत्तिवचनानि संपदादिरूपत्वे न साम‍ञ्जस्येनोपपद्येरन् ।

तस्मात् न संपदादिरूपं ब्रह्मात्मैकत्वविज्ञानम् ।

अतो न पुरुषव्यापारतन्त्रा ब्रह्मविद्या । किं तर्हि, प्रत्यक्षादिप्रमाणविषयवस्तुज्ञानवत् वस्तुतन्त्रैव । एवंभूतस्य ब्रह्मणः तज्ज्ञानस्य [वा][च] न कयाचिद्युक्त्या शक्यः कार्यानुप्रवेशः कल्पयितुम् ।

वाक्यविरोधश्च स्यात् इत्याह—न चेदं ब्रह्मात्मैकत्वविज्ञानं सम्पद्रूपमित्यादिना न साम‍ञ्जस्येन उपपद्येरन्नित्यन्तेन । हृदयग्रन्थिरिति । 'हृदि ह्येष आत्मा [प्र. उ. ३-६ ] 'तस्यैतदेव निरुक्तं हृद्ययमिति तस्माद्धृदयं [ छा. उ. ८-३-३ ] इति श्रौतनिर्वचनानुसारेण हृच्छब्दप्रतिपाद्यमनोविशिष्ट आत्मा हृदयशब्दार्थः । ततश्च अन्तःकरणैक्याध्यासनापन्न आत्मैव कर्तृत्वादिसम्पादकतया ग्रन्थिः ।

न पुरुषव्यापारतन्त्रेति । उपासनात्मकं हि ज्ञानं यागादिवत् पुरुषकृतिसाध्यम्, न तु प्रमाणज्ञानम् । अनाहार्यप्रमावत् तस्य पुरुषकृत्यन्वयव्यतिरेकानु-

न च विदिक्रियाकर्मत्वेन कार्यानुप्रवेशो ब्रह्मणः । 'अन्यदेव तद्विदितादथो अविदितादधि' (के. न. उ. १-३) इति विदिक्रियाकर्मत्वप्रतिषेधात्, 'येनेदं सर्वं विजानाति तं केन विजानीयात्' (बृ. उ. २-४-१३) इति च । तथा उपास्तिक्रियाकर्मत्वप्रतिषेधोऽपि भवति—'यद्वाचाऽनभ्युदितं

विधानाभावात् । ज्ञानं द्विविधं आहार्यमनाहार्यं च । उभयमपि प्रमाणरूपं अप्रमाणरूपं च । 'योषा वाव गौतमाग्निः' इति अप्रमाणरूपमाहार्यज्ञानम् । यथावस्थितदेवतास्वरूपध्यानं तु प्रमाणरूपमाहार्यम् । उभयविधमप्याहार्यं पुरुषकृतिसाध्यम् । अनाहार्यभ्रमरूपं तु पुरुषकृत्यसाध्यमपि दोषमात्रायत्तं न वस्तुसत्तामपेक्षत इति न वस्तुतन्त्रम् । घटादिगोचरप्रमाणज्ञानं तु अनाहार्यतया न पुरुषकृतिसाध्यम् । किं तु यादृशमाकारमुल्लिखति तस्य व्यावहारिकीं सत्तां अपेक्षत इति वस्तुतन्त्रमित्युच्यते । एवं ब्रह्मज्ञानमपि [1]अनाहार्यज्ञानकरणत्वेन क्लृप्तात् शब्दप्रमाणात् जायमानं असति बाधे प्रमाणरूपं यादृशमाकारमुल्लिखति तस्य सत्तामपेक्षत इति वस्तुतन्त्रमित्युच्यते । अतो न प्रमाणरूपं ब्रह्मज्ञानं विधेयमिति न 'प्रतिपत्तिविधिविषयतया शास्त्रेण ब्रह्म समर्प्यते' इति शक्यं वक्तुम् ।

एवं 'विधेयज्ञानविषयतया शास्त्रेण ब्रह्म समर्प्यते' इति यत् पूर्वपक्षिणोक्तं तत्र प्रमाणज्ञानं विधातुं न शक्यत इत्युक्तम् । ज्ञानविषयत्वमपि यदि वृत्तिप्रतिफलितचैतन्यविषयत्वं तदा [श्रुति] विरोध इति वक्तुं तं पक्षमुपक्षिप्य निषेधति—**न चेति** । अविदितादधि—अविदितादन्यत् । ननु—न 'प्रमाणज्ञानं विधेयं' इत्युच्यते । किं तु, निदिध्यासितव्यइत्यादिभिर्वाक्यैः उपासनारूपं ज्ञानमेव विधेयम्, तच्छेषतया च ब्रह्म प्रतिपाद्यते इति—इत्याशङ्क्य; उपक्रमाद्यवधृतब्रह्मप्राधान्यनिर्वाहाय कृत्स्नोपनिषद्वाक्यं ब्रह्मप्रधानमेव, 'निदिध्यासितव्यः' इत्यादिवाक्यैस्तु ब्रह्मसाक्षात्कारोपयोगितयैव उपासना विधीयते, तस्याश्च साक्षात्कारद्वारा ब्रह्मण्येव शेषतया न ब्रह्मप्राधान्यविरोधिता—इत्यमुमर्थं मनसि निधाय, उपासनाविषयत्वमपि यद्युपासनावृत्त्यभिव्यक्तचैतन्यविषयत्वं तदा श्रुतिविरोधमाह—**तथोपास्तिक्रियेति** ।

---

1. **अनाहार्येत्यादि** 'घटाभाववद्भूतलं घटवत्' इति वाक्यात् शाब्दबोधो न जायते, अयोग्यतानिश्चयेन प्रतिबन्धात्, एवं बाधकालेऽपि इति भावः ।

येन वागभ्युद्यते' इत्यविषयत्वं ब्रह्मण उपन्यस्य, 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' (केन. उ. १-४) इति ।

अविषयत्वे ब्रह्मणः शास्त्रयोनित्वानुपपत्तिरिति चेत्, न—अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य । न हि शास्त्रं इदंतया विषयभूतं ब्रह्म प्रतिपिपादयिषति । किं तर्हि, प्रत्यगात्मत्वेनाविषयतया प्रतिपादयत् अविद्याकल्पितं वेद्यवेदितृवेदनादिभेदं अपनयति । तथा च शास्त्रम्—'यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम्' (के. उ. २-३) 'न दृष्टेर्द्रष्टारं पश्येः' 'न विज्ञातेर्विज्ञातारं विजानीयाः, (बृ. ३-४-२) इति चैवमादि । अतः अविद्याकल्पितसंसारित्वनिवर्तनेन नित्यमुक्तात्मस्वरूपसमर्पणात् न मोक्षस्यानित्यत्वदोषः ।

'न तत्र चक्षुर्गच्छति न वागच्छति नो मनः । न विद्मो न विजानीमो यथैतदनुशिष्यात्' [1]इतिपूर्ववाक्येन अविषयत्वं ब्रह्मण उपन्यस्य ।

ज्ञानाविषयत्वे शास्त्रप्रमाणकत्वं ब्रह्मणो न स्यात्, शास्त्रजन्यज्ञानविषयत्वं हि शास्त्रप्रमाणकत्वं—इति शङ्कते—अविषयत्व इति । शास्त्रजन्यवृत्तिप्रतिफलितचैतन्याविषयत्वेऽपि अविद्यानिवृत्त्युपयोगितया शास्त्रजन्यवृत्तिविषयत्वमुपेयते, अतो न विरोध इति परिहरति—न—अविद्याकल्पितेति । यस्यामतमिति । अत्र मतत्वामतत्वादीनां विरोधपरिहारार्थं, मननवृत्तिप्रतिफलितचैतन्याविषयत्वं अमतत्वप्रतिपादनालम्बनं मननवृत्तिविषयत्वं मतत्वप्रतिपादनालम्बनं व्याख्येयम् । एवमविज्ञातत्वादावपि । एवं च यत् पूर्वपक्षिणोक्तं—उपासनासाध्यस्यापि मोक्षस्य अमृतत्वश्रुतिबलादेव नित्यता भविष्यतीति, तन्न—नित्यस्यापि मोक्षस्य कण्ठचामीकरन्यायेन अप्राप्तत्वभ्रमव्युदासेन साध्यत्वोपपत्तौ, 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति श्रुतिपरिगृहीतस्य 'यत् कृतकं तदनित्यं' इति न्यायस्य बाधं विनैव अमृतत्वश्रुतिनयनोपपत्तौ च तद्विरोधस्यानुचितत्वात्, इत्यभिप्रेत्याह—अत इति ।

---

1. इतिपूर्ववाक्येनेति इत्यादिना 'यद्वाचाऽनभ्युदितं येन वागभ्युद्यते' इत्यन्तेन पूर्ववाक्येन इत्यर्थः । यद्वाचेत्यादिवाक्यस्यापि हि अविषयत्वप्रतिपादकत्वमुक्तं कल्पतरौ, अत्रापि प्रतर्दनाधिकरणे ।

यस्य तु उत्पाद्यो मोक्षः, तस्य मानसं वाचिकं कायिकं वा कार्यं अपेक्षत इति युक्तम्। तथा विकार्यत्वे च। तयोः पक्षयोः मोक्षस्य ध्रुवमनित्यत्वम्। न हि दध्यादि विकार्यं उत्पाद्यं वा घटादि नित्यं दृष्टं लोके। न च आप्यत्वेनापि कार्यापेक्षा, स्वात्मस्वरूपत्वे सति अनाप्यत्वात्। स्वरूपव्यतिरिक्तत्वेऽपि ब्रह्मणो नाप्यत्वं, सर्वगतत्वेन नित्याप्तस्वरूपत्वात् सर्वेण ब्रह्मण आकाशस्येव।

नापि संस्कार्यो मोक्षः, येन व्यापारमपेक्षेत। संस्कारो हि नाम संस्कार्यस्य गुणाधानेन वा स्यात् दोषापनयनेन वा। न तावत् गुणाधानेन संभवति, अनाधेयातिशयब्रह्मस्वरूपत्वान्मोक्षस्य। नापि दोषापनयनेन, नित्यशुद्धब्रह्मस्वरूपत्वान्मोक्षस्य। स्वात्मधर्म एव सन् तिरोभूतो मोक्षः क्रियया आत्मनि संस्क्रियमाणेऽभिव्यज्यते, यथा आदर्शे निघर्षणक्रियया संस्क्रियमाणे भास्वरत्वं धर्मः इतिचेत्, न – क्रियाश्रयत्वानुपपत्तेरात्मनः। यदाश्रया क्रिया तमविकुर्वती नैव आत्मानं लभते। यद्यात्मा स्वाश्रय-

इदंतुपारमार्थिकमित्यादिना यत् ब्रह्मस्वरूपस्य मोक्षस्य उत्पाद्यादिचतुर्विधद्रव्यविलक्षणत्वमुक्तं तत् प्रपञ्चयति—**यस्य तूत्पाद्यो मोक्ष** इत्यादिना **क्रियाया गन्धमात्रस्यापि अनुप्रवेश इह नोपपद्यते** इत्यन्तेन। **गुणाधानेनेति**। यथा मुखस्य ताम्बूलचर्वणादिना। **दोषापनयनेनेति**। यथा स्नानादिना शरीरादेः। परमार्थगत्या ब्रह्मणि गुणाधानं न सम्भवति, वस्तुतो निर्धर्मकत्वादित्याह—**अनाधेयातिशयेति**। परमार्थगत्या ब्रह्मणि दोषाभावात् दोषापनयनमपि न सम्भवति। तदाह—**नित्यशुद्धेति**। ननु निर्धर्मकस्यापि ब्रह्मणः अपारमार्थिकदोषापनयनेन स्वरूपाभिव्यक्तिरूपः संस्कारः सम्भवतीति शङ्कते—**स्वात्मधर्म एव सन्निति**। जन्यधर्मानाश्रयत्वेऽपि नित्यो धर्मो मोक्षाख्यो भविष्यतीत्यभिप्रायेण धर्मशब्दः, स्वरूपपरो वा। आरोपितावरणस्य ज्ञानेनैव निवृत्तेः क्रियापेक्षैव नास्ति। अपेक्ष्यमाणाऽपि अविकार्यब्रह्मगता न सम्भवति। अन्याश्रया तु क्रिया अन्यत्र मलनिवृत्तौ नोपयुज्यते। यद्यपि इष्टकाचूर्णस्य दर्पणेन संयोगविभागप्रचयानुकूलो व्यापारो हस्तचालनतदनुकूलयत्नादिरूपोऽन्यगतोऽपि भवति, तथापि मलापकर्षणे पुरुषव्यापारस्य द्वारीभूतो यः संयोगविभागप्रचयः स दर्पणगतो भवत्येव, नैवं ब्रह्मणि सम्भवतीति परिहरति—**न–क्रियाश्रयत्वानुपपत्तेरिति**।

क्रियया विक्रियेत, अनित्यत्वमात्मनः प्रसज्येत । 'अविकार्योऽयमुच्यते' इति चैवमादीनि वाक्यानि बाध्येरन् । तच्चानिष्टम् । तस्मात् न स्वाश्रया क्रिया आत्मनः संभवति । अन्याश्रयायास्तु क्रियाया अविषयत्वात् न तया आत्मा संस्क्रियते ।

ननु देहाश्रयया स्नानाचमनयज्ञोपवीतधारणादिकया क्रियया देही संस्क्रियमाणो दृष्टः, न—देहादिसंहतस्यैव अविद्यागृहीतस्यात्मनः संस्क्रियमाणत्वात् । प्रत्यक्षं हि स्नानाचमनादेः देहसमवायित्वम् । तया देहाश्रयया तत्संहत एव कश्चित् अविद्यया आत्मत्वेन परिगृहीतः संस्क्रियत इति युक्तम् । यथा देहाश्रयचिकित्सानिमित्तेन धातुसाम्येन तत्संहतस्य तदभिमानिन आरोग्यफलं, 'अहमरोगः' इति यत्र बुद्धिरुत्पद्यते, एवं स्नानाचमनयज्ञोपवीतधारणादिना 'अहं शुद्धः संस्कृतः' इति यत्र बुद्धिरुत्पद्यते स संस्क्रियते । स च देहेन संहत एव । तेनैव ह्यहंकर्त्रा अहंप्रत्ययविषयेण प्रत्ययिना सर्वाः क्रिया निर्वर्त्यन्ते । तत्फलं च स एवाश्नाति, 'तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति (मु. उ. ३-१-१) इति मन्त्रवर्णात् । 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' (क. उ. १-३-४) इति च । तथा 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च'

देहगतया क्रियया देहिनः संस्कारदर्शनात्, अन्यगतया क्रियया अन्यस्य संस्कारो न सम्भवतीति न नियन्तुं शक्यम्—इत्याशङ्क्य, तत्राप्यन्तःकरणाध्यासविशिष्टस्यैव स्नानाचमनादिप्रयोजकयत्नाश्रयतया देहैक्याध्यासमापन्नस्य च स्नानाद्याश्रयतया प्रत्यक्षसिद्धतया नोक्तदोष इत्याह—नन्वित्यादिना । विशिष्टस्यैव क्रियाजन्यफलभोक्तृत्वे श्रुतिमाह—तयोरिति । जीवपरमेश्वरयोर्मध्ये जीवः कर्मफलं पिप्पलशब्दोदितमत्ति, ईश्वरस्तु शुद्धसाक्षिरूपः परमार्थतया अभुञ्जान एव अभिचाकशीति—स्वप्रकाशतया वर्तते । भोक्तेत्याहुरिति । इतिः द्वितीयार्थे । भोक्तारमाहुरित्यर्थः । आत्मेन्द्रियेत्यत्र आत्मशब्दः शरीरपरः ।

एको देव इति । यथा आकाशादिः निबिडेषु भित्त्यादिषु अन्तरननुप्रविश्यैव सर्वभूतसंयोगितामात्रेण व्यापको भवति नैवं परमात्मा । अपि तु सर्वेषां

**(श्वे. उ ६·११) इति, 'स पर्यगाच्छुक्रमकायमव्रणमस्नाविरंशुद्धमपाप-विद्धम्' (ई. उ. ८) इति च एतौ मन्त्रौ अनाधेयातिशयतां नित्यशुद्धतां च ब्रह्मणो दर्शयतः। ब्रह्मभावश्च मोक्षः। तस्मात् न संस्कार्योऽपि मोक्षः।**

भूतानां अन्तरात्मा। सर्वाधिष्ठानस्य [1]परमात्मनः अन्तर्बहिः सर्वत्र सम्बन्धोऽस्तीति भावः। सर्वभूताधिवासत्वं सर्वपरिपालकत्वम्, तच्च पुण्यपापात्मककर्मफलव्यव-स्थापकतया—इति प्रतिपादयितुं **कर्माध्यक्ष इति**। य एको देवः सर्वव्यापि-त्वादिधर्मविशिष्टः, स एव जीवरूपेण सर्वेषु भूतेषु गूढ इति योजना। ईश्वररूपेण सर्वव्यापित्वादयो [2]ये गुणाः प्रसञ्जिताः तन्निषेधार्थं **निर्गुण इति**। जीवरूपेण यत् सर्वभूतगूढत्वं—सर्वभूताभिमानशालित्वं प्रसक्तं तद्व्यावृत्त्यर्थं **साक्षीति**। तस्य व्याख्या **चेता केवल इति**। अभिमानरहित एव सन् तदवभासक इत्यर्थः। **स पर्यगादिति**। शुक्रमित्यादौ प्रथमार्थे द्वितीया। शुक्राद्यात्मकः सः पर्यगात्—व्याप्तवानित्यर्थः। शुक्रः-स्वप्रकाशः। अस्नाविरं-स्नावाः सिराः, तद्रहितम्। **अव्रणं** अस्नाविरं इत्येव कायनिषेधे सिद्धे पुनस्तन्निषेधो[3] लीलाधृतदिव्यविग्रहस्यापि अनृतता-प्रतिपादनार्थः। तथा च विश्वरूपधरस्य परमात्मनो वचनम्—

'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद।
सर्वभूतगुणैर्युक्तं मैवं मां द्रष्टुमर्हसि॥' [शान्तिपर्व. ३३९-४५] इति।

शरीरोपादानभूताविद्याराहित्याय **शुद्धमिति**। [4]तन्निमित्तराहित्याय **अपापविद्ध-मिति**। यत् पूर्वमुक्तं अनाधेयातिशयत्वं [5]निर्दोषत्वं च ब्रह्मणः, तत्रैतौ मन्त्रौ प्रमाणमित्याह—**इति चैतौ मन्त्राविति**।

---

1. मु. आत्मनः
2. मु. 'ये' नास्ति
3. **तन्निषेधः**—'अकायं' इति शरीरनिषेधः।
4. **तन्निमित्तेति** तच्छब्दार्थः शरीरम्।
5. मु. निर्विशेषत्वं

अतोऽन्यत् मोक्षं प्रति क्रियानुप्रवेशद्वारं न शक्यं केनचिद्दर्शयितुम्। तस्मात् ज्ञानमेकं मुक्त्वा क्रियाया गन्धमात्रस्याप्यनुप्रवेश इह नोपपद्यते।

ननु ज्ञानं नाम मानसी क्रिया। न—वैलक्षण्यात्। क्रिया हि नाम सा, यत्र वस्तुस्वरूपनिरपेक्षैव चोद्यते पुरुषचित्तव्यापाराधीना च। यथा 'यस्यै देवतायै हविर्गृहीतं स्यात् तां मनसा ध्यायेद्वषट्करिष्यन्' इति, 'सन्ध्यां मनसा ध्यायेत्' (ऐ. ब्रा. ३-८ १) इति चैवमादिषु। ध्यानं चिन्तनं यद्यपि मानसं, तथाऽपि पुरुषेण कर्तुमकर्तुं अन्यथा वा कर्तुं शक्यं, पुरुषतन्त्रत्वात्। ज्ञानं तु प्रमाणजन्यम्, प्रमाणं च यथाभूतवस्तुविषयम्, अतो ज्ञानं कर्तुमकर्तुमन्यथा वा कर्तुमशक्यम्। केवलं वस्तुतन्त्रमेव तत्। न चोदनातन्त्रम्, नापि पुरुषतन्त्रम्। तस्मात् मानसत्वेऽपि ज्ञानस्य महद्वैलक्षण्यम्। यथा च 'पुरुषो वाव गौतमाग्निः' 'योषा वाव

पूर्वमात्मनो वृत्तिप्रतिफलितचैतन्याविषयत्वेऽपि यत् वृत्तिविषयत्वमुक्तं तदत्रोपसंहृतं ज्ञानमेकं मुक्त्वेति। तत्र लब्धावसरः—ध्यानान्तर्गतानां मानसवृत्तीनां ज्ञानरूपाणां क्रियात्वेन यथा विधेयता एवं प्रमाणवृत्तीनामपि किं न स्यात्, ततश्च ज्ञानविधिशेषतयैव ब्रह्म प्रतिपाद्यते—इति शङ्कते—ननु ज्ञानमिति। यथा हि ध्यानान्तर्गतवृत्तीनां प्रमाणवृत्तीनां च मानसत्वाविशेषेऽपि एकत्र वस्त्वनपेक्षा अन्यत्र तदपेक्षा, एवं ध्यानवृत्तीनां पुरुषकृतिसाध्यत्वेन विधेयत्वेऽपि न प्रमाणवृत्तेर्विधेयता, पुरुषकृत्यसाध्यत्वात्—इत्याह—न वैलक्षण्यादिति। यत्रेति। येत्यर्थः। वषट्करिष्यन् होता। किंचिद्ध्यानं यथावस्थितवस्त्वनुसार्यपि वस्तुनिरपेक्षत्वेऽपि। तदभिप्रायेण यस्यैदेवतायै इति सन्ध्यांमनसेति च उदाहरणद्वयम्। किञ्चित्पुनर्ध्यानं वस्त्वननुसार्यपि भवति। [1]तदभिप्रायेण [2]पुरुषोवावेति योषावावेति च उदाहरणद्वयम्। अतो ध्यानस्य वस्त्वनुसारे तदननुसारे च न निर्बन्धः, कृतिसाध्यत्वं तु नियतमेवेति विधेयत्वमुपपद्यते, प्रमाणज्ञानं तु कृत्यसाध्यतया न विधेयम्—इति तात्पर्यम्।

1. मु. तदनुसारेण

2. मु. पुरुषोवावेत्युदाहरणम्

गौतमाग्निः' (छा. उ. ५-७, ८-१) इत्यत्र योषित्पुरुषयोरग्निबुद्धिः मानसी भवति। केवलचोदनाजन्यत्वात् क्रियैव सा पुरुषतन्त्रा च। या तु प्रसिद्धेऽग्नावग्निबुद्धिः, न सा चोदनातन्त्रा नापि पुरुषतन्त्रा; किं तर्हि, प्रत्यक्षविषयवस्तुतन्त्रैवेति ज्ञानमेवैतत्, न क्रिया। एवं सर्वप्रमाणविषयवस्तुषु वेदितव्यम्। तत्रैवं सति यथाभूतब्रह्मात्मविषयमपि ज्ञानं न चोदनातन्त्रम्। तद्विषये लिङादयः श्रूयमाणा अपि अनियोज्यविषयत्वात् कुण्ठीभवन्ति उपलादिषु प्रयुक्तक्षुरतैक्ष्ण्यादिवत्, अहेयानुपादेयवस्तुविषयत्वात्।

किमर्थानि तर्हि 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इत्यादीनि विधिच्छायानि वचनानि? स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः। यो हि बहिर्मुखः प्रवर्तते पुरुषः—इष्टं मे भूयात् अनिष्टं मा भूदिति, न

ज्ञानस्याविधेयत्वे 'आत्मा वा अरे द्रष्टव्यः' इति तव्यप्रत्ययः किमर्थः स्यादिति चेत्—यो हि पुरुषो बहिर्मुखः प्रवर्तते तस्य आत्मज्ञानानुकूलवेदान्तवाक्यश्रवणादौ[1], त्वदभिलषितं यत् दुःखं विना सुखेनावस्थानं तस्मिन् आत्मदर्शनमेव साधनं न बाह्यवस्तुदर्शनमिति प्रतिपादनाय आत्मैव दर्शनार्हो नान्यदिति प्रतिपादयन् रुच्यतिशयं सम्पादयतीति, अर्थो भविष्यति—[2]इत्यमुमर्थं शङ्कासमाधानाभ्यां [3]व्युत्पादयिष्यति[4]।

तद्विषय इति। आत्मानंचेद्विजानीयादिति लिङ् ज्ञाने श्रूयते। अनियोज्यविषयत्वादिति। नियोज्यरहितत्वात् विषयरहितत्वाच्चेत्यर्थः। ममेदं कार्यमित्यवगतिमान् हि[5] नियोज्यो भवति। कृतिसाध्यश्च विधिविषयो भवति। ज्ञानस्य च कृत्यसाध्यत्वात् नोभयमपि सम्भवतीति भावः।

---

1. श्रवणादाविति रुच्यतिशयं संपादयति इत्यनेन सम्बद्ध्यते।
2. मु. 'इति' नास्ति
3. व्युत्पादयिष्यति अनुपदं स्वाभाविकप्रवृत्तीत्यादिना।
4. मु. व्युत्पादयति
5. मु. 'हि' नास्ति

च तत्र आत्यन्तिकं पुरुषार्थं लभते, तमात्यन्तिकपुरुषार्थवाञ्छिनं स्वाभाविकात् कार्यकरणसंघातप्रवृत्तिगोचरात् विमुखीकृत्य प्रत्यगात्मस्रोतस्तया प्रवर्तयन्ति 'आत्मा वा अरे द्रष्टव्यः' इत्यादीनि। तस्य आत्मान्वेषणाय प्रवृत्तस्य अहेयमनुपादेयंचात्मतत्त्वमुपदिश्यते 'इदं सर्वं यदयमात्मा' (बृ. उ. २ ४ ६) 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् केन कं विजानीयात् विज्ञातारमरे केन विजानीयात्' (बृ. उ. ४-५ १५) 'अयमात्मा ब्रह्म' (बृ. उ. २ ५ १९) इत्यादिभिः।

यदपि अकर्तव्यप्रधानमात्मज्ञानं हानायोपादानाय वा न भवतीति, तत्तथैवेत्यभ्युपगम्यते। अलङ्कारो ह्ययमस्माकं यत् ब्रह्मात्मावगतौ सत्यां सर्वकर्तव्यताहानिः कृतकृत्यता चेति। तथा च श्रुतिः–'आत्मानं चेद्विजानीयादयमस्मीति पूरुषः। किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्॥' (बृ. उ. ४ ४ १२) इति। 'एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत'। (भ. गी. १५ २०) इति च स्मृतेः। तस्मात् न प्रतिपत्तिविधिशेषतया ब्रह्मणः समर्पणम्।

यदपि केचिदाहुः—'प्रवृत्तिनिवृत्तिविधितच्छेषव्यतिरेकेण केवल-

ज्ञानस्याविधेयत्वेऽपि तत्र श्रूयमाणानां लिङादीनां हेतुहेतुमद्भावप्रतिपादकत्वं अहार्थित्वं च [1]यथायथं भविष्यति प्ररोचनायेति व्युत्पाद्य, यदेकदेशिनोक्तं 'ज्ञानविधिपरत्वाभावे प्रवृत्तिनिवृत्तिप्रयोजनकता वाक्यस्य न स्यात्' इति तत्रेष्टापत्तिमाह—यदपीत्यादिना। शरीरमनुसंज्वरेदिति। स्थूलसूक्ष्मकारणरूपशरीरत्रयाध्यासमापन्नो बाह्यानि वस्तूनि कामयमानो जन्तुः काम्यमानपदार्थालाभे तापमनुभवति, आत्मैक्यसाक्षात्कारेण तु तदध्यासनिवृत्तौ न तापत्रयमनुभवतीत्यर्थः।

'कार्यविधिप्रयुक्तमेव ब्रह्म प्रतिपाद्यते' इति यदेकदेशिनोक्तं तदनूद्य निराकरोति—यदपीति।

---

1. यथायथमिति 'आत्मानं चेद्विजानीयात्' इत्यत्र लिङ् 'हेतुहेतुमतोर्लिङ्' इति सूत्रविहिता हेतुहेतुमद्भावार्थिका, 'आत्मा वा अरे द्रष्टव्यः' इत्यत्र लिङ् 'अर्हे कृत्यतृचश्च' इति सूत्रविहिता अर्हार्थिका इत्यर्थः।

**वस्तुवादी वेदभागो नास्ति' इति, तन्न—**

**तन्नेति** 'विधिशेषतयैव ब्रह्म प्रतिपाद्यते' इति किं 'कार्यान्वित **एव पदानां शक्तिः**' इतिनियममनुसृत्योच्यते, उत वेदान्तवाक्यपर्यालोचनयैव कार्यशेषतया ब्रह्मावगम्यते ? नाद्यः—कार्यान्वितेशक्तिरिति नियमासम्भवात् । **तथात्वे सिद्धार्थपराणां** [1]काव्यानां बोधकता न स्यात् । न च—आद्यव्युत्पत्तिग्रहानुसारेण **तत्रापि** कार्यवाचकपदाध्याहार एव, तदभावे तु असंसर्गाग्रह एव—इति वाच्यम् । **आद्यव्युत्पत्ति**[2]ग्रहस्थले बालेन स्वप्रवृत्तिदृष्टान्तेन प्रयोज्यवृद्धे कार्यान्वितपदार्थज्ञान**मनुमितमिति** तत्रैव शक्तिर्गृह्यत इति वक्तव्यम् । [3]तथा सति '**स्वस्य यथा कार्यान्वितपदार्थज्ञानं शुद्धपदार्थज्ञानपूर्वकम्**, एवं प्रयोज्यवृद्धस्य कार्यान्वितपदार्थज्ञानमपि **शुद्धपदार्थज्ञानपूर्वकं**' इत्यनुमितिरपि सम्भवति । ततश्च कार्यान्वितपदार्थज्ञानमूलतया **अनुमितं** यच्छुद्धपदार्थज्ञानं तत्रैव शक्तिग्रहो बालस्य किं न स्यात् । **शक्तिग्रहोपयोगि**कार्यान्वितार्थज्ञानानुकूला शुद्धपदार्थोपस्थितिरेव प्राभाकरैः निमित्तावस्था उच्यते । **यथोक्तं** [4]निबन्धनपञ्चिकायां ऋजुविमलायाम्—'अनन्वितावस्था हि [5]सम्बन्धग्रहणोपायतां गच्छन्ती वाक्यार्थप्रतिपत्तौ निमित्तम् । एवं हि सम्बन्धग्रहणम्—'अयमर्थः अनेन शब्देन आकाङ्क्षितसन्निहितयोग्यार्थान्तरान्वितस्सन् अभिधीयते' इति । अत्र, अयमर्थ इति अनन्वितावस्थस्य शुद्धस्य गवादेः उपस्थितिरुक्ता ।

ननु—या प्रयोज्यवृद्धगता शुद्धपदार्थोपस्थितिरनुमिता सा यद्यपि शब्दजन्यैव, कारणान्तरानिरूपणात्, तथाऽपि न सा साक्षात् प्रवृत्तिकारणम् । किं तु कार्यान्वितपदार्थोपस्थितिरेव । या च निमित्तावस्थारूपा पदार्थोपस्थितिः सा तु बालस्य प्रत्यक्षरूपैव । अतो न 'उपस्थितिमात्रं शुद्धपदार्थस्य वर्तते' इति कृत्वा

---

1. आ. वाक्यानां

2. मु. 'ग्रह' नास्ति

3. **तथा सतीति** प्रत्यक्षाधीनस्वप्रवृत्तिस्थले इति शेषः ।

4. **निबन्धनपञ्चिकायामिति** प्रभाकरगुरुविरचिता शाबरभाष्यटीका **बृहतीनाम्नी निबन्धन**शब्देन व्यवह्रियते, विस्तरेण तदर्थप्रतिपादिका निबन्धनपञ्चिका । **सा च** शालिकानाथेन विरचिता टीका **ऋजुविमला** इत्युच्यते ।

5. मु. सम्बन्धोपायतां

तत्र शक्तिग्रहं तु शक्यते । अतः प्रवृत्तिजनिका शब्दजन्योपस्थितिः कार्यान्वित-विषया या बालेनानुमिता तस्यामेव [1]शब्दस्य शक्तिः बालेन कल्प्यत इति चेत्–तर्हि, ममेदमिदानीं कार्यमित्येव ज्ञानं साक्षात्प्रवृत्तिजनकमिति तत्रैव ज्ञाने वाक्यस्य शक्ति-ग्रहः स्यात् ।

अथोच्येत—शब्दात् 'अयमर्थः कार्यः' इति ज्ञाने जाते मदंशादिघटितं कार्यताज्ञानं अनुमित्यात्मकं भविष्यतीति न मदंशाद्यन्विते तत्र शक्तिः शब्दस्य कल्प्यत इति ; तर्हि, शुद्धा एव पदार्थाः पदैरुपस्थाप्यन्ते शक्त्या कार्यान्वयज्ञानं तु कार्यवाचकपदसमभिव्याहारात् भविष्यतीति न कार्यान्वयेऽपि पदानां शक्तिः कल्पनीया ।

अपि च–कार्यान्विततया बालेन पदार्थज्ञानमनुमितमिति तत्र शक्तिग्रह-कल्पने कर्मकारकाद्यन्वितपदार्थज्ञानमपि बालेनानुमितमिति तत्तत्कारकान्वितेऽपि शक्तिः स्यात् । यदि तु तत्तत्कारकान्वयव्यतिरेकेणापि शाब्दबोधदर्शनात् न तत्तद-न्वये शक्तिः कल्प्यते ; तथा सति कार्यान्वयं विहायापि सिद्धार्थमात्रे वाक्यप्रयो-गदर्शनात् तदन्वयेऽपि शक्तिर्मास्तु । यदि तु आद्यव्युत्पत्तिग्रहस्थले कार्यान्वयो नियत इत्येतावन्मात्रेण तदन्विते शक्तिः कल्प्येत, तथा सति प्रथमव्युत्पत्तिग्रह-स्थले प्रमाणान्तरजन्योपस्थितिविषयत्वं नियतमिति प्रमाणान्तरजन्योपस्थितिविषयेष्वेव शक्तिः पदानां स्यात् । यदि तु प्रमाणान्तरजन्योपस्थितिः शक्तिग्रहे निमित्तमात्रं न तु शक्यतावच्छेदिका, तर्हि कार्यान्वयोऽपि तथाऽस्तु ।

तस्मात् प्रमाणान्तरोपस्थितिविषयत्वमुपाधीकृत्य यथा लौकिकवैदिकपदार्थ-साधारण्येन शक्तिग्रहः तथा कार्यान्वयमुपाधीकृत्य केवलसिद्धार्थप्रतिपादककाव्या-दिसाधारण्येन शुद्ध एव पदार्थे शक्तिग्रहः[2] न तु कार्यान्विते इति न सिद्धार्थपद-समभिव्याहारेषु कार्यपदाध्याहारो वा असंसर्गाग्रहो वा कल्पयितुं शक्यते । [3]वृद्ध-व्यवहारविरोधात् ।

---

1. **शब्दस्य शक्तिः**—वाक्यस्य सामर्थ्यम्, एवमुत्तरत्रापि ।

2. मु. 'ग्रह' नास्ति

3. **वृद्धव्यवहारविरोधादिति** प्रयोज्यप्रयोजकवृद्धव्यवहारस्थले प्रथमोपस्थिते शुद्धे शक्तिग्रहस्य व्यवस्थापितत्वात् तद्विरोध इति भावः

अपि च कार्यान्वयं विहायापि आद्यव्युत्पत्तिग्रहो भवतीति 'आद्यव्युत्पत्तिग्रहे सर्वत्र कार्यान्वयो नियतः' इत्येतदपि नास्ति। मात्रादिभिः अङ्गुल्या निर्दिश्य घटादिशब्दोच्चारणे स्तनन्धयस्य तत्र शक्तिग्रहदर्शनात्। न च 'अङ्गुलीनिर्देश-पूर्वकं शब्दोच्चारणं शक्तिग्रहार्थं' इति बालेन प्रागज्ञातमिति कथं शक्तिग्रह इति वाच्यम्। फलबलेन जन्मान्तरीयसंस्कारोद्बोधकल्पनात्। अङ्गुल्या घटादिकं निर्दिश्य शब्दोच्चारणे क्रियमाणे बालानां अनन्तरं तत्तच्छब्दस्य तस्मिंस्तस्मिन् अर्थे व्यवहारदर्शनेन अन्यो बालोऽवधारयति 'अङ्गुलीनिर्देश-पूर्वकं शब्दोच्चारणं शक्तिग्रहार्थम्' इति। स च तत्संस्कारयुक्तो जन्मान्तरं प्राप्य मात्रादिभिः अङ्गुलीनिर्देशपूर्वकं व्युत्पाद्यमानो जन्मान्तरीयसंस्कारस्योद्बोधात् 'अयं अङ्गुलीनिर्देशपूर्वकं शब्दप्रयोगः शक्तिग्रहार्थः' इति स्मृत्वा तत्र शक्तिं गृह्णातीति प्रवाहानादितया तथा [1]व्युत्पादनस्य, आद्यशक्तिग्रहः उक्तप्रकारेण सिद्धार्थेऽपि भवति।

एवं 'पुत्रस्ते जातः' इति वाक्यप्रयोगकालेऽपि हर्षपूर्वकस्नानाचरणं दृष्ट्वा 'पुत्रजन्म हर्षपूर्वकस्नानाचरणे निमित्तं' इति जन्मान्तरीयसंस्कारोद्बोधात् यस्य स्मृतिर्भवति तेन 'पुत्रस्तेजातइतिवाक्यं पुत्रजन्मप्रतिपादकं' इति [2]निर्णीयत एव। अतः प्रथमव्युत्पत्तिग्रहः सिद्धस्थलेऽपि भवतीति न कार्यान्वित एव पदानां शक्तिः। यत्रत्वाख्यातपदान्वयः तत्र परं तत्प्रयुक्तः कार्यान्वयो भासत इति अन्यलभ्य-त्वादपि न पदानां तत्र शक्तिः कल्पनीया।

नन्वेवं अन्वितेऽपि पदानां शक्ति र्न स्यात् अन्यलभ्यत्वाविशेषादिति चेत्, [3]अस्तु को दोषः।

---

1. मु. व्युत्पाद्यमानस्य

2. **निर्णीयत एव इति** एतेन—बहूनां हर्षहेतूनां सम्भवात् अनिर्णय इति पूर्वपक्षोक्तं निरस्तम्।

3. **अस्तु को दोष इति** एतावता प्रबन्धेन पदानां अभिधानं शुद्धे एवार्थे, न तु कार्यान्विते अन्विते वा इत्येतत् उपपादितम्। तदाक्षिपन् प्रत्यवतिष्ठते अन्वि-ताभिधानवादी प्राभाकरः **अथकथमित्यादिना अन्वयांशे शक्त्यभावे कथं तद्बोधः स्यात्** इत्यन्तेन। तत्र नैयायिकोक्तं उक्ताक्षेपसमाधानं उपपाद्य निराकरोति अन्विताभि धानवादी—**ननु मास्त्वित्यादिना अतः शाब्दबोधविषयस्य वृत्तिविषयत्वं नियतं** इत्यन्तेन।

अथ कथमन्यलभ्यत्वम्, आख्यातपदवत् कार्यांशे, पदान्तरस्य अन्वयांशे अभावात्। ननु—मास्तु पदान्तरं, पदार्थोपस्थापकैरेव पदैः आकाङ्क्षादिसाचिव्यात् अशक्य एवान्वयः पदार्थानामनुभाव्यते। न च प्रमाणभूतस्य शब्दस्य [1]स्वप्रमेयेनान्वयेन सह असम्बन्धे [2]कथं बोधकतेति वाच्यम्। धूमरूपेणानुमानप्रमाणेन व्याप्तिरूपस्वसम्बन्धाभावेऽपि यथा पक्षसाध्यसंसर्गोऽनुभाव्यते, तथा शब्देनापि शक्तिरूपसम्बन्धाभावेऽपि अन्वयबोधो भविष्यति। यदि तु तत्र [3]पक्षधर्मताबलात् तद्भानमिति, तदा प्रकृतेऽप्याकाङ्क्षादिबलादन्वयभानमस्तु। न च शब्दस्य वृत्तिविषये एव बोधजनकतेति वृत्तिं विना कथमन्वयस्य शाब्दबोधविषयतेति वाच्यम्। 'भूतले घटो न' 'भूतलं घटो न' इति, अत्यन्ताभावस्थले घटतदभावयोः प्रतियोग्यनुयोगिभावस्य अन्योन्याभावस्थले अधिकरणाधेयभावस्य प्रतियोग्यनुयोगिभावस्य च अशक्यस्यैव शब्दात्प्रतीतेरिति चेत्, न—वृत्त्यविषये शब्दस्याबोधकत्वात्। न च प्रकारतया विशेष्यतया वा यस्योपस्थितिः[4] शाब्दे तस्यैव वृत्तिविषयत्वं न तु शाब्दविषयस्य सर्वस्यापीति वाच्यम्। गौरवेण प्रकारतादेः नियमशरीरे प्रवेशयितुमशक्यत्वात्। अनुमाने नायं नियम इति न तत्र पक्षसंसर्गांशेऽपि व्याप्तिरपेक्ष्यते, साध्यांश एव हेतोर्व्याप्तिरपेक्ष्यते नान्यत्र। शाब्दे तु विशिष्य स्वप्रमेये वृत्तिरपेक्ष्यत इति नियमः। अत एव पक्षसाध्ययोस्संसर्गबोधने शब्देन क्रियमाणे [5]तत्र मतुप् प्रयुज्यते 'पर्वतो वन्हिमान्' इति। न च 'भूतले घटो न' इति निषेधे प्रतियोग्यनुयोगिभावोऽशक्य एव भासत इति वाच्यम्। [6]अनुयोगितायां नञश्शक्ति-

---

1. 'स्व' नास्ति।

2. **कथं बोधकतेति** प्रत्यक्षे प्रकारविशेष्ययोरिव संसर्गांशेऽपि प्रमाणसन्निकर्षापेक्षादर्शनात् इति भावः।

3. **पक्षधर्मताबलात् तद्भानमिति** साध्यसमानाधिकरणत्वेन नियतस्य हेतोः पक्षसंबन्धज्ञानात् साध्यस्य पक्षसम्बन्धज्ञानम्, अन्यथा निश्चितस्य हेतोस्साध्यसामानाधिकरण्यनियमस्य अनिर्वाहात् इति भावः।

4. **उपस्थितिः** भानम्।

5. **तत्र**—सम्बन्धबोधिका। मु. 'तत्र' नास्ति

6. **अनुयोगितायां**—अनुयोगितायामपि।

स्वीकारात्। [1]अत एव अभावपदे अनुयोगिताया अशक्यतया तत्प्रतिपादनाय घटशब्दानन्तरं [2]तत्र षष्ठीप्रयोगो दृश्यते। ततश्च 'घटानुयोग्यभावः' इति शाब्दबोधः शक्यविषय एव। एवं 'भूतलं घटो न' इति [3]नञा 'भूतलाधेयो घटानुयोगी भेदः' इति प्रतिपादनार्थं आधेयतानुयोगितासम्पुटित[4] एव भेदोऽभिधीयते। अन्यथा 'भूतले घटस्य भेदः' इति प्रयोग इव षष्ठीसप्तमीप्रयोगः[5] प्रसज्येत। अतः शाब्दबोधविषयस्य वृत्तिविषयत्वं नियतमिति अन्वयांशे शक्त्यभावे कथं तद्बोधः स्यात्—इति चेत्।

[6]उच्यते—शक्त्यभावेऽपि अन्वितस्य लक्षणया बोधो भविष्यति। ततश्च देवदत्तःपचतीत्यत्र 'पाकानुकूलकृत्याश्रयो देवदत्तः' इति वा 'देवदत्तकर्तृकः पाकानुकूलो व्यापारः' इति वा यथायथं मतभेदेन [8]तत्तद्गुणविशिष्टः प्रधानपदार्थो लक्षणीयः। एवं च गुणभूतपदार्थानां तत्तत्संसर्गाणां च भेदेऽपि प्रधानपदार्थैक्यात् वाक्याभेदः। 'अर्थैकत्वादेकं वाक्यम्' [जै. सू. २-१-४६] इत्यत्र प्रधानपदार्थैक्यस्यैव एकवाक्यताप्रयोजकता विवक्षिता। इयं च विशिष्टे वाक्यार्थे लक्षणा प्रधानपदस्यैव, यदि पदस्यैव वृत्तिर्लक्षणेति निर्बन्धः।

---

1. अत एवेत्यस्यैव विवरणं अशक्यतयेत्यन्तम्। अभावपदनिष्ठशक्त्यविषयतया नञ एव शक्यतया—इत्यर्थः।

2. **तत्र**—घटस्य अभावः इति अभावपदसमभिव्याहारस्थले।

3. **नञा** अभिधीयते इति सम्बन्धः।

4. **सम्पुटित इति** आधेयत्वं अनुयोगित्वं भेदश्चेति त्रयं नञ्पदशक्यम्, भेदे च द्वयं विशेषणतया भासते, 'भूतलाधेयो भेदः घटानुयोगी' इति 'घटानुयोगी भेदः भूतलाधेयः' इति वा बोधः। एवं पूर्वोत्तरभावेन आधेयत्वानुयोगित्वाभ्यां विशिष्टत्वाद्भेदस्य आधेयताऽनुयोगितासम्पुटित इत्युक्तम्। अत्र बोधे भेदस्य सम्पुटितत्वं अभिधाने उपचरितं इति ध्येयम्।

5. **प्रयोगः** 'भूतले घटस्य न' इति प्रयोगः।

6. उपपादितं अन्विताभिधानवादं अभिहितान्वयवादाश्रयणेन निराकर्तुमारभते—**उच्यते** इत्यादिना **अतोऽन्यलभ्यत्वात् नान्वयांशेऽपि शक्तिः स्वीकर्तुमुचित** इत्यन्तेन ग्रन्थेन।

7. **मतभेदेनेति** आद्यं नैयायिकमतम्, द्वितीयं मीमांसकमतम्।

8. **मु. तत्तद्गुणेण विशिष्टः**

यदित्वर्थवादवाक्यानुसारेण सर्वेषामपि सम्भूयाप्यर्थलक्षकत्वमुपेयते, तदा सर्वाण्यपि वाक्यान्तर्गतानि पदानि विशिष्टार्थं लक्षयन्तीत्यस्तु । न तत्र निर्बन्धः ।

[1]ननु—तथा सति लक्ष्यस्यान्वयस्य शक्यैः पदार्थैः सम्बन्धो वक्तव्यः, शक्यसम्बन्धरूपत्वात् लक्षणायाः । न च [2]अन्वयेनान्वयान्तरमस्ति । शक्यार्थ-ग्रहणानुपपत्तिश्च लक्षणाबीजम्, ततश्च शक्यानामर्थानां शाब्दे अभानं प्राप्नोति, यथा अर्थवादपदानां प्राशस्त्यलक्षणास्थले । किं च शक्यसम्बन्धोऽपि ज्ञात एव लाक्षणिकपदार्थोपस्थितौ प्रयोजकः, इह तु वाक्यार्थस्यापूर्वत्वात् कथं तदज्ञाने तेन सह [3]शक्यार्थसम्बन्धज्ञानम् ।

उच्यते—अन्वयस्य अन्वयान्तरं नास्तीत्येतदसङ्गतम् । 'एतस्य अनेन पदार्थेन सह अयमन्वयः' इति प्रतीतिसिद्धः अस्ति[4] कश्चित् अन्वयेन सह पदार्थानां सम्बन्धः । सोऽत्र लक्षणा भविष्यति । लाक्षणिकशाब्दबोधस्थले मुख्यार्थाभानं तु जहल्लक्षणायामेव, न त्वजहल्लक्षणायाम् । मुख्यान्वयानुपपत्तिः न लक्षणायां सार्वत्रिकं प्रयोजकम्, 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र तदभावात् । अपि तु तात्पर्यानुप-पत्तिः । सा च प्रकृतेऽप्यस्ति । [5]विशिष्टवाक्यार्थोद्देशेनैव वाक्यप्रवृत्तेः । अपूर्व-स्यापि वाक्यार्थस्य, यथा [6]'हरिद्रायां नद्यां घोषः' इत्यत्र नदीपदसामानाधि-

---

1. वाक्यार्थस्य लक्ष्यत्वे अन्विताभिधानवादिनः आक्षेपं उत्थापयति—**ननु तथा सतीत्यादिना**। यथाऽऽह **शालिकानाथः**—'वाच्यार्थस्य च वाक्यार्थे संसर्गानु-पपत्तितः । तत्संबन्धवशप्राप्तस्यान्वयात् लक्षणोच्यते' इति ।

2. **अन्वयेन** वाक्यार्थरूपेण पदार्थसंसर्गेण **अन्वयान्तरं** पदार्थानां संसर्गान्तरं नास्ति इत्यर्थः । अननुभवात् इति भावः । संसर्गस्य वाक्यार्थत्वे इदं दूषणम् । संसृष्टस्य वाक्यार्थत्वे विशिष्टकेवलयोः तादात्म्यसंबन्धसम्भवेन उक्तदोषानवकाशः ।

3. मु. **वाक्यार्थसंबन्ध**

4. **अस्तीति** अन्यथा 'एतस्य अन्वयः' इति षष्ठ्या अभिलापो न स्यात् इति भावः ।

5. **विशिष्टवाक्यार्थोद्देशेनैवेति** 'विशिष्टार्थप्रयुक्ता हि समभिव्याहृतिर्जने' इति मण्डनमिश्रोक्तेः ।

6. **हरिद्रायां नद्यामिति** चोलदेशस्थचम्पकारण्यक्षेत्रस्थः इदानीं सरोविशेष-तटाकात्मकः हरिद्रानदीति चोलदेशे प्रसिद्धः । अस्योदाहरणेन 'चोलदेशीया इमे व्याख्यातारः' इति प्रसिद्धिः दृढीभवति ।

करण्येन हरिद्रापदं नदीविशेषनामेति निश्चित्य तत्र घोषाधारतानुपपत्त्यनुसन्धानेन प्रागज्ञातमेव[1] हरिद्रानदीतीरं हरिद्रानदीसम्बन्धित्वेनानुसन्दधाति[2] तथा अपूर्वमपि वाक्यार्थं अन्वयरूपं आकाङ्क्षादिबलादुपस्थितं पदार्थसम्बन्धित्वेनानुसन्धास्यतीति, शाब्दत्वसिद्धये[3] लाक्षणिकत्वाभ्युपगमे न काचिदनुपपत्तिः । अतः अन्यलभ्यत्वात् नान्वयांशेऽपि शक्तिः स्वीकर्तुमुचिता ।

[4]एतेन—यत् प्राभाकरैरुच्यते 'लोके कार्यताप्रतिपादकत्वस्य लिङादिषु निर्धारितत्वात् वेदे स्वर्गकामपदसमभिव्याहारेण स्वर्गकामिकार्यताया अस्थिरे यागे अन्वयायोग्यतानुसन्धाने तदन्वययोग्यमपूर्वमेव लिङादिप्रतिपाद्यम्' इति—तदपि निरस्तम् । आक्षेपलभ्यस्य तस्य शब्दवाच्यत्वानुपपत्तेः, अपूर्वद्वारा स्वर्गजनकत्वानुसन्धाने स्वर्गकामिकार्यत्वस्य यागेऽपि अन्वयबोधोपपत्तेश्च ।

अपि च लिङादिश्रवणानन्तरं प्रवृत्तिदर्शनात् यज्ज्ञानं प्रवृत्तिहेतुः तत्र लिङादेः शक्तिर्वक्तव्या ।

कः पुनः प्रवृत्तिजनकज्ञानविषयः ?

तत्र केचिदाहुः—'ज्वरितः पथ्यमश्नीयात्' इत्यादावाप्तोपदेशे पथ्याशनविषयकमाप्ताभिप्रायमवगम्य गां बधानेत्यादौ च आज्ञादिरूपमाचार्याभिप्रायमवगम्य पुरुषप्रवृत्तिदर्शनात् आज्ञादिरूपः पुरुषव्यापार एव प्रवर्तकज्ञानविषय इति स एव प्रेरणात्वेन लिङादिभिः प्रतिपाद्यते । एवं च सति—पुरुषाशयविशेषाणां प्रार्थनादीनां अनुगतत्वाभावेन लिङादीनामनेकार्थता[5] स्यात्—इत्यपि शङ्का निरस्ता । [6]यद्यपि—पथ्य-

---

1. **प्रागज्ञातमेवेति** तदानीमेव नदीरूपलिङ्गात् अनुमितम् ।

2. **अनुसन्दधातीति** चम्पकारण्यक्षेत्रवृत्तान्तानभिज्ञः कश्चित् प्रागविज्ञातहरिद्रानामकनदीविशेषः इत्यादिः । इदमनुसन्धानं लक्षणाज्ञानम् । तीरबोधस्य शाब्दत्वसिद्धये आवश्यकमिदम् ।

3. **शाब्दत्वसिद्धये इति** वृत्त्युपस्थाप्यत्वसिद्ध्यर्थं इति शेषः ।

4. **एतेन**—अन्यलभ्यस्य अशक्यत्वोपपादनेन ।

5. **अनेकार्थता**—शक्ततावच्छेदकैक्ये सति विभिन्नशक्यतावच्छेदकत्वम् । निष्कर्षस्तु व्युत्पत्तिवादे पञ्चम्यर्थनिरूपणावसरे द्रष्टव्यः ।

6. उक्तमेवार्थं शङ्कासमाधानाभ्यां उपपादयति—**यद्यपीत्यादिना** ।

मश्नीयादित्यादौ सुहृदुपदेशे उपदेष्टुः [1]अभिसन्धिगोचरस्य फलस्य अभावेन तदीयाशयविशेषः अयंपथ्याशनेप्रवर्तनामित्येवंरूपः [2]विधिरित्युच्यते, उपदेष्टुः स्वप्रयोजनाभिसन्धौ तु उत्कृष्टत्वे तदीयाशयविशेष आज्ञेत्युच्यते, निकृष्टत्वे तु प्रार्थनेत्युच्यते । तथा च विधित्वादिकमननुगतमेव—तथापि, तेषु सर्वेषु प्रवर्तनात्वापरपर्यायं प्रेरणात्वमस्तीति तेन रूपेण शक्तेरुपगमात् [3]नानुपपत्तिः । सा च प्रेरणा यद्यपि पुरुषाशयविशेषरूपा वेदे पौरुषेयत्वं वदत ईश्वराशयविशेषरूपा शक्या वक्तुम्, अपौरुषेयत्ववादिनस्तु तथोपपादनं न सम्भवति, तथापि लिङः प्रेरणात्वेन शक्तिग्रहात् वैदिकैरपि लिङादिभिः आकृत्यधिकरणन्यायेन प्रेरणात्वे अभिहिते तदाश्रयाकाङ्क्षायां लिङादिगत एव प्रवर्तनाख्योऽपूर्वो [4]धर्मः कल्प्यते । स च, घटादिव्यक्तयोऽपि यथा घटादिशब्दप्रतिपाद्या भवन्ति घटत्वादिप्रतिपादनद्वारा, तथा प्रवर्तनात्वप्रतिपादनद्वारा लिङादिप्रतिपाद्यो भवति । अथ वा न अपूर्वो व्यापारः प्रवर्तनात्वाश्रयतया कल्पनीयः । किं तु लिङादिषु क्लृप्त एव अभिधाख्ये व्यापारे लिङ्वाच्यत्व प्रवर्तनात्वाश्रयत्वं च कल्पनीयं लाघवात्—इति

सर्वथाऽपि नापूर्वं लिङादिप्रतिपाद्यम् । तज्ज्ञानस्य लोके प्रवृत्तिजनकत्वादर्शनात् ।

प्रवर्तना[5] च प्रवृत्तिप्रयोजको धर्मः । ततश्च तस्य प्रयोज्यतासंसर्गेण समानपदोपात्तायां [6]भावनायामन्वयः । लिङादिभिर्हि लिङ्त्वादिना प्रवर्तना प्रतिपाद्यते । आख्यातत्वेन भावनापरपर्यायः पुरुषव्यापारः प्रतिपाद्यते ।

[7]ननु—कथमाख्यातेन व्यापारः प्रतिपाद्यते ? यावता पच्यादिधातुभिरेव स प्रतिपादितः । पचिधातुर्हि विक्लित्त्यनुकूलं व्यापारं प्रतिपादयति । एवं गमिधातुः

---

1. **अभिसन्धि** - इच्छा ।
2. **विधिः**—उपदेशः ।
3. मु. 'नानुपपत्तिः' नास्ति
4. **धर्मः**—व्यापाररूपो धर्मः ।
5. **प्रवर्तना**—इयमेव शाब्दीभावनेत्युच्यते ।
6. **भावनायां**—प्रवृत्तिशब्दितायां अर्थभावनायाम् ।
7. प्राचीनवैयाकरणानां नवीननैयायिकानां च मतेन शङ्कते—**नन्विति** ।

उत्तरदेशसंयोगानुकूलम्। त्यजिधातुः पूर्वदेशविभागानुकूलम्। तत्र च विक्लित्त्यादिकं फलं तदनुकूलो व्यापारश्च धातुभिरेव प्रतिपादित इति कथमाख्यातस्य व्यापारप्रतिपादकता—इति चेत्,

[1]उच्यते—उभयं धातुभिः प्रतिपाद्यत इति वक्तुमशक्यम्। गौरवात्। ननु—तर्हि व्यापार एव प्रतिपाद्यताम्, फलं तु द्वितीयार्थो भविष्यति। न च फलानामननुगतत्वात् द्वितीयार्थता नोपपद्यत इति वाच्यम्। [2]सर्वनामन्यायेन धातूपात्तव्यापारफलत्वेन क्रोडीकृतानां पच्यादिधातुसमभिव्याहारेण विक्लित्तित्वादिरूपेण प्रतिपादकता भविष्यतीति चेत्—न—तथात्वे त्यजिगम्योः पर्यायता स्यात्। एक एव हि व्यापारः पूर्वदेशविभागानुकूल उत्तरदेशसंयोगानुकूलश्च। अतस्तत्र पूर्वोत्तरदेशविभागसंयोगरूपफलप्रतिपादकतयैव अपर्यायता वक्तव्या। अतः तदैकरूप्याय सर्वधातूनां फलप्रतिपादकतैवास्तु। न तु व्यापारप्रतिपादकता। स तु आख्यातेनैवाभिधीयते। न चैवं द्वितीयाया वैयर्थ्यम्। फलाधारताप्रतिपादकतोपपत्तेः। न च तथा सति सप्तमीतो विशेषो द्वितीयाया न स्यात् आधारताप्रतिपादनतौल्यात् इति वाच्यम्। कर्तृकर्मद्वारा क्रियाधारता[3]सप्तमीप्रतिपाद्या, फलनिरूपिताधारता तु द्वितीयया—इति भेदोपपत्तेः। कर्तृतृतीयया तु [4]साक्षात् क्रियानिरूपिताधारता प्रतिपाद्यत इति तस्या अपि वैलक्षण्यम्।

नन्वेवं धातूपात्तव्यापारव्यधिकरणफलशालित्वं कर्मत्वमिति कर्मत्वलक्षणं वक्तुं न शक्यते, फलस्यैव धात्वर्थत्वेन धातूपात्तव्यापारेत्यंशस्यासम्भवदुक्तिकत्वात्। न च धातूपात्तफलशालित्वमेव तदिति वाच्यम्। तथासति 'देवदत्तः शेते' इति प्रयोगे शीङ्धातूपात्तस्य विशेषविज्ञानाभावरूपस्य फलस्य देवदत्ते सत्त्वेन

---

1. 'फलमेव धात्वर्थः' इति मण्डनाचार्याणां मतानुसारं समाधातुं उपक्रमते—**उच्यते** इत्यादिना।

2. **सर्वनामन्यायेनेति** तदादिसर्वनामार्थानां अननुगतदेवदत्तादीनां वक्तृबुद्धिविषयत्वेन उपलक्षणेन यथा अनुगमः तथेत्यर्थः।

3. **सप्तमीप्रतिपाद्येत्यादि** 'भूतले देवदत्तः तिष्ठति' 'स्थाल्यां तण्डुलं पचति' 'देवदत्तेन तण्डुलः पच्यते' इति यथाक्रमं उदाहरणानि।

4. **मु. 'साक्षात्' नास्ति**

तस्य कर्मतापत्तेः । न चैकस्य कर्तृत्वकर्मत्वानुपपत्तिः । 'आत्मानं [1]आत्मा जानाति' इति प्रयोगदर्शनात् । न च तत्र भेदकल्पनया तथा प्रयोग इति वाच्यम् । प्रकृतेऽपि भेदकल्पनया सकर्मकप्रयोगापत्तेः[2] । न च आख्यातोपात्तव्यापारव्यधिकरणफलशालित्वं तदिति वाच्यम् । तथा सति यजतीति प्रयोगे स्वर्गस्यापि कर्मता स्यात् । आख्यातोपात्तकर्तृव्यापारजन्योत्पत्तिरूपफलाश्रयत्वात् । शेते इत्यादौ च तज्जन्यसुखस्यापि कर्मता स्यात् । [3]अपि च फलस्यैव धात्वर्थत्वे विक्लृत्त्यनुत्पत्तिदशायां पचतीतिप्रयोगश्च असाधुस्स्यात्, [4]पाकस्यावर्तमानत्वात्—इति चेत्—

उच्यते—आख्यातोपात्तव्यापारव्यधिकरणधातूपात्तफलशालित्वेन यद्विवक्षितं तत् कर्मेति । ज्ञाधातूपात्तं तु [5]फलं पुरुषव्यापारव्यधिकरणं घटादौ प्रसिद्धमेव, तदाश्रयतया आत्मनो विवक्षायां कर्मता भवति । शीङ्धातूपात्तं तु फलं विशेषविज्ञानोपरमरूपं न व्यापारव्यधिकरणं प्रसिद्धमस्तीति न तस्य सकर्मकता । यजिसमभिव्याहारे स्वर्गादेस्तु कर्मता न भवति । धातूपात्तस्वत्वनिवृत्तिरूपफलानाधारत्वात् । 'यागेन स्वर्गं करोति' इति निर्देशस्तु भवति । कृञ्धातूपात्तोत्पत्तिरूपफलाधारत्वात् । पाकानुत्पत्तिदशायां पचतीतिप्रयोगश्च नासाधुः । न हि तत्र लडर्थवर्तमानत्वं प्रकृत्यर्थे फले अन्वेति, अपि तु आख्यातोपात्ते व्यापारे । तस्य च वर्तमानत्वात् नानुपपत्तिः । न च एवमपि पाकानुत्पत्तिदशायां 'पाको वर्तते' इति कथं प्रयोगः स्यात् पाकसत्ताया [6]अवर्तमानत्वादिति वाच्यम् । तत्र भावार्थककृत्प्रत्ययानां व्यापारवाचकताभ्युपगमेन तदुपपादनसम्भवात् । अवश्यं च भावकृतां व्यापारवाचकता अभ्युपगन्तव्या । अन्यथा 'काष्ठैः पाकः' इति प्रयोगोऽनुपपन्न एव स्यात् । क्रियां विना कारकविभक्त्यनुपपत्तेः ।

---

1. मु. आत्मना
2. मु. प्रयोगोपपत्तेः
3. आ. 'अपि च' नास्ति
4. **पाकस्य**—पचिधात्वर्थस्य फलस्य ।
5. **फलं**—असत्त्वापादकाज्ञानाविषयत्वम् ।
6. **अवर्तमानत्वादिति** यश्च वर्तते पच्यर्थविक्लृत्त्यनुकूलव्यापारः तद्वाचकाख्या तस्य पाकइत्यत्राभावेन तस्य पदानुपस्थितत्वात् तत्र वर्तमानत्वान्वयासंभवात् कृतश्चात्र भावार्थकत्वात् इति भावः ।

न च—अस्मिन् पक्षे व्यापारविशेषाणां प्रतीतिर्न स्यात् । पच्यादिभिर्विक्लित्त्यादिफलस्यैव प्रतिपादनात् । न चाख्यातेनैव विक्लित्त्याद्यनुकूलानामधिश्रयणादिव्यापारविशेषाणां प्रतिपादनमस्तु[1] । तथात्वे आख्यातस्य अनेकशक्तिप्रसङ्गात् । [2]अतो व्यापारा एव धातुभिः प्रतिपाद्यन्ते—इति वाच्यम् । येनापि व्यापारप्रतिपादकता स्वीक्रियते तेनापि फलविशेषाणां प्रतीतिः कथं समर्थनीया । द्वितीयया फलविशेषप्रतिपादनमिति चेत्, तथासति फलस्यैव धात्वर्थत्वमिति पक्षेपि आख्यातस्यैव व्यापारविशेषप्रतिपादकता [3]अस्तु । यथा च सर्वनामन्यायेन धातूपात्तव्यापारफलत्वेन क्रोडीकृतानां [फलानां] नानार्थतापादकता[4] नास्ति, तथा धातूपात्तफलानुकूलव्यापारत्वेन क्रोडीकृतानां [5]व्यापाराणामपि न नानार्थतापादकता भविष्यति । यथा च धातुविशेषसमभिव्याहारे योग्यतया फलविशेषप्रतिपादनं तथा धातुविशेषसमभिव्याहारे व्यापारविशेषप्रतिपादकता भविष्यति ।

अस्तु वा [6]व्यापारवाचकतैव । न च त्यजिगम्योः पर्यायतापत्तिः । अस्तु को दोषः । 'अमुं ग्रामं परित्यज्य अमुं ग्रामं गच्छति' इतिव्यवहारे यथाश्रुते त्यजिगमिकर्मणोऽर्थत्यासस्तु न भवति । त्यजेः पूर्वदेशविभागद्योतकताभ्युपगमात् तत्समभिव्याहृतकर्मप्रत्ययेन पूर्वदेशविभाग एव प्रतिपाद्यते । एवं गमावुत्तरदेशसंयोगे द्रष्टव्यम् ।

यदि तु विनिगमनाविरहात् फलं व्यापारश्चेति [7]द्वयमपि धात्वर्थ इत्युच्यते, तथा नामास्तु, न काचिदनुपपत्तिः । अस्मिंश्च पक्षे 'काष्ठैः पाकः' इतिप्रयोगः सूपपाद एव । भावकृतां तु प्रकृत्यर्थप्रतिपादकतैव भविष्यति प्रातिपदिकार्थमात्र-

---

1. **अस्त्विति** इतीति शेषः । इति न च इति संबन्धः ।

2. **अतः**—व्यापारविशेषबोधस्यान्यथानुपपत्तेः । अत्र 'व्यापारः' इति 'प्रतिपाद्यते' इति च पाठान्तरम् ।

3. मु. 'अस्तु' नास्ति

4. **नानार्थतापादकतेति** द्वितीयाया इत्यादिः ।

5. **व्यापाराणामपि नेति** आख्यातानां इति शेषः ।

6. **व्यापारवाचकतैवेति** प्राचीननैयायिकानां मतम् ।

7. **द्वयमपि धात्वर्थ इति** प्राचीनवैयाकरणानां नवीननैयायिकानां च मतम् ।

विहितप्रथमावत्। परं तु 'कृदभिहितो भावो द्रव्यवत् प्रकाशते' इति न्यायेन कृत्प्रत्ययेन [1]तत्प्रकृत्यर्थस्यैव प्रतिपादने लिङ्गसङ्ख्यान्वययोग्यत्वरूपं द्रव्यत्वं [2]भवतीति विशेषः।

ननु—धातुप्रतिपाद्यत्वं यदि केवलव्यापारस्य यदि वा फलविशिष्टव्यापारस्य पक्षद्वयेऽप्याख्यातस्य व्यर्थता स्यात्। न च तदनुकूलः पुरुषप्रयत्न एव आख्यातेन प्रतिपाद्यत इति वाच्यम्। रथोगच्छतीति प्रयोगे व्यापारानुकूलस्य यत्नस्य अभावेन असाधुतापत्तेः—इति चेत्—

उच्यते—आख्यातेन धातुप्रतिपाद्यव्यापारातिरिक्त एव व्यापारः [3]सामान्यरूपेण प्रतिपाद्यते। पचतीत्यत्र हि धातुना विक्लत्त्यनुकूलो व्यापारः प्रतिपाद्यते, आख्यातेन तु तदतिरिक्तः चुल्लीसम्मार्जनादिरूपः स्थाल्यवरोहणान्तो व्यापारनिचयो यः स सर्वोऽपि भावनात्वेन रूपेण अभिधीयते। भावनात्वं च जन्यत्वे सति जनकत्वम्। तच्च यद्यपि घटादावपि वर्तते, तथाऽपि यथा धेनुशब्दे [4]धानकर्मत्वं प्रवृत्तिनिमित्तं गोत्वं प्रयोगोपाधिः तथा आख्यातेऽपि जन्यत्वे सति जनकत्वं प्रवृत्तिनिमित्तं पूर्वापरीभूतक्रियात्वं प्रयोगोपाधिः। पूर्वापरीभूतत्वं च एकस्मिन् क्षणे अपर्यवसितस्वरूपत्वम्। तच्च प्रत्येकं क्रियाणां न सम्भवति। तत्तत्क्षणे पर्यवसितत्वात् प्रत्येकं क्रियाणाम्। किं तु सन्तन्यमानव्यापारनिचय एव। अतः स एव भावनात्वेनाकारेणाभिधीयते। भावनाशब्देन तु यद्यपि पूर्वापरीभूतमेव वस्तु प्रतिपाद्यते, तथाऽपि तस्मिन् शब्दे जनकत्वापरपर्यायं भवनानुकूलत्वमेव प्रवृत्तिनिमित्तम्, न तु साध्यत्वापरपर्यायं जन्यत्वमपि। तावन्मात्रेण च आख्यातभावनाशब्दयोः [5]अदूरविप्रकर्षाभिधानमभियुक्तानाम्।

---

1. मु. तस्य प्रकृत्यर्थस्यैव आ. 'व्यापारस्य' इत्यधिकम्
2. मु. भविष्यतीति
3. मु. सामान्येन
4. **धानं**—दोहनम्।
5. **अदूरविप्रकर्षेति** जन्यत्वेनाभिधायकत्वतदभावाभ्यां आख्यातस्य भावनाशब्दस्य चास्ति विप्रकर्षः। स च अदूरः। यतः जनकत्वेनाभिधायकत्वस्य उभयोः सत्वात् अस्ति सन्निकर्षः। अतः आख्यातभावनाशब्दौ अदूरविप्रकृष्टौ इत्यभिदधते अभियुक्ताः इत्यर्थः।

तत् सिद्धं समानपदोपात्तायां भावनायां प्रवर्तनायाः प्रयोज्यप्रयोजकभावेनान्वय इति ।

प्रवर्तनायाः प्रवृत्तिप्रयोजकत्वं च तत्र इष्टसाधनताक्षेपद्वारा ।

अत्रेदं वक्तव्यम्—यदि प्रवर्तनायामभिहितायामपि प्रवृत्तिजननार्थमिष्टसाधनताक्षेपोऽभ्युपगम्यते, तदा तस्या एव लिङर्थत्वमस्तु । प्रवर्तनाज्ञानस्यापीष्टसाधनताक्षेपकत्वेनाभ्युपगततया इष्टसाधनताज्ञानस्यैव प्रवर्तकताभ्युपगमात् अन्यथासिद्धस्य तस्य प्रवर्तकत्वानुपपत्तेश्च । न च—प्रवर्तनया स्वस्य प्रवृत्तिजननार्थमेव इष्टसाधनत्वस्याक्षिप्ततया कथं द्वारभूतेन तेन अन्यथासिद्धत्वम्, अन्यथा अपूर्वेणान्यथासिद्धस्य यागादेरपि स्वर्गजनकता न स्यादिति—वाच्यम् । युक्तं अपूर्वेण यागादेरन्यथासिद्धिर्न भवतीति, यत्कारणं यागस्वर्गयोस्साध्यसाधनभावज्ञानमुपजीव्यैव अपूर्वस्य तद्द्वारतयैव स्वर्गसाधनता कल्प्यते । तत्र च यदि यागस्य स्वर्गसाधनता न स्यात् कस्य निर्वाहाय अपूर्वं स्वर्गसाधनं भवेत् । नैवमिष्टसाधनताज्ञानम् । तस्य प्रत्यक्षाधीनप्रवृत्तिस्थले स्वत एव प्रवृत्तिजनकतायाः सिद्धत्वात् । ततश्च प्रत्यक्षाधीनप्रवृत्तिस्थले-क्लृप्तकारणताकस्येष्टसाधनत्वज्ञानस्यैव शब्दानन्तरभाविप्रवृत्तिजनकत्वोपपत्तौ तत्रैव लिङादीनां शक्तिरस्तु । किं [1]तदाक्षेपिकया प्रवर्तनया । अतः प्रवर्तनावादिनाऽप्यवश्यापेक्षितव्यं इष्टसाधनत्वमेव विध्यर्थः ।

तावन्मात्रज्ञानं च न प्रवृत्तिहेतुः । मधुविषसंपृक्तान्नभोजनादाविष्टसाधनताज्ञाने सत्यपि बलवदनिष्टानुबन्धित्वज्ञानेन प्रवृत्तिप्रतिबन्धदर्शनात् । अतो बलवदनिष्टाननुबन्धित्वमपि विध्यर्थः ।

एवं तर्हि कृत्यसाध्यताज्ञानेऽपि प्रवृत्तिप्रतिबन्धात् कृतिसाध्यत्वमपि लिङर्थोऽस्त्विति चेत्, न—यद्यपि कृतिसाध्यताज्ञानं प्रवृत्तिजनकं भवति, तथाऽपि तस्य प्रत्यक्षादिना अवगन्तुं शक्यतया न विध्यर्थता । न चैवं इष्टसाधनतादेरपि लोके प्रत्यक्षादिना अवगन्तुं शक्यतया विध्यर्थता न स्यादिति वाच्यम् । तस्य लोके प्रत्यक्षादिना अवगन्तुं शक्यत्वेऽपि वेदे तदसम्भवात् । कृतिसाध्यत्वं तु वेदेऽपि यागादौ प्रमाणान्तरावगम्यमेव । ततश्च अस्तु नाम प्रवृत्तिजनकज्ञानविषयतया कृतिसाध्यत्वमपि विध्यर्थः, तथाऽपि वेदे प्रमाणान्तरसिद्धतया तस्मिन्नंशे अनुवाद-

1. आ. तदपेक्षिण्या

कतैव । अतो वेदे विधिप्रत्ययस्य कार्यतायां तात्पर्यमेव नास्ति, प्रमाणान्तरसिद्धत्वात् । अपि तु अज्ञाते बलवदनिष्टाननुबन्धीष्टसाधनत्व एव ।

ननु—प्रत्यक्षादिसिद्धमपि कृतिसाध्यत्वं शब्देन बोध्यत एव । न च निष्प्रयोजनत्वं तत्प्रतिपादनस्य । तस्मिन् हि बोधिते 'स्वर्गकामिकृतिसाध्य एव यागादिः स्वर्गकामस्येष्टसाधनं' इति [1]बोधो भवति । तेन च [2]'अन्यकृत एव यागः स्वस्येष्टसाधनं' इति शङ्का अपोदिता भवति । तद्बोधनाभावे हि स्वफलसिद्धये अन्यमपि पुरुषं प्रार्थनादिना यागादौ प्रवर्तयेत् । न च इयमपि शङ्का फलस्य कर्तृगामिताबोधकेनात्मनेपदेन निवारितेति वाच्यम् । एवमपि 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इत्यादावात्मनेपदाभावेन शङ्कानिवारणालाभात् । ननु—अग्नीनादधीतेति आत्मनेपदेन आधानस्य कर्तृगामिफलकत्वं बोध्यते । तच्च साक्षादाधानफलमग्निसंस्कारमादाय न सम्भवति, संस्कारस्य अग्निगतत्वेन आत्मगतत्वाभावात् । अतोऽग्निसाध्यक्रतुफलमादायैव तद्वचनं निर्वहणीयम् । ततश्च आधानकर्तुरेवाग्निसाध्यकर्मफलमिति फलस्य न अन्यकृतकर्मसाध्यता वक्तुं शक्यते, इति चेत्—एवमपि यान्यनग्निसाध्यानि जपहोमादीनि तेषां न [3]आधानगतात्मनेपदेन कर्तृगामिता सिध्यति । अग्निसाध्यानामपि कर्तृगामिफलकत्वं न प्राप्नोति । एतावदेव हि तेन सिध्यति 'अग्निसाध्यानां कर्मणां फलं आधानकर्तुरेव' इति । तावताऽपि स्वकृताधानसम्पादितेषु अग्निषु अन्येन कर्मानुष्ठाने कृतेऽपि [4]स्वफलसिद्धिर्भवत्येवेति न यागादेः स्वर्गकामिकर्तृकता नियमेन प्राप्नोति । अतः तत्सिध्यर्थं कृतिसाध्यत्वमपि प्रतिपादनीयं—इति चेत्—

न—एवमपि 'स्वर्गकामिकृतिसाध्य एव यागः स्वर्गजनकः' इति सिध्यति । ततश्च, योऽन्यार्थं स्वर्गं कामयते सोऽपि स्वर्गकाम इति अन्यदीयस्वर्गार्थं अन्यस्यापि अनुष्ठानं प्राप्नोति ।

---

1. **बोध इति** स्वर्गकामपदसमभिव्याहारात् स्वर्गकामस्य यदिष्टं तत्साधनत्वस्येव स्वर्गकामस्य या कृतिः तत्साध्यत्वस्यापि बोधो भवति, कृतेः पदानुपस्थाप्यत्वे उक्तरीत्या बोधो न भवति, न हि शाब्दं अशाब्देनान्वेति—इति भावः ।

2. **अन्यकृत एवेति** एवकारःअप्यर्थकः ।

3. **आधानगतेति** आधानवाक्यगतेत्यर्थः ।

4. **स्वफलसिद्धिरिति** क्षेत्रजपुत्रोत्पादनन्यायेनेति भावः ।

तत्र यद्युच्येत—अन्यदीयस्वर्गकामनया तदैव पुरुषः प्रवर्तते यदि स्वर्गितया अन्य इष्टो भवति । ततश्च स्वर्गिपुरुषकत्वमेव तस्य फलं भवति । न चैतन्न्याय्यम् । स्वर्गकामिकृतिसाध्यो यागः स्वर्गकामस्येष्टसाधनं इत्युक्ते[1] स्वारसिकी स्वर्गकामना स्वार्थस्वर्गे एव प्रतीयते । परं तु विधिश्रुत्युपात्तस्य फलस्य यत्र परम्पराग्राहकं प्रमाणमवतरति, यथा श्राद्धवैश्वानरेष्ट्यादौ, तत्र परं स्वरसतः प्रतीयमानोऽर्थः परित्यज्यते, तृप्तिविशेषशालिपितृकत्वं पूतत्वादिमत्पुत्रकत्वं च फलमुपेयते । प्रकृते तु तथाऽङ्गीकारे प्रमाणाभावात् [2]स्वार्थस्वर्गकाम एव स्वर्गकामशब्दोपात्तो भवतीति 'यः स्वार्थं स्वर्गं कामयते तत्कृतिसाध्यो यागः तस्य फलसाधनं' इत्युक्ते, अन्यकृतिसाध्य [3]एव यागः [4]स्वार्थस्वर्गकामस्य फलं प्रयच्छतीति शङ्का निराकृता भवति । अतः कृतिसाध्यत्वमपि प्रतिपादनीयम्—इति—

तन्न—यदि हि स्वर्गकामशब्देन स्वार्थस्वर्गकाम एव प्रतिपाद्यते, तदा आख्यातोपात्ते व्यापारे तस्य कर्तृतया अन्वयात् 'यः स्वार्थं स्वर्गं कामयते तत्कर्तृको व्यापारः तस्येष्टसाधनम्' इति बोधे सति 'अन्यकर्तृकस्य यागस्य स्वफलजनकत्वम्' इतिशङ्कानिराकरणं सुकरमेव[5] ।

तत् सिद्धं वेदे तात्पर्यगत्या लिङादिभिः इष्टसाधनत्वं बलवदनिष्टाननुबन्धित्वं च प्रतिपादनीयम्, न तु कार्यत्वं नापि तेन रूपेणापूर्वम्—इति । 'श्येनेनाभिचरन् यजेत' इत्यत्र तु वाक्यान्तरेण नरकसाधनतावगमात् न बलवदनिष्टाननुबन्धित्वांशो बोध्यते । अपि तु इष्टसाधनत्वमात्रम् ।

ननु—विधिनैव बलवदनिष्टाननुबन्धित्वे बोधिते अर्थवादा [6]व्यर्थास्स्युरिति चेत्, न—बलवदनिष्टाननुबन्धित्वे अवगतेऽपि स्वर्गादितुल्यमनिष्टं नास्तीति न निर्णीतम् । ततश्च सुखदुःखयोस्तुल्यताशङ्कया पुरुषस्य न अभिरुचिः स्यात् ।

---

1. मु. इत्युक्तेः
2. मु. स्वार्थस्वर्ग एव
3. एवकारः अप्यर्थकः ।
4. मु. स्वार्थ स्वर्ग
5. सुकरमेवेति 'अतः कृतिसाध्यत्वस्य लिङाद्यर्थत्वं नाभ्युपेयम्' इति शेषः ।
6. व्यर्थास्स्युरिति अर्थवादबोध्यप्राशस्त्यस्य बलवदनिष्टाननुबन्धित्वव्यतिरिक्तस्य दुर्निरूपत्वात् इति भावः ।

**औपनिषदस्य पुरुषस्य अनन्यशेषत्वात्। योऽसावुपनिषत्स्वेवाधिगतः पुरुषोऽसंसारी (ब्रह्मस्वरूपः) उत्पाद्यादिचतुर्विधद्रव्यविलक्षणः स्वप्रकरणस्थो-**

अतः अर्थवादैः फलतुल्यमनिष्टं नास्तीति बोधनीयम्[1]। अतो न अर्थवादानां व्यर्थता।

अतः न विधीनामपूर्ववाचकत्वम्, नापि कार्यान्वित एव पदानां शक्तिः, अतो न कार्यशेषतया व्युत्पत्त्यनुरोधेन वेदान्तैः ब्रह्म प्रतिपादनीयम्—[2]इति दूषणं मनसि निधाय 'वेदान्तवाक्यस्वरसादेव कार्यशेषतया ब्रह्मावगम्यते' [3]इत्यत्र दूषणमाह—**औपनिषदस्य पुरुषस्येति।**

सङ्ग्रहवाक्यं विवृणोति—**योसावुपनिषत्स्विति**। उपनिषच्छब्दो ब्रह्मविद्याप्रतिपादकः। 'ब्राह्मीं वाव त उपनिषदमब्रूमेति तस्यै तपो दमः कर्म' [केन.उ. ४-८] इति प्रयोगात्। तपआदौ शेषिभूता ब्रह्मसंबन्धिनी च ब्रह्मविद्यैव हि भवति। ततश्च—

'उपेतिशब्दः सामीप्ये निशब्दो निर्णयार्थकः।
सदेर्विशरणार्थत्वं इत्येषोपनिषत् भवेत्॥

परमात्मानं सामीप्येन—प्रत्यगभेदेन विषयीकृत्य निर्णयरूपा अविद्यां शृणाति—नाशयति' इति निर्वचनं उपनिषच्छब्दे द्रष्टव्यम्। ततश्च ब्रह्मविद्याप्रतिपादकेनोपनिषच्छब्देन प्रकृतभाष्ये तज्जनको वेदान्तभागः प्रतिपाद्यते निरूढलक्षणया। कार्यशेषता—कार्यसम्बन्धित्वम्। तत् किं कर्तृतया, उत प्रयाजादिवत् इतिकर्तव्यतारूप-

---

1. **बोधनीयमिति** न च अर्थवादरहितविधिस्थले कथं उक्तबोधनिर्वाह इति शङ्क्यम्। तत्र विधिशिरस्येव हि अयं भारो निक्षिप्यते, सति त्वर्थवादे नायं भारः तत्र निक्षेप्तुमुचितः। अथवा-सार्थवादस्थले इष्टतुल्यानिष्टाभावस्य **शाब्दबोधः**, निरर्थवादस्थले **कल्पना**—इत्याशयात्। स्फुटीकरिष्यति चैतत् 'अपि च ब्राह्मणो न हन्तव्यः' इत्यादिभाष्यव्याख्यानावसरे निन्दार्थवादसार्थक्यविवेचने स्थित्वा।

2. **इति दूषणमिति** 'यदपि केचिदाहुः- प्रवृत्तिनिवृत्तिविधितच्छेषव्यतिरेकेण केवलवस्तुवादी वेदभागो नास्तीति-तन्न' इतिभाष्यव्याख्यानोपक्रमे पूर्वपक्षिण आशयो द्वेधा विकल्पितः। तत्र आद्यकल्पे दूषणमिदं 'तन्न' इति भाष्यखण्डेन सूचितम्।

3. **इत्यत्र दूषणं**—द्वितीयकल्पे दूषणम्।

**ऽनन्यशेषः, नासौ नास्ति इति नाधिगम्यत इति वा शक्यं वदितुम्, 'स एष नेति नेत्यात्मा' [बृ. उ. ३-९-२६] इत्यात्मशब्दात्, आत्मनश्च प्रत्याख्यातुमशक्यत्वात्, य एव निराकर्ता तस्यैवात्मत्वात् ।**

**नन्वात्मा अहंप्रत्ययविषयत्वात् उपनिषत्स्वेव विज्ञायत इत्यनुपपन्नम्, न—तत्साक्षित्वेन प्रत्युक्तत्वात् । न ह्यहंप्रत्ययविषयकर्तृव्यतिरेकेण**

तया, उत व्रीह्यादिवदवहननादौ उपासनाशेषतया[1], इति विकल्पं मनसि निधाय निराकरोति । असंसारीति कर्तृतायाः, उत्पाद्यादीति शेषतायाः[2], स्वप्रकरणस्थ इति इतिकर्तव्यतारूपतायाः निराकरणं द्रष्टव्यम् । अनन्यशेष इति फलितार्थकथनम् । **नासाविति** । कार्यान्विते शक्तेर्निराकरणात् नाधिगम्यत इति न शक्यते वक्तुम् ।

ननु 'अथात आदेशो नेति नेति' इति प्रपञ्चेन सह आत्मनोऽपि निराकरणात् नास्तीति कथं न शक्यते वक्तुं, इत्यत आह—**स एष नेतिनेतीति** । सएषइतिवाक्यं बृहदारण्यकपञ्चमाध्यायगतं 'कस्मिन्नु त्वं चात्मा च प्रतिष्ठितौ स्थः' इत्यादिना 'कस्मिन्नूदानः प्रतिष्ठित इति समान इति' इत्यन्तेन प्राणापानव्यानोदानसमानानामुत्तरोत्तरप्रतिष्ठितत्वं निरूप्य आम्नातम् । अथातआदेशोनेतिनेतीति चतुर्थाध्यायगतं तत्रैव[3] । ततश्चायमर्थः—यश्चतुर्थाध्याये नेति नेतीति प्रतिपादितः, स एष आत्मा—यः प्राणादौ समानान्ते जीवरूपेण प्रतिष्ठितः—इति । ततश्च अथातआदेश इति [4]वाक्यस्य श्रुत्यैव आत्मपरिशेषतायां पर्यवसानस्य कृतत्वात् न तेन आत्माऽपि निषिध्यत इति भावः । निराकरणसाक्षित्वादप्यात्मा निराकर्तुं न शक्यत इत्याह—**आत्मनश्चेति** । असाक्षिकस्य निराकरणस्यैव असम्भवादिति भावः ।

यदि उपनिषदां प्रत्यगभिन्नब्रह्मपरत्वं, तर्हि कथं प्रामाण्यम्, अनधिगतविषयालाभात्, प्रतीचः अहमितिप्रत्यक्षसिद्धत्वात्—इति शङ्कते—**नन्विति** । शुद्धस्य साक्षिणः प्रत्यक्षेणानिर्णयात् नोक्तदोष इति परिहरति । **नेति** । वेदान्त-

1. मु. शेषितया
2. मु. शेषितायाः
3. **तत्रैव**—बृहदारण्यके एव
4. मु. श्रुतिवाक्यस्यात्म०

**तत्साक्षी सर्वभूतस्थः सम एकः कूटस्थनित्यः पुरुषो विधिकाण्डे तर्कसमये वा केनचिदधिगतः सर्वस्यात्मा, अतः स न केनचित् प्रत्याख्यातुं शक्यो विधिशेषत्वं वा नेतुम्। आत्मत्वादेव च सर्वेषां न हेयो नाप्युपादेयः। सर्वं हि विनश्यद्विकारजातं पुरुषान्तं विनश्यति। पुरुषो हि विनाशहेत्व-भावादविनाशी, विक्रियाहेत्वभावाच्च कूटस्थनित्यः, अत एव नित्यशुद्ध-बुद्धमुक्तस्वभावः। तस्मात् 'पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः' (क. उ. १-३-११)। 'तं त्वौपनिषदं पुरुषं पृच्छामि' (बृ. उ. ३-९-२६) इति च औपनिषदत्वविशेषणं पुरुषस्य उपनिषत्सु (एव) प्राधान्येन**

प्रतिपाद्यस्यात्मनः अहंप्रत्ययविषयकर्त्रादिसाक्षित्वेन[1] उक्तशङ्कायाः प्रत्युक्तत्वादित्यर्थः। न केवलं वेदान्तप्रतिपाद्यस्वरूपस्य प्रत्यक्षानधिगतिः, [2]तार्किकैरपि तस्य स्वरूपं ज्ञातुमशक्यं इत्याह—**नह्यहंप्रत्ययेति**। 'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्। विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति॥' इतिवचनमभिप्रेत्य **सर्वभूतस्थः सम** इत्युक्तम्। ततश्च क्षणिकमनित्यंविज्ञानमात्मेतिसौगतमतानधिगतिः शरीरपरिमाण-इतिदिगम्बरमतानधिगतिश्चोक्ता। 'सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः' इति वचनमभिप्रेत्य **एक** इत्युक्तम्। ततश्च नानात्मवादितार्किकमीमांसकमतानधिगतिरुक्ता। 'अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते' इति वचनमनुसृत्य **कूटस्थनित्य** इत्युक्तम्। ततश्च जीवोत्पत्तिवादिमतानधिगतिरुक्ता। **सर्वस्यात्मा**—सर्वस्य पारमार्थि-कस्वरूपम्। **विधिशेषत्वं**—विधेयत्वं निषेध्यत्वं चेत्यर्थः। उपादेयत्वं कृतिसाध्यत्वं, तदभावात् न विधेयः। निवृत्तिविषयत्वं हेयत्वं, तदभावात् न निषेध्यः। सर्वबाधावधित्वात् सर्वस्य पारमार्थिकं स्वरूपं आत्मा इत्याह—**सर्वं हि विनश्य-द्विकारजातमिति। तस्मादिति।** यस्मात् सर्वविक्रियारहितो मुक्तस्वभाव आत्मा तस्मात् 'पुरुषान्न परं किञ्चित्' इतिवाक्यं परागतिरितिशब्देन परमप्राप्यत्वं प्रतिपाद-यत् उपपद्यते इत्यर्थः। औपनिषदस्येतियदुक्तं तत्र प्रमाणमाह—**तत्त्वौप-निषदमिति।**

---

1. **साक्षित्वेनेति** आत्मनः संस्कार्यत्वनिरासप्रस्तावे 'अनश्नन्नन्योऽभिचाकशीति 'एको देवः...साक्षी चेता' इति साक्षित्वप्रतिपादकमन्त्रोदाहरणेनेत्यर्थः।

2. आ. तान्त्रिकैरपि

**प्रकाश्यमानत्वे उपपद्यते। अतो भूतवस्तुपरो वेदभागो नास्तीति वचनं साहसमात्रम्।**

**यदपि शास्त्रतात्पर्यविदामनुक्रमणं 'दृष्टो हि तस्यार्थः कर्मावबोधनम्' इत्येवमादि, तत् धर्मजिज्ञासाविषयत्वात् विधिप्रतिषेधशास्त्राभिप्रायं द्रष्टव्यम्।**

**अपि च 'आम्नायस्य क्रियार्थत्वात् आनर्थक्यमतदर्थानाम्' इत्येतदेकान्तेनाभ्युपगच्छतां भूतोपदेशानामानर्थक्यप्रसङ्गः। प्रवृत्तिनिवृत्तिव्यतिरेकेण भूतं चेद्वस्तु उपदिशति भव्यार्थत्वेन, कूटस्थनित्यं भूतं नोपदिशतीति को हेतुः। न हि भूतमुपदिश्यमानं क्रिया भवति। अक्रियात्वेऽपि भूतस्य क्रियासाधनत्वात् क्रियार्थ एव भूतोपदेश इति चेत्, नैष दोषः-क्रियार्थत्वेऽपि क्रियानिर्वर्तनशक्तिमद्वस्तु उपदिष्टमेव। क्रियार्थत्वं तु**

एकदेशिना यत् संप्रदायविद्वचनमुदाहृतम्, तत्राह—**यदपीति**। यद्यपि तस्य वचनस्य जैमिनिमतानुरोधित्वात् तद्विरोधो न परिहर्तव्य एव, अपि तु न्यायविरोधे तदप्रमाणमित्येव वक्तुमुचितं, तथाऽपि तद्वचनश्रद्धाजडान् प्रति तथोक्तिः।

'आम्नायस्य क्रियार्थत्वात्' इत्यत्र किं अर्थशब्दः अभिधेयवाची उत प्रयोजनवाची? नाद्य इत्याह—**अपि चेति**। ननु—भूतोपदेशानामपि नानर्थक्यम्, तेषां[1] विशेषणतया क्रियाप्रतिपादकत्वात्—इत्यत आह—**प्रवृत्तिनिवृत्तिव्यतिरेकेणेति**। **नोपदिशतीति**। क्रियां विनैवेति शेषः। **को हेतुरिति**। [2]'साक्षाद्विशेषणतया वा कार्य एव पदानां शक्तिः' इत्यस्य नियमस्य निर्मूलत्वादिति भावः। **न हीति**। कस्यैष इति प्रश्ने राज्ञोऽयं इत्युत्तरे च उपदिश्यमानोऽर्थः न क्रिया, नापि तदन्वित इत्यर्थः। नन्वस्तु सिद्धेऽपि पदानां व्युत्पत्तिः, अथापि वेदस्य प्रयोजनवदर्थाभिधायकत्वात् तन्निर्वाहाय क्रियाप्रतिपादकता स्वीकर्तव्या, ततश्च सूत्रेऽप्यर्थशब्दः प्रयोजनपरः— इति द्वितीयं शङ्कते—**अक्रियात्वेऽपीति**।

---

1. आ॰ 'अपि' इत्यधिकम्। **विशेषणतया क्रियाप्रतिपादकत्वात्**—क्रिया-कार्यम्, कार्यविशेषणप्रतिपादकत्वात्; कार्यान्वितप्रतिपादकत्वादिति यावत्।

2. **साक्षाद्विशेषणतया वा कार्ये**—कार्ये कार्यान्विते वा।

**प्रयोजनं तस्य। न चैतावता वस्तु अनुपदिष्टं भवति। यदि नामोपदिष्टं किं तव तेन स्यादिति, उच्यते—अनवगतात्मवस्तूपदेशश्च तथैव भवितुमर्हति। तदवगत्या मिथ्याज्ञानस्य संसारहेतोः निवृत्तिः प्रयोजनं क्रियत इति अविशिष्टमर्थवत्त्वं क्रियासाधनवस्तूपदेशेन।**

**अपि च 'ब्राह्मणो न हन्तव्यः' इति चैवमाद्या निवृत्तिः उपदिश्यते। न च सा क्रिया, नापि क्रियासाधनम्। अक्रियार्थानामुपदेशा**

अपि च गुरुमते 'सोमेन यजेत' इत्यादिषु वाक्येषु लिङा कार्यं प्रतिपाद्यते। तस्य च विषयापेक्षायां प्रकृत्युपात्तो याग एव विषयत्वेनान्वेति। न तु सोमादिः उपपदोपात्तः। कृतिविषयो हि कार्यविषय इत्युच्यते। कृतेश्च द्विविधो विषयः—उद्देश्यो जन्यश्चेति। तत्र उद्देश्यो गुणद्रव्यादिसाधारणः। अत एव 'घटं करोति' इति घटस्य उद्देश्यतयाविषयत्वमस्तीति 'यत्नरूपा कृतिरेव कृञ्धात्वर्थः' [1]इति मते द्वितीयानिर्देश उपपद्यते। 'जानाति, इच्छति, करोति' इत्यादिसमभिव्याहारे द्वितीयायाः विषयतायां [2]निरूढत्वाभ्युपगमात्। जन्यस्तु क्रियारूप एव। प्रकृते च कृतिविषयः कृतिकार्ययोः साध्यसाधनभावघटकोऽपेक्षितः। उद्देश्यविषयस्यापूर्वस्य [3]स्वपदेनैव समर्पितत्वात्। घटकश्च कृतिजन्य एव भवति। तत्र यदि सोमादीनां कृतिविषयत्वं स्वीक्रियते तदा तेषामपि कृतिजन्यतासिद्ध्यर्थं व्यापारान्तरमपेक्षितं स्यात्। अतः साक्षात् कृतिसाध्यो यागादिरेव विषयतया अन्वेति। ततश्च यत्र लिङा कार्यं निर्दिश्यते तत्र क्रियारूपो विषयोऽपेक्षितः, अन्यथा कृतिसाध्यत्वेनावगतस्यापूर्वस्य निर्वाहो न भवतीति। एवं[4] तत्प्रक्रियायां स्वीक्रियमाणायां 'ब्राह्मणो न हन्तव्यः' इत्येवमादिनिषेधवाक्येषु कार्यप्रत्ययो न निर्वहति, क्रियारूपविषयालाभात्—इत्याह—**अपि चेति**। तन्मते

---

1. **इति मते**—नैयायिकमते। व्यापारोऽर्थ इति मण्डनमिश्रमते घटस्य विषयत्वमन्तराऽपि द्वितीयानिर्देशोपपत्तिः।

2. **निरूढत्वाभ्युपगमात्** निरूढलक्षणाभ्युपगमात्।

3. **स्वपदेनैव**—कार्यवाचिलिङ्पदेनैव।

4. मु. एवं सति

**ऽनर्थकश्चेत् 'ब्राह्मणो न हन्तव्यः' इत्यादिनिवृत्त्युपदेशानामानर्थक्यं प्राप्तम्, तच्चानिष्टम्।**

**न च स्वभावप्राप्तहन्त्यर्थानुरागेण नञः शक्यमप्राप्तक्रियार्थत्वं कल्पयितुं हननक्रियानिवृत्त्यौदासीन्यव्यतिरेकेण।**

हि ब्राह्मणोनहन्तव्य इत्यत्र नञर्थोऽभावः। स च हननरूपधात्वर्थे विशेष्यतया अन्वेति। ततश्च हननाभाव इत्यर्थः हन्तिसमभिव्याहृतेन नञा प्रतिपाद्यते। अभाव एव निवृत्तिरित्युच्यते। लिङादिना च कार्यं प्रतिपाद्यते। ततश्च 'हननाभावविषयकं कार्यं' इति वाक्यार्थं वर्णयन्ति। तदेतद्दुर्घटम्। अभावस्य क्रियात्वाभावेन घटकीभूतविषयतया अन्वयासम्भवात्। ततश्च घटकीभूतविषयालाभेन 'ब्राह्मणो न हन्तव्यः' इति कार्यताप्रत्ययोऽनिर्व्यूढ एव भवतीति भावः।

ननु यत [1]एव नञा प्रतिपादितस्य अभावस्य कृतिं प्रति घटकीभूतविषयत्वासम्भवः, अत एव नञः अभावपरिपालने लक्षणा उपेयते। यदि तु—हननप्रागभावस्य नञा प्रतिपादितस्य परिपालनं नाम उत्तरकालसम्बन्धित्वमेव, [2]तदपि न साक्षात् कृतिसाध्यम्—तर्हि परिपालनानुकूलः वाङ्मनःकायानां निरोधाख्यो व्यापार एव लक्ष्यताम्—इत्याशङ्क्याह—**न चेति**। अनुरागः अन्वयः। निवृत्तिरेवौदासीन्यं—निवृत्त्यौदासीन्यं, तद्व्यतिरेकेणेत्यर्थः।

अयमाशयः—निरोधाख्ये व्यापारे विषयतया निरूप्यमाणे लक्षणैव [3]तावत् दोषः। न चेष्टापत्तिः। तथासति षाष्ठं प्रतिषेधाधिकरणं [पू. मी. ६-२-५] विरुध्येत। तत्र ह्ययमर्थो निरूपितः—'न कलञ्जं भक्षयेत्' 'न सुरां पिबेत्' इत्यादिवाक्यं किं निषेधार्थकमेव, उत 'तस्य व्रतं' इत्युपक्रम्याम्नातं नेक्षेतोद्यन्तमितिवाक्यं यथा पर्युदासार्थकं एवमिदमपि—इति सन्दिह्य, यथा 'नेक्षेतोद्यन्तमादित्यं' इत्यत्र नञीक्षतिभ्यां ईक्षणप्रागभावानुकूलस्सङ्कल्पो 'नेक्षे' इत्येवंरूपः प्रतिपाद्यते,

---

1. मु. एवं
2. तदपि नेति प्रागभावध्वंससामग्रीविरहादेव उत्तरकालसंबन्धसिद्धेः इति भावः।
3. मु. 'तावत्' नास्ति

तथा 'न हन्तव्यः' इत्यत्रापि नञ्हन्तिभ्यां हननप्रागभावानुकूलः सङ्कल्प एव प्रतिपाद्यते, ततश्च स एव नियोगविषयो भवतीति–पूर्वपक्षं कृत्वा ; तथासति लक्षणा स्यात् , नेक्षेतेत्यत्र तु सा समाश्रिता, तस्य व्रतमित्युपक्रमात् , अतो न सङ्कल्पलक्षणा इति–सिद्धान्तितम् , तत् विरुद्ध्येत—इति ।

अपि च अभावकार्यताज्ञानं न निवृत्तौ प्रयोजकम् । अनर्थसाधनताज्ञानं विना पुरुषस्य निवृत्तेरसम्भवात् । अतः लिङाद्यर्थभूतं बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वमेव नञा निषिध्यते । तन्निषेधे हि कलञ्जभक्षणं दृष्टसुखापेक्षया तीव्रं चिरकालानुभाव्यं च दुःखं सम्पादयतीत्यर्थो लभ्यते । कथम् । लिङर्थनिविष्टं बलवत्त्वं हि अनिष्टस्य इष्टापेक्षया तीव्रत्वं चिरकालानुभाव्यत्वं च । उभयविधानिष्टाननुबन्धित्वं बलवदनिष्टाननुबन्धित्वम् । न चैवं तीव्रानिष्टचिरकालानिष्टयोर्मध्ये [1]एकैकानिष्टानुबन्धिन्यपि उभयविधानिष्टाननुबन्धित्वं वर्तत इति तद्व्यावृत्तिः कथं स्यादिति वाच्यम् । अन्यतरत्वेन क्रोडीकृत्य उभयविधानिष्टाननुबन्धित्वबोधने तद्व्यावृत्तेरपि [2]लाभसम्भवात् । ततश्च आख्यातेन 'कलञ्जभक्षणभावनागतं बलवदनिष्टाननुबन्धित्वविशिष्टमिष्टसाधनत्वम्' इति बोधिते नञा च तदन्वयिना विशिष्टाभावे बोधिते इष्टसाधनत्वांशस्य प्रत्यक्षसिद्धस्य निषेद्धुमशक्यतया बलवदनिष्टाननुबन्धित्वाभावे एव पर्यवसानं अर्थवादैर्लभ्यते । [3]निन्दार्थवादैर्हि बलवदनिष्टानुबन्धित्वमेव लक्ष्यते । यत्र तु निन्दार्थवादो न लभ्यते, तत्र विशिष्टाभावबोधकेन नञा इष्टसाधनत्वांशनिषेधबाधसहकृतेन बलवदनिष्टाननुबन्धित्वाभावमादायैव पर्यवसानं स्वीक्रियते । न चैवं निन्दार्थवादं विनैव [4]सामर्थ्यात् निषेधस्य बलवदनिष्टानुबन्धित्वपर्यवसानसिद्धौ अर्थ-

---

1. **एकैकेत्यादि** उभयविधानिष्टाननुबन्धित्वं नाम तीव्रानिष्टानुबन्धित्वचिरकालानुभाव्यानिष्टानुबन्धित्वयोः उभयोरभावः । तत्र एकैकमात्रस्य सत्त्वेऽपि उभयोरभावः सम्भवति, एकसत्त्वेऽपि द्वयस्याभावात् , घटसत्त्वेऽपि 'घटपटोभयं नास्ति' इति प्रतीतेः इत्यर्थः ।

2. **लाभसंभवादिति** उभयोरन्यतरसत्त्वे 'अन्यतरत् नास्ति' इत्यप्रतीतेः इति भावः ।

3. **निन्दार्थवादैर्हीति** तथा चाहुर्वृद्धाः—निषेध्येषु तात्कालिकेष्टापेक्षया भाव्यनिष्टस्य गुरुतरत्ववचनं निन्दार्थवादः, विहितेषु तात्कालिकक्लेशापेक्षया भाविन इष्टस्य गुरुतरत्ववचनं स्तुत्यर्थवादः—इति ।

4. **सामर्थ्यात्**—योग्यत्वात् ।

वादवैयर्थ्यमेव स्यादिति वाच्यम् । निन्दार्थवादाम्नानस्थले [1]स्वाध्यायविधिबलेन निन्दार्थवादैरेव पर्यवसानं लम्भनीयम्, न तु सामर्थ्यालोचनसहकृतेन निषेधेन—इति नियमोपपत्तेः ।

नन्वेवमपि 'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाति' इति विधिनिषेधयोः समानविषयत्वे का गतिः । न हि तत्र उक्तगतिः सम्भवति । बलवदनिष्टाननुबन्धित्वस्यापि विधिसिद्धत्वात् इति चेत्—

उच्यते—विधिबाधं विना हि निषेधस्य नावकाशो लभ्यते, तत्र परं अल्प-बाधोपपत्तौ सर्वबाधो न न्याय्यः । तत्र च इष्टसाधनत्वान्तर्गतं नियतत्वमेव बाध्यते । इष्टसाधनत्वं हि इष्टनियतपूर्ववर्तित्वम् । तत्र पूर्ववर्तित्वांशबाधे सर्वात्मना वचनं बाधितं स्यात् । नियतत्वांशबाधे तु पाक्षिकानुष्ठानसम्पादकतया वचनं चरितार्थं भवति । ततश्च यथा 'व्रीहिभिर्यजेत' 'यवैर्यजेत' इति वचनद्वयविरोधे उभयोरपि पूर्ववर्तितामात्रबोधकता आस्थीयते, तद्वत् 'अतिरात्रे षोडशिनं गृह्णाति' इति वचनं पूर्ववर्तितामात्रबोधकं भविष्यति । परं तु व्रीहियवस्थले वचनद्वयसार्थक्याय शास्त्रीयद्रव्यप्रयुक्त एव अनियमः सह्यते, न तु लौकिकद्रव्यप्रयुक्तोऽपि । तथात्वे वचनं विनैव व्रीहियवयोः प्राप्तत्वेन नियमपरवाक्यवैयर्थ्यापत्तेः । ततश्च 'नातिरात्रे षोडशिनं गृह्णाति' इति विशिष्टनिषेधो नियमांशविशेषणनिषेधमादाय [2]पर्यवसितो भवति ।

ननु—अतिरात्रेषोडशिनंगृह्णातीतिविधिः नियमांशे निषेधवाक्यस्य पर्यव-सानेऽपि बाधितो भवति । ततश्च नकलञ्जंभक्षयेदितिवाक्यैकरूप्याय बलवद-निष्टाननुबन्धित्वनिषेधेनैव निषेधवाक्यस्य पर्यवसानं कुतो न स्वीक्रियते । न च तथासत्यनिष्टसाधनतावगमात् षोडशिग्रहे कस्यापि प्रवृत्तिर्न स्यादिति वाच्यम् । यथा हि श्येने अनिष्टसाधनतावगमेऽपि अभिचारे उत्कटरागवशात् प्रवर्तते, तथा

---

1. **स्वाध्यायविधिबलेनेत्यादि** अन्यथा अर्थवादानां प्रयोजनवदर्थपर्यवसायि-त्वस्य स्वाध्यायविधिबोधितस्य अभावप्रसङ्ग इति भावः ।

2. **पर्यवसित इति** 'न कुर्यान्निष्फलं कर्म' इत्यादिनिषेधेष्वपि मथुरानाथ-प्रभृतिभिस्तार्किकैः इष्टसाधनत्वनिषेधोऽङ्गीक्रियते ; किमु वक्तव्यं 'नातिरात्रे' इत्यादि-विहितप्रतिषिद्धस्थलेषु इत्यपि बोध्यम् ।

**नञश्चैष स्वभावः यत् स्वसंबन्धिनोऽभावं बोधयतीति ।**

क्रतुफले उत्कटरागवशात् प्रवृत्तिर्भविष्यति, यथा च श्येनादिविधीनां इष्टसाधनतामात्रबोधेन पर्यवसानं एवं षोडशिग्रहविधेरपि भविष्यति—इति चेत्—

उच्यते—एवं हि सति षोडशिग्रहवाक्यस्य नरकं स्वीकृत्यापि क्रतूपकारार्थं पुरुषप्रवर्तकता वक्तव्या । तच्चासमञ्जसम् । विधेः [1]प्रयुक्तिगौरवापत्तेः । श्येनादौ त्वहिकफले पुरुषस्योत्कटो रागः सर्वलोकसिद्ध इति न तत्र विधेः [2]प्रयुक्तिगौरवम् ।

अपि च तत्र नरकप्रतिपादकस्पष्टवाक्यान्तरसद्भावात् तथा भवतु नाम । प्रकृते तु निषेधमात्रम् । तच्च नियमांशनिषेधमादायापि चरितार्थमिति न तेन षोडशिग्रहस्य नरकसाधनताऽपि कल्पनीया । एवं च शिष्टाविगानमपि समञ्जसं भवति षोडशिग्रहानुष्ठाने । अन्यथा श्येनादिवत् तस्यापि [3]विगीतता स्यात् । न च—एवं षोडशिग्रहाभावेऽपि क्रतूपकारो भवतीत्यर्थपर्यवसाने षोडशिग्रहे कस्यापि प्रवृत्तिर्न स्यात्, श्रमवैफल्यानुसन्धानात् । न च यस्य तदनुसन्धानं नास्ति स प्रवर्ततामिति वाच्यम् । तथाप्याप्तोपदेशे न [4]इयं गतिः दृष्टा, स्वाध्यायविधिश्च षोडशिग्रहांशे प्रयोजनवदर्थावबोधफलको न स्यात्—इति साम्प्रतम् । अत एव हि तत्र षोडशिग्रहतदभावयोर्मुख्यामुख्यकल्पत्वं स्वीकर्तव्यम्, ततश्च शक्ताशक्तविषयतया व्यवस्थितविकल्पो भविष्यति; अथ वा षोडशिग्रहानुष्ठाने फलभूयस्त्वकल्पनया व्यवस्थितविकल्पो भविष्यतीति न किञ्चित् सङ्कटम् ।

अतो निषेधवाक्येषु 'न कलञ्जं भक्षयेत्' इत्यादिषु लिङाद्यर्थभूत[5]बलवदनिष्टासाधनत्वविशिष्टेष्टसाधनत्वनिषेधे बलवदनिष्टसाधनतापर्यवसानं भवति । नान्यथा । अतोऽपि न निषेधवाक्येषु कार्यबोधः—इत्येतदभिप्रेत्याह—**नञश्चैष स्वभाव इति** । चशब्दो गुरुमताद्विशेषद्योतनार्थः । **स्वसम्बन्धिन इति** ।

---

1. मु. प्रवृत्ति
2. मु. प्रवृत्ति
3. मु. निन्दितता
4. **इयं गतिः**—निष्फलप्रवर्तकता ।
5. मु. बलवदनिष्टाननुबन्धीष्टसाधनत्व

**अभावबुद्धिश्च औदासीन्ये कारणम् । सा च दग्धेन्धनाग्निवत् स्वयमेवोपशाम्यति । तस्मात् प्रसक्तक्रियानिवृत्त्यौदासीन्यमेव 'ब्राह्मणो न हन्तव्यः'**

लिङादिप्रतिपाद्य[1]बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वस्य । तस्यैव व्युत्पत्त्यनुसारेण आकाङ्क्षिततया अर्थद्वारा नञा सम्बन्धित्वात् । [2]विशिष्टनञर्थनिषेधस्य[3]विशेषणनिषेधमादाय पर्यवसानेन निवृत्त्युपयोगमभिप्रेत्याह—**अभावबुद्धिश्चेति** । ननु—निवृत्तिरूपे औदासीन्ये यदि बलवदनिष्टाननुबन्धित्वाभावबुद्धिः परिपालकतया उपयुज्यते, निवृत्तेः प्रवृत्तिप्रागभावरूपाया अनादितया उत्पत्तावनुपयोगात्, तदा राज्यपरिपालने राजेव तत्परिपालनपर्यन्तमनुवर्तेत । तथा च तस्य उत्तरत्र सार्वदिकत्वात् सर्वदैवाभावबुद्धिरनुवृत्ता स्यात्—इत्यत आह—**साचेति** । प्रवृत्तिप्रागभावस्य नाशो हि प्रवृत्तिरेव । ततश्च प्रवृत्तिसामग्री निवृत्तेरुत्तरकालसम्बन्धं व्यावर्तयति । प्रवृत्तिसामग्र्यन्तर्गतं च बलवदनिष्टाननुबन्धित्वज्ञानं, तद्विघटकतया [4]तद्विषयीभूताभावज्ञानं निवृत्तावुपयुज्यते । तद्विघटकता तदुत्पत्तिप्रतिबन्धो वा, उत्पन्ने तत्र अप्रामाण्यापादकता वा । ततश्च सकृदुदितेनैव बलवदनिष्टाननुबन्धित्वाभावज्ञानेन बलवदनिष्टाननुबन्धित्वज्ञानविघटनोपपत्तेः न यावन्निवृत्ति तस्य अनुवर्तनप्रसक्तिः । ततश्च यथा कृषिप्रतिबन्धकं काष्ठादिकं क्षेत्रपतितं दग्धुं प्रयुक्तोऽग्निः प्रतिबन्धकनिरासेनोपशान्तः पुनर्नापेक्ष्यते, तथा इहापि भविष्यति । राज्ञस्तु तत्तद्देशकालोचितव्यवस्थाप्रयोजकतयापरिपालकत्वात् युक्तं यावद्राष्ट्रमनुवर्तनम्—इति भावः ।

नञश्चैषस्वभाव इत्यारभ्य उपशाम्यतीत्यन्तेन स्वमते निषेधार्थं निरूप्य पुनः प्राभाकरमतेनैव 'हननाभावविषयकं कार्यम्' इत्यर्थे निषेधवाक्येषु योग्यविषयालाभेन कार्यप्रतीत्यपर्यवसानं आपादयितुमुपसंहरति—**तस्मादिति** । **निवृत्त्यौ-**

---

1. मु. बलवदनिष्टाननुबन्धीष्टसाधनत्वस्य

2. **विशिष्टनञर्थनिषेधस्येति** विशिष्टप्रतियोगिको यो नञर्थनिषेधः, तस्येत्यर्थः । विशिष्टस्य नञर्थनिषेधः तस्य—इति विग्रहः ।

3. मु. विशेषणमादाय

4. **तद्विषयीभूताभावज्ञानं**—तस्य- बलवददिष्टाननुबन्धित्वज्ञानस्य विषयीभूतं यत् बलवदनिष्टाननुबन्धित्वं तस्य योऽभावः तस्य ज्ञानम् ।

इत्यादिषु प्रतिषेधार्थं मन्यामहे अन्यत्र प्रजापतिव्रतादिभ्यः । तस्मात् पुरुषार्थानुपयोग्युपाख्यानादिभूतार्थवादविषयं आनर्थक्याभिधानं द्रष्टव्यम् ।

यदप्युक्तं—कर्तव्यविध्यनुप्रवेशमन्तरेण वस्तुमात्रमुच्यमानं अनर्थकं स्यात् 'सप्तद्वीपा वसुमती' इत्यादिवदिति, तत् परिहृतम् । 'रज्जुरियं नायं सर्पः' इति वस्तुमात्रकथनेऽपि प्रयोजनस्य दृष्टत्वात् ।

ननु श्रुतब्रह्मणोऽपि यथापूर्वं संसारित्वदर्शनात् न रज्जुस्वरूपकथनवदर्थवत्त्वं इत्युक्तम् । अत्रोच्यते–न अवगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वं

दासीन्यमेवेति । न त्वप्राप्तक्रियारूपम्[1] । अन्यत्र प्रजापतिव्रतादिभ्य इति । 'नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन' इत्यादिवाक्यविहिता धर्माः प्रजापतिव्रतशब्दप्रतिपाद्याः ।

नावगतब्रह्मात्मभावस्येति । श्रुतब्रह्मणो हि यत् श्रवणोपस्कृतवेदान्तवाक्यजनितं ज्ञानं न तत् अविद्यानिवृत्तिद्वारा परमपुरुषार्थं सहसैव सम्पादयति । अप्रामाण्यशङ्काकलङ्कितस्यानभ्यासदशापन्नजलादिज्ञानस्येव निष्कम्पप्रवृत्तौ, भेदवासनाप्रतिबद्धस्य वेदान्तजन्यज्ञानस्य अविद्यानिवृत्तावसामर्थ्यात् । यथा च समीपोपसर्पणादिना संवादेन अप्रामाण्यशङ्कायां निवर्तितायां तत्कालोत्पन्नचाक्षुषज्ञानं निष्कम्पप्रवृत्तावुपयुज्यते, तथा ध्यानेन भेदवासनायां अपोदितायां तत्कालोत्पन्नवेदान्तवाक्यार्थज्ञानं अविद्यां निवर्तयति । परं तु यावत्प्रारब्धं विक्षेपांशोऽनुवर्तते । अविद्याया अंशद्वयाभ्युपगमात् । स्वप्रकाशेऽपि आत्मनि 'नास्ति न प्रकाशते' इति व्यवहार[2]प्रयोजक एकोंऽशः । स एव आवरणशक्तिरित्युच्यते । कर्तृत्वाद्यनर्थप्रतिभाससम्पादकः अपरोंऽशः । स एव विक्षेपशक्तिरित्युच्यते । ततश्च ध्यानपरिपाकनिवृत्तभेदवासनानामपि वेदान्तजनितेन [3]प्रत्यग्ब्रह्मैक्यापरोक्षेण आवरणशक्त्यंशे निवर्तितेऽपि, आवरणशक्तिनिवृत्तिमात्रेण यथापूर्वं कर्तृत्वाद्यभिनिवेशयुक्त-

---

1. मु. क्रियापरम्
2. मु. जनक
3. मु. प्रत्यग्ब्रह्मापरोक्ष्येण

**शक्यं दर्शयितुम्, वेदप्रमाणजनितब्रह्मात्मभावविरोधात्। न हि शरीराद्यात्माभिमानिनो दुःखभयादिमत्त्वं दृष्टमिति तस्यैव वेदप्रमाणजनितब्रह्मात्मावगमे तदभिमाननिवृत्तौ तदेव मिथ्याज्ञाननिमित्तं दुःखभयादिमत्त्वं भवतीति शक्यं कल्पयितुम्। न हि धनिनो गृहस्थस्य धनाभिमानिनो धनापहारनिमित्तं दुःखं दृष्टमिति तस्यैव प्रव्रजितस्य धनाभिमानरहितस्य तदेव धनापहारनिमित्तं दुःखं भवति। न च कुण्डलिनः कुण्डलित्वाभिमाननिमित्तं सुखं दृष्टमिति तस्यैव कुण्डलवियुक्तस्य कुण्डलित्वाभिमानरहितस्य तदेव कुण्डलित्वाभिमाननिमित्तं सुखं भवति। तदुक्तं श्रुत्या—'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (छा. उ. ८-१२-१) इति।**

**शरीरे पतिते अशरीरत्वं स्यात् न जीवत इति चेत्,**

तयासंसारित्वानुवर्तनाभावेऽपि, प्रारब्धदोषेण विक्षेपशक्त्यंशे ज्ञानं निवर्तकं न भवति। तत्र प्रारब्धस्य प्रतिबन्धकत्वाभ्युपगमात्। विक्षेपांशानुवृत्त्या च अभिमानशून्यानामपि ब्रह्मविदां यथाकथञ्चित् कर्तृत्वादिप्रतिभासोऽनुवर्तते। सा चेयं व्यवस्था जीवन्मुक्तिशास्त्रलब्धा विद्वदनुभवसिद्धा च।

अशरीरमित्यत्र शरीराभिमानाभाव एव प्रियाप्रियासंस्पर्शप्रयोजको विवक्षितः। तत्र शङ्कते—शरीर पतित इति। आत्मनो हि सशरीरत्वं आध्यासिकमिति पूर्ववाक्यपर्यालोचनया अवगम्यते। 'अशरीरं वाव सन्तं' इत्यतश्चेदं पूर्ववाक्यं 'मघवन् मर्त्यं वा इदं शरीरं आत्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानं आत्तो वै सशरीरः प्रियाप्रियाभ्यां न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति। अत्र च [1]अशरीरस्येतिनिषेधपूर्वकमेव आत्मनोऽधिष्ठानमिति शरीरसम्बन्धः प्रतिपाद्यते। अतः स मिथ्याभूत इति वक्तव्यम्। तादृशं सशरीरत्वं प्रियाप्रियसंस्पर्शप्रयोजकं 'आत्तो वै सशरीरः' इत्यनेन प्रतिपाद्यते। आरोपिताश्च रजतसर्पादयः अवगते मिथ्यात्वे दोषविशेषेण भासमाना अपि न यथापूर्वं प्रियाप्रियसंस्पर्शप्रयोजका भवन्ति। तथा च जीवतोऽपि सशरीरतायां मिथ्यात्वनिर्णये न यथापूर्वं प्रियाप्रियसंस्पर्शप्रयोजकता भविष्यतीति आत्तोवाइतिवाक्यार्थप्रतिद्वन्द्वि-

---

1. मु. अशरीर इति

**न—सशरीरत्वस्य मिथ्याज्ञाननिमित्तत्वात् । न ह्यात्मनः शरीरात्माभिमानलक्षणं मिथ्याज्ञानं मुक्त्वा अन्यतः सशरीरत्वं शक्यं कल्पयितुम् । नित्यं अशरीरत्वं अकर्मनिमित्तत्वात् इत्यवोचाम । तत्कृतधर्माधर्मनिमित्तं सशरीरत्वमिति चेत्, न—शरीरसंबन्धस्यासिद्धत्वात् धर्माधर्मयोरात्मकृतत्वासिद्धेः । शरीरसंबन्धस्य धर्माधर्मयोस्तत्कृतत्वस्य च इतरेतराश्रयत्वप्रसङ्गात् । अन्धपरम्परा चैषा अनादित्वकल्पना । क्रियासमवायाभावाच्च**

प्रतिपादकेन अशरीरंवावेतिवाक्येनापि शरीराभिमानराहित्यमेव प्रियाप्रियासंस्पर्शप्रयोजकतया प्रतिपाद्यते इत्याह—**सशरीरत्वस्येति** ।

एवं सशरीरत्वस्यारोपितस्य तत्त्वज्ञानदशायां प्रतिभासतोऽनुवर्तमानस्यापि न यथापूर्वं प्रियाप्रियसंस्पर्शप्रयोजकत्वमित्युक्तं, तन्न सम्भवति, तस्य जीवकृतधर्माधर्मनिमित्तत्वेन अनृततानुपपत्तेः—इति कश्चिच्छङ्कते—**तत्कृतधर्माधर्मनिमित्तमिति** । यद्यपि स्वप्नगतशरीरवत् अनृतत्वं धर्माधर्मनिमित्तत्वेऽपि न विरुध्यते, तथाऽपि तावन्मात्रेण सत्यमिति शङ्कितुरभिमानः । श्रुतिविरोधे सत्येव दूषणान्तरमाह—**शरीरसम्बन्धस्येति** । शरीरावच्छेदेन ह्यात्मनः कर्तृत्वं, अतः शरीरसम्बन्धं विना धर्माधर्मकर्तृत्वानुपपत्तिरित्यर्थः । ततश्च धर्माधर्मनिमित्तकत्वे शरीरसम्बन्धस्याभ्युपगम्यमाने परस्पराश्रय इत्याह—**शरीरसम्बन्धस्येति** । बीजाङ्करवदत्र नान्योन्याश्रयः । येन बीजेन योऽङ्कुरो जन्यते तद्बीजं स्वजनिताङ्कुरादन्येनैवाङ्कुरेण स्वस्मात् प्राचीनेन जन्यते । स्वजनितश्चाङ्कुरः स्वस्मात् अन्यदेव बीजं जनयति । एवं येन शरीरेण या [1]धर्माधर्मव्यक्तिर्जन्यते तच्छरीरं स्वजनिताभ्यां धर्माधर्माभ्यां अन्याभ्यामेव धर्माधर्माभ्यां स्वस्मात् प्राचीनाभ्यां जायते । स्वजनितौ च धर्माधर्मौ अन्यस्यैव शरीरस्य प्रयोजकौ । एवं प्रवाहानादित्वात् नान्योन्याश्रय इति चेत्, तत्राह—**अन्धपरम्परा चैषेति** । वर्तमानयोर्हि बीजाङ्कुरयोः जन्यजनकभावः प्रत्यक्षसिद्ध इति पूर्वमपि तथैवेति शक्यमनुमातुम् । शरीरस्य तु धर्माधर्मजन्यत्वं न लौकिकप्रमाणायत्तम् । श्रुत्या तत्सिद्धिः स्वीक्रियते चेत् तत [2]एव तन्मिथ्यात्वमपि प्राप्नोति । अतः

---

1. मु. धर्मव्यक्ति॰
2. मु. एव मिथ्यात्व

आत्मनः कर्तृत्वानुपपत्तेः। सन्निधानमात्रेण राजप्रभृतीनां दृष्टं कर्तृत्वमिति चेत्, न — धनदानाद्युपार्जितभृत्यसंबन्धित्वात् तेषां कर्तृत्वोपपत्तेः। न त्वात्मनो धनदानादिवत् शरीरादिभिः स्वस्वामिभावसंबन्धनिमित्तं किञ्चित् शक्यं कल्पयितुम्। मिथ्याभिमानस्तु प्रत्यक्षः संबन्धहेतुः। एतेन यजमानत्वमात्मनो व्याख्यातम्।

अत्राहुः — देहादिव्यतिरिक्तस्यात्मन आत्मीये देहादौ अहमभिमानो गौणो न मिथ्येति - (चेत्) न — प्रसिद्धवस्तुभेदस्य गौणत्वमुख्यत्वप्रसिद्धेः। यस्य हि प्रसिद्धो वस्तुभेदः, यथा केसरादिमानाकृतिविशेषः अन्वयव्यतिरेकाभ्यां सिंहशब्दप्रत्ययभाक् मुख्योऽन्यः प्रसिद्धः, ततश्चान्यः पुरुषः प्रायिकैः क्रौर्यशौर्यादिभिः सिंहगुणैः संपन्नः सिद्धः, तस्य पुरुषे सिंहशब्दप्रत्ययौ गौणौ भवतः, न अप्रसिद्धवस्तुभेदस्य। तस्य तु अन्यत्र अन्यशब्दप्रत्ययौ भ्रान्तिनिमित्तावेव भवतः, न गौणौ। यथा मन्दान्धकारे स्थाणुरयमित्यगृह्यमाणविशेषे पुरुषशब्दप्रत्ययौ स्थाणुविषयौ, यथा वा शुक्तिकायां अकस्मात् रजतमिति निश्चितौ शब्दप्रत्ययौ, तद्वत् देहादिसंघाते अहमिति निरुपचारेण शब्दप्रत्ययौ आत्मानात्माविवेकेनोत्पद्यमानौ कथं गौणौ शक्यौ वदितुम्।

सत्यत्ववादिना श्रुतिं परित्यज्यैव वक्तव्यम्। ततश्च मूलप्रमाणाभावे धर्माधर्मजन्यत्वस्य शरीरे असिद्धेः निर्मूलेयं कल्पना अन्धपरम्पराप्राप्ता अङ्गारशौक्ल्यज्ञानवत् इत्यर्थः। तस्य त्विति। यद्यपि अगृहीतभेदस्य पुरुषस्य यः प्रत्ययः अन्यत्रान्यशब्दप्रत्ययाविति पदेन सङ्गृहीतः स भ्रम एव, न भ्रान्तिनिमित्तः। तथाऽपि भ्रान्तिपदेन भ्रान्तिजनिका सामग्री विवक्षिता। भ्रान्तिपदस्य यथाश्रुतार्थत्वे तु प्रत्ययशब्देन भ्रमानन्तरभाविशब्दजन्यः प्रत्ययो विवक्षितः।

अकस्माद्रजतमिति। ननु भ्रान्तेः [1]उचितकारणजन्यत्वात् कथं अकस्मादिति कारणं विनैव जातत्वमुच्यते? [2]उच्यते—रजतैकपक्षपातिन्या भ्रमसामग्र्या दृष्टरूपाया असम्भवात् अदृष्टापेक्षत्वं अकस्माच्छब्देन विवक्षितम्। तथा

1. उपचितकारणजन्यत्वात्-इति पाठे करणदोषादिबहुनिमित्तापेक्षत्वात् इत्यर्थः।

2. मु. 'उच्यते' नास्ति।

हि—पुरोऽवस्थिते द्रव्ये शुक्तित्वस्य विद्यमानतया चक्षुस्सन्निकर्षस्य लौकिकस्य विद्यमानत्वात् रजतभ्रमात् प्राक् शुक्तित्वनिश्चय एव कस्मात् न भवति । न हि तस्यां दशायां शुक्तित्वंनास्तीति व्यतिरेकनिश्चयो वर्तते । न च—शुक्तित्वोद्बोधकं[1] तत्र नास्ति, तथा च विशेषणोपस्थितेरभावात् न विशिष्टज्ञानमिति—वाच्यम् । संस्कारोद्बोधकाभावेन विशेषणस्मृत्यसम्भवेऽपि सन्निकर्षस्य विद्यमानतया विशेषणांशे निर्विकल्पकानुभवसम्भवात् । अपि च यदेव रजतत्वे संस्कारोद्बोधकं शुक्लभास्वरत्वादिकं, तदेव शुक्तित्वांशेऽपि संस्कारोद्बोधकम् । तस्य उभयसाधारणत्वात् । यदि तु—दोषोऽप्यत्र विद्यते, तथा च न शुक्तित्वप्रमा, दोषस्य प्रतिबन्धकत्वात् प्रमायाम्; तदा तत्संशयोऽस्तु । तत्सामग्र्याः प्रकृते सम्भवात् । संशयसामग्री हि अक्षपादेन त्रिप्रकारा निरूपिता । 'समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः' [न्यायसू. १-१-२३] इति । समानो धर्मः—साधारणो धर्मः । अनेकस्माद्व्यावृत्तो धर्मः अनेकधर्मः इति [2]शाकपार्थिवादिवत् समासः, सजातीयाद्विजातीयाच्चानेकस्माद्व्यावृत्तो धर्मः, असाधारणो धर्म इत्यर्थः । ततश्च साधारणधर्मदर्शनं असाधारणधर्मदर्शनं विप्रतिपत्तिश्चेति कारणत्रयं संशये दर्शितं भवति । इदं च कारणत्रयं साधकबाधकप्रमाणानवतारदशायामेव प्रयोजकमित्याह—उपलब्ध्यनुपलब्ध्यव्यवस्थातश्चेति । उपलब्धिः-एकस्यां कोटौ साधकं प्रमाणं, अनुपलब्धिः-अन्यस्यां कोटौ बाधकं प्रमाणं, तदभावे इत्यर्थः । यदा हि दीर्घत्वादिसाधारणधर्मदर्शनात् 'अयं स्थाणुर्वा पुरुषो वा' इति संशयो भवति तदा, यद्युत्तरक्षणे स्थाणुत्वकोटौ साधकं वक्रकोटरादिमत्त्वं स्थाणुत्वव्याप्यं गृह्यते, यदि वा पुरुषत्वबाधकं निश्चेष्टत्वादिकं गृह्यते, तदा न संशयः पुनरुद्भवति । विशेषापेक्ष इत्यनेन [3]अवधारणापेक्ष इत्युक्तम् । ततश्च निष्कम्पप्रवृत्तिजनने अवधारणापेक्षत्वोक्त्या स्वस्य अवधारणात्मत्वं नास्तीति द्योतितम् । ततश्च [4]"अनवधार-

---

1. **शुक्तित्वोद्बोधकं**—शुक्तित्वसंस्कारोद्बोधकम् । क्वचित् तथैव पाठः ।

2. मु. शाकपार्थिवादित्वात्

3. स्वयमवधारणापेक्ष

4. **अनवधारणात्मकं ज्ञानं संशय इति** वात्स्यायनप्रभृतिभिः वृद्धनैयायिकैः अङ्गीकृतमेतल्लक्षणमिति, प्रकारान्तरेण संशयलक्षणं दुर्निरूपमिति, विषयवैलक्षण्यात् ज्ञानवैलक्षण्यं इत्युत्सर्गः असति विषयवैलक्षण्ये विषयतावैलक्षण्यात् ज्ञानवैलक्षण्यमिति,

**आत्मानात्मविवेकिनामपि पण्डितानां अजाविपालानामिव अविविक्तौ शब्दप्रत्ययौ भवतः । तस्मात् देहादिव्यतिरिक्तात्मास्तित्ववादिनां देहादावहंप्रत्ययो मिथ्यैव न गौणः । तस्मात् मिथ्याप्रत्ययनिमित्तत्वात्सशरीरत्वस्य सिद्धं जीवतोऽपि विदुषोऽशरीरत्वम् । तथा च ब्रह्मविद्विषया श्रुतिः– 'तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीत एवमेवेदं शरीरं शेते, अथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव' (बृ. उ. ४।४।७) इति ।**

णात्मकं ज्ञानं सशयः' इत्युक्तं भवति । तत्त्वं च स्वरूपसम्बन्धविशेषेण[1] जायमानज्ञानत्वम् । यथा 'अयं घटः' इति विशिष्टज्ञानस्य 'घटघटत्वसंसर्गाः' इति समूहालम्बनतो विषयकृतविशेषाभावेऽपि विषयज्ञानयोस्स्वरूपसम्बन्धविशेषमादायैव समूहालम्बनात्[2] विशेषो वक्तव्यः, तथा निश्चयाद्व्यावृत्तः [3]स्वरूपसम्बन्धविशेष एव संशयत्वघटको भविष्यति । ततश्च इदंरजतमितिभ्रमस्थले चाकचक्यादिसाधारणधर्मदर्शनस्य उभयकोटिसंशयप्रयोजकता भविष्यतीति कथं रजतमित्येककोटिक एव भ्रमः । न च–रागाख्यदोषवशात् रजतमित्येव भ्रमः स्यात्, रागस्य रजतविषयकस्य रजतभ्रमे एव दोषत्वात्–इति वाच्यम् । वीतरागाणामपि रजतभ्रमदर्शनात् । ततश्च रजतकोट्येकपक्षपातिनः दृष्टकारणस्य निरूपयितुमशक्यतया अदृष्टमेव तदसाधारणं कारणं कल्प्यते । अदृष्टस्य कार्यैकोन्नेयतया यथाकार्यमेव तत् कल्प्यत इति न [4]तथा अत्राप्यव्यवस्थाशङ्कासमुन्मेष इति । निश्चितौ–विषयस्य निश्चितत्वापादकौ ।

**आत्मानात्मविवेकिनामिति ।** परोक्षनिश्चयस्यापरोक्षभ्रमविरोधित्वाभावादिति भावः । **तद्यथेति ।** अहिनिल्वयनी-अहित्वक् । अत्र वल्मीकग्रहणेन दार्ष्टान्तिके शरीरसम्बन्धो द्योत्यते । वल्मीकपतिता ह्यहिनिर्ल्वयनी अहिना संयुक्ताऽपि

---

विषयता च स्वरूपसम्बन्धविशेष एवेति च, सविमर्शं विस्तरेण उपपादितं शिवार्कमणिदीपिकायां जन्माद्यधिकरणे ।

1. **विशेषेणेति**—विषये इति शेषः ।

2. मु. ०नात् भेदो०

3. **स्वरूपसम्बन्धविशेष एवेति** अत्र एवकारेण निष्प्रकारकस्यापि अनवधारणज्ञानत्वरूपं संशयत्वं सम्भवतीति श्रीनृसिम्हाश्रमस्वामिप्रभृतिभिः व्यवस्थापितं सूचितम् ।

4. मु. तत्राप्यव्यवस्था

'सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव सवागवागिव समना अमना इव सप्राणोऽप्राण इव' इति च। स्मृतिरपि—'स्थितप्रज्ञस्य का भाषा' (भ. गी. २-५४) इत्याद्या स्थितप्रज्ञलक्षणान्याचक्षाणा विदुषः सर्वप्रवृत्त्यसम्बन्धं दर्शयति। तस्मात् न अवगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वम्, यस्य तु यथापूर्वं संसारित्वं नासाववगतब्रह्मात्मभावः, इत्यनवद्यम्।

यत्पुनरुक्तं-श्रवणात्पराचीनयोर्मनननिदिध्यासनयोर्दर्शनात् विधिशेषत्वं ब्रह्मणो न स्वरूपपर्यवसायित्वमिति, न—श्रवणवत् अवगत्यर्थत्वात् मनननिदिध्यासनयोः। यदि ह्यवगतं ब्रह्म अन्यत्र विनियुज्येत भवेत्तदा विधिशेषत्वम्। न तु तदस्ति, मनननिदिध्यासनयोरपि श्रवणवत् अवगत्यर्थत्वात्। तस्मात् न प्रतिपत्तिविधिविषयतया शास्त्रप्रमाणकत्वं ब्रह्मणः संभवतीत्यतः स्वतन्त्रमेव ब्रह्म शास्त्रप्रमाणकं वेदान्तवाक्यसमन्वयात्—इति सिद्धम्।

तदभिमानरहिता यथा भवति, तथा जीवन्मुक्तस्य प्रारब्धवशात् आत्मना सम्बद्धमपि शरीरं न यथापूर्वमभिमानमयं भवति। प्राण एव-प्राणन्नेवेत्यर्थः। 'प्राणन्नेव प्राणो नाम भवति' इति श्रुतेः। **सचक्षुरचक्षुरिवेति**। अत्र इवशब्दैः अभिमानराहित्यं द्योत्यते[1]। स्थितप्रज्ञलक्षणानि—जीवन्मुक्तलक्षणानि। **यस्य त्विति**। श्रुतब्रह्मणोऽपि मनननिदिध्यासनपरिपाकविकलस्य इति शेषः। **श्रवणवदवगत्यर्थत्वान्मनननिदिध्यासनयोरिति**। यद्धि शास्त्रं यत्प्रतीतिमुद्दिश्य प्रवर्तते तच्छास्त्रं तत्प्रधानकम्। सत्यादिवाक्यं च यथा ब्रह्मप्रतीतिमुद्दिश्य प्रवृत्तत्वात् ब्रह्मप्रधानकं, तथा श्रवणादिशास्त्रमपि तदुद्देशेनैव प्रवृत्तत्वात् ब्रह्मप्रधानकम्। यदि त्ववगतं ब्रह्म अन्यत्र विनियुज्येत, तदा यत्र विनियुज्यते ब्रह्म स एवार्थो ब्रह्मोपसर्जनकः प्रतिपाद्यः स्यात्। ततश्च कृत्स्नं वेदान्तवाक्यजातं तत्प्रतीत्युद्देशेन प्रवृत्तमिति स एवार्थः प्रधानं स्यात्। न त्वेतदस्तीत्याह—**यदि ह्यवगतमिति**।

---

1. **द्योत्यत इति** अत्र अचक्षुरिवेति यथास्थितयोजना आश्रिता। कल्पतरौ तु—परमार्थतः अचक्षुरपि बाधितानुवृत्त्या सचक्षुरिव—इति इवकारस्य व्यत्यासेन योजना कृता।

**एवं च सति 'अथातो ब्रह्मजिज्ञासा' इति तद्विषयः पृथक् शास्त्रारम्भ उपपद्यते। प्रतिपत्तिविधिपरत्वे हि 'अथातो धर्मजिज्ञासा' इत्येवारब्धत्वात् न पृथक् शास्त्रमारभ्येत। आरभ्यमाणं च एवमारभ्येत 'अथातः**

**प्रतिपत्तिविधिपरत्वे हीति।** ननु—वेदान्तानां प्रतिपत्तिविधिपरत्वेऽपि पृथग्वेदान्तशास्त्रारम्भे काऽनुपपत्तिः। ननु—तथा सति अथातोधर्मजिज्ञासेति सूत्रे धर्मशब्देन वेदान्तार्थोऽपि संगृहीतः स्यात्। अस्तु को दोषः। एष दोषः—वेदान्तार्थविचारोऽपि तत्रैव प्रतिज्ञातो भवतीति। प्रतिज्ञातश्चार्थः कार्त्स्न्येन महर्षिणा जैमिनिना निरूपणीयः। ततश्च जैमिनिनैव धर्मस्य कर्मोपासनात्मनो निरूपणप्राप्तेः पृथक्छास्त्रारम्भे व्यर्थता-इति चेत्, न—तावता वेदाध्ययनानन्तरं कर्मोपासनरूपो धर्मो विचारणीय इत्येतावन्मात्रं लभ्यते, न तु जैमिनिनैव तद्विचारविषयीभूता न्याया ग्रथनीया इति प्राप्नोति, स्वयं तद्ग्रथनस्याप्रतिज्ञातत्वात्—इति चेत्—

उच्यते—इदं हि सूत्रं स्वग्रन्थस्य योऽर्थः तत्र अधिकार्यादिनिरूपणपरमिति तावदविवादम्। तन्निरूपणं च तस्मिन् ग्रन्थे अध्येतॄणां प्रवृत्तिसिद्ध्यर्थम्। तत्र यद्यपि मुखतः 'वेदाध्ययनानन्तरं धर्मविचारः कर्तव्यः' इत्येतावदेव प्रतिपाद्यते, तथाऽपि 'स्वग्रन्थे अधीतवेद एवाधिकारी, धर्मज्ञानोपयोगिनो न्याया एव विषयीभूताः' इत्यादिकं अर्थात् सिद्ध्यति। मुखतोऽर्थान्तरप्रतिपादनद्वारा स्वग्रन्थाधिकार्यादिप्रतिपादनं तु ग्रन्थकृतां शैली। ततश्च स्वेन क्रियमाणस्य सूत्रसन्दर्भस्य प्रतिपाद्यं धर्मजिज्ञासापदेन उपात्तमिति धर्मज्ञानोपयोगिन्यायजातं अस्मिञ्छास्त्रे निबध्यत इति अर्थात् सिध्यति। ततश्च वेदान्तानामुपासनापरत्वे तदुपयोगिन्यायजातं अस्मिन्नेव शास्त्रे ग्रथितमिति पृथक्छास्त्रारम्भो व्यर्थ एव प्राप्नोति। सिद्धब्रह्मपरत्वे तु नायं दोषः। धर्मशब्देन ब्रह्मणोऽसङ्गृहीततया तदुपयोगिनां न्यायानां तत्र निरूपणाप्रसक्तेः।

ननु—तत्रत्यधर्मशब्देन वेदान्तार्थसङ्ग्रहेऽपि वेदान्तार्थोपासनोपयोगिनां न्यायानां तत्राग्रथनात् कथं बादरायणकृतस्य निबन्धनस्य उपासनोपयोगिन्यायनिरूपणोपयोगिनः तेन गतार्थतोच्यते। न च—तावता जैमिनेरज्ञता प्राप्ता भवति, [1]यावता साकल्येन प्रतिज्ञातार्थानिर्वहणं—इति वाच्यम्। समयविशेषपूर्वकं

1. यावता — यस्मात्।

परिशिष्टधर्मजिज्ञासा' इति 'अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा' (जै. ४-१-१) इतिवत् । ब्रह्मात्मैक्यावगतिस्त्वप्रतिज्ञातेति तदर्थो युक्तः शास्त्रारम्भः 'अथातो ब्रह्मजिज्ञासा' इति ।

तस्मात् 'अहं ब्रह्मास्मि' इत्येतदवसाना एव सर्वे विधयः सर्वाणि च इतराणि प्रमाणानि । न ह्यहेयानुपादेयाद्वैतात्मावगतौ सत्यां निर्विषयाण्यप्रमातृकाणि च प्रमाणानि भवितुमर्हन्ति इति ।

अपि चाहुः—

'गौणमिथ्यात्मनोऽसत्त्वे पुत्रदेहादिबाधनात् ।
सद्ब्रह्मात्माऽहमित्येवं बोधे कार्यं कथं भवेत् ॥

एकस्यामेव प्रतिज्ञायां उभाभ्यां व्यवस्थया न्यायविशेषनिबन्धनमिति कल्पनोपपत्तेः इत्याशङ्क्य, तथा सति कृत्स्नशास्त्रार्थप्रतिज्ञायाः प्रागेव जातत्वात् [1]अवशिष्टार्थप्रतिज्ञैवेयं स्यात्, ततश्च यथाश्रुतासङ्गतिः इत्याह—अथातःपरिशिष्टेति । ननु ब्रह्मपदस्य सूत्रगतस्य ब्रह्मोपासनापरत्वात् प्रकृतसूत्रेणैव सोऽर्थो लभ्यत इत्याशङ्क्य, तथा सति सूत्रस्थब्रह्मपदस्वारस्यभङ्ग इति मनसि निधाय, स्वमते सूत्राञ्जस्यं वदन् उपसंहरति—ब्रह्मात्मैक्यावगतिस्त्विति । ब्रह्मप्रतीतिमुद्दिश्य शास्त्रस्य प्रवृत्तत्वात् ब्रह्मैव प्रधानं इत्यमुमर्थं, ब्रह्मप्रतीतेरुद्देश्यतासिद्ध्यर्थं तस्याः परमप्रयोजनोपयोगितां प्रतिपादयन् उपसंहरति—तस्मात् अहं ब्रह्मास्मीत्येतदवसाना इति । एतदवगतिपर्यन्ता इत्यर्थः । तावतैव कृतकृत्यत्वादिति भावः । न केवलं प्रत्यगभिन्नब्रह्मसाक्षात्कारे सति लौकिकवैदिकप्रमाणव्यापारो व्यर्थः, अपि तु विरोधान्नैवोन्मिषिष्यतीत्याह—न हीति । बाधितानुवृत्त्या प्रवर्तमानान्यपि न यथापूर्वं प्रवर्तन्ते इत्यर्थः ।

उक्तेऽर्थे वृद्धसम्मतिमाह—अपि चाहुरिति । सद्ब्रह्मात्माऽहमित्येवंबोधे पुत्रदेहादिबाधनात्— तद्विषयकममाहमित्यभिमाननिरासात्, गौणात्मा-पुत्रादिः मिथ्यात्मा-देहादिः तयोः असत्त्वे-तद्विषयकरागासत्त्वे कार्यं लौकिकं वैदिकं वा कथं भवेत्,

---

1. मु. अवशिष्टार्थस्य प्रतिज्ञेयम् ।

अन्वेष्टव्यात्मविज्ञानात् प्राक् प्रमातृत्वमात्मनः ।
अन्विष्टः स्यात् प्रमातैव पाप्मदोषादिवर्जितः ॥

देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः ।
लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात्' इति ॥ ४ ॥

चतुस्सूत्री सम्पूर्णा

सर्वस्यापि कार्यस्य प्रमातृपूर्वकत्वेन ब्रह्मज्ञानानन्तरं तदभावात्—इत्याह—**अन्वेष्टव्यात्मविज्ञानादिति** । ननु—पाप्मादिदोषवतः अपहतपाप्मना **परमेश्वरेण** सह ऐक्यं **नोपपद्यते**, ततश्च कथं सद्ब्रह्मात्माहमितिज्ञानं, इत्यत आह—**अन्विष्टस्स्यादिति** । प्रमाता विचारितश्चेत् वस्तुगत्या पाप्मादिदोषरहित इत्यर्थः । ननु लौकिकवैदिकपदार्थानामनृतत्वे तज्ज्ञाने कथं प्रामाण्यबुद्धिरित्यत आह—**देहात्मप्रत्यय इति** । देहात्मज्ञानवदेव तत्र प्रामाण्यबुद्धिः न तु वस्तुगत्या । सा च आत्मनिश्चयात्मकबोधपर्यन्तमनुवर्तते इत्यर्थः ॥

रामानन्दपदाम्भोजं प्लवं कृत्वा मनोहरम् ।
चत्वारोऽप्यर्णवा एते समुत्तीर्णा यथासुखम् ॥

॥ इति समन्वयाधिकरणम् ॥ ४ ॥

चतुस्सूत्री सम्पूर्णा

—: * :—

# शुद्धाशुद्धपट्टिका

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| III | 5 | संभात् | संभवात् |
| IV | 27 | दृष्टश्चाय | दृष्टश्चायं |
| V | 3 | प्रतिप्रा | प्रतिपा |
| VII | 13 | यस्य कस्यचित् | यस्यकस्यचित् । |
| VIII | 1 | तन्त्र | तन्त्रे |
| IX | 8 | केवलाद्व० | केवलाद्वै० |
| X | 3 | तत्वार्थ | तत्त्वार्थ |
| X | 15 | तत्परमं | तत् परमं |
| XI | 10 | — | तात्पर्य |
| " | | — | अद्वैत |
| " | 14 | — | शब्दैकदेशः |
| " | 18 | तन्नयुक्तम् | तन्न युक्तम् |
| XII | 13 | ०मिभवति | मिर्भवति |
| " | 24 | — | द्वयोर्भेदो |
| XIII | 6 | पराः | पराः । |
| " | 22 | तत्व | तत्त्व |
| XV | 17 | प्रचुर्यात् | प्राचुर्यात् |
| " | 26 | प्राच्योदि | प्राच्योदी |
| XVII | 9 | रात्रिकानां | रात्रिकाणां |
| XVIII | 19 | स्वरूभेदस्य | स्वरूपभेदस्य |
| XIX | 9 | इतीरिति | इतीरित |
| XXI | 6 | ब्रह्मात्म | ब्रह्मात्मै |
| " | 28 | — | नानात्मानो |
| XXIII | 18 | सविकारत्व | सविकारत्वं |
| XXIV | 1 | सुखसुः | सुखदुः |
| XXV | 24 | एतावत्व | एतावत्त्व |
| XXVI | 12 | द्वै वाव | द्वे वाव |
| XXVI | 27 | जीवस्यव | जीवस्यैव |

— अस्पष्टताचिह्नमिदम

| पृष्ठम् | पङ्क्तिः | अशुद्धं | शुद्धम् |
|---|---|---|---|
| XXVII | 5 | तत्व | तत्त्व |
| XXVIII | 4 | तदीयं | तत्र तदीयं |
| " | 16 | — | अद्वैत |
| " | 17 | — | कार्त्स्न्येन |
| " | " | — | अद्वैत |
| " | 20 | अवच्छिनो | अवच्छिन्नो |
| XXIX | 3 | घट्टार्थं | घट्टार्थं |
| " | 7 | प्रसक्ते | प्रसक्ते आर्षान् |
| XXX | 6 | श्रोम | श्रीम |
| " | 24 | तत्प्र | तत्प्र |
| XXXII | 26 | विश्वा | विश्वविद्या |
| " | " | प्रहात | प्रहात् |
| 1 | 16 | पूर्णा | पूर्णो |
| 5 | 25 | प्राय | प्रायः |
| 10 | 25 | गन्थेन | ग्रन्थेन |
| " | 26 | धम्य | धर्म्य |
| " | 26 | पूर्वकवं | पूर्वकत्वं |
| " | 27 | धर्मसं | धर्मसंस |
| 11 | 6 | ेदेन | भेदेन |
| 12 | 7 | बाधोन | बाधो न |
| 18 | 13 | द्रुपो | द्रूपो |
| 22 | 7 | गेते । | गते |
| " | 8 | प्राप्नोति | प्राप्नोति । |
| 23 | 28 | सक्र | सहक्र |
| " | 27 | धारे | धारे |
| 28 | 26 | शास्ता | शास्त्रा |
| 31 | 20 | न्वयः | न्वयः । |
| 32 | 15 | हराः | हारः |
| " | 26 | त्वेन बोध्यम् । | त्वेन |

| पृष्ठम् | पङ्क्तिः | अशुद्धं | शुद्धम् |
|---|---|---|---|
| ,, | 27 | इति | इति बोध्यम् । |
| 33 | 6 | उत्सग | उत्सर्ग |
| 34 | 11 | नैसगि | नैसर्गि |
| 35 | 30 | तेच | ते च |
| 37 | 22 | गाहित्व | गाहित्वे |
| 38 | 22 | — | घटितस्य |
| 40 | 14 | साद्दय | सादृश्य |
| 42 | 22 | — | मिथ्यात्व |
| 47 | 16 | — | अभ्युपेत्या |
| 50 | 12 | गयते | गम्यते |
| 50 | 25 | — | विरह |
| 52 | 27 | युक्ते | युक्तेः |
| 61 | 17 | भ्रमेऽपि | 7भ्रमेऽपि |
| 80 | 21 | श्चादि | पश्चादि |
| 83 | 23 | णोऽह | णोऽहं |
| ,, | 27 | — | पाद्यप्रकारेति |
| 99 | 28 | — | अप्रतार्या |
| 107 | 5 | ध र्मता | धर्मता |
| 109 | 4 | जेमिनिना | जैमिनिना |
| ,, | 19 | मुच्यते । | मुच्यते |
| 111 | 1 | शा-बा- | शा-भा |
| 118 | 27 | अशश्ब्दतार्थे | अतश्शब्दार्थे |
| 122 | 3 | — | अवबोधस्य |
| 129 | 1 | 119 | 129 |
| 131 | 5 | 4ब्रह्म | ब्रह्म |
| ,, | 13 | कर्मणीति | कर्मणीति । |
| 132 | 1 | — | जिज्ञासा |
| 134 | 8 | अप्रत्ययात् | अ प्रत्ययात् |
| 138 | 1 | — | व्युत्पा |

| पृटम् | पङक्ति: | अशुद्धं | शुद्धम् |
|---|---|---|---|
| ,, | 3 | ब्रह्मस्ति | ब्रह्मास्ति |
| ,, | 4 | रमीति | स्मीति |
| ,, | ,, | अत्मा | आत्मा |
| 139 | 8 | — | मीमांसा तदविरोधि-तर्कोपकरणेति । |
| ,, | ,, | | |
| ,, | 12 | श्रुयादीनां | श्रुत्यादीनां |
| ,, | 15 | दर्शनत् | दर्शनात् |
| 143 | 16 | रूपत्वेन | रूपवत्त्वेन |
| 144 | 18 | प्रष्टु, | प्रष्टु- |
| 147 | 12 | ब्रह्मेव | ब्रह्मैव |
| 148 | 15 | — | सुखेन |
| 148 | 16 | मुमुक्षुभिज्ञयो | मुमुक्षुभिर्ज्ञेयो |
| 149 | 7 | — | पर्यवस्यति |
| 149 | 23 | विशष्टा | विशिष्टा |
| ,, | 26 | — | सर्ववस्त्वभावे |
| 150 | 2 | — | बहुव्रीहि: |
| ,, | 10 | — | श्रुत्यनु |
| ,, | 16 | नपु | नपुं |
| 151 | 9 | निदेश | निर्देश |
| 152 | 2 | — | इतीति |
| ,, | 12 | — | परिहारार्थं |
| ,, | 26 | लोचनयेत | लोचनयेति |
| 156 | 16 | — | यथोक्त |
| | 17 | — | विशिष्टेति |
| 159 | 1 | न्यरतं | न्यस्तं |
| 160 | 15 | किमर्थ | किमर्थं |
| 174 | 7 | — | सूत्रे |
| ,, | 10 | मिद | मिंद |
| 183 | 9 | क्षत्व | क्षत्वं |

| पृष्टम् | पङ्क्तिः | अशुद्धं | शुद्धम् |
|---|---|---|---|
| 184 | 25 | पादन | पादान |
| 188 | 7 | रोहित | रोहितं |
| 200 | 1 | द्दष्ट निदश | द्दष्टं निदर्श |
| 201 | 9 | राणां, | राणां |
| 203 | 1 | दी | दीनि |
| ,, | 28 | — | सिद्धौ |
| 204 | 24 | स्वान्वितानां, | स्वान्वितानां |
| ,, | ,, | — | सत्यादि |
| 205 | 7 | — | कुतश्चिद्वि- |
| 205 | 12 | — | एकस्यैव |
| 206 | 24 | पण | षण |
| 209 | 6 | ख | स्व |
| 211 | 4 | — | नर्थयोर्धर्माधर्मयोः |
| 211 | 5 | — | ब्रह्मादि[ |
| 212 | 1 | केवैलीष्टा | केवलैरिष्टा |
| 215 | 16 | — | सांख्यानां |
| 216 | 1 | ज्योतिरस्व | ज्योतिस्स्व |
| ,, | 2 | — | मोक्षाख्यम् |
| | 21 | — | ब्रह्मैव |
| 219 | 16 | — | सैकेति |
| 221 | 12 | श्रवणनि | श्रवणानि |
| 223 | 8 | — | द्दष्टेर्द्रष्टारं |
| 224 | 8 | — | गुणाधा |
| ,, | 9 | — | दोषाप |
| ,, | 10 | — | मोक्षः |
| 225 | 7 | — | माणत्वात् |
| ,, | 15 | भोक्त | भोक्ते |
| ,, | 17 | निगु | निर्गु |
| 226 | 8 | — | निर्गुण |

| पृष्ठम् | पङ्क्तिः | अशुद्धं | शुद्धम् |
|---|---|---|---|
| 227 | 4 | — | क्षैव |
| ” | 6 | — | चैव |
| ” | 7 | — | कर्तुमकर्तुं |
| ” | 10 | — | तन्त्रम् । |
| ” | 11 | — | योषा |
| ” | 15 | — | तयैव |
| 228 | 6 | पये | षये |
| ” | 24 | मु | 4 मु |
| 229 | 2 | — | गोचरात् |
| ” | 25 | — | हेतुमद्भा |
| 237 | 8 | वदि | वैदि |
| ” | 13 | च्यत्व | च्यत्वं |
| ” | 21 | सन्धि | सन्धिः |
| 239 | 9 | कमेति | कर्मेति |
| 242 | 6 | — | ज्ञानस्यैव |
| 244 | 25 | — | स्वार्थं |
| ” | 26 | — | कृति |
| ” | 27 | — | अर्थवादबोध्य |
| 245 | 17 | सम्व | सम्ब |
| 249 | 3 | ससार | संसार |
| 249 | 6 | देशा | देशो |
| 250 | 2 | प्रप्तम् | प्राप्तम् |
| 253 | 1 | — | बोध |
| ” | 6 | त्वहिक | त्वैहिक |
| 264 | 6 | सवस्यापि | सर्वस्यापि |

—:o:—

# साङ्केतिकविवरणम्

| | |
|---|---|
| अ | अध्यायः |
| आ | आन्ध्रलिपिलिखितकोशपाठः |
| ई. उ | ईशावास्योपनिषत् |
| ऋ. सं | ऋक्संहिता |
| ऐ. उ | ऐतरेयोपनिषत् |
| ऐ. ब्रा | ऐतरेयब्राह्मणम् |
| क. उ | कठोपनिषत् |
| के. उ<br>केन. उ | केनोपनिषत् |
| कौ. उ | कौषीतकीयोपनिषत् |
| छा. उ | छान्दोग्योपनिषत् |
| जै. सू | जैमिनिसूत्रम् |
| ता. ब्रा | ताण्ड्यब्राह्मणम् |
| तै. उ | तैत्तिरीयोपनिषत् |
| तै. ब्रा | तैत्तिरीयब्राह्मणम् |
| तै. सं | तैत्तिरीयसंहिता |
| न्या. सू<br>न्याय. सू | न्यायसूत्रम् |
| पा. सू | पाणिनिसूत्रम् |
| पा. सू. वा | पाणिनिसूत्रवार्तिकम् |
| बृ. उ | बृहदारण्यकोपनिषत् |
| ब्र. सू | ब्रह्मसूत्रम् |
| भ. गी | भगवद्गीता |
| म. ना | महानारायणोपनिषत् |
| मनु | मनुस्मृतिः |

| | |
|---|---|
| म. भा<br>महा. भा | महाभारतम् |
| मा. उ | माण्डूक्योपनिषत् |
| मा. का | माण्डूक्यकारिका |
| मु. | मुद्रितग्रन्थपाठः |
| मु. उ | मुण्डकोपनिषत् |
| या. स्मृ. आ | याज्ञवल्क्यस्मृति-आचार |
| वि. पु | विष्णुपुराणम् |
| शा. भा | शाबरभाष्यम् |
| श्वे. उ | श्वेताश्वतरोपनिषत् |

## सभाष्यब्रह्मविद्याभरणे ईक्षत्यधिकरणादिसमन्वयाध्यायान्त-भागस्य विषयानुक्रमणिका

**ईक्षत्यधिकरणम्** **पृष्ठम्**

## अन्तरधिकरणम्

सिद्धान्ताक्षेप :—सर्वपाप्मोदितत्वस्य प्राबल्ये नियामकाभावात् सङ्कोचेन आदित्यमण्डलाभिमानिजीवे तत् वक्तुं शक्यम्। 'फलत्वेनप्रतिपादनरूपतात्पर्यलिङ्गोपेतं तत् असङ्कुचितमेव ग्राह्यम्, तच्च परमेश्वरस्यैव' इति च न युक्तम्। परमेश्वरस्य हिरण्यश्मश्रुत्वादिविशिष्टशरीरसम्बन्धविरोधात्, शरीरसम्बन्धस्य पुण्यपापप्रियाप्रियसम्बन्धापादकत्वस्य श्रुतिसिद्धत्वात्। न च सा श्रुतिः जीवविषया। लाघवेन सशरीरसामान्यविषयत्वात्। ततश्च हिरण्यश्मश्रुत्वादिकं जीवलिङ्गमेव। प्रबलञ्च, उपासनाऽभिप्रायेणापि परमेश्वरे नेतुमशक्यत्वात्। समर्यादैश्वर्यप्रतिपादनमपि व्यवस्थितनिर्देशरूपोपपत्तियुक्तत्वात् प्रबलं जीवलिङ्गम्। अतः तदनुसारेण सर्वपाप्मोदयः कथञ्चित् व्याख्येयः। जीवगतस्य अतएव सङ्कुचितस्यैव सर्वपाप्मोदयस्य फलत्वावगमाच्च। मण्डलान्तर्वर्तिदेवतायां जीवन्मुक्तायां निरङ्कुशसर्वपाप्मोदयसम्भवाच्च। उपासनार्थं सर्ववेदात्मत्वं मण्डल इव तदन्तर्वर्तिदेवतायामपि सम्भवति।

## आकाशाधिकरणम्

**प्राणाधिकरणम्**

लिङ्गम्। मुख्यप्राणेऽपि दर्शनात्, श्रुतिष्वाम्नानाच्च। आदित्यान्न-रूपाब्रह्मप्रायपाठोऽपि मुख्यप्राणपरिग्रहे एव समञ्जसः' इति भाष्योक्ता विशेषशङ्का। सा च न युक्ता—सर्वभूतलयोद्गमनयोः प्राणे अश्रवणात् अदर्शनाच्च। अपि तु इन्द्रियलयोद्गमनयोरेव। तावन्मात्रेण सर्वभूतलयोद्गमनवचनं क्लिष्टम्। लिङ्गविरोधे प्रायपाठो दुर्बल इति च ईक्षत्यधिकरणे उक्तप्रायम्—इति ... 105-106

विशेषशङ्कासमर्थनम्—भूतसंवेशोद्गमनादिकं चरमपठितम्, प्राणश्रुतिस्तु प्रथमपठिता। अतः तन्मुख्यार्थत्वानुसारेण लिङ्गनयनं युक्तम्। प्रायपाठोऽपि अब्रह्मत्वसाधकः, श्रुतिमुख्यार्थत्वाविरोधित्वात् प्रायपाठस्य नाप्रयोजकता। अतो न ईक्षत्यधिकरणोक्तन्यायप्रसरः। आदित्यान्नपर्याययोः सर्वभूतशब्दयोः सङ्कुचद्वृत्तित्वदर्शनेन अत्रापि तथात्वस्य नायुक्तता। प्राणश्रुतिमुख्यार्थत्वानुकूलत्वाच्च। प्राणमेवेत्येवकारोऽपि नान्ययोगव्यवच्छेदार्थकः, येन मुख्यप्राणपरिग्रहविरोधी स्यात्। अपि तु अन्नपर्याये इव अयोगव्यवच्छेदार्थकः; तत्प्रायपाठात्। उपक्रमस्थदेवता-शब्दोऽपि न विरोधी, अचेतनेष्वपि तेजोबन्नेषु देवताशब्दप्रयोग-दर्शनात्। अतो मुख्यप्राण एव प्रस्तावदेवता—इति ... 106-107

सिद्धान्ताभिप्रायवर्णनम्—प्रथमश्रुतचेतनवाचिदेवताशब्दमुख्यार्थत्वानुरो-धेन चरमपठितप्राणश्रुतिः निरूढलक्षणया ब्रह्मबोधिका-इत्येव युक्तम्। न तु चरमेण प्रथमस्य लाक्षणिकत्वं युक्तम्। अचेतनेषु देवताशब्द-प्रयोगस्तु लाक्षणिकः। आदित्यान्नपर्याययोः देवताशब्दस्य चेतनरूप-मुख्यार्थत्वे वाक्यशेषान्वयानुपपत्तिः, अतोऽचेतने लक्षणा। प्राणपर्याये देवताशब्दस्य चेतनरूपमुख्यार्थत्वे वाक्यशेषस्य स्वारस्येनान्वयात् सत्यपि लक्षणिकप्रायपाठे न लक्षणा देवताशब्दस्य। वाक्यान्तरगत-स्थानप्रमाणानुरोधिनी प्राणश्रुतिः, देवताश्रुतिस्तु स्ववाक्यगतलिङ्ग-प्रमाणानुरोधिनी, इत्यतोऽपि देवताश्रुतिः प्राणश्रुतेः प्रबला—इति... 108

सर्वाणिभूतानि इत्यत्र भूतशब्दः योगेन कार्यसामान्यपरः, प्राणिमहाभूत-रूढयोः कलहात्। न च सर्वकार्यलयो मुख्यप्राणे। पर्यायान्तरयोरिव

## ज्योतिश्चरणाधिकरणम्

'जीवमुख्यप्राणलिङ्गान्नेति चेत्' इति सौत्रशङ्का । 'इह जीवमुख्यप्राणयोरन्यतर उभौ वा प्रतीयेयाताम्, न ब्रह्म' इति शङ्काभागार्थो भाष्ये सङ्गृहीतः । तदाशयश्च—पूर्वतनत्रिसूत्र्या यद् व्यवस्थापितं 'उपक्रमोपसंहारैकरूप्येण ब्रह्मण्येकवाक्यतया प्रतर्दनविद्यावाक्यनिर्णयात् प्राणादिविषयकश्रुतिलिङ्गादीनि तदनुसारेण नेयानि' इति, तदयुक्तम् । उपक्रमोपसंहारयोरेकार्थत्वं हि प्रकरणवाक्ययोस्सम्पादकम्, तदुभयापेक्षया

## द्वितीयः पादः

### सर्वत्रप्रसिद्धाधिकरणम्

## अत्त्रधिकरणम्

## गुहाधिकरणम्

## अन्तराधिकरणम्

## अन्तर्याम्यधिकरणम्

## वैश्वानराधिकरणम्

## तृतीयः पादः

### द्युभ्वाद्यधिकरणम्

**भूमाधिकरणम्**

## ईक्षतिकर्माधिकरणम्

## दहराधिकरणम्

## अनुकृत्यधिकरणम्

## प्रमिताधिकरणम्

## देवताधिकरणम्

## अपशूद्राधिकरणम्

## अर्थान्तरत्वव्यपदेशाधिकरणम्

**सुषुप्त्युत्क्रान्त्यधिकरणम्**

**चतुर्थः पादः**

## कारणत्वाधिकरणम्

**प्रकृत्यधिकरणम्**

## सर्वव्याख्यानाधिकरणम्

## ५ ईक्षत्यधिकरणम्

**एवं तावत् वेदान्तवाक्यानां ब्रह्मात्मावगतिप्रयोजनानां ब्रह्मात्मनि तात्पर्येण समन्वितानां अन्तरेणापि कार्यानुप्रवेशं ब्रह्मणि पर्यवसान-मुक्तम्। ब्रह्म च सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिनाशकारणमित्युक्तम्।**

---

वृत्तानुवादपूर्वकं सङ्गतिमाह—**एवमिति**। पर्यवसानमुक्तमित्यन्तः शास्त्रयोनित्वसमन्वयसूत्रार्थानुवादः। इत्युक्तमित्यन्तः जन्मादिसूत्रार्थानुवादः। ततश्च [1]त्रिसूत्र्या जगत्कारणं सर्वज्ञं परमप्रयोजनरूपं वेदान्तप्रतिपाद्यमित्युक्तं, तन्न सम्भवति-जडस्य स्वप्रकाशानन्दपरमपुरुषार्थात्मकपरब्रह्मणस्सकाशात् भिन्नस्य प्रधानस्यैव वेदान्तप्रतिपाद्यत्वावगमात् - इति साङ्ख्यमतमाश्रित्य पूर्वपक्षप्रवर्तनात् आक्षेपिकी सङ्गतिः।

अत्र च - विप्रतिपत्तेः संशयः। साङ्ख्या हि सत्वरजस्तमोगुणात्मकं प्रधानमेव जगत्कारणं [2]न च तत्र कश्चिदधिष्ठाताऽपेक्षितः इति वदन्ति। तार्किकास्तु ईश्वराधिष्ठितान् परमाणून् मूलोपादानभूतान् मन्यन्ते। योगास्तु सेश्वरं प्रधानमुपादानमिति। असदेवोपादानमित्यन्ये। [3]अविद्योपाधिकं सत्यज्ञानानन्दात्मकं ब्रह्मैव निमित्तमुपादानं चेति औपनिषदाः सिद्धान्तिनः।

अस्मिंश्चाधिकरणे साङ्ख्यपक्षः सद्विद्यामवलम्ब्य प्रवृत्तो निराक्रियते। अन्येषां तु पक्षाणां तदुपन्यस्तवाक्ययुक्त्योराभासताप्रतिपादनपूर्वकं निराकरणं '**एतेन सर्वे व्याख्याताः**' [ब्र. सू. १-४-२८] इत्येवमादिषु[4] भविष्यति।

---

1. **त्रिसूत्र्येति** जन्मादिसूत्रेण 'सर्वज्ञं जगत्कारणं' इति "आनन्दाद्ध्येव" इति निर्णयवाक्योद्बोधक 'यतः' इति पदघटितेन तेनैव सूत्रेण समन्वयसूत्रेण च 'परमप्रयोजनरूपं' इति शास्त्रयोनित्वसमन्वयसूत्राभ्यां 'वेदान्तप्रतिपाद्यं' इति च उक्तमित्यर्थः।

2. मु. न कश्चित्

3. **अविद्योपाधिकमिति** विवरणमतानुसारेणेदम्।

4. **इत्येवमादिष्विति** आदिशब्देन द्वितीयाध्यायप्रथमपादसूत्राणां ग्रहणम्। तथाच वाक्यानां आभासताप्रतिपादनेन निराकरणं सर्वव्याख्यानसूत्रे, युक्तीनां आभासताप्रतिपादनेन निराकरणं द्वितीयप्रथमपादसूत्रेषु इत्यर्थः।

साङ्ख्यादयस्तु 'परिनिष्ठितं वस्तु प्रमाणान्तरगम्यमेव' इति मन्यमानाः प्रधानादीनि कारणान्तराणि अनुमिमानाः तत्परतयैव वेदान्तवाक्यानि योजयन्ति। सर्वेष्वेव वेदान्तवाक्येषु सृष्टिविषयेषु अनुमानेनैव कार्येण कारणं लिलक्षयिषितम्। 'प्रधानपुरुषसंयोगा नित्यानुमेयाः' इति सांख्या मन्यन्ते। काणादास्तु एतेभ्य एव वाक्येभ्य ईश्वरं निमित्तकारणमनुमिमते, अणूंश्च समवायिकारणम्। एवमन्येऽपि तार्किका वाक्याभासयुक्त्याभासावष्टम्भाः पूर्वपक्षवादिन इहोत्तिष्ठ(न्ते) [न्ति]। तत्र पदवाक्यप्रमाणज्ञेनाचार्येण वेदान्तवाक्यानां ब्रह्मा[त्मा]वगतिपरत्वप्रदर्शनाय वाक्याभासयुक्त्याभासप्रतिपत्तयः पूर्वपक्षीकृत्य निराक्रियन्ते।

---

साङ्ख्यस्यापि पुनः श्रुत्यन्तरावष्टम्भेन युक्त्यन्तरावष्टम्भेन च प्रवृत्तस्य निराकरणमुत्तरत्र[1] भविष्यति।

तत्र साङ्ख्या मन्यन्ते—प्रधानं ह्यनुमानगम्यम्। 'सृष्ट्याद्यं कार्यं स्वसदृशप्रकृतिकं कार्यत्वात् सम्मतवत्' इति अनुमानसम्भवात्। [2]तत्र सदादिपदानां शक्तिग्रहसम्भवति। अतो वेदान्तानां तत्परत्वमेव। न तु ब्रह्मपरत्वम्, तस्य प्रमाणान्तरागम्यत्वेन तत्र पदानां शक्तिग्रहासम्भवात् - इति[3]; तदाह—**साङ्ख्यादय इति**। अपि च 'तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ' [छा. उ. ६.८.४] इति श्रुत्या कार्यानुसारेण कारणमनुमेयमिति गम्यते[4]। तच्च [5]मत्पक्षानुगुणम्, अनुमानसिद्धकारणानुवादित्वाभ्युपगमात्, न तु वेदान्तिनः। [6]शास्त्रैक्योनित्वाभ्युपगमादिति - तदाह—**सर्वेष्वेवेति**।

---

1. **उत्तरत्र**—आनुमानिकाधिकरणसूत्रप्रभृतिषु।
2. **तत्र**—अनुमानगम्ये प्रधाने
3. मु. 'इति' नास्ति
4. मु. 'गम्यते' नास्ति
5. मु. तत्पक्षा
6. मु. शास्त्रयोनित्वा

**तत्र सांख्याः प्रधानं त्रिगुणमचेतनं जगतः कारणमिति मन्यमाना आहुः—यानि वेदान्तवाक्यानि सर्वज्ञस्य सर्वशक्तेर्ब्रह्मणो जगत्कारणत्वं**

---

इदं च युक्तिद्वयं नातीव प्रयोजकम्। यूपादिशब्दवत् अलौकिके [1]ब्रह्मणि ब्रह्मादिशब्दानां सङ्गतिग्रहोपपत्तेः, लोकत एव गृहीतशक्तिकानां पदानां वाक्यार्थविधया ब्रह्मप्रतिपादकतोपपत्तेश्च। कथमन्यथा स्वर्गयागादिसाध्यसाधनभावः सिध्येत्। नापि [2]तेजसासोम्यशुङ्गेनेतिवचनविरोधः। वेदान्तैकगम्य एव ब्रह्मणि [3]वेदान्तानां तात्पर्यद्योतनाय लोकसिद्धाया एव तस्या[4] अनुवादात्। [5]अतः सर्वज्ञत्वस्य ब्रह्मण्यपि मुख्यत्वासम्भवेन गौणत्वे आवश्यके प्रायपाठानुसारेण [6]गौणेक्षणस्य सद्विद्यागतस्य प्रधान एव योजनीयत्वात् तदनुसारेण सर्वज्ञत्वमपि प्रधान एव योजनीयमिति मनसि निधाय सर्वज्ञत्वानुपपत्तिमेव पूर्वपक्षयुक्तितया दर्शयति—**यानीत्यारभ्य कस्यचिदुपपन्नेत्यन्तेन**। सर्वज्ञत्वानुपपत्तौ च न ब्रह्मणो जगत्कर्तृत्वमुपपद्यत इति सिध्यति। 'अपि च प्रधानस्यानेकात्मकस्य' इत्यनेन तु पूर्वपक्षावसानवाक्येन निरवयवस्य ब्रह्मणः परिणामासम्भवात् उपादानत्वं तावन्न सम्भवतीति दर्शयिष्यते।

ननु, सर्वज्ञत्वस्योभयत्र मुख्यत्वाभावे तुल्ये प्रधानगतमेव तत् ग्राह्यमित्यत्र गौणश्चेदिति सूत्रे शङ्कावसरे वक्ष्यमाणा या युक्तिः सैव नियामिका। तत्र च ईक्षितृत्वं ब्रह्मणि मुख्यं न सम्भवतीति व्युत्पादयिष्यते। तेनैव च सर्वज्ञत्वस्यापि

---

1. मु. 'ब्रह्मणि' नास्ति
2. मु. अन्नेन
3. मु. वेदान्तानां तत्र तत्र तात्पर्य
4. **तस्याः**—युक्तेः
5. **अत इति** सर्वज्ञत्वानुपपत्तिमेव पूर्वपक्षयुक्तितया दर्शयति इत्यनेन सम्बध्यते। अत एव भाष्ये 'सांख्यादयस्तु' इत्यादिना विप्रतिपत्तिनिरूपणावसरे उक्तमपि पूर्वोक्तयुक्तिद्वयं 'तत्र सांख्याः' इति विशिष्य पूर्वपक्षनिरूपणावसरे नोक्तम्। यतः पूर्वोक्तयुक्तिद्वयं शास्त्रयोनित्वसमन्वयसूत्राभ्यां निराकृतं इति भावः।

   एतेन - 'अशब्दं' इतिसूत्रपदस्य विशिष्टाद्वैतिनां व्याख्यानं, श्रुतप्रकाशिकोक्तं अद्वैतिव्याख्यादूषणं च निरस्तं वेदितव्यम्।
6. मु. ईक्षणस्य। 'गौण' नास्ति।

**दर्शयन्तीत्यवोचः तानि प्रधानकारणपक्षेऽपि योजयितुं शक्यन्ते। सर्वशक्तित्वं तावत् प्रधानस्यापि स्वविकारविषयमुपपद्यते। एवं सर्वज्ञत्वमप्युपपद्यते। कथम्। यत्तु ज्ञानं मन्यसे स सत्वधर्मः 'सत्वात् संजायते ज्ञानम्' (भ० गी० १४।१७) इति स्मृतेः। तेन च सत्वधर्मेण ज्ञानेन कार्यकरणवन्तः पुरुषाः सर्वज्ञा योगिनः प्रसिद्धाः।**

---

ब्रह्मणि गौणत्वं प्राप्नोति। किमर्थमत्र पृथक् तन्निरूप्यते। परिणामासम्भवेऽपि विवर्तमादाय ब्रह्मण उपादानत्वं समर्थयिष्यते कृत्स्नप्रसक्त्यधिकरणे। अतः कथं ईक्षतिसूत्रनिवर्तनीयत्वेनेदं शङ्काद्वयं उपक्षिप्यते।

उच्यते - गौणश्चेदितिसूत्रे वक्ष्यमाणैव अस्मिन्नधिकरणे निवर्तनीया शङ्का। परं तु 'पुरुषार्थोऽतश्शब्दात्' [ब्र. सू.-३-४-१] इत्याद्यधिकरणवत् सिद्धान्तोपक्षेपपूर्वकमिदमधिकरणम्। अतः आद्यसूत्रावतारणार्थं सूत्रान्तरनिवर्तनीया शङ्का अत्रापि लिखिता।

**प्रधानकारणपक्षेऽपीति।** [1]प्रधानमेवकारणमिति पक्षेऽपीत्यर्थः। असम्भवो ह्यत्र जगत्कारणत्वलक्षणस्य ब्रह्मणि शङ्क्यते, न त्वतिव्याप्तिः प्रधाने जगत्कारणत्वस्य। यथा त्वया सर्वज्ञत्वादिकं क्लेशेन व्याख्येयं ब्रह्मणि तथा मया प्रधानेऽपि तच्छक्यते व्याख्यातुमिति अपेरर्थः। **सर्वशक्तित्वं तावदिति।** कार्यस्य सूक्ष्मावस्था शक्तिरित्युच्यते। प्रधानस्य तदाश्रयतया सर्वशक्तित्वं सम्भवतीत्यर्थः। ज्ञानं नित्यं पुरुषस्वरूपं, जन्यं वृत्तिरूपम्। तत्र वृत्तिरूपं ज्ञानं प्रधानपरिणामभूतान्तःकरणसत्वांशधर्मः। ततश्च अन्तःकरणद्वारा प्रधानस्य सर्वविषयकज्ञानाश्रयत्वं सम्भवतीत्याह—**एवं सर्वज्ञत्वमिति।** योगिनामपि सर्वज्ञत्वव्यपदेशः सत्वगुणाविवेकादित्याह - **तेन चेति।** कार्यकरणवन्तः-शरीरेन्द्रियवन्तः। सत्वस्य च सर्वविषयकज्ञानाकारपरिणामो निरतिशयतादशायाम्। [2]यदाहुः—'निरतिशयं सर्वज्ञ(ता)बीजम्'[पा.यो-१-२५]इति। सत्वस्य निरतिशयता

---

1. प्रधानकारणपक्षेऽपि इत्यपिना ब्रह्मण्यपि लक्षणसद्भावद्योतकेन लक्षणस्य अतिव्याप्तिरुक्ता - इति भ्रमं निराकर्तुं अपिशब्देन विवक्षितमर्थं वर्णयिष्यन् प्रधानकारणपक्षशब्दं एवकारान्तर्भावेन व्याचष्टे - **प्रधानमेव कारणमिति।** 2. आ. तदाहुः।

**सत्वस्य हि निरतिशयोत्कर्षे सर्वज्ञत्वं प्रसिद्धम् । न केवलस्याकार्यकरणस्य पुरुषस्योपलब्धिमात्रस्य सर्वज्ञत्वं किञ्चिज्ज्ञत्वं वा कल्पयितुं शक्यम् । त्रिगुणत्वात्तु प्रधानस्य सर्वज्ञानकारणभूतं सत्वं प्रधानावस्थायामपि विद्यत इति प्रधानस्याचेतनस्यैव सतः सर्वज्ञत्वमुपचर्यते वेदान्तवाक्येषु । अवश्यं च त्वयाऽपि सर्वज्ञं ब्रह्माभ्युपगच्छता सर्वज्ञानशक्तिमत्त्वेनैव सर्वज्ञत्वमभ्युपगन्तव्यम् । न हि सर्वदा सर्वविषयं ज्ञानं**

---

च रजस्तमोभ्यामनभिभवः । ब्रह्मणस्तु सर्वज्ञत्वं नित्यज्ञानमादाय वक्तुं न शक्यम् । नित्यज्ञानस्वरूपत्वेनाभ्युपगतस्य तदाश्रयत्वायोगात् । नापि जन्यज्ञानमादाय । केवलस्य निर्धर्मकस्य तदयोगात् । न च प्रलयदशायां ज्ञानजननोपयोगिनी देहेन्द्रियादिसामग्र्यपि विद्यते । ततश्च ब्रह्मणः सृष्ट्यारम्भकाले किञ्चिज्ज्ञत्वमपि न सम्भवति, दूरे सर्वज्ञत्वमित्याह—**न केवलस्येति** । ननु सृष्ट्यारम्भकालेऽन्तःकरणादिपरिणामाभावेन प्रधानेऽपि कथं सर्वज्ञत्वव्यपदेश इत्याशंक्य, तदाप्यन्तःकरणसूक्ष्मावस्थामादाय [1]सर्वज्ञानशक्तिर्वर्तत इति तामादाय सर्वज्ञत्वव्यपदेशो भविष्यतीत्याह—**सर्वज्ञानकारणभूतमिति** ।

ननु-शक्त्यात्मना विद्यमानं सर्वज्ञत्वं न कर्तृत्वोपयोगि, अभिव्यक्तस्यैव तस्य कर्तृत्वोपयोगित्वात्-इत्याशंक्य, न कर्तृत्वोपयोगि सर्वज्ञत्वं प्रधानेऽस्तीत्युच्यते, अपि तु [2]तत्र सर्वज्ञत्वश्रुतेर्गतिरुच्यते, त्वयापि हि तथैव वक्तव्यमित्याह—**अवश्यं चेति** । त्वथा सर्वज्ञत्वव्यपदेशः किं नित्यज्ञानमादाय अभिव्यक्तसर्वज्ञत्वमादाय व्याख्यायते, उत वृत्तिज्ञानमादाय । नाद्यः—सर्वज्ञ इत्यत्र [3]कृत्प्रत्ययेन स्वातन्त्र्यं प्रतिपाद्यते । स्वातन्त्र्यं च क्रियाश्रयत्वं कारकत्वं च । कारकत्वं क्रियाजनकत्वम् । गच्छतीत्यादौ च यन्मते भावनापि धात्वर्थः तन्मते धातूपात्तक्रियां प्रतीति विशेषणं देयं आश्रयत्वे जनकत्वे च । इदं च वैयाकरणमतम् । तन्मते च आख्यातेनैव आश्रयत्वं जनकत्वं च धर्मिणा सहाभिधीयते । प्रथमान्तपदार्थेन तु सह तस्याभेद एव । एवं कृत्प्रत्य-

---

1. मु. सर्वज्ञानजननशक्तिः
2. मु. 'तत्र' नास्ति
3. आ. कर्तृप्रत्ययेन

**कुर्वदेव ब्रह्म वर्तते। तथा हि—ज्ञाननित्यत्वे ज्ञानक्रियां प्रति स्वातन्त्र्यं ब्रह्मणो हीयेत। अथ अनिष्टं तदिति ज्ञानक्रियाया उपरमेतापि ब्रह्म, तदा सर्वज्ञानशक्तिमत्त्वेनैव सर्वज्ञत्वमापतति। अपि च प्रागुत्पत्तेः सर्वकारकशून्यं ब्रह्मेष्यते त्वया, नच ज्ञानसाधनानां शरीरेन्द्रियादीनामभावे ज्ञानोत्पत्तिः कस्यचिदुपपन्ना। अपिच प्रधानस्यानेकात्मकस्य परिणामसंभवात् कारणत्वोपपत्तिर्मृदादिवत्, नासंहतस्यैकात्मकस्य ब्रह्मणः- इत्येवं प्राप्ते इदं सूत्रमारभ्यते—**

---

येऽपि द्रष्टव्यम्। मीमांसकादीनां तु मते आख्यातेन भावना अभिधीयते। जनकत्वे सत्याश्रयत्वं प्रथमान्तपदार्थेन सह आख्यातार्थस्य संसर्गविधया भासते। कृत्प्रत्ययेन तु तन्मतेऽपि तदुभयाश्रयोऽभिधीयत एव, अभेदान्वयानुरोधात्[1]। तन्मते च प्रत्ययोपात्तक्रियाश्रयत्वे सति जनकत्वमिति कर्तृत्वनिर्वचनं द्रष्टव्यम्। जानातीत्यादौ तु क्रियाया अभावात् मुख्यस्य कर्तृत्वस्याभावेऽपि लोके आश्रयत्वं जनकत्वं च ज्ञानादिनिरूपितं बोध्यत एव। अतः सर्वज्ञ इत्यत्र लौकिकव्युत्पत्त्यनुसारेण ज्ञानजनकत्वे सति ज्ञानाश्रयत्वं प्रतीयते। तदुभयमपि[2] वेदान्तिना सर्वज्ञ इत्यत्र प्रकृतिभूतज्ञाधातुना नित्यज्ञानाभ्युपगमे वक्तुं न शक्यते, ब्रह्मण एव नित्यज्ञानस्वरूपत्वाभ्युपगमेन तदाश्रयत्वायोगात् नित्यं प्रति जनकत्वायोगाच्च, तदाह—**ज्ञाननित्यत्व इति**। यदि - सर्वज्ञ इत्यत्र ज्ञाधातुना न नित्यं ज्ञानं प्रतिपाद्यते अपि तु वृत्तिरूपं ज्ञानं - इत्युच्यते, तर्हि सृष्ट्यारम्भकाले वृत्तिज्ञानसामग्र्या अभावात् तत्कालावच्छेदेन सार्वज्ञ्यं न स्यादित्याह—[3]**अथानिष्टं तदिति**। ज्ञाधातुप्रतिपाद्यत्वेन नित्यं ज्ञानमनिष्टमित्यर्थः। उक्तस्यैवार्थस्य विवरणम्—**अपि चेति**। तथाहीत्यर्थे अपिचेति। अथवा पूर्ववाक्येन नित्यसार्वज्ञ्यं न सम्भवतीत्युक्तम्। तत्र चेद्वेदान्ती इष्टापत्तिं वदेत् काल्पनिकानां

---

1. **अभेदान्वयानुरोधादिति** भेदान्वयस्तु न भवति। नामार्थयोः नामार्थधात्वर्थयोर्वा अभेदातिरिक्तसम्बन्धेन साक्षादन्वयस्य अप्रसिद्धत्वेन तत्सामग्र्या एवाभावात्, कृदन्तस्य च नामत्वात् इति भावः।

2. मु. 'अपि' नास्ति

3. 'अथानित्यं तदिति' इति भाष्ये बहुलं पाठः।

## ईक्षतेर्नाशब्दम् ॥ ५ ॥

न साङ्ख्यपरिकल्पितमचेतनं प्रधानं जगतः कारणं शक्यं वेदान्तेष्वाश्रयितुम्। अशब्दं हि तत्। कथमशब्दत्वम्? ईक्षतेः— ईक्षितृत्वश्रवणात् कारणस्य। कथम्? एवं हि श्रूयते—'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा. उ. ६।२।१) इत्युपक्रम्य 'तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजत' (छा. उ. ६।२।३) इति। तत्र इदंशब्दवाच्यं नामरूपव्याकृतं जगत् प्रागुत्पत्तेः सदात्मनाऽवधार्य तस्यैव प्रकृतस्य सच्छब्दवाच्यस्य ईक्षणपूर्वकं तेजःप्रभृतेः स्रष्टृत्वं

---

सर्वज्ञत्वादीनां नित्यत्वानुपगमात्, तदाऽपि सृष्ट्यारम्भकाले कर्तृत्वोपयोगिसार्वज्ञ्यं त्वया उद्भूतं स्वीकर्तव्यम्, तच्च तवापि न सम्भवतीत्याह—**अपि चेति**। लोके सावयवानामेव उपादानत्वदर्शनात् त्रिगुणात्मना सावयवस्य प्रधानस्य उपादानत्वं संभवति, न तु ब्रह्मणः, निरवयत्वात् - इत्याह—**अपि चेति**। अतो जगत्कारणतया वेदान्तेषु प्रतिपाद्यमानं प्रधानमेव न ब्रह्मेति पूर्वः पक्षः इत्याह—**एवं प्राप्त इति**।

[1]तत्तुसमन्वयादिति सूत्रे तच्छब्दः जन्मादिसूत्रे यादृशं ब्रह्म निरूपितं तादृशब्रह्मप्रतिपादकः। ततश्च जगत्कारणताप्रतिपादकोऽपि स भवत्येव। तावन्मात्रार्थतया इहानुषज्यते। प्रधानमिति च पदमध्याह्रियते। तदध्याहारोऽपि ईक्षतेरित्यनेन सूचितः। एतेन हि ईक्षणानुपपत्तिः सूच्यते, सा च अचेतने प्रधान इति। ततश्च, प्रधानं न जगत्कारणमिति प्रतिज्ञा लभ्यते। तदाह—**न साङ्ख्यपरिकल्पितमिति**। सौत्रं अशब्दमितिपदं हेतुसमर्पकमित्याह—**अशब्दं हीति**। अशब्दत्वसाधकतया ईक्षतेरिति पदं योजयति— **कथमिति**। ततश्चायमर्थः—[2]साङ्ख्यपरिकल्पितं प्रधानं न जगत्कारणम्,

---

1. अत्र भाष्योक्तप्रतिज्ञावाक्यं न सूत्रस्वारस्यमनुसरति—इति विशिष्टाद्वैतिनः, तान् बोधयति—**तत्तु इत्यादिना**।

2. प्रधानस्य स्वमते अप्रसिद्धत्वेऽपि साङ्ख्यपरिकल्पितत्वेन रूपेण स्वमतेऽपि प्रसिद्धत्वात् नाश्रयासिद्धिः - इत्यभिप्रायेणाह - **साङ्ख्यपरिकल्पितं प्रधानं इति**।

**दर्शयति। तथाऽन्यत्र 'आत्मा वा इदमेक एवाग्र आसीत्। नान्यत्किञ्चन मिषत्। स ईक्षत लोकान्नु सृजा इति। स इमाँल्लोकान-सृजत' (ऐ. उ. १।१।१) इति ईक्षापूर्विकामेव सृष्टिमाचष्टे। क्वचिच्च षोडशकलं पुरुषं प्रस्तुत्याह 'स ईक्षांचक्रे। स प्राणमसृजत' (प्र. उ. ६।३) इति। ईक्षतेरिति च धात्वर्थनिर्देशोऽभिप्रेतः यजतेरितिवत्, न धातुनिर्देशः।**

---

कारणत्वधर्मिनिर्देशकसदादिपदाप्रतिपाद्यत्वात्, [1]तदप्रतिपाद्यत्वं च सदादि-शब्दार्थस्य ईक्षणकर्तृत्वाम्नानात्—इति। इदं च श्रुतिपर्यालोचनया प्रधानस्य जगत्कारणत्वं न सम्भवतीत्यनेन तात्पर्येण। **क्वचिच्च षोडशकलं पुरुषमिति।** 'इहैवान्तश्शरीरे सोम्य स पुरुषो यस्मिन्नेताष्षोडशकलाः प्रभवन्तीति [प्र.उ.६-२] इति पूर्ववाक्येन षोडशानां प्राणादिनामान्तानां कलानां कर्तारं प्रस्तुत्य। **ईक्षते-रिति च धात्वर्थनिर्देश** इति। 'इक्श्तिपौ धातुनिर्देशे' [पा-सू-वा-३-३-१०८] इत्यनेन धातुनिर्देशे श्तिपो विधानात् श्तिबन्तेन सौत्रेण ईक्षतेरितिपदेन यद्यपि मुख्यया वृत्त्या ईक्षतिधातुरेव प्रतीयते, तथापि अत्र लक्षणया ईक्षतेरिति पदं [2]धात्वर्थेक्षणपरं भविष्यति। ननु किमर्थं लक्षणया अर्थपर्यन्तता कल्प्यते, ईक्षतेरिति [3]धातुरपि [4]तत्र मुख्यया वृत्त्याऽसङ्गतः तत्कारणतानिराकरणे उपयुक्त एवेति चेत्, उच्यते - [5]अर्थानुसन्धानं विना धातुमात्रं न प्रधानकारणतानिराकरणे

---

1. **तदप्रतिपाद्यत्वमित्यादि** सदादिपदप्रतिपाद्यं न प्रधानम्, ईक्षणकर्तृत्वेन प्रतिपाद्यत्वात् - इत्यनुमानाकारः। ततश्च सूत्रोक्तहेतोः न अपक्षधर्मत्वम्।

2. मु· धात्वर्थपरं

3. **धातुरपीत्यादि** यत्र ईक्षणं मुख्यं नास्ति ततो मुख्यार्थस्य ईक्षतिधातोरपि व्यावृत्तेः अर्थवत् धातोरपि लिङ्गत्वं सम्भवतीत्यर्थः।

4. **तत्र**-प्रधाने। एवं तत्कारणतेत्यत्रापि तच्छब्दार्थः प्रधानम्।

5. **अर्थानुसन्धानं विनेति** ईक्षणरूपस्य अर्थस्य अचेतनात् व्यावृत्त्यवगमं विना तद्वाचकस्य ततो व्यावृत्तेः अवगन्तुमशक्यतया प्रथमोपस्थितस्य अर्थस्यैव अत्र लिङ्गतौचित्यम्—इति भावः।

उपयुज्यते, अतः अर्थपर्यन्तत्वमाश्रितम् । **यजतेरितिवदिति** । [1]'इतिकर्तव्यताऽविधेर्यजतेः पूर्ववत्त्वम्' [पू. मी. ७-४-१] इति जैमिनिसूत्रावयवोऽयम् । तत्र यजतेरिति श्तिबन्तो यजिः धात्वर्थलक्षकः । अयं तस्य सूत्रस्यार्थः—'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इत्यादौ फलाय करणं निर्दिश्यते, न तु कृत्स्नेतिकर्तव्यता । यथा दर्शपूर्णमासादौ । इतिकर्तव्यतायाश्च कार्त्स्न्यं दृष्टादृष्टाङ्गानां सर्वेषां निर्देशे अवगन्तुं शक्यते । तत्र यद्यप्यदृष्टार्थानां अङ्गानां साकल्यं शास्त्रेण यावन्ति तानि निर्दिष्टानि तावद्भिरेव कल्पयितुं शक्यम् । दृष्टार्थानां तु तथा न सम्भवति । ततश्च दृष्टार्थान्यङ्गानि अपेक्षितानि सर्वाणि तत्र निर्दिष्टानि । सौर्यादौ तु न तानि तथा निर्दिष्टानि । यद्यपि क्रतुस्वरूपसम्पादकानि देवतादीनि निर्दिष्टान्येव, तथापि चरूत्पत्त्यादिप्रकारो न निर्दिष्टः । ततश्च 'सौर्ययागेन ब्रह्मवर्चसं भावयेत्' इत्युक्ते कथं भावयेदित्याकाङ्क्षा भवति । ननु - नायं नियमः 'करणनिर्देशे इतिकर्तव्यताकांक्षा भवति' इति ; भोजनेन तृप्तिं कुर्यादित्यादौ तददर्शनात् - इति चेत्, न - तत्र भोजनेतिकर्तव्यतायाः पात्रासादनादिरूपायाः लोकनिरूढत्वेन तत्राकाङ्क्षायाः प्रसिद्धत्वाभावेऽपि 'पाकेन [2]मण्डकान् कुर्यात्' इत्यादौ तत्प्रकारानभिज्ञस्य भवत्येवाकांक्षा 'कथं पाकेन मण्डकाः कर्तव्याः' इति, तद्वत् सौर्ययागेन ब्रह्मवर्चसं भावयेत् इत्यत्र प्रकारस्यानिर्ज्ञातत्वात् भवत्येवाकांक्षा कथं भावयेदिति । तदिदमुक्तं इतिकर्तव्यतायाः अविधेः-विधानाभावात् यजतेः पूर्ववत्त्वं - सौर्यादियागस्य यत्र कृत्स्नेतिकर्तव्यता निर्दिष्टा वर्तते तत्पूर्वकत्वम् । लोकेऽपि हि पूर्वमेव ओदनपाकं व्युत्पाद्य यदा अनन्तरदिने वैशेषिकाङ्गमात्रनिर्देशपूर्वकं [3]कृसरं पचेति वदति, तदा बोध्यस्य इत्थं बुद्धिर्भवति—अवशिष्टेतिकर्तव्यता ओदनपाके या पूर्वं निर्दिष्टा सैव भविष्यति इति । ततश्च जैमिनिसूत्रे यथा यजतिशब्दः सौर्यादियागपरः, तथा अत्रापि ईक्षतिशब्दः तदर्थपरो भविष्यति ।

---

1. यजतेरिति कुत्रत्यः प्रयोगः? तत्र वा धातुपरत्वं किं न स्यात्? इति शङ्काद्वयं परिहर्तुं यजतेरिति प्रयोगयुक्तं जैमिनिसूत्रं लिखित्वा तदर्थं वर्णयति-**इतिकर्तव्यतेत्यादिना** ।

2. **मण्डकाः** - 'माण्डे' इति देशभाषाप्रसिद्धो भक्ष्यविशेषः ।

3. **कृसरः** - सतिलतण्डुलस्य क्षीरे पाकेन निष्पन्नो भक्ष्यविशेषः । तिलौदनं इति केचित् ।

**तेन 'यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' (मु. उ. १।१।९) इत्येवमादीन्यपि सर्वज्ञेश्वरकारणपराणि वाक्यान्युदाहर्तव्यानि।**

**यत्तूक्तं सत्वधर्मेण ज्ञानेन सर्वज्ञं प्रधानं भविष्यतीति, तन्नोपपद्यते। न हि प्रधानावस्थायां गुणसाम्यात् सत्वधर्मो ज्ञानं संभवति। ननूक्तं सर्वज्ञानशक्तिमत्त्वेन सर्वज्ञं भविष्यतीति, तदपि नोपपद्यते। यदि गुणसाम्ये सति सत्वव्यपाश्रयां ज्ञानशक्तिमाश्रित्य सर्वज्ञं प्रधानमुच्येत कामं रजस्तमोव्यपाश्रयामपि ज्ञानप्रतिबन्धशक्तिमाश्रित्य किंचिज्ज्ञमुच्येत।**

---

एवं च—यद्यपि ईक्षणादित्येव वक्तव्यं, तथापि शब्दगतिपर्यालोचनया अत्र प्रधानकारणवादो निराक्रियत इति द्योतनाय शब्दप्राधान्येन निर्देशः।

**यस्सर्वज्ञ इति।** सामान्यतो विशेषतश्च सर्वविषयकज्ञाननिरूपणार्थं पदद्वयं 'सर्वज्ञः सर्ववित्' इति। **ज्ञानमयमिति।** स्वार्थे मयट्। 'तपसा चीयते ब्रह्म' इति पूर्ववाक्ये निर्दिष्टं तपो यस्य ज्ञानरूपम्। इदं च तपोरूपं ज्ञानं वृत्तिरूपम्। पूर्वमन्त्रे तपश्शब्दार्थस्य उपचयकारणताप्रतिपादनात्। न हि स्वरूपभूतेन ज्ञानेन उपचयः सम्भवति। सृष्टिकाले चापि मायामयी वृत्ति ब्रह्मणः सम्भवत्येव। एतत्-हिरण्यगर्भाख्यं ब्रह्म। 'जायते' इति लिङ्गात्। नामरूपं भौतिकविषयम्। हिरण्यगर्भसृष्ट्यनन्तरं निर्देशात्। **ज्ञानप्रतिबन्धशक्तिमाश्रित्येति।** साङ्ख्यमते त्रयाणां गुणानां मध्ये सत्वं लघु प्रकाशकार्यं च, चलो रजोगुणः प्रवृत्तिकार्यश्च, गुरुः तमोगुणः नियमनकार्यश्च। तत्र सत्वगुणस्य प्रकाशकत्वेऽपि चलस्वभावत्वाभावात् न स ज्ञानाकारेण परिणमते स्वतः। रजोगुणेन चलस्वभावेन प्रेरितः ज्ञानाकारेण परिणमते। स च परिणामः चलस्वभावेन रजसा यावत् सर्वत्र चालयितुमारभ्यते तावदेव तमसा प्रतिबध्यत इति भोगप्रयोजककर्मानुसारेण विषयव्यवस्था भवति। ततश्च प्रतिबन्धशक्तेः तम एव यद्यप्याश्रयो भवति, तथापि प्रतिबन्धशक्त्या विषयतया रजोऽप्यपेक्षितमिति रजस्तमोव्यपाश्रयामित्युक्तम्।

**अपि च न असाक्षिका सत्त्ववृत्तिः जानातिना अभिधीयते। न चाचेतनस्य प्रधानस्य साक्षित्वमस्ति। तस्मादनुपपन्नं प्रधानस्य सर्वज्ञत्वम्। योगिनां तु चेतनत्वात् सत्त्वोत्कर्षनिमित्तं सर्वज्ञत्व-**

---

न च - तमोव्यपाश्रयां प्रतिबन्धशक्तिमाश्रित्य किञ्चिज्ज्ञत्वव्यपदेशोऽस्तु नाम, तथापि सत्त्वव्यपाश्रयां [1]ज्ञानशक्तिमाश्रित्य सर्वज्ञत्वव्यपदेशे काऽनुपपत्तिरिति - वाच्यम्। लोके हि जीवानां सर्वज्ञत्वशक्तावपि न सर्वज्ञत्वेन व्यवहारः, तत्प्रतिबन्धोपयोगिनस्तमसस्तत्र विद्यमानत्वात्। एवं तमस्विनि प्रधाने शक्त्यापि सर्वज्ञत्वनिर्देशोऽनुपपन्न एव।

अपि च - यस्मिन् सति 'घटः प्रकाशते घटोऽस्ति' इत्येवमादिव्यवहारो दृश्यते तादृशोऽर्थो जानात्यादिना प्रतिपाद्यत इति सर्वसम्प्रतिपन्नम्। स चार्थः तार्किकादिमते आत्मविशेषगुणः। स तु पक्षः आत्मनः कूटस्थत्वप्रतिपादकवचनविरुद्धः। कूटस्थत्वं हि निर्विकारत्वम्। उपजनापायशाली धर्म एव च विकार इत्युच्यते। इदं च साङ्ख्येनापि स्वीकृतमेव। सिद्धान्ते तु तादृशव्यवहारोपयोगिजानात्यर्थो वृत्तिप्रतिफलितचैतन्यस्वरूपम्। तथा च श्रुतिः 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति विषयप्रकाशोपयोगितां नित्यस्वरूपचैतन्यस्य प्रतिपादयति। 'अथ यो वेदेदं जिघ्राणीति स आत्मा' इति विषयप्रकाशकं ज्ञानं प्रस्तुत्य, तत्र 'गन्धाय घ्राणं दर्शनाय चक्षुः' इत्यादिना इन्द्रियाणामपि [2]उपयोगं वदति। प्रत्यक्षेण च (घटमहं) 'जानामि' इत्येकरूपेणैव विषयप्रकाश उपलभ्यते। ततश्च साक्ष्युपरक्ता वृत्तिः ज्ञाधात्वर्थ इति सिध्यति। साङ्ख्यस्याप्येतत् सम्मतमेव। तदाह—**अपि चेति।** एतादृशं च ज्ञानं अन्तःकरणाविद्यादितादात्म्यापन्नस्य चेतनस्यैव। नतु केवलप्रधानस्येत्याह—**न चाचेतनस्य प्रधानस्येति।** तथा च तच्छक्तिरपि विशिष्टस्य चेतनस्यैव भविष्यतीति भावः। ननु-योगिनां मते ईश्वरोऽस्ति, तथा च-सृष्टिकाले प्रधाने सर्वविषया काचित् सात्त्विकी वृत्तिर्जायते, तत्रेश्वरज्ञानप्रतिफलनात् प्रधानस्यैव सर्वज्ञत्वं भविष्यति-इति दृष्टान्तपूर्वकं शङ्कते—

---

1. मु. 'ज्ञानशक्तिमाश्रित्य' नास्ति।　　2. मु. विनियोगं।

मुपपन्नमित्यनुदाहरणम् । अथ पुनः साक्षिनिमित्तमीक्षितृत्वं प्रधान-[स्यापि] [स्य] कल्प्येत यथा अग्निनिमित्तमयःपिण्डादेर्दग्धृत्वम्, तथा च सति यन्निमित्तमीक्षितृत्वं प्रधानस्य तदेव सर्वज्ञम्मुख्यं ब्रह्म जगतः कारणमिति युक्तम् ।

यत्पुनरुक्तं—ब्रह्मणोऽपि न मुख्यं सर्वज्ञत्वमुपपद्यते, नित्यज्ञान-क्रियत्वे ज्ञानक्रियां प्रति स्वातन्त्र्यासंभवात् इति—

अत्रोच्यते—इदं तावद्भवान् प्रष्टव्यः - कथं नित्यज्ञानक्रियत्वे सर्वज्ञत्वहानिरिति । यस्य हि सर्वविषयावभासनक्षमं ज्ञानं नित्यमस्ति सोऽसर्वज्ञ इति विप्रतिषिद्धम् । अनित्यत्वे हि ज्ञानस्य कदाचिज्जानाति कदाचिन्नजानातीति असर्वज्ञत्वमपि स्यात् । नासौ ज्ञाननित्यत्वे दोषोऽस्ति । ज्ञाननित्यत्वे ज्ञानविषयः स्वातन्त्र्यव्यपदेशो नोपपद्यत इति चेत्, न—प्रततौष्ण्यप्रकाशेऽपि सवितरि 'दहति, प्रकाशयति' इति स्वातन्त्र्यव्यपदेशदर्शनात् ।

---

**अथ पुनस्साक्षिनिमित्तमिति ।** तथा सति सृष्ट्यारम्भे जायमानां सात्विकीं वृत्तिं प्रति ब्रह्मणः सिद्धान्तेऽप्यधिष्ठानतया तद्वृत्त्युपाधिकं सर्वज्ञत्वं भविष्यतीत्यभि-प्रेत्य परिहरति—**तथा च सतीति ।** **यन्निमित्तमिति ।** जडस्य [1]सत्तायां स्फूर्तौ च ब्रह्मैव श्रुतिस्मृतिपर्यालोचनया प्रयोजकमिति भावः ।

पूर्वपक्ष्युक्तमनुवदति—**यत् पुनरुक्तमिति ।** सर्वज्ञ इत्यत्र किं प्रकृत्यर्थस्य मुख्यत्वं सिद्धान्ते अनुपपन्नमित्युच्यते प्रत्ययार्थस्य वा? इति विकल्प्य, आद्यं निराकरोति—**कथमित्यादिना दोषोऽस्तीत्यन्तेन ।** द्वितीयं शङ्कते—**ज्ञाननित्यत्व इति ।** **स्वातन्त्र्यव्यपदेश इति ।** स्वातन्त्र्यं च जनकतया आश्रयत्वम् । नित्यज्ञानस्वरूपे ब्रह्मणि उभयमपि न सम्भवतीति भावः । यद्यपि वृत्तिज्ञानोपाधिकं सम्भवतीति प्रागेवोक्तं, तथापि स्वरूपज्ञानमादाय शङ्का । तत्र नित्यस्याप्यौपाधिको जन्यत्वव्यपदेश इति सदृष्टान्तमुपपादयति—**प्रततेति ।** धर्मिणा आदित्येन सहैव सदा सन्ततत्वं प्रततत्वम् । **दहति प्रकाशयतीति ।**

---

1. मु. स्वसत्तायां

**ननु सवितुर्दाह्यप्रकाश्यसंयोगे सति 'दहति, प्रकाशयति' इति व्यपदेशः स्यात्, न तु ब्रह्मणः प्रागुत्पत्तेर्ज्ञानकर्मसंयोगोऽस्तीति विषमो**

---

ननु 'दहति, प्रकाशयति' इत्यत्र आदित्यसम्बन्धिन औष्ण्यस्य प्रकाशस्य च न जन्यत्वं विषयोपाधिकं प्रतिपाद्यते। दहतिर्हि भस्मतानुकूलं व्यापारं प्रतिपादयति। भस्मता च रूपरसान्तरापत्तिः विक्लित्तिवत्। तत्र च सूर्यकान्तादि-द्वारा आदित्यरश्मिसंयोगः प्रयोजकः। ततश्च दहतीति भस्मतानुकूलसंयोग-वानिति प्रतिपादयति। एवं प्रकाशयतीत्यत्रापि णिच्प्रकृत्या तमोनिवृत्तिः प्रतिपाद्यते, न त्वादित्यप्रकाशः। तस्य घटादिगतत्वाभावेन तेषां कर्मता न स्यात्। णिचा च आदित्यरश्मिसंयोगः। ततश्च प्रकाशयतीत्यत्रापि तमोनिवृत्त्यनुकूलसंयोग-वानिति प्रतिपाद्यते। अतः कथमेतत् आदित्यसहजसिद्धयोरप्यौष्ण्यप्रकाशयोरादित्य-जन्यतायामुदाहरणमिति चेत्—

उच्यते—निदाघतप्तस्य पान्थस्य आदित्यकिरणगतमूष्माणं स्वशरीरानु-प्रविष्टादित्यकिरणभेदाग्रहात् स्वगतमनुभवतः अतिशयिततापविवक्षया यः 'आदित्यो मां दहति' इति प्रयोगः, यश्च आदित्यप्रभासम्पर्केण घटादिगतां भास्वरताम् अविवेकात् साक्षात्सम्बन्धेन घटादिगतामनुभवतां प्रयोगः 'आदित्यो घटं प्रकाशयति' इति स इहोदाहरणम्। तत्र च स्वगतोष्मानुकूलसंयोग-वानित्यर्थे पथिकस्य तात्पर्यं, घटादिगतभास्वररूपतानुकूलव्यापारवानिति च घटादिदर्शिनां तात्पर्यम्। अतस्त दृशस्थले सहजसिद्धयोरप्यौष्ण्यप्रकाशयोः उपाधि-सम्पर्ककृतं अनित्यत्वमारोप्य यथा 'दहति' 'प्रकाशयति' इति व्यपदेशः, एवं नित्यज्ञानस्यापि दृश्यावच्छेदकृतमनित्यत्वमारोप्य सर्वज्ञ इति व्यपदेशो भविष्य-तीति[1] भावः।

**न तु ब्रह्मणः प्रागुत्पत्तेर्ज्ञानकर्मसंयोगोऽस्तीति।** यद्यप्युत्पत्तेः प्रागपि सूक्ष्मावस्थवस्तुसंयोग आध्यासिको ब्रह्मणोऽप्यस्ति, तथापि यथा आगन्तुको घटादि-संयोगः सहजसिद्धस्यापि प्रकाशस्य जन्यतानिर्देशप्रयोजको विद्यते नैवं ब्रह्मस्वरूपभूत-ज्ञानस्य सूक्ष्मतापन्नवस्तुसंयोगः सृष्ट्यव्यवहितप्राक्काले आगन्तुकोऽस्ति, येन तस्यां

---

1. मु. भवतीति।

**दृष्टान्तः। न - असत्यपि कर्मणि 'सविता प्रकाशते' इति कर्तृत्वव्यपदेशदर्शनात्। एवं असत्यपि ज्ञानकर्मणि ब्रह्मणः 'तदैक्षत' इति कर्तृत्वव्यपदेशोपपत्तेः न वैषम्यम्। कर्मापेक्षायां तु ब्रह्मणीक्षितृत्वश्रुतयः सुतरामुपपन्नाः। किं पुनस्तत्कर्म, यत् प्रागुत्पत्तेरीश्वरज्ञानस्य विषयो भवतीति। तत्त्वान्यत्वाभ्यामनिर्वचनीये नामरूपे अव्याकृते व्याचिकीर्षिते-इति ब्रूमः। यत्प्रसादाद्धि योगिनामप्यतीतानागतविषयं प्रत्यक्षं ज्ञानमिच्छन्ति योगशास्त्रविदः, किमु वक्तव्यं तस्य नित्यसिद्धस्येश्वरस्य सृष्टिस्थितिसंहृतिविषयं नित्यज्ञानं भवतीति।**

---

दशायां [1]ज्ञानजन्यतानिदशप्रयोजको भवेत् इति भावः। मास्तु तस्यां दशायां ज्ञानजन्यताप्रयोगोपयोगी[2] सूक्ष्मवस्तुसंसर्गः, [3]ज्ञानाधेयत्वनिर्देशप्रयोजकस्तु भविष्यति। सूक्ष्मवस्तुनोऽपि ब्रह्माधिष्ठितत्वेन तच्छुरितस्वरूपज्ञानस्यापि तदाधेयत्वनिर्देशोपपत्तेः, दृश्यते च कर्तृप्रत्ययस्य जनकतांशं विहाय आधारतामात्रे प्रयोगः-इत्यभिप्रेत्याह—**न असत्यपीति। प्रकाशत इति।** अयं च प्रयोगः आदित्यमण्डलगतं भास्वररूपं अभिप्रेत्य। न च तस्य विषयसम्पर्कोऽस्ति। तत्प्रभाया एव विषयसम्पृक्तत्वात्। अतो विषयोपाधिकजन्यत्वाभावेऽपि प्रकृत्यर्थप्रकाशाश्रयतामात्रेण कर्तृत्वव्यपदेशः। [4]तथा सर्वज्ञ इत्यत्रापि भविष्यति। **कर्मापेक्षायां त्विति।** सूक्ष्मावस्थस्य वस्तुनः तस्यां दशायां साक्षात् ब्रह्मात्मकप्रकाशेन सम्बन्धस्य आगन्तुकत्वाभावेऽपि वृत्तिद्वारकस्तत्सम्बन्ध आगन्तुको भवत्येव। तथा च वृत्तिद्वारा [5]स्वसम्बद्धकर्मापेक्षायां[6] तु इत्यर्थः। **सुतरामिति।** जनकतया ईक्षणाश्रयब्रह्मप्रतिपादकत्वादिति भावः। **योगशास्त्रविद इति।** 'ततः

---

1. **ज्ञानजन्यता**—ज्ञाननिष्ठजन्यता। 2. मु. जन्यतोपयोगी।

3. **ज्ञानाधेयत्वेति** ज्ञाननिष्ठाधेयत्वेत्यर्थः। एवञ्च 'आधारतामात्रे प्रयोगः' इति समनन्तरग्रन्थाविरोधः।

4. **तथा सर्वज्ञ इति** अत्र कर्तरिकृत्प्रत्ययस्य आधारोऽर्थः। नामार्थान्वयानुरोधेन धर्मिपर्यन्तस्य कृत्प्रत्ययार्थतायाः समन्वयसूत्रभाष्यव्याख्यानावसरे उक्तत्वात्।

यदप्युक्तं प्रागुत्पत्तेः ब्रह्मणः शरीरादिसंबन्धमन्तरेण ईक्षितृत्वमनुपपन्नमिति, न तच्चोद्यमवतरति, सवितृप्रकाशवत् ब्रह्मणो ज्ञानस्वरूपनित्यत्वे ज्ञानसाधनापेक्षानुपपत्तेः ।

अपि च अविद्यादिमतः संसारिणः शरीराद्यपेक्षा ज्ञानोत्पत्तिः स्यात्, न ज्ञानप्रतिबन्धकारणरहितस्येश्वरस्य । मन्त्रौ चेमौ ईश्वरस्य शरीराद्यनपेक्षतामनावरणज्ञानतां च दर्शयतः—

'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'
(श्वे. उ. ६।८) इति,

'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्'
(श्वे. उ. ३।१९) इति च ।

---

प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च' इति हि पातञ्जलं सूत्रम्[1] । ततः-ईश्वरप्रणिधानात् प्रत्यगात्माधिगमो रागद्वेषाद्यन्तरायाभावश्च भवतीति सूत्रार्थः ।

ननु नित्ये स्वरूपभूते ज्ञाने शरीराद्यपेक्षाभावेऽपि वृत्तिरूपज्ञाने तदपेक्षा स्यादिति, अत आह—**अपि चेति** । शरीराद्यभावेऽपि मायामयी वृत्तिर्भविष्यतीति भावः । न च तादृशवृत्त्यभावेन[2] ब्रह्मणः प्रलयदशायां सर्वज्ञत्वं न स्यादिति वाच्यम् । प्रलयदशायां सर्वज्ञत्वाभावेऽपि सृष्टिप्राक्काले सर्वज्ञत्वे न काचिदनुपपत्तिः । तावन्मात्रेण च 'यस्सर्वज्ञः' इति श्रुतिरुपपन्ना । कार्यं-शरीरम् । करणम्-इन्द्रियजातम् । स्वाभाविकी-स्वशक्त्यधीना । ज्ञानबलक्रिया-ज्ञानबलाभ्यां सहिता क्रिया । जवनो ग्रहीता । सर्वाधिष्ठानतया सर्वसम्बद्धः । पश्यतीत्यादिना सर्वावभासकत्वं दर्शितम् । तदाह—**स वेत्ति वेद्यमिति** ॥ ५ ॥

---

1. या तु प्रधानस्य सर्वज्ञत्वे साक्षिणी सत्वोत्कर्षे योगिसार्वज्ञ्यप्रसिद्धिरुक्ता पूर्वपक्षिणा पातञ्जलतन्त्रप्रसिद्धा, सा समा ब्रह्मण्यपि, चेतनेश्वरप्रसादायत्तयोगिसर्वज्ञत्वस्य पातञ्जलतन्त्रे प्रसिद्धत्वात्—इत्यभिप्रायेणोक्तं **पातञ्जलं सूत्रमिति** ।

2. **तादृशवृत्त्यभावेनेति** अनादिषट्कभिन्नद्वयस्य प्रलयकाले सद्भावे मानाभाव इति भावः । आ. वृत्त्यभावे ।

ननु नास्ति [तव] [तावत्] ज्ञानप्रतिबन्धकारण [रहिते] [वानी] श्वरादन्यः संसारी, 'नान्योऽतोऽस्ति द्रष्टा....नान्योऽतोऽस्ति विज्ञाता' (बृ. उ. ३।७।२३) इति श्रुतेः। तत्र किमिदमुच्यते संसारिणः शरीराद्यपेक्षा ज्ञानोत्पत्तिः नेश्वरस्येति-

अत्रोच्यते - सत्यं नेश्वरादन्यः संसारी। तथापि देहादिसङ्घातोपाधिसंबन्ध इष्यत एव, घटकरकगिरिगुहाद्युपाधिसंबन्ध इव व्योम्नः। तत्कृतश्च शब्दप्रत्ययव्यवहारो लोकस्य दृष्टः- घटच्छिद्रं करकच्छिद्रमित्यादिः आकाशाव्यतिरेकेऽपि, तत्कृता च आकाशे घटाकाशादिभेदमिथ्याबुद्धिर्दृष्टा। तथा इहापि देहादिसङ्घातोपाधिसंबन्धाविवेककृतेश्वरसंसारिभेदमिथ्याबुद्धिः। दृश्यते च आत्मन एव सतो देहादिसङ्घातेऽनात्मन्यात्मत्वाभिनिवेशो मिथ्याबुद्धिमात्रेण पूर्वपूर्वेण। सति चैवं संसारित्वे देहाद्यपेक्षमीक्षितृत्वमुपपन्नं संसारिणः।

यदप्युक्तं - प्रधानस्यानेकात्मकत्वान्मृदादिवत्कारणत्वोपपत्तिर्नासंहतस्य ब्रह्मण इति, तत् प्रधानस्याशब्दत्वेनैव प्रत्युक्तम्। यथा तु तर्केणापि ब्रह्मणएव कारणत्वं निर्वोढुं शक्यते न प्रधानादीनां, तथा प्रपञ्चयिष्यति-'न विलक्षणत्वादस्य-' (ब्र. सू. २।१।४) इत्येवमादिना ॥५॥

अत्राह—यदुक्तं - नाचेतनं प्रधानं जगत्कारणम्, ईक्षितृत्वश्रवणादिति, तत् अन्यथाप्युपपद्यते, अचेतनेऽपि चेतनवदुपचारदर्शनात्। यथा प्रत्यासन्नपतनतां नद्याः कूलस्य आलक्ष्य 'कूलं पिपतिषति'

---

उत्तरसूत्रमवतारयति—**अत्राहेति**। अयं भावः – यदि 'तदैक्षत' 'यस्सर्वज्ञः' इत्यादौ प्रकृत्या नित्यमेव ज्ञानं विवक्ष्यते, तदा 'सविता प्रकाशते' इतिवत् आश्रयत्वमात्रं प्रत्ययार्थ इति वक्तव्यम्। तदपि [1]दृश्यावच्छेदोपाधिकम्। यदि तु वृत्त्यभिव्यक्तं चैतन्यं प्रकृत्यर्थः तदा जनकत्वमपि प्रत्ययेन [2]वृत्त्यु-

---

1. **तदपि दृश्यावच्छेदोपाधिकमिति** दृश्यावच्छेदोपाधिकत्वं आश्रितत्वनिष्ठं तन्निरूपिताश्रयत्वस्योक्तम्। मु० दृश्यभेदोपाधिकम्।

2. **वृत्त्युपाधिकमिति** जन्यत्वनिष्ठं वृत्त्युपाधिकत्वं जनकत्वस्योक्तम्।

इत्यचेतनेऽपि कूले चेतनवदुपचारो दृष्टः, तद्वत् अचेतनेऽपि प्रधाने प्रत्यासन्नसर्गे चेतनवदुपचारो भविष्यति 'तदैक्षत' इति। यथा लोके कश्चिच्चेतनः 'स्नात्वा भुक्त्वा च अपराह्णे ग्रामं रथेन गमिष्यामि' इतीक्षित्वा अनन्तरं तथैव नियमेन प्रवर्तते, तथा प्रधानमपि महदाद्याकारेण नियमेन प्रवर्तते। तस्मात् चेतनवदुपचर्यते। कस्मात्पुनः कारणात् विहाय मुख्यमीक्षितृत्वं औपचारिकं कल्प्यते? 'तत्तेज ऐक्षत', 'ता आप ऐक्षन्त' (छा. उ. ६।२।३,४) इति च अचेतनयोरप्यप्तेजसोश्चेतनवदुपचारदर्शनात्। तस्मात् सत्कर्तृकमपीक्षणमौपचारिकमिति गम्यते उपचारप्राये वचनात्-इत्येवं प्राप्ते, इदं सूत्रमारभ्यते—

---

पाधिकं प्रतिपादयितुं शक्यम्। पक्षद्वयेऽपि[1] प्रत्ययेन प्रतिपाद्योऽर्थो ब्रह्मण्यौपाधिक एव प्रतिपादनीयः। एवं सति यथाकथञ्चित् सर्वज्ञादिवचनं साङ्ख्येनापि व्याख्यातुं शक्यते। यो हि कार्यमालोचयति 'मयेदानीमिदं कर्तव्यं' इति सोऽनन्तरमेव तत्कार्यं निर्वर्तयतीति [2]कार्यालोचनकर्तरि प्रत्यासन्नकार्यत्वं गुणोऽस्ति। प्रधानेऽपि प्रत्यासन्नकार्यत्वमस्ति। अतः तं गुणमादाय ऐक्षतेत्यादि[3] प्रधाने योजयितुं शक्यम्। ततश्च ऐक्षतेत्यस्य प्रत्यासन्नकार्यताश्रय इत्यर्थः पर्यवस्यति। ननु तथासति ईक्षतिधातुः प्रत्यासन्नकार्यतायां गौणः स्यादिति चेत्, तवापि प्रत्यय औपचारिकः स्यादिति तुल्यमेव। न च तथासति प्रकृतिप्रत्यययोर्मध्ये किं गौणं स्वीकर्तव्यमित्यत्र विनिगमनाविरहः। 'तत्तेज ऐक्षत' इति उत्तरत्र अचेतने तेजआदौ प्रकृत्यर्थगौणताया उभयसम्प्रतिपन्नत्वेन गौणेक्षतिप्रायपाठानुसारेण सतोऽपि ईक्षणमेव[4] गौणं इति वक्तुं युक्तम्। अतो न ईक्षणानुसारेण

---

1. मु. 'अपि' नास्ति।

2. **कार्यालोचनेति** ऐक्षतेत्यत्र कार्यालोचनात्मकं ज्ञानं ईक्षत्यर्थः, न कार्यानुकूलज्ञानमात्रं इति भावः। भाष्ये **कूलं पिपतिषतीत्यादि** अचेतने सन्नन्तार्थशब्दप्रयोगः 'कूलं पिपतिषति' इत्यादिः गौणो मुख्यो वा इति विचार्य, एवं गौणो भवतीति यत् व्यवस्थापितं महाभाष्ये—'आशङ्कायां अचेतनेषूपसंख्यानम्'; 'न वा तुल्यकारणत्वात् इच्छाया हि प्रवृत्तित उपलब्धिः', 'उपमानाद्वा सिद्धम्', इति, तदत्र अनुसन्धेयम्।

3. **ऐक्षतेत्यादीति** आदिशब्देन 'ईक्षत' 'ईक्षाञ्चक्रे' इति श्रुत्यन्तरपदानां ग्रहणम्।

4. मु. ईक्षणं गौणमेवेति।

## गौणश्चेन्नात्मशब्दात् ॥ ६ ॥

यदुक्तं प्रधानमचेतनं सच्छब्दवाच्यं, तस्मिन्नौपचारिकं ईक्षितृत्वं अप्तेजसोरिवेति, [तन्न] [ तदसत् ]—कस्मात्, आत्मशब्दात् । 'सदेव सोम्येदमग्र आसीत्' इत्युपक्रम्य 'तदैक्षत तत्तेजोऽसृजत' (छा. उ. ६।२।१,३) इति च तेजोऽबन्नानां सृष्टिमुक्त्वा, तदेव प्रकृतं सदीक्षितृ तानि च तेजोऽबन्नानि देवताशब्देन परामृश्याह 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छा. उ. ६।३।२) इति । तत्र यदि प्रधानमचेतनं गुणवृत्त्या ईक्षितृ कल्प्येत, तदेव प्रकृतत्वात् सेयं देवतेति परामृश्येत । न तदा देवता जीवं आत्मशब्देनाभिदध्यात् । जीवो हि नाम चेतनः शरीराध्यक्षः प्राणानां धारयिता, प्रसिद्धेः, निर्वचनाच्च । स कथं अचेतनस्य प्रधानस्य आत्मा भवेत् । आत्मा हि नाम स्वरूपम् । न अचेतनस्य प्रधानस्य चेतनो जीवः स्वरूपं भवितुमर्हति । अथ तु चेतनं ब्रह्म मुख्यमीक्षितृ परिगृह्यते तस्य जीवविषय आत्मशब्दप्रयोग उपपद्यते ।

---

'सच्छब्दार्थः प्रधानं न भवति' इति वक्तुं शक्यते—इतीमां शङ्कां उद्भाव्य निराकर्तुं सूत्रम् ।

तत्र शङ्काभागः[1]अवतारप्रबन्धेन व्याख्यातः । परिहारभागं व्याचष्टे—**तन्नेत्यादिना** । 'अनेन जीवेनात्मनाऽनुप्रविश्य' इत्यनेन देवतापदनिर्दिष्टस्य सतः स्वरूपभूतो जीव इति प्रतीयते । न च अचेतनस्य प्रधानस्य जीवः स्वरूपभूत इति वक्तुं शक्यम् । ततश्च न सच्छब्दार्थः प्रधानम् । किं तु ब्रह्म । अस्मिंश्च पक्षे सूत्रे आत्मशब्दः स्वरूपपरः[2] धर्मपर्यन्तः, सच्छब्दार्थं प्रति जीवस्य स्वरूपत्वप्रतिपादकाच्छब्दादिति तदर्थः । तदिदमाह—**सदेव सोम्येदमग्र आसीदित्युपक्रम्येत्यादिना प्रयोग उपपद्यत इत्यन्तेन । प्रसिद्धेरिति ।**

---

1. आ. अवतारग्रन्थेन ।

2. **स्वरूपपर इति** 'तदर्थ एव दृश्यस्यात्मा' इति पातञ्जलसूत्रे आत्मशब्दस्य स्वरूपार्थकता दृश्यत इति नापूर्वकल्पनेति ध्येयम् ।

**तथा 'स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' (छा. उ. ६।१४।३) इत्यत्र 'स आत्मा' इति प्रकृतं सदणिमानमात्मानं आत्मशब्देनोपदिश्य 'तत्त्वमसि श्वेतकेतो' इति चेतनस्य श्वेतकेतोः आत्मत्वेनोपदिशति ।**

**अप्तेजसोस्तु विषयत्वादचेतनत्वं, नामरूपव्याकरणादौ च प्रयोज्यत्वेनैव निर्देशात्, न च आत्मशब्दवत्किंचिन्मुख्यत्वे कारणमस्ति,**

---

जीवशब्दस्य चेतने प्राणधारके रूढत्वादित्यर्थः । **निर्वचनाच्चेति** । 'जीव प्राण धारणे' इत्यस्माद्धातोः कर्त्रर्थकृत्प्रत्ययेन योगादपि चेतनविशेषे वृत्तिरित्यर्थः ।

अपि च 'स आत्मा' इत्यत्र तच्छब्देन प्रकृतं सत्पदार्थं परामृश्य तस्य आत्मशब्देन चेतनत्वं प्रतिपाद्यत इति न सत्पदार्थस्य प्रधानत्वम् । अस्मिंश्चार्थे आत्मशब्दादिति [1]सौत्रहेतुः स्पष्ट एव - तच्छब्देन प्रकृतं सत् परामृश्य तत्र आत्मशब्दप्रयोगादिति ।

तत्त्वमसीत्यनेन च त्वंशब्दनिर्दिष्टं जीवं प्रति तच्छब्दपरामृष्टस्य सतः स्वरूपत्वप्रतिपादनात् । न ह्यचेतनं जीवस्य स्वरूपं भवति । अस्मिंश्चार्थे 'जीवं प्रति सतः स्वरूपत्वप्रतिपादकशब्दात्' इति सौत्रहेतुयोजना द्रष्टव्या । तदिदमाह- **तथेत्यादिना उपदिशतीत्यन्तेन**। तथा च उक्तगत्या सत्पदार्थस्य चेतनत्व-निर्णयात्, तत्र च मुख्यस्येक्षणस्य सम्भवात्, [2]चरमश्रुतसापेक्षार्थकप्रत्ययानुसारेण प्रथमश्रुतनिरपेक्षार्थक[3]प्रकृतिमुख्यत्वपरित्यागस्यानुचितत्वात्, लोके च 'देवदत्तो जानाति' इत्यादौ औपाधिकाश्रयतामादायैव कर्तृप्रत्ययस्य व्यवस्थितत्वाच्च न प्रत्ययार्थमुख्यत्वाय प्रकृतेर्लक्षणाऽऽश्रयणीयेति परिहाराभिप्रायः ।

तेजआदिशब्दानां [4]केवलजडप्रतिपादकतामाश्रित्य तत्र गौणमीक्षणमित्युक्तम् । इदानीं तु तत्रापि तेजआद्यवच्छिन्नं ब्रह्मैव प्रतिपाद्यमिति तत्रापीक्षणं

---

1. **सौत्रहेतुः स्पष्ट इति** सौत्रं आत्मशब्दादिति हेतुवाक्यं न व्याख्यानसापेक्षं पूर्वोक्तार्थ इव इत्यर्थः ।

2. विवरणाचार्योक्तं ईक्षत्यधिकरणन्यायमाह—**चरमश्रुतेत्यादिना**

3. मु. प्रकृत्यर्थमुख्यत्व°

4. आ. केवलजडांशप्रति°

इति युक्तं कूलवद्गौणत्वमीक्षितृत्वस्य। तयोरपि च सदधिष्ठितत्वापेक्षमेवेक्षितृत्वम्। सतस्तु आत्मशब्दात् न गौणमीक्षितृत्वमित्युक्तम् ॥६॥

अथोच्येत—अचेतनेऽपि प्रधाने भवत्यात्मशब्दः आत्मनः सर्वार्थकारित्वात्, यथा राज्ञः सर्वार्थकारिणि भृत्ये भवत्यात्मशब्दो ममात्मा भद्रसेन इति। प्रधानं हि पुरुषस्यात्मनो भोगापवर्गौ कुर्वदुपकरोति राज्ञ इव भृत्यः सन्धिविग्रहादिषु वर्तमानः। अथवा एक एवात्मशब्दः चेतनाचेतनविषयो भविष्यति, 'भूतात्मा इन्द्रियात्मा' इति च प्रयोगदर्शनात् [वि. पु. ५-१८-५०]। यथा एक एव ज्योतिःशब्दः क्रतुज्वलनविषयः। तत्र कुत एतत् आत्मशब्दादीक्षतेरगौणत्वमिति-अत उत्तरं पठति—

## तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

न प्रधानमचेतनं आत्मशब्दालम्बनं भवितुमर्हति, 'स आत्मा' इति प्रकृतं सत् अणिमानमादाय 'तत्त्वमसि श्वेतकेतो' इति चेतनस्य श्वेतकेतोर्मोक्षयितव्यस्य तन्निष्ठामुपदिश्य 'आचार्यवान्पुरुषो वेद, तस्य

---

मुख्यमेवेत्याह—तयोरपीति ॥ ६ ॥

उत्तरसूत्रमवतारयति—अथोच्येतेति। भवत्यात्मशब्द इति। गौण्या वृत्त्या वर्तितुं योग्यो भवतीत्यर्थः। तत्त्वमसीत्यत्र हि जीवस्यात्मा सच्छब्दार्थ इत्युच्यते। तच्च प्रधानस्य सच्छब्दार्थत्वेऽप्युपपद्यते, जीवोपकारके प्रधाने तदात्मत्वोपचारात्। एवं अनेनजीवेनेत्यत्रापि प्रधानोपकारकत्वाज्जीवस्य प्रधानं प्रत्येव उपचारेणात्मत्वं शक्यं वक्तुम्। [1]अन्धपंगुन्यायेन प्रधानजीवयोः परस्परमुपकार्योपकारकभावावगमात्। सआत्मेत्यत्र तु आत्मशब्दः प्रधाने 'भूतात्मा चेन्द्रियात्मा च' इति न्यायेन स्वभाववचनो भविष्यति - इति शङ्कार्थः। 'वसन्ते वसन्ते ज्योतिषा यजेत' इति क्रतुविषयो ज्योतिश्शब्दो द्रष्टव्यः।

---

1. **अन्धपङ्गुन्यायेनेति** "पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य। पङ्ग्वन्धवत् उभयोरपि संयोगः तत्कृतः सर्गः॥" [सां. का. २१]

तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' (छा. उ. ६।१४।२) इति मोक्षोपदेशात्। यदि हि अचेतनं प्रधानं सच्छब्दवाच्यं तदसीति ग्राहयेत् मुमुक्षुं चेतनं सन्तं अचेतनोऽसीति, तदा विपरीतवादि शास्त्रं पुरुषस्यानर्थायेति अप्रमाणं स्यात्। न तु निर्दोषं शास्त्रं अप्रमाणं कल्पयितुं युक्तम्। यदि च अज्ञस्य सतो मुमुक्षोः अचेतनमनात्मानमात्मेत्युपदिशेत् प्रमाणभूतं शास्त्रं, स श्रद्दधानतया अन्धगोलाङ्गूलन्यायेन तदात्मदृष्टिं न परित्यजेत्, तद्व्यतिरिक्तं चात्मानं न प्रतिपद्येत, तथा सति पुरुषार्थाद्विहन्येत, अनर्थं चर्च्छेत्। तस्मात् यथा स्वर्गाद्यर्थिनोऽग्निहोत्रादिसाधनं यथाभूतमुपदिशति तथा मुमुक्षोरपि 'स आत्मा तत्त्वमसि श्वेतकेतो' इति यथाभूतमेवात्मानमुपदिशतीति युक्तम्। एवञ्च सति तप्तपरशुग्रहणमोक्षदृष्टान्तेन सत्याभिसन्धस्य मोक्षोपदेश उपपद्यते।

---

तत्त्वमसीत्यत्र हि योऽर्थः प्रतिपाद्यते तन्निष्ठस्य मोक्ष उपदिश्यते। [1]तदर्थज्ञानं प्रस्तुत्य 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति वचनात्। यावत् प्रारब्धात् न विमोक्ष्यते तावानेव तन्निष्ठस्य मोक्षे विलम्ब इति हि तदर्थः। यदि च तत्त्वमसीति वाक्यं प्रधानजीवयोः तादात्म्यं प्रतिपादयेत्, तन्निष्ठतैव मोक्षकारणं स्यात्। न चैतदुपपद्यते। परमात्मनिष्ठाया एव श्रुतिषु स्मृतिषु च मोक्षहेतुत्वप्रतिपादनात्। साङ्ख्यैरपि प्रकृतिविविक्तपुरुषज्ञानस्य मोक्षहेतुत्वस्वीकारात्, प्रकृतिपुरुषतादात्म्यज्ञानस्य तदस्वीकाराच्च। अतो न तत्त्वमसीति प्रधानतादात्म्योपदेशः, मुख्यया वृत्त्या तादात्म्योपदेशसम्भवे गौण्या तदसम्भवाच्च-इति परिहारार्थः। **अन्धगोलाङ्गूलन्यायेनेति**। कश्चिद्वञ्चकः कञ्चनान्धं ग्रामप्राप्त्युपायं पृच्छन्तं पथि पतितं उपदिशति 'समीपस्थमनड्वाहं हस्ते गृहीत्वा अस्य पुच्छं गृहीत्वा तिष्ठ, अयं नेष्यति' इति। स तथैवाचरन् अनर्थमेव प्राप्नोति, न तु स्वाभिलषितम्। तथैतत् स्यात्। **अनर्थं चर्च्छेदिति**। ऋच्छेत्-प्राप्नुयादित्यर्थः। **एवं च सति तप्तपरशुग्रहणेति**। चोरत्वसन्देहे निर्णयार्थं तादृशसन्देहविषयं पुरुषमुद्दिश्य परशुमग्नौ प्रक्षिपन्ति। स चेदनृतं वदति 'नाहं चोरः' इति, तादृशपरशुग्रहणे दह्यते। यस्तु सत्यं वदति 'नाहं चोरः' इति, स

---

1. **तदर्थज्ञानमिति** बहुव्रीहिः. तत्त्वमसिवाक्यार्थज्ञानवन्तं इत्यर्थः।

अन्यथा हि अमुख्ये सदात्मत्वोपदेशे 'अहमुक्थमस्मीति विद्यात्' (ऐ० आ. २।१।२।६) इतिवत् संपन्मात्रमिदमनित्यफलं स्यात्। तत्र मोक्षोपदेशो नोपपद्येत। तस्मात् न सदणिमन्यात्मशब्दस्य गौणत्वम्। भृत्ये तु स्वामिभृत्यभेदस्य प्रत्यक्षत्वात् उपपन्नो गौण आत्मशब्दो 'ममात्मा भद्रसेनः' इति। अपि च क्वचिद्गौणः शब्दो दृष्ट इति नैतावता शब्दप्रमाणकेऽर्थे गौणीकल्पना न्याय्या, सर्वत्रानाश्वासप्रसङ्गात्।

यत्तूक्तं-चेतनाचेतनयोः साधारण आत्मशब्दः क्रतुज्वलनयोरिव ज्योतिश्शब्द इति, तन्न-अनेकार्थत्वस्यान्याय्यत्वात्। तस्मात् चेतनविषय एव मुख्य आत्मशब्दः चेतनत्वोपचारात् भूतादिषु प्रयुज्यते 'भूतात्मा, इन्द्रियात्मा' इति च। साधारणत्वेऽप्यात्मशब्दस्य न प्रकरणमुपपदं वा किञ्चिन्निश्चायकमन्तरेण अन्यतरवृत्तिता निर्धारयितुं शक्यते। न चात्र अचेतनस्य निश्चायकं किंचित्कारणमस्ति। प्रकृतं तु सदीक्षितृ, सन्निहितश्च चेतनः श्वेतकेतुः, न हि चेतनस्य श्वेतकेतोः अचेतनः आत्मा संभवति इत्यवोचाम। तस्मात् चेतनविषय इहात्मशब्द इति निश्चीयते।

---

तादृशपरशुग्रहणेऽपि न दह्यते। तत्र दाहाभावप्रयोजको नाहंचोरइतिवाक्यस्यविषयो यथा सत्यः, तादृशमेतदिति[1] 'पुरुषं सोम्योत हस्तगृहीतमानयन्त्यपहार्षीत् स्तेयमकार्षीत् परशुमस्मै तपतेति, स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते, सोऽनृताभिसन्धोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यते अथ हन्यते। अथ यदि तस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते, स सत्याभिसन्धः सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यते अथ मुच्यते। स यथा तत्र नादाह्येत। ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति वचनेन सदृष्टान्तं प्रतिपाद्यते। तथा च नायं गौण उपदेशः। **अहमुक्थमस्मीति।** उक्थं-शस्त्रविशेषः। तत्र स्वाभेददृष्टेः अनित्यं फलं यथा भवति, तथा प्रधानात्माभेदध्यानमपि क्रियात्वादनित्यफलमेव स्यादिति।

---

1. **तादृशमेतदितीति** 'प्रतिपाद्यते' इत्युत्तरेण सम्बन्धः।

**ज्योतिश्शब्दोऽपि लौकिकेन प्रयोगेण ज्वलन एव रूढः, अर्थवादकल्पितेन तु ज्वलनसादृश्येन क्रतौ प्रवृत्त इत्यदृष्टान्तः ।**

**अथवा पूर्वसूत्र एव आत्मशब्दं निरस्तसमस्तगौणत्वसाधारणत्वशङ्कतया व्याख्याय, ततः स्वतन्त्र एव प्रधानकारणनिराकरणहेतुर्व्याख्येयः 'तन्निष्ठस्य मोक्षोपदेशात्' इति । तस्मात् न अचेतनं प्रधानं सच्छब्दवाच्यम् ॥ ७ ॥**

---

**अर्थवादकल्पितेनेति ।** 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति वाक्ये ज्योतिष्टोमशब्दः क्रतुनाम । तत्र अर्थवादेन ज्योतिष्टोमपदस्य क्रतौ प्रवृत्तिनिमित्तं दर्शितम् - एतानि वाव तानि ज्योतींषि य एतस्य स्तोमाः ' इति । अनेन हि स्तोत्रसाधनीभूतऋक्सङ्ख्याविषयाणां त्रिवृदादीनां ' यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयति ' इति वाक्यसिद्धं प्रकृतावनुष्ठानेन स्वभ्यस्ता विकृतौ प्राप्ताः तां विकृतिं [1]सम्यक्प्रकाशयन्तीति दीपकत्वगुणं आदाय, ज्योतिश्शब्दप्रतिपाद्यास्त्रिवृदाद्याः स्तोमाः स्तोत्रीया ऋक्सङ्ख्याः अस्येति बहुव्रीहिणा ज्योतिष्टोमशब्दो व्युत्पादितः । तदेकदेशो 'वसन्ते वसन्ते ज्योतिषा यजेत' इति वाक्ये क्रतौ प्रयुक्तः ।

'गौणश्चेन्नात्मशब्दात्' इति सूत्रं ईक्षतेर्गौणत्वाशङ्कानिराकरणपरमिति व्याख्यातम् । आत्मशब्दस्य गौणत्वाशङ्कानिराकरणपरतया ' तन्निष्ठस्य मोक्षोपदेशात् ' इति सूत्रं व्याख्यातम् । इदानीं तु, प्रधानसाध्य एव 'स्वतन्त्रं प्रधानं न जगत्कारणं' इत्यत्र हेतूभवनक्षमो मोक्षोपदेश इत्यभिप्रेत्य, तथैव तन्निष्ठस्येति सूत्रं व्याचष्टे—**अथ वेति** ॥ ७ ॥

ननु 'यदि सच्छब्देन प्रधानं प्रतिपाद्येत तदा तत्त्वमसीत्यत्रापि तच्छब्देन तस्यैव परामर्शः स्यात्, तथा च मुमुक्षोः प्रधाननिष्ठैवोक्ता स्यात् ' इति दोषो न प्राप्नोति । यद्यप्यात्मनिष्ठैव साक्षात् मोक्षसाधनं न प्रधाननिष्ठा, तथापि स्थूलारुन्धतीन्यायेन आत्मनिष्ठाद्वारा प्रधाननिष्ठाऽपि मोक्षोपयोगिनीति तदुपदेशे न कोऽपि दोषः–इति शङ्का । तन्निवृत्त्यर्थं सूत्रं 'हेयत्वावचनाच्च' इति ।

---

1. सम्यक्प्रकाशयन्तीत्यर्थक 'यो वा ' इत्यादिवाक्यसिद्धं इति सम्बन्धः ।

कुतश्च न प्रधानं सच्छब्दवाच्यम्?

## हेयत्वावचनाच्च ॥ ८ ॥

यद्यनात्मैव प्रधानं सच्छब्दवाच्यं 'स आत्मा तत्त्वमसि' इतीहोपदिष्टं स्यात्, स तदुपदेशश्रवणात् अनात्मज्ञतया तन्निष्ठो मा भूदिति मुख्यमात्मानमुपदिदिक्षु शास्त्रं तस्य हेयत्वं ब्रूयात्। यथा अरुन्धतीं दिदर्शयिषुः तत्समीपस्थां स्थूलां तारां अमुख्यां प्रथमं अरुन्धतीति ग्राहयित्वा तां प्रत्याख्याय पश्चात् अरुन्धतीमेव ग्राहयति तद्वत् नायमात्मेति ब्रूयात्। नचैवमवोचत्। सन्मात्रात्मावगतिनिष्ठैव हि षष्ठप्रपाठकपरिसमाप्तिर्दृश्यते। चशब्दः प्रतिज्ञाविरोधाभ्युच्चय-प्रदर्शनार्थः। सत्यपि हेयत्ववचने प्रतिज्ञाविरोधः प्रसज्येत। 'कारण-विज्ञानाद्धि सर्वं विज्ञातं' इति प्रतिज्ञातं, 'उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति कथं नु भगवः स आदेशो भवतीति यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' .... 'एवं सोम्य स आदेशो भवति' (छा. उ. ६।१।१,३) इति वाक्योपक्रमे श्रवणात्। नच सच्छब्दवाच्ये प्रधाने भोग्यवर्गकारणे हेयत्वेनाहेयत्वेन वा विज्ञाते भोक्तृवर्गो विज्ञातो भवति, अप्रधानविकारत्वाद्भोक्तृवर्गस्य। तस्मात् न प्रधानं सच्छब्दवाच्यम् ॥ ८ ॥

कुतश्च न प्रधानं सच्छब्दवाच्यम्?

---

तदवतारयति - **कुतश्च न प्रधानमिति**। **सत्यपिहेयत्ववचने इति**। अपिशब्दो-ऽभ्युपगमवादद्योतनार्थः। वस्तुतो नास्त्येव हेयत्ववचनमिति भावः। **अप्रधान-विकारत्वाद्भोक्तृवर्गस्येति**। यद्यपि सिद्धान्तेऽपि न सच्छब्दवाच्यब्रह्मविकारो भोक्तृवर्गः, तथापि स्वरूपाभेदाभ्युपगमात् ब्रह्मणि विदिते विदित एव भवति भोक्तृवर्गः। परमते न विकारो भोक्तृवर्गः प्रधानस्य नापि स्वरूपमिति तज्ज्ञानेन भोक्तृवर्गज्ञानं दुर्घटमेव ॥ ८ ॥

## स्वाप्ययात् ॥ ९ ॥

तदेव सच्छब्दवाच्यं कारणं प्रकृत्य श्रूयते 'यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति' (छा. उ. ६।८।१) इति। एषा

---

यत्रैतदिति। यस्यां दशायां [1]पुरुषस्य स्वपितीत्येतन्नाम भवति, तदा सता सम्पन्नो भवति। स्वस्मिन् लीनः स्वमपीतः। अत्र स्वपितिपदं स्वशब्दापिशब्देतिशब्दघटिततया श्रुतौ व्याख्यातम्। स्वपितीत्यत्र च यद्यपि न व्याकरणानुसारेण तावन्तोऽवयवा विद्यन्ते, [2]तथाप्यक्षरसादृश्यमादाय निर्वचनं द्रष्टव्यम्। अमुमर्थं हृदयादिशब्दनिर्वचनदृष्टान्तेन उत्तरत्र स्फुटीकरिष्यति।

ननु-एतन्नामनिर्वचनानुसारेण जीवस्य स्वस्मिन् लयः सुषुप्तौ प्रतीयते, तावता सच्छब्दं प्रधानं न भवतीति कथं वक्तुं शक्यते—

उच्यते - एतन्नामनिर्वचनोपक्रमोपसंहारमध्ये 'सता सोम्य तदा सम्पन्नो भवति' इतिवाक्यमाम्नायते। तेन च स्वशब्दार्थसच्छब्दार्थयोरैक्यं लभ्यते। न च नामनिर्वचनोपक्रमोपसंहारमध्यगतत्वमात्रेण स्वशब्दसच्छब्दयोः सामानाधिकरण्याभावे कथमेकार्थताऽवगन्तुं शक्यत इति वाच्यम्। 'सता सोम्य तदा सम्पन्नो भवति' इति हि वाक्यं नामनिर्वचनमध्ये किमर्थमाम्नातमिति प्रयोजनगवेषणायां, सद्विद्यायां स्वपितिनामनिर्वचनस्य का प्रसक्तिः इतिशङ्कानिवृत्तिरेव प्रयोजनम्। तत्प्रयोजनं च 'सत्सम्पत्तिरेव स्वाप्ययः' इति प्रतिपादने लभ्यते। सत्प्रकरणे स्वपितिनामनिर्वचनस्य ह्येतत् प्रयोजनं-यल्लोकप्रसिद्धं सुषुप्तौ जीवस्य स्वपितीति नाम तन्निरुक्तिपर्यालोचनया जीवस्य सुषुप्तौ सदर्थ आधारः, ततश्च यथा तेजआदिकार्यपर्यालोचनया सत्पदार्थसिद्धिः तथा स्वपितिनामपर्यालोचनयाऽपि-इति। एतत्प्रयोजनसिद्ध्यर्थं सतासम्पन्नोभवतीत्यनेन यत् प्रतिपाद्यते तदेव स्वमपीतोभवतीत्यनेन प्रतिपाद्यत इति उभयोरपि वाक्ययोः ऐकार्थ्यद्योतनाय नामनिर्वचनोपक्रमोपसंहारान्तर्गततया सतासोम्येतिवाक्यमाम्नातम्। अतः तत्र [3]स्वशब्दसच्छब्दयोरैकार्थ्यं

---

1. आ. पुरुषः　　2. आ. तथाऽपि किञ्चिदक्षर

3. आ. स्वशब्दसच्छब्दार्थयोरैक्यं

**श्रुतिः स्वपितीत्येतत् पुरुषस्य लोकप्रसिद्धं नाम निर्वक्ति। स्वशब्देनेहात्मोच्यते यः प्रकृतः सच्छब्दवाच्यः, तं अपीतो भवति, अपिगतो भवतीत्यर्थः। अपिपूर्वस्य इतेः लयार्थत्वं प्रसिद्धं, 'प्रभवाप्ययौ' इति उत्पत्तिप्रलययोः प्रयोगदर्शनात्। मनःप्रचारोपाधिविशेषसंबन्धात्**

---

वक्तव्यम्, स्वशब्दस्य च जीवपरत्वात् तदभिन्नस्सच्छब्दार्थो न प्रधानम्-इति लभ्यते। तदिदमाह—**स्वशब्देनेहात्मोच्यते यः प्रकृतः सच्छब्दवाच्य इति।**

ननु—स्वशब्दोऽपि प्रधानपरोऽस्तु। ततश्च [1]स्वशब्दसच्छब्दयोरैकार्थ्येऽपि न दोषः। न च स्वशब्दस्य आत्मवचनस्य कथं प्रधानपरत्वम्। आत्मीयवचनत्वोपपत्तेः। ततश्च 'यत्रैतत् पुरुषः स्वपिति नाम' इतिपूर्ववाक्ये प्रस्तुतस्य पुरुषस्य लोकसिद्धस्वपितिनामकत्वेनानुवादात् तन्नामप्रतिपाद्यत्वस्य च सुषुप्तिदशायां [2]जीवे एव प्रसिद्धेः पुरुषो जीवः सुषुप्तिदशायां आत्मीये सच्छब्दप्रतिपाद्ये प्रधाने लीनो भवतीति पर्यवस्यति। न च नित्यस्य जीवस्य प्रधाने कथं लयः। तव वा कथमस्य ब्रह्मणि लयः। यदि तु जीवोपकरणानां ब्रह्मणि लये तदुपाधिको जीवोऽपि ब्रह्मणि लीनो भवतीत्युच्यते, तन्ममापि तुल्यम्—इत्याशङ्क्याह—**मनःप्रचारोपाधिविशेषसम्बन्धादिति।**

अयमाशयः—लयो हि अभेदाभिव्यक्तिरेव। घटो हि नाम अवस्थाविशेषापन्नं मृद्द्रव्यमेव। तत्र घटावस्थारूपोपाधिविशेषात् कारणस्य मृद्द्रव्यस्य घटद्रव्यात् भेदव्यवहारः यथाकथञ्चित् प्रातिभासिकं भेदमादाय। तदुपाधिनाशे स्वाभाविकोऽभेदः परिशिष्यते। तथा च लयदशायां उपाधिनाशपूर्वकं अवस्थाश्रयस्य द्रव्यस्य अभेद एवाम्नातः पुराणे—

'प्रणष्टे गन्धतन्मात्रे भवत्युर्वी जलात्मिका' [वि. पु. ६. ४. १५]

'ततश्चापो हृ(द्रु)तरसा ज्योतिष्टु प्राप्नुवन्ति हि ॥' [वि. पु. ६.४.१८]

इत्यादिना। सुषुप्तिदशायामपि सतासोम्यतदासम्पन्नोभवतीत्यस्य स्थाने कौषीतकिशाखायां 'अथास्मिन् प्राण एवैकधा भवति' इत्येकीभाव आम्नातः। सुषुप्ति-

---

1. आ. स्वशब्दसच्छब्दार्थयोरैक्येऽपि। 2. मु. जीवे प्रसिद्धेः।

इन्द्रियार्थान् गृह्णन् तद्विशेषापन्नो जीवो जागर्ति। तद्वासनाविशिष्टः स्वप्नान् पश्यन् मनःशब्दवाच्यो भवति। स उपाधिद्वयोपरमे सुषुप्तावस्थायां उपाधिकृतविशेषाभावात् स्वात्मनि प्रलीन इवेति 'स्वं ह्यपीतो भवति' इत्युच्यते। यथा हृदयशब्दनिर्वचनं श्रुत्या दर्शितम् - 'स वा एष आत्मा हृदि, तस्यैतदेव निरुक्तं हृद्ययमिति, तस्माद्धृदयम्' (छा. उ. ८।३।३) इति। यथा वा अशनायोदन्याशब्दप्रवृत्तिमूलं

---

दशायां च जीवस्य स्वाप्नजागरोपाधिलये तत्तदुपाध्यवच्छिन्नस्यांशस्य अधिष्ठानात्मकशुद्धचैतन्येन सह अभेदाभिव्यक्तिः सम्भवत्येव। सुषुप्तिदशानुस्यूततमोरूपोपाधेः[1] विद्यमानतया तावन्मात्रावच्छिन्नस्यांशस्य तस्यां दशायां अभेदाभिव्यक्तिर्नास्तीति मुक्तिदशातो वैलक्षण्यं 'प्राज्ञेनात्मना सम्परिष्वक्तः' 'सति सम्पद्य न विदुः' इति भेदव्यवहारश्च सङ्गच्छते। न च तदवस्थाप्रहाण्या प्रधाने जीवस्वरूपाभेदोऽभिव्यज्यत इति शक्यं वक्तुम्। प्रधानजीवयोः स्वाभाविकाभेदासम्भवात् - इति।

मनःप्रचारोपाधिविशेषसम्बन्धादित्यनेन - इन्द्रियप्रणालिकया मनसो[2] घटादिषु प्रचारो वृत्तिरूपो भवति, तादृशोपाधिविशेषसम्बद्धो जीवो जाग्रदवस्थापन्न इत्युच्यते, तादृशवृत्तिवासनोपाधिको जीवो मनोमात्रप्रधानत्वात् मनश्शब्दोदितः स्वप्नावस्थ इत्युच्यते-इति प्रतिपादितम्। **प्रलीन इवेति।** सुषुप्तौ पूर्वावस्थाद्वयोपाधिविलयेन[3] तत्तदवच्छिन्नस्याभेदाभिव्यक्तौ स्थितायामपि तमोरूपोपाधेर्विद्यमानतया नातीवाभेदाभिव्यक्तिरिति इवशब्देन द्योत्यते। अक्षरसामान्येन स्वपितीतिनामनिर्वचनं [4]व्याकरणमर्यादामुल्लंघ्यापि प्रवृत्तमित्यत्र उदाहरणान्तरमाह–**यथा हृदयशब्दनिर्वचनमिति।** तस्य-हृदयशब्दस्य। **अशनायोदन्याशब्दप्रवृत्तिमूलमिति।** अप्तेजसोरिति शेषः। नयन्ते द्रवतां सम्पाद्य जीर्णताम्। नयते शोषम्। अत्र 'हृदि अयं' इति विग्रहेण

---

1. **तमोरूपोपाधेरिति** तमः-अज्ञानम्।

2. मु. 'मनसो' नास्ति।  3. मु. विलयनेन।

4. मु. व्याकरणमुल्लङ्घ्य।

दर्शयति श्रुतिः-'आप एव तदशितं नयन्ते' 'तेज एव तत्पीतं नयते' (छा. उ. ६।८।३,५) इति च। एवं स्वमात्मानं सच्छब्दवाच्यं अपीतो भवति इतीममर्थं स्वपितिनामनिर्वचनेन दर्शयति। न च चेतन आत्मा अचेतनं प्रधानं स्वरूपत्वेन प्रतिपद्येत। यदि पुनः प्रधानमेव आत्मीयत्वात् स्वशब्देनैवोच्येत, एवमपि चेतनोऽचेतनमप्येतीति विरुद्धमापद्येत। श्रुत्यन्तरं च—'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' (बृ. उ. ४।३।२१) इति सुषुप्तावस्थायां चेतने अप्ययं दर्शयति। अतो यस्मिन्नप्ययः सर्वेषां चेतनानां तच्चेतनं सच्छब्दवाच्यं जगतः कारणं न अचेतनं प्रधानम् ॥ ९ ॥

कुतश्च न प्रधानं जगतः कारणम्?

---

हृदयशब्दः आत्मनि व्युत्पाद्यते। न चायमर्थो लोकप्रसिद्धः। रूढ्या हृदयशब्दस्य शरीरावयवविशेषवाचकत्वात्, 'हृदयस्याग्रेऽवद्यति' इत्यादौ च तथैवार्थवर्णनाच्च। अशं [1]नयन्तीति अशनाया आपः, उदं नयतीति उदन्या तेजः - इति गोनायाश्वनायादिशब्ददृष्टान्तेन व्युत्पादनं क्रियते। न चैतद्व्याकरणानुगुणम्। 'अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु' [पा. सू. ७-४-३४] इति सूत्रेण अर्थान्तर एव निपातनात्, 'योऽशनायापिपासे' इति श्रुतावपि तथैव स्वीकाराच्च; तथापि तत्र यथा शब्दप्रक्रियातदर्थयोर्लौकिकव्याकरणविरोधेऽप्यक्षरसामान्येन निर्वचनम्, एवमत्र लौकिकार्थमपरित्यज्यैव शब्दप्रक्रियामात्रं अवयवार्थविशेषलाभार्थमाश्रितमिति द्रष्टव्यम्।

तथा च पुरुषशब्दोदितस्य जीवस्य प्रधाने लयासम्भवात् स्वशब्देन न आत्मीयं प्रधानमुच्यते, किं तु पुरुषशब्दोदितो जीव एव। एवं च सति 'यत्रैतत् पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति' इति स्वशब्दस्य सर्वनाम्नः पूर्वप्रकृतप्रधानभूतपुरुषपरत्वमबाधितं भवति। अचेतनप्रधानपरत्वे तु तदपि बाधितं स्यात्। स्वशब्दोदितस्य च जीवस्य सत्पदार्थैक्यावश्यंभावे प्रधानपरत्वमपगतमेव भवतीति सिद्धं स्वाप्ययहेतोः प्रधानव्यावर्तकत्वम् ॥ ९ ॥

---

1. मु. नयतीति

## गतिसामान्यात् ॥१०॥

यदि तार्किकसमय इव वेदान्तेष्वपि भिन्ना कारणावगतिरभविष्यत् - क्वचिच्चेतनं ब्रह्म जगतः कारणं क्वचिदचेतनं प्रधानं क्वचिदन्यदेवेति, ततः कदाचित् प्रधानकारणवादानुरोधेनापि ईक्षत्यादिश्रवणमकल्पयिष्यत्। न त्वेतदस्ति। समानैव हि सर्वेषु वेदान्तेषु चेतनकारणावगतिः। 'यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन् एवमेवैतस्मादात्मनः सर्वे प्राणा यथाऽयतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः' (कौ. उ. ३.१३) इति, 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै. उ. २।१) इति, 'आत्मत एवेदं सर्वम्' (छा उ. ७।२६।२) इति, 'आत्मन एष प्राणो जायते' (प्र. उ. ३।३) इति च आत्मनः कारणत्वं दर्शयन्ति सर्वे वेदान्ताः। आत्मशब्दश्च चेतनवचन इत्यवोचाम। महच्च प्रामाण्यकारणमेतत् यद्वेदान्तवाक्यानां चेतनकारणत्वे समानगतित्वं, चक्षुरादीनामिव रूपादिषु। अतो गतिसामान्यात् सर्वज्ञं ब्रह्म जगतः कारणम् ॥ १० ॥

कुतश्च सर्वज्ञं ब्रह्म जगतः कारणम्?

## श्रुतत्वाच्च ॥११॥

---

**समानैव हि सर्वेषु वेदान्तेषु चेतनकारणावगतिरिति।** यथा चैतत् तथा आनन्दमयाधिकरणमारभ्य स्पष्टं भविष्यति। विशिष्य च 'कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः' [ब्र. सू. १. ४. १४] इति सूत्रेण भिन्नभिन्नकारणावगतिः[1] आशङ्क्य निराकरिष्यते। **सर्वे प्राणा इति।** सर्वाणीन्द्रियाणि यथाऽयतनं - यथागोलकं - सुप्तौ यस्माद्यस्माद्गोलकात् यद्यदिन्द्रियं हृदयस्थे आत्मनि लीनं तत्तदिन्द्रियं जाग्रदारम्भे तस्मिंस्तस्मिन् गोलके आत्मनस्सकाशात् अभिव्यक्तिं प्राप्नोति। प्राणेभ्योऽनन्तरं देवाः तत्रोपकर्तुमभिव्यक्ता भवन्ति। लोकाः - विषयाः देवेषूपकुर्वत्सु अभिव्यक्ता भवन्ति ॥ १० ॥

---

1. मु. कारणावगतिं

**स्वशब्देनैव च सर्वज्ञ ईश्वरो जगतः कारणमिति श्रूयते-श्वेताश्वतराणां मन्त्रोपनिषदि सर्वज्ञमीश्वरं प्रकृत्य 'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' (श्वे. उ. ६।९) इति। तस्मात् सर्वज्ञं ब्रह्म जगतः कारणं, न अचेतनं प्रधानं अन्यद्वा इति सिद्धम् ॥ ११ ॥**

---

पूर्वसूत्रेषु आत्मादिशब्दैश्चेतनस्य कारणत्वमवगम्यत इत्युक्तम्। [1]इह तु साक्षादीश्वरवाचकैरेव शब्दैः चेतनमीश्वरं प्रस्तुत्य जगत्कारणत्वं निरूप्यते, न तु चेतनसामान्यप्रतिपादकात्मादिशब्दैरेव - इत्याह—**स्वशब्देनैवेति**। 'तमीशानं वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति' इति [श्वे. उ. ४-११] परमात्मनि योगरूढेन ईशानशब्देन परमात्मा प्रस्तुतः, 'ज्ञः कालकालो गुणी सर्वविद् यः' [श्वे. उ. ६-२] इति सर्वज्ञश्च प्रस्तुतः। ततश्च 'स कारणं' इति मन्त्रगतेन स इति सर्वनाम्ना ईशानादिशब्दोदितः परामृश्यत इति स्वशब्देनैव सर्वज्ञेश्वरस्य जगत्कारणत्वं सिध्यति। ईशानशब्दश्च यथा परमेश्वरं समुदायशक्त्या प्रतिपादयति तथा 'शब्दादेव प्रमितः' [ब्र. सू. १-३-२४] इत्यत्र स्फुटं भविष्यति ॥ ११ ॥

**इति ईक्षत्यधिकरणम्** ॥ ५ ॥

ननु - उत्तरसूत्रारम्भः किं वेदान्तानां ब्रह्मणि प्रामाण्यप्रतिष्ठापनार्थः, उत प्रमाणान्तराणां ब्रह्मविषयाणां निरूपणाय, उत ब्रह्मणि प्रमाणान्तरविरोधपरिहाराय? नाद्यः। जन्मादिसूत्रमारभ्य श्रुतत्वाच्चेत्येवमन्तैः सिद्धत्वात्। न द्वितीयः। औपनिषदस्य ब्रह्मणः प्रमाणान्तरायोग्यत्वात्। न तृतीयः। न ह्येतादृशं किञ्चित् प्रमाणं यद्वेदान्तवेद्यं ब्रह्म नास्तीति विषयीकरोति। वेदान्तव्यतिरिक्तप्रमाणस्य ब्रह्मण्ययोग्यतया तदभावनिर्धारणसामर्थ्याभावात्। योग्यानुपलब्ध्या ह्यभावनिर्धारणं

---

1. **इह तु साक्षादिति** एतेन—'सर्ववेदान्तानामैककण्ठ्यं दर्शयता गतिसामान्यसूत्रेणैव श्वेताश्वतरवाक्यस्यापि क्रोडीकृतत्वात् श्वेताश्वतरवाक्यस्य श्रुतत्वाच्चेतिसूत्रविषयत्वाश्रयणमयुक्तम्' इति श्रुतप्रकाशिकोक्तं दूषणं परास्तम्। परैरपि श्रुतत्वाच्चेति सूत्रं छान्दोग्यवाक्यविषयं गतिसामान्यसूत्रं इतरोपनिषद्वाक्यविषयमिति विभिन्नवाक्यविषयत्वेनैव सूत्रद्वयसार्थक्यवर्णनाच्च।

## ६ आनन्दमयाधिकरणम्

**'जन्माद्यस्य यतः' इत्यारभ्य 'श्रुतत्वाच्च' इत्येतदन्तैः सूत्रैः यान्युदाहृतानि वेदान्तवाक्यानि तेषां 'सर्वज्ञः सर्वशक्तिरीश्वरो जगतो जन्मस्थितिलयकारणं' इत्येतस्यार्थस्य प्रतिपादकत्वं न्यायपूर्वकं प्रतिपादितम्। गतिसामान्योपन्यासेन च 'सर्वे वेदान्ताः चेतनकारणवादिनः' इति व्याख्यातम्। अतः परस्य ग्रन्थस्य किमुत्थानमिति?**

**उच्यते—द्विरूपं हि ब्रह्मावगम्यते - नामरूपविकारभेदोपाधिविशिष्टं, तद्विपरीतं च सर्वोपाधिविवर्जितम्। 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्' (बृ. उ. ४।५।१५), 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा, अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं, यो वै भूमा तदमृतं अथ यदल्पं तन्मर्त्यम्' (छा.उ. ७।२४।१), 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते' (तै. आ. ३।१२।७), 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्। अमृतस्य परं सेतुं दग्धेन्धनमिवानलम्' (श्वे. उ. ६।१९), 'नेति नेति' (बृ. उ. २।३।६), 'अस्थूलमनणु' (बृ. उ ३।८।८) इति,**

---

भवेत्। न च प्रमाणान्तरायोग्ये योग्यानुपलब्धिरवतरति। [1]सत्यपि [ब्रह्मणि] प्रमाणान्तरेण तदयोग्यतया अनुपलब्ध्युपपत्तेः। न हि चक्षुषा शब्दाभावो निर्धार्यते। अतः [2]किमुत्थानमुत्तरग्रन्थस्येति - वृत्तानुवादपूर्वकमाक्षिपति— **जन्माद्यस्य यत इति।** सविशेषवाक्यानां निर्विशेषवाक्यानां च विरोधे प्रसक्ते तत्परिहारार्थं 'आविद्यकरूपप्रतिपादकानि सविशेषवाक्यानि परमार्थरूपप्रतिपादकानि निर्विशेषवाक्यानि' इति प्रतिपादनाय नस्थानतोऽपीत्यधिकरणमारम्भणीयमित्याह—**द्विरूपं हीत्यादिना** द्विरूपतां [3]**दर्शयन्ति वेदान्तवाक्यानी-**

---

1. मु. सत्यपि प्रमाणान्तरे
2. **किमुत्थानमिति** किं आक्षेपे। उत्थानं नास्ति इत्यर्थः।
3. मु. प्रतिपादयन्ति

'न्यूनमन्यत्स्थानं संपूर्णमन्यत्' इति च । एवं सहस्रशो विद्याविद्याविषयभेदेन ब्रह्मणो द्विरूपतां दर्शयन्ति वेदान्तवाक्यानि ।

तत्र अविद्यावस्थायां ब्रह्मण उपास्योपासकादिलक्षणः सर्वो व्यवहारः । तत्र कानिचित् ब्रह्मण उपासनानि अभ्युदयार्थानि, कानिचित् कर्मसमृद्ध्यर्थानि, कानिचित् क्रममुक्त्यर्थानि । तेषां गुणविशेषोपा-

---

त्यन्तेन । विचित्य - कृत्वा । यत् - यः । अमृतस्य - मोक्षस्य । [परं सेतुं.] प्रापकेषु मध्ये परं - उत्कृष्टं प्रापकम् । दग्धेन्धनं अनलं - अङ्गारावशेषं इव । निरञ्जनं - अविद्यात्मककमलरहितम्[1] । न्यूनमन्यत् - सविशेषम् । सम्पूर्णमन्यत् - निर्विशेषम् । यद्यपि वेदान्तवेद्ये परब्रह्मणि मानान्तरस्याप्रवेशात् तद्विरोधपरिहारार्थं विचारो नापेक्षितः, तथापि तत्त्वंपदार्थशोधकवाक्यैः प्रपञ्चस्यानृततप्रतिपादनपूर्वकं पदार्थः शोध्यते । तत्र च प्रपञ्चसत्यताप्रतिपादकसाङ्ख्यादिस्मृतिविरोधः प्रत्यक्षादिप्रमाणविरोधश्च । ततश्च अविरोधसमर्थनार्थं द्वितीयोऽध्याय आरम्भणीयः । तत्र च साङ्ख्यादिस्मृतीनामनपेक्षत्वमेव[2] व्यवस्थापयिष्यते । प्रत्यक्षादिव्यवहारस्तु आविद्यकत्वेऽपि व्यावहारिकत्वमादाय भविष्यतीति च[3] । तदाह—**तत्राविद्यावस्थायामिति** । तृतीयचतुर्थाध्यायाभ्यां च ससाधनं फलं निरूपयिष्यते इत्याह— **तत्रेति** । **अभ्युदयार्थानि**-मनोब्रह्मेत्येवमादीनि प्रतीकोपासनानि विद्युल्लोकपर्यन्ततत्तल्लोकप्राप्त्यर्थानि । न तु विद्युल्लोकादुपरिभूमिकासु प्रापकाणि । तत्तल्लोके अनुभूयमानं सुखं अभ्युदयः । एतच्च 'अप्रतीकालम्बनान्नयति' [ब्र. सू. ४-३-१५] इत्यत्र स्फुटं भविष्यति । [4]**कर्मसमृद्ध्यर्थानि** 'स एष परोवरीयानुद्गीथः' [छा.उ.१-९-२] इत्यादिना कर्माङ्गेषु उद्गीथादिषु ब्रह्मदृष्टिरूपाणि यान्युपासनानि विहितानि, तेषां अप्रतिबन्धेन कर्मफलोपयोगित्वं 'तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलं' [ब्र.सू.३-३-४२] इत्यधिकरणे व्यवस्थापयिष्यते । दहरादिविद्यानां स्वतन्त्राणां अहङ्ग्रहरूपाणां क्रममुक्तिफलकत्वं 'कार्यात्यये तदध्यक्षेण सहातःपरमभिधानात्' [ब्र. सू. ४-३-१०] इत्यत्र व्यवस्थापयिष्यते । तदाह—**कानिचित्क्रम-**

---

1. आ. कालिमरहितं
2. **अनपेक्षत्वं**—अप्रामाण्यम्
3. व्यवस्थापयिष्यते इत्यनुषङ्गार्थं चकारः
4. मु. कर्मफलस°

धिभेदेन भेदः। एक एव तु [परमा] [पर आ] त्मा ईश्वरः तैस्तैर्गुणविशेषैर्विशिष्ट उपास्यो यद्यपि भवति, तथापि यथागुणोपासनमेव फलानि भिद्यन्ते। 'तं यथा यथोपासते [तदेव] [तथैव] भवति' (मुद्ग. उ. ३-३) इति श्रुतेः, 'यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति' (छा. उ. ३।२४।१) इति च। स्मृतेश्च—

'यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम्।
तं तमेवैति कौन्तेय सदा तद्भावभावितः॥' (भ.गी. ८।६) इति।

---

मुक्त्यर्थानीति। ननु सर्वास्वप्युपासनासु परब्रह्मण उपास्यस्य एकत्वात् उपास्याभेदे उपासनभेदानुपपत्तेः कथं फलभेद इत्याशङ्क्य, परमात्मन एकत्वेऽपि परमात्मगुणानां व्यवस्थिततया तासु तासु उपासनासु उपास्यकोटौ निवेशात् तत्तद्गुणोपाधिना परमात्मन औपाधिकभेदभिन्नस्यैव तासु तासु उपासनासु व्यवस्थितत्वात् उपासनभेदो 'नानाशब्दादिभेदात्' [ब्र. सू. ३-३-५८] इत्यत्र व्यवस्थापयिष्यते, ततो व्यवस्थितफलोपपत्तिः-इत्याह—**तेषां गुणविशेषोपाधिभेदेन भेद इति।**

सङ्ग्रहवाक्यं विवृणोति—**एक एव त्विति।** गुणानुसारेण फलव्यवस्थायां प्रमाणमाह—**तं यथेति।** तं यथा यथेति वाक्येन एवकारार्थप्रधानेन उपास्यकोटावनिविष्टस्य फलता नास्तीति प्रतिपाद्यते। न च—तत्प्रतिपादनं व्यर्थम्, अनुपास्यस्य फलत्वाप्रसक्तेः, यथाक्रतुन्यायेन उपास्यस्य गुणस्य फलत्वं इत्येतावन्मात्रस्यैव प्राप्तेरिति - वाच्यम्। यस्मिन् वाक्ये फलकोटावेव निविष्टाः केचन गुणा आम्नायन्ते तेषामप्येतद्वाक्यपर्यालोचनया उपासनकोटौ निवेशः सिध्यतीति। **यथाक्रतुरिति।** न च—इदमपि न सङ्गतम्, जगत्कारणत्वादीनां उपास्यकोटौ निविष्टानां उपासकप्राप्यत्वाभावात्। तथा च वक्ष्यति 'जगद्व्यापारवर्जं प्रकरणात्' [ब्र.सू.४-४-१७] इति। अन्यथा 'एको बहूनां यो विदधाति कामान्' [श्वे.उ.६-१३] इत्येकत्वावधारणं विरुध्येतेति - वाच्यम्। उत्सर्गस्य तत्क्रतुन्यायस्य सति बाधके सङ्कोचोपपत्तेः।

यद्यप्येक आत्मा सर्वभूतेषु स्थावरजङ्गमेषु गूढः, तथापि चित्तोपाधिविशेषतारतम्यात् आत्मनः कूटस्थनित्यस्यैकरूपस्यापि उत्तरोत्तरमाविष्कृतस्य तारतम्यं ऐश्वर्यशक्तिविशेषैः श्रूयते 'तस्य य आत्मानमाविस्तरां वेद' (ऐ. आ. (२।३।२।१) इत्यत्र । स्मृतावपि—

'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम् ॥' (भ. गी. १०।४१)

इति यत्र यत्र विभूत्याद्यतिशयः स स ईश्वर इत्युपास्यतया चोद्यते । एवमिहापि आदित्यमण्डले हिरण्मयः पुरुषः सर्वपाप्मोदयलिङ्गात् पर एवेति वक्ष्यति। एवं 'आकाशस्तल्लिङ्गात्' (ब्र. सू. १।१।२२) इत्यादिषु द्रष्टव्यम् ।

एवं सद्योमुक्तिकारणमप्यात्मज्ञानं उपाधिविशेषद्वारेणोपदिश्यमानमपि अविवक्षितोपाधिसंबन्धविशेषं परापरविषयत्वेन सन्दिह्यमानं वाक्यगतिपर्यालोचनया निर्णतव्यं भवति । यथा इहैव तावत् 'आनन्दमयोऽभ्यासात्' इति ।

एवं एकमपि ब्रह्म अपेक्षितोपाधिसंबन्धं निरस्तोपाधिसंबन्धं च उपास्यत्वेन ज्ञेयत्वेन च वेदान्तेषूपदिश्यते - इति प्रदर्शयितुं परो ग्रन्थ

---

एकस्यैव चैतन्यस्य जीवेश्वरात्मत्वात् कथमुपास्योपासकभावः कथं च उत्कर्षापकर्षौ-इति शङ्कायां व्यवस्था वक्तव्या। सा च 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' 'देहयोगाद्वा सोऽपि' [ ब्र.सू. ३.२-५-६ ] इति [1]उत्कृष्टापकृष्टोपाधिवशाद्वक्ष्यते। तदाह शङ्कासमाधानाभ्यां—यद्यपीत्यादिना।

एवं उपनिषत्सु किं वाक्यं आम्नातगुणविवक्षापूर्वकमुपास्यब्रह्मपरं किं वा [2]तदविवक्षया विशुद्धब्रह्मपरमिति व्यवस्था च वक्तव्या । तदर्थमपि[3] उत्तरो ग्रन्थ आरम्भणीय इत्याह—एवं सद्योमुक्तिकारणमपीति ।

ननु—अस्मिञ्छास्त्रे सगुणब्रह्मतदुपासनादिविचारः किमर्थः ? न च वेदान्तविचारात्मकत्वात् अस्य शास्त्रस्य तस्यापि वेदान्तान्तर्गततया विचार्यत्वमिति

---

1. मु. उत्कर्षापकर्षौ 2. मु. तद्विवक्षाया 3. मु. 'अपि' नास्ति

आरभ्यते । यच्च 'गतिसामान्यात्' इति अचेतनकारणनिराकरणमुक्तं तदपि वाक्यान्तराणि ब्रह्मविषयाणि व्याचक्षाणेन ब्रह्मविपरीतकारण-निषेधेन प्रपञ्च्यते—

## आनन्दमयोऽभ्यासात् ॥ १२ ॥

तैत्तिरीयके अन्नमयं प्राणमयं मनोमयं विज्ञानमयं चानुक्रम्य आम्नायते—'तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्मा-नन्दमयः' (तै. उ. २।५) इति । तत्र संशयः—किमिह आनन्दमय-

---

वाच्यम् । न हि वेदान्ता इत्येव अस्मिञ्छास्त्रे विचार्यन्ते, किं तु जिज्ञास्य-निर्विशेषब्रह्मप्रमाणत्वात् । ततश्च निर्विशेषवाक्यविचार एव प्राप्नोति—इति चेत्—

सत्यम्, तथाऽपि सविशेषविचारोऽपि अपवादसङ्गत्या भविष्यति, उपासनानामपि चित्तैकाग्र्यसम्पादनद्वारा निर्विशेषज्ञानोपयोगोऽस्ति, सविशेषवाक्य-मुदाहृत्य प्रतिपादितो न्यायो निर्विशेषवाक्येऽप्युपयुक्तो भवति—इत्यादिभिः सङ्गतिभिः सोऽपि विचारोऽस्मिञ्छास्त्रे युक्तः ।

पूर्वं गौणेक्षणप्रायपाठस्य ईक्षणश्रुतिलक्षकत्वापादकता नास्तीत्युक्तम् । तत्र माभूत् दुर्बलस्य प्रायपाठस्य प्रबलश्रुतिलाक्षणिकतापादकता । [1]अनेकार्थ-सन्देहे प्रायपाठस्य निर्णायकता तु भविष्यति । ततश्च आनन्दमयशब्दस्य, विकारे प्राचुर्ये च मयटः सम्भवात् उभयथा सन्दिह्यमानस्य, प्रायपाठानुसारेण विकारार्थता भविष्यति, अन्नमयादिशब्दानां विकारार्थमयडन्तत्वात्—इति सङ्गतिं मनसि निधाय वृत्तिकारमतेन प्रथममधिकरणमारचयति—**तत्र संशय इति** ।

ननु 'सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् ।' इति मन्त्रे यत् ब्रह्मणः सर्वान्तरत्वं गुहानिहितत्वरूपमुक्तं तस्य 'अन्योऽन्तर आत्माऽऽनन्दमयः' इति वाक्येन आनन्दमय एव पर्यवसानस्य कृतत्वात् सर्वा-न्तरमुपक्रान्तं ब्रह्म आनन्दमय इत्यवगम्यते । न च तस्य अन्नमयादिप्रायपाठेन

---

1. **अनेकार्थसन्देहे**—मुख्यवृत्त्या अनेकार्थत्वप्रयुक्तसंशये

बाधो न्याय्यः । सन्देहे हि प्रायपाठो नियामकः । इह तु, यथा ईक्षणं श्रुत्या मुख्यमेव विवक्षितं सद्विद्यायां न तु तेजआदिगतगौणेक्षणप्रायपाठात् सद्विषयमपीक्षणं गौणं स्वीकृतम्, तथा सर्वान्तरत्वलिङ्गानुसारेण ब्रह्मपरत्वमेवानन्दमयपदस्य स्वीकर्तव्यम्, ततश्च प्राचुर्यार्थ एव मयट् भविष्यति न तु विकारार्थः ।

ननु - सद्विद्यायां श्रुत्यर्थत्यागो माभूदिति प्रायपाठो नादृतः । इह तु न आनन्दमयस्य ब्रह्मत्वश्रुतिरस्ति । अतः कथं प्रायपाठत्यागः । न च—प्रायपाठो नाम आम्नानसादेश्यरूपः स्थानविशेषः, सर्वान्तरत्वं तु लिङ्गम् । लिङ्गेन च स्थानबाधो वेधाद्यधिकरणे स्वीकृतः, 'सर्वं प्रविध्य' इत्यादिमन्त्राणां आभिचारोपयुक्तार्थप्रकाशनसामर्थ्यालिङ्गात् विद्यासन्निधावाम्नातानामपि विद्यासु विनियोगमस्वीकृत्य आभिचारिके कर्मणि विनियोगस्य वक्ष्यमाणत्वात् । तथा च सर्वान्तरत्वेन अन्नमयादिप्रायपाठस्य बाधो भविष्यतीति - वाच्यम् । यत्र हि लिङ्गस्थानयोः, विनियोगे शेषशेषिभावाख्ये विरोधः प्रसक्तो भवति, तत्र लिङ्गेन स्थानस्य बाधोऽस्तु नाम । येनापि वेधादिमन्त्राणां विद्यासु विनियोगः स्थानप्रमाणेनाश्रयणीयः, तेनापि विद्योपयुक्तार्थप्रकाशकतामादायैव तथा वक्तव्यम् । अनुष्ठेयार्थप्रकाशकत्वात् मन्त्राणाम् । न च विद्याप्रकाशकता वेधादिमन्त्राणामस्तीति, लक्षणादिना सा कल्पनीया । तत्र च क्लेशेनैवाभिचारोपयुक्तार्थप्रकाशनेन झटिति तत्र विनियोगावगमात् विलम्बितप्रवृत्तिकं स्थानं बाध्यते । इह तु आनन्दमयशब्दस्य ब्रह्मप्रतिपादकता उत अर्थान्तरप्रतिपादकतेति सन्देहे अर्थविशेषनिर्धारकतायां सर्वान्तरत्वप्रायपाठयोर्विरोधः न तु शेषशेषिभावे । श्रुतिलिङ्गादिसूत्रस्यापि जैमिनीयस्य प्राबल्यदौर्बल्यनिरूपकता विनियोगप्रमाणविषयैव, न त्वर्थसामान्यनिर्धारणोपयुक्तप्रमाणविषया । अत एव विनियोगातिरिक्तविषयं स्थानं वा लिङ्गं वा अन्यार्थदर्शनमित्येव [1]मीमांसकव्यवहारः, न तु श्रुतिलिङ्गान्तर्गतं प्रमाणमिति । ततश्च सर्वान्तरत्वप्रायपाठयोरन्यार्थदर्शनलिङ्गत्वाविशेषात् किमनुसारेण कस्य नयनमिति चेत्—उच्यते-विनियोगप्रमाणानामपि श्रुतिलिङ्गादीनां प्राबल्यदौर्बल्याधीन

---

1. **मीमांसकव्यवहार इति** 'विशये प्रायदर्शनात्' [जै. सू. २-३-१६] इति सूत्रे गोदोहनादीनां वत्सालम्भस्य च अङ्गाङ्गिभावाभावात् तत्रत्यप्रायपाठः सन्निध्याम्नानरूपं स्थानप्रमाणं न भवतीत्यभिप्रेत्य अन्यार्थदर्शनत्वेन व्यवहृतो मीमांसाभाष्यकारैः ।

**शब्देन परमेव ब्रह्मोच्यते यत्प्रकृतम् ' सत्यं ज्ञानमनन्तं ब्रह्म ' (तै. उ. २।१) इति, किं वा अन्नमयादिवत् ब्रह्मणोऽर्थान्तरमिति । किं तावत् प्राप्तम् ? ब्रह्मणोऽर्थान्तरं अमुख्य आत्मा आनन्दमयः स्यात् । कस्मात् । अन्नमयाद्यमुख्यात्मप्रवाहपतितत्वात् ।**

**अथापि स्यात् सर्वान्तरत्वादानन्दमयो मुख्य एवात्मेति । न**

---

एव बाध्यबाधकभावः । प्राबल्यदौर्बल्यनिर्णायकं च शीघ्रविलम्बितप्रवृत्तिकत्वम् । एवं प्रकृतेऽपि यत्र प्राबल्यनिर्णायकं भविष्यति तेन दुर्बलस्य बाधे काऽनुपपत्तिः । भवति च अन्नमयादिप्रायपाठमपेक्ष्य सर्वान्तरत्वं प्रबलम् । उपक्रमे हि सर्वान्तरत्वं ब्रह्मगतमाम्नातम् । तस्य च पर्यवसानं आनन्दमये दृश्यते । तत्र आनन्दमयस्य ब्रह्मत्वाभावे उपक्रान्तं सर्वान्तरत्वं अपर्यवसितं स्यादिति तर्कसचिवं सर्वान्तरत्वम् । नैवं प्रायपाठपरित्यागे किञ्चिद्बाधकमस्ति, प्रत्युत सर्वान्तरवस्तुप्रतिपत्त्युपयोगितयैव अन्नमयादय आम्नाता इति स्वप्रयोजनसिद्ध्यर्थमपि अन्नमयादय आनन्दमयस्य ब्रह्मत्वमुपहरन्ति । ततश्च, उपक्रान्तं ब्रह्मसर्वान्तरत्वं अपर्यवसितं स्यात् अन्नमयाद्यनुक्रमणं च व्यर्थं स्यात्—इति तर्कोपेतं सर्वान्तरत्वं प्रायपाठात् बलवदिति ।

अपि च प्रायपाठस्सजातीयानामेवेति नास्ति नियमः । अपि तु प्रायिकं सहचारमात्रम् । तेन च सति सन्देहे कोट्यन्तरस्य उत्कटतामात्रमापाद्यते । परं तु बाधकाभावानुसन्धाने तत् कोटिनिर्णयसमर्थम्[1] । सर्वान्तरत्वं तु ब्रह्माव्यभिचरितम् । तच्च स्वत एव निर्णयसमर्थम् । ततश्च कोट्यन्तरनिर्णये शीघ्रप्रवृत्तत्वादपि प्रायपाठापेक्षया प्रबलत्वम् । ततश्च उभयोरप्यर्थविशेषनिर्णयोपयुक्तत्वेऽपि प्रायपाठस्य सहचारमात्रयुक्ततया [2]अस्मिञ्छास्त्रे प्रायपाठः स्थानाख्यं प्रमाणमिति व्यवह्रियते । सर्वान्तरत्वादिकं तु तत्तत्कोटिनियतमिति[3] लिङ्गमित्युच्यते । एवं सर्वान्तरत्वस्य प्राबल्यं मनसि निधाय शङ्कते—**अथापि स्यात्**

---

1. सामर्थ्यम् ।

2. **अस्मिन् शास्त्रे इति** श्रुत्यादीनां सिद्धार्थबोधनोपयोगित्वस्यापि स्वीकारात् इति शेषः ।

3. मु. ' इति ' नास्ति

**स्यात्, प्रियाद्यवयवयोगात् शारीरत्वश्रवणाच्च। मुख्यश्चेदात्मा आनन्दमयः स्यात् न प्रियादिसंस्पर्शः स्यात्। इह तु 'तस्य प्रियमेव शिरः' इत्यादि श्रूयते। शारीरत्वं च श्रूयते—'तस्यैष एव शारीर आत्मा। यः पूर्वस्य' इति। तस्य पूर्वस्य विज्ञानमयस्य एष एव शारीर आत्मा य एष आनन्दमयः-इत्यर्थः। न च सशरीरस्य सतः प्रियाप्रियसंस्पर्शो वारयितुं शक्यः।**

---

**सर्वान्तरत्वादिति।**

तर्हि जीवत्वे लिङ्गद्वयमस्तीत्याह— **प्रियाद्यवयवयोगादिति।** सङ्ग्रहवाक्यं विवृणोति—**मुख्यश्चेदिति।** 'इत्यादि श्रूयते' इति आदिशब्देन 'मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा। ब्रह्म पुच्छं प्रतिष्ठा।' इति गृह्यते। इष्टवस्तुदर्शनतत्प्राप्तितदुपभोगजानि सुखानि प्रियमोदप्रमोदशब्दप्रतिपाद्यानि। सुखसामान्यं आनन्दशब्दार्थः। **तस्य पूर्वस्य विज्ञानमयस्येति।** यद्यपि, तस्य-आनन्दमयस्य एष एव शारीर आत्मा यः पूर्वस्य—विज्ञानमयस्य—इति यथाश्रुतयोजनया प्रतीयते, न चास्यां यथाश्रुतयोजनायां आनन्दमयस्य शारीरत्वं सिध्यति। तथाऽपि येन आनन्दमयस्य ब्रह्मत्वमुच्यते तेन यथाश्रुतयोजना वक्तुं न शक्यते। तथा सति आनन्दमयस्यापि अन्य आत्माऽस्तीति प्राप्नोति, [1]ततश्च उपक्रान्तं सर्वान्तरत्वं तत्रैव पर्यवसितं भवेदिति न आनन्दमयो ब्रह्म स्यात्। अतः सिद्धान्तिना वृत्तिकृता तथा क्लिष्टयोजना स्वीकृता।

तथाप्यानन्दमयस्य शारीरत्वं प्राप्नोति। शारीरशब्दश्च शरीरसम्बन्धमादाय प्रवृत्तो भवत्यानन्दमयस्याब्रह्मत्वापादकः। शारीरत्वेन च अप्रियसम्बन्धोऽप्यनुमीयते—इत्याह—**न च सशरीरस्य सत इति।** न च—सशरीरस्य अप्रियसम्बन्धो नियत इति वक्तुं न शक्यते, अन्तस्तद्धर्माधिकरणे ईश्वरस्यापि दिव्यशरीराभ्युपगमात्—इति शङ्क्यम्। निर्णीते हि ईश्वरत्वे अकर्मनिमित्तं दिव्यं शरीरमिति कल्पना प्रसरति। इह तु न अद्यापीश्वरत्वं निर्णीतमिति,

---

1. मु. तस्य

**तस्मात् संसार्येव आनन्दमय आत्मा- इत्येवं प्राप्ते इदमुच्यते— आनन्दमयोऽभ्यासात् । पर एवात्मा आनन्दमयो भवितुमर्हति । कुतः। अभ्यासात्। परस्मिन्नेव ह्यात्मनि आनन्दशब्दो बहुकृत्वोऽभ्यस्यते । आनन्दमयं प्रस्तुत्य 'रसो वै सः' इति तस्यैव रसत्वमुक्त्वा**

---

उत्सर्गतः[1] कर्मनिमित्त एव शरीरसम्बन्धः तत्प्रयुक्तश्च औत्सर्गिकोऽप्रियसम्बन्धः केन वारयितुं शक्यते । ततश्च प्रियाप्रियसम्बन्धसशरीरत्वोपेतः[2] प्रायपाठो भवति आनन्दमयस्याब्रह्मत्वनिर्णायकः । न च उपक्रान्तसर्वान्तरत्वापर्यवसानं दोषः । न ह्युपक्रमे सर्वान्तरत्वं प्रस्तुतम्, अपि तु गुहानिहितत्वम् । तच्च जीवेऽपि सम्भवति । जीवस्यापि विज्ञानमयान्तगुहानिहितत्वोपपत्तेः । पूर्वपक्षमुपसंहरति— **तस्मादिति ।**

**परस्मिन्नेव ह्यात्मनि आनन्दशब्दो बहुकृत्वोऽभ्यस्यत इति ।** नन्वत्र परस्मिन्नित्यनेन ब्रह्म पुच्छं प्रतिष्ठेति वाक्यगतं ब्रह्म विवक्षितम्, उतानन्दमयः । नाद्यः - तथा सति आनन्दमयस्य ब्रह्मत्वासिद्धिः । यदि त्वानन्दमयः, तथापि आनन्दशब्दाभ्यासमात्रेण कथं ब्रह्मत्वसिद्धिः । [3]आनन्दस्वरूपस्य जीवब्रह्मसाधारणत्वात् । न च—आनन्दमात्रस्य साधारणत्वेऽपि 'कोह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् ।' [तै. उ. २-७] इति प्रकृत आनन्दो जगत्प्राणनादिहेतुत्वेन 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति ।' [तै. उ. २. ७] इति मुमुक्षुज्ञेयत्वेन च प्रतिपाद्यते । अतः स ब्रह्मासाधारणो भविष्यति । तथा च आनन्दमयस्य ब्रह्मत्वमिति - वाच्यम् । तावता आनन्दमयस्य कथं ब्रह्मत्वम् । न हि 'जगत्प्राणनादिहेतुत्वेन निरूप्यमाण आनन्द आनन्दमय एव' इति निर्णायकं विना अयं[4] आनन्दमयस्याभ्यास इति वक्तुं शक्यते । न च 'रसो वै सः'

---

1. **उत्सर्गत इति** प्राप्त इति शेषः ।
2. **सशरीरत्वोपेत :**— सशरीरत्वरूपलिङ्गद्वयोपेतः
3. आ. आनन्दरूपत्वस्य
4. म. 'अयं' नास्ति ।

उच्यते 'रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति, 'को ह्येवान्यात् कः

---

इति वाक्ये सशब्देन आनन्दमयस्य परामर्शात् आनन्दाभ्यास आनन्दमयविषय इति शङ्क्यम्। 'सोऽकामयत' इति जगत्कारणवस्तुनिरूपणानन्तरं 'तदप्येष श्लोको भवति' इति प्रक्रम्य प्रवृत्तं 'रसो वै सः' इति वाक्यं तदेकार्थमिति वक्तव्यम्। सोऽकामयतेति च वाक्यं 'तस्यैष एव शारीर आत्मा' इति-वाक्यनिर्दिष्टमात्मानं परामृशति। न च तदपि वाक्यं पूर्वपक्षावसरदर्शित-योजनया आनन्दमयात्मपरमेवेति वाच्यम्। तादृशक्लिष्टयोजनाकल्पने नियामका-भावात्। ततश्च यथाश्रुतयोजनया तस्यैषएवेतिवाक्यं 'तस्य-आनन्दमयस्य एष एव शारीर आत्मा यः पूर्वस्य-विज्ञानमयस्य' इति आनन्दमयादन्यमेव ततोऽभ्यन्तरं आत्मानं दर्शयति। तादृशश्चात्मा, यत्सत्त्वासत्त्वज्ञानात् सत्त्वासत्त्वे जीवस्य भवत इति प्रतिपादितं असन्नेवसभवतीतिमन्त्रेण स एव पर्यवस्यति। ततश्च उत्तरसन्दर्भस्य आनन्दमयभिन्ने सर्वान्तरे ब्रह्मण्येव पर्यवसानात् कथमा-नन्दमयस्य अभ्यासानुसारेण ब्रह्मत्वं—इति चेत्—

उच्यते—तस्यैषएवशारीरआत्मेत्ययं मन्त्रः प्रथमं अन्नमयपर्याये नाम्नातः, प्राणमयपर्यायमारभ्य [1]समाम्नायते। तत्र यः पूर्वस्य-अन्नमयस्य शारीर आत्मा एष एव तस्य-प्राणमयस्य आत्मेति वक्तुं न शक्यते। अन्नमयस्य प्राणमया-दन्यत्वेन आत्मनोऽनाम्नानात्। 'तस्माद्वा एतस्मादन्नरसमयात्। अन्योऽन्तर आत्मा प्राणमयः।' इति प्राणमयस्यैव तं प्रति आत्मत्वेनाम्नानात्। अतस्तत्र 'तस्य-पूर्वस्य अन्नमयस्य एष एव शारीर आत्मा य एष प्राणमयः' इति अर्थो वर्णनीयः। ततश्च तदैकरूप्याय उत्तरेष्वपि पर्यायेषु तथैवार्थः स्वीकर्तव्यः। ततश्च आनन्दमयपर्यायाम्नातः तस्यैषएवेतिमन्त्रः पूर्वपक्षावसरदर्शितयोजनया आनन्दमयपर एवेति सोऽकामयतेतिवाक्यमपि तस्यैव सर्वनामपरामर्शेन जगत् कारणत्वं व्युत्पादयति। ततश्च जगत्कारणत्वादिविशिष्टानन्दत्वेनाभ्यस्यमान आनन्दमयो ब्रह्मैवेति सिध्यति।

एवञ्च[2] यद्यपि 'आनन्दमयस्तल्लिङ्गात्' इत्येव वक्तुमुचितम्। तथाऽपि

---

1. आ. स आम्नायते। 2. मु. 'एवञ्च' नास्ति।

प्राण्यात्। यदेष आकाश आनन्दो न स्यात्। एष ह्येवानन्दयाति' (तै. उ. २।७) 'सैषाऽऽनन्दस्य मीमांसा भवति' [तै. उ. २-८] 'एतमानन्दमयमात्मानमुपसंक्रामति' [तै. उ. २-८] 'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन' (तै. २।९) इति। 'आनन्दो ब्रह्मेति व्यजानात्' (तै. उ. ३।६) इति च। श्रुत्यन्तरे च 'विज्ञानमानन्दं ब्रह्म' (बृ. उ. ३।९।२८) इति ब्रह्मण्येवानन्दशब्दो दृष्टः। एवं आनन्द-शब्दस्य बहुकृत्वो ब्रह्मण्यभ्यासात् आनन्दमय आत्मा ब्रह्मेति गम्यते।

यत्तूक्तं—अन्नमयाद्यमुख्यात्मप्रवाहपतितत्वादानन्दमयस्याप्य-मुख्यत्वमिति, नासौ दोषः—आनन्दमयस्य सर्वान्तरत्वात्। मुख्यमेव

---

उत्तरत्रानन्दपदाभ्यासात् तस्य चानन्दस्य प्रकरणपर्यालोचनया 'आनन्दो ब्रह्मेति व्यजानात्, [तै. उ. ३. ६.] इत्यौपसंहारिकब्रह्मपदसामानाधिकरण्येन श्रुत्य-न्तरगतेन च विज्ञानमानन्दंब्रह्मेति सामानाधिकरण्येन ब्रह्मस्वरूपत्वावगमात् [1]तस्य आनन्दमयविषयत्वे आनन्दमयस्य [2]तेनापि ब्रह्मत्वं सिध्यतीति तावत्पर्यन्तधावनम्।

रसो वै सः, रसनीयः-काम्यमानः, सुखरूप इति यावत्। तादृश-ब्रह्मात्मरससद्भावे प्रमाणमाह—**रसं ह्येवायमिति**। अयं-जीवः। तस्य ह्यानन्दित्वं वृत्त्यभिव्यक्तानन्दस्वरूपमादाय वक्तव्यम्, ततश्च जीवस्य पुण्य-मयवृत्तौ यत् स्वरूपं प्रतिफलति तादृशं बिम्बभूतं आनन्दस्वरूपं किञ्चिदस्तीति[3] स्वीकर्तव्यं इति हिशब्देन द्योत्यते। अन्यात्-चेष्टासामान्यं कुर्यात्। प्राण्यात्-श्वासोच्छ्वासादिव्यापारं कुर्यात्। ततश्च जगच्चेष्टादिहेतुभूतः कश्चिदानन्दोऽस्ति।

**आनन्दमयस्य सर्वान्तरत्वादिति।** ननु - नात्र सर्वान्तरत्वमुक्तम्। पर्यव-सानगत्याऽपि उपक्रान्तं गुहानिहितत्वमेव लभ्यते। तदपि न आनन्दमयस्य ब्रह्म-त्वसाधकम्, जीवस्यापि गुहानिहितत्वसम्भवात् - इति चेत्, उच्यते - उपक्रान्तं

---

1. **तस्य**—आनन्दपदस्य।
2. **तेनापि**—आनन्दपदाभ्यासेनापि।
3. मु. 'स्वीकर्तव्यमिति' नास्ति।

ह्यात्मानं उपदिदिक्षु शास्त्रं लोकबुद्धिमनुसरत्, अन्नमयं शरीरमनात्मानं अत्यन्तमूढानां आत्मत्वेन प्रसिद्धं अनूद्य मूषानिषिक्तद्रुतताम्रादि-प्रतिमावत् ततोऽन्तरं ततोऽन्तरं इत्येवं पूर्वेण पूर्वेण समानमुत्तरमुत्तर-मनात्मानं आत्मेति ग्राहयत्, प्रतिपत्तिसौकर्यापेक्षया सर्वान्तरं मुख्यं आनन्दमयमात्मानं उपदिदेशेति श्लिष्टतरम्। यथा अरुन्धतीनिदर्शने बह्वीष्वपि तारासु अमुख्यास्वरुन्धतीषु दर्शितासु या अन्त्या प्रदर्श्यते सा मुख्यैवारुन्धती भवति, एवमिहाप्यानन्दमयस्य सर्वान्तरत्वात् मुख्यमात्मत्वम्।

यत्तु ब्रूषे — प्रियादीनां शिरस्त्वादिकल्पना अनुपपन्ना मुख्यस्यात्मन इति, अतीतानन्तरोपाधिजनिता सा न स्वाभाविकीत्य-दोषः। शारीरत्वमप्यानन्दमयस्य अन्नमयादिशरीरपरम्परया प्रदर्श्य-

---

गुहानिहितत्वं ब्रह्मण एव। सत्यंज्ञानमनन्तंब्रह्मेतिपूर्वार्धप्रतिपादितस्य ब्रह्मण एव 'यो वेद निहितं गुहायां' इत्यत्र[1] विशेष्यतया अन्वयात्। न च—ब्रह्मण एव जीव-रूपेणापि गुहानिहितत्वमस्ति, 'अनेन जीवेनात्मनानुप्रविश्य' [छा. उ. ६-३] 'स एष इह प्रविष्ट आनखाग्रेभ्यः' 'स प्राणन्नेव प्राणो नाम भवति' [बृ. उ. १-४-६] इत्यादिश्रुतेः-इति वाच्यम्। अन्तर्यामिरूपेणापि तस्यानुप्रवेशोऽस्त्येव। 'यस्सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरः' [बृ. उ. ३-७-१५] इति श्रुतेः। ततश्च प्रकृते जीवरूपेणेति विशिष्य नियामकाभावेन, उत्तरसन्दर्भे आनन्दमयं प्रस्तुत्य ब्रह्मधर्माम्नानेन, अनुप्रविष्टस्य 'सच्च त्यच्चाभवत्' इति सर्वात्मकत्वाम्नानेन च, अन्तर्यामिरूपेणैव गुहानुप्रवेश इति स्वीकर्तव्यम्। ततश्च गुहानिहितत्वरूप-सर्वान्तरत्वस्य परमात्मधर्मत्वेन उपक्रान्तस्य आनन्दमयान्तरत्वेनान्यानाम्ना-नावगतानन्दमयपर्यवसानस्य भवत्येव आनन्दमयब्रह्मत्वसाधकता। अयं मान्त्रवर्णि-कसूत्रार्थ इहैव भाष्ये संगृहीतः।

**अतीतानन्तरोपाधिजनितेति।** विज्ञानमयकोशस्य जीवरूपस्य बुद्धि-रूपस्य वा प्रियादियोगसम्भवात् तदनुप्रवेशोपाधिका प्रियाद्यवयवकल्पना। दृश्यते च

---

1. मु. 'अत्र' नास्ति।

मानत्वात्, न पुनः साक्षादेव शारीरत्वं संसारिवत्। तस्मात् आनन्दमयः पर एवात्मा ॥ १२ ॥

## विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १३ ॥

अत्राह—न आनन्दमयः पर आत्मा भवितुमर्हति। कस्मात्, विकारशब्दात्। प्रकृति (प्रकृत) वचनादयमन्यः शब्दो विकारवचनः

---

अन्यत्रापि परमात्मनो जीवधर्मैरुपासना 'मनोमयः प्राणशरीरः' [छा. उ.३-१३] इत्यादौ। ततश्च अनन्यथासिद्धब्रह्मलिङ्गानुसारेण जीवलिङ्गस्यान्यथानयनं [1]भवतीति भावः ॥ १२ ॥

आनन्दमयशब्दस्य विकारार्थकमयडन्तत्वात् कथं ब्रह्मणि वृत्तिः-इति शङ्कासमाधानार्थमिदं सूत्रम्।

ननु 'तत् प्रकृतवचने मयट्' [पा. सू. ५-४-२१] इति प्रचुरतायां मयट् स्मर्यते, स इह भविष्यति, तत् कथं मयडन्तस्य विकारार्थताभादाय ब्रह्मण्यनुपपत्तिराशङ्क्यते - इति चेत्, न - तत्प्रकृतवचनेमयडिति सूत्रं वैयाकरणैरित्थं व्याख्यातम्—प्रथमासमर्थात् (प्रातिपदिकात्) प्रकृतस्य वचने - प्रतिपादने विवक्षिते मयट् भवति। अत्र प्रकृत इत्येव सिद्धे वचनग्रहणात्, लोके मयडन्तैश्शब्दैः यादृशस्य प्रकृत्यर्थस्य प्रतिपादनं प्रसिद्धं तत्त्वेन प्रकृत्यर्थस्य प्रतिपादने विवक्षिते मयट् भवतीति लभ्यते। लोके च प्राचुर्येण प्रस्तुते प्रकृत्यर्थे विवक्षिते एव मयडन्तप्रयोगदर्शनात् प्राचुर्येण प्रस्तुतत्वं वचनग्रहणाल्लभ्यते। अस्मिन् पक्षे प्राचुर्येण प्रस्तुतत्वं प्रकृत्यर्थः। मयट् स्वार्थिक एव तदर्थद्योतकः। तस्य चोदाहरणं-अपूपमयाः। पर्वणि प्राचुर्येण प्रस्तुता अपूपा इत्यर्थः। अस्तु वा प्राचुर्येण प्रस्तुतत्वं प्रत्ययार्थः। तथापि स विभक्त्यर्थसङ्ख्यावत् प्रकृत्यर्थविशेषणमेव, व्युत्पत्तिवैचित्र्यात्[2]। अपरस्तु अर्थः - प्रथमासमर्थात् प्रस्तुतत्वविशिष्ट-

---

1. आ. भविष्यतीति

2. **व्युत्पत्तिः**—आनुपूर्वीज्ञानशाब्दबोधयोः कार्यकारणभावः, तस्य **वैचित्र्यात्** आनुपूर्वीवैलक्षण्येन विलक्षणत्वात् - अनेकविधत्वात्। अतः तद्धितप्रत्ययार्थत्वेऽपि न प्रकृत्यर्थविशेष्यत्वं इति भावः।

**समधिगतः आनन्दमय इति, मयटो विकारार्थत्वात्। तस्मात् अन्नमयादिशब्दवद्विकारविषय एवायं आनन्दमयशब्द इति चेत्, न—**

---

प्रकृत्यर्थसम्बन्धित्वेन अन्यस्मिन्नर्थे गम्यमाने मयट् भवति इति। अस्मिंश्च पक्षे, उच्यते अस्मिन्निति वचनम् - इत्यधिकरणार्थल्युडन्तं वचनशब्दं स्वीकृत्य अन्यपदार्थलम्भनं द्रष्टव्यम्। अन्नमयो यज्ञः इति तदुदाहरणम्। प्रस्तुतान्नाधिकरणीभूतो यज्ञ इति तदर्थः। [1]अस्मिंश्च पक्षे न प्राचुर्यं प्रत्ययार्थः। अत्र पक्षद्वयेऽपि, प्राचुर्येण प्रस्तुत आनन्दः आनन्दमयः इति, प्रस्तुतोऽस्मिन्नानन्दः आनन्दमयः इति वा प्रस्तुतत्वगर्भमानन्दं स्वीकृत्यैव आनन्दमयपदं व्याख्येयम्। शाब्दे च उत्सर्गतः शाब्दमेव प्रस्तुतत्वं वक्तव्यम्, न चात्र पूर्वस्मिन् ग्रन्थे आनन्दः प्रस्तुत इति कथं 'तत् प्रकृतवचने' इति सूत्रेण मयट् भविष्यति। अतो विकारार्थ एव मयट् - इत्याह - **तस्मादन्नमयादिशब्दवद्विकारविषय एवायमानन्दमयशब्द इति।**

ननु—आनन्दशब्दाद्विकारार्थको मयट् न प्राप्नोति। 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः' (पा. सू. ४-३-१४३) इति सूत्रेण विकारावयवयोरर्थयोः भाषायामेव मयड्विधानात्, 'नित्यं वृद्धशरादिभ्यः' (पा. सू. ४-३-१४४) इति सूत्रेण तदनन्तरपठितेन वृद्धेभ्यः शरादिभ्यश्च शरदर्भमृत्कुटीतृणसोमबल्वजेत्येवंरूपेभ्यः भाषायामेव तयोरर्थयोर्नित्यं विधानात्। ततश्च 'द्व्यचश्छन्दसि' (पा. सू. ४-३-१५०) इति सूत्रेण [2]प्राणमनःशब्दयोरेव विकारार्थे मयट् भविष्यति। न तु अन्नरसविज्ञानानन्दशब्देभ्यः। ततश्च अन्नमयादिशब्दवदित्येतदनुपपन्नमिति चेत्—

उच्यते—'नित्यं वृद्धशरादिभ्यः' इति सूत्रे नित्यग्रहणात् छन्दसि विकारावयवयोरर्थयोर्मयट् भविष्यति। तद्धि न वृद्धेभ्यः शरादिभ्यश्च नित्यत्व-

---

1. **अस्मिंश्च पक्षे इति** पूर्वस्मिन् पक्षे वचनग्रहणं व्यर्थं सत् प्रकृत्यर्थप्राचुर्यं ज्ञापयतीत्युक्तम्। अस्मिंश्च पक्षे न वचनग्रहणं व्यर्थम्, प्रकृत्यर्थाधिकरणबोधनायावश्यकत्वात्। अतोऽस्मिन् पक्षे न प्राचुर्यार्थलाभ इति भावः।

2. **प्राणमनःशब्दयोः**- प्राणमनःशब्दाभ्याम्। 'प्राणमयमनोमयशब्दयोः' इति आन्ध्रपाठे यथाश्रुत एवार्थः।





सिद्ध्यर्थम् । पुनर्विधानबलादेव नित्यत्वसिद्धेः । न च—'नित्यमेकाचः' इति व्याकरणान्तरम्, स्रङ्मयमित्यादि तदुदाहरणम्, [1]योगविभागेन तदर्थसङ्ग्रहार्थमिह नित्यग्रहणमिति - वाच्यम् । तथा सति शरादिगणे मृद्ग्रहणमनर्थकं स्यात् । ततः तदेव[2] व्याकरणान्तरानुसारेण सर्वेषामेकाचां उपलक्षणं सत् शरादित्वादेव एकाज्भ्यो मयटं नित्यं सम्पादयिष्यति । अतोऽतिरिच्यमानं नित्यग्रहणं 'भाषायां नित्यमेव, छन्दसि तु (उदाहरणानुसारेण यथासम्भवम्) विकल्पेन मयट् भवति' इति ज्ञापयति ।

नन्वेवमपि वृद्धेभ्यः शरादिभ्यश्च छन्दसि मयटो ज्ञापकं भविष्यति, ततश्च आनन्दशब्दस्य वृद्धत्वात् ततोऽस्तु नाम, [3]विज्ञानशब्दे तु कथं इति चेत्—

उच्यते—अन्नरसमयशब्दे तावत् विकारार्थ एव मयडवश्यं स्वीकर्तव्यः । 'अन्नात् पुरुषः' इति पूर्ववाक्यनिर्दिष्टान्नप्रभवत्वं रसद्वारकमिति व्युत्पादनार्थं हि 'स वा एष पुरुषोऽन्नरसमयः' इति वाक्यम् । तत्र च नित्यग्रहणबलादेव मयट् सम्पादनीयः । अतः तत् सामान्यापेक्षं ज्ञापकं भविष्यति —छन्दसि वृद्धेभ्यश्च अवृद्धेभ्यश्च [4]व्यवस्थितविकल्पेन मयट् भवतीति[5] । ततश्च विज्ञानमयेऽपि नित्यग्रहणेनैव मयट् भविष्यति ।

अथवा 'तत आगतः' (पा. सू. ४-३-७४) इत्यधिकारे 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः' (पा. सू. ४-३-८१) इति सूत्राद्धेतुग्रहणेऽनुवर्तमाने

---

1. **योगविभागेन तदर्थसङ्ग्रहार्थमिति** योगः—सूत्रम् । नित्यं इति पृथक् सूत्रम् । तत् 'नित्यमेकाचः' इति व्याकरणान्तरसूत्रैकदेशः । तेन सम्पूर्णं सूत्रं स्मार्यते, ततश्च तदर्थबोधः इति भावः ।

2. **तदेव**—मृद्ग्रहणमेव ।

3. **विज्ञानशब्दे**—विज्ञानशब्दात् । 'विज्ञानमयशब्दे' इति आन्ध्रपाठे तु यथाश्रुत एवार्थः ।

4. **व्यवस्थितेति** व्यवस्था तु यथादर्शनम्, उदाहरणानुसारं इति यावत् ।

5. मु, भविष्यतीति ।

'मयट् च' (पा. सू. ४-३-८२) इति सूत्रम्। ततश्चायमर्थः—अपादान-पञ्चम्यन्तात् वस्तुगत्या हेतुप्रतिपादकाच्छब्दात् आगत इत्यर्थे मयट् भवति, ततश्च अन्नरसाद्धेतोरागतः अन्नरसमयः - इति। एवं विज्ञानानन्दशब्दाभ्यामपि मयट् द्रष्टव्यः। न च अन्नरसमय इत्यादौ भृगुवल्ल्युक्तानामाधिदैविकानां कोशानां अन्नप्राणमनोविज्ञानानन्दशब्दैः प्रत्यभिज्ञानात् तद्विकारत्वं स्वीकृत्य [1]अन्नाद्धेतो-रागत इति तद्धितविग्रहे 'जनिकर्तुः प्रकृतिः' [पा. सू. १-४-३०] इति सूत्रेण पञ्चमीं स्वीकृत्य मयडन्तता वक्तव्या। ततश्च, आगत इत्यस्य उत्पन्न इत्यर्थः पर्यवस्यति। न च तदुत्पन्नः तस्मात् मुख्यया वृत्त्या आगत इति वक्तुं शक्यते—इति वाच्यम्। पाणिनिसूत्रे आगतत्वादिकं लोकबुद्ध्यनुसारेण गौणमुख्यसाधारणं विवक्षितम्। अत एव 'ध्रुवमपायेऽपादानं' [पा. सू. १-४-२४] इति सूत्रे[2], प्रागनभिव्यक्तं कार्यं व्यक्तीभवत् कारणाद्विश्लिष्यत इवेति चोरादिभ्यश्चोत्पद्यमानं भयं तेभ्यो विश्लिष्टमिव भवतीति लोकबुद्ध्यनुसारेण ध्रुवमपायेऽपादानमिति सूत्रेणैव तेभ्योऽ-पायं वैवक्षिकमादाय चोरादीनामपादानसंज्ञा भवतीति 'भीत्रार्थानां भयहेतुः' [पा. सू. १-४-२५] [3]इत्यादिसूत्राणि महाभाष्ये प्रत्याख्यातानि। कारणाच्च कार्यस्यागतत्वं लोकप्रसिद्धमेव। श्रुतावपि कुतो जात इत्यर्थे 'कुत एतदागात्' [बृ. उ. २-१-१६] इति प्रश्नो दृश्यते। ततश्च—स्वोपजनभूतात् सुम्नादेरेव यदा मुख्यमागमनं विवक्षितं तदैव 'सुम्नात् स्वोपजनभूतात् आगतः सुम्नमयः' इत्यादावेव 'तत आगतः' इत्यधिकारपठितेन मयट्चेतिसूत्रेण मयट्प्रत्ययः, न तु उपादानभूतादुत्पत्तौ विकारस्य विवक्षितायां मयट्—इति निर्बन्धो निर्मूल एव। अत एव कवयः प्रयुञ्जते—'पित्र्यमंशमुपवीतलक्षणं मातृकं च धनुरूर्जितं दधत्' इति। अत्र हि 'तत आगतः' इत्यधिकारपठितेन 'पितुर्यच्च' [पा. सू. ४-३-७९] इति सूत्रेण पित्र्यमिति। न हि अत्र मुख्यमागमनमु-पवीतस्य विवक्षितम्। असम्भवात्। अपि तु पितृब्राह्मण्यप्रयुक्तत्वमात्रम्। एवं मातृकमित्यत्रापि आगताधिकारीयेण 'ऋतष्ठञ्' [पा. सू. ४-३-७८] इति

---

1. आ. आनन्दात्
2. सूत्रे इति महाभाष्ये प्रत्याख्यातानि इत्यनेन सम्बद्ध्यते।
3. इत्यादीत्यादिपदेन 'जनिकर्तुः प्रकृतिः' इत्यादिसूत्राणां ग्रहणम्।

**प्राचुर्यार्थेऽपि मयटः स्मरणात्। 'तत्प्रकृतवचने मयट्' (पा. सू. ५।४।२१) इति हि प्रचुरतायामपि मयट् स्मर्यते, यथा 'अन्नमयो यज्ञः' इति अन्नप्रचुर उच्यते, एवं आनन्दप्रचुरं ब्रह्म आनन्दमय उच्यते। आनन्दप्रचुरत्वं च ब्रह्मणो मनुष्यत्वादारभ्य उत्तरस्मिन्नुत्तरस्मिन् स्थाने शतगुण आनन्द इत्युक्त्वा ब्रह्मानन्दस्य निरतिशयत्वावधारणात्। तस्मात् प्राचुर्यार्थे मयट्॥ १३॥**

---

सूत्रेण छन्प्रत्ययो द्रष्टव्यः। अयं श्लोको जामदग्न्यविषयः। ततश्च मयट्चेतिसूत्रेणापि अन्नरसमयविज्ञानमयानन्दमयशब्दा विकारार्थपर्यवसिताः। प्राणमयमनोमयशब्दयोस्तु विकारार्थत्वे न काचिदनुपपत्तिः। ततश्च विकारप्रतिपादकस्यानन्दमयशब्दस्य [1]न ब्रह्मप्रतिपादकत्वमिति शङ्कार्थः।

**अन्नमयो यज्ञ इत्यन्नप्रचुर उच्यत इति**। ननु—यस्मिन् पक्षे प्राचुर्येण प्रस्तुतत्वं न तत्र प्रकृत्यर्थभिन्नधर्मिपर्यन्तत्वम्, यस्मिंश्च पक्षे प्रकृत्यर्थभिन्नधर्मिपर्यन्तत्वं न तत्र प्राचुर्यविशिष्टप्रस्तुतत्वम्, तत् कथं अन्नप्रचुरो यज्ञः अन्नमयः - इति चेत् —

न - यथा वचनग्रहणात् प्राचुर्येण प्रस्तुतत्वं लभ्यते, तथा प्राचुर्येण प्रस्तुतमस्मिन्नित्यर्थोऽपि सूत्रस्य[2] वर्णयितुं शक्यते। लोकप्रसिद्ध्यनुसारात्। यद्यपि लोकप्रसिद्ध्यनुसारेणापि वृत्तिकारादिभिः 'तत्प्रकृतवचने' इत्यस्य 'प्राचुर्येण प्रस्तुते प्रकृत्यर्थे विवक्षिते' इत्येवार्थो दर्शितः, न तु [3]तादृशधर्मिपर्यन्तः; तथापि सम्भवदर्थान्तरं उदाहरणानुसारादस्त्वित्यभिप्रायः।

**एवमानन्दप्रचुरं ब्रह्म आनन्दमय उच्यत इति**। न चानन्दस्य प्रस्तुतत्वासम्भवः। 'सोऽश्नुते सर्वान् कामान्' इति ब्रह्मानन्दस्य प्रस्तुतत्वात्। न च—तत्र मुक्तस्य सर्वकामावाप्तिरुच्यते, न तु तत्र ब्रह्मानन्दावाप्तिरुच्यते - इति शङ्क्यम्। मुक्तस्य सर्वकामावाप्तिरपि ब्रह्मानन्दानुभवरूपैव, न त्वन्यादृशी। न हि मुक्तेन तत्तत्पुरुषव्यवस्थिताः सर्वेऽपि असाधारण्येन सुखलवा अनुभूयन्त इति

---

1. मु. एतत्स्थाने 'कथं' इति।    2. मु. 'सूत्रस्य' नास्ति।
3. मु. तादृशप्रकृत्यर्थधर्मि।

## तद्धेतुव्यपदेशाच्च ॥ १४ ॥

इतश्च प्राचुर्यार्थे मयट्, यस्मात् आनन्दहेतुत्वं ब्रह्मणो व्यपदिशति

---

शक्यं वक्तुम्। अपि तु—आनन्दावरणापगमे ब्रह्मानन्दः स्वरूपभूतो मुक्तेनानुभूयते, सर्वे च लौकिकानन्दा वृत्त्यभिव्यक्तितारतम्योपेतब्रह्मानन्दस्वरूपा एव, 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' [बृ. उ. ४-३-३२] इति श्रुतेः, ततश्च, यथा ब्रह्मस्वरूपे अवगते तदात्मना सर्वमवगतमिति एकविज्ञानेन सर्वविज्ञानमुपपाद्यते तथा समस्तलौकिकानन्दानुस्यूते ब्रह्मस्वरूपेऽनुभूयमाने तदात्मना सर्वे आनन्दा अनुभूता एव भवन्ति—इत्येवं सर्वकामावाप्तिर्मुक्तस्य वर्णनीया। ततश्चायमर्थः—ब्रह्मात्मनाऽवस्थितो मुक्तः युगपत् सर्वान् कामान्-काम्यन्त इति कामा आनन्दाः तान् अश्नुते - अनुभवति-इति। [1]अत एव वाक्यशेषे - मानुषानन्दमारभ्य हिरण्यगर्भानन्दान्तस्यानन्दस्य प्रतिपर्यायमाम्नातेन 'श्रोत्रियस्य चाकामहतस्य' इति वाक्येन मुक्तप्राप्यत्वं निरूप्य तत् कथं इत्यपेक्षायां 'स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः।' इति आद्यन्तपर्यायसङ्कलनया सर्वस्यानन्दस्य एकत्वमवधारितम्। एकत्वं च सर्वेषामानन्दानां ब्रह्मात्मना। ततश्च ब्रह्मानन्दमनुभवता मुक्तेन सर्वेऽप्यानन्दाः तदभिन्नतया अनुभूता एव भवन्तीति - उपक्रान्ता सर्वकामावाप्तिः उपपादिता भवति। ततश्च लौकिकसर्वकामानुस्यूततया ब्रह्मानन्दस्य प्रस्तुतत्वात् प्राचुर्येण प्रस्तुतत्वं लभ्यते। प्राचुर्यं व्याप्त्या संश्लेष एव, न तु महत्त्वं उत्कर्षो वा अनेकत्वं वा। 'महान् घटः' 'उत्कृष्टो घटः' इति विवक्षिते 'प्रचुरो घटः' इत्यप्रयोगात्, सङ्ख्यया अनेकत्वाभावेऽपि व्याप्त्यभिप्रायेणैव 'यवागूमयी' 'लवणमयमन्नं' इति प्रयोगाच्च। ततश्च आनन्दमयपदस्य उभयथा सम्भवे प्रायपाठं बाधित्वा उपक्रान्तसर्वान्तरत्वानुसारेण औपसंहारिकाभ्यासानुसारेण च प्राचुर्यार्थतैवाश्रयणीया ॥ १३ ॥

आनन्दमयोऽभ्यासादिति सूत्रात् आनन्दपदमनुवृत्तं पूर्वसूत्रे प्राचुर्यादित्यत्र षष्ठ्यन्ततया विपरिणतं प्राचुर्यसम्बन्धिसमर्पकम्, तदर्थः इह सूत्रे तच्छब्देन परामृश्यते-इत्याह—**आनन्दहेतुत्वमिति**। ननु—जीवं प्रति आनन्दहेतुत्वात्

---

1. **अत एव वाक्यशेषे इति**—उपपादिता भवति इत्युत्तरेण सम्बद्ध्यते।

श्रुतिः 'एष ह्येवानन्दयाति' इति। आनन्दयतीत्यर्थः। यो ह्यन्याना-नन्दयति स प्रचुरानन्द इति प्रसिद्धं भवति। यथा लोके योऽन्येषां धनिकत्वमापादयति स प्रचुरधन इति गम्यते, तद्वत्। तस्मात् प्राचुर्यार्थेऽपि मयटः संभवात् आनन्दमयः पर एवात्मा ॥ १४ ॥

## मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥

इतश्च आनन्दमयः पर एवात्मा। यस्मात् 'ब्रह्मविदाप्नोति परम्' इत्युपक्रम्य 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ. २।१) इत्यस्मिन् मन्त्रे यत् प्रकृतं ब्रह्म सत्यज्ञानानन्तविशेषणैर्निर्धारितं यस्मात् आकाशादि-क्रमेण स्थावरजङ्गमानि भूतान्यजायन्त यच्च भूतानि सृष्ट्वा तान्यनु-प्रविश्य गुहायामवस्थितं सर्वान्तरं यस्य विज्ञानाय 'अन्योऽन्तर

---

प्रचुरानन्दं ब्रह्मेति कथं सिध्यति। यथा हि प्रचुरधनोऽन्यान् धनवतः करोति तथा निर्धनोऽपि तपस्वी अनुग्रहेण अन्यान् धनवतः करोत्येवेति प्रकारद्वये लोक-प्रतिपन्ने, कथं धनिकदृष्टान्तेन आनन्दहेतुत्वात् प्रचुरानन्दं [1]ब्रह्मेत्युच्यते-इत्या-शङ्क्य, आनन्दमयशब्देन प्राचुर्यकोटेरवगमात्, तत्र[2] निर्णयापेक्षायां उत्तरवाक्य-प्रवृत्तेः निर्धनपुरुषानुग्रहलभ्यदृष्टान्तेनानुपस्थितार्थपरत्वकल्पनस्यान्याय्यत्वात्, 'को ह्येवान्यात्कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्' इति व्यापका-नन्दस्यैव पूर्ववाक्ये निर्देशाच्च धनिकदृष्टान्तेनैव आनन्दयातीतिवाक्यार्थो वर्णनीय इत्यभिप्रेत्य, उपसंहरति—**तस्मादिति** ॥ १४ ॥

ननु-सूत्रे सत्यंज्ञानमितिमन्त्रे निर्दिष्टो गुहानिहित एवात्मा आनन्दमय इत्युक्तम्। तद्व्याख्यानावसरे सत्यंज्ञानमितिमन्त्र एवोदाहर्तव्यः। किमर्थं

---

1. मु. ब्रह्मेत्याशङ्क्य

2. विकारप्राचुर्ययोः साधारणे मयटि कथं प्राचुर्यकोटेर्निर्णयः, इत्याशङ्क्याह-**तत्रेति**। तथा च वाक्यशेषे सर्वजीवापेक्षया प्रचुरानन्दशालित्वं आनन्दमयस्य प्रतिपाद्यत इति ततः प्राचुर्यार्थनिर्णयः, ततश्च धनिकदृष्टान्तोपादानस्यैव न्याय्यता इति भावः

आत्मा अन्योन्तर आत्मा' इति प्रक्रान्तं तत् मान्त्रवर्णिकमेव ब्रह्म इह गीयते 'अन्योऽन्तर आत्माऽऽनन्दमयः' (तै. उ. २।५) इति।

---

ब्रह्मविदाप्नोतिपरमिति परमोपक्रमः [1]उदाहृतः। यस्मादाकाशादीतिवाक्येन, मन्त्रानन्तराम्नातं तस्माद्वाएतस्मादिति वा किमर्थं संगृहीतम्। यच्चभूतानिसृष्ट्वेति सोऽकामयतेत्याद्यौपसंहारिकार्थग्रहणं वा किमर्थं कृतम्। किमर्थं च यस्यविज्ञानायान्योऽन्तर आत्मेति कोशवाक्यार्थसङ्ग्रहः?

उच्यते—परमोपक्रमोपन्यासः, तस्यार्थान्तरपरत्वे तदेषाभ्युक्तेति तस्मिन्नर्थे उदाहृतस्य मन्त्रस्यापि अर्थान्तरपरता भवेत्-इतिशङ्कानिवारणार्थः। 'मन्त्राम्नातमेवात्मस्वरूपं आनन्दमयवाक्ये गृह्यत इति कथं, सृष्टिवाक्यैर्भूयोभिर्व्यवधानात्' इति शङ्कायां, असम्बन्धिपदव्यवधानमेव अनुवृत्तिविघातकम्, सृष्टिवाक्यं तु न तथा, मन्त्रगतानन्तपदव्याख्यानार्थत्वात्—आनन्त्यं हि वस्तुपरिच्छेदराहित्येन निर्वहणीयम्, ततश्च 'वियदादेर्वस्तुनो विद्यमानत्वात् तत्परिच्छेदे कथं ब्रह्मण आनन्त्यं' इति शङ्कायां, वियदादेर्ब्रह्मविवर्तत्वात् न परिच्छेदो वस्तुतोऽस्तीति प्रतिपादयितुं वियदादिसृष्टिराम्नातेति न असम्बन्धिपदव्यवधानं इति सृष्टिवाक्योपन्यासेन दर्शितम्। एवं कोशवाक्यमपि उपक्रान्तगुहानिहितत्वव्युत्पादनार्थमिति न तदप्यसम्बन्धिपदमिति न तेन व्यवधानं दोषः। यथा 'प्रागनुपक्रान्तमेव सोऽकामयतेत्यादिना प्रतिपाद्यते तथा आनन्दमयवाक्येनापि कुतो न प्रतिपाद्यते' इति शङ्कायां, तेनापि आनन्त्यनिरूपणार्थं प्राक् सङ्ग्रहेण तस्माद्वाएतस्मादित्यनेन प्रतिपादिता या सृष्टिः सैवेह विस्तरेण प्रतिपाद्यते-इति द्योतनाय सोऽकामयतेत्यादिवाक्यार्थसङ्ग्रहः[2]। तथा च सर्वापीयं वल्ली ब्रह्मविदाप्नोतिपरमितिसङ्ग्रहवाक्यस्य व्याख्यानभूतं सत्यंज्ञानमित्यादिमन्त्रं व्याख्यातुं प्रवृत्ता। सङ्ग्रहे हि ब्रह्मविदाप्नोतिपरमिति वेद्यवेदनफलेषु संगृहीतेषु, सत्यं ज्ञानमित्यनेन वेद्यं तदेव गुहानिहितं यो वेदेति वेदनं सोऽश्नुतेसर्वान्कामानिति च फलं प्रतिपाद्यते मन्त्रेण। तत्र मन्त्राम्नातगुहानिहितत्वस्य च आनन्दमये

---

1. मु. 'उदाहृतः' नास्ति। 2. मु वाक्यसङ्ग्रहः

मन्त्रब्राह्मणयोश्चैकार्थत्वं युक्तं, अविरोधात्। अन्यथा हि प्रकृतहानाप्रकृतप्रक्रिये स्याताम्। न चान्नमयादिभ्य इव आनन्दमयादन्योऽन्तर आत्मा अभिधीयते। एतन्निष्ठैव च भार्गवी वारुणी विद्या [–आनन्दो ब्रह्मेति व्यजानात् इति]। तस्मात् आनन्दमयः पर एवात्मा ॥ १५ ॥

## नेतरोऽनुपपत्तेः ॥ १६ ॥

इतश्च आनन्दमयः पर एवात्मा, नेतरः। इतरः—ईश्वरादन्यः संसारी जीव इत्यर्थः। न जीव आनन्दमयशब्देनाभिधीयते। कस्मात्। अनुपपत्तेः। आनन्दमयं हि प्रकृत्य श्रूयते 'सोऽकामयत। बहु स्यां प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा। इदꣲसर्वमसृजत। यदिदं किंच' (तै. उ. २।६) इति। तत्र प्राक्शरीराद्युत्पत्तेरभिध्यानं,

---

पर्यवसानात् स एव ब्रह्मेति पर्यवस्यति। ततश्च आनन्दमयस्य ब्रह्मत्वाभावे कोशवाक्यमनर्थकमेव स्यात्। तदाह—**अन्यथेति**। मान्त्रवर्णिकमेवचेत्यत्र चशब्दार्थमाह—**एतन्निष्ठैव चेति**। तत्र च उपक्रान्तस्य अधीहिभगवोब्रह्मेत्यस्य आनन्दो ब्रह्मेति व्यजानादिति पञ्चमे पर्याये पर्यवसानस्य दर्शितत्वात् इहापि पञ्चमपर्यायाम्नात आनन्दमयः ब्रह्मेति सिध्यतीतिभावः ॥ १५ ॥

ननु-आनन्दमयस्य अभ्यासात् ब्रह्मत्वमुक्तमसङ्गतम्। सोऽकामयतेत्याद्युत्तरसन्दर्भस्य ब्रह्मपुच्छंप्रतिष्ठेत्यनेनैव सम्बन्धोपपत्तेः वक्ष्यमाणगुणविशिष्टब्रह्मपुच्छकत्वेन जीवस्यानन्दमयस्यैव उपासनसम्भवात्। अस्तु वा स्रष्टृत्वादेः आनन्दमय एवान्वयः। तस्य जीवत्वेऽपि अदृष्टद्वारा तत्सम्भवात्। निरतिशयानन्दत्वादिकमपि 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' इति भविष्यति इत्याशङ्क्य, तन्निवारणार्थं 'नेतरोऽनुपपत्तेः' इति सूत्रम्।

**आनन्दमयं हि प्रकृत्येति**। ततश्च सोऽकामयतेत्यादिपुल्लिङ्गयुक्तसर्वनाम्ना ब्रह्मणः परामर्शासम्भवात् तथानिर्दिष्टानन्दमय एव परामृश्यते। न च तस्यापि अदृष्टद्वारा कारणत्वं भवतीति शङ्क्यम्, कामनापूर्वकस्रष्टृत्वाम्नानात्। तदाह-**प्राक्छरीराद्युत्पत्तेरभिध्यानमिति**। सृज्यविषया कामना अभिध्यानम्। न च शास्त्रदृष्ट्या तत् सर्वं जीव एव सम्भवतीति शङ्कनीयम्। तथा सति

सृज्यमानानां च विकाराणां स्रष्टुरव्यतिरेकः, सर्वविकारसृष्टिश्च, न परस्मादात्मनोऽन्यत्रोपपद्यते ॥ १६ ॥

भेदव्यपदेशाच्च ॥ १७ ॥

इतश्च नानन्दमयः संसारी । यस्मादानन्दमयाधिकारे 'रसो वै सः । रसꣳह्येवायं लब्ध्वाऽऽनन्दी भवति' (तै. उ. २।७) इति जीवानन्दमयौ भेदेन व्यपदिशति । नहि लब्धैव लब्धव्यो भवति ।

कथं तर्हि 'आत्माऽन्वेष्टव्यः' 'आत्मलाभान्न परं विद्यते' [आ. ध. सू. १.८.१.२] इति श्रुतिस्मृती, यावता न लब्धैव लब्धव्यो भवतीत्युक्तम् । बाढम् । तथाऽपि आत्मनोऽप्रच्युतात्मभावस्यैव सतः तत्त्वानवबोधनिमित्तो मिथ्यैव देहादिष्वनात्मस्वात्मत्वनिश्चयो लौकिको दृष्टः । तेन देहादिभूतस्यात्मनोऽप्यात्मा अनन्विष्टोऽन्वेष्टव्यः, अलब्धो लब्धव्यः, अश्रुतः श्रोतव्यः, अमतो मन्तव्यः, अविज्ञातो विज्ञातव्यः, इत्यादिर्भेदव्यपदेश उपपद्यते ।

प्रतिषिध्यत एव तु परमार्थतः सर्वज्ञात्परमेश्वरादन्यो द्रष्टा श्रोता

---

आनन्दमयशब्दोऽपि शास्त्रीयं यज्जीवस्य ब्रह्मात्मकं स्वरूपं तत्पर एवास्तु न जीवपर इति भावः ॥ १६ ॥

'रसं ह्येवायं लब्ध्वानन्दी भवति' इत्यतः पूर्ववाक्ये सइतिसर्वनाम्ना आनन्दमयं परामृश्य तस्य रसत्वोक्तेः इह आनन्दमय एव रसशब्देन प्रतिपाद्यते, अयमित्यनेन च लब्धृत्वेन [1]प्रतिपाद्यमानो जीव इति, जीवभिन्नत्वेनावगत आनन्दमयो ब्रह्मैवेति सिध्यति ।

सूत्रद्वयेनावगतो भेदः जीवब्रह्मणोः न पारमार्थिकः किंत्वाविद्यकः - इति शङ्कासमाधानाभ्यां प्रतिपादयति —**कथं तर्ह्यात्माऽन्वेष्टव्य इत्यादिना ।**

**प्रतिषिध्यत एव तु परमार्थत इति ।** [2]ननु—नान्योऽतोस्तिद्रष्टेत्यादि-

---

1. मु. प्रतीयमानो

2. 'नान्योऽतोऽस्ति द्रष्टा' इति श्रुतेः विशिष्टाद्वैतिनां व्याख्यां आशङ्क्य निराकरोति—**नन्वित्यादिना जीवान्तर्यामिभेदनिषेधपरमित्यन्तेन ।**

वाक्यं न जीवेशयोर्भेदनिषेधकम्। 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद' इत्यादिना, 'एष त आत्मा' इति च नियन्तृनियन्तव्यत्वादिना भेद-प्रतीतेः। अतः तत्सन्निधावाम्नातं इदमपि वाक्यं जीवब्रह्मणोर्भेदमादायैव व्याख्येयम्। तथा च, अतः—अन्तर्यामिणस्सकाशात् तत्सजातीयोऽन्यो द्रष्टा नास्तीति वाक्यार्थः। न च—तत्सजातीय इति पूरणं मध्येऽसङ्गतम्, द्रष्ट्रादिशब्दानां चाक्षुषज्ञानाश्रयवाचिनां कथमन्तर्यामिसजातीयान्तर्यामिरूपद्रष्टृ-परत्वम्, यद्भेदो निषिध्येत—इति वाच्यम्। सजातीय इति हि व्युत्पत्तिसिद्धम्। 'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः' इति हि व्युत्पत्तिः। यथा इवशब्दयुक्तं सिंहइवायमिति वाक्यं सिंहान्यत् सिंहसदृशं वस्तु बोधयति, तथा नञ्युक्तमपि वाक्यं अनश्वमानयेत्यादि अश्वसदृशं अश्वभिन्नं वस्तु बोधयति। तथा हि अनश्वमित्यादिवाक्यात् अर्थोऽवगम्यते। इदं च [1]नञ्पदं अन्यशब्दस्याप्यु-पलक्षणम्। लौकिकव्युत्पत्तेः तत्रापि तुल्यत्वात्। न हि ब्राह्मणादन्यमानयेत्युक्ते घटादिरानीयते। अपि तु ब्राह्मणसदृशः क्षत्रियादिरेव आनीयते। तथा च नान्योऽतोऽस्तिद्रष्टेत्यत्रापि अतः - अन्तर्यामिणः अन्यः तत्सदृश इत्येवावगम्यते। न च द्रष्ट्रादिशब्दविरोधः। न हि द्रष्ट्रादिशब्दाः चाक्षुषादिज्ञानाश्रयपराः,[2] 'पश्यत्यचक्षुः स शृणोत्यकर्णः' इति प्रयोगात्। किं तु रूपसाक्षात्कारादिवाचका दृश्यादिधातव इति द्रष्ट्रादिशब्दास्तदाश्रयपराः। तथा च नान्योऽस्तिद्रष्टेत्युक्ते अन्तर्यामिणः सकाशात् भिन्नः तज्जातीयो [3]रूपालोकनवान् नास्तीत्यर्थोऽवगम्यते। ततश्च अन्तर्यामिभेदनिषेध एव पर्यवस्यति, न तु जीवस्य अन्तर्यामिभेदनिषेधः, तस्य तत्सजातीयत्वाभावात्—इति चेत्—

उच्यते—न सर्वत्र नञिवेतिन्यायः प्रवर्तते। अपीतंघटमानयेत्यादौ तदप्रवृत्तेः। किं तु अनश्वमानयेत्यादौ। [4]तत्र विशेष्यस्यानिर्देशात् किं तदश्वभिन्नं इत्याकांक्षायां प्रतियोगिसमर्पकेण पदेन तत्सदृशस्योपस्थित्या तदेव अन्यत्वेन निर्णीयते। न तु यत्र विशेष्यनिर्देशेन निराकांक्षता। प्रकृते च नान्योऽतोऽस्ति-द्रष्टेत्यादौ द्रष्ट्रादिपदैर्विशेष्यस्य दर्शितत्वात् न तदाकांक्षेति न [5]श्रुतिसङ्कोचकतया

---

1. मु. नञ्वत्। 2. मु. ज्ञानपराः 3. मु. रूपालोचन 4. मु. 'तत्र' नास्ति

5. **श्रुतिसङ्कोचकतया** - अन्यसामान्यवाचकान्यपदरूपश्रुतेः सजातीयरूपेऽन्य-

स न्यायः कुलधर्म इत्येवाश्रयितुं युक्तः। न च द्रष्ट्रादिपदानां जीवेश्वरसाधारणत्वं, रूपसाक्षात्कारादिमात्रप्रवृत्तिनिमित्तकत्वात्। येन तत्रापि विशेष्यापेक्षायां नञिवेति-न्यायप्रवृत्त्या ईश्वरे व्यवस्थापनं भविष्यति तेषां पदानाम्। दृश्यादिधातुषु हि चक्षुर्जन्यतावच्छेदकजातिविशेष एव प्रयोजकः[1], न च रूपसाक्षात्कारत्वादिरूप उपाधिः। गौरवात्, रूपंपश्यतीतिप्रयोगासामञ्जस्याच्च। न हि 'इन्द्रः इन्द्राणी-पतिः' इति पृथक् प्रयुज्यते। तत् कस्य हेतोः? इन्द्रपदेन विनैव इन्द्राणी-पतिरित्येतावतैव तल्लाभे पृथक्प्रयोगवैयर्थ्यात्। तद्वत् प्रकृतेऽपि पश्यतीत्येतावतैव रूपविषयकत्वे लब्धे रूपमिति पृथक्प्रयोगो व्यर्थ एव स्यात्। घटं पश्यतीति-प्रयोगोऽप्यसमञ्जस एव[2]। न हि घटदर्शनं पटविषयमिति वक्तारो भवन्ति सत्यपि सम्भवे। तत् कस्य हेतोः? घटदर्शनमित्युक्ते नियमावगमात्। [3]तद्वत् प्रकृतेऽपि स्यात्। श्रुतिरपि 'दर्शनाय चक्षुः' [छा. उ.८-१२-४] 'चक्षुश्च द्रष्टव्यं च' [प्र. उ.४-८] इत्येवमादिरूपा चक्षुस्सम्बन्धितयैव दर्शनादिकं वदति। न हि वयं चक्षुर्जन्यत्वरूपोपाधिमेव प्रवृत्तिनिमित्तं वर्णयामः, येन इन्द्राणीन्यायेन पृथक् चक्षुरादिप्रयोगोऽनुपपन्नस्स्यात्। किं तु तज्जन्यतावच्छेदिकां जातिम्। अतः ता-दृशप्रवृत्तिनिमित्ताभिव्यञ्जकतया 'दर्शनाय चक्षुः, श्रवणाय श्रोत्रं' इत्यादिप्रयोगः उपोद्बलक एव। न च 'पश्यत्यचक्षुः स शृणोत्यकर्णः' इति विरोधः। 'अपाणिपादो जवनो ग्रहीता' इत्युपक्रमे जवनशब्दस्य तत्तत्पदार्थप्राप्तिमात्र-परत्वेन लाक्षणिकतया दर्शनादीनामपि गौणत्वोपपत्तेः। 'चक्षुरभावेऽपि दर्शनं' इति अद्भुतमिव वक्तुं प्रवृत्ताया एतच्छ्रुतेरेव 'चाक्षुषत्वादिकमेव प्रवृत्तिनिमित्तं' इत्यत्रैव तात्पर्याच्च। [4]ततश्च द्रष्ट्रादिशब्दानां चाक्षुषादिधर्मिजीवासाधारणत्वमेव। ईश्वरस्य ज्ञानं नित्यमेव। जन्यमपि तदीयं स्वशक्तिपरिणामात्मकमेव न तु चाक्षुषादिरूपम्।

---

विशेषे लक्षणापादकतया।

1. **प्रयोजकः**—प्रवृत्तिनिमित्तम्। 2. **असमञ्जस एवेति** स्यादिति शेषः।

3. **तद्वत्प्रकृतेऽपीति** पश्यतीत्युक्ते परमते रूपदर्शनोपस्थितौ रूपविषयकत्वस्य नियमेनावगमात् घटं पश्यतीति घटविषयकत्वोक्तिः असमञ्जसः स्यात्-इत्यर्थः।

4. मु. 'ततश्च' नास्ति।

अपि च अत्र 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' [ बृ. उ. २-४ ] इति श्रुतिप्रतिपादितानां आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितं' [ बृ. उ. २-४ ] इति श्रुतिप्रतिपादितानां वा ग्रहणं न्याय्यम्। शब्दक्रमसङ्ख्याप्रत्यभिज्ञानात्। ते च जीवधर्मा एवेति द्रष्ट्रादिशब्दैः जीवस्यैव विशेष्यस्य समर्पितत्वात् प्रकृतादन्तर्यामिणः सकाशात् द्रष्ट्रादिरूपो जीवोऽन्यो नास्तीत्येव प्रतीयते।

यदि तु कुलधर्मतया नञिवयुक्तन्यायस्यापि प्रकृते प्रवृत्तिर्वर्णनीयेत्याग्रहः, तदा जीवोऽपि परमात्मना सदृश एवेति द्रष्ट्रादिशब्दैः उपस्थिते जीवे एव अन्तर्यामिभेदो निषिध्यत इति श्लिष्यते। न च 'एष त आत्मा' इति भेदनिर्देशः। 'घटस्य स्वरूपं' 'ममात्मा दृष्टः' इत्यभेदेऽपि तथा प्रचुरव्यवहारदर्शनात्।

अपि च 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञाता एष त आत्माऽन्तर्याम्यमृतोऽतोन्यदार्तम्' [ बृ.उ. ३-७-२३] इति च वाक्यशैली [1]जीवान्तर्यामिभेदनिषेधपरैवावगम्यते। [2]तथा च पूर्ववाक्येन उक्तगत्या भेदे निषिद्धे भेदाभेदयोस्साधारणस्य एषतआत्मेतिवाक्यस्य अन्वयमुखेन भेदनिषेधनिगमनरूपतैव अवगम्यते।

अपि च एषतइति वाक्येन प्रसिद्धजीवमेतच्छब्देनानूद्य[3] तस्य अन्तर्याम्यभेद एव प्रतिपाद्यत इति स्पष्टं प्रतीयते। 'य आत्मनि' इत्यादौ च भेदनिर्देशे प्रकृतभाष्यमेव[4] उत्तरम्। न चात्रापि[5] शुद्ध एवात्मा उच्यते। एतत्स्थाने

---

1. **जीवान्तर्यामिभेदनिषेधपरैवेति** अन्यथा 'अतोऽन्यदार्तं' इत्युक्तं आर्तत्वं अनित्यत्वरूपं जीवस्यापद्येत, तच्च आस्तिकानां अनिष्टं इति भावः।

2. मु. 'तथा च' नास्ति।

3. **एतच्छब्देनानूद्येति** न चैवं सति 'यः पृथिव्यां' इत्युपक्रान्त यच्छब्द प्रतिसम्बन्धिशब्दाभावात् वाक्यार्थपर्यवसानं शङ्क्यम्। 'स त आत्मा' इति माध्यन्दिनपाठानुसारेण 'सः' इति शब्दस्य उपसंहारेण वाक्यार्थपर्यवसानसंभवात्, शमादिषु श्रद्धोपसंहारेण शमादिषट्कसंपत्तिवत्-इति भावः।

4. **प्रकृतभाष्यं**—औपाधिकभेदप्रदर्शनपरं भाष्यम्। 5. आ. 'अपि' नास्ति।

वा 'नान्योऽतोऽस्ति द्रष्टा' (बृ. उ. ३।७। २३) इत्यादिना। परमेश्वरस्तु अविद्याकल्पिताच्छारीरात्कर्तुर्भोक्तुर्विज्ञानात्माख्यादन्यः। यथा मायाविनश्चर्मखड्गधरात् सूत्रेणाकाशमधिरोहतः स एव मायावी परमार्थरूपो भूमिष्ठोऽन्यः। यथा वा घटाकाशादुपाधिपरिच्छिन्नात् अनुपाधिपरिच्छिन्न आकाशोऽन्यः। ईदृशं च विज्ञानात्मपरमात्मभेदं आश्रित्य 'नेतरोऽनुपपत्तेः' 'भेदव्यपदेशाच्च' इत्युक्तम् ॥ १७ ॥

## कामाच्च नानुमानापेक्षा ॥ १८ ॥

आनन्दमयाधिकारे च 'सोऽकामयत बहु स्यां प्रजायेय' (तै. उ. २।६) इति कामयितृत्वनिर्देशाच्च न आनुमानिकमपि सांख्यपरिकल्पितमचेतनं प्रधानं आनन्दमयत्वेन कारणत्वेन वा अपेक्षितव्यम्। 'ईक्षतेर्नाशब्दम्' इति निराकृतमपि प्रधानं पूर्वसूत्रोदाहृतां कामयितृत्वश्रुतिमाश्रित्य प्रसङ्गात् पुनर्निराक्रियते गतिसामान्यप्रपञ्चनाय ॥ १८ ॥

## अस्मिन्नस्य च तद्योगं शास्ति ॥ १९ ॥

इतश्च न प्रधाने जीवे वा आनन्दमयशब्दः। यस्मात् अस्मिन्-आनन्दमये प्रकृते आत्मनि प्रतिबुद्धस्य अस्य-जीवस्य तद्योगं शास्ति-

---

शाखान्तरे 'यो विज्ञाने तिष्ठन्' इत्याम्नानेन अन्तःकरणचतुष्टयान्तर्गतविज्ञानोपाधिकस्यैव अभिधानोपगमात्। तत् सिद्धं 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिवाक्यं जीवान्तर्यामिभेदनिषेधपरमिति।

ननु—जीवब्रह्मणोरौपाधिकभेदे मायाविदृष्टान्तोऽसमञ्जसः, तत्र द्वितीयस्य शुक्तिरजतादिवत् काल्पनिकत्वात् जीवस्य च पारमार्थिकब्रह्मसदृशत्वात्, अतः कल्पितभेदयोरसमानसत्ताकत्वं यत्र प्रसिद्धं तादृशदृष्टान्तमाह—**यथा वा घटाकाशादिति** ॥ १७ ॥

सूत्रे अनुमीयत इत्यनुमानं इति कर्मव्युत्पत्तिर्द्रष्टव्या ॥ १८ ॥

अनेन सूत्रेण आनन्दमयविज्ञानान्मुक्तिप्रतिपादनात् तस्य ब्रह्मत्वं निर्धार्यते। न हि ब्रह्मविज्ञानादन्यतो मुक्तिः सम्भवति। 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' [श्वे. उ. ३-८] इति श्रुतेः।

**तदात्मना योगः तद्योगः - तद्भावापत्तिः, मुक्तिरित्यर्थः । तद्योगं शास्ति शास्त्रम् 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां**

---

'ननु सोऽश्नुते सर्वान् कामान् सह' इत्युपक्रमगतं वाक्यं अनुदाहृत्य किमर्थं यदाह्येवेत्युपसंहारस्थं वाक्यं उदाहृतम् । उच्यते—उपक्रमे मुक्तिप्रतिपादकवाक्ये शङ्काविशेषं प्राप्तं परिहर्तुं तद्वाक्यं समर्थं इत्यभिप्रायेण । अस्मिन् वर्णके हि प्रियमोदादिविशिष्टानन्दमयजीवोपासना पूर्वपक्षे, सिद्धान्ते तु [1]तादृशब्रह्मोपासना । न तु निर्विशेषवस्तुप्रतिपादकं इदं[2] वाक्यं सिद्धान्तेऽपि । ततश्च आनन्दमयसगुणब्रह्मोपासनात् कथं मुक्तिस्स्यादिति शङ्का । तन्निराकरणं तु उपासनानन्तरं ब्रह्मलोकं गतस्य अदृश्याद्यात्मकनिर्गुणब्रह्मसाक्षात्कारे मुक्तिर्भविष्यतीति क्रममुक्त्यभिप्रायं सर्वकामावाप्तिवचनमिति ।

**यदा ह्येवैष इति ।** 'सच्च त्यच्चाभवत् । निरुक्तं चानिरुक्तं च । निलयनं चानिलयनं च । विज्ञानं चाविज्ञानं च । सत्यं चानृतं च सत्यमभवत् ।' इति [3]पूर्ववाक्ये अध्यारोपितस्य प्रपञ्चजातस्य निषेधार्थमिदं वाक्यम् । तत्र यद्यपि 'अदृश्ये' इत्येव सर्वारोपितनिषेधः सिध्यति, तथापि [4]पूर्ववाक्योपात्तानामेवारोपितानां अयं निषेध इति विधिनिषेधयोः [5]समानविषयताद्योतनार्थं [6]आरोपान्तर्गतप्रतियोगिसमर्पकपदप्रत्यभिज्ञा[पन]पूर्वकं [7]गोबलीवर्दन्यायेन पुनर्निषेधः केषांचित् । आत्म्यं - शरीरं, आत्मीयमिति यावत्, तद्रहिते । निरुक्तम् - इदमित्थमितिनिर्वचन-

---

1. मु. 'तादृश' नास्ति ।　　2. मु. 'इदं' नास्ति ।

3. **पूर्ववाक्ये अध्यारोपितस्य** - कल्पिततादात्म्येन ब्रह्मसंबन्धितया पूर्ववाक्ये प्रतिपादितस्य ।

4. मु. पूर्ववाक्योपात्तानामेवायं

5. **समानविषयताद्योतनार्थमिति** मिथ्यात्वसिद्ध्यर्थमिदम् । येन रूपेण प्रतीयते तेनैव रूपेण निषेधे एव मिथ्यात्वसिद्धिः इति भावः ।

6. आ. आरोपितान्तर्गत

7. **गोबलीवर्दन्यायेनेति** गोपदेनैव गोत्वेन बलीवर्दस्यापि ग्रहणेऽपि दुर्दम्यत्वज्ञापनाय बलीवर्दत्वेन गोत्वव्याप्येन विशेषरूपेण उपस्थितये यथा 'गाः कालय बलीवर्दं च' इति प्रयुज्यते तथा मिथ्यात्वज्ञापनाय विशिष्य निषेधः इति भावः ।

विन्दते। अथ सोऽभयं गतो भवति। यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति।' (तै. उ. २।७) इति।

एतदुक्तं भवति—यदा एतस्मिन् - आनन्दमये अल्पमप्यन्तरं अतादात्म्यरूपं पश्यति तदा संसारभयात् न निवर्तते। यदा तु एतस्मिन्नानन्दमये निरन्तरं तादात्म्येन प्रतितिष्ठति तदा संसारभयान्निवर्तते इति। तच्च परमात्मपरिग्रहे घटते, न प्रधानपरिग्रहे जीवपरिग्रहे वा। तस्मात् आनन्दमयः परमात्मेति स्थितम् [सिद्धम्]।

---

योग्यं, तद्रहिते। निलयनं - नितरां लयस्थानं, तद्रहिते। प्रतिष्ठां-साक्षात्काररूपं तज्ज्ञानम्। 'आनन्दं ब्रह्मणो विद्वान्। न बिभेति....' इत्यभयहेतुत्वेन उत्तरत्र ज्ञानस्य कीर्तनात् इहापि अभयहेतुत्वेन तत्प्रत्यभिज्ञानात् तदेव प्रतिष्ठाशब्दार्थ इति निर्णीयते।

उदरमन्तरं कुरुते अथ तस्य भयं भवतीति। [1]अत्र भयहेतुत्वेन कीर्त्यमानं अभयहेतुविरुद्धमित्यवगम्यते। निर्विशेषात्मज्ञानस्याभयहेतुत्वोपपादनात् सविशेषात्मज्ञानं भयहेतुरित्यवगम्यते। ततोऽत्र वाक्ये अन्तरशब्दो भेदपरः। कुरुत इति क्रियासामान्यवाचकस्य [2]धातोः क्रियाविशेषे ज्ञाने वृत्तिराश्रीयते। उदरमित्यत्र उत् अरं इति पदच्छेदः। अरमित्यल्पार्थे, उदित्यप्यर्थे, न ह्येतस्य वाक्यस्य पूर्वापरपर्यालोचनां विहाय अर्थविशेषो निर्धारयितुं शक्यः। 'ऋतं पिबन्तौ' [क. उ. १-३-१] इतिमन्त्रे ऋतादिपदानामिव 'उदरं कुरुते' इत्यंशस्य यथाश्रुतस्य प्रक्रमाननुगुणत्वात्। एतत्सर्वमभिप्रेत्याह—एतदुक्तं भवतीति।

एवं एकदेशिमतेन आनन्दमयस्य ब्रह्मत्वं तदुपासनापरे च सन्दर्भे निर्विशेषवस्तुप्रतिपादनं क्रममुक्त्यभिप्रायं इतिप्रतिपादनपरतया सूत्राणि व्याख्याय, 'आनन्दमयो जीव एव, कृत्स्नमपि वाक्यं निर्विशेषब्रह्मपरमेव' इति प्रतिपादन-

---

1. उदरमन्तरमितिश्रुतेरद्वैतिव्याख्यायां विशिष्टाद्वैत्युद्भावितमनौचित्यं परिहरन् उक्तश्रुतिं व्याचष्टे—अत्रेत्यादिना।

2. ग 'धातोः' नास्ति।

इदं त्विह वक्तव्यम्—'स वा एष पुरुषोऽन्नरसमयः' 'तस्माद्वा एतस्मादन्नरसमयात्। अन्योऽन्तर आत्मा प्राणमयः' तस्मात् 'अन्योऽन्तर आत्मा मनोमयः' तस्मात् 'अन्योऽन्तर आत्मा विज्ञानमयः' (तै. उ. २।१,२,३,४) इति च विकारार्थमयट्प्रवाहे सति आनन्दमये एव अकस्मादर्धजरतीयन्यायेन कथमिव मयटः प्राचुर्यार्थत्वं ब्रह्मविषयत्वं चाश्रीयत इति। मान्त्रवर्णिकब्रह्माधिकारादिति

---

परतया सूत्राणि व्याचिख्यासुः प्रथमं आनन्दमयो न ब्रह्मेत्याह—**इदं त्विह वक्तव्यमिति। विकारार्थमयट्प्रवाहे सतीति।** सर्वान्तरत्वं तु न आनन्दमये प्रायपाठबाधकं लिङ्गमस्तीति गूढोऽभिसन्धिः।

गूढमभिसन्धिमनवगाह्य शङ्कते—**मान्त्रवर्णिकेति**। [1]मान्त्रवर्णिकब्रह्मप्रत्यभिज्ञानात्—इत्यनेन किं [2]उपक्रान्तश्रुतात्मादिपदसामानाधिकरण्यमात्रं [3]विवक्षितं, उत सर्वान्तरत्वमपि। नाद्यः। तथासति अन्नमयादिष्वपि 'स वा एष पुरुषोऽन्नरसमयः' 'तस्माद्वा एतस्मादन्नरसमयात्' 'येऽन्नं ब्रह्मोपासते' इति आत्मपदब्रह्मपदसामानाधिकरण्यमस्ति। ['स एषः' इति] 'तस्मादेतस्मात्' इति [च] सर्वनामनी 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' इति पूर्ववाक्यगतसर्वनामसमानार्थके आत्मपरे। एवं प्राणमयादिष्वपि प्रतिपर्यायं स्पष्टमेव आत्मपदसामानाधिकरण्यम्। विज्ञानमयकोशे तु 'विज्ञानं देवास्सर्वे। ब्रह्म ज्येष्ठमुपासते। विज्ञानं ब्रह्म चेद्वेद। तस्माच्चेन्न प्रमाद्यति। शरीरे पाप्मनो हित्वा। सर्वान् कामान् समश्नुते' [तै. उ. २.५] इति ब्रह्मपदाभ्यासः उपक्रान्तसर्वकामावाप्तिरूपं फलं च प्रत्यभिज्ञायते। तथा च तेषामप्युपक्रान्तब्रह्मत्वापत्तिः[4]। [5]न चास्तु तेषामपि ब्रह्मत्वम्। तथासति ब्रह्मानेकत्वप्रसङ्गेन सर्वश्रुतिषु ब्रह्मै-

---

1. **मान्त्रवर्णिकब्रह्मप्रत्यभिज्ञानादिति** मान्त्रवर्णिकब्रह्माधिकारात् इति भाष्यार्थवर्णनमेतत्।

2. उपक्रान्ते ब्रह्मणि श्रुते ये आत्मब्रह्मपदे तत्सामानाधिकरण्ये इत्यर्थः।

3. **विवक्षितम्** - प्रत्यभिज्ञापकत्वेन विवक्षितम्। 4. मु. ब्रह्मात्मत्वापत्तिः।

5. द्वैतिनां मतं आशङ्क्य निरस्यति - **न चेत्यादिना**।

चेत्, न-अन्नमयादीनामपि तर्हि ब्रह्मत्वप्रसङ्गः।

अत्राह—युक्तमन्नमयादीनामब्रह्मत्वं, तस्मात्तस्मादान्तरस्यान्तरस्यान्यस्यान्यस्यात्मन उच्यमानत्वात्, आनन्दमयात्तु न कश्चिदन्य आन्तर आत्मोच्यते, तेनानन्दमयस्य ब्रह्मत्वम्, अन्यथा प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गात्-इति।

अत्रोच्यते—यद्यप्यन्नमयादिभ्य इव आनन्दमयात् 'अन्योऽन्तर आत्मा' इति न श्रूयते, तथाऽपि न आनन्दमयस्य ब्रह्मत्वं, यत

---

कत्वनिर्धारणं विरुध्येत। न च तस्यैकत्वेऽपि उपाधिभेदभिन्नस्य उपासनापराणि कोशवाक्यानि भविष्यन्ति। प्रक्रान्तब्रह्मोपासनस्य प्रधानस्य अनेकत्वे वाक्यभेदापत्तेः। न च—अन्नमयादिकोशेषु गुणभूतान्युपासनानि विधीयन्ते, आनन्दमयवाक्ये तु प्रधानोपासनम्, अतो न वाक्यभेदः—इति वाच्यम्। तथात्वे विनिगमनाविरहात्, उपक्रान्तस्य ब्रह्मणः तत्र सर्वत्र प्रत्यभिज्ञानात्—इति मनसि निधायाह—**अन्नमयादीनामपीति**।

द्वितीयं शङ्कते। **अत्राहेति**। **यद्यप्यन्नमयादिभ्य इवेति**। अभ्युपगमवादोऽयम्, वस्तुतस्तु ततोऽप्यान्तरो वाक्यगतिपर्यालोचनया अवगम्यत एव—इति द्योतनाय यद्यपीति। तथा हि—आनन्दमयस्य हि सर्वान्तरत्वं न साक्षादवगम्यते। अपि तु ततोऽन्तरस्यान्यस्यानाम्नानादिति वक्तव्यम्। तदा तस्याप्यात्मान्तराम्नानेन स एव ततोऽप्यन्तरोऽवगतो भविष्यति। आनन्दमयपर्यायोत्तरं हि इदं वाक्यं समाम्नायते 'तस्यैष एव शारीर आत्मा। यः पूर्वस्य' इति। न चात्र एकदेश्युक्तरीत्या क्लिष्टार्थो ग्राह्यः। यथाश्रुतार्थग्रहणे अनुपपत्त्यभावात्। न च—प्राणमये तस्यैष इत्यस्य यथाश्रुतार्थग्रहणं न सम्भवति, अन्नरसमयात्मानुक्तेः—इति वाच्यम्। यस्मात् अन्नरसमय उत्पन्नः स एव मूलकारणीभूतः तस्यात्मा भविष्यतीति, 'तस्यैष एव शारीर आत्मा। यः पूर्वस्य' इत्यनुवादबलादवगन्तुं शक्यत्वात्। स च मूलकारणतया 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' इति निर्दिष्ट एव। ततश्च यः पूर्वस्येति षष्ठी जन्यजनकभावे। तथा च, तस्य प्राणमयस्य एष एव शारीर आत्मा-इत्यत्रापि जन्यजनकभावे षष्ठी।

शारीरपदं च तस्य जीवाभेदसूचकम्। अयं च जन्यजनकभावः उपादानोपादेयभावरूपेणापि भवतीति 'स वा एष पुरुषोऽन्नरसमयः' इति, 'अन्योऽन्तर आत्मा प्राणमयः' इति आत्मपदसामानाधिकरण्यं च उपपद्यते[1]। ततश्च यत् उपक्रमे सर्ववस्त्वनुस्यूततया[2] सर्वान्तरत्वं, यच्च परिपूर्णत्वं अनन्तपदेन सूचितं 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' इत्यादिना विवृतं, तत् आनन्दमयादन्यस्यैवावगम्यते। गुहानिहितत्वरूपमान्तरत्वं यदि ब्राह्मेणैव रूपेण वक्तव्यं तदाऽपि आनन्दमयस्य य आत्मा अवगतः तत्रैव तत्पर्यवसानं कल्पनीयम्। तथा च तस्मादन्योऽन्तरआत्मा इत्यश्रवणमात्रेण न आनन्दमयस्य मान्त्रवर्णिकब्रह्मत्वं वक्तुं शक्यम्। वस्तुतस्तु, उपक्रमे यत् गुहानिहितत्वमुक्तं तत् [3]जैवेनैव रूपेण। तस्य चानन्दमये पर्यवसानं जीवत्व एव लिङ्गम्। द्विप्रकारेण हि ब्रह्मणो गुहानिहितत्वं पारमेश्वरेण रूपेण जैवेन च। तत्र [4]आद्यस्य परमे व्योमन्निति प्रतिपादनात् परमव्योमाश्रितं गुहानिहितं जैवमेव रूपं सिध्यति। अत्र हि परमव्योमशब्दः परमेश्वरपरः। भृगुवल्ल्यां सप्रपञ्चं ब्रह्मस्वरूपं निरूप्य 'सैषा भार्गवी वारुणी विद्या। परमे व्योमन् प्रतिष्ठिता' इति मन्त्रवाक्यगतपरमव्योमशब्दव्याख्यानत्वेन [5]तस्याः सङ्गमितत्वात्। [6]तदेव च आनन्दमयपर्याये[7] गुहानिहितं भविष्यति। अत्रापि हि ब्रह्मपुच्छं प्रतिष्ठेति ब्रह्माश्रितत्वमवगम्यते। आधाराधेयभावेन च आनन्दमयस्य ब्रह्मभेदोऽवगम्यते। ततश्च प्रियादिसम्बन्ध[8]

---

1. **उपपद्यत इति** अन्नरसमये 'स एषः' इति प्रतिपाद्यमानः प्रकृतात्माभेदः प्राणमये 'आत्मा' इति प्रतिपाद्यमानः आत्माभेदश्च आत्मोपादेयत्वात् तयोः उपपद्यते इत्यर्थः।

2. **सर्ववस्त्वनुस्यूततया** - सर्ववस्त्वनुस्यूतत्वरूपम्।

3. **जैवेनैव रूपेणेति** तथा च मन्त्रस्यायमर्थः – सत्यादिलक्षणं ब्रह्म, गुहायां निहितं - जीवरूपेण गुहायां ईश्वरेण निवेशितं - जीवाभिन्नं वेद - इति। मु॰ जैवेन रूपेण।

4. **आद्यस्येत्यादि** गुहायां परमे व्योमन् निहितं - इत्यत्र गुहायां विद्यमाने परमे व्योम्नि - इत्यनेनैव परमव्योमशब्दितब्रह्मणः गुहानिहितत्वस्य कीर्तनात्, निहितं इति जैवरूपमेव कीर्तितं इति भावः।

5. **तस्याः**—भृगुवल्ल्याः।

6. **तदेव** - जैवरूपमेव

7. आ॰ पर्यायेऽपि

8. आ॰ सम्बन्धोऽपि

**आनन्दमयं प्रकृत्य श्रूयते 'तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा। ब्रह्म पुच्छं प्रतिष्ठा।' (तै. उ. २।५) इति। तत्र यद्ब्रह्म मन्त्रवर्णे प्रकृतम्-'सत्यं ज्ञानमनन्तं ब्रह्म' इति, तदिह 'ब्रह्म पुच्छं प्रतिष्ठा।' इत्युच्यते। तद्विजिज्ञापयिषयैव अन्नमयादय आनन्दमयपर्यन्ताः पञ्च कोशाः कल्प्यन्ते। तत्र कुतः प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गः।**

---

आनन्दमयेऽक्लेशेनैव वर्णयितुं शक्यते। आनन्दमयस्य ब्रह्मत्वे तु तदपि क्लेशेनैव वर्णनीयं स्यात्। तदाह—**यत आनन्दमयं प्रकृत्येति।**

[1]न च—पूर्वेषु पर्यायेषु अन्नमयाद्यभिन्नत्वं तत्तदवयवानामवगतम्, इहाप्यानन्दमयपुच्छत्वेन निर्दिष्टं ब्रह्म आनन्दमय एव भविष्यति-इति वाच्यम्। 'आकाश आत्मा। पृथिवी पुच्छं प्रतिष्ठा' इति प्राणमये, 'तस्य यजुरेव शिरः। ऋग्दक्षिणः पक्षः' इत्यादि मनोमयपर्याये च तत्तत्कोशभिन्नानामेवावयवानां प्रतिपादनात्, सर्वथाप्यवयवावयविभावस्य भेदगर्भतया तदप्रत्याख्यानाच्च।

[2]न च—पूर्वेषु पर्यायेषु श्लोकानामवयविविषयत्वं दृष्टम्, 'अन्नाद्वै प्रजाः प्रजायन्ते' इत्यन्नमयपर्याये, 'प्राणं देवा अनुप्राणन्ति' इति प्राणमयपर्याये, 'विज्ञानं यज्ञं तनुते' इति विज्ञानमयपर्याये। एवं प्रकृतेऽपि भविष्यति। ततश्च असन्नेवसभवतीत्यानन्दमयपर्यायस्थस्य श्लोकस्य ब्रह्मपदघटितत्वात् तस्यानन्दमयविषयत्वे आनन्दमयस्य ब्रह्मत्वमिति—वाच्यम्। मनोमयपर्यायगतस्य 'यतो वाचो निवर्तन्ते' इत्यस्य ब्रह्मविषयत्वेन तादृशनियमासिद्धेः। न च तत्रापि ब्रह्मविषयकाप्राप्त्याश्रयतया मनः प्रतिपादितमेवेति यथाकथञ्चिन्मनोविषयतया श्लोकस्य न

---

1. अत्रायं युक्तिसंग्रहः आनन्दमयब्रह्मत्ववादिनां विशिष्टाद्वैतिनां—पुल्लिङ्गान्तप्रधानप्रकृतपरवचो, रूपणञ्चाप्यनन्यैः, श्लोकाः पुच्छं न चाहुः, स्वरसमपि हि नः सूत्रं, अन्योऽन्तरो न- इति। तत्र 'अन्योऽन्तरो न' इत्येतत् अनुपदं विस्तरेण निराकृतम्। 'रूपणञ्चाप्यनन्यैः' इत्येतदाशङ्क्य निराकरोति—**न च पूर्वेष्विति।**

2. 'श्लोकाः पुच्छं न चाहुः' इत्येतदाशङ्क्य निराकरोति—**न च पूर्वेष्विति।**

नियमासिद्धिरिति वाच्यम् । तथासति प्रकृतेऽपि असन्नेवसभवतीति सइतिशब्द-परामृष्टस्यानन्दमयस्य ब्रह्मविषयकसदसत्ववेदनाभ्यां सदसत्वयोः प्रतिपादनमस्तीति, श्लोकस्य यथाकथञ्चिदानन्दमयविषयत्वमस्त्येव । परं तु तत् अब्रह्मत्वसाधकमेव ।

[1]न च—विज्ञानमयकोश एव जीवरूपो निर्दिष्टः, ततोऽपि भिन्नत्वेनाम्नातस्यानन्दमयस्य कथं जीवत्वमिति - वाच्यम् । बुद्ध्युपाधिको जीवो विज्ञानमयपर्याये उक्तः, अज्ञानोपाधिकस्त्वानन्दमयः—इति विवक्षोपपत्तेः । यथा हि विज्ञानमयशब्दो जीवविषयः 'योऽयं विज्ञानमयः प्राणेषु' [बृ. उ. ४.३.७.] इत्यादौ, तथा आन्दमयशब्दोऽपि जीवपरो दृष्टः 'सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक्' [मा. उ. १.५.] इति । अत्र च सुषुप्तिलिङ्गात् जीव एव आनन्दमयः । 'एष सर्वेश्वरः' इत्युत्तरत्र सर्वेश्वरत्वाद्याम्नानं तु जीवस्यैव सत आनन्दमयस्य तदभेददृष्ट्यभिप्रायम् । एवं 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुद्ध्यन्ताम्' [तै. उ. ४.२०] इति जीवपर आनन्दमयशब्दः । शुद्धिर्हि प्रागशुद्धस्य सतोऽवगम्यते । अतः शुद्ध्यन्तामित्युक्त्या [2]'अशुद्धेर्द्योतनात् आनन्दमयो जीव एवेति निर्धार्यते । अथ वा विज्ञानमयशब्दो बुद्धिपर एवास्तु,[3] बुद्धेरप्याधिदैविकविज्ञानविकारतया विज्ञानमयशब्दोपपत्तेः । एवं च सति जीवोपकरणीभूतमनोमयादिप्रायपाठः विज्ञानशब्देन तत्पर्यायाम्नातश्लोके तदभ्यासश्च उपपद्यते । विज्ञानशब्दो हि बुद्धावेव प्रायः श्रुतिषु प्रसिद्धः । 'बुद्धिं तु सारथिं विद्धि' इत्युक्त्वा 'विज्ञानसारथिर्यस्तु' [क. उ. १. ३. ९.] इति पुनस्तदनुकीर्तनात् । कथं 'तर्हि विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च।' इति तस्य यज्ञादिकर्तृत्वप्रतिपादनम् ? गुहाधिकरणोदाहरिष्यमाणपैङ्गिब्राह्मणवत् जीवस्य तदुपाधिककर्तृत्वबोधनोपयोगितया तच्छिरसि निक्षेपोपपत्तेः । अतो न विज्ञानमयकोशान्तरत्वमात्रेण आनन्दमयस्य जीवभिन्नत्वं ब्रह्मत्वं वा अवगन्तुं शक्यते ।

---

1. जीवाद्भेदव्यपदेशात् आनन्दमयो ब्रह्म इति विशिष्टाद्वैत्युक्तं आशङ्क्य निराकरोति- **न च विज्ञानमयेत्यादिना ।**

2. अशुद्धिः अप्रसादः, शोद्ध्यत्वं प्रसाद्यत्वं—इति व्याख्यानन्तु क्लिष्टत्वादनादरणीयम् । शुद्धिवाक्यस्यैतत्प्रकरणगतत्वाभावेऽपि अन्नमयादिक्रमेण कीर्तनात् शुद्धिप्रार्थनाविषयोऽपि अयमेवानन्दमयः इति भावः । 3. मु. 'अस्तु' नास्ति ।

ननु आनन्दमयस्यावयवत्वेन 'ब्रह्म पुच्छं प्रतिष्ठा' इत्युच्यते अन्नमयादीनामिव 'इदं पुच्छं प्रतिष्ठा' इत्यादि। तत्र कथं ब्रह्मणः स्वप्रधानत्वं शक्यं विज्ञातुम्? प्रकृतत्वादिति ब्रूमः।

ननु आनन्दमयावयवत्वेनापि ब्रह्मणि विज्ञायमाने न प्रकृतत्वं हीयते, आनन्दमयस्य ब्रह्मत्वादिति—

अत्रोच्यते—तथा सति, तदेव ब्रह्म आनन्दमय आत्मा अवयवी, तदेव च ब्रह्म पुच्छं प्रतिष्ठा अवयवः-इत्यसामञ्जस्यं स्यात्। अन्यतर-परिग्रहे तु, युक्तं 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यत्रैव ब्रह्मनिर्देश आश्रयितुं, ब्रह्मशब्दसंयोगात्, न आनन्दमयवाक्ये, ब्रह्मशब्दसंयोगाभावादिति।

अपिच 'ब्रह्म पुच्छं प्रतिष्ठा' इत्युक्त्वा इदमुच्यते–'तदप्येष

---

ननु—'उपक्रान्तं ब्रह्मविदाप्नोतिपरमिति वेद्यं ब्रह्म ब्रह्मपुच्छंप्रतिष्ठेत्यत्र प्रतिपाद्यते, तन्निरूपणायैव पञ्च कोशा अवतारिताः' इत्युक्तम्। तथासति यदेव उपक्रमे प्रधानतयाऽवगतं तदेव कथं ब्रह्मपुच्छंप्रतिष्ठेत्यत्र आनन्दमयशेषतया निर्दिश्यते? प्राधान्याप्राधान्ययोर्विरोधात्—इत्यभिप्रायेण शङ्कते—**नन्वानन्द-मयस्यावयवत्वेनेति**। उपक्रमावगतप्राधान्यानुसारेण अप्राधान्यद्योतकं पुच्छपदं तदानुगुण्येन व्याख्येयमित्यभिप्रायेण परिहरति—**प्रकृतत्वादिति**। ननूपक्रान्तं ब्रह्म आनन्दमय एवास्तु, ततश्च न पुच्छपदं यथाकथञ्चिद्व्याख्येयम्—इत्यभि-प्रायेण शङ्कते—**नन्वानन्दमयावयवत्वेनेति**। एवं वदताऽपि ब्रह्मपुच्छं-प्रतिष्ठेतिवाक्यस्वारस्येन यदानन्दमयस्याब्रह्मत्वमवगम्यते[1] तत् बाधितमेव स्यात्। ततश्च पुच्छशब्दानुसारेण यदप्राधान्यमवगतं वर्तते तदेव बाधनीयम्, तत्र च ब्रह्म-शब्दानुसारेण प्रकृतब्रह्मप्रत्यभिज्ञानमनुकूलं इत्याह—**तथासतीति**।

एवं उपक्रमानुसारेण पुच्छशब्दावगतमप्राधान्यं बाध्यते-इत्युक्तम्, इदानीं उपसंहारगतप्राधान्यद्योतकानेकप्रमाणानुसारेणापि तत् बाधनीयमित्याह—**अपि**

---

1. **अवगम्यत इति** ब्रह्म पुच्छं प्रतिष्ठेति ब्रह्माश्रितत्वावगमात् आधाराधेयभावे भेदावश्यंभावात् इति भावः।

**श्लोको भवति। असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुरिति।' (तै. उ २।६)। अस्मिंश्च श्लोके अननुकृष्यानन्दमयं ब्रह्मण एव भावाभाववेदनयोः गुणदोषाभिधानात् गम्यते 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यत्र ब्रह्मण एव स्वप्रधानत्वमिति। न च आनन्दमयस्यात्मनो भावाभावशङ्का युक्ता, प्रियमोदादिविशेषस्य (विशिष्टस्य) आनन्दमयस्य सर्वलोकप्रसिद्धत्वात्।**

---

**चेति।** असन्नेवेतिमन्त्रो ब्रह्मपुच्छंप्रतिष्ठेति वाक्यनिर्दिष्टब्रह्मपरः, न त्वानन्दमयपरः। तद्प्रत्यभिज्ञानात्, पूर्ववाक्यस्वारस्येन ब्रह्मभिन्नतयाऽवगते तस्मिन् ब्रह्मपदलक्षणाप्रसङ्गात्। प्रियादिविशिष्टस्य अहमितिप्रतीयमानस्य असत्त्वशङ्कानास्पदतया तच्छङ्कानिवारणार्थं प्रवृत्तस्य मन्त्रस्य तद्विषयत्वे आनर्थक्यं च स्यात्। ततश्च अयं मन्त्रो ब्रह्मप्रधानः, तत्स्तुतिलिङ्गात्। न च पुच्छपदानुसारेण आनन्दमयपुच्छस्तुतिः आनन्दमये पर्यवसितेति[1] वक्तुं शक्यम्। एकं पुच्छपदमनुसृत्य ब्रह्मपदाभ्यासस्य ब्रह्मसत्त्वासत्त्व[2]ज्ञानयोर्गुणदोषाभिधानस्य च अनेकस्य ब्रह्मप्राधान्यलिङ्गस्य स्वारस्यभङ्गायोगात्। अपि च, एतस्य मन्त्रस्य पुच्छवदानन्दमयविषयत्वे स एव एतन्मन्त्रे प्राधान्येन वेद्य इति, असन्नेव स भवतीति वेदनकर्तृत्वेन सर्वनाम्ना तस्य परामर्शोऽप्यसङ्गतस्स्यात्। वेदितृत्वस्य वेद्यत्वविरुद्धत्वात्। अस्मिन् मन्त्रे हि स इति पुलिंगं[3] पूर्ववाक्यनिर्दिष्टानन्दमयपरामर्शकमेव, इदमपि च जीवत्वलिङ्गमिति ब्रह्मप्रधानेऽस्मिन् प्रकरणे जीवत्वमवगतं प्राधान्यं विहन्तीति न आनन्दमयप्रधानोऽयं श्लोकः। ततश्च एतन्मन्त्रात् पूर्वपठितमपि पुच्छपदं ब्रह्माप्राधान्यद्योतकं उत्तरभाविभिरपि बहुभिः प्राधान्यद्योतकैः अन्यथाक्रियते। उपक्रमन्यायापेक्षयाऽपि भूयोऽनुग्रहन्यायस्य प्रबलत्वात्। समसङ्ख्या-

---

1. **पर्यवसितेतीति** पुच्छमहिमवर्णनेन पुच्छवतः अधिकस्तुतिलाभ इति भावः।

2. मु. सत्त्वासत्त्वयोः।

3. **पुल्लिङ्गमिति** पदं इति शेषः। एतेन 'सोऽकामयत' इत्यत्र पुल्लिङ्गेन स-इतिपदेन पुल्लिङ्गपदनिर्दिष्ट आनन्दमय एव परामर्शयोग्य इति आनन्दमयः परमात्मेति सिद्ध्यतीति विशिष्टाद्वैत्युक्ता उपपत्तिः अभिमतसाधिका न भवतीति सूचितम्।

**कथं पुनः स्वप्रधानं सत् ब्रह्म आनन्दमयस्य पुच्छत्वेन निर्दिश्यते 'ब्रह्म पुच्छं प्रतिष्ठा' इति। नैष दोषः। पुच्छवत् पुच्छं, प्रतिष्ठा-परायणं एकनीडं लौकिकस्यानन्दजातस्य ब्रह्मानन्दः इत्येतदनेन विवक्ष्यते, नावयवत्वं; 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' (बृ. उ. ४।३।३२) इति श्रुत्यन्तरात्।**

**अपिच आनन्दमयस्य ब्रह्मत्वे प्रियाद्यवयवत्वेन सविशेषं**

---

कत्व एव हि उपक्रमोपसंहारयोरुपक्रमप्राबल्यम्।

पुच्छपदस्य गतिं वक्तुं शङ्कते—**कथं पुनरिति**। पुच्छपदं आधारत्वगुणयोगात् उपपद्यते। न च तथासति पुच्छपदेनैव आधारत्वस्य लब्धतया प्रतिष्ठापदं व्यर्थमेव स्यादिति वाच्यम्। स्थितिहेतुत्वं प्रतिष्ठापदार्थः। न च स्थितिहेतुत्वेनैव आधारत्वं लब्धमिति पुनःपुच्छपदेन किमर्थं तल्लक्षणेति वाच्यम्। 'कस्मिन्वहमुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि' [प्र. उ. ६.३] इति जीवरूपेण प्रविष्टस्य ब्रह्मणः स्थितिहेतुत्वेनाम्नातेऽपि प्राणे ब्रह्माधारत्वाभावात्। एवं आधारभूतानामपि पीठादीनां अन्नादिवज्जीवनहेतुत्वादर्शनात् पुच्छपदेन आधारे प्रतिपादितेऽपि प्रतिष्ठापदेन 'कोऽह्येवान्यात् कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्' इति वाक्यावगतस्थितिहेतुत्वप्रतिपादने न काचिदनुपपत्तिः। तदाह—**नैष दोष इति**। प्रतिष्ठापदं व्याचष्टे। **परायणमिति**। पदद्वयलभ्यमर्थं कथयति—**एकनीडमिति**। एकनीडत्वं प्रकृते आनन्दमयोपादानत्वे सति तत्प्राणनादिहेतुत्वम्।

एवं 'अन्योऽन्तर आत्माऽऽनन्दमयः इत्यत्र प्रकृतब्रह्मपर्यवसानमस्वीकृत्य ब्रह्मपुच्छंप्रतिष्ठेत्यत्र तदङ्गीकारे पुच्छपदावगतमप्राधान्यमनुपपन्नं स्यात्' इति स्वपक्षदोषं परिहृत्य पुनरपि आनन्दमयस्य ब्रह्मत्वाभ्युपगमे दूषणमाह—**अपि चेति**।

ननु—सविशेषब्रह्मपरमेवेदं प्रकरणम्। न तु निर्विशेषब्रह्मपरम्। यथा हि 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' [छा. ३. ८. १] इत्यादौ हृदयपुण्डरीकान्तर्गततया ब्रह्म ध्येयमिति विवक्ष्यते, एवमिहापि विज्ञानमयान्त-

**ब्रह्माभ्युपगन्तव्यम् । निर्विशेषं तु ब्रह्म वाक्यशेषे श्रूयते, वाङ्मनसयोरगोचरत्वाभिधानात्–'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चन' [तै. उ. २-९] इति ।**

---

कोशरूपगुहान्तर्गततया ब्रह्मोपासनं विवक्षितम् । वेदेत्यस्य विधिविपरिणामोपपत्तेः । तत्र च सत्यत्वादयो गुणा विवक्षिताः । ये च 'सोऽश्नुते सर्वान् कामान्' इति प्राप्यत्वेन कामा निर्दिश्यन्ते तेऽप्युपास्यगुणा एव भविष्यन्ति, तत्क्रतुन्यायात् । एवं सोऽकामयतेत्यादयो गुणा मध्येऽपि परामृश्यन्ते । तथा 'भीषास्माद्वातः पवते' 'आनन्दं ब्रह्मणो विद्वान् । न बिभेति' इत्यादयो भूयांस उपसंहारेऽपि गुणा आम्नायन्ते । तद्विरोधे च 'यतो वाचो निवर्तन्ते' इति वाक्यं यथाकथञ्चित् 'ब्रह्मानन्दोऽपरिमितः' इत्येवमभिप्रायं सत् ब्रह्मानन्देयत्तापरिच्छेदकवाचां मनसा सह निवृत्तिप्रतिपादकं भविष्यति । अतः सविशेषपरत्वापादनं न दोषः, इत्यत आह—**निर्विशेषमिति ।**

[1]अयमाशयः—यतो वाचो निवर्तन्त इति वाक्यं न ब्रह्मानन्देयत्तापरिच्छेदकवाङ्निवृत्तिप्रतिपादनद्वारा ब्रह्मानन्दस्यापरिमितत्वं प्रतिपादयति । तथासति वाच इति ब्रह्मानन्देयत्ताप्रतिपादकवाग्विषयकं सत् संकुचितार्थं स्यात् । निवर्तन्ते इति च पदस्वारस्येन प्रवृत्तिरप्यवगम्यते । प्रवृत्तस्य हि निवृत्तिः । इयत्तापरिच्छेदिकानां च वाचां प्रवृत्तिर्नास्तीति तदपि पदं असङ्गतमेव स्यात् । ततश्च 'वाचः' इति असङ्कोचेन सर्ववाग्विषयम् । न च तवापि 'सगुणानां वाचां शबलितस्वरूपपर्यन्तं प्रवृत्तानां विशुद्धस्वरूपपर्यन्तमप्राप्य निवृत्तिः मनसा सगुणवस्त्ववगाहिज्ञानाश्रयेण सह' इति वक्तुं शक्यत्वेऽपि निर्गुणप्रतिपादकवाचां तादृशमनसा सह प्रवृत्तानां निवृत्तिर्नास्तीति सगुणवाग्विषयतया वाच इति संकुचितार्थं वक्तव्यमेवेति वाच्यम् । निर्गुणप्रतिपादकवचनजातस्य गुणानप्रतिपाद्य विशुद्धस्वरूपमात्रप्रतिपादकत्वे सत्यपि, निर्गुणवाक्यार्थगोचरसाक्षात्कारपर्यन्तं औपाधिकगुणजातस्य

---

1. विशिष्टाद्वैतिनां 'यतो वाचो निवर्तन्ते' इत्यादिश्रुतिव्याख्यानस्य अनुपपन्नतां निरूपयति—**अयमाशय इत्यादिना ।**

विद्यमानतया तस्यां दशायां अधिष्ठानमात्रपरिशेषेणविशुद्धस्वरूपाभावात् तासामपि वाचां मुक्तिदशाभिव्यङ्ग्यं यादृशं विशुद्धं स्वरूपं ततो निवृत्तिरस्त्येवेति न वाच इत्यस्य सङ्कोचः, न वा निवृत्तिपदस्वारस्यपरित्यागः। न च प्रकरणाधीतानेकसगुणवाक्यानुसारेण यतोवाचइत्यस्य एकस्य यथाकथञ्चित् व्याख्याने न दोष इति वाच्यम्। तात्पर्यग्राहकलिङ्गवता एकेनैव अनेकबाधोपपत्तेः। इदं वाक्यं अस्मिन् प्रकरणे द्विरभ्यस्यते मनोमयपर्याये ब्रह्मवल्ल्यन्ते च। तत्र कथं एकरूपेण द्विरभ्यस्यमानस्य वाक्यस्य अन्यथानयनम्। उपक्रमे च आनन्त्यं प्रतिज्ञातम्। तदुपपादकतया सृष्टिवाक्यप्रवृत्तिः। तत्र सृष्टि-तदुपयोगिगुणमात्रप्रतिपादने वस्तुपरिच्छेदस्य प्रसक्तेः आनन्त्यमप्रतिपादितमेव भवेदिति अस्मिन् प्रकरणे सृष्टिवाक्यजातं अपवादमपेक्षमाणमेव भवतीति यतोवाचइति वाक्यं तदनुगुणमेव, न तु तत्प्रतिकूलम्। तदुद्देश्यसिद्ध्युपयोगित्वात्। तथा च उपक्रमोपसंहारैकरूप्यमपि तात्पर्यग्राहकं लिङ्गं यतोवाचइत्यस्य। मध्येऽपि च 'अदृश्येऽनात्म्ये' इत्यादिरपवाद उपलभ्यते, 'उदरमन्तरं कुरुते' इति च भेदनिन्दा। अतो निर्गुणप्रकरणेऽस्मिन् आनन्दमये सगुणे उपक्रान्तब्रह्मपर्यवसानं कर्तुमशक्यम्।

आनन्दं ब्रह्मण इति षष्ठी च निर्गुणप्रकरणानुरोधात् 'यदेष आकाश आनन्दो न स्यात्' इति 'आनन्दो ब्रह्मेति व्यजानात्' इति च पूर्वोत्तरवाक्य-पर्यालोचनया च घटस्यस्वरूपमित्यादिवत् अभेदसम्बन्धपरैव व्याख्येया।

'[1]सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चिता।' इत्यत्रापि न सहार्थे तृतीया। सहेत्यस्य हि न ब्रह्मणेत्यनेनान्वयः। वैदिकसम्प्रदायागतः सहेत्यत्र विरामो हि ब्रह्मणेत्यनेन [2]अनन्वयं द्योतयति। ततश्च सहेत्येतत् सर्वान्

---

1. 'सोऽश्नुते सर्वान् कामान् सह' इत्यादिश्रुतेः विशिष्टाद्वैतिव्याख्यायां अनुपपत्तिं प्रकटयति-**सोऽश्नुते इत्यादिना**।

2. **अनन्वयं द्योतयतीति** 'तेषामृक् यत्रार्थवशेन पादव्यवस्था [जै. सू. २.१.३५] इति जैमिनिसूत्रमपि अत्र उपोद्बलकं भवतीत्यपि बोध्यम्। 'वृत्तवशेन वा' इति व्याख्यातॄणां अधिकावापस्तु अविप्रतिपन्नान्वयस्थलीयाया ऋचः ऋग्लक्षणनिर्वाहायेति नात्र तदवष्टम्भो युक्तः।

कामानित्यनेनान्वेति। तथा च सहेति यौगपद्ये। ब्रह्मणेति इत्थंभावे तृतीया। तादात्म्येन च ब्रह्म [1]अश्नुवानस्य लक्षणम्। तथा च, ब्रह्मात्मना सर्वान् कामान् युगपदश्नुते-इति प्रतिपादने प्रकरणानुगुण्यम्। ब्रह्मणा सहेति प्रतिपादने तु निर्गुणप्रकरणविरोधोऽपि स्यात्। उपक्रमोपसंहारैकरूप्यावधृतं निर्गुणप्रकरणं च प्रबलम्।

'ब्रह्मविदाप्नोति परं' इति प्राप्यप्राप्तृभावेन भेदनिर्देशस्त्वापाततः। आप्नोतीत्यस्य भवत्यर्थकत्वात्। 'ब्रह्म वेद ब्रह्मैव भवति' [मु. उ. ३. २. ९] इति हि श्रुत्यन्तरम्। अपि च—'असतो मा सद्गमय, तमसो मा ज्योतिर्गमय, मृत्योर्मामृतं गमय' [बृ. उ. १. ३. २८] इति मन्त्राः। तेषां च ब्राह्मणं—'स यदाह असतो मा सद्गमयेति-मृत्युर्वा असत् सदमृतं मृत्योर्माऽमृतं गमय अमृतं माकुर्वित्येवैतदाह, तमसो मा ज्योतिर्गमयेति-मृत्युर्वै तमो ज्योतिरमृतं मृत्योर्माऽमृतं गमय अमृतं माकुर्वित्येवैतदाह, मृत्योर्माअमृतं गमयेति नात्र तिरोहितमिवास्ति' इति। अत्र मन्त्रद्वये गमयेत्यस्य कुर्वित्यर्थप्रदर्शनेन, तृतीयमन्त्रे मृत्यादिपदानामव्याख्येयत्वेऽपि गमयेत्यस्य कुर्वित्यर्थपरतया व्याख्येयत्वमस्तीति द्योतयितुं 'नात्र तिरोहितमिवेति' इवशब्दः प्रयुक्तः। परं तु पूर्ववदेव गमयेत्येतत् व्याख्यातुं शक्यत इति स्पष्टतया न व्याख्यातम्। क्वचिद्व्युत्पत्तेर्दर्शितायाः सर्वत्रोहितुं शक्यत्वात्। एतत्पर्यालोचनया मोक्षप्रकरणे प्राप्त्यर्थकानि पदानि तद्भावापत्तिपराणीत्यवगम्यते।

अतो 'ब्रह्मविदाप्नोति परं' इत्यादिः सन्दर्भः सर्वोऽपि निर्विशेषब्रह्मपर एवेति।

ननु—आनन्दमय इत्यत्र विकारार्थमयडन्तत्वे प्रायपाठः प्रयोजक इत्युक्तं, तन्न सम्भवति—अन्नरसमय इत्यत्र, नित्यशब्दस्य 'नित्यं वृद्धशरादिभ्यः' इति सूत्रगतस्य [2]सामान्यापेक्षज्ञापकताश्रयणेन मयट् विकारार्थ इत्यस्तु, अन्नात् पुरुष

---

1. अश्नुवानस्य ब्रह्म तादात्म्येन लक्षणं इति सम्बन्धः।

2. **सामान्यापेक्षेति** वृद्धावृद्धविषयेत्यर्थः। उपपादितमेतत् वृत्तिकारमतेन विकारशब्दादितिसूत्रव्याख्यानावसरे।

इति [1]पूर्ववाक्यानुसारात् 'तत आगतः' इत्यधिकारगतेन मयट्चेतिसूत्रेण वा भवतु। विकार एव [2]आगतत्वोपचाराश्रयणात्। विज्ञानमये तु किमर्थं एतादृशक्लेशानुसारेण विकारार्थमयडन्तता स्वीकर्तव्या। ततस्तत्र प्राचुर्यार्थ एव मयडस्तु। तथा च न विकारप्रायपाठः—इत्यपि [3]कश्चिद्वदेत्।

तत्र यद्यपि इत्थमपि वक्तुं शक्यम्—येनापि प्राचुर्ये मयट् स्वीकर्तव्यः तस्यापि क्लेशस्तदवस्थ एव। तथा हि—यदि विज्ञानमयशब्दो जीवपरः, तदापि प्रचुरं विज्ञानं जीव इति वक्तुं न शक्यते। जीवोऽणुरिति मते व्याप्त्यात्मकस्य प्राचुर्यस्यासम्भवात्। प्रचुरं विज्ञानं अस्मिन्-इत्यपि वक्तुं न शक्यम्। जीवविज्ञानस्य संकुचितत्वात्। सिद्धान्तेऽपि अन्तःकरणोपाधिकस्य जीवस्य न प्रचुरविज्ञानरूपता। तस्य सामान्यतः शरीरमात्रपरिमाणत्वात्, विशेषतश्च अन्तःकरणगोलकहृदयमात्रव्यापित्वात्, विज्ञानमयशब्देन च सिद्धान्ते बुद्ध्युपाधिकस्यैव जीवस्य ग्रहणात्। बुद्धिरूपः कोशस्तु परमते विज्ञानमयशब्देन ग्रहीतुमिष्ट एव न भवति। सिद्धान्ते तु यद्यपि तद्ग्रहणमिष्टं, तथापि न तस्य प्रचुरता। गोलकमात्रवृत्तित्वात्। इन्द्रियप्रणालिकयापि विषयेष्वेव व्याप्तिः, न तु सर्वत्र। एवं प्रचुरविज्ञानाश्रयत्वमपि नास्ति। प्रस्तुतत्वं तु न [4]जीवबुद्धितज्ज्ञानानां सम्भवति। प्रस्तुतत्वं हि प्रकृतत्वम्। इह च ब्रह्मैव प्रकृतम्, न त्वन्यत्। प्रस्तुतत्वगर्भमेव च प्राचुर्यं मयडर्थः। ततश्च क्लेशस्य प्राचुर्यपक्षेऽपि तुल्यतया प्रायपाठानुरोधी विकारार्थ एव मयट् विज्ञानमयशब्दे भविष्यति। सामान्यापेक्षं च ज्ञापकं इह प्रकरणे [5]अन्नरसमयकोशे लब्धवृत्तिकम्। तथा च उपस्थितत्वात् 'नित्यं वृद्धशरादिभ्यः' इत्यनेन मयड्ग्रहणे न क्लेशः। एवं 'तत आगतः' इति मयड्ग्रहणेऽपि न क्लेशः। न हि विज्ञानमय इत्यत्रैव आगतत्वेन विकार उपचर्यते। किं तु 'तत आगतः' इत्यत्रैव गौणमुख्यागतत्वं

---

1. मु. 'पूर्व' नास्ति
2. **आगतत्वोपचारेति** उपपादितं चैतत् वृत्तिकारमतेनव्याख्यानावसरे
3. **कश्चित्** - विशिष्टाद्वैतमतानुसारी
4. मु. जीवतद्बुद्धि
5. **अन्नरसमयकोशे** कोशवाचके अन्नरसमयशब्दे

**अपिच आनन्दप्रचुर इत्युक्ते दुःखास्तित्वं [ल्पीयस्त्वमपि] गम्यते प्राचुर्यस्य लोके प्रतियोग्यल्पत्वापेक्षत्वात्। तथा च सति, 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' (छा. उ. ७।२४।१) इति भूम्नि ब्रह्मणि तद्व्यतिरिक्ताभावश्रुतिरुपरुध्येत।**

**प्रतिशरीरं च प्रियादिभेदात् आनन्दमयस्य भिन्नत्वम्। ब्रह्म तु न प्रतिशरीरं भिद्यते, 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यानन्त्यश्रुतेः, 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' (श्वे. उ. ६।११) इति च श्रुत्यन्तरात्।**

---

विवक्षितं, 'ध्रुवमपायेऽपादानं' इति सूत्र इव अपायपदं गौणमुख्यापायपरम्। अतो विज्ञानमय इत्यत्रापि विकार एव मयट् इति।

अथापि [यदि] कश्चित् प्राचुर्य एव मयडिति निर्बध्नीयात्, तत्र च, विज्ञानं प्रचुरमस्मिन्नित्यर्थं वदेत्, तदनुसारेण आनन्दमय इत्यत्रापि तत्समानार्थतां वदेत्, तथापि न ब्रह्मपरत्वमित्याह—**अपि च आनन्दप्रचुर इत्युक्ते दुःखास्तित्वं गम्यत इति**। अयं भावः प्राचुर्यं हि आधिक्येन व्याप्तिः। आधिक्यं च किञ्चिदवध्यपेक्षम्। यश्चावधिः तस्याल्पत्वं द्योत्यते। तत्र विज्ञानमय इत्यत्र स्वसमानाधिकरणविजातीयाल्पत्वमादाय पर्यवसानं प्राचुर्यस्य वक्तव्यम्। लोके हि 'एषां ग्रामाणां मध्ये ब्राह्मणप्रचुरः को ग्रामः' इत्यत्र ग्रामान्तरगत-ब्राह्मणाल्पत्वं निरूपकमाधिक्यस्य प्रतीयते। तथैव प्रश्नतात्पर्यात्। तदुत्तरेऽपि 'ब्राह्मणप्रचुरोऽयं ग्रामः' इति व्यधिकरणसजातीयाल्पत्वमेव निरूपकम्। एवं 'ब्राह्मणप्रचुरोऽयं ग्रामः' इत्यत्र तद्ग्रामगतशूद्राल्पत्वमपि [1]निरूपकं भवति। तथा च तात्पर्यानुसारेण क्वचित् व्यधिकरणसजातीयाल्पत्वनिरूपितं प्राचुर्यं क्वचित् समानाधिकरणविजातीयाल्पत्वनिरूपितमिति द्वेधा सम्भवेऽपि विज्ञानमयशब्दस्य [2]परमते जीवपरत्वात् न तत्र व्यधिकरणसजातीयाल्पत्वमादाय पर्यवसानमाधिक्यस्य। जीवभिन्नेश्वरगतज्ञानस्यैवाधिकत्वात्। अतः समानाधिकरणेच्छादिवृत्तीनामल्पत्व-

---

1. मु. वर्णितं भवति 2. **परमते** - विशिष्टाद्वैतिमते

नच आनन्दमयस्य अभ्यासः श्रूयते। प्रातिपदिकार्थमात्रमेव हि सर्वत्राभ्यस्यते–'रसो वै सः। रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति। को ह्येवान्यात् कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्।' 'सैषानन्दस्य मीमाꣳसा भवति।' 'आनन्दं ब्रह्मणो विद्वान्। न बिभेति कुतश्चनेति।' (तै. उ २।७।८।९) इति 'आनन्दो ब्रह्मेति व्यजानात्।' (तै. उ ३।६) इति च। यदि च आनन्दमयशब्दस्य ब्रह्मविषयत्वं निश्चितं भवेत्, ततः उत्तरेषु आनन्दमात्रप्रयोगेष्वपि आनन्दमयाभ्यासः कल्प्येत। न त्वानन्दमयस्य ब्रह्मत्वमस्ति, प्रियशिरस्त्वादिभिर्हेतुभिः-इत्यवोचाम। तस्मात् श्रुत्यन्तरे 'विज्ञानमानन्दं ब्रह्म' (बृ. उ. ३।९।२८) इति आनन्दप्रातिपदिकस्य ब्रह्मणि प्रयोगदर्शनात् 'यदेष आकाश आनन्दो न स्यात्' इत्यादिः ब्रह्मविषयः प्रयोगः न त्वानन्दमयाभ्यासः इत्यवगन्तव्यम्। यस्त्वयं मयडन्तस्यैव आनन्दशब्दस्य अभ्यासः–'एतमानन्दमयमात्मानमुपसंक्रामति' (तै. उ. २।८) इति, न तस्य ब्रह्मविषयत्वमस्ति; विकारात्मनामेव अन्नमयादीनां अनात्मनां उपसंक्रमितव्यानां प्रवाहे [पठि] (पति) तत्वात्।

ननु-आनन्दमयस्योपसंक्रमितव्यस्य अन्नमयादिवदब्रह्मत्वे सति नैव विदुषो ब्रह्मप्राप्तिः फलं निर्दिष्टं भवेत्। नैष दोषः–आनन्दमयोपसंक्रमणनिर्देशेनैव पुच्छप्रतिष्ठाभूतब्रह्मप्राप्तेः फलस्य निर्दिष्टत्वात्, 'तदप्येष

---

मादाय पर्यवसानं वक्तव्यम्। ततश्च विज्ञानमय इत्यत्र समानाधिकरणविजातीयाल्पत्वमादाय [1]प्राचुर्यपर्यवसानस्य कृतत्वात् तत्प्रायेपठितानन्दमयशब्दस्य प्राचुर्यार्थत्वपक्षे समानाधिकरणविजातीयाल्पत्वमादाय प्राचुर्यस्य पर्यवसानमायातीति नायं परमेश्वर इति।

उपसंक्रमितव्यानामिति। तादात्म्यबुद्ध्युपगृहीतानां तत्परित्यागेनातिक्रमणीयानाम्।

---

1. मु. 'प्राचुर्य' नास्ति

श्लोको भवति। यतो वाचो निवर्तन्ते।' इत्यादिना च प्रपञ्च्यमानत्वात्। या तु आनन्दमयसंनिधाने 'सोऽकामयत। बहुस्यां प्रजायेय' इति इयं श्रुतिरुदाहृता सा 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यनेन सन्निहिततरेण ब्रह्मणा संबध्यमाना न आनन्दमयस्य ब्रह्मतां प्रतिबोधयति। तदपेक्षत्वाच्च उत्तरस्य ग्रन्थस्य 'रसो वै सः' इत्यादेः नानन्दमयविषयता।

ननु 'सोऽकामयत' इति ब्रह्मणि पुंलिङ्गनिर्देशो नोपपद्यते। नायं दोषः - 'तस्माद्वा एतस्मात्' (आत्मन आकाशः संभूतः) इत्यत्र पुंलिङ्गेना(ऽऽत्मा)त्मशब्देन ब्रह्मणः प्रकृतत्वात्। या तु [यत्तु] भार्गवी वारुणी विद्या 'आनन्दो ब्रह्मेति व्यजानात्' इति, तस्यां मयडश्रवणात् प्रियशिरस्त्वाद्यश्रवणाच्च युक्तं आनन्दस्य ब्रह्मत्वम्। तस्मात् अणुमात्रमपि विशेषं अनाश्रित्य न स्वत एव प्रियशिरस्त्वादि ब्रह्मण उपपद्यते। न चेह सविशेषं ब्रह्म प्रतिपिपादयिषितं, वाङ्मनसगोचरातिक्रमश्रुतेः।

तस्मात् अन्नमयादिष्विव आनन्दमयेऽपि विकारार्थ एव मयट् विज्ञेयो न प्राचुर्यार्थः।

---

**तस्माद्वा एतस्मादित्यत्र पुल्लिङ्गेनात्मशब्देनेति**। उपलक्षणमेतत्। तस्यैषएवशारीरआत्मेति आनन्दमयपर्यायपठितेन [1]श्लोकेन आनन्दमयं प्रत्यात्मत्वेन ब्रह्मणः प्रस्तुतत्वात्। न च - आत्मशब्दो न ब्रह्मासाधारणः, सर्वेष्वपि कोशेषु [प्रयुक्तत्वात्]। तथा च न ब्रह्मणः पुल्लिङ्गेन स्वासाधारणशब्देन सन्निधानमिति - वाच्यम्। असन्नेवसभवतीतिमन्त्राम्नानस्य ब्रह्मपरत्वसिद्धौ ब्रह्मशब्दसमभिव्याहृतस्य [2]तस्य ब्रह्मासाधारणत्वोपपत्तेः। न च तथासति असन्नेवसभवतीति मन्त्रे वेदनक्रियाविशेषणस्य[3] ब्रह्मणो न शाब्दं

---

1. **श्लोकेन** - वाक्येन

2. **तस्य** - आत्मशब्दस्य।

3. **वेदनक्रियाविशेषणस्येति** प्रत्ययार्थकर्मत्वद्वारा इत्यादिः।

सूत्राणि त्वेवं व्याख्येयानि—'ब्रह्म पुच्छं प्रतिष्ठा' इत्यत्र

---

प्राधान्यं सम्भवतीति वाच्यम्। वेद्यत्वेनैव आर्थप्राधान्योपपत्तेः। वेद्यत्वनिर्देशे हि कृत्स्नं प्रकरणं तद्वेदनोद्देशेन प्रवृत्तमिति उद्देश्यज्ञानविषयत्वरूपं प्राधान्यं प्राप्नोति। तस्यैषएवशारीरआत्मेतिमन्त्रेषु[1] विशेष्यत्वेन निर्देशरूपमपि प्राधान्यमस्तीति सर्वनाम्ना परामर्शे न काचिदनुपपत्तिः। आनन्दमयपरामर्शवादिनाऽपि हि आत्मशब्दोऽनुसर्तव्यः[2]। आनन्दमयपदस्य यौगिकतया तत्र आत्मशब्दस्यैव 'अन्योऽन्तर आत्माऽऽनन्दमयः' इति पठितस्य विशेष्यसमर्पकत्वात्[3]। अतो नोत्तरसन्दर्भपर्यालोचनयाऽप्यानन्दमयस्य ब्रह्मत्वम्।

एवं 'अन्योऽन्तर आत्माऽऽनन्दमयः' इति वाक्यमुदाहृत्य आनन्दमयपदं ब्रह्मपरमिति [4]यत् वृत्तिकृता अधिकरणपर्यवसानं कृतं तन्निरस्तम्।

इदानीं स्वयं 'ब्रह्म पुच्छं प्रतिष्ठा' इति वाक्यमुदाहृत्य तद्वाक्यपर्यालोचनया ब्रह्मण आनन्दमयशेषत्वं न प्राप्नोतीत्येवमर्थपरतया सूत्रैरधिकरणमारचयति—**सूत्राणि त्विति**। अस्मिन् प्रकरणे हि कोशवाक्येषु तत्तत्कोशानां पक्षित्वेनोपासनं विवक्षितम्। भूमविद्यायां 'नामब्रह्मेत्युपासीत' [छा. उ. ७. १] इत्यादौ 'यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति' इति फलनिर्देशाख्यातयोः[5] सत्त्वेन उपासनविवक्षावत् इहापि 'सर्वं वै तेऽन्नमाप्नुवन्ति। येऽन्नं ब्रह्मोपासते' इति [6]तयोः सत्त्वेन उपासनविवक्षोपपत्तेः। तत्र

---

1. **मन्त्रेषु** - वाक्येषु

2. **अनुसर्तव्यः** - आनन्दमयस्य 'सोऽकामयत' इत्यत्र स इति पुल्लिङ्गपदेन परामर्शोपपादकशब्दप्राधान्यसंपादकत्वेन आश्रयणीयः। तत्र आनन्दमयासाधारण्यं आत्मशब्दस्य नास्तीति शङ्कायाः आर्थप्राधान्यमादायैव परैरपि परिहारः कर्तव्य इति भावः।

3. रूढयौगिकयोः समभिव्याहारे रूढस्यैव विशेष्यवाचकत्वनियमात्, अन्यथा पाचकः पुरुष इत्यर्थे पुरुषपाचक इत्यपि प्रयोगस्य प्रामाणिकत्वापत्तेः इति भावः।

4. मु. 'यत्' नास्ति 'वृत्तिकारमताधिकरण'

5. **आख्यातयोरिति**—आख्यातं-विधिप्रत्ययरूपं आख्यातम्।

6. **तयोः**—फलनिर्देशाख्यातयोः। मु. इत्येतयोः

**किमानन्दमयस्यावयवत्वेन ब्रह्म विवक्ष्यते उत स्वप्रधानत्वेनेति ? पुच्छशब्दात् अवयवत्वेनेति प्राप्ते उच्यते—'आनन्दमयोऽभ्यासात्'। आनन्दमय आत्मेत्यत्र 'ब्रह्म पुच्छं प्रतिष्ठा' इति स्वप्रधानमेव ब्रह्म उपदिश्यते, अभ्यासात्–'असन्नेव स भवति' इत्यस्मिन्निगमनश्लोके ब्रह्मण एव केवलस्य अभ्यस्यमानत्वात् ।**

---

च पुच्छशब्दः अन्नमयादिषु तत्तत्कोशैकदेशेषु पुच्छत्वदृष्ट्यभिप्रायः । ननु—अन्नमयादयः पक्षित्वेन निरूपिताः । पक्षिणां च पुच्छं नास्ति । पश्ववयवविशेषवाची हि पुच्छशब्दः । 'पुच्छोऽस्त्री लोमलांगूलं' इति लाङ्गूलापरपर्यायतया कोशकाराभिधानात् । 'तस्माद्वयांसि पुच्छेनैव प्रतितिष्ठन्ति' [ऐ. आ. १.४.२] इत्यादिस्तु अकच्छःपुच्छकच्छश्चेत्यादिवत् लम्बमानपश्चादवयवत्वेन गौणः प्रयोगः । अतः कथं 'इदं पुच्छं प्रतिष्ठा' इत्यादिभिर्वाक्यैः पुच्छत्वेनावयवविशेषनिरूपणं —इति चेत्, तर्हि प्रकृतेऽपि पश्चाल्लम्बमानावयवत्वेनैव अवयवविशेषाणां निरूपणं पक्षित्वोपासनाङ्गं भविष्यति । तथा च प्रायपाठानुसारेण पक्षित्वेन निरूपिते आनन्दमये ब्रह्मपुच्छंप्रतिष्ठेतिवाक्यं पश्चाल्लम्बमानावयवत्वदृष्टिविधायकं सत् आनन्दमयगुणतयैव ब्रह्म प्रतिपादयतीति प्रतीयते, उपक्रमोपसंहारैकरूप्यावधृतप्राधान्यस्य ब्रह्मणः ब्रह्मपदेन प्रत्यभिज्ञानात् प्राधान्येनैव ब्रह्म प्रतिपादयतीत्यपि प्रतीयते । ततश्च संशय इत्याह—**किमानन्दमयस्यावयवत्वेनेति** ।

'ईक्षतेर्नाशब्दं' इत्यत्र 'प्रायपाठानुसारेण ईक्षतिः गौणो न भवति, श्रुत्यपेक्षया प्रायपाठस्य दुर्बलत्वात्' इत्युक्तम् । इह तु, सिद्धान्तेऽपि[1] पुच्छशब्देनाधारत्वलक्षणात् प्रायपाठानुसारेण पश्चाल्लम्बमानावयवत्वविवक्षायां न श्रुतिविरोध इति सङ्गतिः[2] ।

**'आनन्दमयोभ्यासात्'** इत्यत्र आनन्दमयपदं ब्रह्मपुच्छंप्रतिष्ठेतिवाक्यं[3]

---

1. **सिद्धान्तेऽपि इति** यथा पूर्वपक्षे पुच्छशब्दस्य लक्षणा तथा सिद्धान्तेऽपि इत्यर्थः । लक्ष्यार्थस्तु पूर्वपक्षे पुच्छत्वदृष्टिः, सिद्धान्ते आधारत्वम् ।

2. **सङ्गतिः**—प्रत्युदाहरणसङ्गतिः ।

3. उक्तञ्चैतत् 'आनन्दमयआत्मेत्यत्र ब्रह्मपुच्छं प्रतिष्ठेति' इति भाष्येणेति भावः ।

लक्षयति। प्राधान्येनब्रह्मप्रतिपादकमिति साध्याध्याहारः। इदं च साध्यं अभ्यासादिति हेतुबलादेव लभ्यते। तात्पर्यलिङ्गान्तर्गतस्याभ्यासस्य प्राधान्यसाधन एव स्वारस्यात्। आनन्दमयस्य ब्रह्मत्वसाधनपरतया सूत्रव्याख्याने च अभ्यासादिति हेतोः [1]स्वारस्यं न लभ्यते। [2]जैवानन्दविलक्षणानन्दत्वस्यापि ब्रह्मलिङ्गत्वेन तल्लिङ्गादित्येव निर्देशे तत्सङ्ग्रहोपपत्तेः तदभ्यासपर्यन्तधावनस्य निष्फलत्वात्। प्राधान्यरूपे च साध्ये आनन्दमयस्यानन्वयात् तेन पदेन ब्रह्मपुच्छंप्रतिष्ठेतिवाक्यलक्षणायां न काचिदनुपपत्तिः। न हि 'यथाश्रुतसूत्रार्थो ग्राह्यः' इत्येतावन्मात्रमुत्सर्गमवलम्ब्य श्रुतिविरुद्धमपि आनन्दमयस्य स्वप्रधानत्वं वक्तुं शक्यम्।

ब्रह्मपुच्छमभ्यासादित्येव वक्तुमुचितत्वेऽपि लाक्षणिकानन्दमयपदप्रयोगः अर्थान्तरग्रहणेन शङ्काविशेषो निराकर्तव्य इति द्योतनार्थः। ब्रह्मपुच्छंप्रतिष्ठेत्यनेन प्राधान्येन ब्रह्म प्रतिपाद्यते, न त्वानन्दमयशेषत्वेन, 'असन्नेव स भवति' इति मन्त्रे अभ्यासानुसारेण ब्रह्मणः प्राधान्यावगमात् इहापि तस्यैव प्रत्यभिज्ञानात् स्वप्रधानमेव ब्रह्म भविष्यति—इत्युक्ते, प्रायपाठसहकृतोपक्रमस्थपुच्छशब्दस्वारस्यानुसारेण असन्नेवसभवतीतिमन्त्रे ब्रह्मपदं आनन्दमयलक्षकमस्तु, ततश्चासिद्धो हेतुः इति शङ्कायां, 'आनन्दमयो न निगमनश्लोकप्रतिपाद्यः' इति साध्याध्याहारेण सूत्रयोजना। तत्र च - अभ्यासादित्यनेन, निगमनश्लोके ब्रह्मपदाभ्यासात् तत्रैव सइति एनमिति पदेन आनन्दमयस्य ब्रह्मपदार्थगोचरसदसत्त्वज्ञानाधीनसदसत्त्वाश्रयतयाऽभ्यासाच्च न एकमुपक्रमस्थं[3] पुच्छपदमनुसृत्य अनेकपदबाधनेन निगमनश्लोकस्यानन्दमयविषयत्वं करणीयं भूयोऽनुग्रहन्यायात् इति प्रतिपाद्यते।

---

1. **स्वारस्यं न लभ्यत इति**—एतेन 'स्वरसमपि च नः सूत्रं' इति श्रुतप्रकाशिकोक्तं निरस्तम्।

2. **जैवानन्दविलक्षणानन्दत्वस्यापीत्यादि** आनन्दस्य जीवब्रह्मसाधारणत्वात् तदभ्यासमात्रेण ब्रह्मत्वं न सिद्ध्यतीति आनन्दे जीवानन्दवैलक्षण्यं अवश्यं निवेश्यम्। तस्य च ब्रह्मलिङ्गत्वेन तल्लिङ्गात् इत्युक्तौ जगत्कारणत्वादिवत् जीवानन्दविलक्षणाभ्यस्यमानानन्दस्यापि सङ्ग्रहसंभवात् तदभ्यासपर्यन्तधावनं निष्फलं इति भावः।

3. आ. उपक्रमस्थमपि।

**'विकारशब्दान्नेति चेन्न प्राचुर्यात्'। विकारशब्दः अवयवशब्दोऽभिप्रेतः। पुच्छमिति अवयवशब्दात् न स्वप्रधानत्वं ब्रह्मण इति यदुक्तं, तस्य परिहारो वक्तव्यः। अत्रोच्यते—नायं दोषः, प्राचुर्यादप्यवयवशब्दोपपत्तेः। प्राचुर्यं-प्रायापत्तिः, अवयवप्राये वचनमित्यर्थः।**

---

पुच्छशब्दस्य गतिं वक्तुं **'विकारशब्दान्नेति चेन्न प्राचुर्यात्'** इति सूत्रम्। तत्र विकारपदं अवयवपरतया व्याचष्टे—**विकारशब्द इति**। अवयवशब्दादित्येव वक्तव्ये विकारपदप्रयोगः सूत्रे शङ्कान्तरद्योतनार्थः।

इत्थं हि सिद्धान्ती वदति 'ब्रह्मपुच्छंप्रतिष्ठेत्यत्र पुच्छपदमाधारलक्षकम्' इति। तत्रेदं शङ्कान्तरं—तथासति पुच्छपदस्य आधारे निरर्थिका लक्षणा स्यात्, प्रयोजनं विना लक्षणाश्रयणं दोष इति हि आलङ्कारिका मन्यन्ते इति। अस्मिन्नर्थे विकारशब्दो दोषपरः। विपूर्वस्य कृञो विकृताननेत्यादौ दोषपरोऽपि प्रयोगो दृश्यते।

प्राचुर्यात् इत्युत्तरम्। निरर्थिका लक्षणा न भवति। पूर्ववत् आनन्दमयेऽपि पक्षित्वेन निरूपिते[1] किञ्चित् पुच्छं वक्तव्यमिति तत्साम्याय अत्र पुच्छपदप्रयोगः। तावताऽप्याधारो लक्षयितुं शक्यत इति।

ननु पूर्वत्रावयवपरः पुच्छशब्दः इह त्वाधारतापर इति कथमर्थभेदे [2]साम्यम्। अतः इहापि साम्यसिध्यर्थमवयवलक्षणैवाश्रयणीयेति चेत्-इति पुनरपि शङ्का।

विवक्षितार्थानुसारेण समानशब्दप्रयोगमात्रेण साम्यापादनसम्भवे[3] विवक्षितविरुद्धार्थग्रहणेन साम्यापादनस्यानुचितत्वात्, अर्थभेदेऽपि शब्दैक्यमात्रेण साम्यस्य प्राचुर्यात् - इति परिहारार्थः।

[4]अत्र हि ब्रह्मपुच्छंप्रतिष्ठेति पुच्छपदं न केवलं पूर्वपर्यायसाम्यमात्रार्थं प्रयुक्तम्। अपि तु शङ्कान्तरनिवृत्तयेऽपि। तथा हि-उपक्रमे

---

1. आ. रूपिते।
2. मु. साम्यमवगम्यते। इहापि
3. मु. सम्भवेऽपि।
4. विवक्षितार्थानुसारेण इत्युक्तम्, विवक्षितमर्थं निरूपयति—**अत्र हीत्यादिना**।

ब्रह्मण आनन्त्ये प्रतिज्ञाते जडवर्गस्य तद्विवर्ततया वस्तुपरिच्छेदकत्वं नास्तीति सृष्टिवाक्यादवगमेऽपि जीवस्य ब्रह्मविवर्तत्वासम्भवेन तेन वस्तुपरिच्छेदशङ्कायां तस्यैव ब्रह्मणो गुहानिहितत्वं जीवरूपेणोक्तम्। तत्रापि, ब्रह्मण एव गुहानिहितत्वोक्त्या जीवब्रह्मणोस्स्वरूपैक्यं कथं निर्धार्यते, उपक्रमे प्राप्यप्राप्तृभावेन निर्दिष्टयोर्जीवब्रह्मणोर्भेदावश्यंभावात्, अशनायाद्यूर्मियुक्तस्य जीवस्य ब्रह्मणा स्वरूपैक्यासम्भवाच्च—इति शङ्काद्वयं प्रसक्तम्। तत्र - उपक्रमे प्राप्तिः नगरादेरप्राप्तस्येव न ब्रह्मणोऽप्राप्तस्यैव विवक्षिता, अपि तु कण्ठचामीकरन्यायेन प्राप्तस्यैवाप्राप्तत्वभ्रमापोहेन - इति द्योतयितुं परमेव्योमन्निति जीवाधारतया गुहायामेव ब्रह्मसन्निधानमुक्तम्। अशनायादयश्चोर्मयो न जीवस्य स्वाभाविकाः, अपि त्वन्नमयादिविज्ञानमयान्तकोशोपाधिकाः - इति दर्शयितुं विज्ञानमयान्तान् कोशान्निरूप्य तच्छिरस्येव विज्ञानंयज्ञंतनुतइति कर्तृत्वं निक्षिप्तम्। ततश्चायमर्थो भवति—अन्नमयादिकोशविशिष्टं चैतन्यं जीव इत्युच्यते यः अहमितिप्रतीयते। तत्र च विशेष्यस्वरूपभूतं चैतन्यं ब्रह्मैवेति विशुद्धचैतन्यांशमादाय स्वरूपैक्ये न काचिदनुपपत्तिः इति। तत्रेयं शङ्कोन्मिषति—एवं तर्हि विशिष्टजीवस्वरूपान्तर्गतमेव ब्रह्म। ततश्च कथं जीवः स्वान्तर्गते ब्रह्मणि परमव्योमशब्दिते वियत इति वक्तुं शक्यते? यावता आसनादीनामाधाराणां स्वानन्तर्गतत्वदर्शनात् - इति। तन्निवृत्तिश्च आनन्दमयस्य जीवस्य पक्षित्वकल्पनया ब्रह्मणश्च पुच्छत्वकल्पनया निर्वर्त्यते। पक्षिणो हि शिरःपक्षाद्यवयवावच्छिन्नस्य पुच्छं स्वान्तर्गतमेव आधारः। 'तस्माद्वयांसि पुच्छेनैव प्रतितिष्ठन्ति पुच्छेनैव प्रतिष्ठायोत्पतन्ति। प्रतिष्ठा हि पुच्छम्' [ऐ. आ.] इति श्रुतेः। इदं च ब्रह्मपुच्छंप्रतिष्ठेत्यत्र पुच्छशब्देनाधारलक्षणायां प्रयोजनम्। पक्षिणः स्वान्तर्गतपुच्छे इव जीवस्य स्वान्तर्गते ब्रह्मणि स्थितिः इत्यर्थद्योतनात्। एतादृशशङ्कानिवारणार्थं आनन्दमयस्य पक्षित्वनिरूपणप्रसक्तौ तद्दृढीकरणाय पूर्वेषामपि[1] कोशानां पक्षित्वं निरूप्य तदाश्रितं प्रसङ्गात् किञ्चिदुपासनमपि दर्शितम्। ततश्च पूर्वेषु पर्यायेषु पुच्छपदस्यावयवविशेषपरत्वेऽपि इह [2]आधारपरतैव पुच्छपदस्याश्रयणीया।

1. मु. 'अपि' नास्ति 2. मु. आधारतैव

**अन्नमयादीनां हि शिरआदिषु पुच्छान्तेष्ववयवेषु उक्तेषु आनन्दमयस्यापि शिरआदीन्यवयवान्तराण्युक्त्वा अवयवप्रायापत्त्या 'ब्रह्म पुच्छं प्रतिष्ठा' इत्याह, न अवयवविवक्षया। यत्कारणं अभ्यासादिति स्वप्रधानत्वं ब्रह्मणः समर्थितम्।**

**'तद्धेतुव्यपदेशाच्च'। सर्वस्य हि विकारजातस्य सानन्दमयस्य कारणत्वेन ब्रह्म व्यपदिश्यते—'इद॰ सर्वमसृजत। यदिदं किंच'**

---

दृश्यते च अर्थभेदेऽपि शब्दसाम्येन प्रायपाठनिर्वाहः प्राचुर्येण। तद्यथा—'इन्द्रियेभ्यः परा ह्यर्थाः' [क. उ. १-३-१०] इत्यत्र इन्द्रियादीनामव्यक्तपर्यन्तानां परत्वं पूर्वपूर्वमपेक्ष्य आनुमानिकाधिकरणे वक्ष्यमाणया रीत्या अन्यदेव। 'अव्यक्तात् पुरुषः परः' [क. उ. १-३-११] इत्यत्र तु पुरुषस्य अव्यक्तात् परत्वं 'सा काष्ठा सा परागतिः' इतिवाक्यशेषानुसारेण परमपुरुषार्थरूपत्वम्, 'एष सर्वेषु भूतेषु गूढोऽत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या' इति वाक्यशेषानुसारेण [1]सर्वप्रत्यगात्मभूतत्वम्, अग्र्यबुद्धिग्राह्यत्वरूपं सूक्ष्मत्वम्, 'अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च' इति वाक्यपर्यालोचनया व्यापकत्वरूपम्। एतत्सर्वं 'अव्यक्तात् पुरुषः परः' इत्यत्र उत्कर्षपरेण परशब्देन विवक्षितम्। ततश्च तस्य सन्दर्भस्य सोपानारोहणन्यायेन पूर्वस्मात्पूर्वस्मादुत्तरोत्तरस्य परत्वबोधनपूर्वकं सर्वतःपरं ब्रह्मेति बोधयितुं प्रवृत्तस्य अर्थभेदे सत्यपि परशब्दसाम्यमात्रेण प्रायपाठो निर्वहणीयः। एवं गार्गिब्राह्मणे ओतप्रोतप्रक्रियायां 'एतस्मिन् नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' [बृ. उ. ३-८-११] इति ब्रह्मणि सर्वपदार्थाश्रयस्याव्याकृताकाशस्य अन्यदेव ब्रह्माधीनसत्तास्फूर्तिमत्त्वरूपमोतप्रोतत्वम्, अबादिब्रह्मलोकान्तानां [2]उत्तरोत्तरस्मिन् अन्यदेवोतप्रोतत्वम्। ततश्च अर्थभेदे सत्यपि ओतप्रोतशब्दैक्यमात्रेण प्रायपाठो निर्वहणीयः। तद्वत् प्रकृतेऽपि भविष्यति।

**तद्धेतुव्यपदेशाच्च। सर्वस्य हि विकारजातस्येति।** अयं भावः—अन्नमयादिपर्यायेषु पुच्छशब्देनावयवलक्षणात् इहापि ब्रह्मणः पुच्छशब्देनावयवत्वं

---

1. मु. सर्वं प्रत्यात्म 2. मु. उत्तरोत्तरं

**(तै. उ. २।६) इति। न च कारणं सत् ब्रह्म स्वविकारस्यानन्दमयस्य मुख्यया वृत्त्या अवयव उपपद्यते। अपराण्यपि सूत्राणि यथासंभवं पुच्छवाक्यनिर्दिष्टस्यैव ब्रह्मण उपपादकानि द्रष्टव्यानि ॥ १९ ॥**

---

कल्पनीयं साम्यसिध्यर्थमिति यो वदति, [1]तस्य वैषम्यान्तरं दुरुत्तरं प्राप्नोति। पूर्वेषु पर्यायेषु हि इदंपुच्छंप्रतिष्ठेतिवाक्यैः तत्तत्कोशैकदेश एव पुच्छत्वं निबद्धम्। न च—मनोमयपर्याये 'तस्य यजुरेव शिरः' इत्यादिना अनवयवेष्वेव शिरआदि-पुच्छान्तदृष्टयः सम्पादिताः, प्राणमयकोशे च 'आकाश आत्मा। पृथिवी पुच्छं प्रतिष्ठा' इति अनवयव एव अवयवात्मपुच्छत्वे सम्पादिते—इति वाच्यम्। [2]तत्रापि यजुरादिवृत्तिलक्षणोपपत्तेः। ब्रह्मणश्च नानन्दमयैकदेशत्वम्। तं प्रत्यपि कारणत्वाम्नानात्। ततश्च ब्रह्मपुच्छंप्रतिष्ठेत्यत्र अनेकदेशेऽपि ब्रह्मणि आनन्दमय-पुच्छत्वाभ्युपगमे पूर्वपर्यायवैषम्यं प्राप्तमेव। [3]तद्वत् आधारतालक्षणाप्रयुक्तं वैषम्यं कुतो न सह्यते। यदि मनोमयप्राणमयपर्याययोर्यजुरादिशब्दा यथाश्रुता एव, तथासति क्वचिदनेकदेश एव शिरआदिदृष्टिः क्वचिदेकदेशे इति वैषम्यवत् क्वचित् पुच्छशब्दः अवयवविशेषलक्षकः क्वचिदाधारतालक्षक इत्यपि वैषम्यमस्तु। एतद्द्योतनार्थः सूत्रे चशब्दः। ततश्च औपसंहारिकैः [4]अनेकैः प्राधान्यलिङ्गैः एकं पुच्छपदं अप्राधान्यद्योतकं [5]तदानुगुण्येनान्यथाव्याख्येयमित्युक्तम्।

इदानीमुपक्रमानुसारेणाप्यन्यथाव्याख्येयमित्याह सूत्रकारः—**मान्त्र-वर्णिकमेव च गीयते।** मन्त्रवर्णे हि ब्रह्म स्वप्रधानमवगम्यते। तदेव च ब्रह्मपुच्छंप्रतिष्ठेत्यत्र ब्रह्मपदेन प्रत्यभिज्ञायते। अतः चरमश्रुतं पुच्छपदं ब्रह्म-पदानुसारेणाधारतालक्षकं भविष्यति।

ननु आनन्दमयं प्रति ब्रह्मणः पुच्छत्वेनावयवत्वाविवक्षायां आनन्दमयो-

---

1. आ. तस्यापि।

2. **तत्रापीति** मनोमयपर्याये यजुरादिशब्दानां तत्तद्विषयकमनोवृत्तिषु लक्षणा, प्राणमयपर्याये आकाशपृथिवीशब्दयोः आकाशपृथिवीसम्बन्धवतोस्समानोदानयोर्लक्षणा-इति भावः।

3. मु. तत्। 4. मु. 'अनेकैः' नास्ति। 5. **तदानुगुण्येनेति** प्राधान्य-लिङ्गानि तच्छब्दार्थः।

पासनं निरङ्गं स्यात्, पूर्वपर्यायेषु उपासनाङ्गतया गौणलांगूलत्वविवक्षादर्शनात्, इत्यत आह—**नेतरोऽनुपपत्तेः ।** आनन्दमय इह पर्याये उपास्यो न भवति, उपक्रमोपसंहारावधृतज्ञेयब्रह्मतात्पर्यके प्रकरणे उपासनविवक्षानुपपत्तेः इति ।

ननु यथा ब्रह्मप्रकरणेऽप्यन्नमयादिकोशेष्ववान्तरोपासनानि विवक्षितानि तद्वत् प्रकृतेऽपि किं न स्यात्, इत्यत आह—**भेदव्यपदेशाच्च ।** भेदः—वैलक्षण्यम् । पूर्वेषु पर्यायेषु फलनिर्देशः इह तु नास्ति इति वैलक्षण्यम् । ततश्च फलनिर्देशान्यथानुपपत्त्या तत्रोपासनविवक्षायामपि आनन्दमयस्य फलनिर्देशं विनैव व्यपदेशात् नेहोपासनविवक्षा ।

**कामाच्च नानुमानापेक्षा ।** पूर्ववदेव सोऽकामयतेति कारणप्रतिपादकवाक्यस्य प्रधानपरत्वनिराकरणार्थत्वेन व्याख्येयम् ।

ननु - आनन्दमयपर्याये फलनिर्देशो नास्तीत्यसङ्गतम् । सर्वकामावाप्तिरूपमेव उपक्रान्तं फलं तत्र भविष्यति । न च - तत् ब्रह्मविद्याफलम्, नानन्दमयविज्ञानफलमिति-वाच्यम् । आनन्दमयपुच्छांशमादाय आनन्दमयोपासनाया अपि ब्रह्मविद्यात्वसम्भवात् । न च उपक्रमगतं मोक्षाख्यं फलं न आनन्दमयोपासनातः सम्भवतीति वाच्यम् । मनोमयविज्ञानमयपर्याययोरपि 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कदाचन' इति, 'शरीरे पाप्मनो हित्वा । सर्वान् कामान् समश्नुते' इति च मोक्षफलस्याम्नानात् । तत्र चेच्चित्तशुद्ध्यादिद्वारा तत्फलकता, तर्हि प्रकृतेऽपि तथाऽस्तु, तत्राह—**अस्मिन्नस्य च तद्योगं शास्ति ।** उपक्रान्तं हि सर्वकामावाप्तिफलं ब्रह्मभावापत्तिरूपम् । तत् निर्विशेषं स्वतन्त्रं यत् ब्रह्म तद्विज्ञानादेव, न आनन्दमयशेषभूतब्रह्मविज्ञानात् । उपक्रमोपसंहारैकरूप्येण ब्रह्मविद्यायाः [1]स्वातन्त्र्यावगमात् । उपक्रमे हि 'ब्रह्मविदाप्नोति परं' इति स्वातन्त्र्यमवगतम् । उपसंहारेऽपि 'यतो

---

1. **स्वातन्त्र्यावगमादिति** अत्र ब्रह्मणः स्वातन्त्र्यमेव ब्रह्मविद्यायाः स्वातन्त्र्यम् । ब्रह्मणः स्वातन्त्र्यं च आनन्दमयपुच्छत्वरूपशेषताराहित्यम् । ब्रह्मविदाप्नोतीत्यत्र, यतोवाच-इति मन्त्रेऽपि 'आनन्दं ब्रह्मणो विद्वान्' इत्यत्र च ब्रह्मपदेन आनन्दमयाशेषत्वेनैव हि ब्रह्म अवगम्यते इत्यर्थः ।

वाचो निवर्तन्ते ' इति मन्त्रे स्वातन्त्र्यमवगम्यते। कथमेतस्य ब्रह्मप्रधानस्य पूर्वोत्तर-सन्दर्भस्य आनन्दमयपुच्छविषयत्वं वक्तुं शक्यम् । न च मोक्षाख्यं फलं आनन्द-मयोपासनात: सम्भवति । न च मनोमयविज्ञानमयकोशप्रतिबन्दी । मनोमयपर्याये हि तस्य श्लोकस्य आम्नानात् श्लोके च ' आनन्दं ब्रह्मणो विद्वान् । न बिभेति ' इति च दर्शनात् मनोमयोपासनं ब्रह्मविद्यासाधकमिति स्वीक्रियते । एवं [1]विज्ञान-मयकोशेऽपि ' शरीरे पाप्मनो हित्वा । सर्वान् कामान् समश्नुते ' इति वचनात् ब्रह्मविद्याप्रतिबन्धकीभूतकल्मषनिवृत्ति: तत्फलमिति स्वीक्रियते । नैवं [2]आनन्दमये स्पष्टं फलमाम्नातम् । अतो न आनन्दमयपर्याये उपासनविवक्षा । सूत्रयोजना पूर्ववदेव । परं तु तत्र, आनन्दमये इति स्थाने ब्रह्मणीति द्रष्टव्यम् । यद्यपि च प्रधाननिराकरणोपयोगिपूर्वसूत्रं एतदनन्तरं पठनीयम्, तथापि एतत्सूत्रोक्तं मोक्षाख्यं फलं प्रधाननिराकरणेऽपि उपयुज्यत इति एतस्मात्पूर्वं कृतम् ।

एतदधिकरणपूर्वपक्षे, उपक्रमोपसंहाराम्नाततत्तद्गुणविशिष्टब्रह्मपुच्छ-कानन्दमयोपासना तत एव च मोक्षाख्यं फलमिति सिध्यति । सिद्धान्ते तु, निर्विशेषब्रह्मपरमेव कृत्स्नं प्रकरणं तद्विज्ञानादेव मोक्ष इति सिध्यति ॥ १९ ॥

**इति आनन्दमयाधिकरणम् ॥ ६ ॥**

पृथिव्यन्तरिक्षद्युनक्षत्रादित्यशुक्लभारूपां ऋचं अग्निवाय्वादित्यचन्द्रम-आदित्यगतनीलभारूपं साम च प्रस्तुत्य आम्नातं 'अथ य एषोऽन्तरादित्ये हिरण्मय: ' इत्यादि ' य एवं वेद ' इत्यन्तम् । तदनन्तरं च ' तस्यर्क्च साम च गेष्णौ तस्मादुद्गीथ: तस्मात् त्वेवोद्गाता एतस्य हि गाता स एष ये चामुष्मात् पराञ्चो लोका: तेषां चेष्टे देवकामानाञ्च इत्यधिदैवतं ' इति समाम्नातम् । ' अथाध्यात्मं ' इति पुन: प्रस्तुत्य वाक्चक्षुश्श्रोत्राक्षिगतशुक्लभारूपां ऋचं प्राणचक्षुर्गतछायापुरुषमनश्चक्षुर्गतनीलभारूपं साम च निरूप्य ' अथ य एषो-ऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क् तत्साम तदुक्थं तद्यजु: तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम स एष ये

1. **विज्ञानमयकोशे** - विज्ञानमयपर्याये
2. **आनन्दमये** - आनन्दमयपर्याये

चैतस्मादर्वाञ्चो लोका: तेषां चेष्टे मनुष्यकामानाञ्च' इति, 'तद्य इमे वीणायां गायन्ति एतन्त्वेव ते गायन्ति तस्मात्ते धनसनय: अथ य एतदेवं विद्वान् साम गायति उभौ स गायति सोऽमुनैव स एष ये चामुष्मात्पराञ्चो लोका: तांश्चाप्नोति देवकामांश्च अथानेनैव ये चैतस्मादर्वाञ्चो लोका: तांश्चाप्नोति मनुष्यकामांश्च' इति समाम्नायते। आप्रणखात्—प्रणखो नखाग्रं, तदभिव्याप्य।

"तस्य यथा कप्यासं पुण्डरीकं" इति। कपे: मर्कटस्य, आस्ते उपविशति अनेनेति आस:—पश्चाद्भाग:, [1]तत्सदृशम्, रक्तवर्णमिति पर्यवसितोर्थ:, पुण्डरीकं-पद्मं यथा, एवं तस्य—मण्डलान्तर्वर्तमानस्य पुरुषस्य अक्षिणी। कं-जलं पिबतीति कपि: सूर्य:, तेन आसितं-विकसितं कप्यासम्। कं पिबतीति कपि:—पद्मनाल:, तत्र आस्त इति कप्यासम्। कं पिबतीति कपा: तस्मिन्-कपि, सप्तम्या अलुक्समासे कप्यासम्। के अप्यास्त इति कप्यासम्, 'वष्टि [भा] [वा] गुरिरल्लोपमवाप्योरुपसर्गयो:' इति लुप्ताकारापिपूर्वक आसि:।

[2]एवं पुण्डरीकविशेषणे कप्यासशब्दे [3]वाक्यकारेण बह्व्यो व्युत्पत्तयो दर्शिता:। छान्दोग्यविवरणे भगवत्पादै: कपेर्मर्कटस्यास इत्येव व्युत्पत्ति: स्वीकृता। तथा व्युत्पादितेन कप्यासशब्देन सादृश्यपरेण रक्तत्वं पुण्डरीकविशेषणं लभ्यत इति च स्वीकृतम्।

---

1. **तत्सदृशमिति** कप्यासशब्दस्य कप्याससदृशे लक्षणा इति भाव:।

2. **एवमिति** वाक्यकारोक्तत्वेन श्रुतप्रकाशिकायामुक्तस्य व्युत्पत्त्यन्तरद्वयस्यापि इदमुपलक्षणम्। परन्तु तद्द्वयं शब्दार्थस्वभावपर्यालोचनायां पूर्वपक्षतया वाक्यकाराभिप्रेतमिति परैरपि त्यक्तं भगवत्पादैरप्यस्वीकृतं इत्यत: अत्रापि नोक्तम्। अवशिष्टचतुष्ट्ये एकं भगवत्पादाभिमतम्। तत्र परोद्भावितदूषणनिरासार्थं तदत्रोक्तम्। अवशिष्टत्रयमुपपन्नमिति वाक्यकारसिद्धान्त इति च परैरुक्तम्। तस्य अनुपपन्नताप्रदर्शनार्थं तत्त्रयमत्रोक्तम्। परानुक्ता एका व्युत्पत्तिरधिकाऽप्यत्र दर्शिता। तदेवं वाक्यकारोक्तत्वेन श्रुतप्रकाशिकोक्तेषु षडर्थेषु अत्र अर्थचतुष्टयोक्तेरयमाशयो बोध्य:। भगवत्पादाभिमतार्थस्य सूपपन्नतां पराभिमतार्थत्रयस्य अनुपपन्नताञ्च अनुपदमेव व्यवस्थापयिष्यति।

3. **वाक्यकारेण** - वाक्यनामकछान्दोग्योपनिषद्व्याख्याकारेण **ब्रह्मनन्दिना**।

तत्र कपेः - मर्कटस्य इति व्युत्पादने को गुणोऽभिमतः? अन्यासु च व्युत्पत्तिषु को दोषः? यतस्ताः परित्यक्ताः। प्रत्युत कपिशब्दस्य मर्कटपरत्वे एव आदित्यान्तर्वर्तिपुरुषाक्षिदृष्टान्तभूते पुण्डरीके मर्कटगुदभाग उपमानत्वेन स्वीकृत इति हीनोपमा स्यात्। 'पुण्डरीकं सिताम्भोजं' इति कोशविरुद्धश्च पुण्डरीकविशेषणं रक्तत्वं [1]स्वीकृतं भवेत् - इति चेत् -

उच्यते - कपिशब्दस्य रूढ्यर्थग्रहणसम्भवे [2]तत्रापि योगाश्रयणं न न्याय्यम्। आसशब्दश्च सर्वेष्वपि पक्षेषु यौगिक एव। यद्यपि कपिशब्दस्य रूढ्यर्थपक्षे कप्यासशब्दस्तत्सदृशपरः; तथापि रूढिपूर्वकलक्षणापेक्षया योगार्थग्रहणं न न्याय्यम्। योगमपेक्ष्य रूढेः शीघ्रोपस्थितिकत्वेन तन्मूलाया लक्षणाया अपि शीघ्रोपस्थितिकत्वात्।

अपि च आदित्यपरत्वे कपिशब्दस्य योगोऽप्यतिक्लिष्टः। आदित्य-किरणसम्पर्कात् जलं शुष्यतीत्येतावन्मात्रमवलम्ब्य आदित्यकिरणानां जलग्रही-तृत्वमुपचरणीयं जलग्राहकस्य [3]भृङ्गारस्येव आदित्यकिरणानां जलादर्शनप्रयोज-कत्वसाम्यात्। तस्मिंश्च [4]औपचारिके ग्रहणे अयःपीताम्बुन्यायेन पानत्वमारोप्य किरणकर्तृके आदित्यकर्तृकता शुण्डाकर्तृके जलग्रहणे गजकर्तृकतेवाध्यसनीया। एवं कपिशब्देन आदित्यं क्लिष्टया गत्या व्युत्पाद्य तद्विकसितत्वं पद्मानां क्लेशेनैव वक्तव्यम्। न हि रात्रौ मुकुलीभूतानि पद्मानि पुनः प्रातः सूर्यो विकासयति। किंतु किञ्चित्कालं मुकुलितानि विकासावस्थां प्राप्तानि न पुनर्मुकुलितानि भवन्ति, फलितानीव पुनः पुष्पितानि। अत एव—काननमात्रे सिम्हशार्दूलशरभादि, नदी-मात्रे हंसचक्रवाकादि, नगरमात्रे अत्युन्नतगोपुरप्रासादादि, कीर्तौ धावल्यं, प्रतापे लौहित्यं, रात्रौ चन्द्रोदयमात्रे कुमुदविकासः, दिवा सूर्यकृतः पद्मविकासः, इति कविसमयः—इत्यालङ्कारिकाः। 'रात्रौ मुकुलता दिवा विकासः पद्मानां'

---

1. मु. 'स्वीकृतं' नास्ति 2. **तत्रापीति** अपिना आसशब्दो गृह्यते।

3. मु. अङ्गारागस्येव

4. **औपचारिके ग्रहणे इति** यद्यपि शोषणे साक्षात् पानत्वोपचारो वर्णयितुं शक्यः, तथाऽपि पानस्य ग्रहणपूर्वकत्वात् एवमुक्तम्।

इति नियमोपगमेऽपि, कालकृतोऽसौ न सूर्यकृत:। अत एव रामायणे कविप्रौढोक्तिसिद्धं दिवागाढान्धकारं प्रस्तुत्य 'निलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजै:। विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रवि:॥' [किष्कि. २८-५२] इति कालकृतावेव पद्मसङ्कोचविकासौ प्रतिपादितौ - इति। तथा विकसितत्वमपि आसशब्दत: क्लेशेन लम्भनीयम्। एवं आद्ययोगोऽतिक्लिष्ट:।

द्वितीयतृतीययोगयोस्तु नालस्य जलग्रहणकर्तृता अस्त्येव, ग्रहणे पानत्वमात्रमुपचरणीयम्, आसशब्दे च न क्लेश:—इति नातिक्लिष्टावेतौ। के जले अप्यास्ते इति तुरीययोगस्तु अक्लिष्ट एव।

सर्वेष्वप्येतेषु योगेषु कशब्देन अप्रसिद्धमेव जलं ग्राह्यमिति निहतार्थत्वं तावदापतति। आद्येषु त्रिषु कपिशब्देन सूर्यो वा नालो वा ग्राह्य इति पुनरपि निहतार्थता। श्लेषयमकादिप्रयोजनं विना अप्रसिद्धार्थग्रहणं निहतार्थत्वम्। तदेव च अवाचकत्वमित्यपि व्यवह्रियते।

अपि च आद्ययोगे भगवदाश्रयभूतादित्ये कपिशब्द: प्रयुक्त इत्यश्लीलत्वम्। द्वितीयतृतीययोस्तु योगयो: नेत्रदृष्टान्तभूतपुण्डरीकाश्रये कपिशब्द: प्रयुक्त इत्यश्लीलता। अविवक्षितामङ्गलव्रीडाद्यर्थप्रत्यायकत्वं पदस्य अश्लीलत्वम्। यथा 'ब्रह्मोपासनं कुरु' इति वक्तव्ये 'ब्रह्महत्यां[1] कुरु' इति प्रयोगे निहतार्थत्वमश्लीलत्वं च। यथा वा 'दाशगोघ्नौ सम्प्रदाने' [पा. सू. ३-४-७३] इति गोघ्नशब्दस्य सम्प्रदाने अनुशिष्टत्वेऽपि मधुपर्कार्हेषु आचार्यादिषु प्रयोगे। काव्यपद्धतावेवैषां दोषत्वं न तु वैदिकपद्धतौ - इत्यभ्युपगमे तु रूढिमाश्रित्यैव कपिशब्दे कप्यासपदं व्याख्यातुमुचितम्।

अपि च न अस्मिन् पक्षे हीनोपमा। चक्षुरुपमानभूतपुण्डरीकोपमानत्वमात्रेण चक्षुषि हीनोपमानत्वाप्रसक्ते:[2]। कवयो हि वर्ण्यमान [3]एव हीनोपमानं

1. **ब्रह्महत्यामिति** 'हनहिंसागत्यो:' इति हनधातो: गत्यर्थत्वावगमात्, गत्यर्थानां मनोवृत्तिरूपज्ञानार्थत्वात्, उपासनस्य च मनोवृत्तिरूपत्वात्, ब्रह्मोपासनेऽर्थे ब्रह्महत्यापदप्रयोगसम्भव इति भाव:।

2. **हीनोपमानत्वाप्रसक्तेरिति** अत एव 'वराहरुधिरामेण चन्दनेन सुगन्धिना' इति आदिकविप्रयोगोऽपि। 3. **एव** - अपि

प्रयुञ्जते । यथा 'महामहानीलशीलारुचः पुरो निषेदिवान् कंसकृषः स विष्टरे। श्रितोदयाद्रेरभिसायमुच्चकैः अचूचुरच्चन्द्रमसोऽभिरामताम् ॥' [मा. १-१६] अत्र इन्दूदयाश्रयाचलाभिमुखः सायङ्कालः वर्ण्यमानस्य श्रीकृष्णस्योपमानत्वेन निबद्धः। ननु-सायङ्कालस्य तमस्त्वेऽपि न हीनत्वम्, अनादि[1]कविसमयस्वी कृतत्वात्— इति चेत्, तर्हि अनादिवेदस्वीकृतत्वात् मर्कटपश्चाद्भागस्यापि न हीनत्वम् ।

अपि च कप्यासशब्देन रक्तिम्नः पुण्डरीकविशेषणत्वसिद्धौ तादृशपुण्डरीकोपमितं चक्षुः अरुणमिति सिध्यति। तच्च आदित्यान्तर्वर्तिपुरुषस्य 'य उद्गान्महतोऽर्णवात् विभ्राजमानःसरिरस्य मध्यात् स मा वृषभो रोहिताक्षः सूर्यो विपश्चिन्मनसा पुनातु' इतिमन्त्रानुमतम् ।

न च—पुण्डरीकशब्दस्य न पद्ममात्रपरत्वम्, अपि तु सिताम्भोजपरत्वम्, 'पुण्डरीकं सिताम्भोजं' इति कोशानुसारात् इत्युक्तं-साधु । अनेकवृद्धव्यवहारविरुद्धस्य कोशवचनस्य अप्रमाणत्वात् । शाबरे हि भाष्ये 'मौद्गं चरुं निर्वपेच्छ्रियै श्रीकामः' इतिवाक्यविहितायामिष्टौ 'पौण्डरीकाणि बर्हींषि भवन्ति' इति बर्हिस्स्थाने पुण्डरीकाणां विधानेन, तत्र प्रकृतितः प्राप्ते 'दर्भैःस्तृणीत हरितैः' इति मन्त्रे दर्भपदस्थाने पुण्डरीकपदवत् [2]हरितपदस्थाने रक्तपदोहः कर्तव्य इत्युक्तं नवमे। पार्थसारथिप्रभृतीनामपि तथैव सम्मतम् । वाक्यकारेणापि कप्यासपदं रक्तिमविशेषणपरतयाऽपि व्याख्यातम्। 'आकाशवापीसितपुण्डरीकं' इति 'चिरलुप्ततपोधनाग्निमत्तापुनरुत्तारणपादपुण्डरीकः' इति च महाकविप्रयोगे पद्मत्वसामान्यमादायैव पुण्डरीकशब्दः प्रयुक्तः। अन्यथा सितेति विशेषणवैयर्थ्यात्, महापुरुषपादोपमानत्वानुपपत्तेश्च । पाणिपादतलनखनेत्रान्ततालुजिह्वाधराणां सप्तानां रक्तिमा हि महापुरुषलक्षणत्वेन सामुद्रि [क] (का) शास्त्रे परिगणितः। अतः [3]उपजीव्यप्रयोगविरोधे कोशवचनमप्रमाणमेवेति युक्तम् ।

---

1. मु. कविभिस्स्वीकृत 2. मु. 'हरितपदस्थाने' नास्ति

3. **उपजीव्यप्रयोगेति** अर्थविशेषे प्रयुज्यमानपदानां पर्यायपदसङ्कलनपरस्य कोशस्य, प्रयोगः उपजीव्य इति भावः ।

७ अन्तरधिकरणम्

## अन्तस्तद्धर्मोपदेशात् ॥ २० ॥

इदमाम्नायते—'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः, तस्य यथा कप्यासं पुण्डरीकं एवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद .... इत्यधिदैवतम्' (छा. उ. १।६।७।८)। 'अथाध्यात्मम्........' अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते' (छा० १।७।१।५) इत्यादि।

---

अनेनाभिप्रायेण छान्दोग्यविवरणे भगवत्पादैः, वाक्यकारेण बहुष्वर्थेषु प्रदर्शितेष्वपि कप्यासशब्दे रूढिपूर्वकलक्षणया यउदगादिति मन्त्रानुसारी कपेः-मर्कटस्य आसः इत्येवार्थः स्वीकृतः। न त्वन्ये। बहूनां दोषाणां तत्रोक्तत्वात्।

'तस्यर्क्च साम च गेष्णौ तस्मादुद्गीथः तस्मात्त्वेवोद्गाता एतस्य हि गाता' इत्यस्य अयमर्थः—गेष्णशब्दो हि सामगानां औक्थिक्याख्ये ग्रन्थे सामावच्छेदभूतप्रस्तावादिपर्ववाचकतया प्रसिद्धः इह ऋक्सामयोः प्रयुक्तः गुणिनिष्ठगुणाभिधानात्मकस्तोत्राख्यगानसाधनत्वगुणयोगात्[1] उपपादनीयः। तत्तत्स्तोत्रान्तर्गततयासमाम्नातानामृचां साक्षात्स्तुतिसाधनत्ववत् 'साम्ना स्तुवीत' इति वचनानुसारेण साम्नामपि ऋगक्षराभिव्यक्तिद्वारा स्तोत्राख्यगीतिसाधनत्वं, प्रस्तावादिसामभागानामपि सामान्तर्गततया - इति स्तोत्रसाधनत्वगुणः त्रयाणामपि साधारणः। ततश्च प्रकृतस्य पुरुषस्य उन्नामकस्य तत्तत्क्रतुगतैन्द्रादिस्तोत्रप्रकाश्यत्वं गुणः सिध्यति। तत एव च उद्गीथशब्दोऽपि उत्कर्मकगानसाधनत्वं प्रवृत्तिनिमित्तीकृत्य सामभक्तिविशेषे प्रयुज्यमान उपपद्यते, उद्गातृशब्दश्च उत्कर्मकगानकर्तृत्वं प्रवृत्तिनिमित्तीकृत्य ऋत्विग्विशेषे प्रयुज्यमान उपपद्यते, इति प्रकृतोन्नामकपुरुषे ऋक्सामगेष्णत्वगुणविधौ हेत्वर्थवादः 'तस्मादुद्गीथः तस्मात्त्वेवोद्गाता एतस्य हि गाता' इति।

---

1. मु. साधनत्वयोगात्

तत्र संशयः—किं विद्याकर्मातिशयवशात्प्राप्तोत्कर्षः कश्चित्संसारी सूर्यमण्डले चक्षुषि च उपास्यत्वेन श्रूयते, किंवा नित्यसिद्धः परमेश्वर इति ?

किं तावत्प्राप्तम् ? संसारीति । कुतः, रूपवत्त्वश्रवणात् । आदित्यपुरुषे तावत् 'हिरण्यश्मश्रुः' इत्यादि रूपमुदाहृतम् । अक्षिपुरुषेऽपि तदेवातिदेशेन प्राप्यते—'तस्यैतस्य तदेव रूपं यदमुष्य रूपम्' इति । नच परमेश्वरस्य रूपवत्त्वं युक्तम्, 'अशब्दमस्पर्शमरूपमव्ययम्' (क. उ. १।३।१५) इति श्रुतेः, आधारश्रवणाच्च—'य एषोऽन्तरादित्ये' 'य एषोऽन्तरक्षिणि' इति । नह्यनाधारस्य स्वमहिमप्रतिष्ठस्य सर्वव्यापिनः परमेश्वरस्य आधार उपदिश्येत । 'स भगवः कस्मिन् प्रतिष्ठित

---

'सोऽमुनैव' इत्यत्र अमुनेति तृतीया इत्थंभूतलक्षणे तादात्म्येन च लक्षणत्वं विवक्षितमिति वक्तुं 'स एषः' इति पदद्वयं श्रुतौ । तथा च उपास्यदेवताभावं प्राप्तः इति फलितम् । अथवा 'स एषः' इत्यस्य 'अथानेनैव' इत्यत्रान्वयो द्रष्टव्यः । धनसनयः—धनलाभवन्तः ।

तत्र रूपवत्त्वादीनामनैश्वरधर्माणां सर्वपाप्मोदितत्वादीनां ऐश्वरधर्माणां च बलाबलानवधारणात् संशयः ।

पूर्वत्र बहुभिः प्राधान्यलिङ्गैः एकस्याप्राधान्यद्योतकस्य पुच्छशब्दस्येव बहुभिरनैश्वरधर्मैः सर्वपाप्मोदितत्वं यथाकथञ्चिद्व्याख्येयं इत्यभिप्रेत्य पूर्वपक्षयति—**संसारीतीति** । ननु—स्वमहिमप्रतिष्ठस्य महिमैवाधार इति, कथं स्वेमहिम्नीति-श्रुत्या निराधारत्वं सिध्यति इत्याशङ्क्य, 'उदाहरिष्यमाणश्रुतिगतं स्वमहिमपदं न महिम्न आधारत्वप्रतिपादकम्, किं तु महिमातिरिक्ताधारराहित्यपरम्, स्वाश्रितस्य महिम्नः स्वाधारत्वासम्भवात्' इत्यभिप्रेत्याह—**न ह्यनाधारस्य स्वमहिमप्रतिष्ठस्येति** । श्रुत्यन्तरमभिप्रेत्य सर्वव्यापिन इत्युक्तम् । संगृहीतं श्रुतिद्वयमुदाहरति—**स भगव इत्यादिना** । सर्वव्यापित्वं सर्वगतत्वं, तदपि सर्वाधिष्ठानतया सर्ववस्तुसंसृष्टत्वं, स्वकार्याणि आकाशोऽपि व्याप्नोतीति आकाशवदिति दृष्टान्तः । सर्वाधिष्ठानस्य परमात्मनो न कोऽप्याधारस्सम्भवतीति फलितोऽर्थः ।

इति स्वे महिम्नि' (छा. उ. ७।२४।१) इति 'आकाशवत्सर्वगतश्चनित्यः' इति च श्रुती भवतः। ऐश्वर्यमर्यादाश्रुतेश्च। 'स एष ये चामुष्मात्पराञ्चो लोकाः तेषां चेष्टे देवकामानां च' (छा. उ. १।६।८) इति आदित्य-पुरुषस्यैश्वर्यमर्यादा। 'स एष ये चैतस्मादर्वाञ्चो लोकाः तेषां चेष्टे मनुष्यकामानां च' (छा. उ. १।७।६) इत्यक्षिपुरुषस्य। नच परमेश्वरस्य मर्यादावदैश्वर्यं युक्तम्, 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय' (बृ. उ. ४।४।२२) इत्यविशेषश्रुतेः। तस्मात् न अक्ष्यादित्ययोरन्तः परमेश्वरः—इत्येवं प्राप्ते—

ब्रूमः—'अन्तस्तद्धर्मोपदेशात्' इति। 'य एषोऽन्तरादित्ये' 'यएषोऽन्तरक्षिणि' इति च श्रूयमाणः पुरुषः परमेश्वर एव, न संसारी। कुतः, तद्धर्मोपदेशात्। तस्य हि परमेश्वरस्य धर्मा इहोपदिष्टाः। तद्यथा—'तस्य उदिति नाम' इति श्रावयित्वा तस्यादित्यपुरुषस्य नाम 'स एष सर्वेभ्यः पाप्मभ्य उदितः' इति सर्वपाप्मापगमेन निर्वक्ति। तदेव च कृतनिर्वचनं नाम अक्षिपुरुषस्याप्यतिदिशति—'यन्नाम तन्नाम' इति। सर्वपाप्मापगमश्च परमात्मन एव श्रूयते—य आत्माऽपहतपाप्मा

---

सूत्रे अन्तरितिशब्दः आदित्ये अक्षिण च अन्तर्विद्यमानपुरुषोपस्थापकः- इत्यभिप्रेत्य [1]आधिकारिकब्रह्मपदसम्बन्धेन प्रतिज्ञां दर्शयति—**य एषोऽन्तरा-दित्य इत्यादिना।**

[2]नन्वत्र सिद्धान्ते—सर्वपाप्मोदितत्वं, सैवेतिश्रुत्या 'सः-अक्षिपुरुषः, विधेयाभिप्रायेण स्त्रीलिङ्गं, ब्रह्म-वेदाः, गोबलीवर्दन्यायेन पौनरुक्त्यपरिहारो द्रष्टव्यः' इत्येवं व्याख्येयया सर्ववेदात्मत्वं, ऋक्सामगीयमानेन्द्राद्यात्मतयाऋक्सामगीयमानत्व-पर्यवसितऋक्सामगेष्णत्वलभ्यं इन्द्राद्यात्मत्वं, वैणिकगीयमानराजाद्यात्मतया 'तद्य

---

1. **आधिकारिकेति** जिज्ञासासूत्रतो नैरन्तर्येणानुवर्तमानेत्यर्थः।

2. **नन्वत्रेति** इयं शङ्का 'कथमत्र ईश्वरत्वनिर्णयः' इत्येतदन्ता।

(छा. उ. ८।७।१) इत्यादौ। तथा चाक्षुषे पुरुषे 'सैवर्क् तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म' इति ऋक्सामाद्यात्मकतां निर्धारयति। सा च परमेश्वरस्योपपद्यते, सर्वकारणत्वात्सर्वात्मकत्वोपपत्तेः। पृथिव्यग्न्याद्यात्मके च अधिदैवतं ऋक्सामे वाक्प्राणाद्यात्मके च अध्यात्मं अनुक्रम्याह—'तस्यर्क्च साम च गेष्णौ' इत्यधिदैवतम्, तथाऽध्यात्ममपि 'यावमुष्य गेष्णौ तौ गेष्णौ' इति। तच्च सर्वात्मन एवोपपद्यते। 'तद्य इमे वीणायां गायन्ति एतं त्वेव ते गायन्ति तस्मात्ते धनसनयः' (छा. उ. १।७।६) इति च लौकिकेष्वपि गानेषु अस्यैव गीयमानत्वं दर्शयति। तच्च परमेश्वरपरिग्रहे एव घटते,

'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम्' (भ. गी. १०।४१)

इति भगवद्गीतादर्शनात्। लोककामेशितृत्वमपि निरङ्कुशं श्रूयमाणं परमेश्वरं गमयति।

यत्तूक्तं हिरण्यश्मश्रुत्वादिरूपवत्त्वश्रवणं परमेश्वरे नोपपद्यत इति,

---

इमे वीणायां गायन्ति' इति श्रुतिसिद्धं वीणागीतिविषयत्वं, निरंकुशैश्वर्यं च—इत्येतानि पारमेश्वरलिङ्गानि उपन्यस्य, रूपवत्त्वादीनि उपासनाभिप्रायेण यथाकथञ्चिद्योज्यानि—इत्युक्तम्। तत्र सर्वपाप्मोदितत्वादीनां प्राबल्ये किं नियामकम्। सर्वपाप्मोदितत्वं आदित्यमण्डलाभिमानिजीवेऽपि हि वक्तुं शक्यमेव। देवानां पुण्यसम्बन्धे सत्यपि 'न ह वै देवान् पापं गच्छति [बृ. उ. १. ५. २०] इति श्रुतिपर्यालोचनया पापासम्बन्धस्य वक्तुं शक्यत्वात्। पाप्मशब्दो यद्यपि मुमुक्षुं प्रति पुण्यफलस्यापि अनिष्टत्वेन अनिष्टसाधनतागुणयोगात् पुण्यसाधारणः क्वचित् प्रयुक्तः, दहरविद्यायां 'न सुकृतं न दुष्कृतं' इतिवाक्येन सुकृतदुष्कृताद्युत्तीर्णत्वं प्रतिपाद्य तस्यैवार्थस्य सङ्ग्रहेण कथनावसरे 'सर्वे पाप्मानोऽतो निवर्तन्ते' [छा. उ. ८. ४. १] इत्युक्तत्वात्; तथापि प्रकृते लाक्षणिकार्थग्रहणे मानाभावात् पाप्मशब्दो यथाश्रुत एव। ननु तत्तदर्थवादपुराणेतिहासपर्यालोचनया देवानामपि

अत्र ब्रूमः—स्यात् परमेश्वरस्यापीच्छावशान्मायामयं रूपं साधकानुग्रहार्थम् ।

'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ।
सर्वभूतगुणैर्युक्तं मैवं मां ज्ञातुमर्हसि' ॥

इति स्मरणात् । अपि च यत्र तु निरस्तसर्वविशेषं पारमेश्वरं रूपं उपदिश्यते, भवति तत्र शास्त्रं 'अशब्दमस्पर्शमरूपमव्ययम्' इत्यादि । सर्वकारणत्वात्तु विकारधर्मैरपि कैश्चित् विशिष्टः परमेश्वरः उपास्यत्वेन निर्दिश्यते 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः' (छा. ३।१४।२) इत्यादिना । तथा हिरण्यश्मश्रुत्वादिनिर्देशोऽपि भविष्यति ।

यदप्याधारश्रवणान्न परमेश्वर इति, अत्रोच्यते—स्वमहिमप्रतिष्ठस्याप्याधारविशेषोपदेशः उपासनार्थो भविष्यति, सर्वगतत्वाद्ब्रह्मणो व्योमवत्सर्वान्तरत्वोपपत्तेः ।

ऐश्वर्यमर्यादाश्रवणमपि अध्यात्माधिदैवतविभागापेक्षं उपासनार्थमेव। तस्मात् परमेश्वर एव अक्ष्यादित्ययोरन्तरुपदिश्यते ॥२०॥

---

पापं तत्फलं दुःखं च अस्त्येवेति प्रतीयते । अतो 'न ह वै' इतिश्रुतिः पापफलमल्पं देवानां इत्यभिप्राया व्याख्येयेति चेत्, तर्हि सर्वपाप्मोदितत्वश्रुतिरपि [1]एवमेव व्याख्येया । न च—प्रकृते आदित्यमण्डलवर्तिनः पुरुषस्य जीवत्वमुपेत्य सर्वपाप्मोदितत्वश्रुतेः किमर्थं यथाकथञ्चिद्व्याख्यानमाश्रीयते । अपि च तात्पर्यलिङ्गान्तर्गतं फलवचनं 'उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' इति सर्वपाप्मोदयगुणे श्रूयते । ततश्च सर्वपाप्मोदयस्य निरंकुशस्य फलतया प्रतिपादनात् तत्क्रतुन्यायेन गुणभूतं सर्वपाप्मोदितत्वमपि निरंकुशं भविष्यति । ततश्च तात्पर्यलिङ्गोपबृंहितस्य न यथाकथञ्चिन्नयनमुचितम् । अतः आदित्यान्तर्वर्तिपुरुषोऽक्ष्यन्तर्वर्तिपुरुषश्च परमेश्वर एव—इति वाच्यम् । आदित्यमण्डलान्तर्वर्ती

---

1. **एवमेव**—पापाल्पत्वाभिप्रायैव ।

ईश्वरः—इति पक्षेऽपि हिरण्यश्मश्रुहिरण्यकेशत्वादिविशिष्टशरीरसम्बन्धविरोधात्। 'रमणीयचरणा रमणीयां योनिमापद्यन्ते कपूयचरणाः कपूयां योनिमापद्यन्ते' 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इतिवचनपर्यालोचनया शरीरमात्रस्य पुण्यपापप्रियाप्रियसम्बन्धापादकत्वावगमात्। न च तात्पर्योपेतसर्वपाप्मोदितत्वश्रुतिपर्यालोचनया परमेश्वरत्वसिद्धौ तस्य शरीरित्वावगमे नहवैसशरीरस्येत्यादिवचनं जीवविषयं भविष्यतीति वाच्यम्। तथासति हि 'जीवत्वे सति सशरीरत्वं प्रियाप्रियसम्बन्धप्रयोजकं' इत्यापतेत्, तदपेक्षया सशरीरत्वमेव लघु। ततश्च नहवाइत्यादिश्रुतिरपि लाघवरूपोपपत्तियुक्ता[1] यथाश्रुतार्थैव वक्तव्या। तथा च रूपवत्त्वं कथमन्यथा नेतुं शक्यम्। एवं 'ये चामुष्मात् पराञ्चो लोकास्तेषाञ्चेष्टे देवकामानां च' 'ये चैतस्मादर्वाञ्चो लोकास्तेषाञ्चेष्टे मनुष्यकामानाञ्च' इति समर्यादैश्वर्यप्रतिपादनमपि व्यवस्थितनिर्देशरूपोपपत्तियुक्तं, 'सोऽमुनैव स एष ये चामुष्मात्पराञ्चो लोकाः तांश्चाप्नोति देवकामांश्च, अथानेनैव ये चैतस्मादर्वाञ्चो लोकाः तांश्चाप्नोति मनुष्यकामांश्च' इति तत्क्रतुन्यायेन व्यवस्थितफलनिर्देशयुक्तं च, तात्पर्योपेतं कथमिव ईश्वरे व्याख्यातुं शक्यम्। ततश्च प्रबलानेकजीवलिङ्गानुसारेण सर्वपापोदय एव यथाकथञ्चिद्व्याख्येयः। अपि च 'उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' इतिफलवचनानुसारेणैव सर्वपापोदयः संकुचितोऽवगम्यते। फलवाक्ये हि जीवगत एव सर्वपापोदयः प्रतिपाद्यते। न च जीवे निरंकुशः सर्वपापोदयः सम्भवति। अपि च आदित्यमण्डलाभिमानिन्या देवताया जीवन्मुक्तायाः प्रारब्धमात्रावशेषायाः न पापं विद्यते। ज्ञानाग्निदग्धत्वात् सर्वपाप्मनाम्। प्रारब्धं तु अधिकारोपयोगिपुण्यरूपमेव। तथा च निरङ्कुशोऽपि सर्वपापोदयः तत्र वर्णयितुं शक्यत इति न सर्वपापोदयलिङ्गानुसारेण परमेश्वर इति निर्णयः सम्भवति।

नापि सर्ववेदात्मत्वं ऋक्सामगीयमानेन्द्राद्यात्मत्वं वीणागीयमानधनिकपुरुषात्मत्वं च ब्रह्मलिङ्गमिति शक्यं वदितुम्। सर्वोपादानतया सर्वात्मके हि ब्रह्मणि विशिष्य ऋगाद्यात्मतया सर्ववेदात्मत्वं उपासनार्थमुक्तमिति वक्तव्यम्।

---

1. उपपत्तियुक्ता—उपपत्तिरूपतात्पर्यलिङ्गयुक्ता।

तच्च आदित्यमण्डलस्येव तदभिमानिपुरुषस्यापि वक्तुं शक्यम् । मण्डलस्य हि 'सैषा त्रय्येव विद्या तपति' इति ऋगाद्यात्मत्वं तैत्तिरीयके समाम्नातं - 'आदित्यो वा एष एतन्मण्डलं तपति' इत्युपक्रम्य हि मण्डलतदर्चिस्तदन्तर्वर्तिपुरुषाणामृगाद्यात्मत्वं क्रमेण निरूप्य सैषात्रय्येवविद्यातपतीत्युपसंहृतम् । इन्द्राद्यात्मत्वं तु परमेश्वरपक्षेऽपि न पारमेश्वरेण रूपेण सम्भवति । 'अधिकं तु भेदनिर्देशात्' [ब्र. सू. २-१-२२] इतिन्यायेन परमेश्वरत्वावच्छेदेन व्यावहारिकभेदस्य स्वीकृतत्वात् । शुद्धचैतन्यात्मना अभेदस्तु देवतापक्षेऽपि वक्तुं शक्य एव । निरंकुशैश्वर्यं तु न श्रुतमेव—इति कथमत्रेश्वरत्वनिर्णय इति चेत्—

अत्रोच्यते - जीवन्मुक्तेऽप्यादित्ये न सर्वपापोदयो निरंकुशः[1] । कर्मजन्यशरीराणां 'न ह वै' इति श्रुतिपर्यालोचनया अप्रियसम्बन्धसम्भवात् । [2]न च—कर्मजन्येत्यपि विशेषणं 'न ह वै' इति श्रुतौ न विवक्षणीयम्, लाघवरूपोपपत्त्या शरीरमात्रस्यैव तत्प्रयोजकत्वावगमादित्युक्तमिति - वाच्यम् । फलवचनरूपतात्पर्यलिङ्गोपेतया निरंकुशसर्वपापोदयप्रतिपादिकया 'सर्वेभ्यः पाप्मभ्य उदितः' इति श्रुत्या सर्वपापविरहस्य 'य आत्माऽपहतपाप्मा' इति श्रुतावीश्वरधर्मत्वेन प्रसिद्धस्य इहावगमात् ईश्वरत्वे निर्णीते तत्र[3] हिरण्यश्मश्रुत्वादिविशिष्टशरीरश्रवणेन कर्मजन्येति शरीरविशेषणस्य [4]तस्यां श्रुतौ अवश्यं वक्तव्यत्वात् । लाघवरूपस्य तात्पर्यलिङ्गस्य लौकिकोपपत्तितया वैदिकेन फलवचनेन तात्पर्यलिङ्गेन बाधसम्भवात् । एवं 'रमणीयचरणाः' इति श्रुतिरपि जीवविषयैव व्याख्येया ।

अपि च श्रुतिपुराणादिषु परमेश्वरप्रकरण एव विग्रहाः समाम्नाताः । न च तेषां देवताधिकरणन्यायेन व्यावहारिकाणां सम्भवेऽपि वाग्धेनुतादात्म्यवदत्यन्तासत्त्वं 'न ह वै' इति श्रुतिमेकां यथाश्रुतां अवलम्ब्य वक्तुं शक्यम् ।

---

1. **निरङ्कुशः**—असङ्कुचितः

2. असङ्कुचितः सर्वपापोदयः परमेश्वरेऽपि न सम्भवतीत्याशङ्कां विवरणाचार्योक्तेन प्रकृताधिकरणन्यायेन निराकरोति—**न चेत्यादिना** ।

3. मु॰ 'तत्र' नास्ति ।

4. **तस्यां श्रुतौ** –'न ह वै सशरीरस्य' इति श्रुतौ ।

अतो न सशरीरत्वमात्रं परमेश्वरत्वविरोधि । अपि तु स्वीयधर्माधर्मनिमित्तकमेव[1] । न च - फलवचनानुसारेणैव सर्वपापोदयः संकुचितः स्वीकर्तव्य इत्युक्तम्, अतः कथं निरंकुशस्सर्वपापोदयः उपास्यगुणत्वेन लभ्यते - इति वाच्यम् । यतः फलकोटौ जीवगतं संकुचितमपि पापोदयं सर्वपापोदयत्वेन श्रुतिरनुबध्नाति । ततोऽवगच्छामः 'उपास्यगुणभूते सर्वपापोदये श्रुतेस्तात्पर्यातिशयः' इति । कथं [2]तस्यापि संकुचितत्वं वक्तुं शक्यम् ।

[3]अपि च एतदुपासनाफलभूतस्य पापोदयस्यापि निरंकुशत्वं क्रममुक्तिमादाय वक्तुं शक्यमिति तत्रापि सङ्कोचो नाश्रयणीयः ।

वृक्षापादानकं शकुन्तोद्गमनमिव पापापादानकं जीवोदयनं तु पूर्वपक्षिणोऽपि वक्तुमशक्यम् । वृक्षस्येव पापस्यामूर्तस्य विश्लेषावधित्वासम्भवात् । ततश्च, यथा वृक्षोद्गतः पक्षी सर्वात्मना वृक्षासंस्पृष्टो भवति तथा जीवोऽपि - इत्येव पूर्वपक्षिणा वक्तव्यम् । तत्तु वक्तुं न शक्यते । यत्किञ्चित्पापसम्बन्धस्य जीवे सम्भवात् । सिद्धान्तिना तु तच्छक्यं वक्तुम् ।

ऐश्वर्यं व्यवस्थया निर्दिष्टमपि सर्वाधिपत्य एव पर्यवस्यति । पूर्वपक्षिमते हि आदित्यमण्डलाभिमानी जीव उपास्य इत्युपगमेऽपि तस्य चाक्षुषपुरुषाभेद एव । 'आदित्यश्चक्षुर्भूत्वा अक्षिणी प्राविशत्' [ए. उ. १-२-४ ] इति श्रुतेः । ततश्च परागर्वाग्लोकदेवमनुष्यकामेश्वरत्वमेकस्यैव प्राप्तम् । विभज्य निर्देश उपासनार्थ इत्येव वक्तव्यम् । तत् सिद्धान्तेऽपि तुल्यम् । आदित्ये चक्षुषि च एकस्यैवान्तर्यामिणः 'य आदित्ये तिष्ठन्, यश्चक्षुषि तिष्ठन्' इत्यादिश्रुतिसिद्धत्वात् । परं तु 'भीषास्मात् वातः पवते । भीषोदेति सूर्यः ।' [ तै. उ. २-१२ ] 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः'

---

1. आ. निमित्तकशरीरकत्वमेव ।

2. **तस्यापि**—तात्पर्यविषयस्य उपास्यकोटिप्रविष्टस्यापि । अपिना फलकोटिप्रविष्टस्य सङ्कुचितत्वं अनुमन्यते ।

3. तत्क्रतुन्यायाविरोधार्थमाह—**अपि चेति**

## भेदव्यपदेशाच्चान्यः ॥ २१ ॥

अस्ति च आदित्यादिशरीराभिमानिभ्यो जीवेभ्योऽन्य ईश्वरोऽन्तर्यामी, 'य आदित्ये तिष्ठन् आदित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयति एष त आत्मा अन्तर्याम्यमृतः' (बृ. उ. ३।७।९) इति श्रुत्यन्तरे भेदव्यपदेशात्। तत्र हि 'आदित्यादन्तरो यमादित्यो न वेद' इति वेदितुरादित्याद्विज्ञानात्मनोऽन्य अन्तर्यामी स्पष्टं निर्दिश्यते। स एव इहाप्यन्तरादित्ये पुरुषो भवितुमर्हति, श्रुतिसामान्यात्। तस्मात् परमेश्वर एव इहोपदिश्यत इति सिद्धम् ॥ २१ ॥

---

[बृ. उ. ३-८] इतिवचनपर्यालोचनया सांकुशं अन्यायत्तत्वात् आदित्यादिदेवानामैश्वर्यम्, अनन्यायत्तत्वात् निरंकुशं परमेश्वरस्य। न च प्रकृते सांकुशैश्वर्यग्रहणे प्रमाणमस्ति - इति[1] लोककामेश्वरत्वमपि पारमेश्वरमेव पर्यवस्यति। सोऽमुनैवेत्यादिना फलनिर्देशोऽपि आर्थवादिकान्यवयवगतानि फलानि अवयविन्येवेति [2]जातेष्टिनयेन सिद्धौ सर्वाधिपत्य एव पर्यवस्यतीति सोऽपि परमेश्वरग्रहणे एव[3] लिङ्गं, तत्क्रतुन्यायात्। अतो निरंकुशैश्वर्यं न श्रुतमेव इत्यसिद्धम्।

ऋक्सामस्तूयमानेन्द्राद्यात्मत्वं वैणिकगीयमानधनिकपुरुषात्मत्वमपि बिम्बभूतस्येश्वरस्यैव, उपादानोपादेयभावोपपत्तेः। जीवस्य वस्तुगत्या अनुपादेयत्वेऽपि विशिष्टरूपेण तदुपपत्तेः। न तु जीवस्य जीवान्तरं प्रति उपादानोपादेयभाव उपपद्यते। ततश्च, यद्यपि शुद्धचैतन्यात्मना स्वरूपैक्यं सर्वसाधारणम्, तथापि तादात्म्यरूपस्वरूपसम्बन्धो न जीवस्य जीवान्तरेण अपित्वीश्वरस्यैवेति ऋक्सामगेष्णत्वादिकमपि पारमेश्वररूपमेव। अपिचेह ऋक्सामगेष्णत्ववीणागीयमानत्वोक्त्या विभूतिमत्पुरुषात्मत्वस्य विशिष्य प्रतिपादने श्रुतेः तात्पर्यविशेषोऽवगम्यते।

---

1. मु 'इति नास्ति।
2. मु. रात्रिसत्रनयेन।
3. मु. 'एव' नास्ति।

८ आकाशाधिकरणम्

## आकाशस्तल्लिङ्गात् ॥ २२ ॥

इन्द्रादिषु हि विभूतिमत्त्वोपयोगितया पारमेश्वरांशोऽनुप्रविष्टोऽस्ति । ततश्च विभूतिमतां स्तुत्यत्वे पारमेश्वरांश एव प्रयोजकः, इन्द्रादिस्तुतिश्च परमेश्वर-स्तुतिरेव, तदंशप्रयुक्तत्वात्, राजभटस्तुतिरिव राजस्तुतिः । अनेनाभिप्रायेण भाष्ये यद्यद्विभूतिमदितिवचनमुदाहृतम् । इदं च जीवपक्षे न सम्भवति । सर्वात्मके ब्रह्मणि ऋक्सामात्मत्वमपि सदेव उपासनार्थं निर्दिष्टमिति वक्तुं शक्यम् । जीवे तदप्यसदेव ।

अतः [1]आदित्ये अक्ष्णि च उपास्यः परमेश्वर एवेति सिद्धम् ॥२०, २१॥

[2]इत्यन्तरधिकरणम् ॥ ७ ॥

शालावत्यदाल्भ्यजैवलयः त्रयो होद्गीथे कुशला बभूवुः । 'ते होचुः उद्गीथे वै कुशलाः स्मः हन्तोद्गीथे कथां वदामः' इत्युपक्रम्य दाल्भ्यं प्रति शालावत्यप्रश्नमव-तार्य का साम्नो गतिः-कारणं [3]इत्येवंरूपं, स्वरःइत्युत्तरिते तादृश्येव प्राणान्नाप्स्वर्ग पर्यन्ता प्रश्नोत्तरपरंपरा प्रवृत्ता । ततश्च दाल्भ्यनिरूपिता सामगतिविश्रान्ति-भूमिः स्वर्गलोकरूपा शालावत्येन दूषिता 'अप्रतिष्ठितं वै किल ते दाल्भ्य साम' इति । ततः शालावत्यं प्रति शिष्यभावमुपगतस्य दाल्भ्यस्य प्रश्नः 'अमुष्य लोकस्य का गतिः' इति, अयं लोक इति होवाच' इत्युत्तरम् । शालावत्येन च सामगति-विश्रान्तिभूमित्वेन प्रतिष्ठात्वेन च निरूपिते पृथिवीलोके 'अन्तवद्वै किल ते शालावत्य साम' इति जैवलिना च दूषिते शिष्यभावमुपगतस्य शालावत्यस्य जैवलिं प्रति प्रश्नः 'अस्य लोकस्य का गतिः' इति, आकाश इति होवाच' इति उत्तरम् ।

---

1. **आदित्ये इत्यादि** आदित्ये अक्ष्णि च अन्तर्यामितया वर्तमानः उद्गीथे उपास्यः इत्यर्थः । अत एव भाष्ये 'परमेश्वर एव अक्ष्यादित्ययोरन्तः **उपदिश्यते** इत्युक्तम्, न तु **उपास्यते** इति ।

2. **'भेदव्यपदेशाच्चान्यः'** इति सूत्रभाष्यं न व्याख्यातम्, व्याख्यातं वा लेखकप्रमादात् त्रुटितं स्यात् ।

3. मु. 'इत्येवं रूपं' नास्ति ।

इदमामनन्ति—'अस्य लोकस्य का गतिरिति आकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैभ्यो ज्यायान् आकाशः परायणम्' (छा. उ. १।९।१) इति।

तत्र संशयः—किमाकाशशब्देन परं ब्रह्माभिधीयते उत भूताकाशमिति। कुतः संशयः? उभयत्र प्रयोगदर्शनात्। भूतविशेषे तावत् सुप्रसिद्धो लोकवेदयोः आकाशशब्दः। ब्रह्मण्यपि क्वचित् प्रयुज्यमानो दृश्यते यत्र वाक्यशेषवशात् असाधारणगुणश्रवणाद्वा निर्धारितं ब्रह्म भवति, यथा—'यदेष आकाश आनन्दो न स्यात्' (तै. उ. ५।७) इति 'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' (छा. उ. ८।१४।१) इति चैवमादौ। अतः संशयः।

किं पुनरत्र युक्तं? भूताकाशमिति। कुतः? तद्धि प्रसिद्धतरेण प्रयोगेण शीघ्रं बुद्धिमारोहति। नचायमाकाशशब्द उभयोः साधारणः शक्यो विज्ञातुं, अनेकार्थत्वप्रसङ्गात्। तस्मात् ब्रह्मणि गौण आकाशशब्दो भवितुमर्हति। विभुत्वादिभिर्हि बहुभिर्धर्मैः सदृशमाकाशेन ब्रह्म भवति। नच मुख्यसंभवे गौणोऽर्थो ग्रहणमर्हति। संभवति चेह मुख्यस्यैवाकाशस्य ग्रहणम्।

---

तदुदाहरति—**इदमामनन्तीति**। 'स एष परोवरीयानुद्गीथः स एषोऽनन्तः' इति उपसंहारो भाष्ये इतिशब्देन संगृहीतः[1]।

पूर्वं [2]तात्पर्यलिङ्गोपेततया अनन्यथासिद्धेन सर्वपाप्मोदितत्वादिना ब्रह्मलिङ्गेन रूपवत्त्वादीन्यब्रह्मलिङ्गानि अन्यथासिद्धानि ब्रह्मण्येव व्याख्यातानि। इह तु आकाशश्रुतेर्लिङ्गानुसारेणान्यथानयनं न सम्भवति, लिङ्गापेक्षया श्रुतेर्बलीयस्त्वात्—इति प्रत्युदाहरणसङ्गत्या पूर्वपक्षमाह—**न च मुख्यसम्भव इति**।

---

1. **सङ्गृहीत इति** सङ्ग्रहश्च सिद्धान्तोपपादनायापेक्षितः।
2. **तात्पर्यलिङ्गं**—फलरूपं तात्पर्यलिङ्गम्

ननु भूताकाशपरिग्रहे वाक्यशेषो नोपपद्यते-‘सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते’ इत्यादिः।

नैष दोषः—भूताकाशस्यापि वाय्वादिक्रमेण कारणत्वोपपत्तेः। विज्ञायते हि–‘तस्माद्वा एतस्मादात्मन आकाशः संभूतः।

---

ननु अन्तवद्वैकिलतेशालावत्यसामेति शालावत्यपक्षे अन्तवत्त्वदोषमुद्भाव्य जैवलिना आकाशः परिगृहीतः। अतः सोऽनन्तरूप एव वक्तव्यः। तथैव च अन्ते उपसंहृतं ‘स एष परोवरीयानुद्गीथः स एषोऽनन्तः’ इति। अस्यलोकस्य कागतिरिति शालावत्यप्रश्नस्यापि सर्वलोककारणविषयत्वमेव वक्तव्यम्। पृथिवी-कारणस्य अब्रूपस्य प्रसिद्धत्वेन प्रश्नायोगात्। अत एव उत्तरेऽपि सर्वलोक-कारणमेव निरूप्यते सर्वाणिहवाइमानिभूतानीति। न च भूताकाशपरिग्रहे सर्वमेतदुपपद्यते। तस्य अन्तवत्त्वात् सर्वलोककारणत्वाभावाच्च। न च आकाशा-देवेत्यवधारणमपि तत्र [1]समञ्जसं भवति। आकाशस्य वाय्वादिजनने कालादृष्टादेर-पेक्षितत्वात्। भूयांसि च ब्रह्मलिङ्गानि उत्तरत्र श्रूयन्ते—सर्वभूतानि प्रति ‘आकाशादेव समुत्पद्यन्ते’ इति उत्पत्तिकारणत्वं ‘आकाशं प्रत्यस्तं यन्ति’ इति लयकारणत्वं ‘परायणं’ इति स्थितिकारणत्वं, ज्यायस्त्वम्। अतो भूयोऽनु-ग्रहन्यायेन एकस्या आकाशश्रुतेः ब्रह्मलक्षकत्वे का अनुपपत्तिरिति [2]दिक्प्रदर्शनन्यायेन शङ्कते—**ननु भूताकाशपरिग्रह इति**।

**नैष दोष इति**। अयमाशयः—सर्वभूतोत्पत्त्यादिलिङ्गैर्वाक्यशेषपठितैः न आकाशश्रुतेरन्यथानयनं सम्भवति। सा हि तेभ्यः प्रथमं पठिता अभ्यास-रूपतात्पर्यलिङ्गोपेता प्रश्नोत्तरपरंपराविश्रान्त्यवगमितप्रधानस्थाननिविष्टा च। सर्व-कारणत्वादीनि च न तात्पर्यलिङ्गोपेतानि चरमपठितानि च आकाशपदार्थधर्मतया तत्र गुणभूतानि। न च भूयोभिरपि अप्रधानैः प्रधानस्यान्यथानयनमेकस्याप्यु-चितम्। ‘त्यजेदेकं कुलस्यार्थे’ इति लौकिको यो भूयोऽनुग्रहन्यायः स तुल्या-

---

1. मु. ‘समञ्जसं’ नास्ति, ‘संभवति’

2. **दिक्प्रदर्शनन्यायेन**—प्रकृतोपयोगिषु बहुषु वक्तव्येषु एकस्य तत्रापि प्रारम्भ-वर्तिनः प्रदर्शनेन

आकाशाद्वायुः । वायोरग्निः ।' (तै. उ. २।१) इत्यादि । ज्यायस्त्व-परायणत्वे अपि भूतान्तरापेक्षया उपपद्येते भूताकाशस्यापि । तस्मात् आकाशशब्देन भूताकाशस्य ग्रहणं-इत्येवं प्राप्ते—

---

नामेव, न तु गुणप्रधानभावापन्नानाम् । 'आत्मार्थे पृथिवीं त्यजेत्' इति विशेष-न्यायात् । अनन्तत्वं तु आपेक्षिकमेव भविष्यति । यथा हि शालावत्येन 'अप्रतिष्ठितं वै किल ते दाल्भ्य साम' इति अप्रतिष्ठितत्वदोषेण दाल्भ्यपक्षं दूषितवताऽपि स्वयं पृथिवीलोकः आपेक्षिकप्रतिष्ठाशाल्येव निरूपितः—न हि पृथिवीलोको निरंकुशप्रतिष्ठाशाली, तत्प्रतिष्ठाभूतानामन्येषामपि जलादीनां विद्यमा-नत्वात्; तद्वत् अनन्तत्वमपि आकाशगतं वाय्वाद्यपेक्षं भविष्यति । तदपेक्ष्य चिरस्थायित्वात् । अस्यलोकस्यकागतिरिति शालावत्यप्रश्नस्तु पृथिवीमात्र-कारणविषयः । शिष्यभावमुपगतेन हि दाल्भ्येन पूर्वं अमुष्यलोकस्यका गतिरिति पृष्टे 'अयं लोक इति होवाच' इति शालावत्येनोत्तरिते पुनरपि 'अस्य लोकस्य का गतिः' इति दाल्भ्यप्रश्नो दृश्यते । अत्रादश्शब्दस्स्वर्गपरः, 'न स्वर्गं लोकं अतिनयेत्' इत्यादिवाक्यशेषात्, तत्कारणतया उपदिश्यमानः अयं लोकः पृथिव्येव, 'इतः प्रदानं देवा उपजीवन्ति' इति श्रुतेः । श्रुतौ अदइदंशब्दयोस्समभि-व्याहारे तयोः स्वर्गपृथिवीपरत्वप्रसिद्धेश्च । ततश्च यथा पूर्वं 'अयं लोकः' 'अस्य लोकस्य' इत्यत्र इदंशब्दः पृथिवीपरः, तथा [1]अस्मिन्नपि वाक्ये पृथिवीपर एव, तदैकरूप्योपपत्तेः । न च [2]पृथिवीकारणत्वस्य अपां प्रसिद्धत्वात् प्रश्नानुप-पत्तिः । 'अस्य लोकस्य का गतिः' इति दाल्भ्यप्रश्नस्य पृथिवीमात्रकारण-विषयस्य दर्शनात् । अप्रतिष्ठितत्वदोषमुद्भावितवान् शालावत्यः प्रतिष्ठितं [3]अब्व्यतिरिक्तमपि पृथिव्याः कारणं वदेत्-इत्यभिप्रायेण स प्रश्न इति चेत्, तर्हि अन्तवत्त्वदोषमुद्भावितवान् जैवलिः अव्यतिरिक्तमनन्तं किञ्चित् पृथिवीकारणं

---

1. **अस्मिन्नपि वाक्ये**—शालावत्यप्रश्नवाक्ये

2. मु. पृथिवीकारणस्य

3. मु. पृथिव्यब्व्यतिरिक्तमपि आ. पृथिव्यतिरिक्तं किञ्चित्

ब्रूमः—आकाशस्तल्लिङ्गात् । आकाशशब्देन इह ब्रह्मणो ग्रहणं युक्तम् । कुतः, तल्लिङ्गात् । परस्य हि ब्रह्मण इदं लिङ्गम्—'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' इति । परस्माद्धि ब्रह्मणो भूतानामुत्पत्तिरिति वेदान्तेषु मर्यादा ।

ननु भूताकाशस्यापि वाय्वादिक्रमेण कारणत्वं दर्शितम् । सत्यं दर्शितम् । तथापि मूलकारणस्य ब्रह्मणोऽपरिग्रहात् आकाशादेवेत्यवधारणं सर्वाणीति च भूतविशेषणं न अनुकूलं स्यात् । तथा 'आकाशं प्रत्यस्तं यन्ति' इति ब्रह्मलिङ्गं 'आकाशो ह्येवैभ्यो ज्यायान् आकाशः परायणम्' इति च ज्यायस्त्वपरायणत्वे । ज्यायस्त्वं ह्यनापेक्षिकं परमात्मन्येवैकस्मिन् आम्नातम्-'ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः' (छा. उ. ३।१४।३) इति । तथा परायणत्वमपि परमकारणत्वात् परमात्मन्येवोपपन्नतरं भवति । श्रुतिश्च 'विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम्' (बृ. उ. ३।९।२८) इति ।

अपि च अन्तवत्त्वदोषेण शालावत्यस्य पक्षं निन्दित्वा, अनन्तं किंचित् वक्तुकामेन जैवलिना आकाशः परिगृहीतः, तं चाकाशमुद्गीथे

---

वदेत् - इत्यभिप्रायेण पृथिवीकारणविषय एव शालावत्यप्रश्नोऽस्तु । अतः अस्य लोकस्यकागतिरितिप्रश्नानुसारेणापि न आकाशश्रुतिः अन्यथा नेया । 'सर्वाणि ह वा इमानि' इति वाक्यशेषस्तु आकाशश्रुत्यनुसारेणैव नेयः । अतो न आकाशपदं ब्रह्मपरमिति ।

अपि च अन्तवत्त्वदोषेण शालावत्यपक्षं निन्दित्वेति । यत्तु—स्वर्गे अप्रतिष्ठितत्वदोषोद्भावनपूर्वकमुक्तं पृथिवीलोकप्रतिष्ठितत्वमिव[1] इदमपि यथाकथञ्चिदाकाश एव व्याख्येयमित्युक्तं, तन्न साधु—उद्गीथे कुशला बभूवुः' 'उद्गीथे वै कुशलाःस:' 'उद्गीथे कथां वदामः' इत्युपक्रम्य स्वरादिपृथिव्यन्तं

---

1. मु. प्रतिष्ठितत्वं । इदमपि

तेन तेन दोषेण निराकृत्य अनन्तं वस्तु उपक्षिप्य 'स एष परोवरीयानुद्गीथः स एषोऽनन्तः' इति पर्यवसानकरणात् कृत्स्नोऽयं सन्दर्भः उद्गीथे अनन्तवस्तु-ध्याननिरूपणपर इत्यवगम्यते। पृथिव्यन्तवस्तुपरम्परा [1]तत्र तत्र दोषश्च नहि-निन्दान्यायेन अनन्तवस्तुस्तुतिपर एव। ततश्च अन्तवत्त्वदोषोद्भावनार्थमुपक्षिप्तस्य पृथिवीप्रतिष्ठितत्वस्य यथाकथञ्चिद्व्याख्यानेऽपि न अनन्तत्वं यथाकथञ्चिद्व्याख्येयम्। तत्र दोषानुद्भावनात्, कृत्स्नसन्दर्भस्य तत्रैव पर्यवसानाच्च।

अपि च [2]पृथिवीप्रतिष्ठितत्वं न स्वर्गं प्रत्युपजीव्यत्वं, येन तदापेक्षिकं स्यात्। पृथिव्युपजीव्यानामबादीनां विद्यमानत्वात् सर्वोपजीव्यत्वानुपपत्तेः। किंतु [3]स्थिरत्वरूपम्। अन्यथा 'अप्रतिष्ठितं वै किल ते दाल्भ्य साम' इति वचनेन स्वर्गस्याप्रतिष्ठितत्वोक्तिः 'न प्रतिष्ठां लोकमतिनयेत्' इति पृथिव्याः प्रतिष्ठितत्वोक्तिश्च असङ्गता स्यात्। स्वर्गपृथिव्योरुपजीव्योपजीवकभावस्य 'इतः प्रदानं देवा उपजीवन्ति अमुतः प्रदानं मनुष्या उपजीवन्ति' इति परस्परं प्रतिपादनात्। तथा च पृथिव्याः प्रतिष्ठितत्वोक्त्या निश्चलत्वे विवक्षिते स्वर्गस्याप्रतिष्ठितत्वं चलद्रूपत्वं पर्यवस्यति। तच्च ज्योतिश्चक्रान्तर्गतस्य स्वर्गस्य उपपद्यते। आर्यभटोक्तो भूभ्रमणवादः, मत्स्यजिघृक्षुपक्षिवत् भुवो नित्यमधः-पतनवादो यवनपरिकल्पितः, जलान्तर्गतशुष्कालाबूवत् जैनपरिकल्पितभूप्लवनवादश्च, पुराणादिविरोधात् एतत्प्रतिष्ठितत्वोक्तिविरोधाच्च हेयः। त्रिष्वप्येतेषु पक्षेषु ऊर्ध्वनिक्षिप्तकन्दुकादेर्हस्तप्राप्तिः न स्यात्। अतश्च पृथिवीलोकप्रतिष्ठितत्ववत् अनन्तत्वमपि आपेक्षिकमित्यसङ्गतम्।

एवमुपक्रान्तसर्वलोककारणत्वानुसारेणापि आकाशो ब्रह्मेति सिध्यति। यथाह्यन्तवत्त्वदोषोद्भावनात् अस्यलोकस्यकागतिरिति प्रश्नस्य अनन्तवस्तुविषय-कत्वं कल्प्यते, तथा सर्वकारणत्वाभावे अनन्तत्वमपि न स्यादित्यपि प्रष्टुरभिप्रायो भवत्येवेति, तन्निर्वाहाय काकेभ्योदधिरक्ष्यतामित्यादिवत् अजहल्लक्षणया सर्व-कारणवस्तुविषयकत्वमपि प्रश्नस्य कल्प्यते। अतः उपक्रान्तानन्तत्वसर्वलोक कारणत्वानुसारेण[4] आकाशशब्दो न यथाश्रुतार्थः।

---

1. मु. तत्र दोषश्च
2. आ. पृथिवीप्रतिष्ठात्वं
3. मु. स्थितत्वरूपं
4. आ. सर्वकारणत्वानुसारेण

**संपाद्य उपसंहरति 'स एष परोवरीयानुद्गीथः स एषोऽनन्तः' (छा. उ. १।९।२) इति। तच्चानन्त्यं ब्रह्मलिङ्गम्।**

**यत्पुनरुक्तं भूताकाशं प्रसिद्धिबलेन प्रथमतरं प्रतीयत इति, अत्र ब्रूमः—प्रथमतरं प्रतीतमपि तत् वाक्यशेषगतान् ब्रह्मगुणान् दृष्ट्वा न परिगृह्यते। दर्शितश्च ब्रह्मण्यप्याकाशशब्दः 'आकाशो वै नाम नामरूपयोर्निर्वहिता' इत्यादौ।**

---

अपि च उपक्रान्तमानन्त्यं त्रिविधपरिच्छेदनिरसनेन उत्तरत्र व्युत्पाद्यते। तत्र कारणवाक्यैः वस्तुपरिच्छेदो ब्रह्मणं उपादानत्वमुपाहरद्भिः निराक्रियते। आकाशादेवेत्यवधारणं च ब्रह्मपक्षे मूलकारणीभूतनिमित्तान्तरव्यवच्छेदकत्वात् उपपद्यते। अवधारणस्य सजातीयव्यावर्तकत्वं हि व्युत्पत्तिसिद्धं, मूलकारणस्य च ब्रह्मणः तादृशमेव कारणं सजातीयं, न त्ववान्तरं कालादृष्टादि, अतस्तद्व्यावर्तनेऽपि न एवकारास्वारस्यम्। भूताकाशपक्षे तु तस्यावान्तरकारणत्वात् तादृशमेव व्यवच्छेद्यम्। न च तत् सम्भवति, कालादेर्विद्यमानत्वात्। ततश्च एवकारोऽपि निमित्तान्तरमादाय प्राप्तं वस्तुपरिच्छेदं निराकुर्वन् आनन्त्यमेवोपपादयति। सर्वभूतकारणत्वोक्त्या च सृष्ट्यादावपि विद्यमानताप्रतिपादनेन अनादित्वसूचनात् अनादिभावस्य ध्वंसायोगात् कालतोऽपि परिच्छेदोऽपाकृतो भवति, ज्यायस्त्वोक्त्या च देशतः परिच्छेदः। एवं च 'सर्वाणि ह वा इमानि भूतानि' इत्यादिवाक्यप्रतिपाद्यमपि सर्वकारणत्वादिकं निरंकुशमेव व्याख्येयम्। आपेक्षिकस्य तस्य ग्रहणे उपक्रान्तमनन्तत्वं व्युत्पादितं न स्यात्। 'स एषोऽनन्तः' इत्युदर्केऽपि हि आनन्त्यं श्रुतम्। ततश्च आनन्त्यं उपक्रमोपसंहारैकरूप्यकारणत्वाद्युपपत्तिरूपतात्पर्यलिङ्गोपेतं न अन्यथा नेतुं शक्यम्।

यद्यप्याकाशश्रुतिरभ्यस्ता, तथापि निरूढ्या ब्रह्मण्यपि व्याख्यातुं युक्ता। सा च 'आकाशवत्सर्वगतश्च नित्यः' इति श्रुतिप्रसिद्धं सर्वगतत्वं गुणमादाय ब्रह्मपरा सती उपक्रान्तमानन्त्यमेवोपोद्बलयिष्यतीति न आनन्त्यं यथाकथञ्चित् नेतुं शक्यम्। उपक्रान्तान्तवत्त्वदोषनिरासालाभात्। न च-आकाशशब्दप्रतिपाद्यं यत् तत् प्रधानं इति प्रकृतसन्दर्भे निर्णये सत्यपि भूताकाशमेव प्रधानमिति

तथा आकाशपर्यायवाचिनामपि ब्रह्मणि प्रयोगो दृश्यते 'ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः' (ऋ. सं. १।१६४।३९) 'सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता' (तै. उ. ३।६) 'कं ब्रह्म खं ब्रह्म' (छा. उ. ४।१०।५) 'ओं खं ब्रह्म खं पुराणम्' (बृ. उ. ५।१) इति चैवमादौ। वाक्योपक्रमेऽपि वर्तमानस्य आकाशशब्दस्य वाक्यशेषवशात् युक्ता ब्रह्मविषयत्वावधारणा। 'अग्निरधीतेऽनुवाकम्' इति हि वाक्योपक्रमगतोऽप्यग्निशब्दो माणवकविषयो दृश्यते। तस्मात् आकाशशब्दं ब्रह्मेति सिद्धम् ॥ २२ ॥

---

द्रागित्येव निर्णयो भवति। परन्तु आकाशपदस्य भूताकाशे शक्तत्वात् भूताकाश एव उत्सर्गतस्तेन प्रतिपाद्यते इति मतिः प्राप्ता यावत् भवति तावदेव भूयसी-ब्रह्मलिङ्गप्रतिपादिकाश्श्रुतीरुपलभ्य सा मतिः कुण्ठिता भवति। तथा च भूयोऽनुग्रहन्यायानुसरणे न प्रधानविरोध आपादयितुं शक्यः। अपि तु प्रधान-प्रतिपादकपदस्य लक्षणामात्रम्। तच्च नानुपपन्नम्। 'अग्निरधीतेऽनुवाकं' इति दर्शनात्। अतः आकाशपदं ब्रह्मैव प्रतिपादयति। ततश्च तदेवेह प्रधानमिति सिद्धम्।

**ऋचो अक्षर इति**। यस्मिन् सर्वे देवा अधिनिषेदुः तस्मिन् परमाकाशे ऋचः प्रतिष्ठिताः, तदेव ऋक्प्रतिपाद्यमित्यर्थः। परमेव्योमन्नित्यत्र सप्तम्या लुग्द्रष्टव्यः। **ओं खं ब्रह्म खं पुराणमिति**। अत्र ओङ्कारो ब्रह्मप्रतीकत्वेन विवक्षितः तद्वाचकत्वेन वा, इति सामानाधिकरण्यं ब्रह्मपदेन तस्य। खमिति तु तु विशेषणं ब्रह्मपदार्थस्य। तत्र खशब्दो न भूताकाशपर इत्याह श्रुतिः— **खं पुराणमिति**। चिरन्तनं वस्तु खशब्देनेह विवक्षितम्। तथा च 'आकाशवत् सर्वगतश्च नित्यः' इति श्रुतिप्रसिद्धं नित्यत्वगुणमादाय खशब्दो ब्रह्मविशेषणम् ॥ २२ ॥

इत्याकाशाधिकरणम् ॥ ८ ॥

९ प्राणाधिकरणम्

## अत एव प्राणः ॥ २३ ॥

उद्गीथे 'प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता' इत्युपक्रम्य श्रूयते 'कतमा सा देवतेति प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता' (छा. उ. १।११।४, ५) इति।

तत्र संशयनिर्णयौ पूर्ववदेव द्रष्टव्यौ। 'प्राणबन्धनं हि सोम्य मनः' (छा. उ. ६।८।२) 'प्राणस्य प्राणम्' (बृ. उ. ४।४।१८) इति चैवमादौ ब्रह्मविषयः प्राणशब्दो दृश्यते, वायुविकारे तु प्रसिद्धतरो लोकवेदयोः। अतः इह प्राणशब्देन कतरस्योपादानं युक्तमिति भवति संशयः। किं पुनरत्र युक्तम्। वायुविकारस्य पञ्चवृत्तेः प्राणस्योपादानं युक्तम्। तत्र हि प्रसिद्धतरः प्राणशब्द इत्यवोचाम।

---

उद्गीथाध्याये[1] धनाशया कस्यचिद्राज्ञो यज्ञशालां प्रविष्टेन चाक्रायणेन ऋषिणा, स्वज्ञानप्रख्यापनाय प्रस्तावोद्गीथप्रतिहाररूपसामभक्तिदेवताविज्ञानरहितानां भवतां मम विदुषः सन्निधौ आर्त्विज्यं कुर्वतां मूर्धपातोभविष्यतीति शपतैव, तत्तद्देवताविज्ञानं परीक्षितुं पृष्टानां प्रस्तोत्रुद्गातृप्रतिहर्तॄणां तत्तद्देवताविज्ञानरहितत्वात् भीतानां तं प्रति शिष्यभावमुपगतानां 'कतमा सा [2]देवता' इति प्रश्नः। एवं त्रयाणामपि प्रश्नमुपक्षिप्य प्रस्तावदेवता प्राणरूपा प्रतिपादिता 'प्राण इति होवाच' इत्यादिना। 'आदित्य इति हो वाच सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैस्सन्तं गायन्ति' इत्युद्गीथदेवता, 'अन्नमिति होवाच सर्वाणि ह वा इमानि भूतानि अन्नमेव प्रतिहरमाणानि जीवन्ति' इति प्रतिहारदेवता च। तत्र प्राणवाक्यं विषयः। पूर्वाधिकरणातिदेशत्वात् सङ्गतिः। पूर्वाधिकरणार्थमतिदिशति—तत्रेत्यादिना।

---

1. आ. धनाय 2. मु. देवतेत्येवं

ननु पूर्ववदिहापि तल्लिङ्गाद्ब्रह्मण एव ग्रहणं युक्तम्। इहापि हि वाक्यशेषे भूतानां संवेशनोद्गमनं पारमेश्वरं कर्म प्रतीयते-

न - मुख्येऽपि प्राणे भूतसंवेशनोद्गमनस्य दर्शनात्। एवं ह्याम्नायते 'यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः स यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्ते' (श० ब्रा० १०।३।३।६) इति। प्रत्यक्षं च एतत् स्वापकाले प्राणवृत्तावपरिलुप्यमानायां इन्द्रियवृत्तयः परिलुप्यन्ते प्रबोधकाले च प्रादुर्भवन्तीति। इन्द्रियसारत्वाच्च भूतानां अविरुद्धो मुख्ये प्राणेऽपि भूतसंवेशनोद्गमनवादी वाक्यशेषः। अपि च आदित्योऽन्नं च उद्गीथप्रतिहारयोर्देवते

---

अतिदेशस्य विशेषशङ्कानिराकरणार्थत्वात् तामाह—**न-मुख्येऽपि प्राण इत्यादिना**। ननु—संवर्गविद्यागतेन वाक्येन वागादीनामेव प्राणे लयो निरूप्यते, न सर्वभूतानाम्। सोऽपि न मुख्यः। अपि तु प्राणवृत्तौ विद्यमानायां वागादिवृत्त्यभिभवमात्रेण[1] औपचारिकः। प्रत्यक्षसंवादोऽपि तावत्येव। 'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति' इत्यत्र तु सर्वभूतलयः। अत्र भूतशब्दो यदि प्राणिवर्गपरः, यदि वा आकाशादिपञ्चमहाभूतपरः, 'जगद्वाचित्वात्' [ब्र. सू. १. ४. १६] इत्यधिकरणे वक्ष्यमाणेन 'रूढ्योः परस्परं कलहे योगो जागर्ति' इतिन्यायेन 'भवन्तीति भूतानि' इति व्युत्पत्त्या कार्यमात्रपरो वा, सर्वथा सुषुप्तिमादाय प्राणपरतया वाक्यशेषो न सङ्गच्छते। इन्द्रियाणां भूतसारत्वं च [1]प्राणिवर्गव्यवहारोपयोगित्वम्। न च तावन्मात्रमादाय सुषुप्ताविन्द्रियवृत्त्यभावात् प्राणिनां व्यवहारो नास्तीति सर्वभूतलयवचनं प्राणे यथाकथञ्चित् योजयितुं शक्यम्। तादृशक्लेशकल्पनायां प्रमाणाभावात्। न च प्राणश्रुत्यनुसारेण लिङ्गान्यथानयनम्। देवतोपक्रमानुसारेण प्राणपदस्य चेतनवस्तुपरत्वावश्यंभावेन प्राणश्रुतेः मुख्यार्थत्वस्य वक्तुमशक्यत्वात्। न च आदित्यान्नरूपाब्रह्मप्रायपाठात् प्राणपदस्य अब्रह्मपरत्वं युक्तम्, येन वाक्यशेषो यथाकथञ्चित् योजनीयः स्यात्।

---

1. **प्राणिवर्गव्यवहारेति** इदं भूतशब्दस्य प्राणिपरत्वाभिप्रायेण।

**प्रस्तावदेवतायाः प्राणस्य अनन्तरं निर्दिश्येते । नच तयोर्ब्रह्मत्वमस्ति, तत्सामान्याच्च प्राणस्यापि न ब्रह्मत्वं इत्येवं प्राप्ते—**

---

लिङ्गविरोधिनः प्रायपाठस्य ईक्षत्यधिकरणे एव निरस्तत्वात् । अतः अपि-चेत्यादिना दर्शिता विशेषाशङ्काऽपि न युक्ता-इतिचेत्—

उच्यते—सर्वभूतसंवेशनोद्गमनादिकं हि चरमपठितं लिङ्गं कथं प्रथम-पठितप्राणश्रुतेरन्यथानयने समर्थं स्यात् । आदित्यान्नरूपाब्रह्मप्रायपाठश्च प्राणस्य अब्रह्मत्वे लिङ्गम् । न चात्र [1]ईक्षणप्रायपाठवत् अप्रयोजकता । स हि ईक्षतिमुख्यार्थत्वविरोधी । एवं तेजआद्यब्रह्मप्रायपाठोऽपि । ततश्च सत्पर्यायगतेक्षतिश्रुतिमुख्यार्थताभञ्जकयोः गौणेक्षणतेजआद्यब्रह्मप्रायपाठयोः अनि-र्णायकत्वेऽपि, न आदित्यान्नाब्रह्मप्रायपाठस्य [2]प्रकृते निर्णायकता नास्तीति शक्यं वक्तुम् । ततश्च प्राणश्रुतिमुख्यार्थतानिर्वाहाय 'सर्वाणि ह वा इमानि भूतानि' इत्येतदपि प्राणाधिकरणकसंवेशनतदुपादानकोद्गमनान्वययोग्यसर्वभूताभिप्रायमेवव्या-ख्येयम् । आदित्यान्नपर्याययोरपि हि तदुभयकर्मकगानप्रतिहरणक्रियान्वययोग्यपर एव सर्वभूतशब्दो यथायथं व्याख्यातव्यः । 'सर्वाणि ह वा इमानि भूतानि आदित्यमुच्चैस्सन्तं गायन्ति' इत्यत्र हि आदित्यकर्मकं गानं प्रतीयते । तत्र च आदित्यशब्दो मण्डलपर एव । उच्चैस्सन्तमिति तल्लिङ्गात्, श्रुतिभञ्जकब्रह्म-लिङ्गाभावाच्च । एवं 'सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति' [3]इत्यत्र अन्नशब्द ओदनपर एव । 'भिस्सा स्त्री भक्तमन्धोऽन्नं' इति निघण्टु-वचनात्, प्रतिहरणशब्दोदितस्य भक्षणस्य ब्रह्मण्यनन्वयाच्च । तत्र च सर्वभूत-शब्दो यत्किञ्चित्प्राणिपरः । न हि सर्वे प्राणिनः आदित्यं गायन्ति, न वा ओदनमभ्यवहरन्ति । वृक्षादिष्वदर्शनात् । अतस्तत्र यथा आदित्यान्नशब्दाव-ब्रह्मपरौ सर्वभूतशब्दश्च समभिव्याहृतक्रियान्वयिनि संकुचद्वृत्तिः, तथा प्राणशब्दो-ऽप्यब्रह्मपर एव श्रुत्या [4]भवतु । सर्वभूतशब्दश्च समभिव्याहृतक्रियान्वयिनि संकुचद्-

---

1. **ईक्षणेति** गौणेक्षणेत्यर्थः ।
2. **प्रकृते इति** प्रकृते प्रायपाठस्य प्राणश्रुतिमुख्यार्थत्वोपपादकत्वात् निर्णायकतेति भावः । 3. मु. इत्यत्राप्यन्नशब्दः 4. मु. भवति

सूत्रकार आह—अत एव प्राणः - इति । 'तल्लिङ्गात्' इति पूर्वसूत्रे निर्दिष्टम् । अतएव–तल्लिङ्गात् प्राणशब्दमपि परं ब्रह्म भवितु-

---

वृत्तिरस्तु । ततश्च कीदृग्विधः प्राणाधिकरणकः संवेशः, कीदृग्विधश्चोद्गमः, तदन्वयीनि च कानि सर्वभूतानि ? इत्यपेक्षायां, संवर्गविद्यावाक्यं प्रत्यक्षं च उदाहृतं भाष्ये । ततश्च प्राणश्रुत्यनुरोधेन सर्वभूतसंवेशनोद्गमनादिकं श्रुत्यन्तरपर्यालोचनया [1]वाक्यशेषपर्यालोचनया च प्रकृते सौषुप्तं जाग्रदारम्भप्रयुक्तं च पर्यवस्यति ।

एतेन—'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति' इत्यवधारणं सुषुप्तिमादाय वक्तुं न शक्यते, सुषुप्तिदशायां ब्रह्मणोऽपि संवेशाधारतया अन्ययोगव्यवच्छेदार्थकस्यैवकारस्यानुपपत्तेः—इति शङ्काऽपि परास्ता । 'सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति' इति वाक्यशेषगतो ह्येवकारो न अन्ययोगव्यवच्छेदार्थकः । अन्नातिरिक्तानामपूपादीनामपि जीवनोपयोगितया अभ्यवहरणीयानां विद्यमानत्वात् । अतः तस्य अयोगव्यवच्छेदार्थकत्वमुपगम्य जीवन्त्येव इत्यन्वयो वक्तव्यः । तद्वत् प्रकृतेऽपि प्राणमभिसंविशन्त्येव इत्यन्वयेन अयोगव्यवच्छेदार्थकत्वे न काचिदनुपपत्तिः । न च अयोगव्यवच्छेदार्थकैवकारप्रायपाठेन अन्ययोगव्यवच्छेदार्थकत्वं स्वरसतः प्रतीयमानं प्राणमेवाभिसंविशन्तीति वाक्यगतस्यैवकारस्य कथं परित्यज्यत इति शङ्कनीयम् । प्रबलप्राणश्रुत्यनुसारेण अन्यथानयने आवश्यके प्रायपाठस्य अर्थविशेषव्यवस्थापकत्वोपपत्तेः । न च देवतापदस्य चेतनपरत्वात् मुख्ये प्राणे तदर्थान्वयासम्भवात् प्राणश्रुतिमपेक्ष्यापि पूर्वपठितया देवताश्रुत्या [2]अभ्यस्तया प्राणश्रुतेः लक्षणायां वक्तव्यायां वाक्यशेषस्वारस्यानुसारेण ब्रह्मपर एव प्राणशब्दोऽस्त्विति वाच्यम् । 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवताः' इत्यादौ तेजोबन्नेष्वचेतनेष्वपि देवताशब्दप्रयोगेण तस्य चेतनमात्रनैयत्याभावात् ।

अतो मुख्यप्राण एव प्रस्तावदेवता - इति शङ्कितुरभिप्रायः ।

---

1. **वाक्यशेषेति** आदित्यान्नपर्यायरूपवाक्यशेषेत्यर्थः ।

2. **अभ्यस्तयेति** यद्यपि प्राणश्रुतिरप्यभ्यस्ता, तथाऽपि प्राणश्रुतिः त्रिवारमभ्यस्ता देवताश्रुतिः चतुर्वारमभ्यस्ता इति भावः ।

महेति। प्राणस्यापि हि ब्रह्मलिङ्गसंबन्धः श्रूयते 'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते' इति। प्राणनिमित्तौ सर्वेषां भूतानां उत्पत्तिप्रलयौ उच्यमानौ प्राणस्य ब्रह्मतां गमयतः।

ननूक्तं-मुख्यप्राणपरिग्रहेऽपि संवेशनोद्गमनदर्शनमविरुद्धं, स्वापप्रबोधयोर्दर्शनात् - इति—

अत्रोच्यते—स्वापप्रबोधयोरिन्द्रियाणामेव केवलानां प्राणाश्रयं संवेशनोद्गमनं दृश्यते, न सर्वेषां भूतानाम्। इह तु सेन्द्रियाणां सशरीराणां च जीवाविष्टानां भूतानां, 'सर्वाणि ह वा इमानि भूतानि' इति श्रुतेः।

---

अत्रायं सिद्धान्ताभिप्रायः—देवताशब्दो हि चेतनवाचक एव। तस्य क्वचित् अचेतने प्रयोगस्तु लाक्षणिकः। न च प्रकृते चरमपठितेन प्राणशब्देन तस्य लाक्षणिकत्वं स्वीकर्तुं युक्तम्।

ननु-अन्नादित्यपर्याययोरपि देवताशब्दः पठ्यते। तस्य च न चेतनपरत्वम्। अपि तु आदित्यमण्डलपरत्वं ओदनपरत्वं च वक्तव्यम्। न च तत्रापि प्रथमश्रुतदेवतापदानुसारेण अन्नादित्यपदयोरेव तदभिमानिदेवतापरत्वं कुतो नाभ्युपेयत इति शङ्क्यम्। सर्वभूतगानस्य प्रसिद्धे मण्डल एव सम्भवात्, देवताया लोकाप्रसिद्धत्वेन सर्वभूतगानकर्मत्वानुपपत्तेः। एवं सर्वभूताभ्यवहरणीयत्वमपि न देवतायां सम्भवति। ततस्तत्र देवताशब्दो लाक्षणिक एव, तत्प्रायपाठात् प्रकृतेऽपि लाक्षणिको भविष्यति - इति चेत्-

न - तत्र वाक्यशेषस्य सर्वात्मना चेतनेऽनुपपत्त्या प्रथमश्रुतस्य देवतापदस्य लाक्षणिकत्वाभ्युपगमेऽपि प्रकृते देवतापदस्य चेतनब्रह्मपरत्वे वाक्यशेषस्य स्वारस्येनैवान्वयोपपत्तौ इहापि देवतापदस्य न लाक्षणिकत्वमुपेयम्। ततश्च वाक्यान्तरगतप्रायपाठरूपस्थानप्रमाणानुरोधिन्याः चरमपठितायाः प्राणश्रुतेः स्ववाक्यगतलिङ्गरूपप्रमाणानुरोधिन्या प्रथमपठितया देवताश्रुत्या ब्रह्मपरत्वमेव निरूढ्या स्वीकर्तव्यमिति।

यदाऽपि भूतश्रुतिर्महाभूतविषया परिगृह्यते तदाऽपि ब्रह्मलिङ्गत्वमविरुद्धम् ।

ननु सहापि विषयैः इन्द्रियाणां स्वापप्रबोधयोः प्राणे अप्ययं प्राणाच्च प्रभवं शृणुमः—' यदा सुप्तः स्वप्नं न कंचन पश्यति अथास्मिन्प्राण एवैकधा भवति तदेनं वाक् सर्वैर्नामभिः सहाप्येति ' (कौ.उ.३।३) इति—

---

स्वापप्रबोधयोरिन्द्रियाणामेव केवलानामिति । ' नात्र रूढयोः परस्परं कलहे योगो जागर्तीति न्यायः प्रवर्तते । आदित्यान्नवाक्यशेषे भूतशब्दस्य प्राणिनिकायपरत्वेन इहापि तत्परत्वस्यैव प्राप्तेः । न च - [1]स्ववाक्यगतप्राणशब्देन प्राणकारणीभूतमहाभूतान्तर्गतवायुस्मरणात् महाभूतानामेव ग्रहणं प्राप्नोति, ततश्च पुनरपि कलह एव - इति वाच्यम् । प्राणशब्देन प्राणिनामेव झटिति स्मरणसम्भवेन तस्य महाभूतकोटिपक्षपातित्वासम्भवात् । ततश्च इह प्राणिनामेव ग्रहणं' इति यदि वदेत् , तदापि सर्वशब्दो मुख्यप्राणपरिग्रहपक्षे न व्यक्तिसाकल्यमादाय वक्तुं शक्यते । पूर्वपक्षोक्तरीत्या सुषुप्तिदशायां एकस्मिन् प्राणे सर्वप्राणिलयस्य गौणस्याप्यभावात् । अतः तत्तत्प्राणे [2]तत्तत्प्राणिलयो वक्तव्यः । तत्र च सर्वशब्दः अवयवसाकल्यमादाय व्याख्येयः ' सर्वः पटो रक्तः ' इतिवत् । तदपि वक्तुं न शक्यते । शरीरमारभ्य चेतनपर्यन्तस्य अवयविनः प्राणित्वात् वृत्तिलयमादाय अचेतनेन्द्रियलये यथाकथञ्चित् [3]वक्तुं शक्येऽपि शरीरांशे वृत्तिलयस्याप्यभावेन अवयवसाकल्येनलयासम्भवात् - इत्याशयः ।

यदाऽपि भूतश्रुतिर्महाभूतविषयेति । अयमाशयः—नात्र भूतशब्दः प्राणिपरः । चेतनानां नित्यतया मुख्यसंवेशनोद्गमनासम्भवात् । अतोऽत्र संवेशनोद्गमनश्रुतिस्वारस्येन महाभूतरूढिरेव उन्मिषति । तिस्वारस्यलाभे च प्राणिपरसर्वभूतप्रायपाठस्य अप्रयोजकत्वात् - इति ।

---

1. मु. स्ववाक्यावगत
2. अ. तत्तत्प्राणिव्यक्तिलयो
3. मु. व्याख्यातुं

तत्रापि तल्लिङ्गात् प्राणशब्दं ब्रह्मैव ।

यत्पुनरुक्तं अन्नादित्यसंनिधानात् प्राणस्य अब्रह्मत्वमिति, तदयुक्तम् - वाक्यशेषबलेन प्राणशब्दस्य ब्रह्मविषयतायां प्रतीयमानायां संनिधानस्य अकिंचित्करत्वात् । यत्पुनः प्राणशब्दस्य पञ्चवृत्तौ प्रसिद्धतरत्वं, तत् आकाशशब्दस्येव प्रतिविधेयम् ।

तस्मात् सिद्धं प्रस्तावदेवतायाः प्राणस्य ब्रह्मत्वम् ।

अत्र केचिदुदाहरन्ति 'प्राणस्य प्राणं' 'प्राणबन्धनं हि सोम्य मनः' इति च । तदयुक्तम् - शब्दभेदात् प्रकरणाच्च संशयानुपपत्तेः । यथा पितुः पितेति प्रयोगे अन्यः पिता षष्ठीनिर्दिष्टः, अन्यः प्रथमानिर्दिष्टः पितुः पिता इति गम्यते, तद्वत् 'प्राणस्य प्राणं' इति शब्दभेदात् प्रसिद्धात्प्राणादन्यः प्राणस्य प्राण इति निश्चीयते । नहि स एव तस्येति-भेदनिर्देशार्हो भवति । यस्य च प्रकरणे यो निर्दिश्यते नामान्तरेणापि स एव तत्र प्रकर(णी)[णे] निर्दिष्ट इति गम्यते । यथा ज्योतिष्टोमाधिकारे 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यत्र ज्योतिःशब्दो ज्योतिष्टोम-विषयो भवति, तथा परस्य ब्रह्मणः प्रकरणे 'प्राणबन्धनं हि सोम्य मनः' इति श्रुतः प्राणशब्दो वायुविकारमात्रं कथमवगमयेत् ।

अतः संशयाविषयत्वात् न एतदुदाहरणं युक्तम् । प्रस्तावदेवतायां तु प्राणे संशयपूर्वपक्षनिर्णया उपपादिताः ॥ २३ ॥

---

**तत्रापि तल्लिङ्गात् प्राणशब्दं ब्रह्मैवेति ।** उपक्रमोपसंहारावधृतब्रह्म-प्रकरणानुसारात् प्राणशब्दो ब्रह्मपर एव । सुषुप्तौ तत्र सर्वलयप्रतिपादनं तु प्रपञ्चस्य दृष्टिमात्रजीवित्वद्योतनेन अतितुच्छत्वप्रतिपादनाय ।

**प्राणबन्धनं हि सोम्य मनः इति ।** मनश्शब्दोदितस्य जीवस्य सुषुप्तौ प्राणशब्दोदितं ब्रह्मैव, बध्यतेऽस्मिन्निति बन्धनं - [1]आश्रयः, इति ॥ २३ ॥

**इति प्राणाधिकरणम् ॥ ९ ॥**

---

१० ज्योतिश्चरणाधिकरणम्

## ज्योतिश्चरणाभिधानात् ॥ २४ ॥

इदमामनन्ति 'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतःपृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु इदं वाव तत् यदिदमस्मिन्नन्तः पुरुषे ज्योतिः' (छा. उ. ३।१३।७) इति। तत्र संशयः—किमिह ज्योतिःशब्देन आदित्यादिज्योतिरभिधीयते किंवा परमात्मेति?

---

अथ यदतः परो दिवो ज्योतिर्दीप्यते इति। विश्वतः पृष्ठेष्विति पदं न संकुचद्वृत्तीति द्योतनाय सर्वत इति। सर्वोत्तरेष्विति पर्यवसितोऽर्थः। अनुत्तमेष्वित्यत्र, न विद्यते उत्तमोऽन्यो यस्मादिति बहुव्रीहिर्विवक्षितः - इति द्योतनाय उत्तमेष्विति। पर इति छान्दसं पुंलिङ्गं[1]ज्योतिर्विशेषणम्। दिवः परं सर्वोत्तरेषूत्तमेषु लोकेषु यज्ज्योतिर्दीप्यते इदमेव तत् यदिदं पुरुषेऽन्तर्विद्यमानं जाठररूपं ज्योति। इति-शब्देन च 'तस्यैषा दृष्टिः यत्रैतदस्मिञ्छरीरे संस्पर्शेनोष्णिमानं विजानाति, तस्यैषा श्रुतिः यत्रैतत्कर्णावपिगृह्य निनदमिव नदथुरिव [2]अग्नेर्ज्वलत उपशृणोति तदेतत् दृष्टं च श्रुतञ्चेत्युपासीत चक्षुष्यः श्रुतो भवति य एवं वेद' इति संगृहीतम्। यत्रशब्दौ यदित्यर्थौ। नदथुरिति द्वितीयान्तम्। अस्मिञ्छरीरे हस्तादिसंस्पर्शेन यदेत-दुष्णिमज्ञानं एषा तस्य जाठरस्य दृष्टिः। कर्णौ पिधाय अङ्गुलीभ्यां निनदं-[3]ऋष-भकूजितमिव ज्वलतोऽग्नेः नदथुं-शब्दमिव यदेतच्छृणोति एषा तस्य श्रुतिः। अत्र [4]तदुष्णिमस्पर्शज्ञानमेव तद्दृष्टित्वेनोपचरितं तच्छब्दश्रवणमेव च तदीयत्वेनो-पचरितम्। उपचारफलं च जाठरस्य दृष्टत्वश्रुतत्वरूपगुणद्वयलाभः।

---

1. मु. ज्योतिर्विशेषणे

2. 'अग्नेरिव ज्वलतः' इति श्रुतिपाठः। यथा अग्नेः बहिर्ज्वलतः [शब्दः] इति च तस्य भाष्यम्।

3. निनदः—रथस्य घोषः, नदथुः - ऋषभकूजितं-इति भाष्यम्।

4. आ. तदुष्णिमस्पर्श एव तद्दृष्टित्वेनोपचरितः

अर्थान्तरप्रसिद्धस्यापि शब्दस्य तल्लिङ्गात् ब्रह्मविषयत्वमुक्तम्। इह तु तल्लिङ्गमेव अस्ति नास्तीति विचार्यते।

किं तावत्प्राप्तम्। आदित्यादिकमेव ज्योतिःशब्देन परिगृह्यत इति। कुतः? प्रसिद्धेः। तमो ज्योतिः इति हीमौ शब्दौ परस्परप्रतिद्वन्द्विविषयौ प्रसिद्धौ। चक्षुर्वृत्तेर्निरोधकं शार्वरादिकं तम उच्यते। तस्या एव अनुग्राहकमादित्यादिकं ज्योतिः। तथा 'दीप्यते' इतीयमपि श्रुतिः आदित्यादिविषया प्रसिद्धा। न हि रूपादिहीनं ब्रह्म 'दीप्यते' इति मुख्यां श्रुतिमर्हति।

द्युमर्यादत्वश्रुतेश्च। न हि चराचरबीजस्य ब्रह्मणः सर्वात्मकस्य द्यौर्मर्यादा युक्ता। कार्यस्य तु ज्योतिषः परिच्छिन्नस्य द्यौर्मर्यादा स्यात्। 'परो दिवो ज्योतिः' इति च ब्राह्मणम्।

ननु कार्यस्यापि ज्योतिषः सर्वत्र गम्यमानत्वात् द्युमर्यादावत्त्वमसमञ्जसम्।

अस्तु तर्ह्यत्रिवृत्कृतं तेजः प्रथमजम्।

न अत्रिवृत्कृतस्य तेजसः प्रयोजनाभावादिति। इदमेव प्रयोजनं यदुपास्यत्वमिति चेत्, न-प्रयोजनान्तरप्रयुक्तस्यैवादित्यादेरुपा-

---

सङ्गतिमाह—**अर्थान्तरप्रसिद्धस्येति**। ननु 'तद्देवा ज्योतिषां ज्योतिः' 'आत्मैवास्य ज्योतिः' 'वागेवास्य ज्योतिः' 'मनो ज्योतिः' इत्यादिप्रयोगात् ज्योतिश्शब्दोऽग्न्यादिवाचक एवेति कथं नियन्तुं शक्यते—इत्याशङ्क्य, लोके शार्वरतमःप्रतिद्वन्द्विन्येव ज्योतिश्शब्दस्य प्रचुरप्रयोगात् तत्प्रतिद्वन्द्वित्वस्य अग्न्यादिष्वेव सम्भवात् तेष्वेव ज्योतिश्शब्दः शक्तः, आत्मादिषु प्रयोगस्तु लाक्षणिको भविष्यति - इत्याह—**तमो ज्योतिरिति हीमाविति**। चक्षुर्वृत्तिनिरोधकं-चाक्षुषज्ञानप्रागभावपरिपालनोपयुक्तमित्यर्थः। **न हि रूपादिहीनमिति**। भास्वररूपमेव दीप्तिशब्दार्थ इति भावः। **प्रयोजनान्तरप्रयुक्तस्यैवेति**। प्राणिकर्मनिमित्तायाः सृष्टेः तद्भोगोपयुक्तपदार्थविषयत्वात् सर्वदापि अत्रिवृत्कृतस्य च तद्भोगानुपयुक्तत्वात्,

स्यत्वदर्शनात् । 'तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' (छा. उ. ६।३।३) इति च अविशेषश्रुतेः । न च अत्रिवृत्कृतस्यापि तेजसो द्युमर्यादत्वं प्रसिद्धम् ।

अस्तु तर्हि त्रिवृत्कृतमेव तत्तेजो ज्योतिःशब्दम् । ननूक्तं अर्वागपि-दिवोऽवगम्यतेऽग्न्यादिकं ज्योतिरिति । नैष दोषः-सर्वत्रापि गम्यमानस्य ज्योतिषः 'परो दिवः' इत्युपासनार्थः प्रदेशविशेषपरिग्रहो न विरुध्यते । न तु निष्प्रदेशस्यापि ब्रह्मणः प्रदेशविशेषकल्पना भागिनी ।

'सर्वतःपृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु' इति च आधारबहुत्वश्रुतिः कार्ये ज्योतिष्युपपद्यतेतराम् ।

'इदं वाव तत् यदिदमस्मिन्नन्तः पुरुषे ज्योतिः' (छा. उ. ३।१३।७) इति च कौक्षेये ज्योतिषि परं ज्योतिः अध्यस्य-मानं दृश्यते । सारूप्यनिमित्ताश्चाध्यासा भवन्ति । यथा—'तस्य भूरिति शिरः एकं शिरः एकमेतदक्षरम्' (बृ. उ. ५।५।३) इति । कौक्षेयस्य तु ज्योतिषः प्रसिद्धमब्रह्मत्वम् । 'तस्यैषा दृष्टिः' 'तस्यैषा श्रुतिः' (छा. उ. ३।१३।७) इति च औष्ण्यघोषविशिष्टत्वस्य श्रवणात् । 'तदेतद्दृष्टं च श्रुतं चेत्युपासीत' इति च श्रुतेः ।

'चक्षुष्यः श्रुतो भवति य एवं वेद' (छा.उ. ३।१३।८) इति च अल्पफलश्रवणादब्रह्मत्वम् । महते हि फलाय ब्रह्मोपासनमिष्यते ।

न चान्यदपि किञ्चित् स्ववाक्ये प्राणाकाशवत् ज्योतिषोऽस्ति ब्रह्मलिङ्गम् ।

---

वाग्धेनूपासनवत् उपास्याभावेऽप्युपासनायास्सम्भवात्, उपासनार्थमेव न तादृश-पदार्थसृष्टिरपेक्षितेति भावः । तस्य भूरिति शिर इति । आदित्यमण्डलान्तर्ग-तस्य हिरण्यगर्भस्य उपासनं प्रस्तुत्य तस्य व्याहृतिशरीरतासम्पादनाय प्रथमव्याहृतेः शिरस्त्वं निरूपयितुं इदं वाक्यम् । तत्र व्याहृतिरूपाक्षरस्य शिरसश्च एकत्वं सादृश्यम् ।

न च पूर्वस्मिन्नपि वाक्ये ब्रह्म निर्दिष्टमस्ति, 'गायत्री वा इदꣳ सर्वं भूतम्' इति छन्दोनिर्देशात्। अथापि कथंचित् पूर्वस्मिन् वाक्ये ब्रह्म निर्दिष्टं स्यात् एवमपि न तस्य इह प्रत्यभिज्ञानमस्ति। तत्र हि 'त्रिपादस्यामृतं दिवि' (३।१२।१,६) इति द्यौः अधिकरणत्वेन श्रूयते। अत्र पुनः 'परो दिवो ज्योतिः' इति द्यौः मर्यादात्वेन।

तस्मात् प्राकृतं ज्योतिरिह ग्राह्यं इत्येवं प्राप्ते —

ब्रूमः–ज्योतिरिह ब्रह्म ग्राह्यम्। कुतः। चरणाभिधानात्, पादाभिधानादित्यर्थः। पूर्वस्मिन् हि वाक्ये चतुष्पाद्ब्रह्म निर्दिष्टं 'तावानस्य

---

ननु—अत्र यत्पदं सर्वनाम। सर्वनाम्नां च बुद्धिस्थत्वमुपाधीकृत्य अर्थाभिधायकत्वम्। वेदे च अध्ययनक्रमानुसारेण यस्य बुद्धिस्थता सम्भाविता तत्परामर्शित्वं सर्वनाम्नां वक्तव्यम्। तदपि प्रधानमपेक्षितम्। ततश्च वेदे यत् पूर्ववाक्ये प्रधानतया प्रतिपाद्यते तत्परामर्शित्वं सर्वनाम्नां व्युत्पत्तिबलादायाति। प्रकृते च गायत्रीवाक्ये ब्रह्मणः पूर्वं प्रतिपादनात् तदेवेह यत्पदेन परामर्शनीयम्। ततश्च 'अथ यदतः परः' इति वाक्यं यत्पदश्रुतिबलादेव ब्रह्मपरं भविष्यति—इत्याशंक्याह—**न च पूर्वस्मिन्निति**। एतच्च 'छन्दोऽभिधानात्' इति उत्तरसूत्रे शङ्काभागविवरणावसरे स्पष्टं भविष्यति। **अथापि कथञ्चिदिति** छन्दोऽभिधानादितिसूत्रगतपरिहारांशाभिप्रायेण। **एवमपीति** उपदेशभेदादिति-सूत्रगतशङ्काभागानुसारेण। वस्तुतस्तु सर्वनाम्नां बुद्धिस्थपरामर्शकत्वमेव व्युत्पत्ति-सिद्धम्। बुद्धिस्थत्वं च बुद्धिविषयत्वम्। तच्च पूर्ववाक्यैरेवापेक्षितमिति कुतो लभ्यते। ततश्च गायत्रीवाक्यमपेक्ष्यापि सन्निहितेन ज्योतिःपदेन स्ववाक्यगतेन विषयीकृतस्य प्रसिद्धस्य ज्योतिष एव यत्पदेन परामर्शे न काचिदनुपपत्तिरिति न यत्पदपर्यालोचनयाऽप्यस्य ब्रह्मपरत्वं सम्भवति - इत्यभिप्रेत्य उपसंहरति—**तस्मादिति**।

**तावानस्य महिमेति**। 'सैषा चतुष्पदा षड्विधा गायत्री' इति पूर्ववाक्ये यत् प्रपञ्चजातमुक्तं स सर्वोऽप्यस्य महिमा - विभूतिः। ततः - महिम्नः पुरुषः - गायत्रीद्वारा निरूपितः परमात्मा ज्यायान् - उत्कृष्टः। ज्यायस्त्वं

**महिमा ततो ज्यायाꣳश्च पूरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' (छा. उ. ३।१२।६) इत्यनेन मन्त्रेण। तत्र यत् चतुष्पदो ब्रह्मणः त्रिपादमृतं द्युसंबन्धि रूपं निर्दिष्टं तदेव इह द्युसम्बन्धान्निर्दिष्टमिति प्रत्यभिज्ञायते । तत् परित्यज्य प्राकृतं ज्योतिः कल्पयतः प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येयाताम् ।**

---

व्युत्पादयति—**पादोऽस्येति** । सर्वाणि भूतानि अस्य एकदेशः । यथा चतुष्पादयुक्तात् पदार्थात् तदेकपादपरिमितं वस्तु अल्पं भवति तद्वत् प्रपञ्चोऽप्यल्प इति द्योतनाय पादत्वकल्पनम् । अस्य - परमात्मनः दिवि - सत्यलोकोपरिभागे त्रिपात् - ब्रह्मविष्णुशिवात्मना अभिव्यक्तं स्वरूपं अमृतात्मकं अस्तीति मन्त्रार्थः । **तदेवेह द्युसम्बन्धान्निर्दिष्टमिति प्रत्यभिज्ञायत इत्यादि ।** अयमाशयः—सर्वनाम्ना हि स्वाभिधानकाले यत् बुद्ध्यारूढं तदेव प्रतिपाद्यते, तदपि शब्देनैव यत् बुद्ध्यारूढं तदेव, न तु प्रमाणान्तरेण - इत्युत्सर्गः । प्रबलबाधकोपनिपाते तु प्रमाणान्तरारूढं बुद्धावारोक्ष्यमाणं वा यथाकथञ्चित् क्लेशेन परामृश्यते । अत एव, प्रकृतपरामर्शासम्भव एव प्रकरिष्यमाणपरामर्शकत्वमिति [1]नीतिविदः । प्रसिद्धञ्चैतत् लोके 'देवदत्तोऽस्ति तमानय यज्ञदत्तो गच्छति' इत्यादौ । अत्र पूर्वप्रस्तुतो देवदत्त एव सर्वनाम्ना अभिधीयते, न तु प्रस्तोष्यमाणो यज्ञदत्तः । विशिष्य च यत्पदघटितवाक्यस्य अनुवादकता 'यो ब्राह्मणो वेदवित् तस्मै देयं' इत्यादौ प्रसिद्धा । प्रकृते यत्पदस्य सर्वनामतया प्रकृतवस्त्वपेक्षायां, तद्घटितवाक्यस्य च अनुवादकतया पुरोवादापेक्षायां, द्युसम्बन्धप्रत्यभिज्ञातः पुरुष एव प्रकृतः सर्वनामाकाङ्क्षां तद्घटितवाक्यस्य पुरोवादाकाङ्क्षां च स्वप्रतिपादकमन्त्रद्वारा पूरयतीति स एवेह यत्पदेन परामृश्यते । तत्र स्ववाक्यगतं ज्योतिः सन्निहितमपि अप्रयोजकम् , आकाङ्क्षाशामकत्वाभावात् । ततश्च प्रकृत-

---

1. **नीतिविदः**—वाक्यन्यायविदः-वेदार्थमीमांसकाः । ते हि वदन्ति - 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा' इत्यत्र तत्पदं पयःपरामर्शकं, न तु आमिक्षापरामर्शकं - इति प्रयुक्तिलक्षणे, 'दधि मधु घृतं पयो धाना उदकं तण्डुलाः तत् संसृष्टं प्राजापत्यं' इत्यत्र तत्पदं दध्यादिसप्तद्रव्यपरामर्शकं, न तु संसृष्टैकद्रव्यपरामर्शकं - इति अष्टमद्वादशाध्याययोः ।

**न केवलं(पूर्ववाक्यात्)ज्योतिर्वाक्ये एव ब्रह्मानुवृत्तिः, परस्यामपि शाण्डिल्यविद्यायां अनुवर्तिष्यते ब्रह्म। तस्मात् इह ज्योतिरिति ब्रह्म प्रतिपत्तव्यम्।**

---

पुरुषपरामर्शकपूर्वपठितयत्पदस्वारस्यमनुरुध्य ज्योतिःपदमेव निरूढया पुरुषपरं भविष्यतीति।

सन्दंशमाह—**न केवलं ज्योतिर्वाक्य इति।** शाण्डिल्य-विद्यायाश्च ब्रह्मविषयत्वं 'सर्वत्र प्रसिद्धोपदेशात्' [ब्र. सू. १-२-१] इत्यधिकरणे स्पष्टं भविष्यति।

ननु—अत्र पूर्वं गायत्रीविद्या, तदनन्तरं ज्योतिर्विद्या, तदनन्तरं शाण्डिल्यविद्या। ततश्च मध्यपठितायाः ज्योतिर्विद्यायाः सन्दंशात्मकः प्रायपाठो ब्रह्मणा - इति सिद्धावपि तावन्मात्रेण कथं ज्योतिश्श्रुतिभङ्गः। श्रुतिविरोधिनः प्रायपाठस्य अनियामकत्वात्। न च - इह प्रयाजाभिक्रमणन्यायेन सन्दंशपाठः अवान्तरप्रकरणसम्पादकः, ततश्च ब्रह्मप्रकरणे प्राकृतज्योतिःप्रतिपादनं व्यर्थं स्यादिति व्यर्थतापरिहाराय [1]प्रकरणानुसारेण ज्योतिश्श्रुतेः ब्रह्मपरता भविष्यति- इति वाच्यम्। प्रयाजाभिक्रमणे हि उभयतः प्रयाजाङ्गसन्दंशमात्रेण न अवान्तर-प्रकरणोन्मेषः। किं तु - प्रयाजानामङ्गाकाङ्क्षा, अभिक्रमणस्य च 'अभिक्रामं जुहोति' इति वाक्येन होमान्वये अवगतेऽपि कोऽसौ होमविशेषः इत्यपेक्षा, ततश्च उभयाकाङ्क्षारूपं प्रकरणं अस्त्येव। परन्तु प्रधानाकाङ्क्षया अङ्गाकाङ्क्षाया अभिभूतत्वात् उद्भूतया प्रधानाकाङ्क्षया जुहोतिपदस्य प्रधानहोमपरत्वप्रसक्त्या प्रयाजप्रकरणस्य जुहोतिपदार्थानियामकत्वप्रसक्तौ श्रुत्यादिप्रमाणप्राप्ताङ्गसंदंशेन विद्यमानस्यैव प्रकरणस्य उद्भवः सम्पाद्यते। नेह तथा। तिसृणामपि विद्यानां भिन्नत्वेन परस्परमपेक्षाऽभावात्, सत्यपि प्रकरणे ब्रह्मोपासनाङ्गतया प्राकृतज्योति-रुपासनविधानसम्भवाच्च - इति चेत्—

---

1. **प्रकरणानुसारेणज्योतिश्श्रुतेरिति** 'आनर्थक्यप्रतिहतानां विपरीतं बला-बलं' इतिन्यायात् इति भावः।

यत्तूक्तम्—'ज्योतिः' 'दीप्यते' इति च एतौ शब्दौ कार्ये ज्योतिषि प्रसिद्धाविति । नायं दोषः—प्रकरणात् ब्रह्मावगमे सति अनयोः शब्दयोः अविशेषकत्वात् । दीप्यमानकार्यज्योतिरुपलक्षिते ब्रह्मण्यपि प्रयोगसंभवात् । 'येन सूर्यस्तपति तेजसेद्धः' (तै. ब्रा. ३।१२।९।७) इति च मन्त्रवर्णात् । यद्वा—नायं ज्योतिश्शब्दः चक्षुर्वृत्तेरेवानुग्राहके तेजसि वर्तते, अन्यत्रापि प्रयोगदर्शनात्—'वाचैवायं ज्योतिषाऽऽस्ते' (बृ. उ. ४।३।५) इति 'मनो ज्योतिर्जुषताम्' (तै. सं. १।५।३।२) इति च । तस्मात् यद्यत् कस्यचिदवभासकं तत्तत् ज्योतिःशब्देनाभिधीयते । तथा सति ब्रह्मणोऽपि चैतन्यरूपस्य समस्त-जगदवभासहेतुत्वात् उपपन्नो ज्योतिःशब्दः । 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' (क. उ. २।२।१५) 'तद्देवा ज्योतिषां ज्योतिः आयुर्होपासतेऽमृतम्' (बृ. उ. ४।४।१६) इत्यादिश्रुतिभ्यश्च ।

---

उच्यते—'सर्वं खल्विदं ब्रह्म' इति शाण्डिल्यविद्यागतोपक्रमवाक्ये इदं-शब्दः पठ्यते । नासौ सर्वपदार्थविशेषणम् । अपि तु ब्रह्मविशेषणम् । एतच्च शाण्डिल्यविद्याधिकरणे स्पष्टीभविष्यति । इदंशब्दश्च सर्वनाम तदैव ब्रह्मविशेषणं भवेत्, यदि पूर्वसन्दर्भे ब्रह्म प्रस्तुतम् । ततश्च गायत्रीवाक्यस्य ब्रह्मपरत्वेऽपि ज्योतिर्वाक्यस्यान्यपरत्वे तेन व्यवहितस्य गायत्रीवाक्यस्थस्य ब्रह्मणः सर्वनाम्ना परामर्शो न सम्भवतीति इदंशब्दो ज्योतिर्वाक्यगतब्रह्मसन्निधानमपेक्षते । अतः इदंशब्दयुक्तसन्दंशादपि ज्योतिर्वाक्ये ब्रह्म सिध्यति ।

**प्रकरणादिति ।** प्रकृतपरामर्शकयच्छ्रुतिबलादित्यर्थः । **तस्माद्यद्यत् कस्यचिदवभासकमिति ।** ज्योतिश्शब्दे द्रव्यविभाजको यस्तेजस्त्वरूपजाति-विशेषः स एव न प्रवृत्तिनिमित्तम्, अपि तु व्यवहारप्रयोजकत्वमेव । न चात्र 'लाघवेन जातिरेव प्रवृत्तिनिमित्तम्' इति न्यायोऽवतरति । 'आत्मैवास्य ज्योतिर्भवति' [बृ. उ. ४-३-९२] इत्यन्ते सन्दर्भे प्रतिपर्यायं आदित्यचन्द्राग्नि-वागात्मनां ज्योतिष्ट्वमुपन्यस्य 'पल्ययते कर्म कुरुते विपल्येति' इति ज्योतिः-पदप्रयोगे व्यवहारजनकत्वस्यैव निमित्तस्य प्रदर्शितत्वात्, प्रसिद्धाग्न्यादिप्रयोगस्य

यदप्युक्तं द्युमर्यादत्वं सर्वगतस्य ब्रह्मणो नोपपद्यत इति। अत्रोच्यते—सर्वगतस्यापि ब्रह्मण उपासनार्थः प्रदेशविशेषपरिग्रहो न विरुध्यते। ननूक्तं निष्प्रदेशस्य ब्रह्मणः प्रदेशविशेषकल्पना नोपपद्यत इति। नायं दोषः—निष्प्रदेशस्यापि ब्रह्मणः उपाधिविशेषसंबन्धात् प्रदेशविशेषकल्पनोपपत्तेः। तथा हि—आदित्ये, चक्षुषि, हृदये - इति प्रदेशविशेषसंबन्धीनि ब्रह्मण उपासनानि श्रूयन्ते। एतेन 'विश्वतः पृष्ठेषु' इत्याधारबहुत्वं उपपादितम्।

यदप्येतदुक्तं - औष्ण्यघोषानुमिते कौक्षेये कार्ये ज्योतिषि अध्यस्यमानत्वात् परमपि दिवः कार्यज्योतिरेव - इति। तदप्ययुक्तम्—परस्यापि ब्रह्मणो नामादिप्रतीकत्ववत् कौक्षेयज्योतिष्प्रतीकत्वोपपत्तेः। 'दृष्टं च श्रुतं चेत्युपासीत' इति तु प्रतीकद्वारकं दृष्टत्वं श्रुतत्वं च भविष्यति।

यदपि अल्पफलश्रवणात् न ब्रह्मेति, तदप्यनुपपन्नम्—न हि 'इयते फलाय ब्रह्म आश्रयणीयं इयते न' इति नियमे हेतुरस्ति।

यत्र हि निरस्तसर्वविशेषसंबन्धं परं ब्रह्म आत्मत्वेनोपदिश्यते, तत्र एकरूपमेव फलं मोक्षः इत्यवगम्यते। यत्र तु गुणविशेषसंबन्धं प्रतीकविशेषसंबन्धं वा ब्रह्म उपदिश्यते, तत्र संसारगोचराण्येव उच्चाव-

---

तावताऽपि निर्वाहात्, श्रुतिविरोधे न्यायस्य अनादरणीयत्वात्। न च व्यवहारप्रयोजकेषु सर्वेषु प्रयोगाभावमात्रेण श्रुतिप्राप्तस्य प्रवृत्तिनिमित्तस्य परित्यागः सम्भवति। बर्हिराज्यादिशब्देषु संस्कृतमात्रे प्रयुज्यमानेष्वपि [1]न्यायप्राप्तायाः संस्कृतासंस्कृतसाधारणाया जातेरेव प्रवृत्तिनिमित्तत्वाभ्युपगमात्। ततश्च उक्तेन प्रवृत्तिनिमित्तेन ब्रह्मणि ज्योतिश्शब्दः शक्त एव। एवं च 'यदतः परो ज्योतिः' इति ज्योतिषः परत्वविशेषणेनापि ब्रह्मरूपता सिद्धा भवति। यद्यपि दिवो मर्यादात्वप्रतिपादनात् नायं परशब्द उत्कर्षपरः, अपि तु उपरिभवार्थकः, तथाऽपि 'परंज्योतिरुपसम्पद्य' [छा.उ. ८-५.] इत्यादौ परशब्दसमभिव्याहृतस्य

---

1. न्यायेति लाघवन्यायेत्यर्थः। लाघवश्च शरीरकृतम्।

चानि फलानि दृश्यन्ते 'अन्नादो वसुदानो विन्दते वसु य एवं वेद' (बृ. उ. ४।४।२४) इत्याद्यासु श्रुतिषु ।

यद्यपि न स्ववाक्ये किंचित् ज्योतिषो ब्रह्मलिङ्गमस्ति, तथाऽपि पूर्वस्मिन् वाक्ये दृश्यमानं ग्रहीतव्यं भवति । तदुक्तं सूत्रकारेण 'ज्योतिश्चरणाभिधानात्' इति । कथं पुनः वाक्यान्तरगतेन ब्रह्मसन्निधानेन ज्योतिश्श्रुतिः स्वविषयात् शक्या प्रच्यावयितुम् । नैष दोषः—'यदतः परो दिवो ज्योतिः' इति प्रथमतरपठितेन यच्छब्देन सर्वनाम्ना द्युसंबन्धात्प्रत्यभिज्ञायमाने पूर्ववाक्यनिर्दिष्टे ब्रह्मणि स्वसामर्थ्येन परामृष्टे सति अर्थात् ज्योतिःशब्दस्यापि ब्रह्मविषयत्वोपपत्तेः । तस्मात् इह ज्योतिरिति ब्रह्म प्रतिपत्तव्यम् ॥ २४ ॥

---

ज्योतिषो ब्रह्मरूपतादर्शनात् इहापि तदैकरूप्याय ब्रह्मरूपतेति । **अन्नादो वसुदान इति ।** अन्नमत्तीत्यन्नादः-दीप्ताग्निः, वसु दीयमानं अस्य वसुदानः-द्रव्यदातेति यावत् । **तथाऽपि पूर्वस्मिन् वाक्ये दृश्यमानमिति ।** तावानस्येति मन्त्रे द्युसम्बन्धित्वं ब्रह्मणो दृष्टम् । प्रकृतवाक्ये च ज्योतिषो द्युसम्बन्धोऽवगतः । ततश्च यत्पदेन ज्योतिर्वाक्यस्य अनुवादकत्वे सिद्धे अनुवादस्य सन्निहितगामित्वात् द्युसम्बन्धप्रत्यभिज्ञानाच्च ऋचि द्युसम्बन्धितया सन्निहितं त्रिपादमृतं ब्रह्मैव ज्योतिरिति सिध्यति । [1]अयमर्थः पादशब्दापरपर्यायं चरणशब्दं प्रयुञ्जानेन सूत्रकृता दर्शितो भवति । '**प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येयाताम्**' '**प्रकरणात्**' इति च यत् पूर्वं सङ्ग्रहेणोक्तं, तदेव शङ्कापूर्वकं विवृणोति—**कथं पुनरिति ।** अर्थात्-गायत्रीवाक्यनिर्दिष्टब्रह्मपरामर्शकयत्पदसामानाधिकरण्यसामर्थ्यात् ॥ २४ ॥

---

1. **अयमर्थः**—'तावानस्येतिमन्त्रे' इत्यादिना 'सिद्ध्यति' इत्यन्तेन अनुपदं उक्तोऽर्थः । प्रकृतब्रह्मबोधकगायत्र्यादिशब्दं विहाय पादार्थकशब्दप्रयोगस्येदं प्रयोजनम् । पादशब्दस्थाने चरणशब्दनिवेशे सूत्रकृदिच्छैव नियामिका । अथ वा पादशब्देन छन्दःपादग्रहणशङ्कानिरासार्थं पुरुषावयववाची चरणशब्दः प्रयुक्तः इति बोध्यम् ।

## छन्दोऽभिधानान्नेति चेन्न तथाचेतोऽर्पणनिगदात् तथा हि दर्शनम् ॥ २५ ॥

अथ यदुक्तं - पूर्वस्मिन्नपि वाक्ये न ब्रह्म अभिहितमस्ति, 'गायत्री वा इदं सर्वं भूतं यदिदं किञ्च' (छा. उ. ३।१२।१) इति गायत्र्याख्यस्य छन्दसः अभिहितत्वात् - इति, तत् परिहर्तव्यम् । कथं पुनः छन्दोऽभिधानात् न ब्रह्म अभिहितं इति शक्यते वक्तुं, यावता 'तावानस्य महिमा' इत्येतस्यामृचि चतुष्पाद्ब्रह्म दर्शितम् । नैतदस्ति - 'गायत्री वा इदं सर्वम्' इति गायत्रीमुपक्रम्य तामेव भूतपृथिवीशरीरहृदयवाक्प्राणप्रभेदैर्व्याख्याय 'सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाऽभ्यनूक्तं तावानस्य महिमा' इति तस्यामेव व्याख्यातरूपायां

---

गायत्री वा इदं सर्वमिति गायत्रीमुपक्रम्येत्यादि । एवं हि श्रूयते— 'गायत्री वा इदं सर्वं भूतं यदिदं किञ्च वाग्वै गायत्री वाग्वा इदं सर्वं भूतं गायति च त्रायते च या वै सा गायत्री इयं वाव सा येयं पृथिवी अस्यां हीदं सर्वं भूतं प्रतिष्ठितं एतामेव नातिशीयते या वै सा पृथिवी इयं वाव सा यदिदमस्मिन् पुरुषे शरीरं अस्मिन् हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्ते यद्वै तत् पुरुषे शरीरं इदं वाव तत् यदिदमस्मिन् पुरुषे हृदयं अस्मिन् हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्ते सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाऽभ्यनूक्तम्' (छा.उ. ३.१२) इति। अत्र सर्वभूतात्मत्वं मुख्यं यद्यपि मन्त्ररूपाया गायत्र्या न सम्भवति, तथाऽपि गौणं सम्भवत्येव उपासनार्थम् । इह च गौणमेव ग्राह्यम् । ग्रामव्यवहर्तरि ग्रामरक्षके पुरुषे 'अयमेव सर्वो ग्रामः' इतिवत् 'सर्वभूतहिंसां मा कुरु, नरको हिंसकस्य भविष्यति' इत्येवंरूपेण गानेन सर्वभूतत्राणहेतुत्वात् वागेवसर्वंभूतमिति वाचो यथाकथञ्चित् सर्वभूतात्मत्वोपपादनेन तदभिन्नाया गायत्र्या अपि सर्वभूतात्मत्वं निरूप्यते । अतो वाक्यशेषानुसारेण सर्वभूतात्मत्वं गायत्र्या गौणं पर्यवस्यति । पृथिव्यात्मत्वमपि भूतप्रतिष्ठात्वसामान्येन व्युत्पाद्यते । शरीरहृदया-



गायत्र्यां उदाहृतो ...
योऽपि तत्र 'यद्वै तद्ब्रह्म' ...
छन्दसः प्रकृतत्वात् छन्दो...
(छा. उ. ३।११।३) इत्यत्र ...
छन्दोऽभिधानात् न ब्रह्म ...

---

त्मत्वमपि भूतैकदेशप्राणप्रति...
भूतप्रतिष्ठात्वमपि [2]अर्थसिद्धं ...
सारेणैव भूताद्यात्मत्वस्य गौ...
चतुष्पदेति तु [3]ऋग्ग्रहण ...
इति ऋचि वाच्यायामेव वि...
चतुष्पदात्वमनुपपन्नम् । ष...
चतुरोंऽशान् प्रकल्प्य चतुष्प...
सारेण प्रकृतानामेव भूतादि...
सह पञ्चपदात्वमपि प्राप्नोती...

कथमकस्मादिति ...
प्रकाशकस्यास्य मन्त्रस्य ...
अभ्यस्ताया गायत्रीश्रुतेः ...
पुरुषसूक्ते ब्रह्मपरस्यापि ...
विनियुक्तस्य अर्थान्तरकल्प...

---

1. तच्च—भूतप्राणः...

2. अर्थसिद्धंताद...
भवति, सर्वात्मके सर्वप्रतिष्ठात्म...
इत्येवं अर्थसिद्धत्वं इति भाति ...
भावः ।

3. ऋग्ग्रहणे पदे...

**गायत्र्यां उदाहृतो मन्त्रः कथमकस्मात् ब्रह्म चतुष्पात् अभिदध्यात्। योऽपि तत्र 'यद्वै तद्ब्रह्म' (छा. उ. ३।१२।५,६) इति ब्रह्मशब्दः, सोऽपि छन्दसः प्रकृतत्वात् छन्दोविषय एव। य एतामेवं ब्रह्मोपनिषदं वेद' (छा. उ. ३।११।३) इत्यत्र हि वेदोपनिषदमिति व्याचक्षते। तस्मात् छन्दोऽभिधानात् न ब्रह्मणः प्रकृतत्वं - इति चेत्—**

---

त्मत्वमपि भूतैकदेशप्राणप्रतिष्ठात्वसामान्यात्। [1]तच्च, गौणसर्वभूतात्मत्वेन सर्वभूतप्रतिष्ठात्वमपि [2]अर्थसिद्धं तादृशं भवतीत्येतदभिप्रायम्। अतो वाक्यशेषानुसारेणैव भूताद्यात्मत्वस्य गौणस्यैव प्राप्तेः नेदं गायत्र्या ब्रह्मत्वे लिङ्गम्। सैषा चतुष्पदेति तु [3]ऋग्ग्रहण एव स्वरसम्। 'टाबृचि' [पा. सू. ४-१-९] इति ऋचि वाच्यायामेव विशिष्य टापो विधानात्। न च त्रिपदायाः गायत्र्याः चतुष्पदात्वमनुपपन्नम्। षड्विधेतिपदेन चतुर्विंशत्यक्षरायाः षड्भिष्षड्भिरक्षरैः चतुरोंऽशान् प्रकल्प्य चतुष्पदात्वसमर्थनस्य दर्शितत्वात्। न च सैषेतिवचनानुसारेण प्रकृतानामेव भूतादीनां पादत्वं प्रतीयत इति वाच्यम्। तथासति वाचा सह पञ्चपदात्वमपि प्राप्नोतीति चतुष्पदेति निर्देशोऽनुपपन्न एव स्यात्।

**कथमकस्मादिति।** न च पुरुषसूक्ते ब्रह्मपरतयाऽवगतस्य सर्वात्मताप्रकाशकस्यास्य मन्त्रस्य कथं छन्दोऽभिधायकत्वमिति वाच्यम्। उपक्रमे अभ्यस्ताया गायत्रीश्रुतेः अन्यथानेतुमशक्यत्वेन छन्दःपरत्वे पूर्वत्र निर्णीते सति पुरुषसूक्ते ब्रह्मपरस्यापि तदेतदृचाऽभ्यनूक्तमितिवचनेनैव गायत्रीप्रतिपादकतया विनियुक्तस्य अर्थान्तरकल्पनोपपत्तेः। दृश्यते हि विनियोगभेदेन मन्त्राणामर्थ-

---

1. **तच्च**—भूतप्राणप्रतिष्ठात्वेन पृथिवीशरीरहृदयात्मत्वोपपादनं च।

2. **अर्थसिद्धंतादृशमिति** सर्वभूतात्मकं वस्तु सर्वात्मकं सत् सर्वभूतप्रतिष्ठारूपमपि भवति, सर्वात्मके सर्वप्रतिष्ठात्मकत्वस्य अवश्यम्भावात्, प्रतिष्ठारूपवस्तुनोऽपि सर्वान्तर्गतत्वात् इत्येवं अर्थसिद्धत्वं इति भाति। **तादृशं** - गौणम्। गौणञ्च प्रतिष्ठात्वं ब्रह्मणोऽन्यत्रापि भवतीति भावः।

3. **ऋग्ग्रहणे एवेति** अन्यत्र 'चतुष्पात्' इति भाव्यं 'त्रिपात्' इतिवत्।

**नैष दोषः - तथाचेतोऽर्पणनिगदात्। तथा - गायत्र्याख्यच्छन्दो-द्वारेण तदनुगते ब्रह्मणि चेतसोऽर्पणं-चित्तसमाधानं अनेन ब्राह्मणवाक्येन निगद्यते 'गायत्री वा इदं सर्वम्' इति। न ह्यक्षरसन्निवेशमात्राया गायत्र्याः सर्वात्मकत्वं संभवति। तस्मात् यत् गायत्र्याख्यविकारेऽनुगतं जगत्कारणं ब्रह्म निर्दिष्टं तदिह सर्वमित्युच्यते। यथा 'सर्वं खल्विदं ब्रह्म' (छा. उ. ३।१४।१) इति। कार्यं च कारणादव्यतिरिक्तमिति वक्ष्यामः**

---

भेदः। मन्त्रप्रतिपाद्यं सर्वभूतात्मत्वमपि पूर्ववदेवोपासनार्थं भविष्यति। पुरुषत्वं तु पूर्णत्वात्। त्रिपादस्यामृतंदिवीत्येतत्तु बाह्यशरीरहृदयाकाशान्तरत्वाभिप्रायं व्याख्येयम्। गायत्र्यामेव ऋगुदाहरणानन्तरं हीदं वाक्यं पठ्यते—'यद्वै तत् ब्रह्मेति इदं वाव तद्योऽयं बहिर्धा पुरुषादाकाशः, यो वै स बहिर्धा पुरुषादा-काशोऽयं वाव स योऽयमन्तः पुरुष आकाशः, यो वै सोऽन्तः पुरुष आकाशोऽयं वाव स योऽयमन्तर्हृदय आकाशः, तदेतत् पूर्णमप्रवर्ति' इति। अत्र हि वाक्ये ब्रह्मशब्दो वेदैकदेशभूतायां गायत्र्यां उपपन्न एव। तस्या एव च गायत्र्याः शरीरबाह्यशरीरान्तराकाशहृदयाकाशाभेदस्य ध्यानार्थं प्रतिपादनात्, द्युशब्दस्य च आकाशपरत्वेऽप्युपपत्तेः, तदभिप्रायं त्रिपादमृतंदिवीत्युपपन्नम्। तस्यामेव उपासनार्थं पूर्णत्वगुणविधानात् 'पूर्णत्वात् [1]पुरुषः' इति निरुक्तानुसारेण पुरुषत्व-मुपपन्नम्।

गायत्र्युपहितेन रूपेण ब्रह्मध्यानोपदेशात् - [2]इत्यभिप्रायं तथाचेतोऽर्पण-निगदादितिसूत्रांशं व्याचष्टे—**तथेत्यादिना**। परिहारभागगतसौत्रनञर्थमाह—**न ह्यक्षरेति**। न च वाक्यशेषानुसारेण [3]तस्य गौणत्वम्। [4]यथाश्रुतार्थस्वी-कारेऽपि [5]वाक्यशेषस्य, गायत्र्यवच्छिन्नब्रह्मस्तावकत्वेन ब्रह्मोपाधिभूताया गायत्र्या

---

1. आ. पुरुषः स्मृतः 2. मु. इत्यभिप्रायः। तथा

3. आ. तस्याः

4. **यथाश्रुतार्थस्वीकारेऽपि**—'गायत्री वा इदं सर्वं' इत्यस्य ब्रह्मपरत्वमङ्गी-कृत्य मुख्यसर्वात्मत्वार्थस्वीकारेऽपि।

5. **वाक्यशेषस्य**—'वाग्वै गायत्री' इत्यादेः।

'तदनन्यत्वमारम्भणशब्दादिभ्यः (ब्र. सू. २।१।१४) इत्यत्र। तथा अन्यत्रापि विकारद्वारेण ब्रह्मण उपासनं दृश्यते—'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते एतमग्नावध्वर्यवः एतं महाव्रते छन्दोगाः' (ऐ. आ. ३।२।३।१२) इति। तस्मात् अस्ति छन्दोऽभिधानेऽपि पूर्वस्मिन् वाक्ये चतुष्पाद्ब्रह्म निर्दिष्टम्। तदेव ज्योतिर्वाक्येऽपि परामृश्यते उपासनान्तरविधानाय।

अपर आह—साक्षादेव गायत्रीशब्देन ब्रह्म प्रतिपाद्यते, संख्यासामान्यात्। यथा गायत्री चतुष्पदा षडक्षरैः पादैः तथा ब्रह्म चतुष्पात्। तथा अन्यत्रापि छन्दोऽभिधायी शब्दः अर्थान्तरे संख्यासामान्यात्

---

[1]वागात्मत्वस्य उपासनार्थं प्रतिपादकत्वेन वा[2] उपपन्नस्य, गौणताप्रतिपादनपरत्वस्य कल्पयितुं [3]अनुचितत्वात्। न च गायत्र्यवच्छिन्नस्य ब्रह्मणः सर्वात्मत्वं अनुपपन्नमिति वाच्यम्। न हि गायत्रीसम्बन्धावच्छेदेनैव सर्वात्मत्वं विवक्षितम्। अपि तु यस्मिन् ब्रह्मणि गायत्रीसम्बन्धो विद्यते तस्य सर्वात्मत्वमिति। ततश्चात्र अजहल्लक्षणया गायत्रीछन्दसोपहितं ब्रह्म गायत्रीपदेन लक्ष्यते। तथा हि दर्शनमित्यमुमंशं व्याचष्टे—**तथाऽन्यत्रापीति**।

तथाचेतोऽर्पणनिगदादितिसौत्रांशं, गायत्रीछन्दस्सादृश्येन लक्षिते ब्रह्मणि ध्यानोपदेशात्-इत्यर्थपरतया मतान्तरेण व्याचष्टे—**अपर आहेति**। पूर्वस्मिन् व्याख्याने अजहल्लक्षणास्वीकारात् छन्दसोऽप्युपास्यकोटौ उपाधितया निवेशोऽस्ति, इह तु व्याख्याने गौण्या वृत्तेः स्वीकारात् गायत्रीपदमुख्यार्थगतो यश्चतुष्पात्त्वगुणः तद्विशिष्टतया ब्रह्म बोध्यत इति छन्दसो नोपास्यकोटौ निवेशः—इति वैलक्षण्यं द्योतयितुं साक्षादित्युक्तम्। विकारविनिर्मुक्तमेव ब्रह्म गायत्रीपदेन प्रतिपाद्यत [4]इत्यर्थः। **तथा ब्रह्म चतुष्पादिति**। तावानस्यमहिमेति ऋक्पर्यालोचनयेति भावः। अस्मिन् व्याख्याने तथाहीतिसूत्रांशं योजयति—**तथाऽन्यत्रापीति**।

---

1. मु. गायत्र्या वा वागा
2. मु, 'वा' नास्ति
3. मु. अशक्य
4. मु. इत्यन्वयः

**प्रयुज्यमानो दृश्यते। तद्यथा—'ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तः तत् कृतम्' इत्युपक्रम्याह 'सैषा विराडन्नादी' (छा. उ.४।३।८) इति। अस्मिन् पक्षे ब्रह्मैवाभिहितमिति न छन्दोऽभिधानम्।**

---

**ते वा एत इति।** अधिदैवतं वायुः तत्र लीयमाना अग्न्यादयश्चत्वारः इति पञ्च, अध्यात्मं प्राणः तत्र लीयमाना वागादयश्चत्वारः इति पञ्च, तेषां च परस्परमन्यत्वं, ते दश। **तत्कृतमिति।** द्यूतं द्विविधम् - एकद्वित्रिचतुर्बिन्दु-युक्तपार्श्वचतुष्टयविशिष्टैकाक्षनिपातनं, बह्वक्षनिपातनं च। तत्रैकोऽक्षो यत्र चतुर्बिन्दु-युक्तपार्श्वोपरिभावेन पतति, यत्र वा [1]न्युप्तेषु बहुष्वक्षेषु चतुष्कशो विभज्यमानेषु अन्तिमो भागः चतुस्सङ्ख्योऽ[2]वशिष्यते, तदुभयमपि द्यूतं कृत-कृतसंज्ञं इति द्यूतशास्त्रमर्यादा। चतुस्सङ्ख्यायुतं च कृतं दशसङ्ख्यं इत्यपि वक्तुं शक्यते। चतुर्षु हि त्रयोऽन्तर्भवन्ति एवं सप्त, त्रिषु द्वौ एवं नव, द्वयोरेकः, एवं दश। वाय्वादयः प्राणादयश्च दशेति सङ्ख्यासाम्यात् कृतत्वोपचारः। यद्यपि चतुर्षु न मुख्यं दशत्वं, तथाऽपि यथा दशसु एकद्वित्रिचतुस्सङ्ख्याघटितत्वं एवं चतुर्ष्वपि एकद्वित्रिचतुस्सङ्ख्याघटितत्वमस्तीति दशत्वरूपं गुणमपि[3] गौणमादाय कृतत्वोप-चारो द्रष्टव्यः। वाय्वादीनां दशत्वात् विराट्त्वं [4]अन्नत्वञ्च। 'दशाक्षरा विराट् अन्नं विराट्' इति श्रुतेः। [5]कृतं हि दशत्वसङ्ख्यां [6]अन्नभूतां अन्तर्भावयत् अन्नमत्तीव। अतः [7]तत्त्वेनोपचरिता वाय्वादयोऽप्यन्नादिनः इति। प्रकृते च वाय्वादिषु दशत्वसङ्ख्यासाम्यात् प्रयुक्तः छन्दोवाचको विराट्शब्दो दृष्टान्तः। पूर्वं साक्षात्पदेनोपक्षिप्तमर्थं स्पष्टयति—**अस्मिन् पक्ष इति।**

---

1. आ. युग्मेषु
2. मु. विशिष्यते
3. आ. 'अपि' नास्ति
4. मु. 'अन्नत्वं च' नास्ति 'कृतं हि' वर्तते
5. मु. 'कृतं हि' नास्ति
6. मु. 'अन्नभूतां' नास्ति
7. **तत्त्वेन**—कृतत्वेन।

अत्र अपरआहेत्यस्वरसोद्भावनम् । तस्यायमाशयः—अजहल्लक्षणया मुख्यार्थस्यापि वाक्यार्थकोटौ विवक्षायां सम्भवन्त्यां तत्परित्यागेन गौणार्थग्रहण-मन्याय्यम् । अपि च उद्भूतेन गुणेन सादृश्यं वक्तव्यम् । न च गायत्र्याश्चतुष्पात्वमुद्भूतम् । न च अक्षरगणनया क्लिष्टगत्या सम्पादितस्य सादृश्यस्य गौणवृत्तिनिर्वाहकता व्युत्पन्ना । तथासति वराहशब्दस्य वायसार्थकत्वशङ्का-निरासपूर्वकं सूकरार्थत्वसाधनं यववराहाधिकरणोदाहृतेन '[1]वराहं गावोऽनुधावन्ति' इति वाक्यशेषेण कृतं असङ्गतं स्यात् । तत्र हि, गावोऽनुधावन्तीतिशब्दविवक्षितं चतुष्पात्त्वसादृश्यं वायसे नान्वेतीति गोसदृशश्चतुष्पात् सूकर एव वराहशब्दार्थः, न तु द्विपाद्वायसः । क्लिष्टगत्या तु सादृश्यं गोनिरूपितं वायसेऽपि[2] वक्तुं शक्यम् । एकैकस्मिन् भागे विद्यमानयोः पादयोः एकपादत्वविवक्षया द्विपात्त्व-स्यापि [3]गवि सम्भवात् । एतेन - 'इन्द्रश्शचीपतिः, बलेन पीडितः, दुश्च्यवनो वृषा, समत्सुमासहिः' इति [4]काचित् गायत्री षड्भिरक्षरैश्चतुष्पदाऽपि स्वत एवास्ति, तामादाय गायत्रीशब्दः चतुष्पात्त्वेन ब्रह्मणि गौणो भविष्यति - इत्यपि शङ्का परास्ता । तस्या अप्रसिद्धत्वेन तामादाय सादृश्यस्यानिर्वाहात् । न ह्यौत्पातिकी काचित् द्विपदी गौर्जातेति तामादाय सादृश्यं निर्वाह्य वराहशब्दो वायसवाचक इति स्वीकृतम् । न च सैषाचतुष्पदाषड्विधागायत्रीतिवाक्यशेषेणैव अस्मिन् प्रकरणे गायत्र्याश्चतुष्पात्त्वकल्पनात् तदनुसारेण काल्पनिकंसादृश्यमादायापि गायत्रीपदस्य ब्रह्मणि वर्तनं भविष्यतीति वाच्यम् । 'भूतादिपादव्यपदेशोपपत्तेश्चैवं' इति सूत्रे तस्य वाक्यस्य ब्रह्मण्येव चतुष्पात्त्वकल्पनपरत्वस्य वक्ष्यमाणत्वेन ऋचि चतुष्पात्त्वकल्पनाऽलाभात् ।

इदं तु स्यात्—गायत्रीशब्दश्चतुष्पात्त्वगुणेन ब्रह्मणि वर्तत इति नोच्यते, अपि तु त्रिपात्त्वेन । स च गुणो गायत्र्यामृचि प्रसिद्ध एव । ब्रह्मणि तु त्रिपादस्यामृतन्दिवीतिवाक्यशेषानुसारेण[5] सम्पादितः । न च - अस्मिन् पक्षे

---

1. **वराहमित्यादि** गावो हि सूकरं चतुष्पात्त्वेनानुकुर्वन्ति, वत्सबुद्ध्या वा अनु-धावन्ति, न तु वायसं इति भावः ।

2. मु. अप्यस्तीति वक्तुं

3. मु. 'गवि' नास्ति

4. मु. क्वचित्

5. आ. वाक्यशेषेण

सर्वथाऽप्यस्ति पूर्वस्मिन् वाक्ये प्रकृतं ब्रह्म ॥ २५ ॥

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥

इतश्चैवमभ्युपगन्तव्यमस्ति—पूर्वस्मिन् वाक्ये प्रकृतं ब्रह्मेति। यतो भूतादीन् पादान् व्यपदिशति [श्रुतिः]। भूतपृथिवीशरीरहृदयानि हि निर्दिश्याह 'सैषा चतुष्पदा षड्विधा गायत्री' इति। न हि ब्रह्मानाश्रयणे केवलस्य छन्दसो भूतादयः पादा उपपद्यन्ते।

---

क्लिष्टगत्या सादृश्यकल्पनाऽभावेपि, गायत्र्युपहितब्रह्मलक्षणायां मुख्यार्थपरित्यागात् प्रसिद्धार्थानुसारिणी सा लक्षणा, त्रिपात्त्वगुणेन ब्रह्मणि गायत्रीपदस्य गौणवृत्तिकल्पने तु प्रसिद्धार्थत्यागात् प्रसिद्ध्यननुसारित्वम्, तच्च न युक्तं - इति वाच्यम्। 'अत्ता चराचरग्रहणात्' इत्यधिकरणे वक्ष्यमाणेन 'प्रसिद्धिवाक्यशेषानुसारिण्योर्लक्षणयोर्मध्ये वाक्यशेषानुसारिण्येव लक्षणा ज्यायसी न प्रसिद्ध्यनुसारिणी' इति न्यायेन तस्यादोषत्वात्। इह च ब्रह्मणि त्रिपात्त्वकल्पनस्य 'गायत्रीशब्दो ब्रह्मणि कथं गौणः' इतिशङ्कानिरास एव प्रयोजनमिति।

न स्यात्। 'बहुषूपाधिषु सत्सु गायत्रीऋच एव उपाधित्वकल्पनं किमर्थं' इतिशङ्कानिरासार्थं तस्मिन्नपि पक्षे वाक्यशेषगतत्रिपात्त्वकल्पनस्य उपपन्नत्वेन वाक्यशेषस्य गौणवृत्त्येकपक्षपातित्वाभावात्, 'तस्य भूरिति शिरः' इति अभेदानुसन्धान इव तदुपहितानुसन्धानेऽपि सादृश्योक्तेस्सम्भवात्।

अस्तु वा अपर आहेत्यादिना उक्तः पक्षः, तस्मिन्नपि पक्षे न गायत्रीपदे ब्रह्मपरता हीयते - इत्याह—**सर्वथाऽपीति** ॥ २५ ॥

**न हि ब्रह्मानाश्रयण इति**। न च 'प्रकृते भूतादय एव पादा ग्राह्याः' इत्यत्र नियामकाभावः। गायत्रीवाइदमितिपूर्ववाक्ये सर्वभूताद्यात्मतया निरूपिताया गायत्र्याः सैषेतिपदपरामर्शात् चतुष्पदेतिपूर्वोक्तप्रकारस्यैव निगमनमेतदित्यवगम्यते। न च तथासति वागात्मतयाऽपि गायत्र्या निरूपितत्वात् पञ्चपदेति

**अपि च ब्रह्मानाश्रयणे नेयमृक् संबध्येत 'तावानस्य' इति। अनया हि ऋचा स्वरसेन ब्रह्मैवाभिधीयते, 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' (छा. उ. ३।१२।५) इति सर्वात्मत्वोपपत्तेः। पुरुषसूक्तेऽपि इयमृक् ब्रह्मपरतयैव समाम्नायते। स्मृतिश्च ब्रह्मण एवं-रूपतां दर्शयति 'विष्टभ्याहमिदं कृत्स्नं एकांशेन स्थितो जगत्' (भ. गी. १०।४२) इति। 'यद्वै तद्ब्रह्म' (छा.उ. ३।१२।७) इति च**

---

वक्तव्यम्। [1]'वाग्वै गायत्री' 'वाग्वा इदं सर्वं भूतं' इति वाक्यस्य हेतुवन्निगदार्थ-वादन्यायेन [2]गायत्र्याः सर्वभूतात्मत्वोपपादकतया अस्यांहीदंसर्वंभूतंप्रतिष्ठि-तमितिवाक्यवत् भिन्नकक्ष्याऽऽरूढत्वेन तदर्थस्य षड्विधेतिपदेन सङ्ग्रहोपपत्तेः। षड्विधेत्यनेन हि-वागात्मना यत् गानत्राणहेतुत्वरूपं प्रकारद्वयमुक्तं, यच्च पृथिव्यात्मना भूतप्रतिष्ठात्वभूतानतिक्रमणीयत्वरूपं प्रकारद्वयं, यच्च शरीरहृदयात्मना प्राणप्रतिष्ठात्व-प्राणानतिक्रमणीयत्वरूपं प्रकारद्वयं - तदुच्यते। अतः चतुष्पदेत्यस्य ब्रह्मणि प्रकृतसर्वात्मत्वनिगमनाभिप्रायत्वे न काचिदनुपपत्तिः। टाबृचीत्यनुशासनविरोधश्च नास्ति। आध्यासिकेनाभेदेन ऋगुपहिते ब्रह्मणि गायत्रीपदप्रयोगवत् ऋगनु-शिष्टस्य टापोऽपि प्रयोगे अनुपपत्तेरभावात्।

सौत्रचशब्दार्थमाह—**अपि चेत्यादिना**। न च गायत्रीपदमुख्यार्थानु-रोधेन तावानितिमन्त्र एव ऋक्परोऽस्त्वित्युक्तं साधु। तावानितिमन्त्रस्य वा गायत्रीपदस्य वा स्वारस्यं भञ्जनीयमिति विशये अन्यत्र निर्णीतार्थस्य प्रकृते सम्मतित्वेन उदाहृतत्वात् अभ्यस्तस्यापि गायत्रीपदस्य अनिर्णीतार्थतया तदनु-सारेणैव नयनोपपत्तेः। न च - पुरुषसूक्ते सहस्रशीर्षत्वादिर्महिमा प्रस्तुतः इह तु सर्वभूतात्मत्वादिरिति कथं पुरुषसूक्ते मन्त्रस्य योऽर्थः स एवेह [3]ग्रहीतुं शक्यते - इति वाच्यम्। उभयत्रापि, प्रपञ्चात्मतानिरूपणेन तावन्मात्रमेवब्रह्मस्वरूपमिति-शङ्कानिरासाय 'सर्वोऽप्ययं प्रपञ्चः तस्य विभूतिभूतः तदेकदेश इव, परमात्मा तु त्रिपादमृतात्मकः ततो ज्यायान्' इत्यर्थस्य अविशेषात्। **यद्वैतद्ब्रह्मेति चेति।**

---

1. मु. 'वाग्वै गायत्री' नास्ति

2. मु. 'गायत्र्याः' नास्ति    3. मु. सङ्ग्रहीतुं

निर्देश एवं सति मुख्यार्थ उपपद्यते। 'ते वा एते पञ्च ब्रह्मपुरुषाः'(छा.उ. ३।१३।६) इति च हृदयसुषिषु ब्रह्मपुरुषश्रुतिः ब्रह्मसंबन्धितायां विवक्षितायां संभवति। तस्मादस्ति पूर्वस्मिन् वाक्ये ब्रह्म प्रकृतम्। तदेव ब्रह्म ज्योतिर्वाक्ये द्युसंबन्धात्प्रत्यभिज्ञायमानं परामृश्यत इति स्थितम् ॥२६॥

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २७ ॥

यदप्येतदुक्तं—पूर्वत्र 'त्रिपादस्यामृतं दिवि' इति सप्तम्या द्यौराधारत्वेनोपदिष्टा, इह पुनः 'अथ यदतः परो दिवः' इति पञ्चम्या

---

अत्र यत्पदेन प्रकृतं गायत्रीपदप्रतिपाद्यं आकृष्य ब्रह्मत्वसम्बन्धानुवादात् अवगम्यते 'गायत्रीशब्दो ब्रह्मपरः' इति। न च ब्रह्मपदस्य वेदपरत्वं, मुख्यार्थत्यागप्रसङ्गात् इति भावः।

अपि च, प्रकृतस्य गायत्रीपदप्रतिपाद्यस्य[1] हृदयाकाशाभेदेनोपासनं विधाय, हृदयस्य प्रागादिषु चतसृषु दिक्षु ऊर्ध्वं च पञ्च यानि छिद्राणि तेषु प्राणव्यानापानसमानोदानान्[2] आदित्यचन्द्राग्निपर्जन्याकाशदेवताभिःचक्षुश्श्रोत्रवाङ्मनोवायुसम्बन्धिनीभिः अधिष्ठितान् अनुक्रम्य 'ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः स य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेद अस्य कुले वीरो जायते' इत्येवमाम्नायते। अत्र गायत्रीपदार्थं प्रति वेश्मत्वेन कल्पिते हृदये पञ्चसु छिद्रेषु द्वारत्वेन कल्पितेषु विद्यमानान् द्वारपालत्वेन ध्येयान् प्राणादीन् प्रति ब्रह्मपुरुषत्वाध्यासो गायत्र्या ब्रह्मतां गमयति। तदाह —**ते वा एते पञ्च ब्रह्मपुरुषा इतीति**। सुषिः-छिद्रं। **ब्रह्मसम्बन्धितायां विवक्षितायामिति**। तद्विवक्षा च गायत्र्या अब्रह्मत्वे नोपपद्यत इति भावः ॥ २६ ॥

---

1: मु. हृदयाद्याकाश

2. **आदित्येत्यादि** अत्र **आकाश**शब्देन तदभिमानिनी देवता विवक्षिता। परमेश्वर इति कल्पतरुः। तत्र उपपत्तिः परिमले। परमेश्वरस्य एकत्वेऽपि हृदयकमलमध्यतदूर्ध्वसुषिररूपावच्छेदकभेदात् उपास्यत्वद्वारपालाधिष्ठातृत्वयोरविरोधः। **वायुः** सामान्यात्मको ग्राह्यः।

**मर्यादात्वेन, तस्मादुपदेशभेदात् न तस्येह प्रत्यभिज्ञानमस्तीति, तत् परिहर्तव्यम्। अत्रोच्यते—नायं दोषः, उभयस्मिन्नप्यविरोधात्। उभयस्मिन्नपि—सप्तम्यन्ते पञ्चम्यन्ते चोपदेशे न प्रत्यभिज्ञानं**

---

**तस्मान्न प्रत्यभिज्ञानमस्तीति।** न च यत्पदेनानुवादत्वे निर्णीते द्युसम्बन्धात् प्रत्यभिज्ञानं सम्भवतीति वक्तुं युक्तम्। प्रधानभूतविभक्त्यर्थवैलक्षण्येन भेदावगमे सति प्रत्यभिज्ञाया अप्रधानप्रकृत्यर्थसम्पन्नाया अप्रयोजकत्वात्। न च विभक्त्यर्थसंख्यावत् अपादानत्वाधिकरणत्वादिकारकरूपोऽपि विभक्त्यर्थः प्रकृत्यर्थे विशेषणमिति वाच्यम्। 'प्रत्ययार्थः प्रधानं' इतिव्युत्पत्तेः [1]"प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्' [पा. सू. १-२-५६] इतिपाणिनिसूत्रेणानुमोदितायाः संख्यादिषु सङ्कोचमात्रेण सर्वत्र सङ्कोचायोगात्, कारकार्थप्राधान्येनैव शाब्दप्रत्ययाच्च। ततश्च विभक्त्यर्थस्वारस्येन पूर्वत्र त्रिपादस्यामृतंदिवीत्यत्र द्युलोकाधिकरणकं तदन्तर्गतमवगम्यते, इह तु परोदिवइति द्युलोकानन्तर्गतं ततःपरमवगम्यते पञ्चमीस्वारस्येन। अपि च—पूर्वं त्रिपादमृतमितिशब्देन निर्दिष्टम्, इह तु ज्योतिश्शब्देन। अतः शब्दभेदादप्यर्थभेदोऽवगम्यते। अपि च - 'अथ यदतः' इत्यत्र अथशब्दोऽधिकारार्थः। न च पूर्वं निरूपितस्यैव निरूपणमारभ्यत इति शक्यं वक्तुम्। न च यत्पदावगतं अनुवादत्वं प्रकृते निर्वोढुं शक्यते। 'अथ यदतः परः' इति वाक्यप्रतिपाद्यस्य सर्वोत्तरलोकवर्तनादेः पूर्ववाक्येनाप्राप्ततया तदनुवादकत्वासम्भवात्। ततश्च उक्तेन प्रकारेण 'अथ यदतः' इतिवाक्यस्य प्रकृतार्थपरत्वासम्भवे यच्छब्दोऽपि उत्सर्गप्राप्तं प्रकृतार्थपरामर्शित्वं विहाय प्रकरिष्यमाणार्थपरामर्शी भविष्यति 'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' [2]इतिवत्।

**उभयस्मिन्नपि सप्तम्यन्ते पञ्चम्यन्ते चोपदेशे न प्रत्यभिज्ञानं**

---

1. **प्रधानप्रत्ययार्थेति** प्रकृत्यर्थं प्रति **प्रत्ययार्थः प्रधानं**—विशेष्यम्, प्रकृत्यर्थस्तु तद्विशेषणम् - इत्येवंरूपं यत् पूर्वाचार्य**वचनं** तदप्यशिष्यम्, अर्थस्य लोकत एव सिद्धेः इत्यर्थः।

2. आ. इत्यादिवत्।

**विरुध्यते । यथा लोके वृक्षाग्रेण संबद्धोऽपि श्येनः उभयथा उपदिश्यमानो दृश्यते—वृक्षाग्रे श्येनः वृक्षाग्रात्परतः श्येनः इति च । एवं दिव्येव सत् ब्रह्म दिवःपरमित्युपदिश्यते ।**

---

**विरुध्यत इत्यादि ।** अयं भावः—अत्र यत्पदेनावगतं यत् प्रकृतत्वं ज्योतिषः, यच्च तद्वाक्यस्यानुवादकत्वं द्युसम्बन्धोपोद्बलितं, न तत् अथशब्दादिभिरन्यथाकर्तुं शक्यते । अथशब्दो ह्यनेकार्थः । स च प्रकृते आनन्तर्यार्थ इत्यपि वक्तुं शक्यम् । अथशब्दं विनाऽप्यवगम्यमानस्य चानन्तर्यस्य पुनर्निर्देशो विशिष्टानन्तर्यद्योतनार्थः । तच्च वैशिष्ट्यं [1]गायत्रीवाक्यसन्दर्भस्य [2]ज्योतिर्वाक्यार्थनिर्णयोपयोगितायां पर्यवस्यत् यत्पदस्य प्रकृतार्थपरतामेव द्रढयति । यद्यपि विभक्त्यर्थः कारकं प्रधानं, तथापि न प्रकृत्यर्थावगतमैक्यं विरुणद्धि । सप्तम्युक्तस्योधिकरणत्वस्यैव व्यवस्थापकः पञ्चमीप्रयोगः - इत्युपपत्तेः । यथा वृक्षाग्रे निर्दिष्टः श्येनो वृक्षाग्रात् पर इति निर्दिश्यमानोऽपि नाभेदबुद्धिं विरुणद्धि । [3]सप्तमीनिर्देशेन हि वृक्षाग्रगतेषु पल्लवेषु निलीनोऽपि पक्षी प्रतिपादयितुं शक्यः, पल्लवानामग्रभागे स्थितः तैरनावृतोऽपि शक्यो निर्देष्टुम् । अतः साधारणः सप्तमीनिर्देशो भवति । पञ्चमीनिर्देशे तु वृक्षाग्रमध्यवर्ती श्येनो न प्रतिपादयितुं शक्यते । वृक्षाग्रमध्यवर्तिनो वृक्षाग्रात् पर इति निर्देशानुपपत्तेः । अतो वृक्षाग्रात् पर इति निर्देशे वृक्षाग्रान्त्यावयवभूताः ये पल्लवाः तदुपरिभावो लभ्यते । तत्र च यद्यपि वृक्षाग्रात् परभावो वृक्षाग्रासंलग्नस्यापि सम्भवति, तथाऽपि सप्तमीबलेन वृक्षाग्रसंश्लेषस्यावगमितत्वात् पञ्चम्या वृक्षाग्रोपरिसंलग्न एव पर्यवसानं भवति । ततश्च केवलसप्तमीनिर्देशे वृक्षाग्रमध्यस्थितिरपि लभ्यते । केवलपञ्चमीनिर्देशे वृक्षाग्रासंलग्नस्थितिरपि गम्यते । उभयनिर्देशे तु [4]मध्यभागसंलग्नस्थितिव्यावर्तनेन अग्रोपरिभागे संलग्न एव श्येनोऽवगम्यत इति सप्तमीपञ्चम्योः परस्परार्थनियाम-

---

1. आ. गायत्रीविद्यासन्द°
2. मु. ज्योतिर्वाक्यार्थोपयोगितायां
3. मु. सप्तम्यन्तत्वनिर्देशेन
4. मु. मध्यभागासंलग्न

**अपर आह—यथा लोके वृक्षाग्रेणासंबद्धोऽपि श्येनः उभयथा उपदिश्यमानो दृश्यते—वृक्षाग्रे श्येनः वृक्षाग्रात्परतः श्येनः इति च ।**

---

कतया न विरोधः । तथा दिवि दिवः इति निर्देशेऽपि न विरोधः । द्युलोको हि द्वेधा—भूर्भुवस्सुवर्महर्जनस्तपस्सत्यमिति सप्तलोकीपक्षे - पृथिवी भूलोकः, पृथिव्यादित्ययोर्मध्ये भुवर्लोकः, आदित्यादुपरि ध्रुवलोकान्तस्त्रिदशनिवासो द्युलोकः, स एव स्वरिति व्यवह्रियते । तदुपरि महरादिलोकाः - इत्येकः प्रकारः । भूर्भुवस्सुवरिति त्रिलोकीपक्षे आद्यौ पूर्ववदेव । स्वर्लोकस्तु सूर्यमण्डलमारभ्य सत्यलोकान्तः, द्युशब्दार्थोऽपि[1] स एव । 'त्रिपादस्यामृतं दिवि' इत्यत्र तु कः पक्षो विवक्षित इति विशये, दिवःपरइत्युत्तरवाक्यपर्यालोचनया लोकत्रयपक्ष एव विवक्षित इति निर्णीयते । सप्तलोकपक्षमादाय [2]ध्रुवलोकान्तद्युलोकग्रहणे विश्वतःपृष्ठेष्वित्याद्यनुपपत्तेः । ततोऽप्युपरि विश्वान्तर्गतानां महरादीनां विद्यमानत्वात् । लोकत्रयपक्षमादाय सत्यलोकान्तद्युलोकविवक्षया तदग्रभागावच्छेदेनविद्यमानताप्रतिपादको दिवीतिनिर्देशोऽभ्युपगम्यते चेत् विश्वतःपृष्ठेष्वित्यादि समञ्जसं भवति । ततश्च द्युसम्बन्धरूपप्रत्यभिज्ञापकसचिवयत्पदेन अस्य वाक्यस्य गायत्रीवाक्यस्य च उपासनांशमादायभिन्नार्थकस्यापि उपास्यांशे समानार्थतायां सम्पादितायां, दिवीत्यत्र ज्योतिर्वाक्यप्रतिपाद्यो विश्वतःपृष्ठेष्वित्यादिः सर्वोऽप्यर्थः संगृहीतः इह अनुवादव्याजेन विवृत इति सिध्यति । अतश्च अनुवादत्वमप्यस्य सङ्गतं भवति । दृश्यते च पुरोवादेन संगृहीतोऽर्थः अनुवादेन विव्रियमाणः । राजपुरुषस्समागतोऽस्तीतिपुरोवादे पुरुषसामान्यमवगतम्, तत्र 'यो राजामात्यः पुरुषधौरेयः समागतोऽस्ति तस्योपसर्पणं कुरु' इत्युपसर्पणविधिपरे वाक्ये पुरोवादगतस्य पुरुषपदस्य अमात्यत्वादिना अनुवादेन विवरणात् । अतो न द्युशब्दसचिवयत्पदस्वारस्यं प्रकृते हातव्यम् । भाष्ये परत इति प्रथमार्थे तसिः ।

एवं, द्युलोकसंश्लिष्टमेव ब्रह्म दिवःपरमिति निर्दिश्यते इति प्रतिपादितम् ।

केचित्तु - द्युलोकासंश्लिष्टमेव दिवःपरमिति निर्दिश्यते, दिवीति सप्तमी उदुम्बरेवसतीतिवत् सामीप्ये - इति वदन्ति, तन्मतमाह—**अपर आहेति** ।

---

1. आ. 'अपि' नास्ति 2. मु. 'ध्रुवलोकान्त' नास्ति

एवं दिवः परमपि सत् ब्रह्म दिवीत्युपदिश्यते। तस्मात् अस्ति पूर्वनिर्दिष्टस्य ब्रह्मण इह प्रत्यभिज्ञानम्। अतः परमेव ब्रह्म ज्योतिश्शब्दमिति सिद्धम् ॥ २७ ॥

११ प्रतर्दनाधिकरणम्

## प्राणस्तथाऽनुगमात् ॥ २८ ॥

अस्ति कौषीतकिब्राह्मणोपनिषदि इन्द्रप्रतर्दनाख्यायिका 'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च' इत्यारभ्याम्नाता। तस्यां श्रूयते—'स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व' इति। तथोत्तरत्रापि 'अथ खलु प्राण एव

---

अत्रेदमनभिमतिबीजम्—आधाराधेयभावो यत्र तत्रैव अधिकरणसप्तमी मुख्या। सामीप्यं च न आधाराधेयभावप्रयोजकम्। परन्तु उदुम्बरेवसतीत्यादौ आधारतारोपेण सप्तमीप्रयोगः। न चेह तथा आरोपे किञ्चन प्रमाणमस्ति। अपि चेह लोकत्रयपक्षे सर्वतःपृष्ठेषु विद्यमानस्यापि न द्युलोकासंश्लेषः। अतः असंश्लेषवादिना लोकसप्तकपक्षमादाय ध्रुवलोकान्तो द्युलोको वक्तव्यः। सत्यलोकाग्रभागे उत्तमेषु लोकेषु विद्यमानं च तेन असंस्पृष्टमिति वक्तव्यम्। अस्मिन् पक्षे सामीपिकाधारविद्यमानताऽपि न सम्भवति। ध्रुवलोकानन्तरं महराद्यनेकलोकव्यवहितसत्यलोकाग्रभागावच्छेदेन विद्यमानस्य ध्रुवलोकसमीपवर्तित्वानुपपत्तेः। न च पूर्वस्मिन् व्याख्यानेऽपि दिवःपरमितिनिर्देशः क्लिष्ट इति वाच्यम्। अव्यवहितानन्तर्येऽपि 'नद्याःपरं पारं' इति प्रयोगात्। वृक्षाग्रासंलग्नश्येने तु 'वृक्षाग्रे श्येनः' इति निर्देशो गौणसामीपिकाधारविवक्षया।

पूर्वं त्रिपादमृतशब्दः इह तु ज्योतिश्शब्दः इति शब्दभेदादर्थभेद इति शङ्कां उपसंहारव्याजेन निराकरोति—**तस्मादस्तीति**। ऐकार्थ्ये निर्णीते उभयोश्शब्दयोः एकस्मिन्नर्थे पर्यवसानं भवति। यथा गोदोहनदर्शपूर्णमासयोरेकपुरुषकार्यत्वे निरूपिते स्वर्गकामपशुकामपदयोरेकपुरुषपरत्वम्। ज्योतिश्शब्दस्य ब्रह्मवाचकत्वमपि प्राक् प्रदर्शितमेव ॥ २७ ॥

**इति ज्योतिरधिकरणम् ॥ १० ॥**

प्रज्ञात्मा इदं शरीरं परिगृह्योत्थापयति ' (कौ. उ. ३।१,२,३) इति। तथा ' न वाचं विजिज्ञासीत वक्तारं विद्यात् ' इत्यादि। अन्ते च ' स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृतः ' (कौ. उ. ३।८) इत्यादि।

तत्र संशयः—किमिह प्राणशब्देन वायुमात्रमभिधीयते उत देवतात्मा उत जीवः अथ वा परं ब्रह्मेति।

ननु ' अत एव प्राणः ' इत्यत्र वर्णितं प्राणशब्दस्य ब्रह्मपरत्वम्। इहापि च ब्रह्मलिङ्गमस्ति 'आनन्दोऽजरोऽमृतः' इत्यादि। कथमिह पुनः संशयः संभवति ?

अनेकलिङ्गदर्शनादिति ब्रूमः। न केवलमिह ब्रह्मलिङ्गमेवोपलभ्यते। सन्ति हीतरलिङ्गान्यपि। ' मामेव विजानीहि ' (कौ. उ. ३।१) इति इन्द्रस्य वचनं देवतात्मलिङ्गम्। 'इदं शरीरं परिगृह्योत्थापयति ' इति प्राणलिङ्गम्। ' न वाचं विजिज्ञासीत वक्तारं विद्यात् ' इत्यादि जीवलिङ्गम्। अत उपपन्नः संशयः।

तत्र, प्रसिद्धेः वायुः प्राण इति प्राप्ते—

---

पूर्वं द्युसम्बन्धित्वं ब्रह्मलिङ्गं दीप्त्यादिरूपात् प्राकृतज्योतिर्लिङ्गात् बलवत्, यच्छ्रुत्यनुगृहीतत्वात्—इति निरूपितम्, प्रकृते तु ब्रह्मलिङ्गस्य न तादृशं प्राबल्यप्रयोजकमस्तीति कथं ब्रह्मपरत्वं—इति पूर्वपक्षोत्थानात् सङ्गतिः। देवतात्मा, इन्द्र इत्यर्थः।

तत्र प्रसिद्धेर्वायुःप्राण इतीति। ननु—बहुलिङ्गसमावेशे अनेकपरत्वमित्येव पूर्वपक्षयितुं युक्तम्, कथं प्राण इत्येव पूर्वपक्षः - इति चेत्—

[1]सोऽपि पूर्वपक्षोऽस्त्येव। परं तु ' जीवमुख्यप्राणलिङ्गात् ' इतिसूत्र-

---

1. सोऽपि पूर्वपक्षोऽस्त्येवेति अनेन - भाष्योक्तः चतुष्कोटिकः संशय एव युक्तः —इति द्योतितम्। एतेन विशिष्टाद्वैत्युक्तो द्विकोटिकः संशयो न युक्त इति - लब्धम्। यत्तु तैरुक्तं - चतुष्कोटिकः संशयो न युक्तः —इति, तन्नयुक्तम्—' न वक्तुरात्मोपदेशात्—' इति ' जीवमुख्यप्राणलिङ्गान्न—' इति च उत्तरसूत्रद्वयस्वारस्यानुसारित्वात् चतुष्कोटिकत्वस्य, परोक्तस्य सूत्रस्वारस्यानुसारित्वाच्च।

उच्यते—प्राणशब्दं ब्रह्म विज्ञेयम्। कुतः, तथाऽनुगमात्। तथाहि पौर्वापर्येण पर्यालोच्यमाने वाक्ये [पदानां] (पदार्थानां) समन्वयो ब्रह्मप्रतिपादनपर उपलभ्यते। उपक्रमे तावत् 'वरं वृणीष्व' इतीन्द्रेणोक्तः

---

विवरणावसरे स प्रदर्शयिष्यत इति नेह प्रदर्शितः। अनेन तु सूत्रेण प्राणपूर्वपक्ष एव निराचिकीर्षित इति [1]स दर्शितः।

ननु तेन सूत्रेण 'उपक्रमोपसंहारैकरूप्यात्मकतात्पर्यलिङ्गोपोद्बलितेन वाक्येन इतरलिङ्गानि ब्रह्मपरतयैव व्याख्येयानि' इति सिद्धान्तयिष्यते, एवं सति कथं प्राणपूर्वपक्षोऽवतरति ?

इत्थम् - उपक्रमोपसंहारैकरूप्येण एकवाक्यत्वसिद्ध्यर्थं ब्रह्मपरत्वमिति न सिद्ध्यति, प्राणेऽप्युपक्रमोपसंहारैकरूप्यावगमात्। उपक्रमे हि 'प्राणोऽस्मि प्रज्ञात्मा' इति श्रुतम्। उपसंहारेऽपि 'स एष प्राण एव प्रज्ञात्मा' इति। न च ब्रह्मण्यप्युपक्रमोपसंहारैकरूप्यमस्तीति वाच्यम्। उपक्रमोपसंहारयोर्ब्रह्मविषयतामात्रेण तदैकरूप्यस्याभावात्। उपक्रमे हि हिततमत्वं श्रुतम्। तच्च मोक्षाख्यं ब्रह्मलिङ्गम्। उपसंहारे तु 'आनन्दोऽजरोऽमृतः' इति अन्यदेव ब्रह्मलिङ्गम्। अतः उपक्रमोपसंहारयोर्ब्रह्मसम्बन्धितामात्रेण कथं तदैकरूप्यम्। प्राणे तु शब्दतोऽर्थतश्च उपक्रमोपसंहारयोरैकरूप्यं प्रत्यभिज्ञायते। अतः प्राणविषयकावेव उपक्रमोपसंहारौ प्रबलौ।

ननु तावता ब्रह्मोपक्रमोपसंहारावपेक्ष्य कथं प्राबल्यं प्राणविषययोस्तयोर्भवति।

एवम् - उपक्रमोपसंहारसंस्पर्शित्वं एकं तात्पर्यलिङ्गम्। तच्च यद्यपि प्राणब्रह्मसाधारणम्, उभयप्रमाणस्याप्युपक्रमोपसंहारसंस्पर्शित्वात्। प्राणप्रमाणे तु उपक्रमोपसंहारयोरैकरूप्यात् अभ्यासोऽप्यपरं तात्पर्यलिङ्गं भवति। अतः तात्पर्यलिङ्गद्वयसमावेशात् प्राणश्रुतेः प्राबल्यमिति प्राणपूर्वपक्षाभिप्रायः।

तथाऽनुगमादिति सौत्रं पदं उपक्रमोपसंहारसम्बन्धित्वेनानुगमात् इत्यर्थपरतया व्याचष्टे—**तथा हि पौर्वापर्येणेत्यादिना**। न च - तावता ब्रह्मपरत्वं

---

1. मु. स एवात्र प्रदर्श्यते।

**प्रतर्दनः परमं पुरुषार्थं वरमुपचिक्षेप 'त्वमेव मे वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे' इति। तस्मै हिततमत्वेनोपदिश्यमानः प्राणः कथं परमात्मा न स्यात्। न ह्यन्यत्र परमात्मज्ञानात् हिततमप्राप्तिरस्ति। 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वे. उ. ३।८) इत्यादिश्रुतिभ्यः। तथा 'स यो मां वेद न ह वै तस्य केनचन कर्मणा लोको मीयते....न स्तेयेन न भ्रूणहत्यया' (कौ. उ. ३।१) इत्यादि च ब्रह्मपरिग्रहे घटते। ब्रह्मविज्ञानेन हि सर्वकर्मक्षयः प्रसिद्धः 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' (मु. उ. २।२।८)**

---

नायाति, प्राण एव परं तयोरैकरूप्यमिति स एव प्रतिपाद्यः पर्यवस्यतीत्युक्तं-युक्तम्। एवं हि सति जीव एव प्रतिपाद्यः किं न स्यात्। प्रज्ञाशब्दो हि जीववाचकोऽस्मिन् प्रकरणे अवधार्यते। 'अथ खलु यथाऽस्यै प्रज्ञायै' इति प्रज्ञाशब्दोदितमुपक्रम्य वागादिसम्बन्धित्वस्य 'वागेवास्या एकमङ्गमदूदुहत्' इत्यादिना प्रतिपादनात्। ततश्च उपक्रमोपसंहारैकरूप्यं जीवप्राणविषयं परस्पर-कलहग्रहगृहीतं न एकवाक्यतापादनक्षमम्।

तत्र चेदेवमुच्यते—प्रज्ञाशब्दः प्राणशब्दानुसारेण अन्यथा नेतव्यः, प्राणशब्दस्य प्रथमपठितत्वात् [1]मुख्यार्थत्वावश्यंभावे प्रज्ञाशब्दः तद्दृष्टिविधानाभि-प्रायः तत्र गौणो भविष्यति, जीवलिङ्गानि च प्राणाध्यसनीये जीवे एव योज्यानि - इति ;

तथासति अभ्यस्तां प्राणश्रुतिमपेक्ष्यापि ब्रह्मलिङ्गस्य प्राबल्यं प्राप्नोति। उपक्रमोपसंहारयोः प्राणश्रुतेःप्रागेव ब्रह्मलिङ्गावगमात्। उपक्रमे हि मोक्षाख्यं हिततमत्वं प्राणश्रुतिमपेक्ष्य प्रथमपठितं [2]प्रश्नप्रतिवचनरूपतात्पर्यलिङ्गोपोद्बलितं च। उपसंहारेऽपि 'नो एतन्नाना तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता

---

1. मु. मुख्यार्थावश्यम्भावे।

2. **प्रश्नप्रतिवचनरूपतात्पर्यलिङ्गेति**—इदं लिङ्गं उपक्रमोपसंहारैकरूप्ये उपपत्तौ वा तात्पर्यलिङ्गे अन्तर्भवतीति ज्ञेयम्।

**इत्याद्यासु श्रुतिषु। प्रज्ञात्मत्वं च ब्रह्मपक्षे एवोपपद्यते। न ह्यचेतनस्य वायोः प्रज्ञात्मत्वं संभवति। तथा उपसंहारेऽपि 'आनन्दोऽजरोऽमृतः' इत्यानन्दत्वादीनि न ब्रह्मणोऽन्यत्र सम्यक् संभवन्ति। 'स न साधुना कर्मणा भूयान् भवति नो एवासाधुना कर्मणा कनीयान् एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष उ एवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषते' इति, 'एष लोकाधि-**

---

एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणे अर्पिताः स एष प्राण एव प्रज्ञात्मा' इति सर्ववस्तुनिषेधपूर्वकं [1]सर्ववस्त्वाधारत्वं सर्वप्रपञ्चविवर्ताधिष्ठानत्वरूपं ब्रह्मलिङ्गं प्राणश्रुतिमपेक्ष्य प्रथमपठितम्। अतस्तदनुसारेण प्राणश्रुतिरेव अन्यथा व्याख्येया।

अपि च कृत्स्नस्य प्रकरणस्य प्राणपरत्वे, जीवलिङ्गस्य वागादिसम्बन्धित्वस्य ब्रह्मलिङ्गस्य च आनन्दत्वादेः मनोब्रह्मेत्यादिवत् जीवब्रह्मदृष्टिविधानाभिप्रायेण नयनं वक्तव्यम्। ततश्च अत्यन्तं क्लेशः। ब्रह्मपक्षे तु ब्रह्मण्यपि प्राणश्रुत्यादयो योजयितुं शक्याः—यथा हि शुक्तौ रजतभ्रमदशायां इदंरजतमिति इदंपदसामानाधिकरण्येन प्रयुज्यमानो रजतशब्दः असत्यरजततादात्म्यापन्नशुक्तिपर्यन्तः, अन्यथा सामानाधिकरण्यायोगात्, एवं व्यवहारदशायां प्रयुज्यमाना घटादिशब्दा अपि न केवलं जडांशपर्यवसिताः, अपि तु असत्यघटाद्युपहितब्रह्मपर्यन्ताः, अन्यथा 'सन् घटः' इति सामानाधिकरण्यायोगात्। अत एव 'प्रतिबोधविदितं' [केन. उ. २-३] इतिश्रुत्यनुसारिभिर्वृद्धैः[2] सर्वप्रमाणवेद्यत्वं ब्रह्मणोऽभ्युपगतम्। ततश्च यद्यपि प्राणादिशब्दा ब्रह्मवाचका एव भवन्ति, तथापि यथा ब्रह्मेश्वरादिशब्दा ब्राह्मेण रूपेण तत्प्रतिपादकाः नैवमेते, किन्तु अवच्छिन्नं घटादिसमानयोगक्षेमं ब्रह्म प्रतिपादयन्तीति न ब्रह्मणि ते स्वारस्येन वर्तन्त इति जडविनिर्मुक्तचैतन्ये भागत्यागलक्षणा आश्रीयते। इयं च लक्षणा नातीव क्लिष्टा। शक्तिविषयादन्यत्र अगमनात्। प्राणादिलिङ्गानि तु सर्वानुगते ब्रह्मणि विद्यन्त

---

1. मु. 'सर्ववस्त्वाधारत्वं' नास्ति।
2. वृद्धैः—ब्रह्मसिद्धिकारवार्तिककारादिभिः।

पतिरेष लोकेशः' (कौ. उ. ३।८) इति च। सर्वमेतत् परस्मिन्ब्रह्मण्या-श्रीयमाणेऽनुगन्तुं शक्यते, न मुख्ये प्राणे। तस्मात् प्राणो ब्रह्म ॥२८॥

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् ॥ २९ ॥

यदुक्तं प्राणो ब्रह्मेति, तदाक्षिप्यते। न परं ब्रह्म प्राणशब्दम्। कस्मात्? वक्तुरात्मोपदेशात्। वक्ता हीन्द्रो नाम कश्चिद्विग्रहवान् देवताविशेषः स्वमात्मानं प्रतर्दनायाचचक्षे 'मामेव विजानीहि' इत्युपक्रम्य 'प्राणोऽस्मि प्रज्ञात्मा' इत्यहङ्कारवादेन। स एष वक्तुरात्मत्वेनोपदिश्यमानः प्राणः कथं ब्रह्म स्यात्। न हि ब्रह्मणो वक्तृत्वं संभवति, 'अवागमनाः' (बृह° ३।८।८) इत्यादिश्रुतिभ्यः। तथा विग्रहसंबन्धिभिरेव ब्रह्मण्यसंभवद्भिर्धर्मैः आत्मानं तुष्टाव 'त्रिशीर्षाणं त्वाष्ट्रमहनं अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छम्' इत्येवमादिभिः।

---

एवेति न तत्र अतिक्लेशः। तस्मात् उपक्रमोपसंहाराभ्यां ब्रह्मपरत्वमेव वाक्यस्य-इत्युपसंहरति—तस्मात् प्राणो ब्रह्मेति ॥ २८ ॥

हिततमत्वरूपे वरे प्रतर्दनेन प्रार्थिते इन्द्रवचनं 'मामेव विजानीहि एतदेवाहं मनुष्याय हिततमं मन्ये यन्मां विजानीयात्' इति। अत्र उपक्रमे हिततमत्वेन इन्द्रविज्ञानमेवावगम्यते। न च मोक्षरूपं हिततमं नेन्द्रविज्ञानसाध्यमिति वाच्यम्। मांविजानीयादितिवाक्ये स्वमुपक्षिप्य मामेवेत्यवधारणेन [1]अन्यस्य निषेधेन इन्द्रादन्यत्र वाक्यस्य नेतुमशक्यतया, उत्तरत्र इन्द्रेण स्वस्य सर्वपापास्पृष्टत्वं 'त्रिशीर्षाणं त्वाष्ट्रमहनं' इत्यादिना निरूप्य तत्क्रतुन्यायावलम्बनेन 'स यो मां विजानीयात् न ह वै तस्य केन च कर्मणा लोको मीयते' इति उपासकस्यापि सर्वपापास्पृष्टत्वस्य प्रतिपादिततया च, उपक्रान्तहिततमत्वमपि सर्वपापरहितत्वमेव भवतीत्यवगम्यते। तदाह—वक्ताहीन्द्रोनाम कश्चिद्विग्रहवान् देवताविशेष इत्यादिना। अरुन्मुखान् यतीनिति। रौति - यथार्थं वक्तीति रुत् - वेदान्त-

---

1. मु. 'अन्यस्य निषेधेन' नास्ति

वाक्यं, तत् मुखे येषां ते रुन्मुखाः—स्वाश्रमोचितवेदान्तार्थश्रवणमनननिदिध्यासननिरताः, तद्भिन्नाः अरुन्मुखाः—ब्रह्मनिष्ठाविरोधिव्यापारासक्ताः ।

*(अरुन्मुखा इत्यस्यायमर्थः छन्दोगब्राह्मणपर्यालोचनया अवगम्यते । एवं हि तत्र श्रूयते–'इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत् तेषां त्रय उदशिष्यन्त पृथुरश्मिर्बृहद्गिरीरायोवाजः तेऽब्रुवन् को न इमान् पुत्रान् भरिष्यतीति अहमितीन्द्रोऽब्रवीत्' [ताण्ड्यब्रा. १३-४-७] इति । अत्र हि 'को न इमान् पुत्रान् भरिष्यति' इतिवाक्यशेषपर्यालोचनया अयमर्थोऽवगम्यते - पुत्राद्यासक्तेषु बहुषु यतिषु इन्द्रेण सालावृकेभ्यो दत्तेषु अवशिष्टास्त्रयः 'अस्माभिरपि पुत्राद्यासक्तिस्सम्पादिता चेत् अस्मानपि सालावृकेभ्य इन्द्रो दास्यति, पुत्राद्यासक्त्यसम्पादने तेषां जीवनं कथं स्यात्' इति व्यग्रचित्ता इन्द्रमपृच्छन् कोनइमान्भरिष्यतीति । पुत्रभरणग्रहणं च वेदान्तनिष्ठाविरुद्धलौकिकव्यापारमात्रोपलक्षकम्, निषिद्धत्वाविशेषात् । अतः छन्दोगवाक्यैकार्थ्याय अरुन्मुखानित्यत्रापि ब्रह्मनिष्ठताराहित्यमेव विवक्षितम् ।)*

---

*एतच्चिह्नान्तर्गतः कुण्डलितो भागः प्रक्षिप्तः—तथा हि–व्यूढद्वादशाहस्य मध्यवर्तिनो दशरात्रस्य पञ्चमेऽह्नि माध्यन्दिनसवने ब्रह्मणःपृष्ठस्तोत्रीयतृचे कामनाभेदेन सामानि विहितानि छन्दोगानां ताण्ड्यनामके पञ्चविंशब्राह्मणे । तच्च अर्थवादमुखेन प्रवृत्तम् । यथा—"इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत्, तेषां त्रय उदशिष्यन्त, पृथुरश्मिर्बृहद्गिरीरायोवाजः, तेऽब्रुवन्-को न इमान् पुत्रान् भरिष्यतीति, अहमितीन्द्रोऽब्रवीत्, तानधिनिधाय पर्यचरत् वर्धयन्, तान् वर्धयित्वाऽब्रवीत्-कुमारका वरान् वृणीध्वमिति, क्षत्रं मह्यमित्यब्रवीत् पृथुरश्मिः......ब्रह्मवर्चसं मह्यमित्यब्रवीत् बृहद्गिरिः......पशून् मह्यमित्यब्रवीत् रायोवाजः......" इत्यादि । अत्र 'न इमान् पुत्रान्' इति द्वितीयान्तान्येव त्रीण्यपि पदानि समानाधिकरणानि च इति स्पष्टम् । इमानस्मान् पुत्रात्मना स्वीकृतान्-इति तदर्थः । अत एव 'यतीन्' इत्यस्य यज्ञविघ्नकरणे यतनशीलान् इत्यर्थः । व्याख्यातश्च एवमेव वेदभाष्यकृद्भिः । युक्तश्चैतदेव । कथमन्यथा, अवशिष्टास्ते त्रयः 'कुमारकाः' इति इन्द्रेण सम्बोध्येरन् । कुमारकत्वेन सम्बोधिता अविशिष्टास्त्रय एवेति, समनन्तरेण वरप्रार्थनावाक्येन स्पष्टं ज्ञायते । तथा च 'न इमान् पुत्रान्' इत्यस्य 'अस्माकं पुत्रान्' इति नार्थः । ततश्च तथार्थकत्वमुपजीव्य प्रवृत्तं अरुन्मुखशब्दार्थनिर्धारणमपि दुरशकम् । आपातार्थग्रहणवता केनचित् प्रक्षिप्तोऽयं भागः-इत्येव युक्तम् । अरुन्मुखानित्यस्य विवक्षितोऽर्थः उक्तछन्दोगब्राह्मणानाश्रयणेनापि उपपादयितुं शक्यः, अशक्यत्वेऽपि प्रकृताधिकरणसिद्धान्तसिद्धौ न काऽप्यनुपपत्तिः इति - भाति ।

प्राणत्वं चेन्द्रस्य बलवत्त्वादुपपद्यते । 'प्राणो वै बलम्' इति हि विज्ञायते । बलस्य चेन्द्रो देवता प्रसिद्धा । या च काचिद्बलकृतिः, इन्द्रकर्मैव तत् इति हि वदन्ति । प्रज्ञात्मत्वमपि अप्रतिहतज्ञानत्वाद्देवतात्मनः संभवति । अप्रतिहतज्ञाना देवता इति हि वदन्ति । निश्चिते चैवं देवतात्मोपदेशे हिततमत्वादिवचनानि यथासंभवं तद्विषयाण्येव योजयितव्यानि । तस्मात् वक्तुः-इन्द्रस्य आत्मोपदेशात् न प्राणो ब्रह्म - इत्याक्षिप्य प्रतिसमाधीयते—

'अध्यात्मसंबन्धभूमा ह्यस्मिन्' इति । अध्यात्मसंबन्धः-प्रत्यगात्मसंबन्धः तस्य भूमा - बाहुल्यं अस्मिन्नध्याये उपलभ्यते ।

---

प्राणजीवलिङ्गानि इन्द्रे योजयति - **प्राणत्वं चेन्द्रस्येत्यादिना** । प्राणकार्यबलाभिमानिदेवतात्वात् प्राणलिङ्गानि इन्द्रे उपपद्यन्ते,वक्तृत्वादीनि जीवसामान्यलिङ्गान्यपि जीवविशेषे इन्द्रे उपपद्यन्ते, अरनाभिनिदर्शनपूर्वकं सर्वाधारत्वं अमृतत्वं साध्वसाधुकर्मकारयितृत्वं सर्वेश्वरत्वं इत्येवमादीनि ब्रह्मलिङ्गानि तु उपसंहारगतत्वात् उपक्रान्तेन्द्रस्तुत्यभिप्रायाण्येव योजनीयानि, समआत्मेतिविद्यादिति भेदनिर्देशोऽपि राहोश्शिरइतिवद्योजनीयः—इत्याह - **निश्चितेचैवं देवतात्मोपदेशे इति** ।

**अध्यात्मसम्बन्धः - प्रत्यगात्मसम्बन्ध इति**[1] । प्रश्नप्रतिवचनाभ्यां प्रतिपिपादयिषितस्य हिततमत्वस्य न पापाभावमात्रतया व्याख्यानमुचितम् । उत्तरत्र इन्द्रस्य पापासंश्लेषप्रतिपादनं तु हिततमशब्दोदितमोक्षसाधनज्ञानस्तुत्यर्थमिति, 'तस्य मे तत्र न लोम च मीयते' इति वाक्ये तस्येतिशब्देन प्रजापतिविद्याप्रसिद्धब्रह्मवित्त्वस्य उपक्षेपात् अवगम्यते - इति उत्तरसूत्रे भाष्य एव स्फुटं भविष्यति । अतः उपक्रमो ब्रह्मपर एव । उपसंहारोऽपि स्वरसतो ब्रह्मपरो

---

1. **प्रत्यगात्मसम्बन्धइति** यत्तु - परमात्मासाधारणधर्मसम्बन्धः अध्यात्मसम्बन्धः, इति विशिष्टाद्वैतिनां व्याख्यानम्—तन्न युक्तम् । उपनिषत्सु अधिदैवविपर्ययेणैव अध्यात्मपदप्रयोगात्, उभयसाधारणपरमात्मार्थकत्वस्य उपनिषच्छैल्यननुसारित्वात् ।

'यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः' इति प्राणस्यैव प्रज्ञात्मनः प्रत्यग्भूतस्य आयुष्प्रदानोपसंहारयोः स्वातन्त्र्यं दर्शयति, न देवताविशेषस्य पराचीनस्य। तथा 'अस्तित्वे च प्राणानां निःश्रेयसम्' इति अध्यात्ममेव इन्द्रियाश्रयं प्राणं दर्शयति। तथा 'प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति' (कौ. उ. ३।३) इति, 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इति चोपक्रम्य 'तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृतः' इति विषयेन्द्रियव्यवहारारनाभिभूतं प्रत्यगात्मानमेव उपसंहरति। 'स म आत्मेति विद्यात्' इति चोपसंहारः प्रत्यगात्मपरिग्रहे साधुः न पराचीनपरिग्रहे। 'अयमात्मा ब्रह्म सर्वानुभूः' (बृ. उ. २।५।१९) इति च श्रुत्यन्तरम्। तस्मात् अध्यात्मसंबन्धबाहुल्यात् ब्रह्मोपदेश एवायं न देवतात्मोपदेशः॥

कथं तर्हि वक्तुरात्मोपदेशः—

---

न इन्द्रस्तुत्यर्थतया योजयितुं उचितः। प्राणकार्ये बले इन्द्रस्य देवतात्वेन प्राणलिङ्गानां तत्र नयनं अतिक्लिष्टम्। जीवसामान्यलिङ्गानां जीवविशेषे इन्द्रे सङ्कोचोऽप्यतिक्लिष्टः। समआत्मेतिवाक्यमपि इन्द्रे क्लिष्टम्। तस्मादिह न इन्द्रः प्रतिपाद्य इति परिहाराभिप्रायः। **अस्तित्वे च प्राणानां निःश्रेयसमिति**। प्राणानां - इन्द्रियाणां निश्रेयसं-शरीरे स्थितिः मुख्यस्य प्राणस्य अस्तित्वे - विद्यमानत्वे भवति। **तद्यथा रथस्येति**। रथचक्रस्य अरेषु - नेमिनाभिमध्यगतासु तिर्यक्प्रोतशलाकासु। नेमिः-चक्रप्रान्ते विद्यमानं वर्तुलं काष्ठम्। नाभिः-मध्यगतं शलाकाधारभूतं काष्ठम्। एताः - 'वागेवास्या एकमङ्गमदूदुहत् तस्यै नाम परस्तात् प्रतिविहिता भूतमात्रा' इत्यादिनोक्ता नामाद्या दश भूतमात्राः। प्रज्ञामात्रासु - वागाद्यवच्छिन्नप्रज्ञात्मकजीवांशेषु दोहनपर्यायैर्निरूपितेषु। प्राणेप्रकरणिनि परमात्मनि॥ २९॥

मामेवविजानीहीतिवाक्यगतिनिरूपणपरमुत्तरसूत्रमवतारयति—**कथं तर्हि वक्तुरिति**।

## शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३० ॥

इन्द्रो नाम देवतात्मा स्वमात्मानं परमात्मत्वेन 'अहमेव परं ब्रह्म' इत्यार्षेण दर्शनेन यथाशास्त्रं पश्यन् उपदिशति स्म 'मामेव विजानीहि' इति। यथा 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च' इति तद्वत्। 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्' (बृ. उ. १।४।१०) इति श्रुतेः।

यत्पुनरुक्तं 'मामेव विजानीहि' इत्युक्त्वा विग्रहधर्मैः इन्द्रः स्वं आत्मानं तुष्टाव त्वाष्ट्रवधादिभिरिति, तत् परिहर्तव्यम्।

अत्रोच्यते—न त्वाष्ट्रवधादीनां विज्ञेयेन्द्रस्तुत्यर्थत्वेनोपन्यासः यस्मादेवंकर्माऽहं तस्मात् मां विजानीहीति। कथं तर्हि? विज्ञानस्तुत्यर्थत्वेन। यत्कारणं त्वाष्ट्रवधादीनि साहसान्युपन्यस्य परेण विज्ञानस्तुतिमनुसंदधाति 'तस्य मे तत्र लोम च न मीयते स यो मां वेद न ह वै तस्य केन च कर्मणा लोको मीयते' इत्यादिना। एतदुक्तं भवति—यस्मादीदृशान्यपि क्रूराणि कर्माणि कृतवतो मम ब्रह्मभूतस्य लोमापि न हिंस्यते, स योऽन्योऽपि मां वेद न तस्य केनचिदपि कर्मणा लोको हिंस्यते—इति। विज्ञेयं तु ब्रह्मैव 'प्राणोऽस्मि प्रज्ञात्मा' इति वक्ष्यमाणम्। तस्माद्ब्रह्मवाक्यमेतत् ॥ ३० ॥

---

इन्द्रो हि कृतब्रह्माभेदसाक्षात्कारः आत्मानमेवोपदिशति स्म। यथा वामदेवस्तत्त्वसाक्षात्कारवान् अस्मच्छब्दोल्लेखेनैव सर्वात्मत्वं व्यवहृतवान्। अतो मामेवविजानीहीतिवाक्यगतस्य मामित्येतस्य विशुद्धप्रत्यङ्मात्रपर्यवसितत्वात् एवकारोऽपि प्रत्यगात्मविषयज्ञानादन्यगोचरं ज्ञानं वारयति। ततश्च इन्द्र एवेह प्रतिपाद्य इति न सिध्यति। तदाह—**इन्द्रो नामेति। तद्यो यो देवानामिति।** तत्-प्रत्यगभिन्नपरमात्मस्वरूपं देवादीनां मध्ये य एव साक्षात्कृतवान् स एव तदभवत्-ब्रह्माभवत्। तथा च ब्रह्मसाक्षात्काराद्ब्रह्मीभूतस्येन्द्रस्य अस्मच्छब्दोल्लेखेन ब्रह्मोपदेशो न विरुध्यत इति भावः ॥ ३० ॥

## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्या-दाश्रितत्वादिह तद्योगात् ॥ ३१ ॥

यद्यप्यध्यात्मसंबन्धभूमदर्शनात् न पराचीनस्य देवतात्मन उपदेशः, तथाऽपि न ब्रह्मवाक्यं भवितुमर्हति । कुतः, जीवलिङ्गात् मुख्य-प्राणलिङ्गाच्च । जीवस्य तावदस्मिन् वाक्ये विस्पष्टं लिङ्गमुपलभ्यते 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इत्यादि । अत्र हि वागादिभिः करणैः व्यापृतस्य कार्यकरणाध्यक्षस्य जीवस्य विज्ञेयत्वमभिधीयते । तथा मुख्यप्राणलिङ्गमपि 'अथ खलु प्राण एव प्रज्ञात्मा इदं शरीरं परिगृह्योत्थापयति' इति । शरीरधारणं च मुख्यप्राणस्य धर्मः, प्राणसंवादे वागादीन् प्राणान् प्रकृत्य 'तान् वरिष्ठः प्राण उवाच मा मोहमापद्यथ अहमेवैतत् पञ्चधाऽऽत्मानं प्रविभज्य एतद्बाणमवष्टभ्य विधारयामि' (प्र. उ. २।३) इति श्रवणात् । ये तु 'इमं शरीरं परिगृह्य' इति पठन्ति तेषां, इमं-जीवं इन्द्रियग्रामं वा परिगृह्य शरीरमुत्था-पयतीति व्याख्येयम् । प्रज्ञात्मत्वमपि जीवे तावत् चेतनत्वादुपपन्नम् । मुख्येऽपि प्राणे प्रज्ञासाधनप्राणान्तराश्रयत्वादुपपन्नमेव । जीवमुख्य-प्राणपरिग्रहे च प्राणप्रज्ञात्मनोः सहवृत्तित्वेन अभेदनिर्देशः स्वरूपेण च भेदनिर्देशः इत्युभयथा निर्देश उपपद्यते 'यो वै प्राणः सा प्रज्ञा या वै प्रज्ञा स प्राणः सह ह्येतावस्मिन् शरीरे वसतः सहोत्क्रामतः' इति । ब्रह्मपरिग्रहे तु किं कस्माद्भिद्येत ।

---

तान् वरिष्ठः प्राण उवाचेति । एतत् - इत्थं - परिदृश्यमानप्राणापा-नाद्यात्मना वाणं - शरीरं अवष्टभ्य - यथा शिथिलता गात्राणां न भवति तथा तस्मिन्नात्मानं संयोज्य विधारयामि - व्यवहारयोग्यं करोमि । द्वितीयमेतत्पदं शरीर-विशेषणम् । 'अथ खलु प्राण एव' इति कौषीतकिवाक्ये इदंशब्दस्थाने इमंशब्दं पठन्ति, तत्र इदंशब्दवत् शरीरविशेषणत्वं वक्तुमशक्यं विभिन्नलिङ्गत्वात्-इत्यभि-प्रेत्य तं पाठं व्याचष्टे—ये त्विमं शरीरमिति ।

**तस्मात् इह जीवमुख्यप्राणयोरन्यतरः उभौ वा प्रतीयेयातां, न ब्रह्म-इति चेत्—**

---

**तस्मात् इह जीवमुख्यप्राणयोरन्यतर उभौ वा प्रतीयेयातां न ब्रह्मेतीति। ननु** - अत्र उपक्रमोपसंहारयोः ब्रह्मसम्बन्धात् [1]ब्रह्मविषयकवाक्यत्वे निर्धारिते तदनुसारेण प्राणादिविषयकश्रुतिलिङ्गादिकं नेतव्यमिति यत् त्रिसूत्र्या व्यवस्थापितं तदाक्षिप्यते। तत्र आक्षेपस्यायमभिप्रायः-आदावन्ते च यस्य पदार्थस्य प्रतिपादकं श्रुतिलिङ्गादिकमुपलभ्यते, तादृशसन्दर्भे मध्यगतानां पदानां समभिव्याहारविशेषमहिम्ना उपक्रमोपसंहारसंस्पर्शिपदार्थप्रतिपादकता अवसीयते, 'सम्भूयोच्चारितानां पदानां सहार्थप्रतिपादकत्वं' इति व्युत्पत्तेः। यद्यपि मध्यगतो यः पदार्थः तत्प्रतिपादकत्वेऽपि सर्वेषां पदानां स्वीक्रियमाणे सहार्थप्रतिपादकता निर्व्यूढा भवति, तथाऽपि 'आदावन्ते च यस्य पदार्थस्य संस्पर्शो वर्तते तत्प्रतिपादकतयैव सम्भूयार्थप्रतिपादकता' इत्यत्र उपक्रमोपसंहाररूपसमभिव्याहारविशेष[2] एव नियामकः, व्युत्पत्तेः। यथा-पर्वतोवह्निमानित्यत्र उद्देश्यविधेयभावे पूर्वोत्तरपदत्वादिकम्। बहूनां च पदानां तत्तदर्थप्रतिपादकानां एकार्थप्रतिपादकत्वं 'एकस्यार्थस्य प्राधान्यं इतरेषां तदुपकारकत्वं' इति विवक्षया निर्वहणीयम्। ततश्च उपक्रमोपसंहाराभ्यां एकार्थप्रतिपादकत्वरूपमेकवाक्यत्वं सिध्यत् उपक्रमोपसंहारसंस्पर्शिपदार्थस्य प्राधान्यमुपक्षिप्यैव सिध्यति। ततश्च प्रकरणोत्थापकताऽपि तयोस्सिद्धा भवति। प्रधानाकांक्षा हि प्रकरणमित्युच्यते। उपक्रमोपसंहारसंस्पृष्टस्य च प्राधान्यसिद्धौ सहार्थप्रतिपादकत्वानुसारेण समभिव्याहृतपदेषु मध्ये यस्य कस्यापि अनुसन्धानाभावे [3]विवक्षितशाब्दबोधाजनकत्वात् [4]प्रधानपदस्य सर्वैः पदैराकांक्षासत्त्वात् प्रकरणसिद्धिः। ततश्च उपक्रमोपसंहारयोः एकपदार्थसंस्पर्शेन प्रकरणं वाक्यं च तादृशैकपदार्थगोचरं सम्पन्नं भवति। एवं उपक्रमोपसंहारोन्नीत-

---

1. मु. ब्रह्मवाक्यत्वे
2. **समभिव्याहारविशेष इति** संदंशरूपोऽयं समभिव्याहारः।
3. **विवक्षितेत्यादि** पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वं आकाङ्क्षा इत्यभिप्रायेणेदम्।
4. मु. प्रधानस्य

वाक्यप्रकरणाभ्यां प्राणादिगोचर[1]श्रुतिलिङ्गादीनां कथमन्यथानयनम्। दुर्बलेन प्रबलस्य अन्यथानयनायोगात् - इति । ततश्च उपक्रमोपसंहारावगतैकवाक्यतापरित्यागमभ्युपगम्य पूर्वपक्षे क्रियमाणे यावन्तोऽस्मिन् सन्दर्भे प्रतिपाद्याः ते सर्वेऽपि विवक्षिता इति स्वीकर्तव्यम्। ततश्च अन्यतर इति पक्षस्य कथमुत्थानम् ?

नन्वत एवास्वरसात् तं पक्षं परित्यज्य उभौ-जीवप्राणौ विवक्षिताविति द्वितीयपक्ष [2]आश्रित इति चेत्—

सोऽप्ययुक्तः—उपासात्रैविध्यादितिसूत्रभागे पूर्वपक्षिणं प्रति त्रिविधोपासनाप्रसञ्जनात् ब्रह्मापि पूर्वपक्ष्यभिमतमिति प्रतीयते ।

ननु तदपि भाष्ये विवक्षितमेव। पूर्वपक्षमुखेन तदनुक्तिस्तु तस्मिन्नंशे सिद्धान्तिनो विप्रतिपत्त्यभावात्। नब्रह्मेतिभाष्यन्तु नब्रह्मैवेत्येतदर्थकम्।

एवं तर्हि इन्द्रोऽपि विवक्षितोऽस्तु। तथा च पूर्वपक्षश्चतुष्टयविषयोऽस्तु। वाक्यभेदमभ्युपेत्य पूर्वपक्षावसरे इन्द्रपरित्यागकारणाभावात् । ततश्च 'यन्मां विजानीयात्' इति वा 'प्राणोऽस्मि प्रज्ञात्मा तम्मामायुरमृतमित्युपास्व' इति वा इन्द्रोपासनाविधिः। 'अथ खलु प्राण एव प्रज्ञात्मा इदं शरीरं परिगृह्योत्थापयति, तस्मादेतदेवोक्थमुपासीत' इति प्राणोपासनाविधिः। 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इत्येवमादौ जीवोपासनाविधिः। 'स म आत्मेति विद्यात्' इति ब्रह्मोपासनाविधिः। यथा च 'स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृतः' इति वाक्ये ब्रह्मलिङ्गात् प्राणप्रज्ञात्मशब्दयोर्ब्रह्मपरत्वं एवं 'प्राणोऽस्मि प्रज्ञात्मा' इति वाक्येऽपि उत्तमपुरुषप्रयोगेण वक्तृलिङ्गेन इन्द्रपरत्वेऽपि प्राणप्रज्ञात्मशब्दयोर्नानुपपत्तिः। इन्द्रपरत्वे सन्दर्भस्याभ्युपगम्यमाने अध्यात्मसम्बन्धानुपपत्तिः या उक्ता, सा अस्मिन् पक्षे न प्राप्नोति । अध्यात्मसम्बन्धस्य [3]यथायोग्यं प्राणजीवब्रह्मविषयत्वोपपत्तेः। तस्मात् उपासनात्रयमिति [4]पक्षो न सम्भवति - इति चेत्—

1. मु. श्रुतिलिङ्गानां
2. मु. आश्रीयते
3. आ. यथायोगं
4. आ. पक्षोपि न सङ्गत इति

उच्यते—वाक्यभेदाभ्युपगमेऽपि इन्द्रोपासनाविषयकः पूर्वपक्षो नावतरति। 'यन्मां विजानीयात्' इतिवाक्यस्य 'एतदेवाहं मनुष्याय हिततमं मन्ये' इति पूर्ववाक्यानुसारेण मोक्षफलकोपासनाविधिपरत्वावगमेन[1] 'स म आत्मेति विद्यात्' इति प्रकरणान्तश्रुतवाक्यसमानविषयत्वेन ब्रह्मपरत्वात्। 'तम्मामायुरमृतमित्युपास्व' इतिवाक्यानन्तरं 'आयुः प्राणः प्राणो वा आयुः प्राण उ वा अमृतं यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः' इति आयुःप्रदत्वं सङ्ग्रहेण कीर्तितं प्राणस्य। तदनन्तरं च 'प्राणेन ह्येवामुष्मिन् लोके अमृतत्वमाप्नोति प्रज्ञया सत्यसङ्कल्पं' इति प्राणप्रज्ञापदार्थयोः व्यवस्थितफलसम्बन्धो दर्शितः। अनन्तरसन्दर्भे च, यत् प्राणस्य आयुःप्रदत्वमुक्तं पूर्वं तदेव 'प्राणे सति शरीरस्थितिः तदुत्क्रमणे पतनं शरीरस्य' इत्यन्वयव्यतिरेकप्रदर्शनेन स्पष्टीकृत्य उपसंहृतम् 'अथ खलु प्राण एव प्रज्ञात्मा इदं शरीरं परिगृह्योत्थापयति' इति। तदनन्तरं च 'अथ यथाऽस्यै प्रज्ञायै सर्वाणि भूतान्येकं भवन्ति तद्व्याख्यास्यामः' इत्युपक्रम्य सप्रपञ्चं वक्तृत्वादयो जीवधर्मा निरूपिताः 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इत्येवंप्रकारेण। ततश्च प्राणोऽस्मीतिवाक्यस्य तदेकविषयकोत्तरसन्दर्भपर्यालोचनया प्राणजीवविषयकोपासनाद्वयविधिपरत्वमभ्युपेयम्। एवं सति व्यवस्थितफलनिर्देशोऽप्युपपन्नो भविष्यति। 'एतदेवोक्थमुपासीत' इति तु तत्रैव गुणविधायकं भविष्यति। 'वक्तारं विद्यात्' इत्येतदपि गुणविधिरेव। एकेन उक्थशब्दोदितः शरीरोत्थापकत्वगुणः प्राणे विधीयते, अन्येन जीवे वक्तृत्वादिगुणः। प्राणजीवोपासनापरेऽपि वाक्ये [2]अस्मीत्युत्तमपुरुषनिर्देशस्तु शास्त्रदृष्ट्या सर्वात्मत्वमस्तीति व्याख्येयः। अतः मांविजानीयादित्यत्र प्राणोऽस्मीत्यत्र च न इन्द्रोपासनाविधिः सम्भवति। न च वाक्यान्तरं तदुपासनाविधायि विद्यते। अतो वाक्यभेदपक्षे त्रीण्युपासनानीत्येव पूर्वपक्षः पर्यवसितः।

उपासात्रैविध्यादिति सौत्रहेतुं [3]उपासनात्रैविध्यप्रसङ्गादित्यर्थपरतया व्याचष्टे-

1. आ. परत्वाभ्युपगमेन 2. मु. अस्मिन्नुत्तम

3. **उपासनात्रैविध्यप्रसङ्गादित्यर्थपरतयेति** यत्तु-अत्र श्रुतप्रकाशिकायामुक्तम्-'नित्योपलब्ध्यनुपलब्धिप्रसङ्गः' 'अपीतौ तद्वत्प्रसङ्गात्' इतिवत् प्रसङ्गशब्दस्याश्रुतत्वात् प्रसञ्जनपर्यन्तार्थवर्णनमयुक्तमिति - तन्न युक्तम् - परैरपि 'न च पर्यायादप्यविरोधो विकारादिभ्यः'

नैतदेवं-उपासात्रैविध्यात्। एवं सति त्रिविधमुपासनं प्रसज्येत—जीवोपासनं मुख्यप्राणोपासनं ब्रह्मोपासनं चेति। नचैतदेकस्मिन्वाक्येऽभ्युपगन्तुं युक्तम्। उपक्रमोपसंहाराभ्यां हि वाक्यैकत्वमवगम्यते।

---

त्रिविधमुपासनं प्रसज्येतेति। ननु उपासात्रैविध्यवादिनं पूर्वपक्षिणं प्रति तदिष्टमेवेत्याशङ्क्य, वाक्यभेदापादने तस्य पर्यवसानं करोति—न चैतदेकस्मिन्निति।

ननु-एकवाक्यतया कृत्स्नस्य सन्दर्भस्य ब्रह्मपरत्वेऽभ्युपगते प्राणादिशब्दा ब्रह्मणि लाक्षणिका भवेयुः, ततश्च प्राणप्रज्ञाशब्दयोरैकार्थ्यं च स्यात्। एवं च प्राणप्रज्ञात्मानावुपक्रम्य समाम्नातेन 'सह ह्येतावस्मिञ्छरीरे वसतः सहोत्क्रामतः' इति वाक्येन तयोः द्विवचनावगतं द्वित्वं साहित्यं च अनुपपन्नं स्यात्। ततश्च सहवासादिलिङ्गसहकृतद्विवचनप्राणादिश्रुतिविरोधात् उपक्रमोपसंहारैकरूप्यावगतं वाक्यं प्रकरणं च बाधनीयम्, प्रबलेन दुर्बलबाधस्यैव न्याय्यत्वात्। पदार्थान्

---

इत्यत्र 'विकारादिदोषप्रसङ्गात्' इत्यर्थवर्णनं कृतम्। तथा 'अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः' इत्यत्र 'अविशेषः स्यात्' इत्यर्थवर्णनं कृतम्। तथा 'करणवच्चेन्न भोगादिभ्यः' इत्यत्र 'भोगादि सर्वं प्रसज्ज्येत' इत्यर्थवर्णनं कृतम्। तत्र तथा अर्थवर्णनस्य आवश्यकत्वं चेत्, अत्रापि तुल्यम्, अन्यथावाक्यभेदःस्यादिति।

यदप्युक्तं तत्रैव—उपासात्रैविध्यविधानस्य वृत्तिकाराभिमतत्वात् तदनतिक्रमाय परैरेव त्रिविधोपासनपरत्वेन योजनान्तरं कृतं, तत्र, उपपादनप्रकारो न युक्तः 'मनोमयः प्राणशरीरः' इति जीवप्राणयोः परमात्मानं प्रति शरीरतया प्रकारत्वस्य श्रुतत्वेन प्रकारान्तरेण त्रैविध्यकल्पनाया अयुक्तत्वमिति—तन्न युक्तम् - 'प्राणशरीरः' इतिवत् 'मनश्शरीरः इत्यश्रुतत्वात्, मनश्शब्दस्य मुख्यार्थपरित्यागे कारणाभावात्, मुख्यार्थापरित्यागेनैव अर्थवर्णस्य भाष्ये कृतत्वात्, शरीरशरीरिभावेन अर्थवर्णस्य, मयट्-शरीर-पदे विनाऽपि सामनाधिकरण्यमात्रेण भवन्मते सम्भवेन तद्वैयर्थ्यात्, शरीरशरीरिभावे सामानाधिकरण्यस्य अध्यासभाष्यव्याख्यायां समन्वयसूत्रभाष्यव्याख्यायाञ्च विस्तरेण निराकृतत्वाच्च। वस्तुतस्तु अथवेत्यादिना वृत्तिकारव्याख्यानं अनूदितं केवलम्। न तत्र भाष्यकृतां तात्पर्यम्। अत एव जगद्वाचित्वाधिकरणे 'जीवमुख्यप्राणलिङ्गान्नेति चेत् तद्व्याख्यातम्' इति सूत्रे' 'त्रिविधोपासनप्रसङ्गात्' इत्यर्थाश्रयणेनैव व्याख्यातत्वमुपपादितं भाष्यकृद्भिः। वृत्तिकृतां व्याख्याने भाष्यकृतां अतात्पर्ये उपपत्तिश्च अत्रैवव्याख्यायां अनुपदं वर्णयिष्यते 'अयं पक्षो नातीव साधु.' इत्यादिना।

प्रति वाक्यार्थस्य उद्देश्यतया प्राधान्यात् तदनुरोधेन पदार्था एव व्याख्येया इति चेत्, सत्यम्। न तु तदेकत्वानुरोधेन पदार्थानां लाक्षणिकता उपेया। प्राणादिपदानां [1]यथाश्रुतार्थत्वाभ्युपगमेन समभिव्याहारविशेषावगतस्यैकवाक्यत्वस्य बाधेऽपि वाक्यार्थीभावस्याबाधात्। 'साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम्। वर्णाः तथापि नैतस्मिन् पर्यवस्यन्ति निष्फले॥ वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम्। पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम्।' [भट्टवा] इति न्यायस्य वाक्यार्थत्रयवादिमतेऽप्यक्षतेः। अतो न कृत्स्नस्य सन्दर्भस्य ब्रह्मपरत्वमिति चेत् -

उच्यते—'[2]तात्पर्यानुसारिणी शाब्दी गतिः' इति हि लोके व्युत्पन्नम्। अत एव 'गङ्गायां घोषः' इत्यस्य श्रुत्यर्थानुसारेण 'गङ्गायां मत्स्यः, तीरे घोषः' इति व्याख्यातुं शक्यत्वेऽपि समभिव्याहारावगतैकवाक्यत्वे वक्तुस्तात्पर्यात् एकवाक्यतासंरक्षणाय गङ्गापदे लक्षणा आश्रिता। लोके च तात्पर्यग्राहकं [3]वक्तुर्देशकालादिकं उपक्रमोपसंहारैकरूप्यादिकं च प्रसिद्धम्। अत एव लौकिकेषु काव्यादिप्रबन्धेषु प्राधान्येन प्रतिपाद्यस्य वस्तुनः आदावन्ते मध्ये च उपक्षेपो भवति। प्रकृते च ब्रह्मविषययोर्वाक्यप्रकरणयोरुपक्रमोपसंहारसंस्पर्शित्वात् एतत्सन्दर्भगतसर्वपदापेक्षत्वं ब्रह्मबोधकपदानां यत् [4]ब्रह्मप्रकरणत्वं, यच्च ब्रह्मरूपैकार्थप्रतिपादकत्वं ब्रह्मवाक्यत्वं, तत् [5]व्युत्पत्त्यनुसारेण श्रुत्यादेरप्यन्यथानयने समर्थं भवत्येव। यत्र च

---

1. मु. यथाश्रुतत्वाभ्युपगमेन

2. **तात्पर्यानुसारिणीशाब्दीगतिरिति** शाब्दी-शब्दप्रमाणकः गतिः - बोधः तात्पर्यानुसारिणी—तात्पर्यसमानविषयकः इत्यर्थः। तात्पर्यविषयीभूतवाक्यार्थबोधनिर्वाहकसामग्रीप्रयुक्तः इति यावत्। अथवा, शाब्दीगतिः - शब्दवृत्तिः तात्पर्यानुसारिणी - तात्पर्यविषयीभूतवाक्यार्थबोधनिर्वाहकयथासम्भवकल्पनाविषयः।

3. मु. वक्तृदेश

4. मु. ब्रह्मप्रकरणं

5. **व्युत्पत्त्यनुसारेणेति** व्युत्पत्तिः—'तात्पर्यानुसारिणी शाब्दी गतिः' इति व्युत्पत्तिः।

'मामेव विजानीहि' इत्युपक्रम्य 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व' इत्युक्त्वा अन्ते 'स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृतः' इत्येकरूपावुपक्रमोपसंहारौ दृश्येते। तत्र अर्थैकत्वं युक्तमाश्रयितुम्। नच ब्रह्मलिङ्गं अन्यपरत्वेन परिणेतुं शक्यम्। दशानां भूतमात्राणां प्रज्ञामात्राणां च ब्रह्मणोऽन्यत्र अर्पणानुपपत्तेः। आश्रितत्वाच्चान्यत्रापि ब्रह्मलिङ्गवशात् प्राणशब्दस्य ब्रह्मणि वृत्तेः। इहापि च हिततमोपन्यासादिब्रह्मलिङ्गयोगात् ब्रह्मोपदेश एवायमिति गम्यते।

यत्तु मुख्यप्राणलिङ्गं दर्शितं 'इदं शरीरं परिगृह्योत्थापयति' इति, तदसत्-प्राणव्यापारस्यापि परमात्मायत्तत्वात् परमात्मन्युपचरितुं शक्यत्वात्। 'न प्राणेन नापानेन मर्त्यो जीवति कश्चन। इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ' (क. उ. २।५।५।) इति श्रुतेः। यदपि 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इत्यादि जीवलिङ्गं

---

तात्पर्यलिङ्गरहितता उत्तरप्रमाणस्य, तत्रैव औत्सर्गिकं पूर्वप्रमाणप्राबल्यं, तद्विषय एव च श्रुतिलिङ्गादिनयः। तत् सिद्धं प्रबलतात्पर्यलिङ्गोपगृहीतत्वात् ब्रह्मप्रमाणानुसारेण प्राणादिश्रुतीनामन्यथानयनमिति।

**एकरूपावुपक्रमोपसंहाराविति।** ननु प्राणप्रज्ञात्मशब्दावादाय उपक्रमोपसंहारयोरैकरूप्यं ब्रह्मणि वक्तुं न शक्यते। पूर्वपक्षिणा औपसंहारिकयोः प्राणप्रज्ञात्मशब्दयोः ब्रह्मलिङ्गानुसारेण ब्रह्मपरत्वाभ्युपगमेऽपि उपक्रमगतयोस्तयोः प्राणजीवपरत्वस्यैवाभ्युपगमात्। न च 'उपक्रमे हिततमत्वं ब्रह्मलिङ्गं उपसंहारे चानन्दत्वादिकं' इत्येतावता ऐकरूप्यं भवति। उच्यते—उपक्रमे ब्रह्मलिङ्गं उपसंहारेऽपि ब्रह्मलिङ्गं इति उपक्रमोपसंहारयोः[1] एकपदार्थसम्बन्धितया ऐकरूप्यं विवक्षितम्।

आश्रितत्वादिति सौत्रपदं व्याचष्टे—**आश्रितत्वाच्चान्यत्रेति।** 'कतमा सा देवता इति प्राण इति होवाच' इत्यत्र।

---

1. मु. उपक्रमोपसंहारगतयोः

दर्शितं, तदपि न ब्रह्मपक्षं निवारयति। न हि जीवो नाम अत्यन्तभिन्नो ब्रह्मणः, 'तत्त्वमसि', 'अहं ब्रह्मास्मि' इत्यादिश्रुतिभ्यः। बुद्ध्याद्युपाधिकृतं तु विशेषमाश्रित्य ब्रह्मैव सन् जीवः कर्ता भोक्ता चेत्युच्यते। तस्य उपाधिकृतविशेषपरित्यागेन स्वरूपं ब्रह्म दर्शयितुं 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इत्यादिना प्रत्यगात्माभिमुखीकरणार्थमुपदेशो न विरुध्यते। 'यद्वाचाऽनभ्युदितं येन वागभ्युद्यते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥' (के. उ. १।४) इत्यादि च श्रुत्यन्तरं वचनादिक्रियाव्यापृतस्यैवात्मनो ब्रह्मत्वं दर्शयति। यत्पुनरेतदुक्तं 'सह ह्येतावस्मिञ्शरीरे वसतः सहोत्क्रामतः' इति प्राणप्रज्ञात्मनोर्भेददर्शनं ब्रह्मवादे नोपपद्यत इति। नैष दोषः - ज्ञानक्रियाशक्तिद्वयाश्रययोर्बुद्धिप्राणयोः प्रत्यगात्मोपाधिभूतयोः भेदनिर्देशोपपत्तेः, उपाधिद्वयोपहितस्य तु प्रत्यगात्मनः स्वरूपेणाभेद इत्यतः प्राण एव प्रज्ञात्मा इत्येकीकरणमविरुद्धम्।

अथवा 'नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' इत्यस्य

---

**यद्वाचाऽनभ्युदितमिति।** यत् - स्वप्रकाशं साक्षिस्वरूपं वाचा जडया न प्रकाशितं वागेव परं साक्षिभास्या, तत् साक्षिरूपं एव ब्रह्म इत्यर्थः। **ज्ञानक्रियाशक्तिद्वयाश्रययोरिति।** ज्ञानशक्त्याश्रयो बुद्धिः, वृत्तिज्ञानानां तत्परिणामत्वात्। क्रियाशक्त्याश्रयः प्राणः, शरीरव्यापारस्य तदधीनत्वात्। **उपाधिभूतयोरिति।** ततश्च विशेषणांशभेदेन विशेष्येऽपि प्रत्यगात्मनि भेदाध्यासात् प्रत्यगात्मपर्यन्तयोरपि प्राणप्रज्ञाशब्दयोः द्विवचनान्तता न विरुध्यते। ननु सहह्येताविति वाक्यस्य औपाधिकभेदाभिप्रायत्वं कुतोऽवगम्यते इत्याशङ्क्य, यावैप्रज्ञेतिपूर्ववाक्ये व्यतिहारेण पदार्थद्वयाभेदप्रतिपादनात् इत्याह—**उपाधिद्वयोपहितस्येति।**

एवं स्वमतेन सूत्रं व्याख्याय [1]मतान्तरेण सूत्रं व्याख्यातुमारभते—**अथवेति।** पूर्वस्मिन् व्याख्याने निर्विशेषज्ञेयवस्तुपरं प्रकरणम्। अस्मिन्

---

1. **मतान्तरेण**—वृत्तिकारमतेन।

अयमन्योऽर्थः—न ब्रह्मवाक्येऽपि जीवमुख्यप्राणलिङ्गं विरुध्यते। कथम्? उपासात्रैविध्यात्। त्रिविधमिह ब्रह्मण उपासनं विवक्षितं प्राणधर्मेण प्रज्ञाधर्मेण स्वधर्मेण च। तत्र 'आयुरमृतमित्युपास्व आयुः प्राणः' इति, 'इदं शरीरं परिगृह्योत्थापयति' इति, 'तस्मादेतदेवोक्थमुपासीत' इति च प्राणधर्मः। 'अथ यथाऽस्यै प्रज्ञायै सर्वाणि भूतानि एकं भवन्ति तद्व्याख्यास्यामः' इत्युपक्रम्य 'वागेवास्या एकमङ्गमदूदुहत् तस्यै नाम

---

व्याख्याने, एकवाक्यतासंरक्षणाय पूर्ववदेव यद्यपि ब्रह्मप्रधानं प्रकरणं, तथापि सविशेषोपास्यब्रह्मपरम्। जीवमुख्यप्राणस्वधर्मविशिष्टब्रह्मोपासनापरत्वात्।

**अथ यथास्यै प्रज्ञाया इति**। प्राणनिरूपणानन्तरं प्राणोऽस्मिप्रज्ञात्मेतिवाक्यनिर्दिष्टायाः प्रज्ञायाः सम्बन्धीनि भूतानि परस्पराश्रयत्वग्रस्ततया मिथ्याभूतानि परमार्थब्रह्मात्मना यथा एकं भवन्ति तद्व्याख्यास्यामः। **वागेवास्या इति**। अस्याः-जीवरूपायाः प्रज्ञायाः वाक् एकमङ्गमदूदुहत् - स्वावच्छिन्नं एकं जीवांशं सम्पादितवती। तस्यै-वाचः, नाम-शब्दात्मकम्, भूतमात्रा-भूतैकदेशः, प्रतिविहिता-तत्सम्बन्धमापादिता। अनेन वाक्येन, सङ्ग्रहवाक्ये जीवसम्बन्धो यो भूतानां प्रतिपादितः तत्र वाग्द्वारा नामसम्बन्धो निरूपितः। एवं पुनरपि नव दोहनपर्यायाः प्रतिविधानपर्यायाश्च समाम्नाताः। तत्र घ्राणचक्षुश्श्रोत्रजिह्वाहस्तशरीरोपस्थपादप्रज्ञा दोग्ध्र्यः। गन्धः रूपं शब्दः अन्नरसः कर्म सुखदुःखे आनन्दरतिप्रजातयः इत्या विज्ञातव्यकामौ, प्रतिविधेया भूतमात्राः। अत्र सङ्ग्रहवाक्यगतः प्रज्ञाशब्दो जीवपरः। दोहनान्तिमपर्याये प्रज्ञाशब्दो धीवाचकः। 'तस्यै धियो विज्ञातव्यं कामाः परस्तात्प्रतिविहिता भूतमात्रा' इति तत्पर्याये प्रतिविधानवाक्यशेषात्। अनेन सङ्ग्रहवाक्यगतो भूतशब्दो नामादिपरतया व्याख्यातो भवति। अनन्तरं च 'प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामानि आप्नोति' इत्यादिना 'प्रज्ञयैव धियं समारुह्य प्रज्ञयैव धियो विज्ञातव्यं कामान् आप्नोति' इत्यन्तेन शुद्धस्य साक्षिणः प्रज्ञाशब्दोदितविशिष्टजीवद्वारा वागादिबुद्ध्यन्तकरण[1]-

---

1. मु. करणसमारोहण

**परस्तात्प्रतिविहिता भूतमात्रा' 'प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति' इत्यादिः प्रज्ञाधर्मः। 'ता वा एता दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अधिभूतम्, यद्धि भूतमात्रा न स्युः न प्रज्ञामात्राः स्युः, यद्धि प्रज्ञामात्रा न स्युः न भूतमात्राः स्युः, नह्यन्यतरतो रूपं किंचन सिद्ध्येत्, नो एतन्नाना, 'तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष प्राण एव प्रज्ञात्मा' इत्यादिर्ब्रह्मधर्मः। तस्मात् ब्रह्मण**

---

जातसमारोहणपूर्वकं नामादिविज्ञातव्यकामान्तभूतमात्रावाप्तिः अध्यासरूपा निरूपिता। तत्र आदिमपर्यायं दर्शयति—**प्रज्ञयेति**। आदिशब्देन अवशिष्टा दोहनप्रतिविधान[1]समारोहणाप्तिपर्याया गृह्यन्ते। अनन्तरं च 'न हि प्रज्ञापेता वाक् नाम किंचन प्रज्ञापयेत् अन्यत्र मे मनोऽभूदित्याह नाहमेतन्नाम प्राज्ञासिषं' इत्यादिना 'न हि प्रज्ञापेता धीः काचन सिद्ध्येत् न प्रज्ञातव्यं प्रज्ञापयेत' इत्यन्तेन पर्यायदशकेन, प्रज्ञामनश्शब्दोदितस्य जीवस्य व्यासङ्गे सति कस्यापि सिद्धिर्नास्तीत्युक्त्या, यः पूर्वं वागादिभिः प्रज्ञादोह उक्तः स दृढीकृतः। तथा च दोहनप्रतिविधानव्यासङ्गपर्यायैः भूतानां प्रज्ञासम्बन्धो दृढीकृतः। समारोहणाप्तिपर्यायैः सङ्ग्रहवाक्योक्तैकत्वोपयोगितया विशुद्धचैतन्ये भूतानामध्यासो निरूपितः। अनन्तरं च 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इत्यादिना 'न मनो विजिज्ञासीत मन्तारं विद्यात्' इत्यन्तेन पर्यायदशकेन वागादिविनिर्मुक्तस्य विशुद्धजीवस्वरूपस्यैव विज्ञेयत्वं निरूपितम्। एतावत्पर्यन्तं जीवनिरूपणम्। **ता वा एता दशैव भूतमात्रा इति**। वागाद्यवच्छिन्नानां प्रज्ञामात्राणां अभावे भूतमात्रासिद्धिः न भवति, मानाधीनत्वात् मेयसिद्धेः। भूतमात्राणां च अभावे वागाद्यवच्छिन्नानां प्रज्ञामात्राणां सिद्धिर्नास्ति, नामादिज्ञानानुमेयत्वात्। अतः परस्पराश्रयग्रस्ततया द्वैतजातं नानाभूतं किमपि नास्तीति सर्वाधिष्ठानभूतः प्राणशब्दोदितः परमात्मैव आनन्दामृतात्मको विज्ञेय इत्यर्थः।

नन्वत्र प्राणोऽस्मिप्रज्ञात्मेत्यादि प्राणोपासनाविधायकं वाक्यं दर्शितम्। अथयथास्यैप्रज्ञायैसर्वाणिभूतान्येकंभवन्तीत्यादि जीववाक्यम्। तावाएताइत्यादि

---

1. मु. समारोहणपर्याया

**एवैतत् उपाधिद्वयधर्मेण स्वधर्मेण च एकमुपासनं त्रिविधं विवक्षितम्। अन्यत्रापि 'मनोमयः प्राणशरीरः' (छा. उ. ३।१४।२) इत्यादौ**

---

ब्रह्मवाक्यम् । तैश्च त्रिभिर्वाक्यैः प्राणजीवब्रह्मविषयाणि त्रीण्युपासनानि प्रतिपाद्यन्ते। न च - त्रीण्युपासनानीति कथम्? प्राणविषयकं ह्यायुरादिगुणकं [1]प्राणोऽस्मीति वाक्येन एकमुपासनम् । तस्मादेतदेवोक्थमुपासीतेति उक्थत्वगुणकमपरमुपासनम्[2] । जीवविषयकन्तु न वाचंविजिज्ञासीतेत्यादिभिर्वाक्यैः उपासनादशकं प्राप्नोति । ब्रह्मविषयकन्तु समआत्मेतिविद्यादिति एकमुपासनम् । ततश्च त्रिभ्योऽप्यधिकानि प्राप्नुवन्ति - इति वाच्यम् । प्राणोऽस्मिप्रज्ञात्मेति हि वाक्यं आयुरमृतत्वगुणविशिष्टं प्राणोपासनं प्रज्ञात्वगुणविशिष्टं च जीवोपासनं विधत्त इति उपासनाद्वयपरमेतद्वाक्यमिति प्रागेवोक्तम्। तत्र च प्राणे उक्थत्वगुणविधायकं एतदेवोक्थमुपासीतेतिवाक्यम् । वक्तारंविद्यादित्यादीनि तु वाक्यानि प्रज्ञोपासनायां वक्तृत्वादिगुणविधायकानि। तथा च उपासनावादिमते स्वधर्मविशिष्टजीवप्राणविषयकमुपासनाद्वयं, स्वधर्मविशिष्टब्रह्मोपासनं समआत्मेतिविद्यादितिवाक्यविधेयमेकं, इति त्रीण्युपासनानि प्राप्नुवन्ति, न तु जीवप्राणधर्मविशिष्टं स्वधर्मविशिष्टं च ब्रह्मविषयकमेकमेवोपासनं प्राप्नोतीति कथं अवाक्यभेदः—इति चेत्—

उच्यते—प्राणोऽस्मीतिवाक्ये जीवमुख्यप्राणस्वधर्मविशिष्टमुपासनं विधीयते। तत्र - मामिति प्रज्ञात्मेति च जीवविशेषेन्द्रजीवसामान्यविशिष्टं, प्राण इति प्राणविशिष्टं, अमृतमिति स्वधर्मविशिष्टम्। ततश्च इन्द्रधर्माणां त्वाष्ट्रवधादीनां जीवसामान्यधर्माणां वक्तृत्वादीनां प्राणधर्माणां आयुरादीनां ब्रह्मधर्माणामानन्दादीनां यथायथं एतद्वाक्यविहितायामेवोपासनायामन्वयः । अतो न उपक्रमोपसंहारावगतैकवाक्यत्वानुपपत्तिः ।

**उपाधिद्वयधर्मेणेति** । यद्यपि इन्द्रः जीवसामान्यं प्राणश्चेत्युपाधित्रयमस्ति, तथापि इन्द्रमपि जीवत्वेनैकीकृत्य उपाधिद्वयेत्युक्तम्। [3]आश्रितत्वादित्यादिसूत्रांशं अस्मिन् मते योजयति—**अन्यत्रापीत्यादिना** ।

---

1. मु. प्राणोऽस्मीत्यादिवाक्येन 2. मु. उपासनमिति
3. मु. आश्रितत्वादितिसूत्रांशं

**उपाधिधर्मेण ब्रह्मण उपासनमाश्रितम्, इहापि तद्युज्यते। वाक्यस्योपक्रमोपसंहाराभ्यामेकार्थत्वावगमात् प्राणप्रज्ञाब्रह्मलिङ्गावगमाच्च।**

---

अयं पक्षो नातीव साधुः। प्राणोऽस्मीति वाक्ये स्वधर्मविशिष्टोपासनलाभायोगात्। अमृतमिति नास्मिन्वाक्ये ब्रह्मणः [1]स्वधर्मेण निर्देशः सम्भवति। 'प्राणो वा अमृतं' 'प्राणेन ह्येवामुष्मिन् लोके अमृतत्वमाप्नोति' इति प्राणधर्मत्वेन तस्य निरूपणात्, प्राणस्यापि मृत्यभावप्रयोजकतया अमृतत्वसम्भवाच्च। 'यावद्ध्यस्मिञ्छरीरे प्राणो वसति तावदायुः' इत्यादिसन्निहितवाक्यानुरोधेन प्राणधर्मस्यैवामृतत्वस्य प्रकृते ग्रहीतुमुचितत्वाच्च। अतः स्वधर्मविशिष्टं ब्रह्मोपासनं 'स म आत्मेति विद्यात्' इत्यत्रैव विधेयम्। तथा च कथं अवाक्यभेदः। न च 'स म आत्मेति विद्यात्' इतिवाक्योपदिष्टायामेवोपासनायां प्राणोऽस्मीतिवाक्यं गुणविधायकमस्त्विति वाच्यम्। तत्र अनेकगुणश्रवणेन [2]उपासनान्तरविधिपरत्वावश्यम्भावात्। न च इदमेवौपसंहारिकं ब्रह्मवाक्यं प्राणोऽस्मीति वाक्यविहितायामुपासनायां गुणविधायकम्। अत्राप्यनेकगुणश्रवणेन उपासनान्तरविधिपरत्वावश्यम्भावात्, प्राणोऽस्मीतिवाक्ये ब्रह्मप्रतिपादकपदाभावेन प्राणादिपदानां ब्रह्मपरत्वाप्रसक्त्या प्राणाद्यन्वितायामुपासनायां औपसंहारिकाणां ब्रह्मधर्माणां अनन्वयाच्च।

ननु [3]उपक्रमोपसंहारावगतैकवाक्यतानुरोधेन ब्रह्मोपासनमेकमेव प्रधानमस्तु, तदङ्गतया [4]प्राणाद्युपासनविधानमस्तु। दृश्यते हि उपकोसलविद्यायां अग्न्याद्युपासनानां अङ्गतया विधीयमानानां उपक्रमोपसंहारावगतैकवाक्यताविरोधित्वाभावः। यदि तु — [5]सविशेषब्रह्मविषयायामुपकोसलविद्यायां अग्न्याद्युपासनानामुपकारकता सम्भवति, सविशेषविद्यायां परमापूर्वस्य सम्भवात्। इह तु निर्विशेषं

---

1. मु॰ स्वधर्मनिर्देशः

2. **उपासनान्तरविधीति** 'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः' इति न्यायात् इति भावः।

3. **उपक्रमोपसंहारावगतेति** उपक्रमोपसंहारैकरूप्यावगतेत्यर्थः। एवमुत्तरत्रापि।

4. मु॰ प्राणोपासन    5. मु॰ सविशेषब्रह्मविद्यायां

ब्रह्म उपक्रमोपसंहारस्वारस्यादवगम्यते, उपक्रान्तस्य हिततमत्वस्य प्रश्नप्रतिवचनलिङ्गानुसारेण प्रतिपिपादयिषितस्य निरतिशयानन्दब्रह्मस्वरूपतत्साक्षात्काराभ्यां विना अन्यत्रासम्भवात्। सविशेषब्रह्मतत्साक्षात्कारौ हि न [1]निरङ्कुशहिततमत्वेन निरूपयितुं शक्यौ। 'अथ यत्रान्यत्पश्यत्यन्यच्छृणोति अन्यद्विजानाति तदल्पं नाल्पे सुखमस्ति' [2]इत्यादिनिन्दादर्शनात्। अतः उपक्रमस्तावत् निर्विशेषविषयोऽवगम्यते। उपसंहारोऽपि अन्योन्याश्रयप्रदर्शनपूर्वकं 'नो एतन्नाना' इति सर्वद्वैतजालनिषेधप्रतिपादनात् निर्विशेषविषय एव प्रतिष्ठितो भवति। एवं उपक्रमोपसंहारैकरूप्येण निर्विशेषविद्यात्वे अवधृते तस्यां दृष्टविधया मोक्षसम्पादिकायां परमापूर्वस्याभावात् कथमङ्गोपासनाविधानं—इत्युच्येत, तर्हि भूमविद्यायां निर्विशेषविषयायामेव यथा प्रसङ्गात् नामाद्युपासनं विधीयते, एवं प्रकृतेऽपि प्राणाद्युपासनाविधिरस्तु। तथा च 'प्राणोऽस्मि प्रज्ञात्मा' इति वाक्यगतयोः प्राणप्रज्ञात्मशब्दयोर्यथाश्रुतार्थत्वे विरोधाभावात् किमर्थं प्रथमसूत्रेण प्राणशब्दस्य ब्रह्मपरत्वं प्रसाधितं इति चेत् —

उच्यते - भूमविद्यायां हि नामाद्युपासनोपयोगिफलश्रवणात् अवान्तरवाक्यभेदमालम्ब्य प्रसङ्गात् नामाद्युपासनाविधिराश्रितः। इह तु यद्यपि 'प्राणेन ह्येवामुष्मिन् लोके अमृतत्वमाप्नोति प्रज्ञया सत्यसङ्कल्पं' इति फलमवगम्यते प्राणप्रज्ञाशब्दार्थसम्बन्धित्वेन, तथापि तस्य मोक्षरूपस्य न प्राणाद्युपासनयोगित्वं सम्भवति। अतः स्वोचितफलाश्रवणात् [3]आध्यानाधिकरणन्यायेन ब्रह्मप्रतिपत्तिपर्यवसितत्वमेव स्वीकर्तव्यम्, न तु उपासनापरत्वम्। ततश्च यथा उपक्रमे मामितिपदं यथा च उपसंहारगतं सएषप्राणएवप्रज्ञात्मेत्यादिकं [4]सर्वात्मत्वाभिप्रायं, तथा प्राणोऽस्मीति वाक्यमपि उत्तमपुरुषप्राणादिसङ्कीर्तनेनोपक्रमोपसंहारैकार्थ्यप्रत्यभिज्ञानात् सर्वात्मत्वाभिप्रायमित्येव वक्तव्यम्।

---

1. आ. निरङ्कुशं 2. मु. इति निन्दा।

3. **आध्यानाधिकरणन्यायेनेति** अवान्तरवाक्यानां प्रयोजनवदेकवाक्यतायां सम्भविन्यां वाक्यभेदप्रयोजनकल्पने न युक्ते, कल्पनागौरवात्—इति न्यायेन।

4. **सर्वात्मत्वाभिप्रायमिति** हिततमत्वानन्दत्वादिभिर्लिङ्गैः ब्रह्मपरत्वेन निश्चिते उपक्रमे उपसंहारे च, ब्रह्मणि मामिति प्राणइति च सर्वात्मत्वाभिप्रायं इति भावः।

तस्मात् ब्रह्मवाक्यमेतदिति सिद्धम् ॥ ३१ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पादशिष्य-
श्रीमच्छङ्करभगवत्कृतौ श्रीमच्छारीरकमीमांसाभाष्ये
प्रथमाध्यायस्य प्रथमः पादः

---

उपास्वेत्येतत्तु, यथा निर्विशेषप्रकरणे 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादयः तत्साक्षात्कारे उपायविधयः, तथा [1]प्राण-प्रज्ञात्मोपलक्षितचैतन्यमात्रगोचरतत्साक्षात्कारोपाय[2]ध्यानविधिर्भविष्यति ।

अथवा 'गोसदृशं गवयं विद्धि' 'आत्मानं रथिनं विद्धि' इत्यादिलौकिक-वैदिकप्रयोगवत् इहापि प्रत्ययः अभिमुखीकरणार्थः । उपास्वेत्यत्र प्रकृतिस्तु निरतिशयानन्दात्मनो ब्रह्मणः स्वतस्सुन्दरतया विदुषामर्थप्राप्तज्ञानधारानुवादिनी भविष्यतीति वाक्यस्य निर्विशेषवस्तुपरत्वं सिद्धम् ॥

इति प्रतर्दनाधिकरणम् ॥ ११ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्ब्रह्मानन्दसरस्वतीचरणानुग्रह-
लब्धसारस्वतपदस्य[3] निरतिशयौदासीन्यादिगुणरत्नखचितयति-
कुलोत्तंसश्रीमद्रामानन्दतीर्थमुखारविन्दनिर्गतशारीरक-
सूत्रभाष्यार्थस्वर्धुनीप्रवाहनिमज्जनसुहितस्य[4]
श्रीमदद्वैतानन्दस्य कृतौ
शारीरकभाष्यव्याख्यायां
ब्रह्मविद्याभरणाख्यायां
प्रथमाध्यायस्य
प्रथमः पादः

ॐ

---

1. आ. प्राणादिपदोपलक्षित
2. मु. 'ध्यान' नास्ति
3. सारस्वतपदं—तुर्याश्रमः ।
4. सुहितस्य—तृप्तस्य ।

ओम्

## प्रथमाध्याये द्वितीयः पादः

### १ सर्वत्रप्रसिद्धाधिकरणम्

**प्रथमे पादे 'जन्माद्यस्य यतः' इति आकाशादेः समस्तस्य जगतो जन्मादिकारणं ब्रह्मेत्युक्तम्। तस्य समस्तजगत्कारणस्य ब्रह्मणो**

---

ॐ

मुग्धं मामनुगृह्य यः करुणया तुर्योङ्कृतिप्रस्फुर-
द्भासां वेदवतीं विकल्पगलितां विद्यां ददौ चिन्मयीम्।
[1]भूमानन्दपदस्थितो गुरुरसौ पूज्याधिपूज्यः सदा
चेतो मे कुरुतादलंकृतमतिस्वच्छैः स्वपादाम्बुजैः[2] ॥

वृत्तं सङ्कीर्तयन् पादयोः पूर्वापरभावोपयोगितया तदर्थं दर्शयति—**प्रथमे पाद इत्यादिना।** जिज्ञासासूत्रस्योपोद्घातप्रवृत्ततया जन्मादिसूत्रग्रहणेनैव तदपि गृहीतं भवति।

'वेदान्तानां निर्विशेषब्रह्मपरता नास्ति' इत्याक्षेपे, जगज्जन्मादिकारणत्वतदुपयोगिगुणप्रतिपादकानां सर्वेषां निर्विशेषे ब्रह्मण्येव पर्यवसानं इतिप्रतिपत्त्युपयोगिन्यायजातं पूर्वपादप्रतिपाद्यम्। अन्तस्तद्धर्मोपदेशात् [3]इत्यादिविचारस्तु तदपवादसङ्गत्या कृतः। आनन्दमयविचारः प्रतर्दनविचारश्च तदपवादसङ्गत्या कृतः।

---

1. **भूमानन्दपदस्थितः**—भूमानन्दः—परंब्रह्म, तदेव पदं-प्राप्यं, तत्र स्थितः-तन्निष्ठः, भूमानन्देतिपदे वाचकतासम्बन्धेन स्थितः - भूमानन्दपदवाच्यः इति च अर्थः।

2. **पादाम्बुजैः**—पादाम्बुजनिक्षेपैः। तेन बहुवचनोपपत्तिः।

3. **इत्यादीति** आदिपदेन आकाशप्राणज्योतिर्विचारो गृह्यते।

**व्यापित्वं नित्यत्वं सर्वज्ञत्वं सर्वशक्तित्वं सर्वात्मत्वं इत्येवंजातीयका धर्मा उक्ता एव भवन्ति। अर्थान्तरप्रसिद्धानां च केषांचिच्छब्दानां ब्रह्मविषयत्वहेतुप्रतिपादनेन कानिचिद्वाक्यानि स्पष्टब्रह्मलिङ्गानि सन्दिह्यमानानि ब्रह्मपरतया निर्णीतानि। पुनरप्यन्यानि वाक्यानि अस्पष्ट-**

---

तदाह—**अर्थान्तरप्रसिद्धानामिति।** आकाशप्राणज्योतिर्गायत्रीपदानाम्। प्रतिपादनेन ब्रह्मपरतया निर्णीतानि इत्यन्वयः।

अस्मिंस्तु पादे यत् पूर्वं जगज्जन्मादिकारणत्वं तदुपयोगिसर्वज्ञत्वादिकं च निरूपितं ब्रह्मणि ताटस्थ्येन, तत् सिद्धवत्कृत्य, जीवादिपरतया सन्दिह्यमानानि कानिचिद्वाक्यानि ब्रह्मपरत्वेन निर्णीयन्ते।

तथा च पूर्वपादप्रतिपादितैः सर्वज्ञत्वजगत्कारणत्वादिभिः इह सिद्धान्तकरणात् उपजीव्योपजीवकभावापन्नयोः प्रथमद्वितीयपादयोः पूर्वापरभावः सङ्गतिश्च।

ननु यदि सर्वज्ञत्वादिलिङ्गेन केषाञ्चित् प्रातिस्विकवेषेण ब्रह्मपरत्वव्यवस्थापनं एतत्पादार्थः तर्ह्याकाशाद्यधिकरणमप्यत्रैव कर्तव्यं स्यात् - इत्याशंक्याह —**अस्पष्टब्रह्मलिङ्गानीति।** लिङ्गानामस्पष्टता च [1]जीवादिविषयकत्वसम्भाव्यमानस्वारस्यकलिङ्गाभिभूतत्वम्। अन्तस्तद्धर्माधिकरणे यद्यपि जीवलिङ्गतया [2]शरीरित्वादिकमाशङ्कितं, तथापि तत्स्वारस्यं [3]ब्रह्मविषयत्वेऽपि न हीयते। आकाशप्रस्ताववाक्ययोश्च न लिङ्गेन पूर्वपक्षः, अपि तु श्रुत्या। ततश्च ब्रह्मविषयकलिङ्गानां अन्यगोचरश्रुत्यभिभूतत्वेऽपि न लिङ्गाभिभूतता। प्रतर्दनवाक्ये तु उपक्रमोपसंहारावधृतवाक्यप्राबल्येनैव [4]निर्णयः न तु लिङ्गप्राबल्येन। ज्योतिर्वाक्येऽपि यच्छ्रुतिबलादेव निर्णयः। द्युसम्बन्धित्वं तु अस्पष्टं ब्रह्मलिङ्गं तदुपोद्बलकमेव। अतः अस्पष्टब्रह्मलिङ्गैर्ब्रह्मपरत्वनिरूपणपरे पादे न तेषां सङ्गति-

---

1. **जीवादिविषयकत्वेत्यादि** यानि लिङ्गानि 'जीवादिविषयकत्वे स्वरसानि' इति सम्भाव्यन्ते तादृशलिङ्गैः अभिभूतत्वं-प्रतिबद्धस्वसामर्थ्यकत्वम्, उक्तसम्भावनानिरासे प्रतिबन्धनिरासः इति भावः। आ. जीवादिविषयकसम्भाव्यमान

2. मु. शरीरित्वमाशङ्कितम्　　　　3. आ. ब्रह्मपरत्वेऽपि

4. मु. निर्णयः कृतः

ब्रह्मलिङ्गानि सन्दिह्यन्ते—किं परं ब्रह्म प्रतिपादयन्ति आहोस्वित् अर्थान्तरं किंचिदिति। तन्निर्णयाय द्वितीयतृतीयौ पादौ आरभ्येते—

## सर्वत्रप्रसिद्धोपदेशात् ॥ १ ॥

इदमाम्नायते—'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत, अथ खलु क्रतुमयः पुरुषः यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति, स क्रतुं कुर्वीत-मनोमयः प्राणशरीरो भारूपः' (छा. ३।१४। १,२) इत्यादि। तत्र संशयः—किमिह मनोमयत्वादिभिर्धर्मैः शारीर आत्मा उपास्यत्वेनोपदिश्यते आहोस्वित् परं ब्रह्मेति। किं तावत् प्राप्तम्। शारीर इति। कुतः, तस्य हि कार्यकरणाधिपतेः प्रसिद्धो मनआदिभिः संबन्धः न परस्य ब्रह्मणः, 'अप्राणो ह्यमनाः शुभ्रः' (मु. उ. २।१।२) इत्यादिश्रुतिभ्यः।

---

रिति भावः। द्वितीयतृतीयपादयोस्तु यद्यप्यस्पष्टब्रह्मलिङ्गत्वमविशिष्टं, तथाऽपि सविशेषप्रायत्वं द्वितीयस्य निर्विशेषप्रायत्वं तृतीयस्येति [1]भेदः।

**भारूप इत्यादीति।** आदिपदेन 'सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षात् ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्माऽन्तर्हृदये एतत् ब्रह्म एतमितःप्रेत्याभिसम्भविताऽस्मीति यस्य स्यादद्धा न विचिकित्साऽस्ति' इत्यन्तं संगृह्यते।

**तस्य हि कार्यकरणाधिपतेरित्यादि।** ननु - मनोमयत्वं प्राणशरीरत्वं च जीवेऽपि [2]न सम्यगवकल्पते। न हि जीवो मनोविकारः। न च प्राणो

---

1. आ. भावः

2. **न सम्यगवकल्पत इति** छान्दोग्यभाष्योक्तयोरपि जीवस्य मनःप्रचुरत्वप्राणशरीरत्वयोः औपचारिकतया न सम्यगवक्लृप्तिः इति भावः।

**ननु—'सर्वं खल्विदं ब्रह्म' इति स्वशब्देनैव ब्रह्म उपात्तं, कथमिह शारीर आत्मा उपास्य आशङ्क्यते?**

**नैष दोषः—नेदं वाक्यं ब्रह्मोपासनाविधिपरं, किं तर्हि, शमविधिपरम्। यत्कारणं 'सर्वंखल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इत्याह।**

---

जीवस्य शरीरम्। यदि तु यथाश्रुतार्थानुपपत्तेः मनस्सम्बन्धित्वं प्राणसम्बन्धित्वं च ताभ्यां पदाभ्यां विवक्षितं, तर्हि ब्रह्मण्यपि नानुपपत्तिः। कार्यकारणभावसम्बन्धस्य मनःप्राणाभ्यां ब्रह्मणोऽपि सम्भवात्। न चैवं 'अप्राणः' इत्यादिश्रुतिविरोधः, तस्या उपकरणोपकरणिभावनिषेधपरत्वात् - इति चेत्—

उच्यते—यथा हि 'धनवानयं, चित्रगुरयं' इत्यादौ धनगोपदोपस्थापितस्यार्थस्य स्वत्वेन प्रसिद्धत्वात् स्वस्वामिभावसम्बन्ध एव शीघ्रमुपस्थितो भवति, 'नायं धनवान्, नायं चित्रगुः' इति [1]निषेधोऽपि [2]स्वस्वामिभावविषयक एव भवति, प्रतियोगितावच्छेदकतया स्वस्वामिभावस्यैव शीघ्रोपस्थितत्वात्; तथा मनःप्राणयोः भोगोपकरणत्वेन प्रसिद्धतया उपकरणोपकरणिभाव एव सम्बन्धः शीघ्रमुपस्थितो भवतीति मनोमयप्राणशरीरपदयोः जीवे एव स्वारस्यं, न ब्रह्मणि।

**नेदं वाक्यं ब्रह्मोपासनाविधिपरं, किं तर्हि शमविधिपरमिति।** ननु—नेदं वाक्यं शमविधिपरम्। 'तपश्श्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्तः, सूर्यद्वारेण ते विरजाः प्रयान्ति' [मु. उ. १-२-११] इत्यादिभिर्वाक्यैः ब्रह्मोपासनायां शमस्य प्राप्तत्वात्। कथमन्यथा अन्यासु

---

1. **निषेधः**—उक्तवाक्यजन्यः भेदरूपाभावस्य बोधः।

2. **स्वस्वामिभावविषयकः**—प्रतियोगितावच्छेदकधर्मविषया स्वस्वामिभावविषयकः। 'नायंधनवान्' इत्यादिवाक्यजन्यबोधे हि मतुबर्थप्रतियोगिकभेदो भासते। मतुबर्थश्च सम्बन्धी। सम्बन्धश्च प्रकृते प्रथमोपस्थितः स्वस्वामिभावः। स च प्रतियोगितावच्छेदको धर्मः। स्वस्वामिभावो नाम कश्चन अखण्डः सम्बन्धः स्वस्वामिनोः। अथवा स्वत्वं स्वामित्वं च यथायोगं पृथक् सम्बन्धः। प्रकृते च स्वामित्वम्। 'स्वस्वामिभावविषयकः' इत्यत्र स्वपदार्थः प्रकृते परिचायकमात्रम्।

ब्रह्मविद्यासु शमादिप्राप्तिःस्यात्। तस्मात् इदमेव वाक्यं उपासनाविधायकमस्तु क्रतुवाक्यविहितायामुपासनायां [1]ब्रह्मगुणविधायकं वा अस्तु। अत एव अग्निरहस्ये[2] शाण्डिल्यविद्योपक्रमे 'सत्यं ब्रह्मेत्युपासीत' [श. ब्रा. १०-६-३] इत्येव श्रूयते, न तु शमोऽपि। अतः कथं मनोमयत्वादिविशिष्टो जीवः-इति चेत्-

उच्यते—सक्रतुंकुर्वीतेत्यस्य हि वाक्यस्य उपासनाविधिपरत्वमवश्यं वक्तव्यम्। तत्र हि मनोमयत्वादयो बहवो गुणाः श्रूयन्ते। न च प्राप्तकर्मानुवादेनानेकगुणविधिस्सम्भवति। तत्र च मनोयत्वादिगुणस्वारस्येन जीव एव उपास्यः। न च तत्रापि 'एतद्ब्रह्म' इति ब्रह्मपदमस्तीति कथं जीव एवोपास्यो भवेदिति वाच्यम्। उपक्रमश्रुत[3]मनोमयादिपदस्वारस्येन ब्रह्मपदस्य जीवविषयत्वकल्पनात्। जीवेऽपि हि 'इदं ब्रह्मायाति, इदमागच्छति' इति [बृ. उ. ४-४-३] ब्रह्मपदप्रयोगो दृश्यते। तथा च क्रतुवाक्येनैव उपासनायाः सिद्धत्वात् सर्वंखल्विितिवाक्यं न उपासनाविधिपरम्। नापि प्राप्तकर्मानुवादेन ब्रह्मरूपोपास्यगुणसमर्पकम्। उत्पत्तिशिष्टजीवावरुद्धायामुपासनायां तद्विरुद्धस्योपास्यान्तरस्यान्वयासम्भवात्। तस्मात् इदं वाक्यं यद्यपि प्राप्तत्वात् शमविधिपरं न भवति, तथापि शमे एव उपायान्तरनियमपरम्। शमो हि रागद्वेषादिविषयेषु दोषगुणानुसन्धानेनापि सम्पादयितुं शक्यः। तदा सर्वत्र ब्रह्मानुसन्धानं तदुपायभूतं पाक्षिकत्वात् कदाचित् न भवेत्। अतः प्रकृतोपासनायां शमोपायनियमोऽयम्। अग्निरहस्यगतं तु [4]वाक्यं 'स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपं' इत्याद्युत्तरवाक्यविधेयायां एतस्यामेव उपासनायां सत्यत्वगुणविधायकम्। ब्रह्मपदं तु जीवपरमेव।

---

1. **ब्रह्मगुणेति**—ब्रह्मरूपगुणेत्यर्थः। उपासनोद्देशेन उपास्यस्य विषयत्वेन विधेयत्वात् गुणत्वम्।

2. **अग्निरहस्ये इति**—शतपथब्राह्मणे दशमकाण्डस्य अग्निरहस्यं इति संज्ञा। **अग्निः**—चित्यः, प्रजापतिः, हिरण्यगर्भश्च, तस्य रहस्यं-उपासनम्। उपनिषत्पदप्रतिपाद्यत्वात्। मानसत्वाच्च। प्राधान्येन तत्प्रतिपादके ग्रन्थे तत्त्वोपचारः। तत्रैव हि वैश्वानरशाण्डिल्यविद्ये उक्ते।

3. मु. मनोमयपदादि

4. **वाक्यम्**—सत्यंब्रह्मेत्युपासीत-इतिवाक्यम्।

**एतदुक्तं भवति—यस्मात् सर्वमिदं विकारजातं ब्रह्मैव, तज्जत्वात्तल्लत्वात्तद्-नत्वाच्च, न च सर्वस्यैकात्मत्वे रागादयः संभवन्ति, तस्माच्छान्त उपासीतेति। न च शमविधिपरत्वे सति अनेन वाक्येन ब्रह्मोपासनं नियन्तुं शक्यते। उपासनं तु 'स क्रतुं कुर्वीत' इत्यनेन विधीयते।**

---

यदि तु - मनोमयादिवाक्येऽपि न अनेकगुणविधानश्रवणमस्ति। 'मनोमयः प्राणशरीरः' इत्यादिप्रथमान्तपदानां हि न क्रतुंकुर्वीतेत्यनेनान्वयः। तथा सति षष्ठ्यन्ततया विपरिणामापत्तेः। 'कस्य क्रतुं' इति हि तत्रापेक्षा। किन्तु 'इति यस्य स्यादद्धा न विचिकित्साऽस्ति' इत्यत्रत्येन इतिपदेनान्वयः। तथा चायमर्थः- 'एतमितःप्रेत्याभिसम्भवितास्मि' इत्यन्तः प्रकारो यस्य निश्चितः स्याच्छ्रवणादि-साधनैः, स क्रतुं कुर्वीत - इति। तथा च प्रकृतोपासनायां उक्तप्रकारेण-श्रवणादिमतोऽधिकारबोधनात् तस्य प्रकारस्य उपासनान्वय आर्थिकः - इत्युच्यते,

तथाऽपि उपासनोपयोगिनो विचारस्य अर्थसिद्धतया प्राप्ताप्राप्तविवेकेन मनोमयादिगुणेष्वेव [1]वाक्यस्य तात्पर्यमिति अनेकगुणतात्पर्यकत्वप्रयुक्तवाक्यभेद-परिहाराय अत्रैव उपासनाविधिराश्रयणीयः। अग्निरहस्ये च 'स आत्मानमुपासीत मनोमयं प्राणशरीरं' इति मनोमयत्वादिकं द्वितीयान्तपदोपात्तं उपासीतेत्यत्रैवान्वेतीति अनेकगुणविधानप्रयुक्तवाक्यभेदपरिहाराय 'स आत्मानमुपासीत' इत्यत्रैव विधिरा-श्रयणीयः। तदैकरूप्याय छान्दोग्येऽपि 'स क्रतुं कुर्वीत' इत्यत्रैव उपासना-विधिरस्तु। तथा च सर्वंखल्विति वाक्यं प्राप्तोपासनानुवादेन शमोपायतया सर्वात्मत्वानुसन्धानपरमेव।

तदाह—**एतदुक्तं भवतीति**। तज्जलानित्यस्यार्थमाह—**तज्जत्वादिति**। जायत इति जम्। लीयत इति लम्। 'अन्येभ्योऽपि दृश्यते' [पा. सू. वा. ३-२-१०१] [2]इतिविहितडप्रत्ययान्तमिदं पदद्वयम्। अनितीत्यन् क्विप्प्रत्ययान्तम्। जलानिति विशेषणानामपि [3]बहुलग्रहणात् कर्मधारयः, 'तस्मिन् जलान्' इति

---

1. मु. 'वाक्यस्य' नास्ति
2. आ. इतिसूत्रेणविहित। अत्र पाठे 'अन्येष्वपि दृश्यते' इति पठितव्यम्।
3. बहुलग्रहणादिति 'विशेषणं विशेष्येण बहुलम्' इति सूत्रे इत्यादिः।

क्रतुः-संकल्पः, ध्यानमित्यर्थः। तस्य च विषयत्वेन श्रूयते—'मनोमयः प्राणशरीरः' इति जीवलिङ्गम्। अतो ब्रूमो जीवविषयमेतदुपासनमिति। 'सर्वकर्मा सर्वकामः' इत्याद्यपि श्रूयमाणं पर्यायेण जीवविषयमुपपद्यते। 'एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा' इति च हृदयायतनत्वमणीयस्त्वं च आराग्रमात्रस्य जीवस्य अवकल्पते न अपरिच्छिन्नस्य ब्रह्मणः। ननु 'ज्यायान् पृथिव्याः' इत्याद्यपि न परिच्छिन्नेऽवकल्पत इति। अत्र ब्रूमः—न तावदणीयस्त्वं ज्यायस्त्वं चोभयं एकस्मिन् समाश्रयितुं शक्यं, विरोधात्। अन्यतराश्रयणे च प्रथमश्रुतत्वात् अणीयस्त्वं युक्तमाश्रयितुं, ज्यायस्त्वं तु ब्रह्मभावापेक्षया भविष्यतीति। निश्चिते च जीवविषयत्वे यत् अन्ते ब्रह्मसंकीर्तनं 'एतद्ब्रह्म' (छा. उ. ३.१४.४) इति, तदपि प्रकृतपरामर्शार्थत्वात् जीवविषयमेव।

तस्मात् मनोमयत्वादिभिर्धर्मैः जीव उपास्यः—इत्येवं प्राप्ते—

ब्रूमः—परमेव ब्रह्म इह मनोमयत्वादिभिर्धर्मैरुपास्यम्। कुतः, सर्वत्रप्रसिद्धोपदेशात्। यत् सर्वेषु वेदान्तेषु प्रसिद्धं ब्रह्मशब्दस्यालम्बनं जगत्कारणं, इह च 'सर्वं खल्विदं ब्रह्म' इति वाक्योपक्रमे श्रुतं, तदेव मनोमयत्वादिधर्मैर्विशिष्टमुपदिश्यत इति युक्तम्। एवञ्च प्रकृतहानाप्रकृतप्रक्रिये न भविष्यतः।

---

सप्तमीविग्रह इति भावः। **क्रतुस्सङ्कल्प इति।** 'क्रतू अध्वरसङ्कल्पौ' इति निघण्टुः। **पर्यायेणेति।** बहुषु शरीरेषु पुण्यपापानुसारेण क्रमेण गृह्यमाणेषु क्रमेण सर्वकर्मत्वादिकं सम्भविष्यतीत्यर्थः। **ज्यायस्त्वं तु ब्रह्मभावापेक्षयेति।** उपलक्षणमेतत् 'अवाक्यनादरः' इत्यादेः। वाकीशब्दप्रतिपाद्यवागिन्द्रियोपलक्षितसर्वेन्द्रियराहित्यं अवाकित्वं अनादरत्वं विषयेषूत्कर्षप्रयुक्त[1]रागरहितत्वं हि पारमेश्वरमेव।

**एवं च प्रकृतहानाप्रकृतप्रक्रिये न भविष्यत इति।** ननु-नेदं ब्रह्मप्रकरणम्, उपक्रान्तस्य ब्रह्मणः शमविध्युपयुक्ततया प्रधानत्वाभावात्-इति चेत्—

---

1. मु. रागादिरहितत्वं

**ननु-वाक्योपक्रमे शमविधिविवक्षया ब्रह्म निर्दिष्टं न स्वविवक्षया-इत्युक्तम्।**

**अत्रोच्यते—यद्यपि शमविधिविवक्षया ब्रह्म निर्दिष्टं, तथाऽपि**

---

उच्यते—उपक्रमे हि ब्रह्म स्वप्राधान्येनैव निर्दिश्यते, न तु शम-विधिशेषतया। सर्वंखल्विदंब्रह्मेतिवाक्ये हि इदंशब्दो न सर्वपदार्थविशेषणम्, व्यर्थत्वात्। अपि तु ब्रह्मविशेषणम्, तस्य सर्वनामतया प्रकृतपरामर्शित्वा-वश्यम्भावात् गायत्रीवाक्यनिर्दिष्टस्य ब्रह्मण इहानुवृत्तिः सम्पादिता भवतीति। प्रयत्नेन ब्रह्मानुवृत्तिसम्पादनं ब्रह्मप्राधान्यद्योतनाय। तथा च इदंब्रह्मेति इदं-शब्दबलात् ब्रह्मणः प्राधान्येऽवधारिते प्रकरणसिद्धिः। न च - ब्रह्मणः अस्मिन् वाक्ये प्राधान्येऽभ्युपगते तेन सर्वपदार्थविशेषणासम्भवात् सर्वपदार्थो ब्रह्मविशेषणं स्यात्, एवं च ब्रह्मणः [1]सर्वात्मत्वं अधिष्ठानतया प्राप्नोति न तु सर्वस्य ब्रह्मविवर्ततया ब्रह्मात्मकतेति कथमिह 'इति शान्त उपासीत' इतिवाक्यगतेन इतिना सर्वस्य ब्रह्मात्मकत्वं शमं प्रति हेतुतया उपह्रियत इति - वाच्यम्। ब्रह्मणः [2]सर्वात्मत्वप्रतिपत्तौ अर्थात् सर्वस्य ब्रह्मात्मकता सम्पद्यत इति इतिना शमोपयोगि-तया तत्परामर्शोपपत्तेः। प्रयत्नेन च ब्रह्मप्रकरणसम्पादनस्य इदमेव प्रयोजनम् - यत् सक्रतुंकुर्वीतेतिवाक्यविहितायामुपासनायां ब्रह्मण एवोपास्यता - इति।

ननु-न इदंशब्दबलात् ब्रह्मप्रकरणसिद्धिः। यथा हि आत्मैवेदंसर्वमित्या-दिषु वाक्येषु इदंपदं सर्वविशेषणं एवं प्रकृतेऽपि सर्वविशेषणमस्तु। तत्र च यथा इदम्पदेन दृश्यतोपक्षेपद्वारा मिथ्यात्वमुपक्षिप्य सर्वपदार्थस्य विवर्तत्वाभि-प्रायोपहरणेन आत्मनो निर्विकारस्य तत्सामानाधिकरण्यं व्युत्पाद्यते, एवं प्रकृते-ऽप्यस्तु। ऐकरूप्यसम्भवे वैरूप्यकल्पनानुपपत्तेः। तथा च न ब्रह्मप्राधान्य-सिद्धिः—इत्यभिप्रायेण शङ्कते—**ननु वाक्योपक्रमे शमविधिविवक्षयेति।**

परोक्तं[3] प्रौढ्याऽभ्युपगम्य परिहरति—**अत्रोच्यते यद्यपीति।** यद्य-

---

1. मु. सर्वात्मकत्वं    2. मु. सर्वात्मकत्व

3. मु. 'परोक्तं' नास्ति

**मनोमयत्वादिषूपदिश्यमानेषु तदेव ब्रह्म संनिहितं भवति। जीवस्तु न संनिहितो न च स्वशब्देनोपात्तः इति वैषम्यम् ॥ १ ॥**

---

पीत्यस्यायमभिप्रायः—वस्तुतः स्वप्रधानमेव पूर्वोक्तगत्या सर्वंखल्विदितिवाक्ये ब्रह्म। निर्विशेषप्रकरणगतेषु वाक्येषु इदम्पदस्य मिथ्यात्वद्योतकतया सार्थकत्वेऽपि सविशेषप्रकरणे तद्द्योतनस्य निष्प्रयोजनत्वात्, प्रत्युत श्रद्धाविघातकतया विरोधिता। तथा च इदम्पदं प्राधान्यमेव ब्रह्मणो द्योतयति-इति[1]। **ब्रह्म सन्निहितं भवतीति।** प्राणशरीरः इत्यादीनि बहुव्रीहिरूपाणि, बहुव्रीहिश्च विग्रहवाक्यानुसारेण सर्वनामार्थकः। सर्वनाम्नां च प्रकृतपरामर्शकता वक्तव्या। ततश्च [2]अन्यार्थसन्निहितमपि सर्वनामसमानार्थकैः प्राणशरीरादिपदैः परामृश्यते प्रकृतं ब्रह्म। न च मनोमयपदनिर्दिष्टो[3] जीव एव कुतो न परामृश्यते, समासान्तर्गत[4]प्राणादिपदस्वारस्यानुसारेण वा प्रक्रियमाणजीवपरामर्शकता किं न स्यात्—इति वाच्यम्। मनोमयपदं हि न झटिति जीवमुपस्थापयति। अपि तु [5]न्यायानुसन्धानपूर्वकम्। ततश्च स्वशक्त्या शीघ्रोपस्थापकब्रह्मपदनिर्दिष्टब्रह्मपरामर्शकता। बहुव्रीहिपदानां समासान्तर्गतप्राणादिपदोपस्थापितजीवपरामर्शकत्वेऽपि [6]पूर्वोक्तदोषस्तदवस्थः। प्रक्रियमाणपरामर्शकतापत्त्या प्रकृतपरामर्शकता च अस्मिन् पक्षे हीयते। न च अप्रधानसमासान्तर्गतपदार्थानुसारेण प्रधानः समासार्थो बाधितुमुचितः।

---

1. मु. 'इति' नास्ति

2. **अन्यार्थेन्यादि** 'स्योनं ते सदनं कृणोमि.........तस्मिन् सीद' इत्यत्र अन्यार्थसन्निहितस्यापि तदितिसर्वनाम्ना परामर्शदर्शनात् इति भावः।

3. **निर्दिष्टः**—उपस्थापितः। उपस्थापनप्रकारश्च पूर्वपक्षभाष्यव्याख्यानावसरे निरूपितः।

4. **प्राणादिपदस्वारस्येति** 'अथैषज्योतिः' इत्यादौ अथशब्दस्वारस्यानुसारेण एतच्छब्दस्य प्रकरिष्यमाणपरामर्शकत्वदर्शनात् इति भावः। प्राणादीति आदिपदेन शरीरपदपरिग्रहः।

5. **न्यायेति** 'सम्बन्धिबोधकपदानि शीघ्रोपस्थितसम्बन्धमर्थमुपस्थापयन्ति' इतिन्यायेत्यर्थः।

6. **पूर्वोक्तदोषः**—पूर्वोक्तन्यायानुसन्धानपूर्वकमेवजीवोपस्थापकत्वेन उपस्थापने ब्रह्मपदापेक्षया विलम्बरूपो दोषः।

## विवक्षितगुणोपपत्तेश्च ॥ २ ॥

**वक्तुमिष्टाः विवक्षिताः । यद्यपि अपौरुषेये वेदे वक्तुरभावात् न इच्छार्थः संभवति, तथाऽपि उपादानेन फलेन उपचर्यते । लोके ऽपि यत्**

---

ननु - सक्रतुंकुर्वीतेतिवाक्ये सइतिपदं न कर्तृनिर्देशार्थम्, आक्षेपादेव तत्सिद्धेः । तथा च सर्वनामसमानार्थकानां प्राणशरीरादिपदानां जीवपरता-सम्पादनार्थं इत्येव वक्तव्यम् । अतः सन्निहितानन्यार्थतत्पदार्थं जीवं विहाय कथं दूरस्थान्यार्थब्रह्मपरामर्शकता - इति चेत्—

उच्यते - [1]अनन्यार्थं इति तावदसिद्धम् 'यस्य विचिकित्सा नास्ति स क्रतुं कुर्वीत' इति प्रकारेण 'यस्य स्यादद्धा न विचिकित्सास्ति' इतिवाक्य-गतयत्पदार्थप्रतिनिर्देशको हि सइतिशब्दः । अतो ब्रह्मपदमपेक्ष्य सन्निहितत्वमात्र-मवशिष्यते । न एतावता तत्परामर्शकता प्राणशरीरादिपदानां वक्तुमुचिता । सर्वनाम्नां हि न सन्निहितमात्रपरामर्शकता, अपि तु योग्यसन्निहितपरामर्शकता । न च सत्यसङ्कल्पादयो जीवे योग्याः, नापि 'एतद्ब्रह्म' इति ब्रह्मपदम्[2] । न चोपक्रमगतत्वेऽपि मनोमयप्राणशरीरपदद्वयानुसारेण बहूनां सत्यसङ्कल्पादिपदानां अन्यथानयनमुचितम् । ततश्च ब्रह्मश्रुतिसत्यसङ्कल्पत्वाद्यनेकब्रह्मलिङ्गस्वारस्यानुरोधेन शमवाक्यगतब्रह्मपरामर्शकतैव उचितेति भावः ॥ १ ॥

ननु - मनोमयत्वं प्राणशरीरत्वं अणीयस्त्वं इत्येते जीवधर्मा एव । तेषां च ब्रह्मविषयता ब्रह्मणः सर्वात्मतया वक्तव्या । तथा सति सत्यसङ्कल्पत्वादी-नामपि ब्रह्माभेदविवक्षया जीवविषयताऽपि वक्तुं शक्या । दृश्यते हि मैत्रेयीब्राह्मणे जीवमुपक्रम्य ब्रह्मधर्माम्नानम् । तथा च सक्रतुंकुर्वीतेतिवाक्यनिर्दिष्टजीवपरामर्शे न काचिदनुपपत्तिरिति ; तत्राह—विवक्षितगुणोपपत्तेश्च इति ।

**यद्यप्यपौरुषेय इति ।** नन्वपौरुषेयेऽपि वेदे अनादीश्वरविवक्षा सम्भवत्ये-वेति शास्त्रयोनित्वसूत्रे सूचितम् । सत्यं, सा विवक्षा पूर्वपूर्वविवक्षानुसारिणी[3], न

---

1. मु. अनन्यार्थे
2. **ब्रह्मपदमिति** जीवेयोग्यमिति विपरिणतं अनुषज्यते ।
3. मु. °सारिणीति

शब्दाभिहितं उपादेयं भवति तत् विवक्षितमित्युच्यते, यदनुपादेयं तदविवक्षितमिति। तद्वत् वेदेऽप्युपादेयत्वेनाभिहितं विवक्षितं भवति, इतरदविवक्षितम्। उपादानानुपादाने तु वेदवाक्यतात्पर्यातात्पर्याभ्यामवगम्येते। तदिह ये विवक्षिता गुणाः-उपासनायामुपादेयत्वेनोपदिष्टाः सत्यसंकल्पप्रभृतयः ते परस्मिन्ब्रह्मण्युपपद्यन्ते। सत्यसंकल्पत्वं हि

---

लौकिकपुरुषविवक्षावत् स्वतन्त्रा। ततः तदभिप्रायेयं शङ्का। परतन्त्रविवक्षामादाय परिहारे वक्तुं शक्येऽपि प्रकारान्तरेण परिहारमाह—**तथाऽपीति**। यद्धि विवक्षितं तस्य पर्यवसितवाक्यार्थान्वयित्वाख्यमुपादेयत्वमस्तीति गौण्या वृत्त्या तदेवेह विवक्षितपदेन प्रतिपाद्यते। 'अयमर्थ इह पर्यवसितशाब्दबोधविषयः' इत्येतत्तु तात्पर्याख्यवाक्य[1]गतबोधकतारूपशक्तिपर्यालोचनया अवगम्यते। तादृशशक्तिनिर्णयश्च श्रुतिलिङ्गादिभिरुपक्रमादिभिश्चेति।

**ते परस्मिन् ब्रह्मणि उपपद्यन्त इति**। अयं भावः—यथा हि मैत्रेयीब्राह्मणे जीवं प्रस्तुत्य ब्रह्मधर्माम्नानं न तथा इह वक्तुं शक्यम्। निर्विशेषप्रकरणे हि उपात्तजीवेश्वरधर्मोपमर्देन केवलं वस्तुस्वरूपमेव बोध्यमिति न तत्र गुणविवक्षा। इह तु गुणा उपात्ताः[2] स्वरूपेण विवक्षिताः। तत् यत्र स्वरूपोपमर्दं विनैव गुणानामन्वयो भविष्यति तत्परता वाक्यस्योपेयते। जीवे ब्रह्मधर्मान्वयविवक्षायां तु परिच्छिन्नतयाऽवगते तस्मिन् न अपरिच्छिन्नब्रह्मधर्मान्वयः परिच्छेदोपमर्दं विना वक्तुं शक्यते। ब्रह्मणि तु सर्वोपादाने परिच्छिन्नो जीवोऽप्यन्तर्भूत इति समुद्रे तरङ्गधर्माणामिव उपात्तस्वरूपानुपमर्देनैव जीवधर्माणामन्वयः। तथा च अनन्यथासिद्धब्रह्मधर्मानुसारेण जीवधर्मा एव [3]ब्रह्मणि व्याख्येयाः।

ननु-अत्र पूर्वसूत्रे सर्वनामार्थबहुव्रीह्यनुसारेण ब्रह्मनिर्णयो दर्शितः, स ज्योतिरधिकरणेन पुनरुक्तः। अस्मिन् सूत्रे ब्रह्मधर्माणामनन्यथासिद्धत्वमुक्तं, तत् अन्तरादित्यप्रतर्दनाधिकरणाभ्यां गतम्—

---

1. मु. 'गत' नास्ति
2. आ. उपात्तरूपेण
3. आ. 'ब्रह्मणि' नास्ति

सृष्टिस्थितिसंहारेष्वप्रतिबद्धशक्तित्वात् परमात्मन एव अवकल्पते। परमात्मगुणत्वेन च 'य आत्माऽपहतपाप्मा' (छा.उ. ८।७।१) इत्यत्र 'सत्यकामः सत्यसंकल्पः' इति श्रुतम्। आकाशात्मेति च। आकाशवत् आत्मा अस्येत्यर्थः। सर्वगतत्वादिभिर्धर्मैः संभवत्याकाशेन साम्यं ब्रह्मणः। 'ज्यायान् पृथिव्याः' इत्यादिना च एतदेव दर्शयति। यदाऽपि आकाश आत्मा यस्येति व्याख्यायते, तदाऽपि संभवति सर्वजगत्कारणस्य सर्वात्मनो ब्रह्मण आकाशात्मत्वम्। अत एव 'सर्वकर्मा' इत्यादि। एवमिह उपास्यतया विवक्षिता गुणा ब्रह्मण्युपपद्यन्ते।

यत्तूक्तं—'मनोमयः प्राणशरीरः' इति जीवलिङ्गं, न तद्ब्रह्मण्युपपद्यते इति, तदपि ब्रह्मण्युपपद्यत इति ब्रूमः। सर्वात्मत्वाद्धि ब्रह्मणो

---

उच्यते—इह 'सइतिपदेन जीवस्यैव[1] अतिसन्निहिततया [2]न ब्रह्मपरामर्शकता' इत्यधिकाशङ्का[3] 'न सन्निहितमात्रपरामर्शकता सर्वनाम्नः अपि तु योग्यसन्निहितपरामर्शकता' इति विवक्षया परिहर्तव्या। योग्यत्वं च [4]सत्यसङ्कल्पादिगुणपर्यालोचनया ब्रह्मण एवेति [5]पादसङ्गतिरपि। अनन्यथासिद्धत्वं तु ब्रह्मधर्माणां तात्पर्यलिङ्गोपेततया 'अन्तस्तद्धर्मोपदेशात्' इत्यत्र व्युत्पाद्यं, 'प्राणस्तथानुगमात्' इत्यत्र तु [6]व्यावृत्त्यनुवृत्तिभ्यां, 'विवक्षितगुणोपपत्तेश्च' इत्यत्र तु उपमर्दानुपमर्दाभ्यां-

---

1. मु. 'एव' नास्ति

2. **नेति** सर्वनामसमानार्थप्राणशरीरादिबहुव्रीहिसमासपदानां इत्यादिः।

3. मु. शङ्का। सा न हि तन्मात्र

4. मु. सत्यकामादि

5. **पादसङ्गतिरिति** पर्यालोचनया योग्यत्वनिर्णयेन ब्रह्मपरत्वस्य निर्णेतव्यत्वात् झटिति प्रथमोपस्थितैर्जीवलिङ्गैरसञ्जातविरोधिभिः प्रतिबद्धशक्तिकत्वात् अस्पष्टता ब्रह्मलिङ्गानां इति पादसङ्गतिरित्यर्थः।

6. **व्यावृत्त्यनुवृत्तिभ्यामिति**—सर्वकारणस्य ब्रह्मणः सर्वत्रानुवृत्तिः, तत्कार्याणां तु व्यावृत्तिः। कार्याणां लिङ्गानि कारणे ब्रह्मणि योजयितुं शक्यानि, कारणस्य सर्वेषु कार्येष्वनुवृत्तेः, कार्यान्तरेष्वप्यनुवृत्तस्य ब्रह्मणो लिङ्गानि तु कार्येषु न योजयितुं शक्यन्ते, कार्यान्तरव्यावृत्तेः। अतः प्राणादिलिङ्गानां अन्यथासिद्धत्वं ब्रह्मलिङ्गानां अनन्यथासिद्धत्वम्—इत्येवंप्रकारेणेत्यर्थः।

जीवसंबन्धीनि मनोमयत्वादीनि ब्रह्मसंबन्धीनि भवन्ति। तथा च ब्रह्मविषये श्रुतिस्मृती भवतः—

'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी।

त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः' (श्वे. उ. ४।३) इति,

'सर्वतःपाणिपादं तत् सर्वतोऽक्षिशिरोमुखम्।

सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति' (भ. गी. १३।१३) इति च। 'अप्राणो ह्यमनाः शुभ्रः' इति श्रुतिः शुद्धब्रह्मविषया, इयं तु 'मनोमयः प्राणशरीरः' इति सगुणब्रह्मविषयेति विशेषः। अतो विवक्षितगुणोपपत्तेः परमेव ब्रह्म इह उपास्यत्वेनोपदिष्टमिति गम्यते ॥ २ ॥

## अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

पूर्वेण सूत्रेण ब्रह्मणि विवक्षितानां गुणानां उपपत्तिरुक्ता। अनेन तु शारीरे तेषामनुपपत्तिरुच्यते। तुशब्दोऽवधारणार्थः।

---

इत्यनन्यथासिद्धिप्रकारभेदादपुनरुक्तता। त्वं जीर्ण इति। स्थविरस्सन् दण्डमवलम्ब्य त्वमेव गच्छसि ॥ २ ॥

स्यादेतत्—इह समाम्नाताः सत्यसङ्कल्पत्वादयः स्वप्रकरणोपन्यस्ततत्क्रतुन्यायेन जीवप्राप्या एव व्याख्येयाः। ते च ब्रह्मलोकगतेन जीवस्वरूपेण अन्वयिनः। तथा हि-सत्यसङ्कल्पत्वं सङ्कल्पानुसारिभोग्यभोगोपकरणप्राप्तिशालित्वम्[1]। आकाशात्मत्वं दुःखादिलेपरहितत्वम्। एवं सर्वकामत्वादयोऽपि ब्राह्मलौकिकपदार्थकात्स्न्याभिप्राया एव द्रष्टव्याः। ततश्च तत्क्रतुन्यायानुसारेणव्याख्येयानां गुणानां जीवस्वरूपानुपमर्देनैव अन्वयसम्भवात् कथं विवक्षितगुणोपपत्तये ब्रह्मैवेह ग्राह्यम्? इत्यत आह—अनुपपत्तेस्तु न शारीर इति।

तुशब्दोऽवधारणार्थ इति। इह आधिकारिकं ब्रह्मपदं सम्बध्यते।

---

1. मु. शालित्वं इत्येतदनन्तरं, सत्यकामत्वं भोगसमर्थमानसपित्रादिसम्पन्नत्वम्-इत्यधिकं वर्तते। तस्य शाण्डिल्यविद्यायां अभावात् तत् न प्रकृतोपयुक्तम्। सत्यसङ्कल्पत्वस्य सत्यकामत्वाद्विलक्षणत्वनिरूपणार्थं उक्तं स्यात्-इति भाति।

तथा च 'विवक्षितगुणोपपत्तेः ब्रह्मैव ग्राह्यं, न शारीरः विवक्षितगुणानुपपत्तेः' इति सूत्रार्थो दर्शितो भवति। येन हि तत्क्रतुन्यायेन सत्यसङ्कल्पादौ विवक्षाविशेष उपेयते, तेन मनोमयत्वादावपि स [1]उपेय एव। मनोमयत्वं प्राणशरीरत्वं च मनस्सम्बन्धित्वं प्राणसम्बन्धित्वं लाक्षणिकं उपेयत एव इति चेत्, न लौकिकमनः-प्राणसम्बन्धित्वं प्रकृते उपास्यं, तस्य हेयतया फलत्वाभावेन तत्क्रतुन्यायपर्यालोचनया उपास्यत्वानुपपत्तेः। किं तु 'तद्वै दैवं मनो येनानन्द्येव भवति अथो न शोचति। स वै दैवः प्राणो यः सञ्चरंश्चासञ्चरंश्च न व्यथते अथो न रिष्यति' ( बृ. उ. १-५-१९-२० ) इत्यादिवचनसिद्धब्राह्मलौकिकदिव्यमनः-प्राणसम्बन्धित्वमेव वक्तव्यम्। तस्यैव फलतया तत्क्रतुन्यायेन उपास्यत्वात्। दिव्यमनःप्राणसम्बन्धपरत्वे च मनोमयप्राणशरीरशब्दयोः जीव एव स्वारस्यमिति नियन्तुमशक्यम्। 'सत्यात्म प्राणारामं मनआनन्दं' इत्यादिवचनैः [2]सविशेष-ब्रह्मणोऽपि दिव्यमनःप्राणसम्बन्धित्वावगमात्।

नन्वेवमपि, गुणानां जीवब्रह्मसाधारण्ये ब्रह्मैवग्राह्यमित्यत्र किं नियामकमिति चेत्? प्रकृतोपन्यस्ततत्क्रतुन्याय एव। ब्राह्मलौकिकसत्यसङ्कल्पादिविभूतिप्राप्तिर्हि ब्रह्मप्राप्तस्यैवेति दहरपर्यङ्कविद्याम्नातवचनपर्यालोचनया अवगम्यते। दहरविद्यायां हि 'त इमे सत्याः कामा अनृतापिधानाः तेषां सत्यानां सतां अनृतमपिधानं यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन् न लभते सर्वं तत् अत्र गत्वा विन्दते' इति, 'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' [छा. उ. ३-१-२] इति च ब्रह्मप्राप्तस्यैव फलप्राप्तिर्दर्शिता। [3]पर्यङ्कविद्यायामपि 'तमित्थंवित् पादेनैवाग्र आरोहति' इति ब्रह्मपर्यङ्कारोहणं प्रस्तुत्य आम्नायते 'तमाह आपो वै खलु

---

1. आ. उपेयत एव

2. **सविशेषेति**—तैत्तिरीयके 'सत्यात्म' इत्यादिवाक्यं यथा सविशेषब्रह्मपरं तथा तैत्तिरीयकभाष्यव्याख्यायां वनमालायां उपपादितम्।

3. **पर्यङ्केति**—अस्यां विद्यायां प्राणस्य पर्यङ्कत्वेन कल्पनात् लोकप्रसिद्धपर्यङ्कादि-विभूतिवर्णनाच्च पर्यङ्कविद्येति नाम।

ब्रह्मैव उक्तेन न्यायेन मनोमयत्वादिगुणं, न तु शारीरो जीवो मनोमयत्वादिगुणः। यत्कारणं 'सत्यसंकल्पः, आकाशात्मा, अवाकी, अनादरः, ज्यायान्पृथिव्याः' इति चैवञ्जातीयका गुणा न शारीरे आञ्जस्येनोपपद्यन्ते। शारीर इति-शरीरे भव इत्यर्थः। नन्वीश्वरोऽपि शरीरे भवति। सत्यं शरीरे भवति, न तु शरीरे एव भवति, 'ज्यायान् पृथिव्या ज्यायानन्तरिक्षात्' 'आकाशवत्सर्वगतश्च नित्यः' इति च व्यापित्वश्रवणात्। जीवस्तु शरीरे एव भवति, तस्य भोगाधिष्ठानाच्छरीरादन्यत्र वृत्त्यभावात्॥ ३॥

---

मे ह्यसौ अयं ते लोक इति....सा या ब्रह्मणो जितिर्या व्युष्टिः तां जितिं जयते तां व्युष्टिं व्यश्नुते य एवं वेद' [कौ.उ. १-५-६] इति। तथा च, सत्यसङ्कल्पादिविभूतिप्राप्त्युपयोगितया ब्रह्मप्राप्तेरपि वक्तव्यत्वात्, जीवोपासनातो ब्रह्मप्राप्तेः तत्क्रतुन्यायविरोधित्वात्, इह प्रकरणे विशिष्य तत्क्रतुन्यायाम्नानेन पञ्चाग्निविद्यायामिव तत्परित्यागायोगात्, प्रबलेन प्रमाणेन जीवस्य उपास्यत्वानिर्णयाच्च ब्रह्मैवेहोपास्यमिति विनिगमकं द्रष्टव्यम्। अयमर्थो ब्रह्मैवेत्यवधारणेन सूचितः।

अपि च इह तत्क्रतुन्यायेन सत्यसङ्कल्पत्वादयो न सङ्कोचयुक्ता ग्राह्याः। निरङ्कुशानां ब्रह्मासाधारणानां ग्रहणे बाधकाभावात्। तेऽपि हि क्रममुक्तिमादाय उपासकेन प्राप्या एव। अन्यथा 'अवाक्यनादरः' इत्यादयोऽप्युपास्या न स्युः। न हि ते ब्रह्मलोके फलभोगदशायां सम्भवन्ति। सेन्द्रियस्य ब्राह्मलौकिकफलभोगासक्तस्य अवाक्यनादरशब्दोदितनिरिन्द्रियत्वविगतस्पृहत्वबाधात्। न च तेऽनुपास्या एव। तथाकल्पनस्य अनुचितत्वात्, अस्मिन् प्रकरणे केषाञ्चित् त्रिः पाठस्य केषाञ्चित् द्विः पाठस्य च यथाऽम्नानं तत्तत्स्थाने तेन तेन क्रमेण आवृत्त्यानुसन्धानोपयोगितया एषामपि द्विः पाठस्य तादर्थ्योपपादनाय अवश्यमुपास्यत्वस्य वक्तव्यत्वाच्च। ततश्च [1]सत्यसङ्कल्पत्वाद्यनुपपत्तेः न शारीरो ग्राह्यः। तदिदमाह—
**न तु शारीरो जीवो मनोमयत्वादिगुण इति॥ ३॥**

---

1. मु. सत्यकामाद्यनुपपत्तेः

## कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

इतश्च न शारीरो मनोमयत्वादिगुणः, यस्मात् कर्मकर्तृव्यपदेशो भवति 'एतमितः प्रेत्याभिसंभवितास्मि' (छा. ३।१४।४) इति। एतमिति प्रकृतं मनोमयत्वादिगुणमुपास्यमात्मानं कर्मत्वेन-प्राप्यत्वेन व्यपदिशति, अभिसंभवितास्मीति शारीरमुपासकं कर्तृत्वेन-प्रापकत्वेन। अभिसंभवितास्मीति - प्राप्तास्मीत्यर्थः। न च सत्यां गतौ एकस्य कर्मकर्तृव्यपदेशो युक्तः। तथा उपास्योपासकभावोऽपि भेदाधिष्ठान एव। तस्मादपि न शारीरो मनोमयत्वादिविशिष्टः ॥ ४ ॥

## शब्दविशेषात् ॥ ५ ॥

इतश्च शारीरादन्यो मनोमयत्वादिगुणः, यस्मात् शब्दविशेषो भवति समानप्रकरणे श्रुत्यन्तरे—'यथा व्रीहिर्वा यवो वा श्यामाको

---

ननु - अत्र प्राप्यप्रापकत्वेन उपास्योपासकत्वेन च द्वेधा कर्मकर्तृत्वव्यपदेशो जीवपक्षे नोपपद्यत इत्युक्तं, तदयुक्तम् - जीवोऽपि [1]हि पञ्चाग्निविद्यायां उपास्योऽङ्गीकृतः। तत्र चेत् उपास्यगुणविशिष्टतया उपास्यत्वं स्वरूपेणोपासकत्वमिति [2]कर्मकर्तृत्वव्यपदेशविरोधः परिह्रियते, तथासति प्रकृतेऽपि [3]सत्यसङ्कल्पत्वादिगुणविशिष्टतया उपास्यत्वं प्राप्यत्वं च, स्वरूपेण तूपासकत्वं प्रापकत्वं चेति विरोधपरिहारोऽस्त्विति चेत् - न - यत्र हि प्रबलेन प्रमाणेन जीवस्योपास्यत्वं प्राप्नोति तत्र क्लेशोपगमेऽपि प्रकृते तथा क्लेशकल्पनस्य निर्मूलत्वादिति। तदिदमाह— **न च सत्यां गताविति** ॥ ४ ॥

**समानप्रकरण इति।** इदमुपलक्षणं स्वप्रकरणेऽपि छान्दोग्ये 'एष म आत्मा' इति षष्ठीप्रथमारूपस्य शब्दविशेषस्य। ननु - षष्ठीप्रथमारूपशब्दविशेषः सप्तमीप्रथमारूपश्च 'राहोः शिरः' 'स्वे महिम्नि प्रतिष्ठितः' इतिवत् एकस्मिन्नपि

---

1. मु. 'हि' नास्ति
2. मु. कर्मकर्तृविरोधः
3. मु. सत्यकामगुण

वा श्यामाकतण्डुलो वा एवमयमन्तरात्मन् पुरुषो हिरण्मयः' (शत. ब्रा. १०।६।३।२) इति। शारीरस्यात्मनो यः शब्दोऽभिधायकः सप्तम्यन्तः अन्तरात्मन्निति, तस्माद्विशिष्टोऽन्यः प्रथमान्तः पुरुषशब्दो मनोमयत्वादिविशिष्टस्यात्मनोऽभिधायकः। तस्मात् तयोर्भेदोऽधिगम्यते ॥ ५ ॥

## स्मृतेश्च ॥ ६ ॥

स्मृतिश्च शारीरपरमात्मनोर्भेदं दर्शयति—
'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया' (भ.गी.१८।६१) इत्यादिः।

अत्राह—कः पुनरयं शारीरो नाम परमात्मनोऽन्यः, यः प्रतिषिध्यते 'अनुपपत्तेस्तु न शारीरः' इत्यादिना। श्रुतिस्तु 'नान्योऽतोऽस्ति द्रष्टा, नान्योऽतोऽस्ति श्रोता' (बृ. उ. ३।७।२३) इत्येवंजातीयका परमात्मनोऽन्यमात्मानं वारयति। तथा स्मृतिरपि 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत' (भ. गी. १३।२) इत्येवंजातीयका - इति।

अत्रोच्यते—सत्यमेवैतत्। पर एवात्मा देहेन्द्रियमनोबुद्ध्युपा-

---

उपपादयितुं शक्य एव - इति शङ्कायामपि पूर्वोक्तमेवोत्तरं नचसत्यांगतावित्यादि द्रष्टव्यम् ॥ ५ ॥

'एष म आत्माऽन्तर्हृदये' इति श्रुतेः 'हृद्देशे' इति पदेन स्मृतौ प्रत्यभिज्ञानात्, स्मृतौ च ईश्वरपदप्रयोगेण आदिपदसंगृहीते[1] 'तमेव शरणं गच्छ सर्वभावेन भारत। तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्' इति [2]वचने मुमुक्षुशरण्यत्वपरमशान्तिशाश्वतस्थानहेतुप्रसादशालित्वरूपपारमेश्वरधर्मप्रतिपादनेन च ब्रह्मपरत्वस्यावधृतत्वात् उपबृंहणानुसारेणापि ब्रह्मैवेह विवक्षितम् ॥६॥

---

1. मु. सङ्गृहीत 2. मु. वचनेन

धिभिः परिच्छिद्यमानो बालैः शारीर इत्युपचर्यते। यथा घटकरकाद्युपाधिवशात् अपरिच्छिन्नमपि नभः परिच्छिन्नवदवभासते, तद्वत्। तदपेक्षया च कर्मकर्तृत्वादिभेदव्यवहारो न विरुध्यते प्राक् तत्त्वमसीत्यात्मैकत्वोपदेशग्रहणात्। गृहीते त्वात्मैकत्वे बन्धमोक्षादिसर्वव्यवहारपरिसमाप्तिरेव स्यात् ॥ ६ ॥

## अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

अर्भकं-अल्पं, ओकः नीडम्। 'एष म आत्माऽन्तर्हृदये' इति परिच्छिन्नायतनत्वात्, स्वशब्देन च 'अणीयान् व्रीहेर्वा यवाद्वा' इत्यणीयस्त्वव्यपदेशात्, शारीर एव आराग्रमात्रो जीव इहोपदिश्यते, न सर्वगतः परमात्मा-इति यदुक्तं तत् परिहर्तव्यम्। अत्रोच्यते—नायं दोषः-न तावत् परिच्छिन्नदेशस्य सर्वगतत्वव्यपदेशः कथमप्युपपद्यते।

---

**न सर्वगतः परमात्मेति।** न च सर्वगतस्यापि अयोध्याधिपतिन्यायेन हृदयसम्बन्धितामात्रेण[1] 'अन्तर्हृदये' इति व्यपदेश उपपद्यत इति वाच्यम्। तावता हृदयाधिकरणत्वनिर्देशोपपत्तावपि हृदयान्तर्गतत्वनिर्देशानुपपत्तेः। न च तत् औपचारिकं यथाकथञ्चित् व्याख्येयम्। अणीयस्त्वनिर्देशोपपत्तिरूपतात्पर्यलिङ्गोपेतस्य यथाकथञ्चिद्व्याख्यानानुपपत्तेः। तथा च उपक्रमगताणीयस्त्वनिर्देशोपोद्बलितान्तर्वर्तित्वविरोधे ज्यायस्त्वमेव औपसंहारिकं उपासनाभिप्रायं व्याख्येयमिति शङ्कितुर्हृदयम्।

**न तावत् परिच्छिन्नदेशस्य सर्वगतत्वव्यपदेश इति।** यथा हृदयान्तर्वर्तितोपपादनार्थमणीयस्त्वनिर्देश इति परेणोच्यते, एवं अणीयस्त्वमौपाधिकं सत् उपासनार्थं निर्दिश्यत इति द्योतयितुं 'अन्तर्हृदये' इति उपासनस्थानरूपोपाधिनिर्देशोऽयमिति सिद्धान्तिनाऽपि वक्तुं शक्यम्। ततश्च उपक्रमस्य उभयथाऽपि सम्भवात् 'ज्यायान् पृथिव्याः' इत्यादिभिर्वाक्यैः ब्रह्मासाधारणस्य ज्यायस्त्वस्य

---

1. मात्रेणेति मात्रशब्देन अन्यासम्बन्धित्वव्यवच्छेदः।

सर्वगतस्य तु सर्वदेशेषु विद्यमानत्वात् परिच्छिन्नदेशव्यपदेशोऽपि कयाचिदपेक्षया संभवति। यथा समस्तवसुधाधिपतिरपि हि सन् अयोध्याधिपतिरिति व्यपदिश्यते। कया पुनरपेक्षया सर्वगतः सन्नीश्वरः अर्भकौका अणीयांश्च व्यपदिश्यत इति। निचाय्यत्वादेवमिति ब्रूमः। एवं-अणीयस्त्वादिगुणगणोपेत ईश्वरः तत्र हृदयपुण्डरीके निचाय्यः-द्रष्टव्यः उपदिश्यते, यथा सालग्रामे हरिः। तत्रास्य बुद्धिविज्ञानं ग्राहकम्। सर्वगतोऽपीश्वरः तत्रोपास्यमानः प्रसीदति। व्योमवच्चैतद्द्रष्टव्यम्। यथा सर्वगतमपि सत् व्योम सूचीपाशाद्यपेक्षया अर्भकौकोऽणीयश्च व्यपदिश्यते एवं ब्रह्मापि। तदेवं निचाय्यत्वापेक्षं ब्रह्मणोऽर्भकौकस्त्वमणीयस्त्वं च, न पारमार्थिकम्। तत्र यदाशङ्क्यते-हृदयायतनत्वाद्ब्रह्मणो हृदयानां च प्रतिशरीरं भिन्नत्वात् भिन्नायतनानां च शुकादीनां अनेकत्वसावयवत्वानित्यत्वादिदोषदर्शनात् ब्रह्मणोऽपि तत्प्रसङ्ग इति, तदपि परिहृतं भवति ॥ ७ ॥

## संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

व्योमवत्सर्वगतस्य ब्रह्मणः सर्वप्राणिहृदयसंबन्धात् चिद्रूपतया च शारीरादविशिष्टत्वात् सुखदुःखादिसंभोगोऽप्यविशिष्टः प्रसज्येत। एकत्वाच्च। न हि परस्मादात्मनोऽन्यः कश्चिदात्मा संसारी विद्यते, 'नान्योऽतोऽस्ति विज्ञाता' (बृ. उ. ३।७।२३) इत्यादिश्रुतिभ्यः। तस्मात् परस्यैव ब्रह्मणः संभोगप्राप्तिरिति चेत्, न-वैशेष्यात्। न तावत् सर्वप्राणिहृदयसंबन्धात् चिद्रूपतया च शारीरवत् ब्रह्मणः संभोगप्रसङ्गः, वैशेष्यात्। विशेषो हि भवति शारीरपरमेश्वरयोः। एकः कर्ता भोक्ता

---

प्रतिपादनात् घटाकाशन्यायेन अणीयस्त्वव्यपदेश औपाधिक उपासनार्थ इति निर्णीयते ॥ ७ ॥

चतुर्वर्णादित्वात् स्वार्थिकः सूत्रे ष्यञ् इत्यभिसन्धाय व्याचष्टे—विशेषो हि भवतीति। एकः कर्ता भोक्तेति। न च जीवब्रह्मणोरेकत्वाभ्युप-

धर्माधर्मसाधनः सुखदुःखादिमांश्च। एकः तद्विपरीतोऽपहतपाप्मत्वादिगुणः। एतस्मादनयोर्विशेषात् एकस्य भोगो नेतरस्य। यदि च सन्निधानमात्रेण वस्तुशक्तिमनाश्रित्य कार्यसंबन्धोऽभ्युपगम्येत, आकाशादीनामपि दाहादिप्रसङ्गः। सर्वगतानेकात्मवादिनामपि समावेतौ चोद्यपरिहारौ।

यदपि एकत्वाद्ब्रह्मणः आत्मान्तराभावात् शारीरस्य भोगेन ब्रह्मणो भोगप्रसङ्ग इति। अत्र वदामः—इदं तावत् देवानां प्रियः प्रष्टव्यः। कथमयं त्वया आत्मान्तराभावोऽध्यवसित इति। 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'नान्योऽतोऽस्ति विज्ञाता' इत्यादिशास्त्रेभ्य इति चेत्, यथाशास्त्रं तर्हि शास्त्रीयोऽर्थः प्रतिपत्तव्यः न तत्रार्धजरतीयं लभ्यम्। शास्त्रं च 'तत्त्वमसि' इत्यपहतपाप्मत्वादिविशेषणं ब्रह्म शारीरस्यात्मत्वेनोपदिशत् शारीरस्यैव तावत् उपभोक्तृत्वं वारयति। कुतः तदुपभोगेन ब्रह्मण उपभोगप्रसङ्गः। अथागृहीतं शारीरस्य ब्रह्मणा एकत्वं, तदा मिथ्याज्ञाननिमित्तः शारीरस्योपभोगः, न तेन परमार्थरूपस्य

---

गमे कथमियं व्यवस्थेति वाच्यम्। प्रबलानेकश्रुतिपर्यालोचनया जीवब्रह्मणोः परमार्थत एकत्वेऽवधारितेऽपि[1] बिम्बप्रतिबिम्बन्यायेन काल्पनिकानादिभेदाभ्युपगमात् धर्मव्यवस्थोपपत्तेः। **सर्वगतानेकात्मवादिनामिति**। अयं वादः तार्किकाणाम्। तथा च तन्मते सर्वात्मनां सर्वशरीरसम्बन्धात् सुखदुःखव्यतिकरः स्यात्। तत्र चेत् अदृष्टादिना व्यवस्था आस्थीयते, तथा सति ईश्वरस्य हृदयसम्बन्धित्वेऽपि तुल्यम्।

अस्मिन् सूत्रे हृदयसम्बन्धित्वात् ईश्वरस्य सुखदुःखानुभवाख्यसम्भोगप्राप्तिराशङ्क्यते, भोक्त्रापत्तेरित्यत्र तु सर्वात्मतया - इति भेदः।

**यदपीत्यादि**। जीवब्रह्माभेदप्रयुक्तशङ्कापरिहारादिकं भोक्त्रापत्तिसूत्रगतमेव इहापि दर्शितम्।

---

1. मु. 'अपि' नास्ति

ब्रह्मणः संस्पर्शः। न हि बालैः तलमलिनतादिभिर्व्योम्नि विकल्प्यमाने तलमलिनतादिविशिष्टमेव परमार्थतो व्योम भवति । तदाह—नवैशेष्यादिति । न एकत्वेऽपि शारीरस्योपभोगेन ब्रह्मण उपभोगप्रसङ्गः, वैशेष्यात् । विशेषो हि भवति मिथ्याज्ञानसम्यग्ज्ञानयोः । मिथ्याज्ञानकल्पित उपभोगः, सम्यग्ज्ञानदृष्टमेकत्वम् । न च मिथ्याज्ञानकल्पितेनोपभोगेन सम्यग्ज्ञानदृष्टं वस्तु संस्पृश्यते । तस्मात् न उपभोगगन्धोऽपि शक्य ईश्वरस्य कल्पयितुम् ॥ ८ ॥

---

अत्र [1]सत्यसङ्कल्पत्वादीनां ज्यायस्त्वस्य च, [2]उपक्रमगतप्राणशरीरमनोमयत्वाभ्यां अणीयस्त्वेन च अभिभूततया अस्पष्टता ॥ ८ ॥

इति सर्वत्रप्रसिद्धाधिकरणम् ॥ १ ॥

---

1. मु. सत्यसङ्कल्पसत्यकामत्वादीनां

2. द्वितीयपादावतारणभाष्यव्याख्यावसरे अस्पष्टब्रह्मलिङ्गतानिर्वचनं कृतम् - ब्रह्मलिङ्गानां अस्पष्टत्वं सम्भाव्यमानस्वारस्यकजीवादिलिङ्गाभिभूतत्वम्, तादृशजीव दिलिङ्गानभिभूतत्वं स्पष्टत्वम् - इति । सम्भाव्यमानस्वारस्यकत्वं परं निर्वक्तव्यम् । तदत्र क्रियते - **उपक्रमेत्यादिना** एतदुक्तं भवति - निर्णयतात्पर्यकवाक्योपक्रमगतब्रह्मलिङ्गासमभिव्याहृतत्वं जीवादिलिङ्गानां सम्भाव्यमानस्वारस्यकत्वम् - इति । एवञ्च सति सत्यसङ्कल्पत्वादिब्रह्मलिङ्गसमभिव्याहृतेष्वपि मनोमयत्वादिजीवलिङ्गेषु असञ्जातविरोधित्वात् स्वारस्यसिद्धिः । अत्र च ब्रह्मलिङ्गशब्देन जीवाद्युपस्थित्यद्वारकब्रह्मोपस्थापकतावत् लिङ्गं विवक्षितम् । एवं जीवलिङ्गशब्देनापि ब्रह्मोपस्थित्यद्वारकजीवोपस्थापकतावत् लिङ्गं विवक्षितम् । ततश्च उपक्रमगतमनोमयत्वादीनां जीवरूपेण ब्रह्मण उपस्थापकलिङ्गत्वेऽपि शाण्डिल्यविद्यावाक्यानां न स्पष्टब्रह्मलिङ्गकत्वापत्तिः । प्रथमपादीयाधिकरणानां अस्पष्टब्रह्मलिङ्गकवाक्यविषयत्वं नास्तीति एतदधिकरणारम्भे टीकायां उपपादितम् । अस्मिंश्च पादे अधिकरणानां स्पष्टब्रह्मलिङ्गकवाक्यविषयकत्वं नास्तीति प्रत्यधिकरणं वर्णयिष्यते । एवञ्च 'भाष्योक्ताः पादभेदप्रयोजकोपाधयः साङ्कर्यदोषदुष्टाः अव्याप्त्यतिव्याप्तिग्रस्तत्वात्' इति मध्वचन्द्रिकोक्तदूषणस्य उक्तरूपस्पष्टास्पष्टलिङ्गनिर्वचनाज्ञानमूलकस्य नावकाशः ।

२ अत्त्रधिकरणम्

## अत्ता चराचरग्रहणात् ॥ ९ ॥

कठवल्लीषु पठ्यते—

'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः ।

मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः' (क.उ. १.२.२५) इति ।

अत्र कश्चित् ओदनोपसेचनसूचितोऽत्ता प्रतीयते । तत्र किमग्निरत्ता स्यात् उत जीवः अथ वा परमात्मेति संशयः । विशेषानवधारणात् । त्रयाणां च अग्निजीवपरमात्मनां अस्मिन् ग्रन्थे प्रश्नोपन्यासोपलब्धेः । किं तावत् प्राप्तम् । अग्निरत्तेति । कुतः, 'अग्निरन्नादः' (बृ. उ. १।४।६) इति श्रुतिप्रसिद्धिभ्याम् । जीवो वा अत्ता स्यात्, 'तयोरन्यः पिप्पलं स्वाद्वत्ति' [क. उ. १-३-१] इति दर्शनात् । न परमात्मा, 'अनश्नन्नन्यो अभिचाकशीति' (मुण्ड. ३।१।१) इति दर्शनात् - इत्येवं प्राप्ते—

---

**यस्येति** । ब्रह्म-ब्राह्मणः, क्षत्रं-क्षत्रियः, उपसेचनं-मिश्रणद्रव्यम् । सः - ओदनप्रतिसम्बन्धी यत्र वर्तते तत् अधिष्ठानं इत्था-इत्थं को वेद ।

**अत्ता प्रतीयत इति** । ओदनप्रतिसम्बन्धी प्रतीयत इत्यर्थः । अत्र अनोदनयोर्ब्रह्मक्षत्रयोरोदनत्वं गुणयोगाद्वक्तव्यम् । तत्र यदि - 'विशोऽन्नं राज्ञां पशवोऽन्नं विशाम्' 'एष सोमो राजा तद्देवानामन्नम्' [छा. उ. ५. १०. ४] इत्यादौ यथा अन्नशब्दो भोग्यत्वगुणयोगात्, एवमोदनशब्दोऽपि भोग्यत्वगुणमादाय वर्तते ; तदा तत्प्रतिसम्बन्धी भोक्ता पर्यवस्यति । यदि तु, यथा प्राणोपासनाप्रकरणे किमेऽन्नमिति प्रश्ने 'यत्किञ्चिदिदं आश्वभ्य आशकुनिभ्यः [छा. उ. ५.२.१] इत्यत्र श्वशकुनीनां यदन्नं तत्प्राणस्यान्नमिति रूपणे अन्नपदं भोज्यत्वगुणेन वर्तते, तत्प्रतिसम्बन्धी च भक्षकः प्रतीयते, तथा प्रकृतेऽप्योदनपदस्य भोज्यत्वप्रतिपादकत्वे[1] तत्प्रतिसम्बन्धी भक्षकः सिध्यति । यदि तु 'यदिदं सर्वं

---

1. **प्रतिपादकत्वे इति** प्रतिपादकत्वं, तदा - इत्यर्थः ।

मृत्योरन्नं कास्वित् सा देवता यस्या मृत्युरन्नम्' 'अग्निर्वै मृत्युस्सोऽपामन्नम्' [बृ. उ. ३.२.१०] इत्यत्र यथा नाश्यत्वगुणयोगादन्नशब्दप्रवृत्तेः तत्प्रतिसम्बन्धी नाशकः संहर्ता प्रतीयते, एवमत्राप्योदनपदस्य नाश्यत्वगुणेन [1]प्रवृत्तौ तत्प्रतिसम्बन्धी नाशकः सिध्यति ।

यद्यपि - सर्वंप्राणस्यान्नमित्यत्र प्रतिसम्बन्धिनः प्राणस्य भोक्तृत्वभक्षकत्वनाशकत्वानां मध्ये न किञ्चिदपि विद्यते, परं तु भक्षकत्वेनोपासनामात्रं; तथाऽपि तत्र अगत्या तथास्वीकारेऽपि सति सम्भवे प्रतीतस्य असत्त्वकल्पना न न्याय्येति तत्र भोग्यत्वभोज्यत्वगुणाभ्युपगमे जीव एव तत्प्रतिसम्बन्धी प्राप्नोति, न त्वग्निपरमेश्वरौ । अग्नेस्तदसम्भवस्य लोकसिद्धत्वात्, सम्भोगप्राप्तिसूत्रे परमात्मनोऽपि भोगनिरासात् । संहार्यत्वपक्षे तु अग्निपरमात्मानावपि ।

तत्र प्रसिद्ध्यनुसारिण्या वृत्तेः स्वीकरणीयत्वात् लोके च भोज्यत्वेन वा भोग्यत्वेन वा ओदनस्य अतिप्रसिद्धत्वात् ओदनपदानुसारेण आद्यौ गुणौ पर्यवस्यतः । तथा च जीव इति पूर्वः पक्षः । न परमात्मा, पूर्वसूत्रे भोक्तृत्वनिरासात् । अत एव [2]सङ्गतिः । व्याघ्रादिजीवविशेषस्य च ब्रह्मक्षत्रे भोज्ये प्रसिद्धे एव । भोग्यत्वं तु स्त्रीपुत्रादिरूपेण जीवविशेषं प्रति द्रष्टव्यम् ।

अथ-मृत्योरुपसेचनत्ववर्णनात् परमेश्वर इति प्राप्नोति । दध्यादि मिश्रणद्रव्यं हि उपसेचनमित्युच्यते । तच्च अन्नादिभोजनोपकारकं सत् स्वयमपि भुज्यमानं[3] भवति । न च प्रकृते ब्रह्मक्षत्रादिभोगसाधनत्वे सति तैस्सह भुज्यमानता मृत्योः जीवनिरूपिता । परं तु भोगकाले मृत्युः अबाधको भवति अबाधकत्वगुणश्च यद्यपि भोजने विषये दध्यादेर्वर्तते, तथाऽपि नासौ भुज्यमानत्वेसतिभोगसाधनत्वगुणवत् अतिप्रसिद्धः । संहार्यत्वपक्षे तु परमेश्वरकर्तृके संहारे मृत्योःविषयत्वात् तत्साधनत्वाच्च उपसेचनत्वरूपणं [4]समञ्जसं भवति । यत्क्रिया-

---

1. प्रवृत्तौ इति प्रवृत्तिः, तदा—इत्यर्थः । मु. वृत्तौ
2. सङ्गतिरिति उपजीव्योपजीवकभावसङ्गतिरित्यर्थः ।
3. आ. भुञ्ज्यमानं
4, मु. सम्भवति

ब्रूमः—अत्ताऽत्र परमात्मा भवितुमर्हति। कुतः? चराचरग्रहणात्। चराचरं हि स्थावरजङ्गमं मृत्यूपसेचनं इह आद्यत्वेन प्रतीयते, तादृशस्य च आद्यस्य न परमात्मनोऽन्यः कात्स्न्र्येनात्ता संभवति। परमात्मा तु विकारजातं संहरन् सर्वमत्तीत्युपपद्यते। नन्विह चराचरग्रहणं नोपलभ्यते, कथं सिद्धवत् चराचरग्रहणं हेतुत्वेनोपादीयते? नैष दोषः - मृत्यूपसेचनत्वेन (इह आद्यत्वेन) सर्वस्य प्राणिनिकायस्य

---

विषयत्वमोदनस्य तत्क्रियोपकारकत्वे सति तत्क्रियाविषयत्वमादाय दध्यादिवत् मृत्योरप्युपसेचनत्वरूपणसम्भवात्। तथा च मृत्यूपसेचनरूपणेन परमेश्वरे प्रतीयमाने कथं जीव एवेति नियन्तुं शक्यम्?

प्रथमोपस्थितौदनरूपणानुसारेण चरमोपस्थितमृत्यूपसेचनरूपणस्य नेयत्वात् इति जीवपूर्वपक्षाभिप्रायः।

ननु—भोग्यत्वभोज्यत्वगुणविवक्षायां अग्निर्न प्राप्नोत्येव। संहार्यत्वविवक्षायामपि स न प्राप्नोति। इह हि संहार्यत्वगुणयोगः चरमश्रुतमृत्यूपसेचनरूपण-प्राबल्योन्मेषणपूर्वकं सिद्धान्ते व्यवस्थापनीयः। स च समृत्युककृत्स्नजगत्संहारके परमात्मन्येव गृहीते समञ्जस इति कथमग्निरिति पूर्वपक्षस्य उन्मेषः? इति चेत्—

सम्भवमात्रेणायं पूर्वपक्ष इति न तत्र आग्रहः कर्तव्यः।

अपि च - मृत्यूपसेचनरूपणान्यथानुपपत्त्या [1]यदि समृत्युककृत्स्नप्रपञ्चसंहर्ता परमात्मा इह ओदनप्रतिसम्बन्धी विवक्षितः स्यात्, तथासति [2]ब्रह्मक्षत्रादिकतिपय-पदार्थग्रहणं निरभिप्रायमेव स्यात्। अतोऽपि नेह परमेश्वर इति पूर्वपक्षाभिप्रायः।

**मृत्यूपसेचनमिति**। अयं भावः—यद्यपि भोग्यत्वभोज्यत्वगुणौ ओदनगतौ लोके प्रसिद्धौ। प्रसिद्धेनैव गुणेन गौणवृत्तिः न अप्रसिद्धेन - इत्यत्र नियामकं तु

---

1. मु. 'यदि' नास्ति

2. **ब्रह्मक्षत्रादिकतिपयेति** कतिपयेत्यस्य परिचायकं ब्रह्मक्षत्रादीति। अत एव आदिपदं समञ्जसम्।

प्रतीयमानत्वात् । ब्रह्मक्षत्रयोश्च प्राधान्यात् प्रदर्शनार्थ[त्वात् ](त्वोपपत्तेः)। यत्तु परमात्मनोऽपि नात्तृत्वं संभवति, 'अनश्नन्नन्यो अभिचाकशीति' इति दर्शनादिति । अत्रोच्यते— कर्मफलभोगस्य प्रतिषेधकमेतद्दर्शनं, तस्य

---

प्रसिद्धगुणः शीघ्रमुपस्थितो भवतीत्येव । एवं सति इह ब्रह्मक्षत्रयोर्मृत्योश्च नाश्यनाशकभावस्य शास्त्रे [1]प्रसिद्धतया ब्रह्मक्षत्रमृत्युपदानां समभिव्याहारेण शास्त्रीयत्वप्रत्यासत्त्या स एव शीघ्रमुपस्थितो भवतीति प्रकृते लोकप्रसिद्धयनुसन्धानापेक्षभोज्यत्वादिगुण एव विलम्बितोपस्थितिकः । तथा च वेदे लोकप्रसिद्ध्यनुसारिलक्षणाद्यपेक्षया वैदिकपदसमभिव्याहारावगतैव लक्षणादिवृत्तिः प्रबलेति सिध्यति । अत एव, लोके [2]अनतिप्रसिद्धाऽपि उपक्रमोपसंहाराद्यनुसारिणी [3]सत्यादिवाक्येषु अखण्डार्थवृत्तिरेव स्वीक्रियते, न तु लोके अतिप्रसिद्धाऽपि विशिष्टवाक्यार्थवृत्तिः । एवं सति उपसेचनरूपणमपि समञ्जसं भवति ।

ब्रह्मक्षत्रयोश्च [4]प्रदर्शनार्थत्वादिति । ननु - किमर्थं [5]प्रदर्शनार्थता उपेयते, यथाश्रुतमेवास्तु - ब्रह्मक्षत्रयोः मृत्युना सह संहर्ता परमेश्वर एवेति । यथाश्रुतत्वेऽपि सिद्धान्तसिद्ध्यविरोधात् । का च मुख्यार्थे अनुपपत्तिः । उच्यते—मृत्यूपसेचनत्वेन [6]परमेश्वरत्वे अवश्यं वक्तव्ये, सर्वसंहर्तरिपरमेश्वरेब्रह्मक्षत्रग्रहणंनिरभिप्रायमितियथाश्रुतानुपपत्ति[7]शङ्कापरिहाराय ब्रह्मक्षत्रपदयोः प्रधानकार्यप्रतिपादकयोः सर्वप्रपञ्चलक्षकतोपपादनेन सर्वसंहर्तृता प्रकृते विवक्षितेति द्योतनाय 'चराचरग्रहणात्' इति सूत्रकारनिर्देशः । तथा च यस्येतियत्पदानुसारेण अनुवादकतया प्रतीतस्य अस्य वाक्यस्य यत्प्रयन्त्यभिसंविशन्तीत्यादिपुरोवादसमानार्थकताऽपि सिद्धा

---

1. आ. अतिप्रसिद्धतया

2. **अनतिप्रसिद्धेति** लक्षणवाक्येषु प्रत्यभिज्ञापकवाक्येषु च लोकेऽपि प्रसिद्धतया अनतिप्रसिद्धेत्युक्तम् ।

3. आ. सत्यादिपदार्थेषु

4. मु. प्राधान्यादिति

5. **प्रदर्शनार्थता**—उपलक्षणार्थता । ब्रह्मक्षत्रपदयोः अजहल्लाक्षणिकतेति यावत् ।

6. मु. परमेश्वरपरत्वे

7. मु. 'शङ्का' नास्ति

सन्निहितत्वात्। न विकारसंहारस्य प्रतिषेधकं, सर्ववेदान्तेषु सृष्टिस्थिति-संहारकारणत्वेन ब्रह्मणः प्रसिद्धत्वात्। तस्मात् परमात्मैव इह अत्ता भवितुमर्हति ॥ ९ ॥

## प्रकरणाच्च ॥ १० ॥

इतश्च परमात्मैव इह अत्ता भवितुमर्हति, यत्कारणं प्रकरणमिदं परमात्मनः, 'न जायते म्रियते वा विपश्चित्' (क. उ. १।२।१८) इत्यादि। प्रकृतग्रहणं च न्याय्यम्। 'क इत्था वेद यत्र सः' इति च दुर्विज्ञानत्वं परमात्मलिङ्गम् ॥ १० ॥

---

भवति। न चैवं सिद्धान्ते ब्रह्मक्षत्रपदयोर्लाक्षणिकत्वापत्तिरेव दोष इति वाच्यम्। पूर्वपक्षेऽपि हि ब्रह्मक्षत्रे एव कस्यचिज्जीवस्य भोज्ये भोग्ये वा नियन्तुमशक्ये इति, जीवस्य भोज्यं भोग्यं वा यावत् किञ्चिदस्ति तत्परतायाः यथाश्रुतेनिरभिप्रायतानिवृत्त्यर्थं वक्तव्यत्वात् ॥ ९ ॥

ननु - अत्र भाष्ये प्रकरणं चशब्दोदितं दुर्विज्ञेयत्वलिङ्गं च अत्तुः परमेश्वरत्वसाधकतया उपन्यस्तं, [1]तदसङ्गतमिव। न हीदं प्रकरणं अत्तुः। अपि तु 'यत्र सः' इति अत्तुराधारतया निर्दिष्टं यत् विशुद्धचैतन्यं तस्येदं प्रकरणम्। यथा चेदं निर्विशेषप्रकरणं तथा 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' [ब्र. सू. १. ४. ७] इति सूत्रभाष्य एव स्पष्टं भविष्यति। 'क इत्था वेद यत्र सः' इति [2]दुर्विज्ञेयत्वलिङ्गं च अत्तुराधार एवान्वेति - इति चेत्—

उच्यते—अत्रेयं शङ्का - अत्तुराधारो जीवः। 'न जायते' इतिमन्त्रप्रतिपाद्यजननमरणप्रतिषेधस्य जननमरणप्रसक्तिमति जीवे एवान्वयात्। तत्रैव 'कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति' [क. उ. २. ३] इति प्रतिपाद्यं दुर्विज्ञेयत्वमप्यन्वेति। 'आसीनो दूरं व्रजति शयानो याति सर्वतः' इति पूर्वार्धे आसीनत्वशयानत्वादीनां जीवधर्माणां प्रतिपादनात्। तथा च प्रकरणानुसारेण 'क इत्था

---

1. आ. तदसङ्गतमेव    2. आ. दुर्विज्ञानत्व

३ गुहाधिकरणम्

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

**कठवल्लीष्वेव पठ्यते —**

**'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये ।**

**छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥'**

**(क. उ. १।३।१) इति । तत्र संशयः—किमिह बुद्धिजीवौ निर्दिष्टौ**

---

वेद' इति दुर्विज्ञेयत्वलिङ्गानुसारेण च अत्तुरधिकरणं जीव एवेति कथं तदाधेयोऽत्ता परमेश्वरः स्यात् - इति । इयं च शङ्का प्राकरणिकेषु बहुषु मन्त्रेषु सत्स्वपि विशिष्य 'न जायते' इतिमन्त्रोदाहरणेन सूचिता । एतादृशशङ्का-निरासद्वारा अत्तुः परमेश्वरत्वसाधकमिदं सूत्रम् । अयं च परिहाराभिप्रायः— एतस्य प्रकरणस्य प्रत्यगभिन्ननिर्विशेषवस्तुपरतां[1] 'त्रयाणामेव च' इति सूत्रे [2]प्रदर्शयिष्यति । तथा च प्रत्यगभिन्ने परमात्मनि जननमरणादयो जीवधर्माः प्रसक्ता इति नजायत इति मन्त्रस्य न परमात्मप्रकरणविरोधिता । आसीनोदूरं-व्रजतीत्यादयश्च निर्देशाः सर्वात्मत्वाभिप्रायाः । दुर्विज्ञानत्वं च [3]निर्विशेषस्वरूप-स्योपपन्नमेवेति प्रकरणलिङ्गाभ्यां अत्तुरधिकरणं निर्विशेषपरमात्मस्वरूपमेवेति-अत्तुः परमेश्वरत्वे न विरोधः । अत्र पूर्वपक्षे अत्तुः परमेश्वरत्वाभावात् एतन्मन्त्र-पर्यालोचनया तदाधारस्य कारणीभूतपरमेश्वरातीतत्वं न सिध्यति । सिद्धान्ते तु अत्तुः परमेश्वरत्वात् 'यत्र सः' इति निर्दिश्यमानमधिकरणं कारणातीतं सिध्यति - इति फलभेदो द्रष्टव्यः[4] ॥ १० ॥

**इति अत्त्रधिकरणम् ॥ १ ॥**

ऋतं पिबन्तौ-अवश्यं भोक्तव्यं कर्मफलं अनुभवन्तौ सुकृतस्य लोके - शरीरे या गुहा-हृदयपुण्डरीकरूपा, तस्यां यत् परमं-उत्कृष्टं परस्य अर्ध्यं-स्थानम्, 'राज्ञोऽ-

---

1. मु. परता 2. मु. प्रदर्शयिष्यते

3. मु. निर्विशेषरूपस्य

4. **द्रष्टव्य इति** अस्य वाक्यस्य, प्रथमप्रतीतभोग्यत्वलक्षणापवादेन विनाश्यत्वलक्षणां व्युत्पाद्य ब्रह्मलिङ्गस्योन्मेषणीयत्वात् अस्पष्टब्रह्मलिङ्गता - इत्यपि द्रष्टव्यम् ।

उत जीवपरमात्मानाविति । यदि बुद्धिजीवौ, ततो बुद्धिप्रधानात्कार्यकरणसंघाताद्विलक्षणो जीवः प्रतिपादितो भवति । तदपीह प्रतिपादयितव्यम्,

'येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके ।
एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः ॥' (क. उ. १।१।२०) इति पृष्टत्वात् । अथ जीवपरमात्मानौ, ततो जीवाद्विलक्षणः परमात्मा प्रतिपादितो भवति । तदपीह प्रतिपादयितव्यम्,

'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् ।
अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ॥' (क. उ. १।२।१४) इति पृष्टत्वात् ।

अत्राह आक्षेप्ता—उभावप्येतौ पक्षौ न संभवतः । कस्मात्? ऋतपानं हि कर्मफलोपभोगः, 'सुकृतस्य लोके' इति लिङ्गात् । तत्

---

ध्येयाय' [छा. उ. ५-३-६] इति अन्यत्र प्रयोगात्, स्वार्थे यत्, हृदयाकाशरूपम्; तत्र प्रविष्टौ—विद्यमानौ छायातपाविव परस्परविलक्षणौ । ये ब्रह्मविदः, ये च पञ्चाग्नयः, त्रिर्णाचिकेतोऽग्निः चितो यैः ते च वदन्ति । त्रीन्वरान्वृणीष्वेति मृत्युनोक्तस्य नचिकेतसः, पितृसौमनस्यं अग्निविद्येति वरद्वयप्राप्त्यनन्तरं तृतीयवरप्रार्थना—इयं प्रेते - मनुष्ये मृते प्राणिनि लौकिकानां [1]यतः विचिकित्सा - [2]एतच्छरीराभावे परलोकेहलोकानुयायी [3]तदतिरिक्तः कश्चित् अस्तीति केचन वदन्ति, केचन नास्तीति वदन्ति, एतादृशविप्रतिपत्तिप्रयुक्ता प्रसिद्धा, अतः अहं त्वदनुशिष्टः संशयनिवृत्त्यर्थं एतत् - आत्मतत्त्वं विद्यां - त्वदुपदेशजन्यमात्मतत्त्वनिर्णयमिच्छामि । एषः - उपदेश एव तृतीयो मे वरः - प्रार्थनाविषयः ।

पिबन्ताविति पदं पक्षद्वयेऽपि योजयितुं शङ्कते—अत्राहेति । कर्मफलोपभोग इति । तथा च जीवस्तावत् निर्विवाद इति भावः ।

---

1. आ. या विचिकित्सा
2. मु. एतच्छरीरभागी
3. मु. 'तदतिरिक्तः' नास्ति

चेतनस्य क्षेत्रज्ञस्य संभवति, न अचेतनाया बुद्धेः। 'पिबन्तौ' इति च द्विवचनेन द्वयोः पानं दर्शयति श्रुतिः। अतो बुद्धिक्षेत्रज्ञपक्षस्तावत् न संभवति। अत एव क्षेत्रज्ञपरमात्मपक्षोऽपि न संभवति, चेतनेऽपि परमात्मनि ऋतपानासंभवात्। 'अनश्नन्नन्यो अभिचाकशीति' इति मन्त्रवर्णात्—इति।

अत्रोच्यते—नैष दोषः। छत्रिणोगच्छन्तीति एकेनापि छत्रिणा बहूनां छत्रित्वोपचारदर्शनात्। एवमेकेनापि पिबता द्वौ पिबन्तावुच्येयाताम्। यद्वा - जीवस्तावत् पिबति, ईश्वरस्तु पाययति। पाययन्नपि पिबतीत्युच्यते। पाचयितर्यपि पक्तृत्वप्रसिद्धिदर्शनात्। बुद्धिक्षेत्रज्ञपरिग्रहोऽपि संभवति, करणे कर्तृत्वोपचारात्। एधांसिपचन्तीति

---

छत्रित्वोपचारदर्शनादिति। उपचारालम्बनं च छत्रिघटितसमुदायान्तर्गतिः। उपचारे च अछत्रिणामपि छत्रित्वप्रकारेणैव बोधः। उपचारः - आहार्यारोपः। पाचयितर्यपीति। अनेकसूदाधिकारिणि नियोजकेऽपि 'अयं राज्ञो [1]महानसे पक्ता' इति प्रयोगात्। पाणिनिनाऽपि हि 'तत्प्रयोजको हेतुश्च' इति सूत्रेण प्रयोजकस्य हेतुसंज्ञा चकारेण कर्तृसंज्ञा च दर्शिता। तथा च, यदा आख्यातेन प्रयोजककर्ता अभिधीयते तदा पिबन्तिति परमेश्वरपक्षेऽपि[2] समञ्जसमेव। एधांसि पचन्तीति प्रयोगदर्शनादिति। धातूनां नानार्थकतया यदा [3]पचिना विक्लत्त्यनुकूलः काष्ठगतो ज्वलनादिव्यापारो विवक्ष्यते, तदाऽयं प्रयोगः। एवं भोगानुकूलो बुद्धेर्यो व्यापारोऽस्ति तद्विवक्षायां धातुना, पिबन्तिति बुद्धावपि प्रयोगः समञ्जस एव। करणे कर्तृत्वोपचारादिति उपचारपदं [4]विवक्षापरम्। ननु - पिबन्तावित्यस्य भुञ्जानावित्यर्थं स्वीकृत्य जीवः सिद्धवत्कृतः, तस्य द्वितीयः परं बुद्धिः परमेश्वरो वेति कलहः इत्युच्यते, तदनुपपन्नम्-पिबन्तावित्यस्य भोगकर्तृ-

---

1. मु. 'महानसे' नास्ति

2. मु. 'अपि' नास्ति    3. मु. पचनं

4. अनुपदोक्तव्यापारकर्तृत्वस्य बुद्धौ मुख्यत्वेन उपचारपदस्य मुख्यार्थासम्भवात् विवक्षापरं इत्यर्थकरणम्।

प्रयोगदर्शनात्। न च अध्यात्माधिकारे अन्यौ कौचित् द्वौ ऋतं पिबन्तौ संभवतः। तस्मात् बुद्धिजीवौ स्यातां, जीवपरमात्मानौ वा – इति संशयः।

किं तावत् प्राप्तम्? बुद्धिक्षेत्रज्ञाविति। कुतः, 'गुहां प्रविष्टौ' इति विशेषणात्। यदि शरीरं गुहा, यदि वा हृदयं, उभयथाऽपि बुद्धिक्षेत्रज्ञौ गुहां प्रविष्टौ उपपद्येते। न च सति संभवे सर्वगतस्य ब्रह्मणो विशिष्टदेशत्वं युक्तं कल्पयितुम्। 'सुकृतस्य लोके' इति च कर्मगोचरानतिक्रमं दर्शयति। परमात्मा तु न सुकृतस्य वा दुष्कृतस्य वा गोचरे वर्तते, 'न कर्मणा वर्धते नो कनीयान्' इति श्रुतेः। 'छायातपौ' इति च चेतनाचेतनयोर्निर्देश उपपद्यते। छायाऽतपवत् परस्परविलक्षणत्वात्। तस्मात् बुद्धिक्षेत्रज्ञाविहोच्येयातां-इत्येवं प्राप्ते—

---

प्रतिपादकत्वाभावात् - इत्याशङ्क्य, अध्यात्माधिकारात् [1]यथाश्रुतार्थग्रहणासम्भवेन पिबन्तावित्यस्य भोगपरत्वमुपेयम्, तथा च जीवे लब्धे द्विवचनोपपत्तये बुद्धिपरमेश्वरयोर्मध्ये अन्यतर एव सन्देहविषयो भवति, [2]अन्यस्य अध्यात्माननुगुणत्वात् - इत्यभिप्रेत्याह - **न चाध्यात्माधिकार इति**।

**विशिष्टदेशत्वं कल्पयितुं युक्तमिति**। सर्वगतस्य परमात्मनो यद्यपि हृदयादिसम्बन्धो विद्यते, तथाऽपि तत्प्रवेशो न सम्भवति। प्रवेशो हि साकल्येन तदन्तर्गतिः। सा कथं सर्वव्यापकस्य हृदयादिषु स्यात्। जीवस्य तु अन्तःकरणपरिच्छिन्नस्य सम्भवति। बुद्धेरपि सम्भवत्येव। परिच्छिन्नत्वात्। अतो गुहाप्रवेशानुसारेण बुद्धिरेव ग्राह्या। अपि च 'आत्मानं रथिनं विद्धि शरीरं रथमेव तु। बुद्धिं तु सारथिं विद्धि' इति वाक्ये रथत्वेन रूपिते शरीरे बुद्धिजीवयोः रथिसारथिभावेन कल्पितयोः शरीरप्रवेशप्रतिपादनमपेक्षितम्। तदप्रविष्टयोः रथिसारथिभावानुपपत्तेः। तथा च उत्तरवाक्याकाङ्क्षानुसारेणापि इह बुद्धिरेव द्वितीया

---

1. **यथाश्रुतार्थेति**—लोकसिद्धपानकर्तृपक्ष्यादिरूपार्थेत्यर्थः।

2. मु. 'अन्यस्य' इत्यारभ्य 'हृदयादिसम्बन्धो विद्यते' इत्यन्तं नास्ति

**ब्रूमः—विज्ञानात्मपरमात्मानाविहोच्येयाताम्। कस्मात्, आत्मानौ हि तावुभावपि चेतनौ समानस्वभावौ। सङ्ख्याश्रवणे च समानस्वभावेष्वेव लोके प्रतीतिर्दृश्यते। 'अस्य गोः द्वितीयोऽन्वेष्टव्यः' इत्युक्ते गौरेव द्वितीयोऽन्विष्यते, नाश्वः पुरुषो वा। तदिह ऋतपानेन लिङ्गेन निश्चिते विज्ञानात्मनि द्वितीयान्वेषणायां समानस्वभावश्चेतनः परमात्मैव प्रतीयते।**

**ननूक्तं गुहाहितत्वदर्शनात् न परमात्मा प्रत्येतव्य इति। गुहाहितत्वदर्शनादेव परमात्मा प्रत्येतव्य इति वदामः। गुहाहितत्वं तु श्रुतिस्मृतिषु असकृत् परमात्मन एव दृश्यते—'गुहाहितं गह्वरेष्ठं पुराणम्' (क. उ. १।२।१२) 'यो वेद निहितं गुहायां परमे व्योमन्' (तै. उ.**

---

प्रतिपाद्या। बुद्धिविविक्तं जीवस्वरूपं ब्रह्मविदोऽपि निरूपयन्त्येवेति ब्रह्मविदो वदन्तीतिवाक्यावगतं[1] [2]ब्रह्मविद्वदनविषयत्वमपि बुद्धिजीवयोरुपपद्यत एव। अन्यानि विशेषणानि तु न बुद्धिसाहित्यपक्षं व्यासेधन्ति। न च - द्वित्वादिसङ्ख्यानिर्देशः सजातीयद्वित्वादि[3]धर्मिविषयक एव लोके दृष्ट इति जीवसजातीयश्चेतनः परमात्मैव प्रकृते ग्राह्यः, न तु जीवविजातीया जडा बुद्धिरिति-वाच्यम्। गुहाप्रवेशप्रतिपादकवाक्यशेषविरोधे लौकिकन्यायस्यानादरणीयत्वात्। लौकिकन्यायानादरणेन वाक्यशेषानुगुण एवार्थो ग्राह्य इति हि पूर्वाधिकरणे निरूपितम्। अत एव [4]सङ्गतिरपि।

ननु - 'समानस्वभावयोरेव सङ्ख्यानिवेशः' इति न्यायेन द्वितीयः परमेश्वरो ग्राह्यः - इत्येतदसङ्गतम्। लौकिकन्यायापेक्षया वाक्यशेषस्य प्रबलत्वात्। तथा च गुहाप्रवेशानुपपत्त्या न परमेश्वरो ग्राह्यः, अपि तु जीव एव - इत्यभिप्रायेण शङ्कते—**ननूक्तमिति। गुहाहितत्वदर्शनादेवेति।** ननु-गुहाहितत्वादेव परमात्मा प्रत्येतव्य इति विरुद्धम्। श्रुतिषु स्मृतिषु च गुहानिहितत्वश्रवणस्य जीवरूपाभिप्रायत्वात्। तथा च यत्र यत्र परमात्मप्रकरणे गुहानिहितत्वमवगम्यते,

---

1. मु. वाक्यगतं
2. मु. ब्रह्मविद्वचन
3. मु. धर्मविषयक
4. **सङ्गतिः**—दृष्टान्तसङ्गतिः।

२।१) 'आत्मानमन्विच्छ गुहां प्रविष्टम्' [शान्तिपर्व ३२१-७२] इत्याद्यासु। सर्वगतस्यापि परमात्मनः उपलब्ध्यर्थो देशविशेषोपदेशो न विरुध्यते इत्येतदप्युक्तमेव। सुकृतलोकवर्तित्वं तु छत्रित्ववत् एकस्मिन्नपि वर्तमानं उभयोरविरुद्धम्। छायातपावित्यप्यविरुद्धम्। छायातपवत् परस्परविलक्षणत्वात् संसारित्वासंसारित्वयोः। अविद्याकृतत्वात्

---

तज्जैवेनैव रूपेण भविष्यति, न तु स्वरूपेण—इत्यत आह—**सर्वगतस्यापि परमात्मन इति**। अयं भावः—जीवस्यापि कथं गुहानिहितत्वम्, परमात्माभिन्नस्य जीवस्यापि विभुत्वेन स्वतो गुहाप्रवेशासम्भवात्। यदि स्वोपाध्यन्तःकरणावच्छेदेन गुहाप्रवेशो जीवस्योपेयते, तथा सति परमात्मनोऽपि स्वनियन्तव्यान्तःकरणाद्यवच्छेदेन गुहाप्रवेश उपपद्यत एव। तथा च दहरशाण्डिल्यविद्यादिषु हृदयाकाशान्तर्वर्तित्वं पारमेश्वरेणैव रूपेणावगम्यते। तथा 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्' [क. उ. २. २०] इत्यादिषु दुर्दर्शत्वादिधर्मकीर्तनात् ब्राह्मेणैव रूपेण गुहाप्रवेश उपगन्तव्यः। **सुकृतलोकवर्तित्वं तु छत्रित्ववदिति**। इदं च, सुकृतस्यलोकेविद्यमानाविति [1]पृथग्विशेषणं [2]इत्यभिप्रेत्य। [3]तदपि सुकृतपदेन सुकृताधीनत्वमवगम्यते[4] इत्यभिप्रेत्य। वस्तुतस्तु-सुकृतलोके विद्यमानता यथा जीवस्य भोगार्था एवं परमात्मनो जीवनियमनार्था सा - [5]इति विवक्षायां न काचिदनुपपत्तिः। **संसारित्वासंसारित्वयोरिति**।

---

1. **पृथगिति** 'ऋतं पिबन्तौ' इति विशेषणात् पृथक् इत्यर्थः। पृथक्त्वं स्वातन्त्र्यम्।

2. **इत्यभिप्रेत्येति** लोके—देहे सुकृतस्य ऋतं-फलं पिबन्तौ इति अन्वयाश्रयणेन अपृथग्विशेषणत्वे नायं क्लेश इति भावः।

3. **तदपि**—तत्रापि।

4. **अवगम्यत इति** स्थितौ इत्यादिः। तथा च सुकृतस्य फले भोग्ये भोक्तुः भोगसाधनीभूतबुद्धेश्च स्थितिः सुकृताधीना, न तु अतथाभूतस्य परमात्मनः, अतः छत्रिन्यायानुसरणावश्यकता इति भावः।

5. **इति विवक्षायामिति** स्थितिरूपविद्यमानतायां सुकृताधीनत्वाविवक्षया इति शेषः। सुकृतलोकस्थितिः सुकृताधीनत्वानियता इति च भावः।

संसारित्वस्य पारमार्थिकत्वाच्च असंसारित्वस्य। तस्मात् विज्ञानात्मपरमात्मानौ गुहां प्रविष्टौ गृह्येते ॥ ११ ॥

कुतश्च विज्ञानात्मपरमात्मानौ गृह्येते—

## विशेषणाच्च ॥ १२ ॥

विशेषणं च विज्ञानात्मपरमात्मनोरेव भवति - 'आत्मानं रथिनं विद्धि शरीरं रथमेव तु' (क. उ. १।३।३) इत्यादिना परेण ग्रन्थेन रथिरथादिरूपककल्पनया विज्ञानात्मानं रथिनं संसारमोक्षयोर्गन्तारं कल्पयति, 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' (क. उ. १।३।९) इति च परमात्मानं गन्तव्यं कल्पयति।

---

युक्तं च संसारित्वासंसारित्वाभ्यामेव छायातपत्वोपपादनं, न तु जडत्वाजडत्वाभ्याम्। पिबन्तावित्यनेन एकस्य भोक्तृत्वं अपरस्य भोजयितृत्वं इत्युक्ते 'उभयोश्चेतनत्वाविशेषे कथमयं नियमः, उभावपि भोक्तारौ किं न स्यातां, व्यत्यासो वा कुतो नास्ति' इत्याशङ्किते अविद्यादिदोषोपघातानुपघाताभ्यां तदुपपादनार्थत्वात्।

ननु - 'समानस्वभावेन सङ्ख्यापूरणं' इति न्यायानुसरणे पारतन्त्र्यादिना बुद्धेरपि सजातीयत्वात् तया कुतो न सङ्ख्यापूरणं - इत्याशङ्क्य; चेतनत्वरूपेणैव साजात्यं विवक्षणीयम्, पारतन्त्र्यापेक्षया [1]तस्यान्तरङ्गत्वात्, पिबन्ताविति [2]चेतनधर्मप्रतिपादकपदोपस्थितत्वाच्च - इतिपरिहारमभिप्रेत्योपसंहरति—**तस्माद्विज्ञानात्मपरमात्मानाविति ॥ ११ ॥**

**परमात्मानं गन्तव्यं कल्पयतीति।** एतेन - रूपकवाक्ये सारथितया बुद्धेः कल्पितत्वात् तदाकाङ्क्षानुसारेण द्वितीया बुद्धिरेव ग्राह्येति शङ्का - निरस्ता। 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदं' इति अध्वनः [3]पारस्य प्राप्यतयासमाम्नातस्य 'अत्र ब्रह्म समश्नुते' [क. उ. २-३-१४] इति वाक्ये अत्रैव

---

1. **तस्य अन्तरङ्गत्वात्**—चेतनत्वस्य स्वाभाविकत्वेन प्रथमोपस्थितत्वात्।

2. पारतन्त्र्यमपि जीवस्य स्वाभाविकं—इति परे वदन्ति। तदभ्युपेत्याप्याह—**चेतनेति** चेतनधर्मप्रतिपादकं पदं-पिबत्पदम्। मु. चेतनधर्मप्रतिपादकेनैवोपस्थित

3. आ. पारे

तथा—'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्।
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥'

(क. उ. १।२।१२) इति पूर्वस्मिन्नपि ग्रन्थे मन्तृमन्तव्यत्वेन एतावेव विशेषितौ।

---

प्राप्यतया समाम्नानं कथमित्याकाङ्क्षायां गुहानिहितत्वं परमात्मनः प्रतिपाद्यते। ततश्च अयमर्थो लभ्यते—गुहानिहितं ब्रह्म अत्रैव [1]प्राप्यते कण्ठचामीकरन्यायेन। अध्वपदेन च देहेन्द्रियादिपर्वविशेषा एव विवक्षिताः। पारपदेन च तद्विविक्ततैव विवक्षिता-इति।

नन्वेवमपि रूपकवाक्येन 'अत्र ब्रह्म समश्नुते' इति प्राप्तिवाक्येन च गुहाप्रवेशप्रतिपादने यथायथं बुद्धिपरमेश्वरयोरप्यपेक्षिते प्राप्तिवाक्यापेक्षित एव गुहावाक्यार्थो ग्राह्य इत्यत्र किं नियामकमिति चेत्, [2]प्रधानत्वमिति वदामः। रूपकवाक्यं हि 'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥' इत्यादिवाक्यपर्यालोचनया, यथा वशीकृता रथसारथिहयादयः अभीप्सितं देशं प्रापयन्ति तथा बुद्धीन्द्रियादयो यस्य वशीकृताः प्रशस्ता भवन्ति स विष्णोः परमं पदं प्राप्नोतीति ब्रह्मप्राप्त्युपयोगिवशीकरणविधिशेषभूतम्। तथा च रूपकवाक्यमपेक्ष्य प्राप्तिवाक्यस्य प्रधानत्वात् तदपेक्षित एवार्थो ग्राह्यः। अपि च यदा जीवस्य प्रवेशः प्रतिपादितः, तदा बुद्धेरपि[3] पृथक्प्रवेशो न प्रतिपादनीयः। व्यापकस्य जीवस्य [4]स्वतः प्रवेशासम्भवेन बुद्धितादात्म्येनैव प्रवेशस्य वक्तव्यतया जीवप्रवेशप्रतिपादनेनैव बुद्धिप्रवेशस्य प्रतिपादनसिद्धेः।

**तं दुर्दर्शमिति।** दुर्दर्शत्वे हेतुः गूढमिति। स्वप्रकाशस्य कथमावृतता, तत्राह—अनुप्रविष्टमिति। बुद्धिमनुसृत्य प्रविष्टम्[5]। कुत्रेत्यत आह-गुहाहितं-हृदय-

---

1. मु. लभ्यते
2. मु. प्रधानत्वादिति
3. मु. 'अपि' नास्ति
4. आ. पृथक्
5. आ. तन्नियामकतया प्रविष्टं

प्रकरणं चेदं परमात्मनः। 'ब्रह्मविदो वदन्ति' इति च वक्तृविशेषोपादानं परमात्मपरिग्रहे घटते।

तस्मादिह जीवपरमात्मानावुच्येयाताम्।

एष एव न्यायः 'द्वा सुपर्णा सयुजा सखाया' (मु. उ. ३।१।१) इत्येवमादिष्वपि। तत्रापि हि अध्यात्माधिकारात् न प्राकृतौ सुपर्णौ उच्येते। 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इत्यदनलिङ्गात् विज्ञानात्मा भवति। 'अनश्नन्नन्योऽभिचाकशीति' इत्यनशनचेतनत्वाभ्यां परमात्मा। अनन्तरे च मन्त्रे तावेव द्रष्टृद्रष्टव्यभावेन विशिनष्टि—

'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः।

जुष्टं यदा पश्यत्यन्यमीशं अस्य महिमानमिति वीतशोकः' (मु. उ. ३।१।२) इति।

---

पुण्डरीकगुहानिहितम्। न च सा गुहा सुगमेत्याह-गह्वरेष्ठं-बाह्यविषयासङ्गरूपानेककण्टकितवृक्षयुतम्। अध्यात्मयोगः—अध्यात्मशास्त्रोदितो यः श्रवणमनननिदिध्यासनात्मकः। मत्वा - साक्षात्कृत्य। धीरः - विषयासङ्गरूपकण्टकनिरसनसमर्थः।

ननु - पञ्चाग्न्यादिवदनविषयत्वं ब्रह्मणो न सम्भवति, कर्मठानां जीवातिरिक्तब्रह्मवदनासम्भवात् - इत्याशङ्क्य, केवलकर्मजडानां तदसम्भवेऽपि ब्रह्मविविदिषोपयोगिकर्म अनुतिष्ठतां ब्रह्मवदनं सम्भवत्येवेत्यभिप्रेत्योपसंहरति—**तस्मादिति।**

**एष एव न्याय इति।** न्यायपदेन पैङ्गिवाक्यानालोचनदशा ध्वनिता[1]। **इत्येवमादिष्विति।** 'समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति' इति मन्त्रशेषः। द्वा - द्वौ सुपर्णौ - पक्षिणौ, वृक्षवाससामान्यात्। सयुजा - नियन्तृनियन्तव्यभावेन संयुक्तौ। सखाया - उपासनतत्फलप्रदानाभ्यां परस्परं प्रीणयन्तौ। समानं - एकं वृक्षं - शरीरम्। शरीरस्य वृक्षत्वेन रूपणे जलादिभिः प्ररोहशालित्वादिकं आलम्बनं द्रष्टव्यम्। परिषस्वजाते, परिष्वङ्गः - सम्बन्धः। पिप्पलं - कर्मफलम्। अभिचाकशीति - प्रकाशते।

---

1. **ध्वनितेति** पैङ्गिवाक्यालोचने सति संशयाभावेन न्यायापेक्षाया अभावात् इति भावः।

**अपर आह—'द्वा सुपर्णा' इति नेयमृक् अस्याधिकरणस्य सिद्धान्तं भजते। पैङ्गिरहस्यब्राह्मणेन अन्यथा व्याख्यातत्वात्। 'तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्वं अनश्नन्नन्यो अभीचाकशीतीत्यनश्नन्नन्यो अभिपश्यति ज्ञः तावेतौ सत्वक्षेत्रज्ञौ' इति।**

---

विशेषणाच्चेति सूत्रमतिदिशति—**अनन्तरे च मन्त्र इति**। पुरुषः - जीवः निमग्नः - देहैक्या[1]ध्यासेन ततो विविक्ततया अगृह्यमाणः। अनीशया - अनैश्वर्येण - दीनभावेन। जुष्टं - नानाविधैर्योगैः सेवितं विषयीकृतम्। व्यवहारदशायामन्यं सन्तं यदा स्वात्मतया पश्यति तदा अस्य - ईशस्य महिमानं इति - प्राप्नोति। छान्दसो गुणाभावः। मनुस्स्वायम्भुवोऽब्रवीत् इतिवत्[2]। अत्र द्रष्टुः परमेश्वरमहिमप्राप्त्युक्तेः, अन्यस्यान्यमहिमप्राप्तेरसम्भवात् वस्तुगत्या जीवब्रह्मणोरभेदसूचनात्, अन्यमित्युक्तिः व्यवहारदृष्ट्या इति अर्थात् सिध्यति। 'तदिदमप्येतर्हि य एवं वेद अहं ब्रह्मास्मीति स इदं सर्वं भवति' [बृ. उ. १-४-१०] इति सर्वात्मतारूपमहिमप्राप्तेरैक्यज्ञानसाध्यत्वावगमात् इहापि ईशसाक्षात्कार ऐक्यविषय एव पर्यवस्यति।

[3]कृत्वाचिन्तामुद्घाटयति - **अपर आहेति**। सिद्धान्तं - जीवेश्वरपरत्वम्। **अन्यथा** - बुद्धिविशुद्धसाक्षिपरतया। ननु - 'समाने वृक्षे' इत्युत्तरमन्त्रे जीवेश्वरयोः प्रतिपाद्यमानतया अस्य मन्त्रस्यापि तदैकरूप्याय जीवेश्वरपरता उपेया। न च तथासति 'तावेतौ सत्वक्षेत्रज्ञौ' इति ब्राह्मणवाक्यविरोधः। 'न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः। सत्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः॥' [भ. गी. १८-४०] इत्यत्र देवेष्वितिपदसमभिव्याहारेण सत्वपदस्य जीवपरताया दृष्टत्वात् इहापि सत्वपदं जीवपरं भविष्यति। 'यस्त्वात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते। यः करोति तु कर्माणि स भूतात्मेति चोच्यते'॥ [मनु. १२-३८] इति क्षेत्रज्ञपदस्य परमात्मविषयताया दृष्टत्वात् इहापि तथाऽस्तु-इति

---

1. आ...तुध्यानेन
2. **इतिवदिति** गुणे सति स्वायम्भव इति स्यात् इत्यर्थः।
3. **कृत्वाचिन्तां** - अभ्युपेत्यवादं, भावप्रधानो निर्देशः।

सत्वशब्दो जीवः क्षेत्रज्ञशब्दः परमात्मेति यदुच्यते, तन्न, सत्वक्षेत्रज्ञशब्दयोः अन्तःकरणशारीरपरतया प्रसिद्धत्वात्। तत्रैव च व्याख्यातत्वात्—'तदेतत्सत्वं येन स्वप्नं पश्यति, अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञः तावेतौ सत्वक्षेत्रज्ञौ' इति। नापि अस्याधिकरणस्य पूर्वपक्षं भजते। न ह्यत्र शारीरः क्षेत्रज्ञः कर्तृत्वभोक्तृत्वादिना संसारधर्मेण उपेतो विवक्ष्यते। कथं तर्हि? सर्वसंसारधर्मातीतो ब्रह्मस्वभावश्चैतन्यमात्रस्वरूपः;

---

[1]शङ्कते—सत्वशब्दो जीव इति। 'मनसस्तु परा बुद्धिः' इति स्थाने 'मनसः सत्वमुत्तमं' इति दर्शनात् सत्वशब्दो बुद्धावपि प्रसिद्धः। 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' [श्वे. उ. ६-१६] इति क्षेत्रज्ञपदं जीवेऽपि दृश्यते - इत्यभिप्रेत्य परिहरति—तन्न - सत्वक्षेत्रज्ञशब्दयोरिति। ननु प्रयोगस्य तुल्यत्वे जीवपरयोरेव ग्रहणं किं न स्यात् उत्तरमन्त्रानुसारात्, इत्यत आह—तत्रैव चेति। तावेतौसत्वक्षेत्रज्ञाविति पूर्ववाक्यस्य श्रुत्यैव उत्तरवाक्ये बुद्धिजीवपरतया व्याख्यातत्वात् न अर्थान्तरग्रहणमिति भावः।

[2]न च - 'येन स्वप्नं पश्यति तत् सत्वं' इत्यत्र येनेति इत्थंभावे तृतीया। तथा च 'यदुपहितः परमात्मा स्वप्नं पश्यति' इत्यर्थलाभे सति, जीवोपहितस्य परमात्मनः स्वप्नद्रष्टृतया, तत्सत्वमितिवाक्येन परमात्मनः स्वप्नदर्शनोपाधिभूतो जीव एव तत्पदपरामृष्टः सत्वमिति निरुच्यते। अथयोऽयमित्यत्रापि शारीरपदेन परमात्मैवोच्यत इति इदमपि वाक्यं जीवेश्वरपरमेवेति - वाच्यम्। येनेत्यस्य करणार्थत्वेन कारकविभक्तित्वसम्भवे इत्थंभावार्थकविभक्तित्वस्य 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति न्यायविरुद्धत्वात्, यःस्वप्नंपश्यतीति ऋजुनिर्देशेनैव जीवलाभसम्भवे येनेतिनिर्देशस्य निरर्थकक्लिष्टतापत्तेश्च। शारीरपदं च न ईश्वरपरम्। 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' 'अनुपपत्तेस्तु न शारीरः' इत्याद्यभियुक्तव्यवहारे जीव एव तत्प्रयोगात्।

---

1. शङ्कते इति शङ्काग्रन्थोक्तोऽयमर्थः विशिष्टाद्वैतिभिः स्वीकृतः।

2. विशिष्टाद्वैतिनां व्याख्यां आशङ्क्य निराचष्टे—नचेति।

'अनश्नन्नन्यो अभिचाकशीतीति, अनश्नन्नन्यो अभिपश्यति ज्ञः' इति वचनात्। 'तत्त्वमसि' 'क्षेत्रज्ञं चापि मां विद्धि' इत्यादिश्रुतिस्मृतिभ्यश्च। तावता च विद्योपसंहारदर्शनं एवमेवावकल्पते-'तावेतौ सत्वक्षेत्रज्ञौ, न ह वा एवंविदि किंचन रज आध्वंसते' इत्यादि।

कथं पुनरस्मिन् पक्षे 'तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्वं' इति अचेतने सत्वे भोक्तृत्ववचनमिति?

उच्यते—नेयं श्रुतिः अचेतनस्य सत्वस्य भोक्तृत्वं वक्ष्यामीति प्रवृत्ता। किं तर्हि? चेतनस्य क्षेत्रज्ञस्य अभोक्तृत्वं ब्रह्मस्वभावतां च वक्ष्यामीति। तदर्थं सुखादिविक्रियावति सत्वे भोक्तृत्वमध्यारोपयति। इदं हि कर्तृत्वं भोक्तृत्वं च सत्वक्षेत्रज्ञयोरितरेतरस्वभावाविवेककृतं

---

**सत्वे भोक्तृत्वमध्यारोपयतीति।** सत्वे भोक्तृत्वप्रक्षेपश्च, तदुपाधिकमेव जीवस्य भोक्तृत्वं स्वतस्तु जीवोऽसङ्ग एव इति द्योतनायेति। तदाह—**इदं हीति।** अयं चार्थः समानेवृक्षइत्युत्तरमन्त्रे स्पष्टीकृतः। तत्र निमग्नपदेन वृक्षाख्य[1]शरीरतादात्म्याध्यासमुपक्षिप्य तन्मूलकतया अनैश्वर्यशोकमोहात्मकसङ्गप्रतिपादनात्। [2]न चैवमपि-उत्तरमन्त्रे जीवेश्वरौ इह बुद्धिविशुद्धसाक्षिणौ प्रतिपाद्येते इति उभयोर्मन्त्रयोरनाकाङ्क्षता स्यात्-इति वाच्यम्। उत्तरमन्त्रे 'अस्य महिमानमिति' इति जीवब्रह्मणोरभेदसूचनात् तदुपयोगितया एतस्य मन्त्रस्य त्वंपदार्थशोधकत्वोपपत्तेः। [3]वस्तुतस्तु उत्तरमन्त्रे जुष्टंयदापश्यत्यन्यमीशमितिवाक्ये कस्मादन्यमित्यपेक्षिते शरीरादन्यं स्वात्मानं इत्यर्थोपगम एव युक्तः। पूर्ववाक्ये निमग्नपदेन शोकहेतुतया

---

1. मु॰ शरीरतादात्म्यमुपक्षिप्य

2. विशिष्टाद्वैतिभिरुद्भावितं दूषणं आशङ्क्य निराकरोति—**न चैवमपीति।**

3. 'जुष्टं यदा पश्यत्यन्यमीशं अस्य महिमानमिति वीतशोकः' इति वाक्यस्य विशिष्टाद्वैत्यभिमतार्थे अस्वारस्यं अद्वैत्यभिमतार्थे स्वारस्यं च उपपादयति—**वस्तुतस्तु इत्यादिना।**

कल्प्यते। परमार्थतस्तु नान्यतरस्यापि संभवति, अचेतनत्वात्सत्वस्य, अविक्रियत्वाच्च क्षेत्रज्ञस्य। अविद्याप्रत्युपस्थापितस्वभावत्वाच्च सत्वस्य सुतरां न संभवति। तथा च श्रुतिः—'यत्र वा अन्यदिव स्यात् तत्रान्योऽन्यत्पश्येत्' इत्यादिना स्वप्नदृष्टहस्त्यादिव्यवहारवत् अविद्याविषये एव कर्तृत्वादिव्यवहारं दर्शयति। 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' (बृ. उ. ४।५।१५) इत्यादिना च विवेकिनः कर्तृत्वादि[व्यवहारं वारयति] (व्यवहाराभावं दर्शयति)॥ १२॥

---

[1]शरीरतादात्म्याध्यासस्योक्तत्वेन इह वीतशोकताहेतुतया प्रतिपाद्यमानस्य दर्शनस्य शोकहेतुदर्शनविरोधिताया वक्तव्यत्वात्। देहतादात्म्यभ्रमविरोधि च देहान्यताज्ञानमेव। यदि तु, स्वस्मादन्यमीशं-परमेश्वरं पश्यतीत्यर्थो विवक्ष्येत, तदा [2]पूर्वार्धं देहनिमग्नतादिप्रतिपादकं[3] व्यर्थमेव स्यात्। उत्तरवाक्यानुपयोगात्। न हि-स्वभिन्नेश्वरज्ञानं विशोकताहेतुरित्यत्र देहतादात्म्यभ्रमःशोकहेतुरित्यस्य सामञ्जस्येन उपयोगो वर्णयितुं शक्यते। देहविविक्तात्मज्ञानं विशोकताहेतुरित्युपगमे तु उपपत्तितया पूर्वार्धं उपयुज्यते। यतो देहात्मत्वभ्रमः शोकहेतुः अतः तद्विरोधिभूतं देहाद्विविक्तात्मज्ञानं विशोकताहेतुर्भवतीति। तथा च यत् पूर्वं द्वासुपर्णेतिमन्त्रे विशुद्धात्मस्वरूपं प्रतिपादितं तज्ज्ञानस्य सोपपत्तिकं फलप्रतिपादको द्वितीयो मन्त्रः 'समाने वृक्षे' इत्यादिः। अयञ्चार्थः 'न ह वा एवंविदि किञ्चन रज आध्वंसते' इति पैङ्गिब्राह्मणवाक्यशेषेण दर्शितः। अयमंशो हि न द्वासुपर्णेतिमन्त्रनिविष्टार्थस्फुटीकरणार्थः, तत्र विद्याफलाप्रतिपादनात्। अपि तु पूर्वोत्तरमन्त्रयोर्विद्याविषयफलप्रतिपादकयोरेकवाक्यतासम्पादनार्थः। तथा च एवंविदीत्येवम्पदेन पूर्वोक्तार्थस्यैव उत्तरमन्त्रगतद्दशिधात्वर्थविषयताप्रतिपादनात् पैङ्गिब्राह्मणानुसारेणापि समानेवृक्षइतिमन्त्रे देहविविक्तमेवात्मतत्त्वं विवक्षितमित्यवगम्यते। यथा पूर्वाधिकरणं

---

1. मु. शरीरतादात्म्यस्य
2. मु. पूर्वार्धे
3. मु. प्रतिपादनं

४ अन्तरधिकरणम्

## अन्तर उपपत्तेः ॥ १३ ॥

'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति। तत् यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति' (छा. उ. ४।१५।१) इत्यादि श्रूयते। तत्र संशयः—किमयं प्रतिबिम्बात्मा अक्ष्यधिकरणो निर्दिश्यते, अथ विज्ञानात्मा, उत देवतात्मा इन्द्रियस्य अधिष्ठाता, अथ वा ईश्वर इति। किं तावत् प्राप्तम्? छायात्मा पुरुषप्रतिरूप इति। कुतः? तस्य दृश्यमानत्वप्रसिद्धेः। 'य एषोऽक्षिणि

---

मृत्यूपसेचनोपस्थितसर्वजगत्संहर्तृत्वलिङ्गस्य पारमेश्वरस्य प्रथमपठितौदन[1]पदोपस्थितभोक्तृत्वाख्यजीवलिङ्गाभिभूतत्वात् अस्पष्टब्रह्मलिङ्गम्, एवमिदमपि, पिबन्ताविति-पदेन [2]द्वित्वाश्रयगततया उपस्थितस्य चेतनत्वस्य पारमेश्वरलिङ्गस्य गुहाप्रविष्टत्वरूप-जीवलिङ्गाभिभूततया अस्पष्टब्रह्मलिङ्गम् ॥ १२ ॥

**इतिगुहाधिकरणम् ॥ ३ ॥**

वर्त्मनी-प्रान्ते। पुरुषप्रतिरूप इति [3]वाक्येन पुरुषाकारत्वात् प्रतिबिम्बस्य तस्मिन् पुरुषश्रुतिरुपपादिता भवति।

ननु छायात्मेति पूर्वपक्षोऽसङ्गतः। पुरुषादिश्रुतीनां तत्र लाक्षणिकत्वापातात्। एवं जीवदेवतापूर्वपक्षोऽप्यसङ्गतः। तत्र पुरुषात्मपदयोरुपपत्तावपि अमृताभयब्रह्मपदानां [4]असाङ्गत्यापातात्। न च-जीवदेवतयोः नित्यतया अमृतत्वं [5]बृह्मणतया ब्रह्मत्वं मोक्षदशाभिप्रायेणाभयत्वं उपपद्यत इति-वाच्यम्। अमृतपदं हि वेदान्तेषु नित्यमुक्तत्वाभिप्रायं प्रयुज्यते, न तु मरणाभावमात्राभिप्रायम्। आत्मादिपदैरेव तस्य अर्थसिद्धत्वात्। तादृशं चामृतत्वं न जीवदेवतयोरुपपद्यते।

---

1. मु. पदोपस्थापित
2. आ. द्वित्वाश्रयोपस्थितस्य ; मु. द्वित्वाश्रयतयोपस्थितस्य
3. वाक्येन—भाष्यवाक्येन।　　4. आ. असङ्गतत्वात्
5. मु. ब्राह्मणतया

[1]बृह्मणत्वाभिप्रायेण अनीश्वरे ब्रह्मपदं तु काचित्कम् । ततश्च अतिप्रसिद्धपरमात्मग्रहणे सम्भवति न ब्रह्मपदेन अनीश्वरग्रहणं न्याय्यम् । न च परमेश्वरपक्षेपि ' य एषोऽक्षिणि पुरुषो दृश्यते ' इत्युपक्रमगतमक्षिरूपाश्रयाधारत्वं चाक्षुषज्ञानविषयत्वं च दृशिपदोक्तं न सङ्गच्छत इति वाच्यम् । एतादृशशङ्कायाः, अन्तस्तद्धर्माधिकरण एव, उपासनार्थः स्थानविशेषनिर्देशः ' दृश्यते ' इति उपासकसाक्षात्काराभिप्रायं - इत्येवंप्रतिपादनेन निरस्तत्वात् । उत्तरत्र च बहवो वामनीत्वादयो ब्रह्मासाधारणधर्माः श्रूयन्ते । तस्मादसङ्गतोऽयं पूर्वपक्ष इति । तथा च अन्तस्तद्धर्माद्यधिकरणैरेव गतत्वात् नारम्भणीयमिदमधिकरणमिति चेत्—

उच्यते—' य एषोऽक्षिणि पुरुषो दृश्यते ' इति यथाश्रुतं प्रतिबिम्ब एव स्वरसम् । [2]अन्तरादित्यवाक्ये तु न प्रतिबिम्बपूर्वपक्षः सम्भवति । आदित्ये प्रतिबिम्बदर्शनस्य [3]अप्रसिद्धत्वात् । तथा च प्रथमोपस्थितप्रतिबिम्बानुसारेण आत्मादिश्रुतयः तत्रैव यथाकथञ्चिद्व्याख्येयाः ।

नन्वेवमपि अन्तरादित्यविद्यान्तर्गताक्षिवाक्ये 'अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैव ऋक्' इत्यत्रापि प्रतिबिम्बसम्भवात् परमेश्वरनिर्णयो न स्यादिति चेत्, मास्तु । एतदधिकरणे तस्यापि विषयत्वोपपत्तेः ।

ननु प्रथमश्रुताया अपि गायत्रीश्रुतेः उत्तरभाविभिरपि सर्वभूतपादत्वादिभिर्ब्रह्मपरताऽऽस्थिता भूयोऽनुग्रहन्यायात्, एवं प्रकृतेऽपि किं न स्यात् ?

भवेदेवं 'य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैव ऋक्' इत्यत्र। तत्र हि उत्तरत्र ऋगाद्यात्मत्वं ब्रह्मलिंङ्गं समाम्नायते । न तु प्रकृते सम्भवति। अत्र आत्मादिश्रुतयः ' एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति' इति इतिपदशिरस्काः । तथा च ' नाम ब्रह्मेत्युपासीत ' इत्यत्रेव न स्वार्थसत्तापेक्षिण्यः, तादृशदृष्टिविधानार्थत्वात् । यद्यपि च उत्तरत्र ' एष उ एव वामनीः ' इत्यादौ इतिशब्दो न श्रूयते, तथाऽपि पूर्वत्र श्रुतस्य तत्राप्यनुषङ्गो भविष्यति । दृष्टिविधानप्रायपाठात् तेषामपि [4]तादृशविधानार्थत्वेनोपक्षेपोपपत्तेः ।

---

1. मु. ब्राह्मण
2. मु. अन्तरादित्यादि
3. मु. असिद्धत्वात्
4. मु. तादृशदृष्टिविधानार्थ

पुरुषो दृश्यते' इति च प्रसिद्धवदुपदेशात्। विज्ञानात्मनो वा अयं निर्देश इति युक्तम्। स हि चक्षुषा रूपं पश्यन् चक्षुषि सन्निहितो भवति। आत्मशब्दश्च अस्मिन् पक्षे अनुकूलो भवति। आदित्यपुरुषो वा चक्षुषोऽनुग्राहकः प्रतीयते। 'रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः' (बृ.उ. ५।५।२) इति श्रुतेः, अमृतत्वादीनां च देवतात्मन्यपि कथंचित्संभवात्। नेश्वरः, स्थानविशेषनिर्देशात् - इत्येवं प्राप्ते—

---

एवं सति जीवदेवतापूर्वपक्षस्य कथमुत्थानम्? तत्र उपक्रमस्य 'य एषोऽक्षिणि पुरुषो दृश्यते' इत्यस्य स्वारस्यासम्भवात्।

न कथमपि; तादृशपूर्वपक्षस्य वैभवप्रदर्शनमात्रार्थत्वात्।

ननु प्रतिबिम्बपूर्वपक्षे पुरुषश्रुतिरितिपदरहिता बाधिका भविष्यति, न— 'अक्षिणि' 'दृश्यते' इति पदयोः प्रतिबिम्बे स्वरसयोः मध्यपतितायास्तस्याः तदपेक्षया दुर्बलतया प्रतिबिम्ब एव नयनोपपत्तेः।

नन्वेवमपि पूर्ववाक्यानुसारेण अस्य ब्रह्मपरता भविष्यति। एवं हि पूर्ववाक्ये उपाख्यायते—उपकोसलः सत्यकामे ब्रह्मचर्यमुवास, तं च उपकोसलं सत्यकाम आचार्यो अग्निशुश्रूषायामत्यन्तमवहितमपि असमावृत्यैव अन्यान् ब्रह्मचारिणः समावृत्य प्रोवास, ततोऽतिखिन्न उपकोसलः अग्निशुश्रूषानिरत एव अशनं न कृतवान्, स च आचार्यजायया भोजनार्थमुपलालितोऽपि तामुवाच, बहव इमे अस्मिन् पुरुषे कामा नानात्ययाः व्याधिभिः परिपूर्णोऽस्मि नाशिष्यामीति। तमतिखिन्नमुपलभ्य उपचारतोषिता अग्नयः सम्भूयोपदिदिशुः, प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति, स होवाच विजानाम्यहं यत् प्राणो ब्रह्मेति, कञ्च तु खं च न विजानामीति, ते होचुः- यद्वाव कं तदेव खं यदेव खं तदेव कमिति, प्राणञ्च हास्मै तदाकाशञ्चोचुः, अथ हैनं गार्हपत्यान्वाहार्यपचनाहवनीयाः प्रत्येकं, य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति, य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति, य एष विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति च यथाक्रममुपदिश्य, स्वविद्याफलं च 'स य एतदेवं विद्वानु-

चास्ते अपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्ते उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च' इत्युक्त्वा उपसञ्जह्रुः- एषा सोम्य तेऽस्मद्विद्या आत्मविद्या च आचार्यस्तु ते गतिं वक्तेति । आजगाम हास्याचार्यः, तमाचार्योऽभ्युवाद, 'उपकोसल ३ ' इति, भगव इति ह प्रतिशुश्राव, ब्रह्मविद इव सोम्य ते मुखं भाति कोनु त्वाऽनुशशासेति, कोनुमाऽनुशिष्यादित्युपकोसलेऽपह्नुवाने, निर्बन्धेन स आचार्यभयेनकम्पमानानग्नीन् पुरस्स्थितान् दर्शयति स्म, अथ अग्निभिरुपदिष्टमिति आचार्यो निर्धार्य, किं नु सोम्य किल तेऽवोचन्निति पप्रच्छ, अग्नीनां यथोपदेशं उपकोसलेन निवेदितः, लोकान् वाव किल सोम्य तेऽवोचन् अहं तु ते तद्वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते – इति प्रतिज्ञाय उवाच ' य एषोऽक्षिणि पुरुषो दृश्यते ' इत्यादि । तथा च पूर्ववाक्ये ब्रह्मणः प्रस्तुतत्वात् यः एषः इति सर्वनाम्नोः प्रकृतपरामर्शितास्वारस्येन ब्रह्मपरतावश्यम्भावात् अक्षिपुरुषो ब्रह्मैवेति सिद्धौ ' अक्षिणि दृश्यते ' इति तत्रैव [1]शास्त्रदृष्टयभिप्रायं कथञ्चिद्योजनीयम्-इति चेत् —

न - कंब्रह्मेत्यादिवाक्ये हि न ब्रह्मोपासनं विवक्षितम् । अपि तु, नामादिषु यथा ब्रह्मदृष्टिः तथा वैषयिकसुखे कशब्दोदिते आकाशे च खशब्दोदिते ब्रह्मदृष्टिर्विवक्षिता । सिद्धान्तिनाऽपि हि ' प्राणो ब्रह्म ' इति वाक्ये प्राणेब्रह्मदृष्टिरित्येव स्वीकृतम् । तत् कस्य हेतोः । प्राणञ्चहास्मैतदाकाशञ्चोचुरिति प्राणप्राधान्येनोपसंहारदर्शनात् । एवं सति कंब्रह्मेत्यादिवाक्यार्थस्यापि [2]आकाशञ्चोचुरिति आकाशप्राधान्येनोपसंहारात् [3]तत्रापि प्रतीकविवक्षैव भविष्यति । आकाशपदस्य कखशब्दोदितोभयलक्षकत्वात् । यदि तु कंब्रह्मेत्यादिवाक्ये ब्रह्मैव प्राधान्येन विवक्षितमिति निर्बन्धः, तथाऽपि अग्निविद्याव्यवधानात् न यः एषः इति सर्वनाम्नोस्तत्परामर्शकता । तथा च परामर्शयोग्यस्य प्रकृतस्य अभावात् प्रकरिष्यमाणप्रतिबिम्बपरामर्शकतैव आस्थेयेति पूर्वपक्षाभिप्रायः । ततश्च यथा पूर्वाधिकरणे पिबन्तावित्युपक्रम एव द्वित्वाधारतया सजातीयस्येश्वरस्य अवगतत्वेन गुहानिहि-

1. मु. शास्त्रीयदृष्टयभि

2. आ. तं च आकाशं च 3. आ. तदपि

ब्रूमः—परमेश्वर एव अक्षिण्यभ्यन्तरः पुरुष इहोपदिष्ट इति। कस्मात्? उपपत्तेः। उपपद्यते हि परमेश्वरे गुणजातमिहोपदिश्यमानम्। आत्मत्वं तावत् मुख्यया वृत्त्या परमेश्वरे उपपद्यते। 'स आत्मा तत्त्वमसि' इति श्रुतेः। अमृतत्वाभयत्वे च तस्मिन्नसकृच्छ्रुतौ श्रूयेते। तथा परमेश्वरानुरूपमेतदक्षिस्थानम्। यथा हि परमेश्वरः सर्वदोषैरलिप्तः अपहतपाप्मत्वादिश्रवणात्, तथा अक्षिस्थानं सर्वलेपरहितमुपदिष्टम्,

---

तत्वादिकं उत्तरभाविपरमेश्वर एव व्याख्यातम्, एवमत्राप्युपक्रमावगतप्रतिबिम्बानुसारेणैव उत्तरभाविनामात्मत्वादीनां पूर्वपक्षे नयनमिति [1]सङ्गतिः। **उपपद्यते हि परमेश्वरे गुणजातमिहोपदिश्यमानमिति।** अयं भावः—मनोब्रह्मेत्यादौ इतिशब्दस्य उपासीतेतिपदसमभिव्याहारेण उपासनाकारसमर्पकतया स्वार्थविवक्षानिर्बन्धविघातकत्वेऽपि नेह इतिशब्दस्तद्विघातकः। प्रत्युत उपाध्यायवचनसमभिव्याहारात् 'वेदाः प्रमाणमिति प्रामाणिका आहुः' इत्यादिवत् 'एष आत्मेति होवाच प्रकृत आचार्यः' इति इतिपदेन तस्य अतीवप्रामाणिकतैव ध्वन्यते। तथा च उत्तरभावित्वेऽपि भूयस्त्वात् आत्मत्वाद्यनुसारेणैव उपक्रमगतं दृश्यतेऽक्षिणीत्येतदेव [2]शास्त्रदृष्ट्यभिप्रायं व्याख्येयमिति। संयद्वामत्वं प्राप्तसकलकामत्वम्। वामनीत्वं - भक्तान् प्रति कामप्रापकत्वम्। भामनीत्वं - [3]सर्वत्रप्रसिद्धत्वम्। न चैते अन्यथा नेतुं शक्याः। 'सर्वाण्येवैनं वामान्यभिसंयन्ति' इत्यादिना तत्क्रतुन्यायेन तात्पर्यलिङ्गस्य फलस्य कीर्तनात्। एवं [4]अमृताभयत्वोपदर्शितं सकलहेयविनिर्मुक्तत्वमपि न अन्यथा नेतुं शक्यम्। पुष्करपलाशवाक्येन उपासकेऽपि पापोपलक्षितसकलहेयसम्बन्धाभावरूपफलाम्नानात्, लोकप्रसिद्धस्यापि अक्ष्णो घृताद्यलिप्तत्वस्य प्रकृतपुरुषस्थानत्वप्रयुक्तताप्रतिपादकात् 'तद्यद्यप्यस्मिन् सर्पिर्वोदकं वा....' इत्यर्थवादाच्च ॥ १३ ॥

---

1. **सङ्गतिः**—दृष्टान्तसङ्गतिः। मु. सङ्गतिरुपपद्यते। परमेश्वरे
2. मु. शास्त्रीयदृष्ट्यभि
3. मु. सर्वप्रसिद्धत्वं
4. मु. अमृताभयत्वशब्दोपदर्शितं आ. अमृताभयत्वशब्दोदितं

'तद्यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति' इति श्रुतेः। संयद्वामत्वादिगुणोपदेशश्च तस्मिन्नवकल्पते। 'एतं संयद्वाम इत्याचक्षते, एतं हि सर्वाणि वामान्यभिसंयन्ति' 'एष उ एव वामनीः एष हि सर्वाणि वामानि नयति' 'एष उ एव भामनीः एष हि सर्वेषु लोकेषु भाति' (छा. उ. ४।१५।२,३,४) इति च। अतः उपपत्तेः अन्तरः परमेश्वरः ॥ १३ ॥

## स्थानादिव्यपदेशाच्च ॥ १४ ॥

कथं पुनः आकाशवत्सर्वगतस्य ब्रह्मणः अक्ष्यल्पंस्थानमुपपद्यत इति। अत्रोच्यते—भवेदेषाऽनवक्लृप्तिः, यद्येतदेव एकं स्थानं अस्य निर्दिष्टं भवेत्। सन्ति हि अन्यान्यपि पृथिव्यादीनि स्थानान्यस्य निर्दिष्टानि 'यः पृथिव्यां तिष्ठन्' (बृ. उ. ३।७।३) इत्यादिना। तेषु हि चक्षुरपि निर्दिष्टम्—'यश्चक्षुषि तिष्ठन्' इति। 'स्थानादिव्यपदेशात्' इति आदिग्रहणेन एतद्दर्शयति—न केवलं स्थानमेवैकमनुचितं ब्रह्मणो निर्दिश्यते, किं तर्हि? नाम रूपं इत्येवंजातीयकमपि अनामरूपस्य ब्रह्मणः अनुचितं निर्दिश्यमानं दृश्यते—'तस्योदिति नाम' 'हिरण्यश्मश्रुः' (छा. उ. २।३।७,१६) इत्यादि। निर्गुणमपि सत् ब्रह्म नामरूपगतैर्गुणैः सगुणं उपासनार्थं तत्रतत्रोपदिश्यत इत्येतदप्युक्तमेव। सर्वगतस्यापि ब्रह्मण उपलब्ध्यर्थं स्थानविशेषो न विरुध्यते सालग्राम इव विष्णोः इत्येतदप्युक्तमेव ॥ १४ ॥

---

एतदप्युक्तमेवेति। निचाय्यत्वादेवमित्यत्रेति भावः। न च तर्हि तेनोक्तत्वात् इदं व्यर्थमेव स्यादिति वाच्यम्। आदिपदेन नामरूपादिग्रहणात्, यथा नामरूपरहितमपि तत्सम्बन्धितया उपासनार्थमुपदिश्यते एवं व्यापकमपि उपासनार्थं अक्ष्यादिगततया निर्दिश्यत इति श्रौतदृष्टान्तकथनेन तस्यैवार्थस्य दृढीकरणार्थत्वात् ॥ १४ ॥

## सुखविशिष्टाभिधानादेव च ॥ १५ ॥

**अपि च नैवात्र विवदितव्यम्-किं ब्रह्म अस्मिन्वाक्येऽभिधीयते न वेति। सुखविशिष्टाभिधानादेव ब्रह्मत्वं सिद्धम्। सुखविशिष्टं हि ब्रह्म यत् वाक्योपक्रमे प्रक्रान्तं 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति, तदेव इहाभिहितं, प्रकृतपरिग्रहस्य न्याय्यत्वात्। 'आचार्यस्तु ते गतिं वक्ता' (छा. उ. ४।१४।१) इति च गतिमात्राभिधानप्रतिज्ञानात्। कथं पुनः वाक्योप-**

---

एवं ब्रह्मणः प्रकृतत्वाभावं पूर्वपक्ष्युक्तं अभ्युपगम्यैव उपपत्त्या अक्षिवाक्यस्य ब्रह्मपरत्वमुपपादितम्। इदानीं ब्रह्मणः प्रकृतत्वं साधयति—सुखविशिष्टाभिधानादेव चेति।

'कं ब्रह्म खं ब्रह्म' इति वाक्यं ब्रह्मोपासनापरमेवेति कथंपुनरित्यादिना उपपादयिष्यते।

अस्तु ब्रह्मप्रधानकमग्निवाक्यम्, अथापि न आचार्यवाक्यगतेन यत्पदेन तस्य परामर्शः, भिन्नवक्तृकतया यत्पदेन परामर्शासम्भवात्-इत्याशङ्क्याह— **आचार्यस्तु ते गतिं वक्तेति चेति**। इदं ह्यग्नीनां वाक्यं आचार्येणवक्ष्यमाणस्यार्थस्य स्वोपदिष्टार्थसम्बन्धिताप्रतिपादनार्थम्। तथा च अन्यत्र वक्त्रन्तरप्रयुक्तवाक्यार्थस्य सर्वनाम्ना परामर्शासम्भवेऽपि इह वचनेन एकवाक्यताघटनात् सम्भवति परामर्श इति भावः।

ननु-तावताऽपि आचार्येण वक्ष्यमाणाया एव गतेः अग्न्युपदिष्टार्थसम्बन्धो भविष्यति, न तु स्थानादेः। स्थानादिकं आचार्योपदिष्टायामन्यस्यामेवोपासनायामन्वितमस्तु। न च—यद्याचार्येणोपासनान्तरमुच्येत, तथासति आचार्योपदिष्टायामुपासनायामन्विताया गतेः अग्न्युपदिष्टोपासनान्वयासम्भवात् आचार्यस्तु तेगतिमित्यादिवाक्यमनर्थकमेव स्यात्-इति वाच्यम्। 'आचार्य उपासनान्तरं वर्णयिष्यति, तत्र यां गतिं वर्णयिष्यति सैव अस्मदुपदिष्टोपासनायां द्रष्टव्या' इति अग्न्यभिप्रायकल्पनोपपत्तेः। अथोच्येत-अग्निभिः ब्रह्मोपासना किञ्चिद्गुणयुक्ता वर्णिता, तत्र आचार्योगतिंवक्ष्यतीत्याचार्यवक्तव्यतया गतिरवशेषिता। आचार्यस्तु स्वयं अन्यान् कांश्चित् गुणान् पूरयित्वा अग्न्यवशेषितां गतिमपि वदति इत्येव

कुतो न कल्प्यते, एवं हि सति यत्पदस्य प्रकृतपरामर्शकता उपासनाद्वयकल्पन-प्रयुक्तगौरवाभावश्चेति अनुकूलं भविष्यतीति; नैवं सम्भवति-'एषा सोम्य तेऽस्मद्विद्या आत्मविद्या च' इति साकल्येन स्वोक्तांब्रह्मविद्यामुपसंहृत्य गतिमात्रस्य परिशेषिततया, आचार्येण तत्रापि केचन गुणा उच्यन्त इति कल्पने, अग्नि-वाक्यस्य बाधितार्थत्वापत्तेः। अतो न सर्वनामयत्पदानुसारेण अक्षिपुरुषस्य ब्रह्मत्वसिद्धिरिति चेत्—

उच्यते - अस्त्वग्निवाक्यं अस्यामुपासनायां गत्यतिरिक्तं वक्तव्यं नास्तीत्य-स्मिन्नंशे बाधितार्थम्। 'लोकान् वाव किल ते सोम्यावोचन् अहं तु ते तद्वक्ष्यामि' इति [1]आचार्येण 'अपहते पापकृत्यां लोकी भवति इत्यादिवाक्यैः केचन लोकाः प्रतिपादिताः, न तु साकल्येन ब्रह्म प्रतिपादितमग्निभिः' इत्यग्निवाक्यनिन्दा-पूर्वकमेव 'अहं तत् - अग्निभिरुक्तमेव तु केनचिद्विशेषेणोपेतं वक्ष्यामि' इति प्रतिज्ञानात्। वस्तुतस्तु, [2]अग्नीनामपि आचार्यो विशेषसहितामेव गतिं वक्ष्य-तीत्यभिप्रायः। यतः अग्निवाक्ये 'आचार्यस्तु ते गतिं वक्ता' इति तुशब्दो दृश्यते। स हि विशेषार्थः।

न च - तस्य [3]विशेषार्थत्वेऽपि, यथा 'यज्ञदत्तो निर्धनः देवदत्तस्तु धनवान्' इति वाक्ये धनवत्तारूपोपात्तविशेषार्थकतैव, न त्वनुपात्तो धनगतः कश्चिद्विशेषस्तदर्थः, स तु तत्रैव प्रतीयते यत्र 'देवदत्तो धनवान् भवति, यज्ञ-दत्तस्तु धनवान्' इत्युभयत्राप्युपात्तोऽर्थोऽविशिष्टो भवति। प्रकृते तु उपात्तस्य गतिवक्तृत्वरूपस्य विशेषस्य अग्निष्वभावेन उपात्तविशेषमादायैव तुशब्दचारि-तार्थ्येन गतिसम्बन्धी अन्योऽपि कश्चिद्विशेषः आचार्यस्तुतेगतिंवक्तेतिवाक्यानुपात्तः अग्नीनामाभिप्रायिक इति कथं सम्भवतीति - वाच्यम्।

आचार्यस्तुतेगतिंवक्तेति वाक्यं हि न गतेर्वक्तव्यताभिप्रायम्। तथा सति, यथा षोडशकलविद्यादिषु अनुक्ताऽपीयं पञ्चाग्निविद्यायां 'ये चेमेऽरण्ये' इत्यादिवचनाम्नानसिद्धैव 'अनियमस्सर्वासां' इति न्यायेन प्राप्नोति एवमुपको-

---

1. आचार्येणेति प्रतिज्ञानात् इत्यनेन सम्बद्ध्यते।
2. अग्नीनामपीति अभिप्रायः इत्यनेन सम्बद्ध्यते।
3. विशेषार्थत्वेऽपीति 'उपात्तविशेषमादायैव' इत्याद्युत्तरेणान्वेति।

क्रमे सुखविशिष्टं ब्रह्म विज्ञायत इति। उच्यते—'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इत्येतदग्निवचनं श्रुत्वा उपकोसल उवाच—'विजानाम्यहं यत् प्राणो ब्रह्म, कं च तु खं च न विजानामि' इति। तत्रेदं प्रतिवचनम्—यद्वाव कं तदेव खं यदेव खं तदेव कम्' (छा. उ. ४।१०।५) इति। तत्र खंशब्दो भूताकाशे निरूढो लोके। यदि तस्य विशेषणत्वेन कंशब्दः सुखवाची नोपादीयेत, तथा सति 'केवले भूताकाशे ब्रह्मशब्दो नामादिष्विव प्रतीकाभिप्रायेण प्रयुक्तः' इति प्रतीतिः स्यात्। तथा-कंशब्दस्य विषयेन्द्रियसंपर्कजनिते सामये सुखे प्रसिद्धत्वात् यदि तस्य खंशब्दो विशेषणत्वेन नोपादीयेत लौकिकं सुखं ब्रह्मेति प्रतीतिः स्यात्।

---

सलविद्यायामपि प्राप्तिसम्भवात् वचनवैयर्थ्यापत्तेः। किं तु तुशब्दार्थभूतगति-सम्बन्धिविशेषस्यैव वक्तव्यताभिप्रायम्। स च विशेष आचार्येण यो वक्ष्यते। स सर्वोऽपि तुशब्देन परिगृहीत एव भवति। अतो न आचार्यवाक्यं उपास्यान्तर-निर्देशेन अन्योपासनापरम्। अपि तु अग्न्युपदिष्टे एव ब्रह्मोपासने किञ्चि-द्विशेषाभिधानपरम्। अत एव 'अहं तु ते तद्वक्ष्यामि' इत्यत्र तत्पदमपि समञ्जसं भवति। अस्मिन् पक्षे 'लोकान् वाव किल ते सोम्यावोचन्' इत्या-चार्यवाक्यमपि अग्निवाक्यस्य न्यूनताभिप्रायेण निन्दापरं न भवति। अपि तु 'आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्' [छा. उ. ४-९-३] इति वचनानुसारेण 'अग्नयः किल तुभ्यं लोकानवोचन् तावता न तवोपासनं सफलं भविष्यतीत्यतोऽग्निभिरुक्तमेवाग्न्यवशेषितविशेषसहितं अहमेव वक्ष्यामि सफलतायै' इति प्रतिपादनपरम्। भाष्ये गतिमात्राभिधानप्रतिज्ञानादित्यत्र मात्रपदं [1]उपा-सनान्तरव्यावृत्त्यर्थम्, न तु गतिसम्बन्धिनां विशेषाणामपि।

**प्राणो ब्रह्म कं ब्रह्म खंब्रह्मेत्येतदग्निवचनमित्यादि।** उपकोसल-प्रश्नस्य विजानाम्यहमित्यादेः अयमभिप्रायः—विजानाम्यहं प्राणस्य ब्रह्मत्वदृष्टिविधा-नार्थमेतत् प्राणोब्रह्मेतिवाक्यमिति। कंब्रह्मखंब्रह्मेति तु किं प्रतीकाभिप्रायं उत

---

1. आ. उपासनान्तरनिर्देशपूर्वकमुपासनान्तर

**इतरेतरविशेषितौ तु कंखंशब्दौ सुखात्मकं ब्रह्म गमयतः। तत्र द्वितीये ब्रह्मशब्दे अनुपादीयमाने कंखंब्रह्मेत्येवोच्यमाने कंशब्दस्य विशेषणत्वे-नैवोपयुक्तत्वात् सुखस्य गुणस्य अध्येयत्वं स्यात्, तन्माभूदिति उभयोः कंखंशब्दयोः ब्रह्मशब्दशिरस्त्वं 'कं ब्रह्म खं ब्रह्म' इति। इष्टं हि सुखस्यापि गुणस्य गुणिवद्ध्येयत्वम्। तदेवं वाक्योपक्रमे सुखविशिष्टं ब्रह्म उपदिष्टम्।**

---

सगुणध्यानाभिप्रायमिति न जानामि—इति। उत्तरं च, सगुणं ब्रह्मैव अस्माभिर्विवक्षितमित्यभिप्रायम्। कथमेतदवगम्यते ? उच्यते—उत्तरत्र हि कंखंशब्दौ व्यापकसुखस्वरूपसुखस्वरूपव्यापकाभिप्रायौ अग्निभिर्व्याख्यातौ। ततश्च, व्यापकत्वे सति सुखत्वं सुखत्वे सति व्यापकत्वं ब्रह्मधर्मौ सम्भवत इति किमर्थं आरोपविषयकोपासना समाश्रयणीया। अपि च आरोपेण प्रतीकाभिप्रायत्वे समाश्रयणीये 'तथोपासीत' इत्येव अग्नीनामुत्तरं स्यात्, न तु ब्रह्मणि सम्भवद्धर्मपरतया। एवं सति 'एषा सोम्य तेऽस्मद्विद्या आत्मविद्या च' इति उपसंहारेऽपि आत्मविद्याशब्द उपपन्नो भवति।

न चैवंसति 'प्राणं च हास्मै तदाकाशञ्चोचुः' इति अवान्तरोपसंहारे [1]आकाशपदमसमञ्जसं स्यात्। तवाप्यसमञ्जसं स्यात्। आकाशंसुखंचोचुरिति हि तदा स्यात्। न चाकाशपदमेव सुखलक्षकमपीति। तथासति औपसंहारिकात्मपदानुसारेण निरूढ्या ब्रह्मपरमेव आकाशपदमस्तु।

अपि च उपक्रमे ब्रह्मचर्यमुवासेति श्रुतम्। न चेदं ब्रह्मचर्यं वेदग्रहणार्थम्। उत्तरत्र वेदाध्ययनस्य उपकोसलेऽदर्शनात्। अतः यथा प्रजापतिविद्यायां 'एकशतं ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास' इति ब्रह्मविद्याग्रहणोपयोगिगुरुकुलवासाभिधायि, एवमिदमपि तत्परमेव भविष्यति। अत एव च चिरकालं गुरुकुले क्लिष्टाय ब्रह्मविद्या वक्तव्येति मनसि निधाय अन्यान् माणवकान् समावर्त्य एनमसमावर्त्यैव आचार्यः प्रोवासेति श्रूयते। उपकोसलस्य च लौकिकेषु कामेषु व्याधित्वप्रतिपादनं आत्मविद्यार्थितां सूचयति। अतः कंब्रह्मेतिवाक्यं आत्मविद्यामेव विधत्त इति श्लिष्यते।

---

1. **आकाशपदमिति** ब्रह्मपदमेव समञ्जसं, न तु भूताकाशवाचि आकाशपदं इत्यर्थः।

प्रत्येकं च गार्हपत्यादयोऽग्नयः स्वं स्वं महिमानं उपदिश्य 'एषा सोम्य ते अस्मद्विद्या आत्मविद्या च' इत्युपसंहरन्तः पूर्वत्र ब्रह्म निर्दिष्टमिति ज्ञापयन्ति। 'आचार्यस्तु ते गतिं वक्ता' इति च गतिमात्राभिधानप्रतिज्ञानं अर्थान्तरविवक्षां वारयति। 'यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते' (छा. उ. ४।१४।३) इति च अक्षिस्थानं पुरुषं विजानतः पापेनानुपघातं ब्रुवन् अक्षिस्थानस्य

---

न चैवमपि अग्निविद्याव्यवधानात् कथं यत्पदस्य ब्रह्मपरामर्शकतेति वाच्यम्। अग्निविद्यायाः ब्रह्मविद्याङ्गत्वेन व्यवधायकत्वाभावात्। असम्बन्धिपदव्यवधानस्यैव [1]सर्वनामपरामर्शविघटकत्वात्। न च—ब्रह्मप्राप्तिरूपं फलं गतिवाक्यावगतम्। गतिश्च 'एषा सोम्य तेऽस्मद्विद्या आत्मविद्या च' इत्युक्त्वा 'आचार्यस्तु ते गतिं वक्ता' इति विद्याद्वयसन्निधौ निर्दिष्टा। तथा च उभयोरपि फलवत्त्वे कथमङ्गप्रधानभावव्यवस्थेति—वाच्यम्। गतेर्ब्रह्मप्रापिकायाः तत्क्रतुन्यायेन ब्रह्मोपासनायामेवान्वययोग्यतया वचनं विना पञ्चाग्निविद्यायामिव प्रकृताग्निविद्यायामन्वयासम्भवात्। अतो ब्रह्मप्राप्तिरूपस्य फलस्य ब्रह्मविद्यान्वयितया तस्याः प्राधान्येन अग्निविद्या तदङ्गभूतैव। न च वाच्यं ब्रह्मप्राप्तिरूपस्य फलस्याभावेऽपि 'अपहते पापकृत्यां' इत्यादिवाक्यसमाम्नातं फलं अग्निविद्यायामस्तीति कथमङ्गता स्यादिति। तस्य फलस्य प्राकरणिकब्रह्मविद्याङ्गत्वानुकूलत्वेन तद्विघटकत्वाभावात्। अग्निविद्यानां कथं ब्रह्मोपासनोपकारकता-इत्यपेक्षायां अपहतेपापकृत्यामिति [2]पापनिवृत्तिद्वारं प्रतिपाद्यते। 'लोकीभवति' इत्यनेन अग्न्युपासनया झटित्यर्चिरादिमार्गप्रथमपर्वभूतस्वर्लोकप्राप्तिः[3]। अत एव अस्यामुपासनायां 'यदु चैवास्मिञ्छव्यं कुर्वन्ति यदु च न तेऽर्चिषमेवाभिसम्भवन्ति' इति झटिति अन्त्यकर्मनियमानपेक्षयैवार्चिर्लोकप्राप्तिः अवगम्यते। सर्वमायुरेतीत्यादिभिश्च आयुस्साकल्यं प्रसिद्धतयाजीवनं सन्ततेरभिवृद्धिः इहलोकपरलोकयोरग्निपरिपाल्यत्वं चेति यानि फलानि प्रतिपाद्यन्ते,

---

1. आ. सर्वत्र परामर्श 2. मु. पापनिवृत्तिद्वारा

3. स्वर्लोकप्राप्तिरिति प्रतिपाद्यते इत्यनुषज्यते। मु. स्वर्लोकप्राप्तिः

पुरुषस्य ब्रह्मत्वं दर्शयति । तस्मात् प्रकृतस्यैव ब्रह्मणः अक्षिस्थानतां संयद्वामत्वादिगुणतां चोक्त्वा अर्चिरादिकां तद्विदो गतिं वक्ष्यामीत्युपक्रमते 'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच' इति ॥ १५ ॥

## श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥

इतश्च अक्षिस्थानः (पुरुषः) परमेश्वरः, यस्मात् श्रुतोपनिषत्कस्य श्रुतरहस्यविज्ञानस्य ब्रह्मविदो या गतिः देवयानाख्या प्रसिद्धा श्रुतौ 'अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्यया आत्मानमन्विष्य आदित्यमभिजयन्ते एतद्वै प्राणानामायतनं एतदमृतमभयमेतत्परायणं एतस्मान्न पुनरावर्तन्ते' (प्र. उ. १।१०) इति, स्मृतावपि—'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः' (भ. गी. ८।२४) इति, सैव इह अक्षिपुरुषविदोऽभिधीयमाना दृश्यते—'अथ यदु चैवास्मिन् शव्यं कुर्वन्ति यदि

---

तानि उपासनोपकारकाण्येव । आयुस्साकल्यं उपासनाया दीर्घकालानुष्ठाने उपयुज्यते, प्रसिद्धिः सुखेनान्नादिप्राप्तिद्वारा चित्तविक्षेपाभावे, सन्ततेरभिवृद्धिस्तु अवशिष्टकर्मपूरणेन, अग्निपरिपालनं इहलोके रोगादिनिवृत्तिद्वारा परलोके अर्चिरादिप्रापकतया - इति युक्तमेव अग्निविद्यायाः परब्रह्मविद्याङ्गत्वम् । तत् सिद्धं पूर्ववाक्ये ब्रह्मण एव प्राधान्यात् तस्य अक्षिवाक्ये सर्वनामपरामर्शात् उपास्यत्वमिति ॥ १५ ॥

इदं सूत्रं अक्षिपुरुषस्य परमेश्वरत्वे लिङ्गदर्शनपरतया व्याचष्टे—**इतश्चाक्षिस्थानः परमेश्वर इतिं । अथोत्तरेणेति ।** आत्मानम् - आदित्यमण्डलान्तर्वर्तिहिरण्यगर्भान्तर्यामिभूतं सर्वस्यात्मानम् । अन्विष्य - ध्यात्वा । आदित्यम् - आत्मशब्दोदितम् । अभिजयन्ते - प्राप्नुवन्ति । प्राणानां - व्यष्टिभूतानाम् । आयतनं - समष्टिरूपतया सर्वप्राणनियामकम् । एतस्मान्नपुनरावर्तन्तइति क्रममुक्त्यभिप्रायम् । **अग्निर्ज्योतिरिति ।** अग्निः - अर्चिर्देवता । ज्योति--सूर्यः । यद्यपि श्रुतौ संवत्स-

च न अर्चिषमेवाभिसंभवन्ति' इत्युपक्रम्य 'आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत् पुरुषोऽमानवः स एनान् ब्रह्म गमयति एष देवपथो ब्रह्मपथः एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' (छा. उ. ४।१५।५) इति। तदिह ब्रह्मविद्विषयया प्रसिद्धया गत्या अक्षिस्थानस्य ब्रह्मत्वं निश्चीयते ॥ १६ ॥

## अनवस्थितेरसंभवाच्च नेतरः ॥ १७ ॥

यत्पुनरुक्तं छायात्मा, विज्ञानात्मा, देवतात्मा वा स्यादक्षिस्थान इति। अत्रोच्यते—न छायात्मादिः इतरः इह ग्रहणमर्हति। कस्मात्। अनवस्थितेः। न तावत् छायात्मनः चक्षुषि नित्यमवस्थानं संभवति। यदैव हि कश्चित्पुरुषश्चक्षुरासीदति तदा चक्षुषि पुरुषच्छाया दृश्यते, अपगते तस्मिन् न दृश्यते। 'य एषोऽक्षिणि पुरुषः' इति च श्रुतिः संनिधानात् स्वचक्षुषि दृश्यमानं पुरुषं उपास्यत्वेनोपदिशति। न च

---

रानन्तरं सूर्य आम्नातः, तथापीह क्रमो न विवक्षितः। यदु - यदि। शव्यं - अन्त्येष्ट्याख्यं प्रेतकर्म। **तत् पुरुष इति।** अमानवः - मनुना सृष्टो न भवति, अपि तु ब्रह्मणा सृष्टः। ब्रह्मलोकादवतीर्य विद्युल्लोकपर्यन्तं गतान् एतानुपासकान् ब्रह्मलोकं प्रापयति। एषः - अर्चिरादिः देवपथः, देवैः रक्षितत्वात्। ब्रह्मपथः, ब्रह्मप्रापकत्वात्। एतेन मार्गेण गच्छन्तः इमं - यस्मिन् मानवे गताः तं मानवं आवर्तं [1]पुनरावृत्तिस्थानभूतं संसाराख्यं प्रति नावर्तन्ते - इति।

यद्यपि, पञ्चाग्निविद्यायामब्रह्मविषयायामप्यर्चिरादिमार्ग उपलभ्यते, अतो नायं विद्याया ब्रह्मविषयतानियतः, तथाऽपि ब्रह्मप्रापकस्य अर्चिरादिमार्गस्य ब्रह्मविद्यासम्बन्धः औत्सर्गिकः। पञ्चाग्निविद्यायां तु वचनबलात् उत्सर्गः परित्यज्यते ॥ १६ ॥

**स्वचक्षुषीति।** तथा च 'दृश्यते' इत्येतदपि न पूर्वपक्षे स्वरसम्। सन्निधानात् उपासकेनदृश्यते इति प्रतीयते। न च स्वचक्षुषि विद्यमानः पुरुषः उपासकेन दृश्यतइति वक्तुं शक्यते। **न चेति।** तथा च कल्पनागौरवम्।

---

1. मु. पुनःपुनरावृत्ति

उपासनाकाले छायाकरं कंचित्पुरुषं चक्षुःसमीपे संनिधाप्य उपास्ते इति युक्तं कल्पयितुम्। 'अस्यैव शरीरस्य नाशमनु एष नश्यति' (छा. उ. ८।९।१) इति श्रुतिः छायात्मनोऽनवस्थितत्वं दर्शयति। असंभवाच्च तस्मिन् अमृतत्वादीनां गुणानां न छायात्मनि प्रतीतिः। तथा विज्ञानात्मनोऽपि साधारणे कृत्स्नशरीरेन्द्रियसंबन्धे सति चक्षुष्येवावस्थितत्वं वक्तुं न शक्यम्। ब्रह्मणस्तु व्यापिनोऽपि दृष्ट उपलब्ध्यर्थो हृदयादिदेशविशेषसंबन्धः। समानश्च विज्ञानात्मन्यपि अमृतत्वादीनां गुणानां असंभवः। यद्यपि विज्ञानात्मा परमात्मनोऽनन्य एव, तथाऽपि अविद्याकामकर्मकृतं तस्मिन् मर्त्यत्वमध्यारोपितं भयं चेति अमृतत्वाभयत्वे नोपपद्येते। संयद्वामत्वादयश्चैतस्मिन् अनैश्वर्यादनुपपन्ना एव। देवतात्मनस्तु 'रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः' इति श्रुतेः यद्यपि चक्षुष्यवस्थानं स्यात्, तथाऽपि आत्मत्वं तावत् न संभवति, पराग्रूपत्वात्। अमृतत्वादयोऽपि न संभवन्ति, उत्पत्तिप्रलयश्रवणात्। अमरत्वमपि देवानां चिरकालावस्थानापेक्षम्। ऐश्वर्यमपि परमेश्वरायत्तं न स्वाभाविकम्। 'भीषास्माद्वातः पवते, भीषोदेति सूर्यः, भीषास्मादग्निश्चेन्द्रश्च, मृत्युर्धावति पञ्चमः' (तै. उ. २।८) इति मन्त्रवर्णात्। तस्मात् परमेश्वर एव अयमक्षिस्थानः प्रत्येतव्यः। अस्मिंश्च पक्षे 'दृश्यते' इति प्रसिद्धवदुपादानं शास्त्राद्यपेक्षं विद्वद्विषयं प्ररोचनार्थमिति व्याख्येयम् ॥ १७ ॥

---

न च पुरुषमसन्निधाप्यैवोपासनमस्त्विति वाच्यम्। तथासति प्रतिबिम्बासम्भवेन उपासनाया असद्विषयतापातात्। देवतात्मनः—चक्षुरभिमानिनः सूर्यस्य। आत्मत्वं तावदिति। सन्निधानात् उपासकं प्रति आत्मत्वं प्रतीयते, तत् देवताया न सम्भवतीति भावः। अत्र 'अक्षिणि दृश्यते' इति प्रतिबिम्बे स्वरसेन इतिपदसहकृतेन आत्मत्वादीनां ब्रह्मलिङ्गानां अभिभूतत्वादस्पष्टता ॥ १७ ॥

इत्यन्तराधिकरणम् ॥ ४ ॥

५ अन्तर्याम्यधिकरणम्

## अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥

'य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति' इत्युपक्रम्य श्रूयते—'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति एष त आत्माऽन्तर्याम्यमृतः' (बृ. उ. ३।७।१,२) इत्यादि।

अत्र अधिदैवतमधिलोकमधिवेदमधियज्ञमधिभूतमध्यात्मं च कश्चित् अन्तरवस्थितो यमयिता अन्तर्यामी श्रूयते। स किं अधिदैवा-

---

अन्तर्यामिब्राह्मणं काण्वशाखागतं माध्यन्दिनशाखागतं च। तदिह विषयः। तच्च 'अथ हैनमुद्दालक आरुणिः पप्रच्छ' [1]इत्युपक्रमम्।

तत्र - क्वचिद्देशविशेषे उद्दालकादिष्वधीयानेषु तान् प्रति कश्चिद्गन्धर्वः पतञ्चलभार्यामाविष्टः प्रपच्छ—'येनायं च लोकः परश्च लोकः सर्वाणि च भूतानि सन्दृब्धानि भवन्ति' तत् सूत्रं 'य इमं च लोकं परं च लोकं सर्वाणि च भूतानि यो ऽन्तरो यमयति' तमन्तर्यामिणं च किं यूयं वेत्थ-इति। 'न वयं विद्मः' इति प्रतिवचने तान् प्रति गन्धर्ववचनं 'यो वै तत् काप्य सूत्रं विद्यात् तञ्चान्तर्यामिणमिति स ब्रह्मवित् स लोकवित् स देववित् स वेदवित् स भूतवित् स आत्मवित् स सर्ववित्' इति। स च गन्धर्वः तेभ्यस्तमर्थमब्रवीत्। तत्र गन्धर्ववचनात् तमर्थं उद्दालको ज्ञात्वा याज्ञवल्क्यं प्रति पप्रच्छ—इत्युपाख्यायते।

तत्र 'वायुर्वै गौतम तत् सूत्रम्' इति प्रथमप्रश्नस्योत्तरं हिरण्यगर्भविषयं, द्वितीयप्रश्नस्य उत्तरं यःपृथिव्यामित्यादि। पृथिव्यनन्तरं योऽप्सु योऽग्नौ योऽन्तरिक्षे योवायौ योदिवि यआदित्ये योदिक्षु यश्चन्द्रतारके यआकाशे यस्तमसि यस्तेजसि-इत्येतान् पर्यायानुक्त्वा उपसंहृतं 'इत्यधिदैवतं' इति। 'अथाधिभूतं' इत्युपक्रम्य यस्सर्वेषुभूतेषु यःप्राणे योवाचि यश्चक्षुषि यश्श्रोत्रे योमनसि यस्त्वचि योविज्ञाने योरेतसीति पर्यायानुक्त्वा, प्रतिपर्यायं

---

1. मु. इत्युपक्रम्य तत्र

द्यभिमानी देवतात्मा कश्चित्, किं वा प्राप्ताणिमाद्यैश्वर्यः कश्चिद्योगी, किं वा परमात्मा, किं वा अर्थान्तरं किंचित्? इति अपूर्वसंज्ञादर्शनात् संशयः। किं तावन्नः प्रतिभाति। संज्ञाया अप्रसिद्धत्वात् संज्ञिनाऽपि अप्रसिद्धेनार्थान्तरेण केनचित् भवितव्यमिति। अथ वा, न अनिरूपितरूपमर्थान्तरं शक्यं अस्तीत्यभ्युपगन्तुम्। अन्तर्यामिशब्दश्च अन्तर्यमनयोगेन प्रवृत्तो न अत्यन्तमप्रसिद्धः। तस्मात् पृथिव्याद्यभिमानी कश्चिद्देवः अन्तर्यामी स्यात्। तथा च श्रूयते—'पृथिव्येव यस्यायतनं अग्निर्लोको मनो ज्योतिः' (बृ. उ. ३।९।१०) इत्यादि। स च कार्यकरणवत्त्वात् पृथिव्यादीन् अन्तस्तिष्ठन् यमयतीति युक्तं देवतात्मनो यमयितृत्वम्। योगिनो वा कस्यचित् सिद्धस्य सर्वानुप्रवेशेन

---

'एष त आत्माऽन्तर्याम्यमृतः' इत्युक्तम्। अनन्तरं च 'अदृष्टो द्रष्टा अश्रुतः श्रोता अमतो मन्ता अविज्ञातो विज्ञाता नान्योतोऽस्ति द्रष्टा नान्योतोऽस्ति श्रोता नान्योऽतोस्ति मन्ता नान्योतोऽस्ति विज्ञाता एष त आत्मा अन्तर्याम्यमृतः अतोन्यदार्तम्' इत्युपसंहृतं काण्वशाखायाम्। माध्यन्दिनशाखायां 'यस्सर्वेषु लोकेषु यस्सर्वेषु वेदेषु यस्सर्वेषु यज्ञेषु' इत्यादयः केचन पर्यायाः समाम्नाताः। अन्यत् प्रायशस्तुल्यम्।

पूर्वाधिकरणे चक्षुरादिस्थानत्वं परमात्मनः अन्तर्यामिब्राह्मणपर्यालोचनया उक्तम्। तत् अन्तर्यामिब्राह्मणस्यान्यपरत्वशङ्कया आक्षिप्तं भवतीति सङ्गतिः।

**पृथिव्येवयस्यायतनमिति**। आयतनं - शरीरम्। अग्निः लोकः - [1]चक्षुस्स्थानापन्नः। मनः [2]ज्योतिः - तृतीयभूतम्।

ननु - 'य इमं च लोकं' इत्युपक्रमे सर्वनियन्तृत्वमेकस्य प्रतीयते। पृथिव्यादिदेवतानां च तत्तद्भूतनियन्तृत्वमेव। 'यं पृथिवी न वेद' [3]इत्यादिना च तत्तद्देवताऽवेद्यत्वेन ताभ्यो देवताभ्यो व्यतिरेकोऽपि अन्तर्यामिणः प्रतीयते। अतो न देवतापूर्वपक्षः समञ्जसः - इत्यत आह - **योगिनोवेति**।

---

1. मु. चक्षुरादित्यस्थानापन्नः 2. **ज्योतिः**—सर्वार्थप्रकाशकं इत्यर्थः भाष्यानुसारी। 3. मु. इत्यादिना तत्तद्देवताव्यतिरेकोऽपि

यमयितृत्वं स्यात्, न तु परमात्मा प्रतीयेत, अकार्यकरणत्वात्-इति। एवं प्राप्ते—

इदमुच्यते—यः अन्तर्यामी अधिदैवादिषु श्रूयते स परमात्मैव स्यात् न अन्यः-इति। कुतः, तद्धर्मव्यपदेशात्। तस्य हि परमात्मनो धर्माः इह निर्दिश्यमाना दृश्यन्ते। पृथिव्यादि तावत् अधिदैवादि-भेदभिन्नं समस्तं विकारजातं अन्तस्तिष्ठन् यमयतीति परमात्मनो यमयितृत्वं धर्म उपपद्यते। सर्वविकारकारणत्वे सति सर्वशक्त्युपपत्तेः। 'एष त आत्माऽन्तर्याम्यमृतः' इति च आत्मत्वामृतत्वे मुख्ये परमात्मनः उपपद्येते। 'यं पृथिवी न वेद' इति च पृथिवीदेवताया अविज्ञेयं अन्तर्यामिणं ब्रुवन् देवतात्मनोऽन्यं अन्तर्यामिणं दर्शयति। पृथिवीदेवता हि 'अहमस्मि पृथिवी' इत्यात्मानं विजानीयात्। तथा 'अदृष्टोऽश्रुतः' इत्यादिव्यपदेशो रूपादिहीनत्वात् परमात्मन उपपद्यते इति।

---

दहरशाण्डिल्याद्युपासनासिद्धस्य विश्वामित्रादेरिव नियमनसामर्थ्यसम्भवादिति भावः। **अकार्यकरणत्वादिति**। देहेन्द्रियादिरहितत्वादित्यर्थः।

ननु - जन्मादिसूत्रे उत्पत्तिस्थितिलयकारणत्वं सर्वज्ञस्य परमात्मन एवेति व्यवस्थापितम्। 'विकरणत्वान्नेति चेत्तदुक्तम्' [ब्र. सू. २-१-१०] इत्यत्र अशरीरस्यापि तत् सम्भवत्येवेति व्यवस्थापयिष्यते। ततः कथमयं पूर्वपक्ष इति चेत् -

उच्यते - उपादानत्वं सृष्ट्यारम्भकाले अधिष्ठातृत्वं च परमात्मनोऽशरीरस्यैवास्तु। तदानीं शरीरवतो जीवस्य अभावेन अधिष्ठातृतायाः परमात्मन [1]एवोपेयत्वात्। सर्वलोकनियन्तृत्वं तु [2]कर्मफलप्रदानादिना[3] स्थितिहेतुत्वम्, तच्च सृष्ट्यनन्तरमपि विद्यते, तस्यां दशायां शरीरिणः सम्भवात् 'यो यो नियन्ता स शरीरी' इति वास्यादिनियन्तरि तक्षणि दृष्टा व्याप्तिः

---

1. मु. एवोचितत्वात्　　2. मु. सर्वकर्मफल
3. **प्रदानादिनेति** आदिपदेन कर्मसु प्रेरणं ग्राह्यम्।

**यत्तु - अकार्यकरणस्य परमात्मनो यमयितृत्वं नोपपद्यत इति। नैष दोषः-यान्नियच्छति तत्कार्यकरणैरेव तस्य कार्यकरणवत्त्वोपपत्तेः। तस्याप्यन्यो नियन्तेत्यनवस्थादोषश्च न संभवति, भेदाभावात्। भेदे हि सत्यनवस्थादोषोपपत्तिः। तस्मात् परमात्मैवान्तर्यामी ॥ १८ ॥**

---

न ह्यातव्येति जीव एव नियन्ता - इति पूर्वपक्षिणोऽभिमानः। न च - उद्दालकं प्रति एषतआत्मेतिप्रतिपादनमसङ्गतं स्यात्, अन्यस्य जीवस्य उद्दालकं प्रति आत्मत्वासम्भवात् - इति वाच्यम्। शास्त्रदृष्ट्या तदुपपत्तेः, अमृतत्वं तु जीवन्मुक्तत्वादेवेति न कोऽपि विरोधः।

**यान्नियच्छतीति**। पृथिव्यादीनां नियन्तव्यानामेव यस्यपृथिवीशरीरमिति परमात्मानं प्रति शरीरत्वश्रवणादिति भावः। एतेन - नियन्तव्यातिरिक्तमेव शरीरं नियमने उपयुज्यत इति शङ्का - परास्ता। स्थूलसूक्ष्मशरीरनियामके तक्षणि नियन्तव्यातिरिक्तशरीरादर्शनाच्च। ननु तत्रापि अज्ञानाख्यं कारणशरीरं [1]अतिरिक्तं अस्ति। तर्हि परमात्मनोऽप्यविद्याख्यं शरीरमस्ति।

अपि च, येन योगसिद्धः अन्तर्यामीत्युच्यते [2]तेन तस्याप्यन्यः फलप्रदानादिना नियामकोऽभ्युपगम्यते वा न वा। न चेत्, न तस्योपासनासिद्धमन्तर्यामित्वम्। उपासनासिद्धस्य कृत्रिमस्य अन्यायत्तत्वावश्यम्भावात्। तथा च स्वतस्सिद्धोऽसौ भवता उपेयः। तथा च न विवादः। यः स्वतस्सिद्धोऽन्तर्यामी पुण्यपापादिरहितः स एव ईश्वरः इत्युपगमात्। यदि तु अन्योऽभ्युपगम्यते, तथा सति तस्याप्यन्यः तस्याप्यन्यः इत्यनवस्था स्यात्। न च बीजाङ्कुरन्यायेन नेयं दोषावहेति वाच्यम्। सृष्ट्यारम्भकाले अन्यस्य शरीरिणोऽभावेन सर्वनियन्त्रभावप्रसङ्गात्। यदि तु तस्यां दशायां ईश्वर एव स्वतस्सिद्धो नियन्ता उपेयते, [3]तदा पृथिव्यादिनियामकोऽपि स एव ग्राह्यः। स्वतस्सिद्धनियन्तृसम्भवे कृत्रिमनियन्तृग्रहणानौचित्यात्। तस्य च एकत्वात् न अनवस्थादोषाशङ्का सिद्धान्ते

---

1. मु. 'अतिरिक्तं' नास्ति
2. मु. 'तेन' नास्ति
3. मु. तथा

## न च स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥

स्यादेतत्-अदृष्टत्वादयो धर्माः सांख्यस्मृतिकल्पितस्य प्रधानस्याप्युपपद्यन्ते, रूपादिहीनतया तस्य तैरभ्युपगमात्। 'अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः' (मनु. १।५) इति हि स्मरन्ति, तस्यापि नियन्तृत्वं सर्वविकारकारणत्वादुपपद्यते। तस्मात् प्रधानं अन्तर्यामिशब्दं स्यात्। 'ईक्षतेर्नाशब्दम्' (ब्र. सू. १।१।५) इत्यत्र निराकृतमपि सत् प्रधानं इह अदृष्टत्वादिव्यपदेशसंभवेन पुनराशङ्क्यते। अत उत्तरमुच्यते—न च स्मार्त-प्रधानं अन्तर्यामिशब्दं भवितुमर्हति। कस्मात्, अतद्धर्माभिलापात्। यद्यप्यदृष्टत्वादिव्यपदेशः प्रधानस्य संभवति, तथाऽपि न द्रष्टृत्वादिव्यपदेशः संभवति, प्रधानस्य अचेतनत्वेन तैरभ्युपगमात्। 'अदृष्टो द्रष्टा अश्रुतः श्रोता अमतो मन्ता अविज्ञातो विज्ञाता'

---

पूर्वपक्षवत् प्रसरतीत्याह—**तस्याप्यन्यो नियन्तेति**। **भेदे हीति**। कृत्रिमाणां बहूनामभ्युपगमे इत्यर्थः ॥ १८ ॥

'यस्य पृथिवी शरीरं' इत्यादिव्यपदेशो हि द्वेधा लोकदर्शनानुसारेण व्युत्पादनीयः - देवदत्तस्यशरीरं यज्ञदत्तस्यशरीरं इत्यादिवत् भोगायतनत्वेन वा, पूर्वपक्षस्यशरीरं सिद्धान्तस्यशरीरं इत्यादिवत् स्वरूपाभिप्रायेण वा। नोभयथाऽपि परमात्मपक्षे सम्भवति। तस्य [1]भोगायतनासम्भवात्, जडाजडयोः स्वरूपैक्यासम्भवाच्च। प्रधानस्य तु जडतया स्वरूपैक्याभिप्रायेण तदुपपद्यते। 'एष त आत्मा' इति च प्रधानपक्षेऽपि ममात्मा भद्रसेन इतिवत् उपपद्यते। अमृतत्वं मोक्षोपकारकत्वात्। द्रष्ट्रादिशब्दाश्च चाक्षुषज्ञानाद्याश्रयवाचकाः ब्रह्मवादिनोऽपि गौणा इति प्रधानपक्षेऽपि कथञ्चिद्व्युत्पादयितुं शक्याः। अतः प्रधानमेवान्तर्यामी- [2]इत्यभिप्रायेण शङ्कते—**स्यादेतदिति**। अप्रतर्क्यं - तर्कागोचरम्। अविज्ञेयं-प्रमाणाविषयः। प्रसुप्तमिव सर्वत इति सर्वात्मना जाड्याभिप्रायम्। **तस्यापि नियन्तृत्वमिति**। नियन्तृत्वं-स्थितिहेतुत्वम्, तच्च उपादानस्यापि सम्भवत्येवेति भावः। **न द्रष्टृत्वादिव्यपदेशस्सम्भवतीति**। परमात्मनि तु प्रत्यगभिन्ने

---

1. आ. भोगासम्भवात्　　2. मु. इति शङ्कते

(बृ. उ. ३।७।२३) इति हि वाक्यशेष इह भवति। आत्मत्वमपि न प्रधानस्योपपद्यते ॥ १९ ॥

यदि प्रधानं आत्मत्वद्रष्टृत्वाद्यसंभवान्नान्तर्याम्यभ्युपगम्यते, शारीरस्तर्ह्यन्तर्यामी भवतु। शारीरो हि चेतनत्वात् द्रष्टा श्रोता मन्ता विज्ञाता च भवति, आत्मा च प्रत्यक्त्वात्। अमृतश्च, धर्माधर्मफलोपभोगोपपत्तेः। अदृष्टत्वादयश्च धर्माः शारीरे प्रसिद्धाः, दर्शनादिक्रियायाः कर्तरि प्रवृत्तिविरोधात्। 'न दृष्टेर्द्रष्टारं पश्येः' (बृ. उ. ३।४।२)

---

मुख्य एवेति भावः। आत्मत्वमपीति। भद्रसेनन्यायस्तु गौणत्वापादकत्वात् न आदरणीयः। 'यस्य पृथिवी शरीरं' इत्यादिनिर्देशस्तु प्रधानेऽपि न सम्भवति। [1]भोक्तृभोग्यभावसम्बन्धविवक्षायामेव तादृशसमभिव्याहारस्य मुख्यत्वात्। पूर्वपक्षशरीरमित्यादिव्यपदेशोऽपि, लोके भोक्तारं प्रति शरीरस्य स्वरूपतया भ्रमगृहीतत्वात् भ्रान्तिसिद्धस्वरूपत्वगुणमादाय ॥ १९ ॥

स्यादेतत्—'यस्य पृथिवी शरीरं' इत्यादिकं परमात्मपक्षेऽपि गौणमेव नियन्तृनियन्तव्यत्वाभिप्रायं [2]व्याख्येयम्। न च—परमात्मपरत्वे प्रबलप्रमाणसिद्धे यस्यपृथिवीशरीरमित्यादिनिर्देशानां मुख्यतायै शरीरपदे नियन्तव्यत्वविशेष एव प्रवृत्तिनिमित्तम्, न तु भोगायतनत्वम्। यस्येति षष्ठी च नियम्यनियामकभावाभिप्रायैव[3]-इति वाच्यम्। अवच्छेदकतया भोगाश्रये एव वृद्धव्यवहारानुसारेण शरीरपदस्य रूढत्वात्। वैदिकनिर्देशमात्रेण वृद्धव्यवहारावगतं प्रवृत्तिनिमित्तं परित्यज्य प्रवृत्तिनिमित्तान्तरकल्पने 'तस्यै वाचः पृथिवी शरीरं' 'अथैतस्य मनसो द्यौः शरीरं' 'अथैतस्य प्राणस्य आपश्शरीरं' [बृ.उ. १.५.११.१२.१३] इत्यादिप्रयोगसिद्ध्यर्थं नियम्यत्वापेक्षया अन्यदपि प्रवृत्तिनिमित्तं कल्पनीयं स्यात्। 'अग्निर्मूर्धा' [मु. उ. २.१.४] इत्यादिषु वाक्येषु परमात्मानं प्रति अग्न्यादीनां मूर्धत्वव्यपदेशात् मूर्धादिपदानामपि अग्न्यादिसाधारणं प्रवृत्तिनिमित्तं कल्पनीयं स्यात्। तस्मात् लौकिकप्रयोगानुसारेण भोगायतनत्वमेव प्रवृत्तिनिमित्तम्।

---

1. आ. भोक्तृभोग्यविषयसम्बन्ध 2. मु. वक्तव्यम्
3. मु. 'एव' नास्ति

इत्यादिश्रुतिभ्यश्च । तस्य च कार्यकरणसंघातं अन्तर्यमयितुं शीलं, भोक्तृत्वात् । तस्मात् शारीरोऽन्तर्यामी - इत्यत उत्तरं पठति—

## शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥

नेति पूर्वसूत्रादनुवर्तते । शारीरश्च नान्तर्यामीस्यात् । कस्मात् ?

---

ततश्च यस्यपृथिवीशरीरमित्यादिनिर्देशः परमात्मपक्षे गौण एव । एवं च योगसिद्धः कश्चिज्जीव एव नियन्ता प्रकृतवाक्यप्रतिपाद्यो भवतु । द्रष्ट्रादिपदानां तत्रैव स्वारस्यात् । यद्यत्र दर्शनादिकं 'आत्मा वा अरे द्रष्टव्यः' [बृ. उ. २-४-५] इत्यदिवाक्यप्रतिपाद्यं शब्दक्रमप्रत्यभिज्ञानात् वैदिक[1]दर्शन - श्रवणमननविज्ञानं, तस्मिन् पक्षे अदृष्टोद्रष्टेत्यादि जीव एव स्वरसं, न तु वैदिकदर्शनादिविषये तदनाश्रये च परमात्मनि । यदि वा चाक्षुषज्ञानादिरूपं, तदाऽपि परमात्मनः चाक्षुषज्ञानाद्यनाश्रयत्वात् जीव एव स्वरसमिति यस्यपृथिवीशरीरमित्यादयो जीव एव गौणा भवन्तु । न च—[2]जीवे 'सोऽब्रवीत् पतञ्जलं काप्यं याज्ञिकांश्च, वेत्थ न त्वं काप्य' इति सूत्रे अन्तर्यामिणि च गन्धर्वेण पृष्टे याज्ञिकैस्सहितस्य पतञ्जलस्य 'नाहं तद्भगवन् वेद' इति अज्ञानोद्भावनमसङ्गतं स्यात्, सूत्रस्य कर्मानुपयुक्तस्य अज्ञानसम्भवेऽपि शरीरातिरिक्तस्यात्मनो यज्ञविद्याविशारदैरवश्यज्ञेयतया जीवरूपेऽन्तर्यामिणि तदज्ञानवचनानुपपत्तेः । एवं ससर्वविदिति अन्तर्यामिविज्ञानात् [3]सर्वविज्ञानात् सर्वविज्ञानोपक्षेपश्चासङ्गतः स्यात्—इति वाच्यम् । विश्वामित्रादिसदृशस्य योगसिद्धस्य जीवस्य यज्ञविद्याविशारदैरपि अवश्यज्ञेयत्वाभावेन अज्ञानोद्भावनस्योपपन्नत्वात् । यथा च सूत्रविज्ञानेन सर्ववित्त्वं सूत्रस्तुत्यर्थम्, एवमन्तर्यामिविज्ञानेनापि सर्ववित्त्वं स्तुत्यर्थमन्तर्यामिणो भविष्यति[4] । न हि एकपदोपात्तस्य सर्ववित्त्वस्य सूत्रांशे स्तुत्यर्थता अन्तर्याम्यंशे तात्त्विकतेति वक्तुं शक्यम् । तस्मात् जीव एवान्तर्यामीति शङ्का ।

शारीरश्चोभयेऽपि हि भेदेनैनमधीयते इति परिहारसूत्रं व्याचष्टे—**नेति पूर्वसूत्रादिति** । उपलक्षणमेतत् अतद्धर्माभिलापादितिहेतोरपि । पूर्वसूत्रादनुवृत्तं

---

1. मु. 'दर्शन' नास्ति   2. मु. 'जीवे' नास्ति
3. मु. 'सर्वविज्ञानात्' नास्ति   4. मु. भवति

**यद्यपि द्रष्टृत्वादयो धर्माः तस्य संभवन्ति, तथाऽपि घटाकाशवदुपाधिपरिच्छिन्नत्वात् न कार्त्स्न्येन पृथिव्यादिष्वन्तरवस्थातुं नियन्तुं च शक्नोति। अपि च, उभयेऽपि हि शाखिनः - काण्वा माध्यंदिनाश्च अन्तर्यामिणो भेदेन एनं-शारीरं पृथिव्यादिवत् अधिष्ठानत्वेन नियम्यत्वेन च अधीयते—'यो विज्ञाने तिष्ठन्' (बृ. उ. ३।७।२२) इति काण्वाः। 'य आत्मनि तिष्ठन्' इति माध्यन्दिनाः। 'य आत्मनि तिष्ठन्' इत्यस्मिंस्तावत् पाठे भवत्यात्मशब्दः शारीरस्य वाचकः। 'यो विज्ञाने तिष्ठन्' इत्यस्मिन्नपि पाठे विज्ञानशब्देन शारीर उच्यते। विज्ञानमयो हि शारीर इति। तस्मात् शारीरादन्य ईश्वरः अन्तर्यामीति सिद्धम्।**

---

अतद्धर्माभिलापादितिहेतुं व्याचष्टे—**यद्यपीत्यादिना**। 'पृथिव्यां तिष्ठन्' इत्यनेन न पृथिव्यधिकरणत्वमेवोच्यते, 'पृथिव्या अन्तरः' इत्येव सिद्धेः। किन्तु बहिरपि पृथिव्यां व्याप्तिः। तथा च 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः' इति पदद्वयेन अन्तर्बहिर्व्याप्तिर्लभ्यते। तथा च सर्वप्रपञ्चमन्तर्बहिर्व्याप्य नियामकत्वं इह प्रतिपाद्यमानं न अनुपादानस्य जीवस्य सम्भवति। अपि तु सर्वप्रपञ्चोपादानस्य ब्रह्मण एव। एवं ससर्वविदिति तद्विज्ञानात् सर्वविज्ञानमपि न जीवपक्षे समञ्जसम्। न चेह सूत्रविज्ञानात् स्वातन्त्र्येण सर्ववित्त्वमुच्यते। 'यो वै तत् काप्य सूत्रं विद्यात् तं चान्तर्यामिणं स सर्ववित्' इति सूत्रसमुचितान्तर्यामिविज्ञानादेव सर्ववेदनप्रतिपादनात्। यद्यपि च केवलान्तर्यामिविज्ञानादेव सर्ववेदनं सम्भवति, तथाऽपि [1]"यः पचेत् यश्च भुञ्जीत स तृप्तो भवेत्' इतिवत् उपायोपेयभावेन इह सूत्रान्तर्यामिविज्ञानयोः समुच्चयो व्याख्येयः।

एतत्सूत्रोपात्तं भेदेनेतिहेतुं व्याचष्टे—**अपि चोभयेऽपीति**। 'यस्सर्वेषु भूतेषु तिष्ठन्' इतिपर्याये चेतननियामकत्वमेव विवक्षितम्। पृथिव्यादिषु प्राणिषु च रूढस्य भूतपदस्य पृथिव्यादीनां प्रागेव ग्रहणेन प्राणिविषयरूढेरेव

---

1. **यःपचेदित्यादि**—यः प्रथमं पचेत् भोजनोपयोगितया पश्चात् स एव भुञ्जीयात् स तृप्तो भवेत्, न तु पाकमात्रात् तृप्तिः, नापि पाकोऽपि तृप्तेः साधनम्, अतिथीनामपि तृप्त्युदयात्, अतः उपायोपेयसमुच्चय एव इत्यर्थः।

कथं पुनरेकस्मिन्देहे द्वौ द्रष्टारौ उपपद्येते? यश्चायमीश्वरोऽन्तर्यामी यश्चायमितरः शारीरः । का पुनरिहानुपपत्तिः? 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतिवचनं विरुध्येत। अत्र हि प्रकृतादन्तर्यामिणोऽन्यं द्रष्टारं श्रोतारं मन्तारं विज्ञातारं च आत्मानं प्रतिषेधति । नियन्त्रन्तरप्रतिषेधार्थमेतद्वचनमिति चेत्, न-नियन्त्रन्तराप्रसङ्गात् अविशेषश्रवणाच्च ।

अत्रोच्यते — अविद्याप्रत्युपस्थापितकार्यकरणोपाधिनिमित्तोऽयं शारीरान्तर्यामिणोर्भेदव्यपदेशो न पारमार्थिकः। एको हि प्रत्यगात्मा भवति, न द्वौ प्रत्यगात्मानौ संभवतः। एकस्यैव तु भेदव्यवहार उपाधिकृतः-यथा घटाकाशः महाकाशः इति। ततश्च ज्ञातृज्ञेयादिभेदश्रुतयः प्रत्यक्षादीनि च प्रमाणानि संसारानुभवो विधिप्रतिषेधशास्त्रं चेति सर्वमेतदुपपद्यते। तथा च श्रुतिः—'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इति अविद्याविषये सर्वं व्यवहारं दर्शयति। 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' [बृ. उ. २-३-१४] इति विद्याविषये सर्वं व्यवहारं वारयति ॥ २० ॥

---

समुन्मेषात् । तथा च सर्वभूतपर्यायेणैव चेतनमात्रनियामकत्वसिद्धौ पुनः आत्मनीतिपर्यायः 'ब्राह्मणा आगता वसिष्ठोऽप्यागतः' इतिवत् उत्कृष्टचेतनाभिप्रायः । तथा च येऽप्युत्कृष्टा योगसिद्धा नियन्तृत्वेन सम्भाविताः तान् प्रत्यपि नियन्तृत्वस्य अनेन प्रतिपादनात् योगिनोऽपि विलक्षण एव अन्तर्यामी परमेश्वर इति सिध्यति । द्रष्टृत्वादिव्यपदेशस्तु परमात्मनि प्रत्यगभेदाभिप्रायः, [1]शास्त्रीयदर्शनादिपक्षे अदृष्टत्वादिव्यपदेशः तत्तद्वृत्त्यभिव्यक्त[2]चैतन्याविषयत्वाभिप्रायः । द्रष्टृत्वादिजीवलिङ्गाभिभूतत्वात् [3]अन्तर्यामित्वस्य अस्पष्टता ॥ २० ॥

इति अन्तर्याम्यधिकरणम् ॥ ५ ॥

---

1. **शास्त्रीयदर्शनादिपक्षे इति**—चाक्षुषज्ञानादिपक्षे तु वृत्त्यविषयत्वमादायापि अदृष्टत्वादिव्यपदेशसम्भव इति भावः । मु. शास्त्रीयादिदर्शनादिपक्षे

2. मु. चैतन्याविषयाभिप्रायः

3. मु. अन्तर्यामीत्यस्य

६. अदृश्यत्वाधिकरणम्

## अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥

'अथ परा यया तदक्षरमधिगम्यते, यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्। नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' (मु. उ. १।१।४,६) इति श्रूयते। तत्र संशयः - किमयमदृश्यत्वादिगुणको भूतयोनिः प्रधानं स्यात्, उत शारीरः, आहोस्वित् परमेश्वर इति।

तत्र - प्रधानमचेतनं भूतयोनिरिति युक्तं, अचेतनानामेव तत्र दृष्टान्तत्वेनोपादानात्

'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति।
यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् संभवतीह विश्वम्॥'
(मु. उ. १।१।७) इति।

ननु ऊर्णनाभिः पुरुषश्च चेतनौ इह दृष्टान्तत्वेनोपात्तौ। नेति ब्रूमः। न हि केवलस्य चेतनस्य तत्र सूत्रयोनित्वं केशलोमयोनित्वं चास्ति। चेतनाधिष्ठितं ह्यचेतनमूर्णनाभिशरीरं सूत्रस्य योनिः पुरुषशरीरं च केशलोम्नामिति प्रसिद्धम्।

अपि च पूर्वत्र अदृष्टत्वाद्यभिलापसंभवेऽपि द्रष्टृत्वाद्यभिलापासंभवात् न प्रधानमभ्युपगतम्। इह तु अदृश्यत्वादयो धर्माः प्रधाने संभवन्ति। न चात्र विरुध्यमानो धर्मः कश्चित् अभिलप्यते।

ननु 'यः सर्वज्ञः सर्ववित्' (मु. उ. १।१।९) इत्ययं वाक्यशेषः अचेतने प्रधाने न संभवति, कथं प्रधानं भूतयोनिः प्रतिज्ञायत इति।

अत्रोच्यते—'यया तदक्षरमधिगम्यते यत्तदद्रेश्यम्' इति अक्षरशब्देन अदृश्यत्वादिगुणकं भूतयोनिं श्रावयित्वा पुनरन्ते श्रावयिष्यति—

---

यथोर्णनाभिरिति। सृजते-उत्पादयति। गृह्णते-[1]ग्रसति।

---

1. मु. ग्रसते

'अक्षरात्परतः परः' (मु.उ. २।१।२) इति। तत्र यः परोऽक्षराच्छ्रुतः स सर्वज्ञः सर्ववित् (सं)भविष्यति। प्रधानमेव तु अक्षरशब्दनिर्दिष्टं भूतयोनिः।

---

**तत्र यः परोऽक्षराच्छ्रुत इत्यादि**। अयमाशयः—न हि 'इदं प्रकरणं सर्वमपि प्रधानपरमेव' इति पूर्वपक्षी मन्यते। अपि तु भूतयोनिसन्दर्भः प्रधानपरः, अन्यो ब्रह्मपरः। ततश्च अस्मिन् प्रकरणे यानि ब्रह्मश्रुतिलिङ्गादीनि तानि ब्रह्मसन्दर्भान्तर्गतानि भविष्यन्तीति न तद्विरोधः। 'यत्तदद्रेश्यमग्राह्यं' [मु. उ. १.१.६] इत्यादि 'तथाऽक्षरात् सम्भवतीह विश्वं' इत्यन्तं मन्त्रद्वयं भूतयोनिवाक्यं [1]प्रथमखण्डे प्रधानपरम्। अचेतनदृष्टान्तोपादानात्, असाधारणब्रह्मलिङ्गाभावाच्च। [2]द्वितीयखण्डे 'यथा सुदीप्तात्' इति मन्त्रोऽपि प्रधानपर एव, सरूपकार्यजनकत्वलिङ्गात्। ननु ब्रह्मविद्यामित्युपक्रमात् तेषामेवैतांब्रह्मविद्यांवदेतेत्युपसंहाराच्च ब्रह्मपरत्वेनावगते प्रकरणे कथं प्रधानप्रतिपादनं सङ्गच्छते। कथं वा ब्रह्मप्रकरणे सृष्टिप्रतिपादनं सङ्गच्छते। यदि तु एकविज्ञानेन सर्वविज्ञानस्य 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इत्युपक्षेपात् तदुपपादनार्थं सृष्टिराम्नायते, तर्हि निर्विकारस्य ब्रह्मणः विकारोपादानत्वासम्भवशङ्कानिरासाय विकारिप्रधानाधिष्ठानत्वेन उपादानत्वं व्यवस्थापयितुं प्रधानस्योपादानत्वं प्रतिपाद्य तस्यैवाक्षरपदनिर्दिष्टस्य [3]ब्रह्माधिष्ठानत्वं प्रतिपाद्यते - अक्षरात् परतः पर इति। तथा च भूतयोनिवाक्येन सरूपप्रभववाक्येन च कारणत्वेन प्रतिपन्नस्याक्षरस्य प्रधानस्य पुरुषपदोदितब्रह्मगतपरत्वावधित्वेन निर्दिष्टे अक्षरे [4]अन्वयः। तथा च 'अक्षरात्सम्भवतीह विश्वं' 'तथाऽक्षराद्विविधास्सोम्य भावाः' 'अक्षरात् परतः परः' इति पञ्चम्यन्ताक्षरपदकृतं प्रत्यभिज्ञानमपि समञ्जसं भवति। अक्षरपदं च 'अश्नुते - व्याप्नोति स्वविकारान्' इति व्युत्पत्त्या प्रधानपरं द्रष्टव्यम्।

---

1. **प्रथमखण्डे**—प्रथममुण्डकस्य प्रथमखण्डे।

2. **द्वितीयखण्डे**—द्वितीयमुण्डकस्य प्रथमखण्डे। खण्डशब्दो मुण्डकार्थे वा प्रयुक्तः स्यात्। तेन यथाश्रुतार्थोपपत्तिः।

3. मु. ब्रह्माधिष्ठितत्वं

4. **अन्वयः**—अभेदबोधः।

यदा तु योनिशब्दो निमित्तवाची तदा शारीरोऽपि भूतयोनिः स्यात्, धर्माधर्माभ्यां भूतजातस्योपार्जनात् —इति।

एवं प्राप्ते अभिधीयते—योऽयमदृश्यत्वादिगुणको भूतयोनिः स परमेश्वर एव स्यात् नान्य इति। कथमेतदवगम्यते। धर्मोक्तेः। परमेश्वरस्य हि धर्म इहोच्यमानो दृश्यते—'यः सर्वज्ञः सर्ववित्' इति। न हि प्रधानस्याचेतनस्य शारीरस्य वा उपाधिपरिच्छिन्नदृष्टेः सर्वज्ञत्वं सर्ववित्त्वं वा संभवति।

नन्वक्षरशब्दनिर्दिष्टाद्भूतयोनेः परस्यैव एतत् सर्वज्ञत्वं सर्ववित्त्वं च न भूतयोनिविषयमित्युक्तम्।

अत्रोच्यते—नैवं संभवति। यत्कारणं 'अक्षरात् संभवतीह विश्वम्' इति प्रकृतं भूतयोनिं इह जायमानप्रकृतित्वेन निर्दिश्य अनन्तरमपि जायमानप्रकृतित्वेनैव सर्वज्ञं निर्दिशति —'यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' इति। तस्मात् निर्देशसाम्येन प्रत्यभिज्ञायमानत्वात् प्रकृतस्यैवाक्षरस्य भूतयोनेः सर्वज्ञत्वं सर्ववित्त्वं च धर्म उच्यत

---

**तदा शारीरोऽपीति।** अस्मिन् पक्षे 'अक्षरात् परतः परः' इत्यत्राक्षरपदं जीवपरमेव द्रष्टव्यं न क्षरतीति व्युत्पत्त्या। दृष्टश्चान्यत्रापि अक्षरपदस्य जीवे प्रयोगः 'क्षरं प्रधानं [1]अमृताक्षरं हरः क्षरात्मानावीशते देव एकः' [श्वे. उ. १-१०] इति। अत्राक्षरपदं जीवपरमेव, क्षरात्मानाविति उत्तरत्र आत्मपदस्य तत्र प्रयोगात् [2]ईशितव्यताप्रतिपादनाच्च। अयं पूर्वपक्षो नातीव क्षोदक्षमः, योनिशब्दस्य ऊर्णनाभ्यादिदृष्टान्तेन उपादानपरत्वावधारणात्, कार्यसारूप्यप्रतिपादनाच्च, जीवस्य ब्रह्मोपादानताघटकत्वाभावेन प्रकृतसन्दर्भाननुगुणत्वाच्च - इति द्रष्टव्यम्।

**प्रकृतस्यैवाक्षरस्य भूतयोनेरिति।** 'यस्सर्वज्ञः' इत्यत्र सर्वनामयत्पदं

---

1. **अमृताक्षरमिति**—अमृतेत्यत्र 'सुपां सुलुक्...' इत्यादिना छान्दसो विभक्तिलोपः। अमृतः अक्षरं इत्यर्थः। हर इति ईशते इत्यनेनान्वेति।

2. आ. ईशितव्यपदप्रयोगाच्च

प्रकृतपरामर्शकम्। न च - तत् 'तपसा चीयते ब्रह्म' इति अव्यवहितपूर्वमन्त्रनिर्दिष्टब्रह्मण एव परामर्शकम्, न तु व्यवहितपूर्वमन्त्रनिर्दिष्टस्य भूतयोनेः - इति वाच्यम्। यस्सर्वज्ञइत्यत्र पुंलिङ्गयत्पदस्य अव्यवहित[1]नपुंसकब्रह्मपरामर्शकत्वासम्भवेन व्यवहितस्यापि भूतयोनेरेव [2]समानलिङ्गतया परामर्शकतोपगमात्।

ननु - यस्सर्वज्ञइतिमन्त्रो न स्वातन्त्र्येण प्रवृत्तः। अपि तु 'तपसा चीयते ब्रह्म' इति मन्त्रव्याख्यानाय। 'यस्य ज्ञानमयं तपः' इति लिङ्गात्। ततश्च भिन्नलिङ्गत्वेऽपि स्वव्याख्येयाव्यवहितमन्त्रगतार्थपरामर्श एवोचितः - इति चेत्,

तथासति परस्परप्रत्यभिज्ञानानुसारेण 'यत्तदद्रेश्यमग्राह्यं' इत्यादयः चत्वारोऽपि मन्त्राः [3]पूर्वपूर्वव्याख्यानाय प्रवृत्ता इत्येव स्वीकर्तुमुचितम्। पूर्वमन्त्रो हि भूतयोनिमितिपदेनारोपितस्य दृश्यत्वादेः अद्रेश्यमित्यादिना अपवादात् अध्यारोपापवादाभ्यां निष्प्रपञ्चब्रह्मप्रतिपत्त्यर्थः। तत्र भूतयोनिता न निमित्ततैव अपि तूपादानता - इति प्रतिपादयितुं यथोर्णनाभिरिति द्वितीयो मन्त्रः। तत्र 'केवलोपादानत्वमेव परमात्मनः प्राप्नोति न कर्तृत्वं' इति भ्रमनिरासेन तस्यैव भूतयोनेरक्षरस्य निमित्ततामपि प्रतिपादयितुं तपसाचीयतइतिमन्त्रः। यथा हि 'यया तदक्षरमधिगम्यते' इति प्रकृताक्षरपरामर्शकयत्पदघटितस्य यत्तदद्रेश्यमिति मन्त्रस्य अक्षरात्सम्भवतीहविश्वमिति द्वितीयमन्त्रस्य च अक्षरविषयतया एकार्थता उपेयते, एवं तृतीयमन्त्रस्यापि ततोऽन्नमभिजायते इतिपदेन अक्षरात् - सम्भवतीहविश्वमितिद्वितीयमन्त्रगतस्य उपादानत्वस्य पञ्चम्या प्रत्यभिज्ञानात् एकार्थता अवसीयते। चतुर्थमन्त्रस्य तृतीयमन्त्रगततपःपदव्याख्यानरूपस्य तदेकार्थत्वं निर्विवादमेव। तथा च चतुर्णामपि[4] मन्त्राणां आकाङ्क्षासमभिव्याहारप्रत्यभिज्ञापकलिङ्गैरेकब्रह्मार्थप्रतिपादकत्वसम्भवे 'मन्त्रद्वयं प्रधानपरं मन्त्रद्वयं ब्रह्मपरं' इति वैरूप्यं अयुक्तमेव। तथा च ब्रह्मश्रुतिसर्वज्ञत्वलिङ्गाभ्यां भूतयोनिः ब्रह्मेति सिध्यति।

---

1. **नपुंसकेति**—नपुंसकपदोपस्थापितेत्यर्थः।
2. **समानलिङ्गतया**—समानलिङ्गकपदोपस्थापिततया।
3. आ. पूर्वव्याख्यानाय
4. मु. 'अपि' नास्ति

**इति गम्यते । 'अक्षरात्परतः परः' इत्यत्रापि न प्रकृताद्भूतयोनेरक्षरात् परः कश्चित् अभिधीयते । कथमेतदवगम्यते ?**

---

ननु अक्षरस्य ब्रह्मत्वे 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाश्शुभ्रो ह्यक्षरात् परतः परः ॥' [मु. उ. २. १. २.] इतिमन्त्रे पुरुषपदोदितब्रह्मगतपरत्वावधित्वेन अक्षरपदार्थस्य निरूपणं अनुपपन्नं स्यात्-इत्याशङ्क्य, भूतयोन्यक्षरमन्यत् परत्वावधिभूतमक्षरमन्यत् - इति परिहरति–**अक्षरात् परतः परः इत्यत्रेति ।**

ननु-भूतयोन्यक्षरस्य परत्वावध्यक्षरस्य च अन्यत्वोपगमो न युज्यते । 'अक्षरात् सम्भवतीह विश्वम्' 'अक्षरात् परतः परः' इति शब्दैक्येन प्रत्यभिज्ञानात् । न च—इदं शब्दैक्यमात्रम्, अर्थस्त्वन्य एव । अत्र अवध्यर्थिका पञ्चमी, अक्षरात्सम्भवतीत्यत्र उपादानार्थिका [1]इति । तथा च 'अक्षरात् सम्भवतीह विश्वं' [2]इत्यस्य 'ततोऽन्नमभिजायते' 'तस्मादेतत् ब्रह्म नाम रूपमन्नं च जायते' इत्यत्र शब्दतोऽर्थतश्च पञ्चम्याः प्रत्यभिज्ञानं प्रबलं—इति वाच्यम् । विभक्तिमात्रप्रत्यभिज्ञानापेक्षया पञ्चम्यन्तकृत्स्नपदप्रत्यभिज्ञानस्य प्रबलत्वात्, अर्थप्रत्यभिज्ञानमपेक्ष्य प्रथमोपजातशब्दप्रत्यभिज्ञानस्य प्रबलत्वाच्च — इत्यभिप्रेत्य शङ्कते - **कथमेतदवगम्यत इति ।**

अत्र यद्यपि—यदि प्रथमोपजातत्वेन शब्दप्रत्यभिज्ञानं अर्थप्रत्यभिज्ञानात् बलवदित्युच्यते तथा सति प्रकृते अर्थप्रत्यभिज्ञानमेव प्रबलम् । अक्षरात्परतः-परइत्यतोऽपि 'ततोऽन्नमभिजायते' 'तस्मादेतत् ब्रह्म नाम रूपमन्नं च जायते' इत्यस्य प्रागेव पठितत्वेन अर्थप्रत्यभिज्ञानस्यैव प्रथमोपजनसम्भवात्, भूतयोनिपरामर्शक[3]यत्पदसचिवत्वात्, [4]आकाङ्क्षानुसाराच्च–इति वक्तुं शक्यम्, तथाऽपि-

---

1. मु. 'इति' नास्ति

2. **इत्यस्येति** पञ्चम्याः इत्युत्तरेण सम्बद्ध्यते। इतिवाक्यघटकीभूतायाः अक्षरशब्दोत्तरपञ्चम्याः इत्यर्थः ।

3. **यत्पदेति** 'यः सर्वज्ञः' इतिवाक्यघटकयत्पदेत्यर्थः ।

4. **आकाङ्क्षेति** 'यत्तदद्रेश्यं' इत्यादीनां 'यः सर्वज्ञः सर्ववित्' इत्यन्तानां मन्त्राणां अनुपदोपपादिताकाङ्क्षेत्यर्थः ।

'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' (मु. उ. १।२।१३) इति प्रकृ(त्य)तस्यैवाक्षरस्य भूतयोनेः अदृश्यत्वादिगुणकस्य वक्तव्यत्वेन प्रतिज्ञातत्वात्।

कथं तर्हि 'अक्षरात्परतः परः' इति व्यपदिश्यत इति? उत्तरसूत्रे तद्वक्ष्यामः।

अपि च-अत्र द्वे विद्ये वेदितव्ये उक्ते 'परा चैवापरा च' इति। तत्र अपरामृग्वेदादिलक्षणां विद्यां उक्त्वा ब्रवीति 'अथ परा यया तदक्षरमधिगम्यते' इत्यादि। तत्र परस्या विद्याया विषयत्वेन अक्षरं श्रुतम्। यदि पुनः परमेश्वरादन्यत् अदृश्यत्वादिगुणकमक्षरं परिकल्प्येत नेयं परा विद्या स्यात्। परापरविभागो ह्ययं विद्ययोः अभ्युदयनिःश्रेयसफलतया परिकल्प्यते। न च प्रधानस्य विद्या निःश्रेयसफला

---

तत् प्रागेव 'अत्रोच्यते नैवं सम्भवति' इत्यादिग्रन्थेन निरूपितमिति शब्दतोऽपि प्रत्यभिज्ञानं भूतयोन्यक्षरस्य ब्रह्मणि दर्शयति—**येनाक्षरमिति**। उपक्रमे हि 'अथ परा यया तदक्षरमधिगम्यते' इति भूतयोनिर्निर्दिष्टः, इह च अक्षरमित्येव ब्रह्म निर्दिश्यत इति शब्दतोऽपि प्रत्यभिज्ञानमस्त्येव। प्रत्युत ब्रह्मविद्यात्मकपरविद्याविषयत्वेन उपक्रमे अक्षरं श्रुतम्। इहापि 'येन-यया अक्षरं वेद-विषयीकुर्यात् तां ब्रह्मविद्यां [1]वदेत्' इति ब्रह्मविद्याविषयत्वमवगम्यत इति अर्थतोऽपि प्रत्यभिज्ञानम्। 'अक्षरात् परतः परः' इत्यतः प्राक् अस्य मन्त्रस्य पठितत्वेन प्रथमोपजातत्वमपीति प्रबलमिदम्। अतः भूतयोन्यक्षरमपेक्ष्य परत्वावधिभूतमक्षरमन्यदेव। **अभ्युदयनिश्श्रेयसफलतयेति**। उत्कृष्टा हि विद्या परेत्युच्यते। स च उत्कर्षो मोक्षजनकतैव। यथा पुराणम्—तत् कर्म यन्न बन्धाय सा विद्या या विमुक्तये। आयासायापरं कर्म विद्याऽन्या शिल्पनैपुणम्।' [वि. पु. १-१९-४१] इति। अत्र [2]प्रशंसान्यायेन साविद्येत्यस्य उत्कृष्टविद्ये-

---

1. **वदेदिति** 'प्रोवाच तां तत्त्वतो ब्रह्मविद्यां' इत्यत्र प्रोवाचेतिपदे छान्दसो लकारव्यत्ययः, प्रब्रूयात् इत्यर्थः—इति भावः।

2. **प्रशंसान्यायेनेति** —पूर्वतन्त्रे तत्सिद्धिपेटिकान्तर्गतः 'प्रशंसा' इति सूत्रोक्तो न्यायः प्रशंसान्यायः।

केनचिदभ्युपगम्यते । तिस्रश्च विद्याः प्रतिज्ञायेरन् त्वत्पक्षे अक्षराद्भूतयोनेः परस्य परमात्मनः प्रतिपाद्यमानत्वात् । द्वे एव तु विद्ये वेदितव्ये इह निर्दिष्टे । 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' (मु. उ. १।१।३) इति च एकविज्ञानेन सर्वविज्ञानापेक्षणं सर्वात्मके ब्रह्मणि विवक्ष्यमाणे अवकल्पते, न अचेतनमात्रैकायतने प्रधाने, भोग्यव्यतिरिक्ते वा भोक्तरि ।

अपि च 'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठां अथर्वाय ज्येष्ठपुत्राय प्राह' (मु. उ. १।१।१ ) इति ब्रह्मविद्यां प्राधान्येनोपक्रम्य परापरविभागेन परां विद्यां अक्षराधिगमनीं दर्शयन् तस्या ब्रह्मविद्यात्वं दर्शयति । सा च ब्रह्मविद्यासमाख्या तदधिगम्यस्याक्षरस्य अब्रह्मत्वे बाधिता स्यात् । अपरा ऋग्वेदादिलक्षणा कर्मविद्या ब्रह्मविद्योपक्रमे उपन्यस्यते ब्रह्मविद्याप्रशंसायै । 'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति' ॥ (मु. उ. १।२।७) इत्येवमादिनिन्दावचनात् । निन्दित्वा चापरां विद्यां ततो विरक्तस्य परविद्याधिकारं दर्शयति—

'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन ।

---

त्यर्थः । अपि च परापरविभागं विद्ययोरुपक्षिप्य परविद्याप्रतिद्वन्द्विभूताया-मपरविद्यायां 'जरामृत्युं ते पुनरेवापियन्ति' इत्यनेन संसारफलकताप्रति-पादनात् परविद्यायाः संसारप्रतिद्वन्द्विमोक्ष एव फलमित्यवगम्यत इति भावः । **प्लवा ह्येत इति** । यज्ञेन [1]प्रवृत्तिनिमित्तेन रूप्यन्ते - शाब्दज्ञानविषयी-क्रियन्ते इति यज्ञरूपाः - यजमानपत्नीऋत्विजः अष्टादश प्लवाः - प्लवसदृशाः । सादृश्यमाह - अदृढाः । अथवा अदृढत्वं प्लवविशेषणम् । अदृढप्लवसदृशाः । यज्ञरूपत्वं व्युत्पादयितुं 'येष्ववरंकर्मोक्तं' इति । अदृढत्वं व्युत्पादयितुं 'एतच्छ्रेयो येऽभिनन्दन्ति' इत्यादि । **परीक्ष्य लोकानिति** । कृतेन - कर्मणा अकृतः -

---

1. **प्रवृत्तिनिमित्तेनेति** पत्नीऋत्विक्पदप्रवृत्तिनिमित्तयोरपि यज्ञघटितत्वात् इति भावः ।

तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥' (मु. उ. १।२।१।२) इति ।

यत्तूक्तं — अचेतनानां पृथिव्यादीनां दृष्टान्तत्वेनोपादानात् दार्ष्टान्तिकेनाप्यचेतनेनैव भूतयोनिना भवितव्यमिति । तदयुक्तम्— न हि दृष्टान्तदार्ष्टान्तिकयोरत्यन्तसाम्येन भवितव्यमिति नियमोऽस्ति । अपि च स्थूलाः पृथिव्यादयो दृष्टान्तत्वेनोपात्ता इति न स्थूल एव दार्ष्टान्तिको भूतयोनिरभ्युपगम्यते ।

तस्मात् अदृश्यत्वादिगुणको भूतयोनिः परमेश्वर एव ॥ २१ ॥

## विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥

इतश्च परमेश्वर एव भूतयोनिः, नेतरौ शारीरः प्रधानं वा ।

---

मोक्षः नास्ति, अपि तु हिरण्यगर्भलोकान्तं सांसारिकफलमेव । तच्च सर्वं अनित्यं इति परीक्ष्य - 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति प्रतिपादितेन न्यायेन निश्चित्य, यो ब्राह्मणो निर्वेदं-वैराग्यं[1] प्राप्नुयात्, स समित्पाणिः सन् श्रोत्रियं - अधीतसाङ्गस्वाध्यायं ब्रह्मनिष्ठं - ब्रह्मसाक्षात्कारवन्तं गुरुमेव [2]आत्मविज्ञानार्थमुपेयात्, न तु स्वयमेव विचारयेदात्मतत्त्वम् ॥ २१ ॥

ननु - यथासुदीप्तादितिमन्त्रो भूतयोनिविषय एवेति उभयोरविवादम् । परं तु - सिद्धान्ते, सुदीप्तात्पावकाद्विस्फुलिङ्गा अग्निसरूपा एव उत्पद्यन्ते यथा तथा अक्षरात् भावाः सरूपाः-जीवरूपाः उत्पद्यन्ते इत्यर्थोग्राह्यः, जडवर्गस्य सरूपत्वा-भावेन भावपदस्य चेतनपरत्वात् । पूर्वपक्षे तु, प्रधानकार्यं वियदादिकमेव भावपदार्थः—इति विशेषः । तथा च 'यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति ।' 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाश्शुभ्रो ह्यक्षरात्परतः परः' इति मन्त्रद्वयसमभिव्याहारात् सरूपकार्य-प्रभवत्वेन यदक्षरमुक्तं तदेव परत्वावधित्वेनोच्यत इति प्रतीयते । तथा च भूतयोनिर्नि

---

1. आ. संसारात्प्राप्नुयात् 2. मु. अर्थज्ञानार्थं

कस्मात्? विशेषणभेदव्यपदेशाभ्याम्। विशिनष्टि हि प्रकृतं भूतयोनिं शारीराद्विलक्षणत्वेन 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः। अप्राणो ह्यमनाः शुभ्रः' (मु. उ. २।१।२) इति। न ह्येतद्दिव्यत्वादिविशेषणं अविद्याप्रत्युपस्थापितनामरूपपरिच्छेदाभिमानिनः तद्धर्मान् स्वात्मनि कल्पयतः शारीरस्य उपपद्यते। तस्मात् साक्षादौपनिषदः पुरुष इहोच्यते। तथा प्रधानादपि प्रकृतं भूतयोनिं भेदेन व्यपदिशति 'अक्षरात्परतः परः' इति। अक्षरं - अव्याकृतं नामरूपबीजशक्तिरूपं

---

ब्रह्म - इति शङ्कायां उत्तरं—विशेषणभेदव्यपदेशाभ्यां च नेतरौ इति।

**विशिनष्टि हि प्रकृतं भूतयोनिमिति।** ननु - दिव्यत्वादिविशेषणं पुरुषस्य, न तु भूतयोनेः। अस्मिन् मन्त्रे दिव्यत्वादिविशेषणानि प्रति विशेष्यतया भूतयोनेरनुपादानात्—इति चेत् - न—'स बाह्याभ्यन्तरो ह्यजः' इत्यत्र स इति पृथक्पदम्, न तु बाह्याभ्यन्तरसहितइत्येवमर्थकमेकं पदम्। बाह्याभ्यन्तर इत्येव सामानाधिकरण्येन बाह्याभ्यन्तरवस्तुतादात्म्यरूपसाहित्यसिद्धेः सकारवैयर्थ्यापत्तेः। तथा च प्रकृतपरामर्शिना सइतिपदेन सरूपकार्यप्रभवस्य पूर्वमन्त्रनिर्दिष्टस्य परामर्शात् भूतयोनेः पुरुषत्वं सिध्यतीति दिव्यत्वादिविशेषणं भूतयोनेरेव। **भेदेन व्यपदिशतीति।** भूतयोन्यक्षरस्य पुरुषत्वसिद्धौ तद्गतपरत्वावधित्वेन परत्वेन च प्रतीयमानं अक्षरात्परतःपरइत्यत्र अक्षरं प्रधानमेव पर्यवस्यतीति, भूतयोनेः प्रधानाद्भेदस्य सिद्धिः। ननु—ब्रह्मावरत्वेननिर्दिश्यमानमक्षरं न साङ्ख्यीयम्, तैर्ब्रह्मानभ्युपगमेन तदवरत्वस्यासम्भवात् - इत्याशङ्क्य, सिद्धान्ताभिमता माया सा - इत्याह—**अक्षरमव्याकृतमित्यादिना।** नामरूपबीजं ब्रह्म, तस्य शक्तिभूतम्। अनेन, निर्विकारस्य ब्रह्मणः विकारसंसर्गघटनार्थं मायाशक्तिरपेक्षितेति दर्शितम्। ननु कार्यसूक्ष्मावस्था शक्तिरित्युच्यते, अतः कथं मायायाः शक्तित्वम्? तत्राह—**भूतसूक्ष्ममिति।** भवतीति भूतं - कार्यं, सूक्ष्मं कार्यं इत्यर्थः। यद्यपि सूक्ष्मावस्थाश्रयो माया, तथाऽपि तदभेदोपचारात् सा शक्तिरित्युच्यते। ननु—[1]सूक्ष्मावस्थाकार्यात्मत्वे मायैव उपादानं स्यात्, अवस्थाश्रयो हि उपादान-

---

1. **सूक्ष्मावस्थाकार्यात्मत्वे**—तादात्म्येन कार्यसूक्ष्मावस्थाश्रयत्वे।

**भूतसूक्ष्मं ईश्वराश्रयं तस्यैवोपाधिभूतं, सर्वस्माद्विकारात्परो योऽविकारः, तस्मात्परतः पर इति भेदेन व्यपदेशात् परमात्मानमिह विवक्षितं दर्शयति। नात्र प्रधानं नाम किंचित् स्वतन्त्रं तत्त्वं अभ्युपगम्य तस्माद्भेदव्यपदेश उच्यते। किं तर्हि? यदि प्रधानमपि कल्प्यमानं श्रुत्यविरोधेन अव्याकृतादिशब्दवाच्यं भूतसूक्ष्मं परिकल्प्येत, परिकल्प्यताम्। तस्मात् भेदव्यदेशात् परमेश्वरो भूतयोनिः - इत्येतदिह प्रतिपाद्यते ॥ २२ ॥**

---

मिति सिद्धान्तः, तावता कथं ब्रह्मोपादानत्वसिद्धान्तनिर्वाहः? तत्राह—**ईश्वराश्रयमिति**। तथा च विकाराश्रयमायाधिष्ठानत्वं ब्रह्मण उपादानत्वमिति भावः। तथा च श्रुतिः—'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' [श्वे. उ. ४-१०] इति। ननु - 'तदात्मानँ स्वयमकुरुत' 'सच्चत्यच्चाभवत्' [तै.उ. २-७] इत्यादिवचनस्वारस्येन ब्रह्मणः साक्षात् अवस्थाभिस्सम्बन्धोऽवगम्यते। तत् परम्परापक्षे न निर्वहति, इत्यत आह—**तस्यैवोपाधिभूतमिति**। स्वधर्मभूता अवस्था ब्रह्मण्यासञ्जयतीति माया उपाधिरित्युच्यते। तथा च श्रुतिद्वयस्वारस्येन माया ब्रह्म चेति [1]उपादानद्वयं प्रपञ्चे। साक्षात् उपादानत्वेऽपि ब्रह्मणो निर्विकारश्रुतिविरोधस्तु न भवति, मायिककार्यस्य स्वभावविरोधित्वाभावात् इति भावः। अत्र भाष्ये 'दिव्यत्वादिविशेषणं जीवव्यावर्तकं, भेदव्यपदेशः प्रधानव्यावर्तकः' इति व्याख्यातम्, तदुपलक्षणम्, दिव्यत्वादिविशेषणं प्रधानव्यावर्तकमपि भवत्येव। अचेतनस्य प्रधानस्य दिव्यपुरुषत्वासम्भवात्। भेदव्यपदेशो जीवव्यावर्तकोऽपि भवति। 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इति प्रकृतस्य भूतयोनेः वेद्यत्वं मुमुक्षुजीवस्य वेदितृत्वमिति भेदव्यपदेशस्य जीवेऽपि सम्भवात्। न च 'अप्राणो ह्यमनाः' इत्यादिनिषेधानां ब्रह्मण्यप्रसक्तप्रतिषेधत्वापत्तिरिति वाच्यम्। प्रत्यग्रूपेण ब्रह्मणि प्राणादीनामपि प्रसक्ततया प्रत्यगभेदद्योतनफलकत्वोपपत्तेः ॥ २२ ॥

---

1. **उपादानद्वयमिति**—जगदुपादाननिरूपणावसरे विवरणोक्तमतत्रये अन्यतममिदम्। पदार्थतत्त्वनिर्णयकारैः स्वीकृतमिदं मतम्।

कुतश्च परमेश्वरो भूतयोनिः—

रूपोपन्यासाच्च ॥ २३ ॥

अपि च 'अक्षरात्परतः परः' इत्यस्यानन्तरं 'एतस्माज्जायते प्राणः' इति प्राणप्रभृतीनां पृथिवीपर्यन्तानां तत्त्वानां सर्गमुक्त्वा तस्यैव भूतयोनेः सर्वविकारात्मकं रूपं उपन्यस्यमानं पश्यामः—

'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः ।
वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा॥'

(मुण्ड० २।१।४) इति । तच्च परमेश्वरस्यैवोचितं, सर्वविकारकारणत्वात् । न शारीरस्य तनुमहिम्नः । नापि प्रधानस्यायं रूपोपन्यासः संभवति, सर्वभूतान्तरात्मत्वासंभवात् । तस्मात् परमेश्वर एव भूतयोनिः नेतराविति गम्यते । कथं पुनर्भूतयोनेरयं रूपोपन्यास इति गम्यते ? प्रकरणात्, 'एषः' इति च प्रकृतानुकर्षणात् । भूतयोनिं हि प्रकृत्य 'एतस्माज्जायते प्राणः' 'एष सर्वभूतान्तरात्मा' इति वचनं भूतयोनिविषयमेव भवति । यथा उपाध्यायं प्रकृत्य 'एतस्मादधीष्व एष वेदवेदाङ्गपारगः' इति वचनं उपाध्यायविषयं भवति तद्वत् । कथं पुनः अदृश्यत्वादिगुणकस्य भूतयोनेः विग्रहवद्रूपं संभवति ? सर्वात्मत्वविवक्षयेदमुच्यते न तु विग्रहवत्त्वविवक्षयेत्यदोषः । 'अहमन्नं... अहमन्नादः' (तै. उ. उ. ३।१०।६) इत्यादिवत् ।

---

रूपोपन्यासस्य भूतयोनिविषयतां दर्शयितुं तदनुगतिमाह—अक्षरात्परतः पर इति । [1]सरूपप्रभववाक्ये अक्षरपदेन भूतयोन्यक्षरं प्रत्यभिज्ञातम् । तदनन्तरं स बाह्याभ्यन्तरः' इति तत्पदेनानुवृत्तं 'एतस्माज्जायते' इति मन्त्रे एतत्पदाकृष्टं तदनन्तराम्नाते 'अग्निर्मूर्धा' इति मन्त्रे 'अस्य' 'एषः' इति पदाभ्यां तदेवानुकृष्यत इति भावः । अग्निः-द्युलोकः । 'तस्मादग्निस्समिधो यस्य सूर्यः' इत्युत्तरमन्त्रे सूर्यसमितकस्याग्नेः [2]तज्जन्यताप्रतिपादनात् । 'असौ वाव लोको

---

1. सरूपप्रभववाक्ये 'यथा सुदीप्तात् ........ सरूपाः' इत्यादिवाक्ये ।
2. मु. तजन्यतया

अन्ये पुनर्मन्यन्ते — नायं भूतयोने रूपोपन्यासः, जायमानत्वेनोपन्यासात् । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इति हि पूर्वत्र प्राणादिपृथिव्यन्तं तत्त्वजातं जायमानत्वेन निरदिक्षत् । उत्तरत्रापि च 'तस्मादग्निः समिधो यस्य सूर्यः' इत्येवमादि 'अतश्च सर्वा ओषधयो रसाश्च' इत्येवमन्तं जायमानत्वेनैव निर्देक्ष्यति । इहैव कथं अकस्मात् अन्तराले भूतयोने रूपमुपन्यसेत् । सर्वात्मत्वमपि सृष्टिं परिसमाप्य उपदेक्ष्यति 'पुरुष एवेदं विश्वं कर्म' (मु. उ. २।१।१०) इत्यादिना ।

---

गौतमाग्निः तस्यादित्य एव समित् [छा. उ. ५. ४. १.] इति श्रुतौ द्युलोकात्मकसाम्पादिकाग्नेरेव सूर्यसमित्कत्वात् ।

**अन्ये पुनर्मन्यन्त इति** परकीयत्वद्योतनं न्यायविरुद्धत्वात् । वैश्वानराधिकरणे हि द्युमूर्धत्वादिकं सर्वात्मके परमात्मन्येव कल्पयितुं युक्तमिति वक्ष्यते । [1]श्रुतावपि द्युमूर्धत्वादिकल्पनायाः[2] एषसर्वभूतान्तरात्मेति आलम्बनं प्रतिपाद्यते । सर्वभूतान्तरात्मत्वं च 'यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरः' इत्यादौ अन्तर्यामिणि ईश्वरस्यैव असाधारण्येन निर्दिश्यते । न च [3]श्रुतिप्रकरणाभ्यां परमात्मपरत्वे सम्भवति [4]सन्निधानमात्रेण हिरण्यगर्भपरता आस्थातुं शक्यते । एष इति अस्येति च श्रुतिः परमात्मविषयेति भाष्य एव पूर्वं [5]दर्शितम् । परमात्मप्रकरणमेतदिति सूत्रकार एव 'प्रकरणात्' [ब्र. सू. १. ३. ६.] इति वक्ष्यति ।

ननु महाप्रकरणस्य परमात्मसम्बन्धित्वेऽपि सृष्टेरवान्तरप्रकरणमस्तु ।

[6]न ह्येतावता तत्र महाप्रकरणप्राप्तस्य परमात्मनः सम्बन्धो विरुध्यते । स्रष्टृतया सृष्ट्यवान्तरप्रकरणेऽपि परमात्मसम्बन्धावश्यम्भावात् ।

---

1. **श्रुतौ**—अग्निर्मूर्धेत्यादिश्रुतौ ।
2. आ. कल्पनायां
3. **श्रुतिः**—'एषः' इति शब्दः ।
4. **सन्निधानं**—जायमानत्वेनोक्तवस्तुमध्यगतत्वम् ।
5. **दर्शितमिति** भाष्ये पूर्वं एषइतिश्रुतिः परमात्मविषयेत्युक्ता, अस्येतिश्रुतेरप्येतदुपलक्षणमिति भावः ।
6. मु. नैतावता

श्रुतिस्मृत्योश्च त्रैलोक्यशरीरस्य प्रजापतेः जन्मादि निर्दिश्यमानं उपलभामहे—

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम'

( ऋ सं. १०।१२१।१ ) इति । समवर्ततेति - अजायतेत्यर्थः । तथा 'स वै शरीरी प्रथमः स वै पुरुष उच्यते । आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत' इति च । विकारपुरुषस्यापि सर्वभूतान्तरात्मत्वं संभवति, प्राणात्मना सर्वभूतानामध्यात्ममवस्थानात् । अस्मिन् पक्षे 'पुरुष एवेदं विश्वं कर्म' इत्यादिसर्वरूपोपन्यासः परमेश्वरप्रतिपत्तिहेतुः इति व्याख्येयम् ॥ २३ ॥

---

अपि च हिरण्यगर्भपक्षे 'एष सर्वभूतान्तरात्मा' इत्यत्र 'एतस्माज्जायते' इत्यस्यानुषङ्गोऽपि कल्पनीयः । [1]परमात्मपक्षे तु यथाश्रुतमेव ।

ननु, सर्वात्मत्वविवक्षया परमात्मनि योजनायां 'पुरुष एवेदं विश्वं' इत्यनेन पौनरुक्त्यं स्यात् ।

'यस्सर्वज्ञस्सर्ववित् यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' इति मन्त्रेणैव अपरब्रह्मणो हिरण्यगर्भस्य जन्मोक्तमिति तत्पक्षेऽपि पौनरुक्त्यस्य तुल्यत्वात् । यत्किञ्चिद्विशेषविवक्षया पौनरुक्त्यपरिहारस्तु पक्षद्वयेऽपि समानः ।

ननु ब्रह्मपक्षे मूर्धादिश्रुतीनां [2]मुख्यता न लभ्यते ।

उच्यते—इह किं मूर्धादिकमुद्दिश्य द्युलोकत्वादिकमुच्यते ? अथवा द्युलोकादिकमुद्दिश्य मूर्धत्वादिकं विधीयते ? आद्ये हिरण्यगर्भपक्षेऽपि अग्न्यादिपदानां मूर्धादिषु वृत्तेः स्वार्थत्यागः प्राप्त एव । स परमात्मपक्षेऽपि तुल्यः । द्वितीये तु मूर्धादिपदानां द्युलोकादिषु वृत्तेः स्वार्थत्यागः पक्षद्वयेऽपि समानः ।

परं तु द्वितीयपक्ष एव समीचीनः । स्तुतिप्रकर्षलाभात् । यथा हि

---

1. मु. परमेश्वर

2. **मुख्यता न लभ्यत इति** हिरण्यगर्भस्य मूर्धा अस्ति, ब्रह्मणस्तु नास्ति इति भावः ।

'सुतलं चरणद्वन्द्वं पृथ्वी [1]जघनमण्डली । यत्कीर्तेः मध्यमाकाशं सुमनोवासभूः शिरः ॥' इत्यादौ पातालादिषु चरणत्वादिरूपणात् त्रैलोक्यसंबन्धिता कीर्तेः प्रतीयते एवं द्युलोकादिषु मूर्धत्वादिरूपणेन त्रैलोक्यव्याप्तिर्लभ्यत इति स्तुतिप्रकर्षसिद्धिः । मूर्धादिषु द्युलोकादित्वविधौ तु यत्किञ्चित्सादृश्यमादाय द्युशब्दादीनां मूर्धादिष्वेव वृत्तेः न सर्वव्याप्तिरिति न स्तुतिप्रकर्षलाभः । इदं [2]हि वाक्यं पक्षद्वयेऽपि स्तुत्यर्थमेव । न ह्यत्र हिरण्यगर्भोपासना विधीयत इति वक्तुं शक्यते । निर्विशेषप्रकरणे फलकीर्तनं विना प्रासङ्गिकोपासनाया अन्याय्यत्वात् । ततश्च हिरण्यगर्भपक्षेऽपि स्तुत्यर्थतैव प्राप्नोति । परं तु ब्रह्मप्रकरणे अन्यस्य स्तुतिरसङ्गतेति 'तादृशोऽपि हिरण्यगर्भो यस्माज्जायते' इति प्रकृतविषयता क्लेशेन सम्पादनीया । अपि च परमात्मपरत्वे न स्तुतिमात्र एवोपयुज्यते रूपकम्, अपि तु [3]यथा सृष्ट्यादिप्रतिपादनं निर्विशेषप्रकरणे अध्यारोपापवादाभ्यां निष्प्रपञ्चवस्तुप्रतिपत्त्यर्थं सविशेषोपासनायामुपास्यस्वरूपप्रसिद्ध्यर्थं च, एवं द्युमूर्धत्वादिना मूर्तिप्रतिपादनमपि। दृश्यते हि तस्याः अत्रैव निषेधः 'दिव्यो ह्यमूर्तः पुरुषः' इति । वैश्वानरोपासनायां च एषैव मूर्तिरुपास्या । अतः सर्वोपादानं सर्वनियन्तारं परमात्मानं प्रत्येव दिवादीनां तदध्यस्तानां तन्नियम्यानां मूर्धत्वादिकल्पना उचितेत्यतो नायं हिरण्यगर्भरूपोपन्यासः- इति ।

अत्र च सर्वज्ञत्वादिकं भूतयोनावस्पष्टं लिङ्गम् । ऊर्णनाभ्यादिदृष्टान्तेन प्रधाने स्वरसेन [4]विषयान्तरकल्पनात् ।

अत्र पूर्वपक्षे - अदृश्यादिपदानां प्रधानविषयत्वात् एतत्प्रकरणे प्रतिपाद्यमानस्य परमात्मनो निर्विशेषता न सिध्यति । सिद्धान्ते तु - परमात्मविषयतया निर्विशेषतासिद्धिः ।

सविशेषप्रधानेऽप्यत्र पादे निर्विशेषवाक्यविचारः सङ्गतिविशेषात् कृतः । सा च सङ्गतिः 'अपि च पूर्वत्र अदृष्टत्वाद्यभिलापसम्भवेऽपि' इत्यादिवाक्येन भाष्य एव पूर्वपक्षावसरे दर्शिता ॥ २३ ॥

इति अदृश्यत्वाद्यधिकरणम् ॥ ६ ॥

---

1. आ. जघनमण्डलम् 2. आ. 'हि' नास्ति 3. मु. अन्यत्रापि यथा

4. **विषयान्तरकल्पनात्**—सर्वज्ञत्वादेः भूतयोनिव्यतिरिक्तविषयकत्वकल्पनात् ।

७ वैश्वानराधिकरणम्

## वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥

'को न आत्मा किं ब्रह्म' इति 'आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहि' (छा. ५।११।१,६) इति च उपक्रम्य द्युसूर्यवाय्वाकाशवारिपृथिवीनां सुतेजस्त्वादिगुणयोगं एकैकोपासननिन्दया च वैश्वानरं प्रति एषां मूर्धादिभावं उपदिश्य आम्नायते—'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति, तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ उर एव वेदिः लोमानि बर्हिः हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः' (छा. उ. ५।१८।२) इत्यादि।

---

छान्दोग्ये उपाख्यायते—'प्राचीनशालसत्ययज्ञेन्द्रद्युम्नजनबुडिलाः पञ्चर्षयः, को न आत्मा इति ब्रह्मरूपः अस्माकं आत्मा कः इति जिज्ञासया उद्दालकसमीपं गताः। तेनापि, नाहं वैश्वानरमात्मानं सम्यक् जानामीति निश्चित्य कैकेयेऽश्वपतौ तदभिज्ञे निर्दिष्टे, सर्वेऽपि मिलित्वा उद्दालकषष्ठाः तं प्रति पप्रच्छुः - आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहीति, ततो राज्ञा एतैरविदितोंऽशोऽस्माभिर्वक्तव्य इति मनसि निधाय 'भवद्भिर्वैश्वानरविषये यावत् ज्ञायते तावत् प्रथमतो वक्तव्यं' इति पृष्टे, राजानं प्रति यथाक्रमं द्युसूर्यवाय्वाकाशवारिपृथिवीनां मध्ये एकैकमर्थं वैश्वानरमुपास्महे इति प्रत्युत्तरिते, दिवादीनां सुतेजस्त्वविश्वरूपत्व[1]पृथग्वर्त्मात्मत्वबहुलत्वरयित्वप्रतिष्ठात्वरूपान् गुणान् क्रमेणोपदिश्य, दिवादय एव वैश्वानररूपाः प्रत्येकं - इति युष्माभिः क्रियमाणमुपासनं असदिति निन्दित्वा, दिवादीनां मूर्धचक्षुःप्राणदेहमध्यबस्तिपादभावमुपदिश्य आम्नायते 'यस्त्वेतमेवं प्रादेशमात्रं' इत्यादि।

पूर्वस्मिन्नधिकरणे द्युमूर्धत्वादिरूपं परमात्मलिङ्गतया उपन्यस्तं, तदसङ्गतम्, तादृशस्य रूपस्य अन्यत्रापि दर्शनात् - इत्याक्षिप्यत इति सङ्गतिः।

---

1. आ. पृथग्वर्त्मता

तत्र संशयः—किं वैश्वानरशब्देन जाठरोऽग्निरुपदिश्यते, उत भूताग्निः, अथ तदभिमानिनी देवता, अथ वा शारीरः, आहोस्वित् परमेश्वरः? इति। किं पुनरत्र संशयकारणम्। वैश्वानर इति जाठर-भूताग्निदेवतानां साधारणशब्दप्रयोगात् आत्मेति च शारीरपरमेश्वरयोः। तत्र कस्योपादानं न्याय्यं कस्य वा हानमिति भवति संशयः।

किं तावत् प्राप्तम्? जाठरोऽग्निरिति। कुतः। तत्र हि विशेषेण क्वचित् प्रयोगो दृश्यते 'अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते' (बृ. उ. ५।९) इत्यादौ। अग्निमात्रं वा स्यात्। सामान्येनापि प्रयोगदर्शनात् 'विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्' (ऋ. सं. १।२८।१८) इत्यादौ। अग्निशरीरा वा देवता स्यात् तस्यामपि प्रयोगदर्शनात्, 'वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः' (ऋ. सं. १-९८-१) इत्येवमाद्यायाः श्रुतेः देवतायामैश्वर्याद्युपेतायां संभवात्। अथ आत्मशब्दसामानाधिकरण्यात् उपक्रमे च 'को न आत्मा किं ब्रह्म' इति केवलात्मशब्दप्रयोगात् आत्मशब्दवशेन वैश्वानरशब्दः परिणेय इत्युच्यते, तथाऽपि शारीर आत्मा स्यात्, तस्य भोक्तृत्वेन वैश्वानरसंनिकर्षात्। प्रादेशमात्रमिति च विशेषणस्य तस्मिन्नुपाधिपरिच्छिन्ने संभवात्। तस्मात् न ईश्वरो वैश्वानरः - इत्येवं प्राप्तम्।

तत इदमुच्यते—वैश्वानरः परमात्मा भवितुमर्हति। कुतः?

---

विश्वस्मा इति। देवाः विश्वस्मै भुवनाय वैश्वानरमग्निं सूर्यरूपेण अह्नां केतुं - चिह्नं अकृण्वन्। वैश्वानरस्य सुमतौ - शोभनायां प्रसादरूपायां बुद्धौ वयं स्याम। स हि वैश्वानरः भुवनानां राजा, कं - सुखं, अभि-अभिमुखा श्रीश्च। अतः तत्प्रसाद आवश्यक इत्यर्थः।

तस्मान्नेश्वरो वैश्वानर इति। अत्र पूर्वपक्षे जाठरतृतीयभूततदभिमा-निदेवताजीवेषु [1]अनिर्धारणमेव। वैश्वानरः परमात्मा न भवतीत्यंशे निर्धारणम्।

---

1. अनिर्धारणमेवेति सूचितमिदं सौत्रेण साधारणशब्दशब्देन।

साधारणशब्दविशेषात् । साधारणशब्दयोर्विशेषः साधारणशब्दविशेषः । यद्यपि एतावुभावप्यात्मवैश्वानरशब्दौ साधारणशब्दौ - वैश्वानरशब्दस्तु त्रयाणां साधारणः, आत्मशब्दश्च द्वयोः ; तथाऽपि विशेषो दृश्यते, येन परमेश्वरपरत्वं तयोरभ्युपगम्यते—'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः' इत्यादिः । अत्र हि परमेश्वर एव द्युमूर्धत्वादिविशिष्टोऽवस्थान्तरगतः प्रत्यगात्मत्वेनोपन्यस्त आध्यानायेति गम्यते, कारणत्वात् । कारणस्य हि सर्वाभिः कार्यगताभिरवस्थाभिः अवस्थावत्त्वात् द्युलोकाद्यवयवत्वमुपपद्यते । 'स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' इति च सर्वलोकाद्याश्रयं फलं श्रूयमाणं परमकारणपरिग्रहे

---

**कारणस्य हि [1]सर्वाभिः कार्यगताभिरिति ।** अयं भावः— यद्यपि दिवादीनां मूर्धादिभावो न मुख्यया वृत्त्या परमात्मन्यपि सम्भवति । दिवादिषु मूर्धत्वाद्यभिव्यञ्जकसंस्थानाभावात् । अपि तु मूर्धत्वादिना रूपणमात्रम् । तच्च रूपणं अब्रह्मण्यपि कर्तुं शक्यम् । तथाऽपि [2]सालम्बने रूपणे सम्भवति न [3]निरालम्बनं तत् आश्रयणीयम् । लोके च अस्यायंमूर्धेतिव्यपदेशे तत्तदवयवानां अन्तरात्मैव तत्सम्बन्धी निर्दिश्यते । अन्तरात्मा च स उच्यते, यश्चेतनः तादात्म्येन तं तमर्थं नियच्छति । तथा च सर्वोपादानतया सर्वनियन्तारं परमात्मानं प्रत्येव इदं रूपणं सालम्बनं, न तु जाठरभूतदेवताजीवात्मनः प्रति । अतो द्युमूर्धत्वादिलिङ्गात् परमात्मैव वैश्वानरः । [4]कार्यं द्युलोकाद्यात्मना भासमानं ब्रह्मैव, कार्यकारणानन्यत्वात् । तद्गतावस्थाः द्युलोकादिस्वरूपाः । अपि च पूर्वपक्षिमते अग्निवैश्वानरात्मशब्दानां साधारणत्वात् अनिर्धारितस्य वेदार्थस्य अभ्युपेतुमयुक्तत्वाच्च ब्रह्मासाधारणेन द्युमूर्धत्वादिना ब्रह्मपरत्वमेवास्थेयम् ॥ २४ ॥

---

1. आ. 'सर्वाभिः' नास्ति

2. **सालम्बने**—व्यावहारिकविषयके ।

3. **निरालम्बने**—प्रातिभासिकविषयके ।

4. दिवादीनां कार्यत्वमेव, न कार्यगतावस्थात्वं - इति शङ्कां निरस्यति — **कार्यमित्यादिना ।**

संभवति । 'एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' (छा. उ. ५।२४।३) इति च तद्विदः सर्वपाप्मप्रदाहश्रवणम्, 'को न आत्मा किं ब्रह्म' इति च आत्मब्रह्मशब्दाभ्यामुपक्रमः, इत्येवमेतानि लिङ्गानि परमेश्वरमेवावगमयन्ति । तस्मात् परमेश्वर एव वैश्वानरः ॥ २४ ॥

## स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥

इतश्च परमेश्वर एव वैश्वानरः, यस्मात् परमेश्वरस्यैव अग्निरास्यं द्यौर्मूर्धेति ईदृशं त्रैलोक्यात्मकं रूपं स्मर्यते—'यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः । सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नमः ॥' [शान्तिपर्व ४७-६९] इति । तत् स्मर्यमाणं रूपं मूलभूतां श्रुतिमनुमापयत् अस्य वैश्वानरशब्दस्य परमेश्वरपरत्वे अनुमानं-लिङ्गं गमकं स्यात्-इत्यर्थः। इतिशब्दो हेत्वर्थः । यस्मात् इदं गमकं तस्मादपि वैश्वानरः परमात्मैवेत्यर्थः । यद्यपि स्तुतिरियं 'तस्मै लोकात्मने नमः' इति । स्तुतित्वमपि न असति मूलभूते वेदवाक्ये सम्यक् ईदृशेन रूपेण संभवति ।
'द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे ।
दिशः श्रोत्रे विद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता ॥'
इत्येवंजातीयका च स्मृतिः इहोदाहर्तव्या ॥ २५ ॥

---

ननु-द्युमूर्धत्वादिकमपि न परमेश्वरासाधारणम्, पुराणादिषु हिरण्यगर्भेऽपि त्रैलोक्यशरीरतायाः प्रतिपादनात्-इत्याशङ्क्याह—**स्मर्यमाणमनुमानं स्यादिति** इति ।

**मूलभूतांश्रुतिमनुमापयदिति** । इयं स्मृतिः परमात्मप्रकरणपठिता । अतस्तस्याः परमात्मविषयता वक्तव्या । सा च द्युमूर्धत्वादिकं परमात्मनः प्रतिपादयन्ती मूलभूतां स्वसमानार्थिकां श्रुतिमपेक्षते । सा च [1]स्वमूलत्वेन वैश्वानरवाक्यं स्वीकुर्वती वैश्वानरपदस्यान्यविषयत्वेऽनुपपद्यमाना तस्य परमेश्वरपरतां दर्शयतीत्युपबृंहणविधया वैश्वानरवाक्यस्य परमेश्वरपरतां सम्पादयति, इत्यतो वैश्वानरपदाभिधेयः परमात्मेत्यर्थः ।

---

1. मु. स्वमूलत्वेनैव

**शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसंभवात् पुरुषमपि चैनमधीयते ॥ २६ ॥**

अत्राह—न परमेश्वरो वैश्वानरो भवितुमर्हति। कुतः? शब्दादि-

---

ननु-एतस्याः स्मृतेः मूलभूता इयं श्रुतिः मास्तु, अग्निर्मूर्धेति श्रुतिरेव एतत्स्मृतिसमानविषया निर्णीतपरमात्मतात्पर्या मूलं स्यात् । अवश्यं च 'चन्द्रसूर्यौ च नेत्रे' इत्यस्मिन्नंशे आथर्वणश्रुतिरेव मूलत्वेन एष्टव्या। न च—पद्भ्यांपृथिवीत्यंशे आथर्वणश्रुतेर्मूलता वक्तुं न शक्यते, स्मृतौ 'चरणौ क्षितिः' 'विद्धि पादौ क्षितिं च' इति सामानाधिकरण्यश्रवणात् - इति वाच्यम् । पद्भ्यां पृथिव्युत्पत्तिप्रतिपादनेन, पादौ पृथिवीति सामानाधिकरण्यस्यापि [1]विवक्षितत्वात्। दृश्यते हि पुरुषसूक्ते 'मुखं किमस्य कौ बाहू। कावूरू पादावुच्येते' इति सामानाधिकरण्येनोपक्रम्य 'पद्भ्यां शूद्रो अजायत। पद्भ्यां भूमिः' इति निगमनम्। तथा च यस्याग्निरास्यमित्यंशे मुखादिन्द्रश्चाग्निश्चेति श्रुतिः मूलत्वेनैष्टव्या। अत्र च परमात्मपादत्वेन पृथिव्यादिजनकत्वेन निर्दिष्टाः परमात्मनि विद्यमानाः सूक्ष्मपृथिव्यादय एव। अतः कथं स्मृत्यन्यथानुपपत्त्या वैश्वानरवाक्यस्य परमात्मविषयत्वम्—इति चेत्,

अस्तु तदपि वाक्यद्वयमस्यास्स्मृतेर्मूलभूतम्। एतावदेवात्र विवक्षितं—अनया स्मृत्या एषा श्रुतिः परमात्मपरत्वेनोपबृंहितेति, न त्वियमेव श्रुतिः तस्याः मूलमिति। ततश्च श्रुतिस्मृतिन्यायपर्यालोचनया अस्या मूर्तेः पारमेश्वरत्वे सिद्धे यत् कचित् तादृशं रूपं हिरण्यगर्भसम्बन्धितया पुराणादिषु पठितं तत्, 'तद्यदिदमाहुः अमुंयजामुंयजेत्येकैकं देवं एतस्यैव सा विसृष्टिः एष उ ह्येव सर्वे देवाः' इत्यत्र यथा सर्वदेवात्मत्वं ब्रह्मस्वरूपाभिव्यक्त्यभिप्रायं शास्त्रदृष्ट्यातूपदेशोवामदेववदितिन्यायात् तथा द्रष्टव्यम्। हिरण्यगर्भस्य द्युलोकादिष्ववान्तरनियन्तृतया तदालम्बनं वा द्रष्टव्यम् । न चात्र निरङ्कुशे नियन्तरि सर्वोपादाने परमेश्वरे सम्भवति अवान्तरनियन्तृग्रहणमुपपद्यते ॥ २५ ॥

**शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्नेति**—इदं सूत्रं, जाठर

---

1. मु. दर्शितत्वात्

भ्यः, अन्तःप्रतिष्ठानाच्च । शब्दस्तावत् - वैश्वानरशब्दः न परमेश्वरे संभवति, अर्थान्तरे रूढत्वात् । तथा अग्निशब्दः 'स एषोऽग्निर्वैश्वानरः' इति । आदिशब्दात् 'हृदयं गार्हपत्यः' (छा. उ. ५।१।८।२) इत्याद्यग्नित्रेताप्रकल्पनम् , 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम्' (छा. उ. ५।१०।१) इत्यादिना च प्राणाहुत्यधिकरणतासंकीर्तनम् । एतेभ्यो हेतुभ्यो जाठरो वैश्वानरः प्रत्येतव्यः । तथा अन्तःप्रतिष्ठानमपि श्रूयते 'पुरुषेऽन्तःप्रतिष्ठितं वेद' इति । तच्च जाठरे संभवति । यदप्युक्तं 'मूर्धैव सुतेजाः' इत्यादेर्विशेषात्कारणात् परमात्मा वैश्वानर इति । अत्र ब्रूमः—कुतो ह्येष निर्णयः, यत् उभयथाऽपि विशेषप्रतिभाने सति

---

एव वैश्वानरः[1] इत्याक्षिप्य समाधानार्थम् । तत्र अग्निवैश्वानरशब्दौ [2]गार्हपत्यत्वादिकल्पनं च परमेश्वरव्यावृत्तावुपयुक्तम् । पुरुषेऽन्तःप्रतिष्ठितत्वं भूतदेवताव्यावृत्तौ । तदिदमुक्तं 'एतेभ्यो हेतुभ्यो जाठरो वैश्वानरः' इति 'तच्च जाठरे सम्भवति' इति च । 'अथ वा तच्छरीराया देवतायाः' इति 'अथ वा भूताग्नेः' इति यत् पक्षद्वयमुक्तमस्मिन्नेव सूत्रे स्थित्वा, तत् उत्तरसूत्रनिवर्त्यमिति द्रष्टव्यम् । **यदप्युक्तं—मूर्धैव सुतेजा इत्यादेरिति ।** आदिपदेन प्रथमसूत्रोक्तानि यानि ब्रह्मत्वसाधकानि भाष्ये दर्शितानि, तानि सर्वाणि संगृहीतानि ।

[3]**कुतो ह्येष निर्णय इति ।** अत्र ब्रह्मजाठरगोचरश्रुतिलिङ्गानां समबलतया अनिर्णय इत्येव न विवक्षितम् , अपि तु जाठरगोचराणां प्राबल्यमपि विवक्षितम् ।

तथा हि—ब्रह्मणि 'को न आत्मा किं ब्रह्म' इति श्रुती उपक्रमे यद्यपि विद्येते, तथाऽपि न तयोर्वैश्वानरश्रुत्यन्यथाकरणसामर्थ्यमस्ति । तयोरात्मब्रह्मदृष्टिविषयद्युलोकादिष्वौपचारिकत्वात् । इदं हि प्राचीनशालादीनां मीमांसावाक्यम् । तैश्च तस्य वाक्यस्य स्वाभिप्रेतोऽर्थः उत्तरत्र स्फुटीकृत उपचारेणैव । 'औपमन्यव कं त्वमात्मानमुपास्से' इत्यादिना प्राचीनशालादीन् प्रति राजप्रश्ने 'दिवमेव भगवो

---

1. मु. इति प्रतिपादनार्थम्
2. **गार्हपत्यत्वादीति** हृदयादिषु इत्यादिः ।
3. आ. कुतोन्वेष

परमेश्वरविषय एव विशेष आश्रयणीयो न जाठरविषय इति। अथ वा भूताग्नेः अन्तर्बहिश्चावतिष्ठमानस्य एष निर्देशो भविष्यति। तस्यापि हि द्युलोकादिसंबन्धो मन्त्रवर्णादवगम्यते—'यो भानुना पृथिवीं द्यामुतेमां आततान रोदसी अन्तरिक्षम्' (ऋ. सं. १०।८८।३) इत्यादौ। अथ वा तच्छरीराया देवताया ऐश्वर्ययोगात् द्युलोकाद्यवयवत्वं भविष्यति। तस्मात् न परमेश्वरो वैश्वानर इति।

अत्रोच्यते—न-तथादृष्टयुपदेशादिति। न शब्दादिभ्यः कार-

---

राजन्निति होवाच' 'आदित्यमेव भगवो राजन्निति होवाच' इति प्रत्युत्तरितत्वात्। अतो वैश्वानरशब्दिते जाठरे एव तयोरौपचारिकत्वं भविष्यति।

द्युमूर्धत्वादिकल्पनं तु [1]उरएववेदिरित्याद्यग्निसम्बन्धिरूपकेण प्रतिरुद्धम्। उरआदीनां वेदित्वादिकल्पनं हि जाठराग्नावेवोचितम्। वेद्यादीनामग्निसम्बन्धित्वस्यैव स्फुटत्वात्, हृदयादीनां च जाठरसम्बन्धात्। न च द्युमूर्धत्वादेर्जाठरे सम्बन्धो न सम्भवतीत्याशङ्कनीयम्। इयं हि द्युमूर्धत्वादिकल्पना न शरीरात् बहिः विवक्षिता। अपि तु उपासकमूर्धचुबुकान्तराले। उपासकमूर्धादिरेव हि वैश्वानरमूर्धत्वादिना द्युलोकत्वादिना चोपास्य इति 'सम्पत्तेरिति जैमिनिः' इतिसूत्रे स्पष्टं भविष्यति। उपासकमूर्धादिभिश्चास्ति जाठरस्य सम्बन्धः। तस्य ऊष्मणा सर्वशरीरव्यापित्वात्। तथा च श्रुतिः 'सन्तापयति स्वं देहमापादतलमस्तकः' इति।

ससर्वेषुलोकेष्वित्यादिना श्रुतं सर्वेषु लोकेषु भूतेषु आत्मसु चान्नादनं फलं [2]न ब्रह्मोपासनयैव[3] सम्भवति। न ह्यत्र सर्वात्मा सन् सर्वमत्तीति विवक्षितम्। सगुणोपासनया सर्वात्मप्राप्तेरभावात्। अपि तु सङ्कल्पेन सर्वेषु लोकेषु [4]तत्तद्भूतोपादानेन देवतिर्यङ्मनुष्याद्यात्मना स्थितो भोग्यमत्तीति विवक्षणीयम्। तत् अब्रह्मोपासनातो वचनबलात् सत्यसङ्कल्पाद्यभिव्यक्त्या भविष्यति। एवं सर्वपाप्म-

---

1. मु. उपचार एव। वेदि° 2. मु. 'न' नास्ति

3. ब्रह्मोपासनयैव—ब्रह्मोपासनमात्रेण।

4. मु. तत्तद्भूतोत्पादनेन

**णेभ्यः परमेश्वरस्य प्रत्याख्यानं युक्तम् । कुतः, तथा - जाठराग्न्य-परित्यागेन दृष्ट्युपदेशात् । परमेश्वरदृष्टिर्हि जाठरे वैश्वानरे इहोपदिश्यते 'मनो ब्रह्मेत्युपासीत' (छा. उ. ३।१८।१) इत्यादिवत् । अथ वा जाठरवैश्वानरोपाधिः परमेश्वर इह द्रष्टव्यत्वेनोपदिश्यते, 'मनोमयः प्राणशरीरो भारूपः' (छा. उ. ३।१४।२) इत्यादिवत् । यदि चेह परमेश्वरो न विवक्ष्येत, केवल एव जाठरोऽग्निर्विवक्ष्येत, ततो 'मूर्धैव सुतेजाः' इत्यादेर्विशेषस्य असंभव एव स्यात् । यथा तु देवताभूताग्नि-व्यपाश्रयेणाप्ययं विशेष उपपादयितुं न शक्यते तथा उत्तरसूत्रे**

---

प्रदाहोऽपि । वस्तुतस्तु सर्वत्रान्नादनं सर्वपाप्मप्रदाहो वा न उपासनाफलम्, अपि तु प्राणाग्निहोत्रफलम् । 'स य एतदेवं विद्वानग्निहोत्रं जुहोति' इत्युपक्रम्य तदाम्नानात् ।

'तथा-जाठराग्न्यपरित्यागेन' इति सङ्ग्रहवाक्यं, तत् प्रतीकाभिप्रायेण प्रथमतो व्याचष्टे—**परमेश्वरदृष्टिर्हीति** । तथा च 'स एषोऽग्निर्वैश्वानरो यत् पुरुषः' इति वाक्ये वैश्वानरोद्देशेन पुरुषपदोदितं ब्रह्मत्वं विधीयत इति भावः । **अथवेति** । अस्मिन् पक्षे वैश्वानरादिपदं तदुपाधिकपरमात्मपर्यन्तं [1]इति द्रष्टव्यम् । **ततो मूर्धैव सुतेजा इत्यादेरिति** । यद्यपि उपासकमूर्धादिषु वैश्वानरमूर्धादिकं सम्पादनीयं, तथाऽपि न जाठरेऽग्नौ सम्भवः । अत्र हि, प्रथमं वैश्वानरस्य मूर्धत्वा-दिना द्युलोकादयो ध्येयाः, तथा [2]देवतात्मसम्बन्धितया मूर्धादीन् ध्यात्वा तेषां पुनः स्वमूर्धचुबुकान्तराले ध्यानम् । न तु प्रथमत एव स्वमूर्धादिषु वैश्वानरमूर्धत्वं द्युलोकत्वं च ध्यातव्यम् । तथा च अधिदैवतद्युमूर्धत्वादिध्यानं वैश्वानरस्य परमात्मत्वपक्ष एव समञ्जसम् ।

एवं आत्मशब्दब्रह्मशब्दाभ्यामुपक्रमोऽपि वैश्वानरस्य परमात्मविषय एव समञ्जसः । उपक्रमो हि न 'आत्मब्रह्मदृष्टिविषयकः' इत्यभिप्रायः । उद्दाल-कादिभिरात्मब्रह्मदृष्टिविषयतयोपास्यत्वेन निर्णीतानां द्युलोकादीनां तन्मीमांसा-

---

1. मु. 'इति' नास्ति

2. **देवतात्मा**—वैश्वानरशब्दार्थः । न तु तृतीयभूतशरीरकः ।

विषयत्वासम्भवात्। ननु निर्णीतत्वेऽपि परस्परं [1]अन्यान्यदृष्टिविषयदर्शनेन वैमत्ये सति मीमांसा सम्भवतीति चेत्, 'मनो ब्रह्म' 'आदित्यो ब्रह्म' इत्यादौ ब्रह्मदृष्टिविषयाणां बहूनां दर्शनेन विरोधाप्रसक्त्या मीमांसानवतारप्रसङ्गात्। परं तु तेषां द्युलोकादिरेव ब्रह्मेति भ्रमः। दृश्यते ह्यद्यत्वेऽपि पामराणां अर्चायामेव परमात्मेति विभ्रमः, [2]अन्यायतनेषु विभ्रमवतां विमतिश्च। ततश्च, यथा इदंरजतमितिभ्रमदशायां रजतपदं प्रयुज्यमानं न दृष्टिलक्षकम्, एवमिदमप्यात्मपदं ब्रह्मपदं च न दृष्टिलक्षकम्। ततश्च, उपक्रमे आत्मब्रह्मपदप्रतिपाद्यस्य परमात्मनो मीमांसामवतार्य, तन्निर्णयार्थं राजसमीपं गतानां 'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि' इति वाक्येऽपि आत्मपदसामानाधिकरण्येन श्रुतं, वैश्वानरपदं, तदुपाधिकपरमात्मपरमेव।

[3]अत एव भाष्ये दृष्टिपक्षं परित्यज्य उपाधिपक्षः परिगृहीतः। परं तु-"वाजसनेयके 'वैश्वानरं ह वै भगवान् सम्प्रति वेद तमेव नो ब्रूहि' इत्येव उपक्रमे श्रवणेन आत्मब्रह्मशब्दयोः तत्रोपक्रमे श्रवणाभावात् छान्दोग्यगतस्तथोपक्रमोऽपि [4]जाठरपर एव, 'आत्मानं रथिनं विद्धि शरीरं रथमेव तु' इत्यादिवत् द्युमूर्धत्वादिकल्पनं जाठर एवास्तु, ततश्च साम्यादिकस्य [5]द्युमूर्धादेः जाठरे सम्भवेन आत्मशब्दस्तत्र शारीरत्वसादृश्यात्, आथर्वणे द्युमूर्धत्वादेः परमात्मनिष्ठत्वेन तत्सादृश्यात् ब्रह्मशब्दोऽपि गौणः, ततश्च न कथञ्चिदपि अस्यामुपासनायां ब्रह्मसंस्पर्शः"-इति [6]कश्चित् शङ्केत, तन्निराकरणं दृष्टिपक्षोपक्षेपेणापि भवतीत्येतावता तदुपक्षेपः। तन्निराकरणप्रकारस्तु - न वाजसनेयके अश्रवणात् छान्दोग्ये श्रुतस्य परित्यागः सम्भवति, विद्यैकत्वेन अश्रुतस्थले श्रुतोपसंहारसम्भवात्। परं तु - वैश्वानरश्रुत्यनुग्रहाय आत्मब्रह्मशब्दौ तद्दृष्टिविषयौ, द्युमूर्धत्वादिकल्पनं च [7]वैश्वानरप्रतीकतया ध्येये परमात्मन्येव सालम्बनम् - इति। अयं तु पक्षः

1. **अन्यान्येति** विषयेत्यनेन सम्बद्ध्यते।
2. मु. अन्यान्यायतनेषु
3. **अत एव**—वैश्वानरपदे आत्मपदसामानाधिकरण्यादेव।
4. मु. जाठर एव
5. आ. द्युमूर्धत्वादेः
6. मु. यदि कश्चित्
7. **वैश्वानरप्रतीकेति** बहुव्रीहिः।

वक्ष्यामः । यदि च केवल एव जाठरो विवक्ष्येत, पुरुषेऽन्तःप्रतिष्ठितत्वं केवलं तस्य स्यात् न तु पुरुषत्वम् । पुरुषमपि चैनमधीयते वाजसनेयिनः 'स एषोऽग्निर्वैश्वानरो यत्पुरुषः स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' (श. ब्रा. १०।६।१।११) इति । परमेश्वरस्य तु सर्वात्मत्वात् पुरुषत्वं पुरुषेऽन्तःप्रतिष्ठितत्वं च उभयमुपपद्यते । ये तु 'पुरुषविधमपि चैनमधीयते' इति सूत्रावयवं पठन्ति, तेषामेषोऽर्थः— केवलजाठरपरिग्रहे पुरुषेऽन्तःप्रतिष्ठितत्वं केवलं स्यात्, न पुरुषविधत्वम्, पुरुषविधमपि चैनमधीयते वाजसनेयिनः 'पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' इति । पुरुषविधत्वं च, प्रकरणात् यदधिदैवतं द्युमूर्धत्वादि पृथिवीप्रतिष्ठितत्वान्तं यच्च अध्यात्मं प्रसिद्धमूर्धत्वादि चुबुकप्रतिष्ठितत्वान्तं तत् परिगृह्यते ॥ २६ ॥

---

उपक्रमाद्यनेकलिङ्गसन्दब्धब्रह्मादिश्रुतिगौणतापादकतया परित्यक्तव्य इति उपाधिपक्षः परिगृहीतः ।

**पुरुषेऽन्तःप्रतिष्ठितत्वं केवलं तस्य स्यादित्यादि** । ननु - यथा पुरुषेऽन्तःप्रतिष्ठितत्वं जाठरस्य उदरे शरीरावयवे अन्तर्गतत्वात् पुरुषपदं शरीरपरं स्वीकृत्य उपपादनीयम्, एवं पुरुषत्वमप्युपपादयितुं शक्यमेव । पुरुषपदस्य शरीरसादृश्यपरत्वात् । तत्परत्वं च पुरुषविधमित्युत्तरपदानुसारादुपपन्नमेव - इति चेत्—न - एवं सति शरीरसादृश्यस्य पुरुषविधपदेनैव लब्धतया पुरुषपदं व्यर्थमेव स्यात् । अतः पुरुषपदं चेतनपरमेव । ततश्च तदैकरूप्याय पुरुषेऽन्तःप्रतिष्ठितमित्यत्रापि पुरुषपदं जीवरूपचेतनपरमेव । तदन्तःप्रतिष्ठितत्वं चान्तर्यामिणो यआत्मनितिष्ठन्नित्यादिश्रुतिसिद्धमिति नानुपपत्तिः । पुरुषविधत्वमपि मूर्धादिकल्पनया जीवसादृश्यमेव । ततश्च त्रयाणां पुरुषपदानामैकरूप्याय मुख्यार्थत्वाय च, यो वस्तुगत्या जीवरूपः यश्च तत्र प्रतिष्ठितः तत्सदृशश्च स एव पुरुषमित्यादिपदत्रयप्रतिपाद्यः, स च [1]परमात्मैव इति सिध्यति ।

**प्रसिद्धमूर्धत्वादि चुबुकप्रतिष्ठितत्वान्तमिति** । इदमपि व्याप्तिमात्रेणैव

---

1. मु. आत्मैवेति

## अत एव न देवता भूतं च ॥ २७ ॥

यत्पुनरुक्तं—भूताग्नेरपि मन्त्रवर्णे द्युलोकादिसंबन्धदर्शनात् मूर्धैव सुतेजा इत्याद्यवयवकल्पनं तस्यैव भविष्यतीति, तच्छरीराया देवताया वा ऐश्वर्ययोगादिति, तत् परिहर्तव्यम्। अत्रोच्यते—अतएव - उक्तेभ्यो हेतुभ्यः न देवता वैश्वानरः। तथा भूताग्निरपि न वैश्वानरः। न हि भूताग्नेरौष्ण्यप्रकाशमात्रात्मकस्य द्युमूर्धत्वादिकल्पना उपपद्यते, विकारस्य विकारान्तरात्मत्वासंभवात्। तथा देवतायाः सत्यप्यैश्वर्ययोगे न द्युमूर्धत्वादिकल्पना संभवति। अकारणत्वात् परमेश्वराधीनैश्वर्यत्वाच्च। आत्मशब्दासंभवश्च सर्वेष्वेषु पक्षेषु स्थित एव ॥ २७ ॥

## साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥

पूर्वं जाठराग्निप्रतीको जाठराग्न्युपाधिको वा परमेश्वर उपास्य इत्युक्तं अन्तःप्रतिष्ठितत्वाद्यनुरोधेन। इदानीं तु, विनैव प्रतीकोपाधि-

---

जाठरे कल्पनीयम्। तदपेक्षया नियन्तरि परमात्मन्येव समञ्जसम्। तथा-दृष्ट्युपदेशे च जाठरस्यापरित्यागात् उरएववेदिरित्यादिकं जाठरांशमादायोपपद्यते ॥ २६ ॥

**अत एव न देवता भूतं च।** इदं जाठरनिराकरणन्यायं भूतदेवतयोरतिदिष्टम्। तत्र अतिदेशनिवर्त्यं जाठरापेक्षया भूतदेवतयोर्विशेषं आह—**यत्पुनरुक्तमित्यादिना। अकारणत्वादिति।** तादात्म्येन नियन्तारं प्रति मूर्धादिकल्पनमुचितं न त्वतथाभूतदेवतां प्रति इति भावः। **परमेश्वराधीनेति।** अन्तर्याम्यधिकरणे हि 'अनन्यायत्तनियन्तृत्वग्रहणसम्भवे न अन्यायत्तं तत् ग्राह्यं' इति प्रतिपादितम्। देवतायाश्च [1]परमेश्वरतन्त्रैश्वर्याया न स्वातन्त्र्येण नियन्तृत्वमिति भावः। **आत्मशब्दासम्भवश्चेति।** देवतायाश्चेतनत्वेऽपि कोनआत्मेत्युपक्रमस्वारस्येनावगम्यमानं यत् उपासकंप्रत्यात्मत्वं तन्न सम्भवतीति भावः ॥ २७ ॥

---

1, मु. परमेश्वरतन्त्रैश्वर्यात्

कल्पनाभ्यां साक्षादपि परमेश्वरोपासनपरिग्रहे न कश्चिद्विरोध इति जैमिनिराचार्यो मन्यते। ननु जाठराग्न्यपरिग्रहे अन्तःप्रतिष्ठितत्ववचनं शब्दादीनि च कारणानि विरुद्ध्येरन्निति। अत्रोच्यते—अन्तः प्रतिष्ठितत्ववचनं तावत् न विरुध्यते। न हीह 'पुरुषविधं पुरुषेऽन्तः-प्रतिष्ठितं वेद' इति जाठराग्न्यभिप्रायेणेदमुच्यते। तस्य अप्रकृतत्वाद्-संशब्दितत्वाच्च। कथं तर्हि? यत् प्रकृतं मूर्धादिचुबुकान्तेषु पुरुषावयवेषु पुरुषविधत्वं कल्पितं तदभिप्रायेणेदमुच्यते 'पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद' इति। यथा वृक्षे शाखां प्रतिष्ठितां पश्यतीति तद्वत्। अथ वा यः प्रकृतः परमात्मा अध्यात्ममधिदैवतं च पुरुषविधत्वोपाधिः तस्य यत् केवलं साक्षिरूपं तदभिप्रायेणेदमुच्यते 'पुरुषेऽन्तःप्रतिष्ठितं वेद' इति। निश्चिते च पूर्वापरालोचनवशेन परमात्मपरिग्रहे तद्विषय एव वैश्वानरशब्दः केनचिद्योगेन वर्तिष्यते। विश्वश्चायं नरश्चेति विश्वेषां वा अयं नरः विश्वे वा नरा अस्येति विश्वानरः परमात्मा, सर्वात्मत्वात्। विश्वानर एव वैश्वानरः। तद्धितोऽनन्यार्थः, राक्षसवायसादिवत्।

---

**यथा वृक्षे शाखां प्रतिष्ठितां पश्यतीति तद्वदिति।** ततश्च यथा शाखास्थः पक्षी 'वृक्षे प्रतिष्ठितः' इत्युच्यते तद्वत् शरीरावयवे मूर्धादिचुबुकान्ते प्रतिष्ठितः परमात्मा शरीरे प्रतिष्ठित इति शक्यं निर्देष्टुम्। **साक्षिरूपम्**—विशुद्धं जीवस्वरूपम्। परमात्मन एव हि तेन रूपेण 'अनेन जीवेनात्मनाऽनु-प्रविश्य' इतिवाक्यपर्यालोचनया प्रवेशोऽवगम्यत इति भावः। इदं च पक्षद्वयं पुरुषपदस्य शरीरपरतामुपेत्य उक्तम्। जीवपरत्वे तु अन्तर्याम्यभिप्रायेण तद्वक्तुं शक्यत इति प्राक् प्रतिपादितम्। विश्वश्चायंनरश्चेत्यादिना [1]सर्वात्मत्वं [2]सर्वने-तृत्वं [3]सर्वनियन्तृत्वं चेत्यर्थत्रयं दर्शितं [4]वैश्वानरे प्रकृत्यंशस्य। **तद्धितोऽनन्यार्थे**

---

1. मु. सर्वनरात्मत्वं
2. **सर्वनेतृत्वं**—सर्वकारणत्वम्।
3. आ.नियन्तव्यसर्वनरत्वं
4. **वैश्वानरे**—वैश्वानरपदे।

**अग्निशब्दोऽपि अग्रणीत्वादियोगाश्रयणेन परमात्मविषय एव भविष्यति। गार्हपत्यादिकल्पनं प्राणाहुत्यधिकरणत्वं च परमात्मनोऽपि सर्वात्मत्वादुपपद्यते ॥ २८ ॥**

---

**इति** । तथा च निरुक्तम्—वैश्वानरः कस्मात् । विश्वनर एव वैश्वानरः । राक्षसो वायस इतिवत् । रक्ष एव हि राक्षसः वय एव हि वायसः - इति । **अग्रणीत्वादीति** । अग्रं - उत्कृष्टं फलं नयतीत्यग्रणीः । तथा च निरुक्तम्-अग्निः कस्मात् ? अग्रणीर्भवति, अग्रं नीयते, अग्रं नयति - इति । महाभारते च-'यस्माच्चायं नयत्यग्र्यां गतिं विप्रान् प्रपूजितः । तस्माच्च नयनाद्राजन् वेदेष्वग्निः प्रकीर्तितः ॥' इति ।

ननु पूर्वं रूढ्यपरित्यागेन पक्षद्वयं तथादृष्ट्युपदेशादिति दर्शितम् । तत्र वैश्वानरे परमात्मदृष्टिपक्षे यथाश्रुत एव [1]वैश्वानरादिशब्दः, उपाधिपक्षे तु रूढिपूर्विका लक्षणेति । अधुना कथं वैश्वानरादिपदं योगानुसारेण व्याख्यायते । रूढितो वा तत्पूर्वकलक्षणातो वा योगस्य दुर्बलत्वात् । अपि च, योगपक्षे वैश्वानरपदे कथं दीर्घः ? 'नरे संज्ञायां' इति सूत्रेण संज्ञायामेव नरशब्दे परतो विश्वशब्दस्य दीर्घविधानात् - इति चेत्—

उच्यते—निरुक्तपर्यालोचनया प्रकृते वैश्वानरादिपदे योग एवाश्रयणीयः । अन्यथा निरुक्तस्य निरवकाशतापत्तेः । प्रसिद्धाग्निविषये तदनपेक्षणात् रूढ्यैव प्रयोगोपपत्तेः । फलदातृत्वादिना [2]निरुक्तस्य परमात्मन्येव स्वारस्याच्च । अवश्यं रूढिवादिनाऽपि अग्निशब्दस्य यौगिकतैवाश्रयणीया, पर्यायाणां सहप्रयोगासम्भवात् । सा वैश्वानरपदेऽपि निरुक्तबलादस्तु । दीर्घस्तु 'अन्येष्वपि दृश्यते' इति केशाकेशीत्यादिवत् भविष्यति । न च - अस्मिन् पक्षे उर एव वेदिरित्यादिना वेद्यादिकल्पनं 'आत्मनि हैवास्य तद्वैश्वानरे हुतं स्यात्' इत्यादिकं चानुपपन्नम्, अग्नावेव हि तत् स्वरसं - [3]इत्याशङ्कनीयम् । तस्यहवाएतस्यात्मनो

---

1. मु. वैश्वानरशब्दः
2. **निरुक्तस्य**—अग्निपदनिरुक्तस्य ।
3. आ. इत्यपि शङ्कनीयम्

वैश्वानरस्य इतिवाक्यं हि उरएववेदिरित्यत्रापि [1]अनुवृत्तमेव । ततश्च मूर्धादिसाधारण्येन अन्वितस्य वैश्वानरस्येतिपदस्य षष्ठ्यन्तस्य वेद्यादिष्वपि शेषितासमर्पकतया वेद्यादीनां तदुद्देश्यकता अवगम्यते । एवं च गार्हपत्यादिपदमपि न गार्हपत्याद्यायतनत्वरूपणपरम्, अपि तु तत्तदग्नित्वरूपणपरमेव । गार्हपत्यादिपदानां अग्निविशेषेष्वेव रूढत्वात् । हृदयगार्हपत्यादीनां तदुद्देश्यकता च प्राणायस्वाहेत्यादिमन्त्रैः कर्तव्याहुत्याधारतया । न च तेषां होमानां प्राणादिदेवताकत्वात् कथं वैश्वानरपदप्रतिपाद्यपरमात्मोद्देश्यकतेति वाच्यम् । उपक्रम एव वेद्यादिरूपणस्य वैश्वानरपदप्रतिपाद्यपरमात्मोद्देश्यकतावगमेन तदाधाराहुतीनामन्योद्देश्यकतायां अवगतवेद्यादिगतपरमात्मोद्देश्यकताया अनिर्वाहात् तदनुसारेण प्राणायस्वाहेत्यादिमन्त्रगतानां प्राणादिपदानां परमात्मपरत्वकल्पनात् ।

दृश्यते हि प्रश्नोपनिषदि प्राणपदस्य वैश्वानरपदोदितपरमात्मसामानाधिकरण्यं 'स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते' इति । अत्र हि प्राणशब्दो [2]वैश्वानरपदोदितसूर्यान्तर्वर्तिसमष्टिप्राणाभिमानिहिरण्यगर्भान्तर्यामिपरः । 'ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यति' इति परब्रह्मान्वेषणया उपक्रमस्य प्रवृत्तत्वात्, 'अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्यया आत्मानमन्विष्य आदित्यमभिजयन्ते एतद्वै प्राणानामायतनं एतदमृतमभयमेतत्परायणं एतस्मान्न पुनरावर्तन्ते' इति उत्तरत्र अर्चिरादिमार्गापुनरावृत्त्योः श्रवणाच्च । एवं च यत् मध्ये सएषइति वाक्यात् पूर्वं 'प्रजाकामो वै प्रजापतिः....स मिथुनमुत्पादयते रयिञ्च प्राणञ्च' इति प्राणशब्दोदितस्योत्पत्तिप्रतिपादनं, तत् प्राणोपाध्यभिप्रायम् । यच्च तदनन्तरं 'तदेतदृचाभ्युक्तं-विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम् । सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः' इति सएषइतिवाक्यार्थ एव सौरमन्त्रोदाहरणं, तदपि सूर्योपाध्यभिप्रायं द्रष्टव्यम् ।

एवं च 'आत्मनि हैवास्य तद्वैश्वानरे हुतं स्यात्' इत्यत्रापि सप्तमी उद्देश्यताभिप्राया । 'यद्यपि चण्डालायोच्छिष्टंप्रयच्छेत्' इत्युपक्रमात् । तत्र ह्ययमर्थः

---

1. आ. अनुवर्तत एव   2. वैश्वानरपदोदितेति अन्तर्यामीत्यनेनान्वेति ।

प्रतीयते—चण्डालाय उच्छिष्टमपि यो दद्यात् आत्मन एव वैश्वानराय तद्दद्यात् सर्वात्मत्वात् - इति । दृश्यते च अस्मिन्नेव प्रकरणे उद्देश्यतायां सप्तमी—'स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहेति प्राणस्तृप्यति प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषितृप्यत्यादित्यस्तृप्यति आदित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किञ्च द्यौश्चादित्यश्चाधितिष्ठतः तत्तृप्यति' इत्येवमादिना होमतर्पणीयत्वेन प्रस्तुते जगति 'अथ य एतदेवं विद्वान् अग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति' इति सप्तमीप्रयोगस्य उद्देश्यतार्थकत्वात् । दृश्यते च लोकेऽपि 'सममब्राह्मणे दानं' इत्यादौ तदर्थता ।

एतेन - प्राणाहुतीनामग्निप्रतिसम्बन्धिकत्वात् तदभावे कथं सयांप्रथमामाहुतिंजुहुयादित्यादिवाक्यानामुपपत्तिः, कथं वा वेद्यादिरूपणस्य साकल्यं—इति शङ्काऽपि निरस्ता । 'हृदयं गार्हपत्यो मनोऽन्वाहार्यपचनः आस्यमाहवनीयः' इति साम्पादिकानामग्नीनां सत्त्वात् ।

भाष्ये तु - हृदयं गार्हपत्यः इत्यादयश्शब्दाः तत्तदग्न्यायतनपरा एव । तत्प्रतिसम्बन्धी च वैश्वानरः परमात्मैव । यद्यपि तादृशायतनप्रतिसम्बन्धित्वमग्नेरेवोचितं, तथाऽपि सर्वात्मके परमात्मनि अग्निधर्मः प्रतिपादयितुं शक्यः - इत्यभिप्रायेणोक्तं गार्हपत्यादिकल्पनमित्यादि । एवंसति 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इत्युपक्रम्याम्नातं सर्वलोकभूतात्मवर्तिभोग्यप्राप्तिरूपं फलं 'य एतदेवं विद्वानग्निहोत्रं जुहोति' इत्यादिवाक्यं सन्निधाप्य श्रुतं सर्वपाप्मप्रदाहरूपं च फलं सम्यगुपपद्यते । उपासनाग्निहोत्रयोरुभयोरपि परमात्मोद्देश्यकत्वात् ।

वस्तुतस्तु नात्र अग्निहोत्रं स्वतन्त्रं कर्म, अपि तु प्रकृतोपासनाङ्गम् । 'य एवं विद्वानग्निहोत्रं जुहोति' इति विद्यासंयोगात् । ततश्च अवयवेषु श्रुतं सर्वं [1]जातेष्टिन्यायेन [2]प्रधानोपासनागतमेव कल्प्यते । सर्वपाप्मप्रदाहादिकं च ब्रह्मविद्याफलत्वेनैव क्लृप्तमिति ततोऽपि[3] वैश्वानरो ब्रह्मेति । न च उपासना प्रधानं

---

1. मु. रात्रिसत्रन्यायेन
2. प्रधानोपासना—अवयव्युपासना ।
3. मु. "अपि" नास्ति

कथं पुनः परमेश्वरपरिग्रहे प्रादेशमात्रश्रुतिरुपपद्यत इति, तां व्याख्यातुमारभते—

## अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥

अतिमात्रस्यापि परमेश्वरस्य प्रादेशमात्रत्वं अभिव्यक्तिनिमित्तं स्यात्। अभिव्यज्यते किल प्रादेशमात्रपरिमाणः परमेश्वर उपासकानां कृते। प्रदेशेषु वा हृदयादिषूपलब्धिस्थानेषु विशेषेणाभिव्यज्यते। अतः परमेश्वरेऽपि प्रादेशमात्रश्रुतिः अभिव्यक्तेः उपपद्यत इति आश्मरथ्य आचार्यो मन्यते ॥ २९ ॥

## अनुस्मृतेर्बादरिः ॥ ३० ॥

प्रादेशमात्रहृदयप्रतिष्ठेन वा अयं मनसा अनुस्मर्यते, तेन प्रादेशमात्र इत्युच्यते। यथा प्रस्थमिता यवाः प्रस्था इत्युच्यन्ते तद्वत्। यद्यपि च यवेषु स्वगतमेव परिमाणं प्रस्थसंबन्धात् व्यज्यते। न चेह परमेश्वरगतं किंचित्परिमाणमस्ति यत् हृदयसंबन्धाद्व्यज्येत। तथाऽपि प्रयुक्तायाः प्रादेशमात्रश्रुतेः संभवति यथाकथंचित् अनुस्मरणमालम्बनं इत्युच्यते। प्रादेशमात्रत्वेन वा अयमप्रादेशमात्रोऽपि अनुस्मरणीयः प्रादेशमात्रश्रुत्यर्थवत्तायै। एवं अनुस्मृतिनिमित्ता परमेश्वरे प्रादेशमात्र-श्रुतिरिति बादरिराचार्यो मन्यते ॥ ३० ॥

## संपत्तेरिति जैमिनिस्तथाहि दर्शयति ॥ ३१ ॥

संपत्तिनिमित्ता वा स्यात् प्रादेशमात्रश्रुतिः। कुतः? तथाहि

---

अग्निहोत्रमङ्गं इत्यत्र नियामकं नास्तीति शङ्कनीयम्। 'आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहि' इति प्रश्नानुसारात्। तत्र हि अध्येषीतिपदं स्मरसीत्यर्थकम्। स्मरणं च उपासनारूपमेव पर्यवस्यति ॥ २८ ॥

'अभिव्यक्तेरित्याश्मरथ्यः अनुस्मृतेर्बादरिः' इति सूत्रद्वयोपक्षिप्तं पक्षद्वयं नाभिमतम्, प्रादेशमात्रश्रुतिमुख्यार्थत्वालाभात् श्रुत्यन्तराननुगुणत्वाच्चेति तादृशदोषद्वयरहितं पक्षमाह— संपत्तेरिति जैमिनिस्तथा हि दर्शयति इति।

समानप्रकरणं वाजनेयिब्राह्मणं द्युप्रभृतीन् पृथिवीपर्यन्तान् त्रैलोक्यात्मनो वैश्वानरस्य अवयवान् अध्यात्ममूर्धप्रभृतिषु चुबुकपर्यन्तेषु देहावयवेषु संपादयत् प्रादेशमात्रसंपत्तिं परमेश्वरस्य दर्शयति - 'प्रादेशमात्रमिव ह वै देवाः सुविदिता अभिसंपन्नाः तथा नु व एतान् वक्ष्यामि यथा प्रादेशमात्रमेवाभिसंपादयिष्यामीति । स होवाच–मूर्धानमुपदिशन्नुवाच एष वा अतिष्ठा वैश्वानर इति । चक्षुषी उपदिशन्नुवाच एष वै सुतेजा वैश्वानर इति । नासिके उपदिशन्नुवाच एष वै पृथग्वर्त्मात्मा वैश्वानर इति । मुख्यमाकाशमुपदिशन्नुवाच एष वै बहुलो वैश्वानर इति । मुख्या अप उपदिशन्नुवाच एष वै रयिर्वैश्वानर इति । चुबुकमुपदिशन्नुवाच एष वै प्रतिष्ठा वैश्वानर इति'। चुबुकमिति अधरं मुखफलकमुच्यते । यद्यपि वाजसनेयके द्यौः अतिष्ठात्वगुणा समाम्नायते आदित्यश्च सुतेजस्त्वगुणः । छान्दोग्ये पुनः द्यौः सुतेजस्त्वगुणा समाम्नायते आदित्यश्च विश्वरूपत्वगुणः । तथाऽपि न एतावता विशेषेण किंचित् हीयते, प्रादेशमात्रश्रुतेरविशेषात्, सर्वशाखाप्रत्ययत्वाच्च। संपत्तिनिमित्तां प्रादेशमात्रश्रुतिं युक्ततरां जैमिनिराचार्यो मन्यते ॥ ३१ ॥

---

**प्रादेशमात्रमिव ह वा इति** । देवाः सूर्यादयः प्रादेशतां अभिसम्पन्नाः-उपासनया प्रापिताः यदा भवन्ति तदा ते विदिता भवन्ति । एतान् - सूर्यादीन् । अत्र अतिष्ठादिपदैः तत्तद्गुणका द्युलोकादयो गृह्यन्ते । इदं औपमन्यवादीन् प्रति राज्ञः केकयस्य वचनम् । **नैतावतेति** । अतिष्ठात्वविशेषमात्रेण विद्याभेदो न भवतीत्यर्थः ।

**प्रादेशमात्रश्रुतेरविशेषादिति** । ननु - छान्दोग्ये 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानं वैश्वानरं' इति एवंपदेन पूर्वोक्तद्युमूर्धत्वादिप्रकारं परामृश्य तत्र प्रादेशमात्रतायाः प्रतिपादनात्, प्रदेशाः - द्युलोकादयः तत्सम्बन्धिनी मात्रा - प्रमाणं अस्येति प्रकारेण द्युलोकादिवैशिष्ट्यपर एव प्रादेशमात्रशब्दो व्याख्येयः । ततो न वाजसनेयकगतप्रादेशमात्रताप्रत्यभिज्ञानं प्रकृते - इति चेत्—

न—एवं - द्युमूर्धत्वादिविशिष्टं सन्तं यः प्रादेशमात्रं वाजसनेयकोक्तप्रकारेण

## आमनन्ति चैनमस्मिन् ॥ ३२ ॥

आमनन्ति चैनं परमेश्वरं अस्मिन् मूर्धचुबुकान्तराले जाबालाः 'य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति । सोऽविमुक्तः कस्मिन् प्रतिष्ठित इति । वरणायां नास्यां च मध्ये प्रतिष्ठित इति । का वै वरणा का च नासीति' । तत्र च इमामेव वरणां नासिकां च 'सर्वाणीन्द्रियकृतानि पापानि वारयतीति सा वरणा, सर्वाणीन्द्रियकृतानि पापानि नाशयतीति सा नासी इति वरणा नासी' इति निरुच्य पुनरामनन्ति 'कतमच्चास्य स्थानं भवतीति । भ्रुवोर्घ्राणस्य च यः संधिः स एष द्युलोकस्य परस्य च संधिर्भवति' (जाबा. उ. २) इति । तस्मादुपपन्ना परमेश्वरे प्रादेशमात्रश्रुतिः । अभिविमानश्रुतिः प्रत्यगात्मत्वाभिप्राया । प्रत्यगात्मतया सर्वैः प्राणिभिरभिविमीयत इत्यभि-

---

उपास्ते - इत्यन्वयेन प्रादेशमात्रश्रुति[1]मुख्यार्थताश्रुत्यन्तरैकार्थ्ययोस्सम्भवे तद्विरुद्धकल्पनायाः अन्याय्यत्वात् ॥ ३१ ॥

नन्वतिमात्रस्य परमात्मनः कथं मूर्धचुबुकान्तरालवर्तितया प्रादेशमात्रतां सम्पाद्य ध्यानं—इत्याशङ्क्य, इतोऽपि सूक्ष्मस्थाने परमात्मनो ध्यानं निरूप्यत इति प्रतिपादयति—**आमनन्ति चैनमस्मिन्** इति ।

**य एषोऽनन्तोऽव्यक्त आत्मेति ।** अनेन वाक्यसन्दर्भेण—भ्रुवोर्घ्राणस्य च सन्धि द्युलोकस्य परशब्दोदितद्युलोकोपरिविद्यमानस्य च [2]लोकस्य सन्धित्वेन ध्यात्वा, भ्रुवोर्घ्राणस्य च पापवारकत्वनाशकत्वगुणयोगात् 'वरणा' 'नासी' इति नामद्वयं ज्ञात्वा, तत्सन्धौ अविमुक्तपदोदीरितं जीवं तस्याप्यन्तःप्रतिष्ठितं परमात्मानं च उपासीत—इति प्रतिपाद्यते । **इमामेव वरणां नासिकां च वरणा नासी इति निरुच्य** इत्यत्र द्वितीयान्तो वरणाशब्दो भ्रूप्रतिपादकः । इमामेवनासिकामिति पाठे तु नासिकाशब्द एव भ्रूसहितनासिकापरः ।

---

1. आ॰ मुख्यता

2. **लोकस्य**—ब्रह्मलोकस्य । मु॰ 'लोकस्य' नास्ति

विमानः। अभिगतो वा अयं प्रत्यगात्मत्वात् विमानश्च मानवियोगात् इत्यभिविमानः। अभिविमिमीते वा सर्वं जगत् कारणत्वात् इत्यभिविमानः।

तस्मात् परमेश्वरो वैश्वानर इति सिद्धम् ॥ ३२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्यपादशिष्य-
श्रीमच्छङ्करभगवत्कृतौ श्रीमच्छारीरकमीमांसाभाष्ये
प्रथमाध्यायस्य द्वितीयः पादः

---

अत्र द्युमूर्धत्वादिलिङ्गस्य वेदाद्यग्निलिङ्गाभिभूतत्वात् अस्पष्टता ॥ ३२ ॥

इति वैश्वानराधिकरणम् ॥ ७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्भूमानन्दसरस्वतीचरणानु-
ग्रहलब्धसारस्वतपदस्य निरतिशयौदासीन्यादिगुणरत्न-
खचितयतिकुलोत्तंसश्रीमद्रामानन्दतीर्थमुखारविन्द-
निर्गतशारीरकसूत्रभाष्यार्थस्वर्धुनीप्रवाहनि-
मज्जनसुहितस्य श्रीमदद्वैतानन्दस्य
कृतौ शारीरकभाष्यव्याख्यायां
ब्रह्मविद्याभरणाख्यायां
प्रथमाध्यायस्य
द्वितीयः पादः

ॐ

प्रथमाध्याये तृतीयः पादः

१ द्युभ्वाद्यधिकरणम्

## द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

**इदं श्रूयते—**

**'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः ।**

**तमेवैकं जानथ आत्मानं अन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः' मु.उ. २।२।५) इति । अत्र यदेतत् द्युप्रभृतीनामोतत्ववचनात् आयतनं किंचिदवगम्यते, तत् किं परं ब्रह्म स्यात् आहोस्विदर्थान्तरं इति संदिह्यते । तत्रार्थान्तरं किमप्यायतनं स्यादिति प्राप्तम् । कस्मात्, 'अमृतस्यैष सेतुः' इति श्रवणात् । पारवान् हि लोके सेतुः प्रख्यातः । नच परस्य ब्रह्मणः पारवत्त्वं शक्यमभ्युपगन्तुं, 'अनन्तमपारम्' (बृ.उ. २।४।१२)**

---

ॐ

महागणपतिं वन्दे तं शक्त्या परया युतम् ।

सद्रत्नैः पूरितं कुम्भं कराग्रेण बिभर्ति यः ॥

**अमृतस्यैष सेतुरिति ।** [1]ननु - परमतस्सेतून्मानसम्बन्धेत्यधिकरणे सेतुपदस्य ब्रह्मण्येव गौणतेति व्यवस्थापयिष्यते, ततस्तेन गतार्थमिति चेत्—

उच्यते—गौणत्वेऽपि, ब्रह्मणि सेतुशब्दो न भवति अपि तु प्रधानादौ इतिपुनः इहाक्षिप्यते । 'एतानि ह वा अमृतस्य नामधेयानि' [जाबा उ. ३] इत्यन्यत्र, इहापि 'आनन्दरूपममृतं यद्विभाति' इत्यादौ अमृतपदस्य ब्रह्मणि प्रयोगात्, षष्ठीनिर्देशेन अमृतात् सेतोर्भेदः प्रतीयते । ततः कथं सेतुपदस्य ब्रह्मणि वृत्तिः स्यात् । अपि च सेतुपदं मुख्यया वृत्त्या तीरद्वयसम्बन्धित्वे सति जलगतिनिरोधकत्वेन प्रवृत्तिनिमित्तेन मृद्दार्वादिनिचयं प्रतिपादयति । अध्यात्माधिकारे च तदसम्भवेन यस्यकस्यचित्प्रतिपादनमपेक्षितम् । ततश्च प्रधानप्रतिपादनमेवास्तु । तत्र परिच्छिन्नत्वगुणसम्भवात् ।

ननु स्थितिहेतुत्वं प्रापकत्वं वा असाधारणो गुणः, तेन ब्रह्मणि गौणता किं न स्यात् ।

---

1. **नन्विति** इयं शङ्का श्रुतप्रकाशिकायां भाष्यदूषणतया परिदृश्यते ।

**इति श्रवणात्। अर्थान्तरे चायतने परिगृह्यमाणे स्मृतिप्रसिद्धं प्रधानं**

---

न स्यात्। न हि तावन्मात्रं सेतोरसाधारणम्। अपि तु जलस्थितिविशेषहेतुत्वं परतीरप्राप्तिविशेषहेतुत्वं च। न च सर्वकारणे ब्रह्मणि तावन्मात्रप्रतिपादनेन किञ्चित् प्रयोजनमस्ति। अतः स्थितिसामान्यहेतुत्वं प्राप्तिसामान्यहेतुत्वं [1]च प्रतिपादनीयम्, न च तत् असाधारणं, इति परिच्छिन्नत्वमेव तेन लक्षणीयम्।

न च - सर्वेषां साधारण्ये केन विनिगमकेन परिच्छिन्नत्वं लक्षणीयम्। प्रत्युत तथात्वे आत्मपदं विरुध्यते। 'तमेवैकं जानथ आत्मानं' इति च श्रूयते। तथा च अत्रधिकरणे वाक्यशेषानुसारिण्याः लक्षणाया एव निरूपितत्वात् प्रापकत्वमेव लक्षणीयम्। एवं च सति अमृतस्येतिपदेनापि [2]सेतुशब्दस्यान्वयो लभ्यते। कस्य प्रापक इति उत्थिताकाङ्क्षत्वात्। न तु परिच्छिन्नत्वपक्षे कस्य परिच्छिन्न इत्यपेक्षास्ति। ततश्च अमृतस्येतिषष्ठ्यन्तान्वयालाभात् आत्मपदानुपपत्तेश्च न परिच्छिन्नत्वगुणयोगेन प्रधानं लक्षणीयम्। अपि तु उभयस्वारस्याय प्रापकत्वगुणयोगेन ब्रह्मैव लक्षणीयम्—इति वाच्यम्।

एवं हि मन्यते—यस्मिन्द्यौः पृथिवीचान्तरिक्षमोतं इत्ययमंशोऽनुवादः। तस्य पुरोवादापेक्षायां साङ्ख्यस्मृतिः पुरोवादो भविष्यति। तदिदमुक्तं **स्मृतिप्रसिद्धमिति।**

यदि तु तस्याः स्मृतेः निर्मूलत्वात् श्रुतिरेव पुरोवादत्वेनापेक्षितेत्युच्यते, तदाऽपि ओतशब्दप्रत्यभिज्ञातं "यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यत् भूतं भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतञ्च' इति प्रश्ने 'आकाश एव तदोतं च प्रोतञ्च' इत्युत्तरितमव्याकृतं वा अस्तु। ततश्च उपक्रमस्वारस्यानुसारेण अव्याकृते स्थिते सेतुशब्दः परिच्छिन्नत्वगुणयोगेन अत्रैव भविष्यति। प्रापकत्वापेक्षया परिच्छिन्नत्वगुणो ह्यन्तरङ्गः सेतौ

---

1. आ. वा प्रतिपादनीयम्
2. मु. सेतुशब्दार्थस्य

**परिग्रहीतव्यं, तस्य कारणत्वादायतनत्वोपपत्तेः। श्रुतिप्रसिद्धो वा वायुः स्यात्, 'वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेण अयं च लोकः परश्च लोकः सर्वाणि च भूतानि सन्दब्धानि भवन्ति' (बृ. पु. ३।७।२) इति वायोरपि विधारणत्वश्रवणात्। शारीरो वा स्यात्। तस्यापि भोक्तृत्वात् भोग्यं प्रपञ्चं प्रत्यायतनत्वोपपत्तेः—इत्येवं प्राप्ते**

**इदमाह-द्युभ्वाद्यायतनमिति। द्यौश्च भूश्च द्युभुवौ, द्युभुवौ आदी यस्य तदिदं द्युभ्वादि। यदेतदस्मिन्वाक्ये द्यौः पृथिव्यन्तरिक्षं मनः प्राणा**

---

सहजत्वात्। प्रापकत्वं तु कादाचित्कत्वात् बहिरङ्गम्। ततश्च उपक्रमोपसंहारस्वारस्यानुसारेण मन्त्रस्य अव्याकृतपरत्वे निर्णीते आत्मपदं [1]भावमात्रलक्षकं भविष्यति। इतरवाग्विमोकपूर्वकं ज्ञेयत्ववचनं तु स्तुत्यभिप्रायं भविष्यति। एतदुक्तं भवति—अव्याकृतात्मक एव एकः पदार्थः ब्रह्मण उपादानत्वादिनिर्वाहको ज्ञातव्यः। तथाविधोऽन्योऽपि पदार्थोऽस्तीति वचनं तु त्यक्तव्यमेव—इति। न च 'ब्रह्मण उपादानत्वनिर्वाहकः' इत्यध्याहारो दोषः। 'अमृतस्यैषः' इति वाक्यशेषलब्धत्वात्। तस्य ह्ययमर्थः—एषः - द्युभ्वाद्याधारः अमृतस्य-ब्रह्मणःसम्बन्धी - तदुपादानत्वादिनिर्वाहक इति यावत्। एवं च सेतुरित्यस्य अमृतस्येत्यत्रान्वयाभावोऽपि न दोषः। पारवानित्यादौ परिच्छिन्नतापरः पारशब्दः। ब्रह्मणःत्रिविधपरिच्छेदशून्यत्वं अनन्तमपारमित्यादिश्रुतिप्रसिद्धम्।

**श्रुतिप्रसिद्धो वा वायुस्स्यादिति।** 'वायुर्वै गौतम तत् सूत्रं' इत्यादिश्रुतिप्रसिद्धः। तत्र च [2]देवतायामात्मश्रुतिरुपपन्नैव। अमृतस्यैषसेतुरिति च आपेक्षिकामृतप्रापकत्वाभिप्रायमुपपद्यते। हिरण्यगर्भोपासनायाः ब्रह्मलोकप्रापकत्वात्। 'तमेवैकं जानथ आत्मानं अन्या वाचो विमुञ्चथ' इति तदुपासकाभिप्रायम्। **शारीरो वा स्यादिति।** 'मनस्सह प्राणैश्च सर्वैः' इति मनआद्याधारत्वं जीवस्यैव स्वारस्येन प्रतीयते। 'तमेवैकं जानथ आत्मानं' इति तु अहमिति प्रतीयमानेषु शरीरादिषु मध्ये [3]इति व्याख्येयम्। 'अमृतस्यैष

---

1. **भावमात्रलक्षकमिति** एतेन-श्रुतप्रकाशिकोक्तं दूषणं निरस्तं वेदितव्यम्। आ. भावमात्रोपलक्षकं। 2. **देवतायामिति** ततश्च श्रुतप्रकाशिकोक्तदूषणस्य नावकाशः। 3. **इतीति** इत्यध्याहारेणेत्यर्थः।

इत्येवमात्मकं जगत् ओतत्वेन निर्दिष्टं तस्यायतनं परं ब्रह्म भवितुमर्हति। कुतः, स्वशब्दात्, आत्मशब्दात् इत्यर्थः। आत्मशब्दो हीह भवति—'तमेवैकं जानथ आत्मानम्' इति। आत्मशब्दश्च परमात्मपरिग्रहे सम्यगवकल्पते न अर्थान्तरपरिग्रहे। क्वचिच्च स्वशब्देनैव ब्रह्मण आयतनत्वं श्रूयते—'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' (छा. उ. ६।८।४) इति। स्वशब्देनैव चेह पुरस्तादुपरिष्टाच्च ब्रह्म संकीर्त्यते 'पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्' इति, 'ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चात् ब्रह्म दक्षिणतश्चोत्तरेण' (मु. उ. २।२।११) इति च। तत्र तु आयतनायतनवद्भावश्रवणात् सर्वं ब्रह्मेति च सामानाधिकरण्यात्, यथा अनेकात्मको वृक्षः शाखा स्कन्धो मूलं चेति एवं नानारसो विचित्र आत्मेत्याशङ्का संभवति, तां निवर्तयितुं सावधारणमाह—'तमेवैकं जानथ आत्मानम्' इति। एतदुक्तं भवति—न कार्यप्रपञ्चविशिष्टो विचित्र

---

सेतुः' इति च अमृतस्य-अविद्यानिवृत्तिरूपमोक्षस्य सेतुः-धारकः इति। 'एष सेतुर्विधरणः' इत्यादौ धारकत्वगुणेनैव सेतुशब्दप्रसिद्धेः।

**आत्मशब्दो हि इह भवतीति।** ननु उपक्रम एव ओतशब्देन अव्याकृतं प्रत्यभिज्ञातमिति तदनुसारेण आत्मश्रुतिरन्यथा नेयेत्युक्तम्। दुरुक्तं तु तत्। सर्वाधारस्याप्यव्याकृताकाशस्य 'एतस्मिन् नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इति वाक्येन स्वाधेयैः सर्वैः सहितस्य ब्रह्मण्योतत्वप्रतिपादनात्। ततश्च स्वतन्त्र आधारो ब्रह्मैव। अन्यत्तु ब्रह्माश्रितं सत् आधारः। तथा च अन्तर्याम्यधिकरणन्यायेन[1] उपक्रमोऽपि ब्रह्मण्येव स्वरसः। यद्यप्यात्मशब्दो रूढ्या जीवसाधारणोऽपि भवति, तथाऽपि योगेन ब्रह्मासाधारण एव। तथा च व्यापकत्वरूपयोगेन रूढ्या च परमेश्वरे स्वरसस्य न रूढिमात्राश्रयणेन जीवसाधारण्यं कल्पयितुं युक्तम्। स्वशब्दादित्यस्य अर्थान्तरमाह—**क्वचिच्च स्वशब्देनैव ब्रह्मण इति।**

---

1. **न्यायेन**— स्वतन्त्रस्य ग्रहणसम्भवे परतन्त्रस्य ग्रहणं अनुचितं—इति न्यायेन।

आत्मा विज्ञेयः, किं तर्हि? अविद्याकृतं कार्यप्रपञ्चं विद्यया प्रविलापयन्तः तमेवैकमायतनभूतमात्मानं जानथ एकरसं—इति। यथा-यस्मिन्नास्ते देवदत्तः तदानयेत्युक्ते आसनमेवानयति न देवदत्तम्, तद्वत् आयतनभूतस्यैवैकरसस्यात्मनो विज्ञेयत्वमुपदिश्यते। विकारानृताभिसंधस्य च अपवादः श्रूयते 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' (का. उ. २।४।११) इति। सर्वं ब्रह्मेति तु सामानाधिकरण्यं प्रपञ्चप्रविलापनार्थं न अनेकरसताप्रतिपादनार्थम्। 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव एवं वा अरेऽयमात्मा अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' (बृ. उ. ४।५।१३) इत्येकरसताश्रवणात्। तस्मात् द्युभ्वाद्यायतनं परं ब्रह्म।

यत्तूक्तं, सेतुश्रुतेः सेतोश्च पारवत्त्वोपपत्तेः ब्रह्मणोऽर्थान्तरेण द्युभ्वाद्यायतनेन भवितव्यमिति। अत्रोच्यते—विधारणत्वमात्रमत्र सेतुश्रुत्या विवक्ष्यते न पारवत्त्वादि। न हि मृद्दारुमयो लोके सेतुर्दृष्ट इति अत्रापि मृद्दारुमय एव सेतुरभ्युपगम्यते। सेतुशब्दार्थोऽपि विधारणत्वमात्रमेव न पारवत्त्वादि, षिञो बन्धनकर्मणः सेतुशब्दव्युत्पत्तेः।

---

**विधारणत्वमात्रमत्र सेतुश्रुत्या विवक्ष्यते न पारवत्त्वादीति।** उपक्रमानुसारेण मन्त्रस्य ब्रह्मपरत्वे निर्णीते सेतुपदं तत्रैव गौण्या वृत्त्या व्याख्येयम्। तथा च अमृतस्येतिषष्ठ्यन्तेन प्रतीयमानः सेतुशब्दार्थान्वयोऽपि सङ्गतो भविष्यति। न च-अमृतपदेन ब्रह्मण एव प्रतिपादनेन सेतुशब्दार्थोऽपि ब्रह्मैव चेत् कथं धार्यधारकभावः, तस्य भेदगर्भत्वात्-इति वाच्यम्। निवृत्ताविद्यावस्थं ब्रह्म अमृतपदार्थः, द्युभ्वाद्यायतनावस्थं सेतुपदार्थः, इति वैवक्षिकभेदमादाय तादात्म्येन धार्यधारकभावसम्भवात्।

**सेतुशब्दार्थोऽपीत्यादि।** ननु-विधारणत्वमेव तत्र प्रवृत्तिनिमित्तं चेत् पीठादीनामपि सेतुपदप्रतिपाद्यता स्यात्। अपि च योगेन तदर्थग्रहणं वक्तव्यम्, स च रूढौ तत्पूर्वकलक्षणायां वा सम्भवन्त्यां अयुक्तः। अपि च, योगपक्षेऽपि धारणं न सम्भवति सेतुपदार्थः, अपि तु बन्धनम्। न च धारणबन्धनयोरभेदः।

जलगतिविच्छेदो हि बन्धनम्, धारणं तु विच्छिन्नगतिकस्य जलस्य स्थितिः - इति चेत्—

उच्यते —विधारणत्वमात्रमित्यादिना अयमर्थो विवक्षितः । परिच्छिन्नत्वं सेतुशब्दार्थकोटौ न निवेशनीयम् । न च जलगतिविच्छेदकत्वमात्रं सेतुशब्दार्थश्चेत् [1]घटोदरनिस्सरज्जलबन्धनसाधने मधूच्छिष्टलाक्षादौ अतिप्रसक्तिः । परिच्छिन्नत्वविशेषणेऽपि तदवारणात् । अतः तद्वारणार्थं [2]परागर्वाक्तीरसम्बन्धित्वमेव विवक्षणीयम् । न चात्र योगरूढ्योर्विरोधः, येन योगस्य दुर्बलत्वं स्यात् । योगार्थगर्भितस्यैव रूढ्यर्थस्य स्वीकारात् । धारणं च स्थितिः । न च सा गतिविच्छेदरूपात् बन्धनात् भिद्यते । गतिनिवृत्तिरेव हि स्थितिः । तथा च [3]परिच्छिन्नत्वमपहाय धारणमेव सेतुपदप्रतिपाद्यं प्रकृते विवक्षणीयम्, तस्य शब्दार्थैकदेशत्वात् इति तात्पर्यम् ।

ननु - 'एषसेतुर्विधरण एषां लोकानामसम्भेदाय' इत्यादाविव सेतुशब्दार्थकोटौ निविष्टं बन्धनापरपर्यायं धारणं प्रकृते वक्तुं न शक्यते । तत्र हि जगन्मर्यादानामतिक्रमनिरोधो [4]बन्धनरूपो भवति । 'एषांलोकानामसम्भेदाय' इति वाक्यशेषात् । अमृतपदोदितस्य तु मोक्षस्य लब्धात्मकस्य चलनं न प्रसक्तमिति कथं सेतुपदेन बन्धक इत्यर्थः [5]इह प्रतिपादनीयः । न हि 'अमृतस्य चलननिवर्तकः' इत्यन्वयः सम्भवति । परं तु, भूतलेघटस्तिष्ठतीत्यादाविव सत्तापरपर्यायस्थितिरूपं धारणं प्रकृते विवक्षणीयम् । तच्च न सेतुपदार्थकोटौ निविष्टम् । अपि तु तन्निविष्टबन्धनफलम् । निरुद्धगतिकं हि जलं प्रभूततया सत्तां लभते - इति चेत्—

उच्यते - प्रकृते सत्तापरपर्यायं धारणमेव विवक्षितम् । तथा च अमृतस्यसेतुरित्यस्य मोक्षसत्ताहेतुरित्यर्थः पर्यवस्यति । स च गौण एव । अत एव भाष्ये

---

1. मु. घटोदरनिस्सृत

2. **परागर्वाक्तीरसम्बन्धित्वमेवेति**—एवेन परिछिन्नत्वव्यावृत्तिः, न तु जलगतिविच्छेदकत्वस्य, नद्यादावतिव्याप्तेः । अत एव नचेतिशङ्काग्रन्थे 'जलगतिविच्छेदकत्वमात्रं' इति मात्रशब्दोपादानम् । 3. आ. परिच्छिन्नत्वापेक्षया

4. आ. बन्धकरूपः सम्भवति सेतुपदप्रतिपाद्यः

5. मु. 'इह' नास्ति

अपर आह—'तमेवैकं जानथ आत्मानम्' इति यदेतत्संकीर्तितमात्मज्ञानं, यच्चैतत् 'अन्या वाचो विमुञ्चथ' इति वाग्विमोचनं, तदत्र अमृतत्वसाधनत्वात् 'अमृतस्यैष सेतुः' इति सेतुश्रुत्या संकीर्त्यते, न तु द्युभ्वाद्यायतनम्। तत्र, यदुक्तं सेतुश्रुतेर्ब्रह्मणोऽर्थान्तरेण द्युभ्वाद्यायतनेन भाव्यमिति, एतदयुक्तम् ॥ १ ॥

## मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥

इतश्च परमेव ब्रह्म द्युभ्वाद्यायतनम्। यस्मात् मुक्तोपसृप्यता अस्य व्यपदिश्यमाना दृश्यते। मुक्तैरुपसृप्यं मुक्तोपसृप्यम्।

'विधारणत्वमात्रमत्र सेतुश्रुत्या विवक्षितं' इति विवक्षापरपर्यायामुख्यवृत्तिविषयत्वं प्रागुक्तम्। सेतुशब्दार्थोऽपीत्यादिवाक्यं तु एषसेतुर्विधरणइत्यादिवाक्यविषयं प्रकृते दृष्टान्तार्थम्।

अपर आहेति। ननु - अस्मिन् पक्षे साधनत्वगुणयोगेन सेतुशब्दो ज्ञाने वाग्विमोकपूर्वके प्रवर्ततां नाम, सेतोरपि प्रभूतजलसाधनता अस्त्येवेति सेतुज्ञानयोः साधनत्वगुणसम्भवात्। तथाऽपि एतत्पदेन अद्रव्यस्य लिङ्गसङ्ख्यानन्वयिनो ज्ञानस्य जानथेत्याख्यातेन [1]उपात्तस्य परामर्शो न सम्भवति। सर्वनाम्नां द्रव्यपरामर्शकताया एव व्युत्पत्तिसिद्धत्वात्। अपि च, 'तदेतत् सत्यं तदमृतं तद्वेद्धव्यं सोम्य विद्धि' इत्यादौ पूर्वत्र, उत्तरत्र च 'स एषोऽन्तश्चरते बहुधा जायमानः' इत्यादौ एतत्पदस्य परमात्मपरत्वं दृष्टम्। कथमिह ज्ञानपरत्वं विवक्ष्यते?

उच्यते—अद्रव्यपरामर्शकता सर्वनाम्नां व्युत्पत्तिविरुद्धेति न। 'दुष्टो राजा नश्यतीति यत् स देशस्य गुण एव' 'अपोऽश्नाति तन्नेवाशितं [2]नेवानशितम्' इत्यादौ लोकवेदयोः अद्रव्यपरामर्शकताया अपि दर्शनात्। पूर्वोत्तरमन्त्रयोः आत्मन एव योग्यतया प्रस्तुतत्वेन ज्ञानस्य चाप्रस्तुतत्वेन आत्मपरामर्शकताभ्युपगमेऽपि, अस्मिन् मन्त्रे, पूर्वं विधेयतया प्राधान्येन प्रस्तुतस्य वाग्विमोकपूर्वकज्ञानस्य परामर्शसम्भवे न अप्रधानस्यात्मनः परामर्शो युक्तः ॥ १ ॥

1. आ. प्रतिपन्नस्य 2. आ. तन्नेवानशितं

देहादिष्वनात्मस्वहमस्मीत्यात्मबुद्धिरविद्या, ततः तत्पूजनादौ रागः तत्परिभवादौ द्वेषः तदुच्छेददर्शनात् भयं मोहश्च इत्येवमयमनन्तभेदोऽनर्थव्रातः संततः सर्वेषां नः प्रत्यक्षः। तद्विपर्ययेण अविद्यारागद्वेषादिदोषमुक्तैः उपसृप्यं - उपगम्यमेतदिति द्युभ्वाद्यायतनं प्रकृत्य व्यपदेशो भवति। कथम्?

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' (मु.उ. ३।२।८)

इत्युक्त्वा ब्रवीति 'तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' (मु. उ. ३।२।८) इति। ब्रह्मणश्च मुक्तोपसृप्यत्वं प्रसिद्धं शास्त्रे

'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते' (बृ. उ. ४।४।७)

इत्येवमादौ। प्रधानादीनां तु न क्वचित् मुक्तोपसृप्यत्वमस्ति प्रसिद्धम्।

---

ननु - मुक्तानां ब्रह्मात्मनाऽवस्थानेन प्राप्यान्तराभावात् कथं मुक्तोपसृप्यं ब्रह्म - इत्याशङ्क्य, सूत्रे मुक्तपदं जीवन्मुक्तपरमित्यभिप्रेत्य व्याचष्टे—देहादिष्विति। जीवन्मुक्तानां आवरणशक्तिमदज्ञानराहित्येऽपि विक्षेपांशानुवृत्त्या मात्रया ब्रह्मप्राप्तिरस्ति। अतः सम्भवति मुक्तोपसृप्यत्वं ब्रह्मणः। जीवन्मुक्तप्राप्यत्वं ब्रह्मणः प्रतिपादयद्वाक्यमुदाहरति—भिद्यत इति। 'मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय। तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति' इति पूर्वमन्त्रे आनन्दांशावरणनिवृत्त्युपयोगि यज्ज्ञानमुक्तं, तदेवेह 'तस्मिन् दृष्टे' इत्यनेनानूद्य, तस्य संशयादिप्रयोजकहृदयग्रन्थिशब्दिताहंममाध्यासनिवृत्तिः अवान्तरफलत्वेन प्रतिपाद्यते। तथाविद्वानित्यनेन तु तदेव ज्ञानं अनूद्य तस्य निरवशेषविक्षेपांशनिवृत्तिपूर्वकं ब्रह्मप्राप्तिः [1]फलं प्रतिपाद्यत इति भावः। यदा सर्व इति। अत्र मन्त्रे 'अथ मर्त्योऽमृतो भवति' इत्यन्तेन जीवन्मुक्तिः 'अत्र ब्रह्म समश्नुते' इति परममुक्तिः प्रतिपाद्यते।

मुक्तैः - वाग्विमोकयुक्तैः उपसृप्यं - ज्ञेयं - इत्येवंप्रकारेण सूत्रस्यार्थान्तरं

---

1. मु. 'फलं' नास्ति

अपि च 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः' इति वाग्विमोकपूर्वकं विज्ञेयत्वमिह द्युभ्वाद्यायतनस्योच्यते। तच्च श्रुत्यन्तरे ब्रह्मणो दृष्टम्—

तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः।

नानुध्यायाद्बहूञ्छब्दान् वाचो विग्लापनं हि तत्॥' (बृ. उ. ४।४।२१) इति। तस्मादपि द्युभ्वाद्यायतनं परं ब्रह्म॥ २॥

## नानुमानमतच्छब्दात्॥ ३॥

यथा ब्रह्मणः प्रतिपादको वैशेषिको हेतुरुक्तो नैवमर्थान्तरस्य वैशेषिको हेतुः प्रतिपादकोऽस्ति इत्याह— न अनुमानम् - सांख्यस्मृतिपरिकल्पितं प्रधानं इह द्युभ्वाद्यायतनत्वेन प्रतिपत्तव्यम्। कस्मात्? अतच्छब्दात्। तस्य - अचेतनस्य प्रधानस्य प्रतिपादकः शब्दः तच्छब्दः,

---

दर्शयति— अपि चेति। तं - परमात्मानं विज्ञाय - श्रवणमननाभ्यां निश्चित्य प्रज्ञां - ध्यानं कुर्वीत। बहून् - अनात्मगोचरान् साकल्येन, आत्मगोचरानपि ध्यानसाधनप्रणवादिव्यतिरिक्तान् नानुध्यायात् - न स्मरेत्। तत्स्मरणं हि उच्चारणद्वारा वाचः श्रमहेतुः॥ २॥

ननु - यस्मिन्द्यौरितिमन्त्रे अनुवाद्यतया यत्पदेन प्रतीयमानं द्युभ्वाद्यायतनं प्रधानमेव। तथा हि सति अनुमानसिद्धस्यप्रधानस्यानुवाद इति सिध्यति। ब्रह्मपक्षे तु श्रुतिसिद्धस्यतस्यानुवादो वक्तव्यः स्यात्। श्रुत्यनुमानयोर्मध्ये च अनुमानस्यैव पुरोवादता वक्तव्या। श्रुत्यर्थस्य शक्तिग्रहार्थे प्रत्यक्षानुमानापेक्षत्वेन विलम्बितोपस्थितिकतया श्रुतिमपेक्ष्य अनुमानस्यैव श्रुत्यनपेक्षस्य झटित्यर्थबोधकत्वात्—इतिशङ्कानिरासार्थमिदं सूत्रम् - **नानुमानमतच्छब्दात्** इति।

शक्तिग्रहवेलायामनुमानाद्यपेक्षायामपि गृहीतशक्तिकस्य शाब्दबोधवेलायां न तदपेक्षा। अन्यथा परं पति बोधनस्थले शाब्दबोधात् प्रागेव [1]प्रवृत्त्यादेरसम्भवेन

---

1. **प्रवृत्त्यादेरसम्भवेनेति**—परं प्रति कश्चित् 'गामानय' इति बोधयति, न तु तदा स्वयमपि गामानयति, तत्र परस्य शब्दबोधात् पूर्वं प्रवृत्त्याद्यसम्भवेन, बोधकस्यापि प्रवृत्त्यभावेनेत्यर्थः।

न तच्छब्दः अतच्छब्दः । न ह्यत्र अचेतनस्य प्रधानस्य प्रतिपादकः कश्चिच्छब्दोऽस्ति, येन अचेतनं प्रधानं कारणत्वेन आयतनत्वेन वा अवगम्येत । तद्विपरीतस्य चेतनस्य प्रतिपादकशब्दोऽत्रास्ति 'यः सर्वज्ञः सर्ववित्' (मु. उ. १।१।९) इत्यादिः । अत एव न वायुरपीह द्युभ्वाद्यायतनत्वेनाश्रीयते ॥ ३ ॥

**प्राणभृच्च ॥ ४ ॥**

यद्यपि प्राणभृतो विज्ञानात्मन आत्मत्वं चेतनत्वं च संभवति, तथाऽपि उपाधिपरिच्छिन्नज्ञानस्य सर्वज्ञत्वाद्यसंभवे सति अस्मादेव अतच्छब्दात् प्राणभृदपि न द्युभ्वाद्यायतनत्वेनाश्रयितव्यः । न च उपाधिपरिच्छिन्नस्य अविभोः प्राणभृतो द्युभ्वाद्यायतनत्वमपि सम्यक्संभवति । पृथग्योगकरणं उत्तरार्थम् ॥ ४ ॥

---

शब्दबोधासम्भवात्, अनागतादिगोचरशाब्दबोधस्थले च प्रत्यक्षसाचिव्यमपि नास्तीति, शब्दस्य प्रत्यक्षानुमानापेक्षं बोधकत्वमित्यसङ्गतम् । अपि तु आकाङ्क्षादिसाचिव्यादेव । ततश्च न शब्दस्य विलम्बितप्रवृत्तिकतेति तस्यैव पुरोवादता युक्ता नानुमानस्य-इत्यभिप्रेत्याह —**न ह्यत्रेति** । यस्मिन्द्यौः पृथिवीचान्तरिक्षमोतमित्यंशो हि अनुमानसिद्धप्रधानानुवादकः परस्याभिमतः, स तु न तदनुवादी, अपि तु सकलश्रुतिसिद्धसर्वप्रपञ्चाधिष्ठानब्रह्मानुवाद्येवेति भावः । पूर्वं तत्प्रतिपादकशब्दाभावादित्येवं अतच्छब्दादिति सौत्रं पदं व्याख्याय तद्विरुद्धचेतनप्रतिपादकशब्दात् इत्यर्थपरतया व्याचष्टे—**तद्विपरीतस्येति** ॥ ३ ॥

वायुदेवताजीवयोर्निरासार्थं सूत्रं **प्राणभृच्चेति** । **न चोपाधिपरिच्छिन्नस्येति** । वायुदेवताया अपि न अन्यानायत्तं द्युभ्वाद्यायतनत्वं सम्भवतीत्यपि द्रष्टव्यम् । मनःप्राणाद्यायतनत्वं तु ब्रह्मणोऽपि सम्भवतीति भावः । **उत्तरार्थमिति** । 'भेदव्यपदेशात्' इत्यादिषु जीवनिराकरणसाध्यस्यैव [1]योग्यतया, सुखेन

---

1. **योग्यतयेति** यत्त्वत्र श्रुतप्रकाशिकायां किम्पुनर्न्यायेन प्रधानव्यावर्तकत्वमप्युत्तरसूत्राणामुक्तम्, तदयुक्तम् - वह्न्यभावसाधकजलादिहेतोः धूमाभावसाधकत्वेन व्यवहाराभावात् इति भावः ।

कुतश्च न प्राणभृत् द्युभ्वाद्यायतनत्वेनाश्रयितव्यः—

## भेदव्यपदेशात् ॥ ५ ॥

भेदव्यपदेशश्चेह भवति 'तमेवैकं जानथ आत्मानम्' इति ज्ञेयज्ञातृभावेन । तत्र प्राणभृत्तावत् मुमुक्षुत्वात् ज्ञाता, परिशेषादात्मशब्दवाच्यं ब्रह्म ज्ञेयं द्युभ्वाद्यायतनमिति गम्यते, न प्राणभृत् ॥ ५ ॥

कुतश्च न प्राणभृत् द्युभ्वाद्यायतनत्वेनाश्रयितव्यः—

## प्रकरणात् ॥ ६ ॥

प्रकरणं चेदं परमात्मनः । 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' (मु.उ. १।१।३) इति एकविज्ञानेन सर्वविज्ञानापेक्षणात् । परमात्मनि हि सर्वात्मके विज्ञाते सर्वमिदं विज्ञातं स्यात्, न केवले प्राणभृति ॥ ६ ॥

---

तदन्वय एव यथा अवगतो भविष्यति तदर्थमित्यर्थः ॥ ४-५ ॥

ननु—'प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते' इति पूर्वमन्त्रे आत्मशब्दो जीवे प्रयुक्तः । 'अरा इव रथनाभौ संहता यत्र नाड्यः । स एषोऽन्तश्चरते बहुधा जायमानः' इत्युत्तरमन्त्रे नाड्याश्रयत्वं प्रतीयते । साक्षाच्च नाडीसम्बन्धो हृदयस्य, 'ता वा एता हृदयस्य नाड्यः' इति श्रुतेः, तद्द्वारा तत्प्रतिष्ठितस्य जीवस्यापि सम्भवति । अन्तस्सञ्चारोऽपि जीवलिङ्गम् । 'ताभिः प्रत्यवसृप्य पुरीतति शेते' 'स्वे शरीरे यथाकामं परिवर्तते' इति च श्रुतेः । बहुधा जायमानत्वमपि जीवलिङ्गमेव । तथा च अस्मिन् मन्त्रे यत्रेत्यादिपदानां द्युभ्वाद्यायतनविषयतया तत्र जीवलिङ्गानि द्युभ्वाद्यायतनविषयाणि तस्य जीवतां गमयन्ति, इत्यत आह —**प्रकरणात्** इति ।

पूर्वमन्त्रे यद्यपि जीव आत्मपदेन निर्दिष्टः, तथाऽपि नासौ [1]द्युभ्वाद्यायतनसमानाधिकरणात्मपदप्रतिपाद्यः । यस्मिन्नित्यादिसर्वनाम्नः द्युभ्वाद्यायतनत्वादि-

---

1. आ. द्युभ्वाद्यायतनात्मसमा

कुतश्च न प्राणभृत् द्युभ्वाद्यायतनत्वेनाश्रयितव्यः—

## स्थित्यदनाभ्यां च ॥ ७ ॥

द्युभ्वाद्यायतनं च प्रकृत्य 'द्वा सुपर्णा सयुजा सखाया' (मु. उ. ३।१।१) इत्यत्र स्थित्यदने निर्दिश्येते। 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति कर्मफलाशनं 'अनश्नन्नन्यो अभिचाकशीति' इत्यौदासीन्येनावस्थानं च। ताभ्यां च स्थित्यदनाभ्यां ईश्वरक्षेत्रज्ञौ तत्र गृह्येते। यदि च ईश्वरो द्युभ्वाद्यायतनत्वेन विवक्षितः ततः तस्य प्रकृतस्येश्वरस्य क्षेत्रज्ञात्पृथग्वचनमवकल्पते। अन्यथा ह्यप्रकृतवचनमाकस्मिकमसंबद्धं स्यात्।

ननु तवापि क्षेत्रज्ञस्येश्वरात्पृथग्वचनमाकस्मिकमेव प्रसज्येत। न। तस्याविवक्षितत्वात्। क्षेत्रज्ञो हि कर्तृत्वेन भोक्तृत्वेन च प्रतिशरीरं बुद्ध्याद्युपाधिसंबद्धो लोकत एव प्रसिद्धो नासौ श्रुत्या तात्पर्येण विवक्ष्यते। ईश्वरस्तु लोकतोऽप्रसिद्धत्वात् श्रुत्या तात्पर्येण विवक्ष्यत इति न तस्य आकस्मिकं वचनं युक्तम्। 'गुहां प्रविष्टावात्मानौ हि' इत्यत्राप्येतद्दर्शितं 'द्वा सुपर्णा' इत्यस्यामृचि ईश्वरक्षेत्रज्ञावुच्येते इति।

---

ब्रह्मलिङ्गसचिवस्य प्रधानप्रकरणिपरमात्मपरामर्शकत्वसम्भवे अन्यार्थप्रस्तुताप्रधानजीवपरामर्शकताया उपपत्तिरहितत्वात्। 'ओमित्येवं ध्यायथ आत्मानं स्वस्ति वः पाराय तमसः परस्तात्' इत्यादावुत्तरत्र आत्मशब्दः परमात्मन्यपि बहुधा प्रयुक्तः। एवं सति अस्य मन्त्रस्य अप्राकरणिकार्थत्वमपि परिहृतं भवति। अराइवेति मन्त्रे जीवलिङ्गानि तु परमात्मन्यपि प्रत्यगभेदाभिप्रायाणि भविष्यन्ति॥

॥ ६ ॥

ननु—यथा द्वासुपर्णासयुजेतिमन्त्रे अप्राकरणिको जीवः प्रतिपाद्यते, तथा अत्रापि कुतो न प्रतिपाद्यते - इत्याशङ्क्याह—**स्थित्यदनाभ्यां च** इति।

न हि तत्र जीवः प्राधान्येन प्रतिपाद्यते। अपि तु विशुद्धजीवस्य परमात्माभेदबोधनाय संसारिविलक्षणं परमात्मानं प्रतिपादयितुं प्रत्यक्षसिद्धो जीवोऽनूद्यते। प्रकृते तु प्राकरणिकपरमात्मपरत्वे सम्भवति किमर्थं तथाकल्पनमाश्रयणीयं-इत्यभिप्रेत्याह - **द्युभ्वाद्यायतनमिति**।

यदाऽपि पैङ्ग्युपनिषत्कृतेन व्याख्यानेन अस्यामृचि सत्वक्षेत्रज्ञावुच्येते तदाऽपि न विरोधः कश्चित् । कथम् । प्राणभृद्धीह घटादिच्छिद्रवत् सत्वाद्युपाध्यभिमानित्वेन प्रतिशरीरं गृह्यमाणो द्युभ्वाद्यायतनं न भवतीति प्रतिषिध्यते। यस्तु सर्वशरीरेषु उपाधिभिर्विनोपलक्ष्यते पर एव स भवति । यथा घटादिच्छिद्राणि घटादिभिरुपाधिभिर्विनोपलक्ष्यमाणानि महाकाश एव भवन्ति, तद्वत् प्राणभृतः परस्मादन्यत्वानुपपत्तेः प्रतिषेधो नोपपद्यते । तस्मात् सत्वाद्युपाध्यभिमानिन एव द्युभ्वाद्यायतनत्वप्रतिषेधः । तस्मात् परमेव ब्रह्म द्युभ्वाद्यायतनम् । तदेतत् 'अदृश्यत्वादिगुणको धर्मोक्तेः' इत्यनेनैव सिद्धम् । तस्यैव हि भूतयोनिवाक्यस्य मध्ये इदं पठितम् - 'यस्मिन्द्यौः पृथिवी चान्तरिक्षम्' इति । प्रपञ्चार्थं तु पुनरुपन्यस्तम् ॥ ७ ॥

---

यदाऽपि[1] पैङ्ग्युपनिषत्कृतेनेति । अस्मिन् पक्षे अस्य मन्त्रस्य अप्राकरणिकार्थत्वशङ्कैव नास्तीति भावः । प्रपञ्चार्थमिति । 'भूतयोनिप्रकरणमध्ये न पठितं' इति कृत्वाचिन्तया [2]एतन्मन्त्रमात्रगतैरेव श्रुतिलिङ्गैः ब्रह्मपरत्वं व्यवस्थापयितुम् ।

यद्येवं प्रकरणादिति प्रकरणोपन्यासः कथमुपपद्यताम् ?

कृत्वाचिन्तोद्घाटनाभिप्रायः स भविष्यति ।

नन्वेवं [3]ततः प्राचीनानि सूत्राणि कृत्वाचिन्तया प्रवृत्तानि [4]एतन्मन्त्रमात्रगतैर्लिङ्गैः द्युभ्वाद्यायतनस्य [5]ब्रह्मत्वसाधकानि चेत्, तेषु सूत्रेषु तन्मन्त्रमात्रगतान्येव श्रुतिलिङ्गानि दर्शनीयानि । भाष्ये तु, प्रथमसूत्रे-आत्मश्रुतिं 'सदायतनाः' इत्यादिछान्दोग्यवाक्यसाचिव्येन द्युभ्वाद्यायतनत्वं ब्रह्मण एवेति तल्लिङ्गञ्च एतन्मन्त्र-

---

1. आ. 'अपि' नास्ति
2. मु. एतन्मन्त्रगतैरेव
3. ततः—'प्रकरणात्' इति सूत्रात् ।
4. मु. एतन्मन्त्रगतैः
5. मु. ब्रह्मत्वसाधकानीति चेत्

गामितया उपन्यस्य, पुनः 'पुरुष एवेदं' 'ब्रह्मैवेदं' इति मन्त्रद्वयं प्राकरणिकमप्युपन्यस्तम्। द्वितीयसूत्रे-[1]प्राकरणिकभिद्यतेहृदयग्रन्थिरित्यादि[2]मन्त्रप्रतिपन्नं जीवन्मुक्तप्राप्यत्वलिङ्गं उपन्यस्य एतन्मन्त्रगतमपि इतरवाग्विमोकपूर्वकं ज्ञेयत्वलिङ्गं उपन्यस्तम्। तृतीयसूत्रेऽपि-द्युभ्वाद्यायतनत्वं अमृतस्यैषसेतुरित्यादिकं च यत् प्रधानादिसाधकतयोपन्यस्तं तत् तस्य साधकं न भवतीति प्रतिपाद्य, अतच्छब्दादित्येतत् तद्विरुद्धप्रतिपादकशब्दादित्येतत्परमभिप्रेत्य यस्सर्वज्ञइति प्राकरणिको मन्त्र उपन्यस्तः। चतुर्थसूत्रेऽपि-सर्वज्ञत्वादिव्यपदेशं प्राणभृन्निराकरणपरतयोपन्यस्य [3]अनन्तरं एतन्मन्त्रगतं द्युभ्वाद्यायतनत्वमपि [4]तथा उपन्यस्तम्। इदं कथमुपपद्यते-इति चेत्—

उच्यते - एतन्मन्त्रगततया उपलब्धानि यानि भाष्ये उपन्यस्तानि तान्येव प्रकरणादित्यतः प्राचीनेषु सूत्रेषु [5]उदाहरणीयानि। प्राकरणिकानि तु 'प्रकरणोद्घाटनानन्तरमुपन्यासार्हाण्यपि वस्तुगत्या ब्रह्मत्वसाधकानि भवन्ति द्युभ्वाद्यायतनस्य' इत्यभिप्रायेणोपन्यस्तानीति द्रष्टव्यम्। तथा च प्रथमं, स्वशब्दादित्यनेन आत्मशब्दात् पृथिव्याद्योतत्वप्रतिपादकशब्दात् इत्येव, मुक्तोपसृप्येत्यनेन इतरवाग्विमोकपूर्वकंज्ञेयत्वादित्येव, अतच्छब्दादित्यनेन तत्प्रतिपादकशब्दाभावात् इत्येव च विवक्षितमिति द्रष्टव्यम्। अत एव च 'स्थित्यदनाभ्यां च' इति सूत्रं प्राकरणिकमन्त्रविषयं प्रकरणादितिकृत्वाचिन्तोद्घाटनानन्तरं कृतम्।

ननु - यथा ब्रह्मप्रकरणे 'तदेतत्सत्यं मन्त्रेषु कर्माणि' इत्यादिना अपरविद्यानिरूपणं तद्वत् प्रधाननिरूपणं-इतिशङ्कानिरासार्थमधिकरणमस्तु, किमिति कृत्वाचिन्तारूपमित्युच्यते - इति चेत्-

न-तादृशप्रधानसाधकप्रबललिङ्गाभावात्। पूर्वपक्ष्युपन्यस्तं अमृतस्यैषसेतुरित्यादिकं ब्रह्मण्येव श्वेताश्वतरादौ प्रसिद्धम्। 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्। अमृतस्य परं सेतुं दग्धेन्धनमिवानलम्॥ यदा चर्मव-

1. मु. प्राकरणिकं
2. मु. मन्त्रं जीवन्मुक्त
3. मु. तदनन्तरं
4. तथा—प्राणभृन्निराकरणपरतया।
5. मु. उदाहरणानि

२ भूमाधिकरणम्

## भूमा संप्रसादादध्युपदेशात् ॥ ८ ॥

**इदं समामनन्ति—'भूमा त्वेव विजिज्ञासितव्य इति, भूमानं**

---

दाकाशं वेष्टयिष्यन्ति मानवाः। तदा [1]शिवमविज्ञाय दुःखस्यान्तो भविष्यति॥' इति ब्रह्मपरतया निर्णीते अन्यपरत्वशङ्कानास्पदे [2]मन्त्रे अमृतसेतुत्वश्रवणात्। ततश्च तदेतत्सत्यमित्यादिसन्दर्भस्य स्पष्टतयाकर्मप्रतिपादकस्यापि 'प्लवा ह्येते' इत्यादिनिन्दावाक्यैकवाक्यतापन्नस्य अपरविद्यानिन्दाद्वारा परविद्यास्तुतिपर्यवसितस्य यथाकथञ्चित् प्रकरणानुगतिस्वीकारेऽपि न अस्य तादृशी रीतिः [3]आश्रयणीया। साक्षादेव ब्रह्मप्रतिपादकत्वसम्भवात्। तस्मात् पूर्वपक्षः प्रकरणादिकमनुद्धाव्यैव प्रवर्तनीय इति युक्तम्। कृत्वाचिन्तायाः प्रयोजनं - श्वेताश्वतरसाधारण्येन अमृतस्यैषसेतुरित्यादिव्यपदेशस्य ब्रह्मप्रतिपादकताव्युत्पादनं, प्रकृतमन्त्रे इतरवाग्विमोकपूर्वकज्ञानमपि अमृतस्यैषसेतुरित्यनेन प्रतिपादयितुं शक्यमिति व्युत्पादनम्। एतन्मन्त्रपर्यालोचनया श्वेताश्वतरगत- 'निष्कलं निष्क्रियं' इत्यादिमन्त्रसनाथया निर्विशेषात्मज्ञानमेव मुमुक्षुभिः [4]सम्पादनीयमिति प्रयोजनं च। [5]इदं च प्रयोजनं तत्रत्वायतनायतनवद्भावश्रवणादित्यादिवाक्येन प्रथमसूत्रगतेन भाष्य एव दर्शितम्।

अत्र इतरवाग्विमोकपूर्वकज्ञेयत्वादेर्ब्रह्मलिङ्गस्य अमृतसेतुत्वरूपाब्रह्मलिङ्गाभिभूतत्वादस्पष्टतेति द्रष्टव्यम् ॥ ७ ॥

इति द्युभ्वाद्यधिकरणम् ॥ १ ॥

**भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इतीति। 'अधीहि भगवः' इति मन्त्रेण ब्रह्मविद्यार्थं सनत्कुमारं प्रत्युपसन्ने**

---

1. आ. देवमविज्ञाय
2. मु. 'मन्त्रे' नास्ति
3. मु. अनुसरणीया
4. **सम्पादनीयमिति** सम्पादनीयमितिप्रदर्शनरूपं।
5. **इदं**—निर्विशेषात्मज्ञानमेव मुमुक्षुभिः सम्पादनीयं—इत्येवंरूपम्।

भगवो विजिज्ञास इति, यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा, अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्' (छा. उ. ७।२३,२४) इत्यादि। तत्र संशयः—किं प्राणो भूमा स्यात् आहोस्वित् परमात्मेति। कुतः संशयः। भूमेति

---

नारदे, त्वया यदवगतं तद्वक्तव्यमिति सनत्कुमारेण पृष्टे, आत्मविद्यां विहाय सर्वा अपि विद्या अधिगता एवेत्युक्त्वा 'आत्मविद्यारहितत्वाच्छोचामि अतश्शोकतरण-हेतुभूतामात्मविद्यामुपदिश' इति 'सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित् श्रुतं ह्येव मे भगवद्दृशेभ्यः तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयतु' इति नारदेनोक्तः सनत्कुमारः तं होवाच 'यद्वै किञ्चैतदध्यगीष्ठा नामैवैतत्....नामोपास्स्वेति स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति' इति। 'अस्ति भगवो नाम्नो भूय इति नाम्नो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति वाग्वाव नाम्नो भूयसी.... वाचमुपास्स्वेति स यो वाचं ब्रह्मेत्युपास्ते यावद्वाचो गतं तत्रास्य यथाकामचारो भवति' इति वाग्विषयं वाक्यं, नामोपासनानिरूपणानन्तरं नामापेक्ष्य नारदकृत-भूयस्त्वविषयप्रश्नपूर्वकमेव नामातिरिक्तार्थप्रतिपादकं प्रवृत्तम्। एवं पूर्वपूर्वमपेक्ष्य नारदकृतभूयस्त्वगोचरप्रश्नपूर्वकमेव उत्तरत्र मनस्सङ्कल्पचित्तध्यानविज्ञानबलान्नतेज[1] -आकाशस्मराशावाक्यानि प्रवृत्तानि। पुनश्च नारदेन 'अस्ति भगव आशाया भूयः' इति पृष्टे 'प्राणो वा आशाया भूयान् यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वं समर्पितं प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वा आचार्यं वा ब्राह्मणं वा किञ्चिद् भृशमिव प्रत्याह धिक्त्वाऽस्त्वित्येवैनमाहुः, पित्रादीनां त्वं हन्तासीति। अथ यद्यपि एनानुत्क्रान्तप्राणान् शूलेन समासं व्यतिषन्दहेत् नैवैनं पित्रादीनां त्वं हन्तासीति ब्रूयुः, प्राणो ह्येवैतानि सर्वाणि भवति स वा एष एवंपश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति, तञ्चेत् ब्रूयुः अतिवाद्यसीति अतिवाद्यस्मीति

---

1. आ. तेजोवाय्वाकाश

तावद्बहुत्वमभिधीयते, 'बहोर्लोपो भू च बहोः' (पा. सू. ६।४।१५८) इति भूमशब्दस्य भावप्रत्ययान्ततास्मरणात्। किमात्मकं पुनस्तद्बहुत्वमिति विशेषाकाङ्क्षायां 'प्राणो वा आशाया भूयान्' (छा. उ. ७।१५।१) इति सन्निधानात् प्राणो भूमेति प्रतिभाति। तथा 'श्रुतं ह्येव मे भगवद्दृशेभ्यः तरति शोकमात्मविदिति सोऽहं भगवः

ब्रूयात् नापह्नुवीत' इति[1]प्राणविषयवाक्यसमभिव्याहृतं[2], प्राणमपेक्ष्य भूयस्त्वप्रश्नं विनैव 'एष तु वा अतिवदति यः सत्येनातिवदति' इत्याम्नातम्। अनन्तरं च [3]सत्यातिवदनाभिलाषं नारदस्योपलभ्य सत्यविज्ञानमननश्रद्धानिष्ठाकृतिसुखोद्देशरूपां सत्यातिवदने साधनपरम्परां उपन्यस्य, उद्दिश्यमानं सुखं किमित्यपेक्षायां 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्यः' इत्यादिकं समाम्नायते।

'बहोर्लोपो भू च बहोः' इति पाणिनिसूत्रस्य, बहुशब्दात् परस्य भावार्थविवक्षायां 'पृथ्वादिभ्य इमनिज्वा' इतिसूत्रेण प्राप्तस्य इमनिचो[4] लोपः बहुशब्दस्य भू इत्यादेशश्च भवति - इत्यर्थः। एवं च यद्यपि भूमशब्दो भावार्थकः, तथाऽपि 'यो वै भूमा तत्सुखं' 'यो वै भूमा तदमृतं' इत्यादिधर्मिसामानाधिकरण्यात् 'धातुः प्रसादान्महिमानमीशं' 'स य एषोऽणिमा' इत्यादाविव धर्मिपरता। बहुत्वं च प्रकृते 'बहुषु बहुवचनं' इत्यादाविव न सङ्ख्यारूपम्, अपि तु 'बह्वन्नं पच्यते' इत्यत्रेव आधिक्यरूपम्। 'अथ यदल्पं तन्मर्त्यं' इति अल्पस्य तत्प्रतिद्वन्द्विताप्रतिपादनात्। **किमात्मकं पुनस्तद्बहुत्वं** इत्यत्रापि धर्मिपर एव भावप्रत्ययो द्रष्टव्यः। तथा च, भूमपदार्थस्य धर्मिविशेषापेक्षायां उपक्रमगत आत्मा धर्मी भवेत् अथ वा सन्निहितः प्राणः - इति संशयः।

---

1. आ. प्राणविषयवाक्यं

2. **समभिव्याहृतं** 'एष तु वा' इत्यादिवाक्यं आम्नातं इत्यन्वयः।

3. मु. सत्यवदनाभिलाषं

4. **लोप इति** स च इमनिच्प्रत्यये आदेरिकारस्य 'आदेः परस्य' इति सूत्रेण इति शेषः।

शोचामि तं मा भगवाञ्छोकस्य पारं तारयतु' (छा. उ. ७।१।३) इति प्रकरणोत्थानात् परमात्मा भूमेत्यपि प्रतिभाति। तत्र कस्योपादानं न्याय्यं कस्य वा हानमिति भवति संशयः।

किं तावत् प्राप्तम्। प्राणो भूमेति।

कस्मात्? भूयःप्रश्नप्रतिवचनादर्शनात्। यथा हि 'अस्ति भगवो नाम्नो भूयः' इति 'वाग्वाव नाम्नो भूयसी' इति, तथा 'अस्ति भगवो वाचो भूयः' इति 'मनो वाव वाचो भूयः' इति च नामादिभ्यो ह्याप्राणात् भूयःप्रश्नप्रतिवचनप्रवाहः प्रवृत्तः, नैवं प्राणात्परं भूयःप्रश्नप्रतिवचनं दृश्यते 'अस्ति भगवः प्राणाद्भूय इति अदो वाव प्राणाद्भूयः' इति। प्राणमेव तु नामादिभ्य आशान्तेभ्यो भूयांसं 'प्राणो वा

---

अत्र भाष्ये प्राणकोटौ सन्निधानमुक्तं आत्मकोटौ प्रकरणमुक्तं नियामकम्। इदन्तु पूर्वपक्षिणो न सम्मतम्। तथा सति आत्मप्रकरणेन प्राणसन्निधिबाधात् पूर्वपक्षानुन्मेष एव स्यात्। परं तु सिद्धान्ताभिप्रायेण [1]वस्तुगतिमनुरुध्योक्तम्। पूर्वपक्षी तु प्राणस्यैव प्रकरणं ब्रह्मण एव सन्निधानं इति मन्यते।

ननु-'अस्ति भगव आशाया भूयान्' इति प्रश्नमारभ्य प्राणप्रकरणं वक्तव्यम्। तत्तु 'तच्चेत् ब्रूयुः अतिवादयसीति अतिवाद्यस्मीति ब्रूयान्नापह्नुवीत' इत्यन्तमेव। तदनन्तराम्नातेन एषतुवाअतिवदतीतिवाक्येन प्राणप्रकरणं विच्छिद्य अनन्तराम्नातो भूमा कथं प्राणःस्यात्-इत्यभिप्रेत्य शङ्कते-**कस्मादिति। भूयःप्रश्नप्रतिवचनादर्शनादिति।** अयं भावः - पूर्वसन्दर्भे वागादिप्रकरणविच्छेदः 'अस्ति भगवो वाचो भूयः' इत्यादिना तदधिकप्रश्नोत्तरसन्दर्भकृतो दृष्टः। इहापि यदि एषतुवाअतिवदतीत्यतः प्रागेव प्राणप्रकरणविच्छेदोऽभिमतः स्यात्, 'अस्ति भगवः प्राणात् भूयः' इत्यादिना प्रश्नादिकं दृश्येत। न त्वेतदस्ति। अतो न प्राणप्रकरणविच्छेदः। एषतुवाअतिवदतीतिवाक्यं तु न प्राणप्रकरणविच्छित्तिसम्पादकम्। अपि तु पूर्वोक्तस्य अतिवदनरूपस्य प्राणव्रतस्य अनुकर्षणेन प्राणोपासनाङ्गतया

---

1, आ, वस्तुगतिमनुसृत्य

आशाया भूयान्' इत्यादिना सप्रपञ्चमुक्त्वा प्राणदर्शिनश्चातिवादित्वं 'अतिवाद्यसीति अतिवाद्यस्मीति ब्रूयात् नापह्नुवीत' इत्यभ्यनुज्ञाय 'एष तु वा अतिवदति यः सत्येनातिवदति' इति प्राणव्रतमतिवादित्व-मनुकृष्य अपरित्यज्यैव प्राणं सत्यादिपरम्परया भूमानमवतारयन् प्राणमेव भूमानं मन्यत इति गम्यते ।

कथं पुनः प्राणे भूमनि व्याख्यायमाने 'यत्र नान्यत्पश्यति' इत्येतत् भूम्नो लक्षणपरं वचनं व्याख्यायेतेति ?

उच्यते—सुषुप्त्यवस्थायां प्राणग्रस्तेषु करणेषु दर्शनादिव्यवहार-निवृत्तिदर्शनात् संभवति प्राणस्यापि 'यत्र नान्यत्पश्यति' इत्येतल्लक्षणम् । तथा च श्रुतिः 'न शृणोति न पश्यति' इत्यादिना सर्वकरणव्यापारप्रत्यस्तमयरूपां सुषुप्त्यवस्थामुक्त्वा 'प्राणाग्नय एवैतस्मिन् पुरे जाग्रति' (प्र. उ. ४।२-३) इति तस्यामेवावस्थायां पञ्चवृत्तेः प्राणस्य जागरणं ब्रुवती प्राणप्रधानां सुषुप्त्यवस्थां दर्शयति ।

यच्चैतद्भूम्नः सुखत्वं श्रुतं 'यो वै भूमा तत् सुखम्' (छा.उ. ७।२३) इति, तदप्यविरुद्धम् । 'अत्रैष देवः स्वप्नान्न पश्यति अथ

---

सत्यवदनविधायकं सत् तदनुवृत्तिद्योतकमेव - इति । तदाह-**प्राणदर्शिनश्चाति-वादित्वमित्यादिना । अतिवाद्यसीतीति** । आशान्तेभ्यः सर्वेभ्यः प्राणोऽति-शयित इति आशादिकमतिक्रम्य प्राणवादी भवसीत्यर्थः। **सत्यादिपरम्परयेति**। सत्यवदनादिपरम्परयेत्यर्थः ।

**उच्यते - सुषुप्त्यवस्थायामिति** । अस्मिन् पक्षे 'यत्र नान्यत्पश्यति' इत्यस्य सुषुप्तौ यस्मिन् जाग्रति सति न अन्यगोचरदर्शनादिकं भवति स भूमेत्यर्थः। **प्राणाग्नय एवेति** । प्राणपदं प्राणापानादिपरम् । 'गार्हपत्यो ह वा एषोऽपानो व्यानोऽन्वाहार्यपचनो यद्गार्हपत्यात्प्रणीयते प्रणयनादाहवनीयः प्राणः' इति तत्रैव प्राणानामग्नित्वं [1]रूपितम् । **अत्रैष देव इति** । एष जीवः

---

1. आ. निरूपितम्

तदैतस्मिञ्छरीरे एतत् सुखं भवति' (प्र.उ.४।६) इति सुषुप्त्यवस्थायामेव सुखश्रवणात् ।

यच्च 'यो वै भूमा तदमृतम्' (छा.उ.७।२४।१) इति, तदपि प्राणस्याविरुद्धं, 'प्राणो वा अमृतम्' (कौ. उ. ३।२) इति श्रुतेः।

कथं पुनः प्राणं भूमानं मन्यमानस्य 'तरति शोकमात्मवित्' इति आत्मविविदिषया प्रकरणस्योत्थानमुपपद्यते ? प्राण एवेहात्मा विवक्षित

---

यदा स्वप्नान्न पश्यति तदा अस्मिन्नेव शरीरे सुखं भवति न तु शरीरात् बहिः इत्यर्थः । तथा च सौषुप्तसुखसमानाधिकरणत्वात् प्राणस्य सुखत्वोपचारः । **प्राणो वा अमृतमिति** । यद्यपि प्रतर्दनाधिकरणे [1]अत्र प्राणश्रुतिः [2]ब्रह्मेति निर्णीतं, तथापि यथाश्रुतार्थमादाय पूर्वपक्षोपपादनार्थं तथोक्तम् ।

**प्राण एवेहात्मा विवक्षित इति** । ननु - उपक्रमगतस्यात्मशब्दस्य उपसंहारगतप्राणपदानुसारेण तत्परत्वं कथं वक्तुं शक्यते । न च - उपक्रमस्यात्मपरता न सम्भवति, तथा सति तदुत्तरवाक्ये नामादिनिरूपणासङ्गत्यापत्तेः, अतः उपक्रमो न [3]यथाश्रुतार्थः - इति वाच्यम् । यन्मते उपक्रमस्य प्राणपरत्वं तस्यापि उत्तरवाक्ये नामादिनिरूपणमसङ्गतमेव स्यादिति तुल्यम् । यदि तु - यन्मते उपक्रमस्य प्राणपरत्वं तस्य न उपक्रमः स्वातन्त्र्येण प्राणविषय इत्युच्यते, अपि तु नामादिप्रतीकेषु उपास्यविषय इति, सिद्धान्ती तु स्वातन्त्र्येण ब्रह्मविषयमुपक्रममिच्छति, ततः तन्मते [4]न उत्तरवाक्यानुगुण्यं - इत्युच्यते, तर्ह्युत्तरवाक्यानुगुण्यं उपक्रमस्य पारतन्त्र्याभिप्रायतामात्रेणोपपद्यते । तथा च यथाश्रुतार्थ एवात्मशब्दोऽस्तु । किमर्थं प्राणलक्षणोपेयते । नामाद्युपास्यतया आत्मसमर्पकतामात्रेण तदुपपत्तेः । एवंसति 'यो नाम ब्रह्मेत्युपास्ते' इति ब्रह्मपदमपि

---

1. अत्र—'प्राणोवा अमृतं' इति वाक्ये ।
2. ब्रह्मेति ब्रह्मपरेत्यर्थः ।
3. मु. यथाश्रुतः
4. मु. 'न' नास्ति

**इति ब्रूमः। तथाहि—'प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः' (छा.उ. ७।१५।१) इति प्राणमेव सर्वात्मानं करोति। 'यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वं समर्पितम्' इति च। सर्वात्मत्वारनाभिनिदर्शनाभ्यां च संभवति वैपुल्यात्मिका भूमरूपता प्राणस्य।**

**तस्मात् प्राणो भूमेत्येवं प्राप्तम्।**

---

यथाश्रुतं भविष्यति। उपक्रमस्य प्राणलक्षकत्वेन पारतन्त्र्याभ्युपगमे तु 'यो नाम ब्रह्मेत्युपास्ते' इत्यादौ ब्रह्मपदमपि प्राणपरमेव वक्तव्यं स्यात्-इति चेत्,

अस्त्वेवम्, तावताऽपि पूर्वपक्ष्यभिलषितं सिध्यत्येव। एवं हि सति उपक्रमस्य नामादिप्रतीकगतोपास्यसमर्पकतया [1]नामादिवाक्यशेषत्वेन न ब्रह्मप्रकरणोत्थापकता। तथा च प्राणवाक्यपर्यन्तं नामादीनां प्रकरणानि। ब्रह्मणस्तु नामादिशेषतयोपस्थितेः सन्निधिमात्रम्। प्राणवाक्यमारभ्य तु आसमाप्ति प्राणप्रकरणमेव, तदन्तर्गत एव भूमेति स प्राण एवेति।

परं तु अस्मिन् पक्षे उपक्रमोपसंहारयोरन्यान्यविषयतया वाक्यभेदस्स्यादिति, उपसंहारस्य प्रश्नान्तराभावेन प्राणश्रुत्यभ्यासेन प्राणव्रतातिवादित्वानुकर्षणेन च प्राणपरत्वे सिद्धे तदनुसारेण उपक्रमगतमेव आत्मपदमेकं प्राणलक्षकं भविष्यति। भूयोऽनुग्रहन्यायात्। न चैवमुपक्रमगतं शोकतरणं कथं प्राणोपासनायामन्वेतु। काऽत्रानुपपत्तिः, वचनबलेन प्राणोपासनाया अपि मोक्षहेतुत्वोपपत्तेः।

एवं सति-[2]यत् निर्विशेषात्मज्ञानमेव मोक्षसाधनमिति पूर्वाधिकरणे उक्तं तदाक्षिप्तं भवतीति पूर्वाधिकरणेन सङ्गतिः।

मध्ये नामाद्युपासनं ब्रह्मवादिनाऽपि प्रसङ्गसङ्गत्या वक्तव्यम्। तत् ममापि भविष्यति। ब्रह्मवादिनो ब्रह्मनिरूपणस्य प्रवृत्ततया प्रसङ्गेन नामादिषु ब्रह्मोपासनाविधिरुपपद्यत इति चेत्; प्राणवादिनोऽपि प्राणस्य 'यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वं समर्पितं' इत्यादिना प्राणे ब्रह्मधर्माणां कीर्तनात् ब्रह्मधर्मा-

---

1. मु. 'नामादि' नास्ति
2. मु. 'यत्' नास्ति.

**तत इदमुच्यते—परमात्मैवेह भूमा भवितुमर्हति, न प्राणः। कस्मात्। संप्रसादादध्युपदेशात्। संप्रसाद इति सुषुप्तं स्थानमुच्यते। सम्यक्प्रसीदत्यस्मिन्निति निर्वचनात्, बृहदारण्यके च स्वप्नजागरित-**

---

नारोप्य इह प्राणोपासनं विवक्षितम्, तथा च नामादिषु ब्रह्मदृष्टिरपि ब्रह्मधर्म-विशिष्टप्राणदृष्टिरेवेति प्राणप्रकरणे नामादिषु प्राणदृष्टिरेव [1]विधीयते, 'नाम ब्रह्मेत्युपास्ते' इत्यादौ ब्रह्मपदमपि प्राणलक्षकमेव, इति न काचिदनुपपत्तिः।

**बृहदारण्यके स्वप्नजागरितस्थानाभ्यां सहेति।** 'स वा एष एतस्मिन् स्वप्नान्ते रत्वा चरित्वा' 'स वा एष एतस्मिन् बुद्धान्ते रत्वा चरित्वा' इति [2]स्वप्नजागरितावस्थाप्रतिपादकवाक्यसन्निधौ 'स वा एष एतस्मिन् सम्प्रसादे रत्वा चरित्वा' इतिपाठादित्यर्थः।

ननु—सम्प्रसादपदं योगेन सुषुप्तिपरम्, तत्र जाग्रतः प्राणस्य लक्षकम्, इति किमर्थमुपेयते। 'अथ य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य' इति सम्प्रसादपदेन व्यवहृतो जीव एव कस्मात् सौत्रेण सम्प्रसाद-पदेन लक्षणया न गृह्यते। तस्यापि सुषुप्तौ प्रसादशालित्वेन सुषुप्तिसम्बन्धोपपत्तेः। अथ वा 'सुषुप्तौ मुक्तौ वा सम्यक् प्रसीदति' इति योगेनापि तत्र सम्प्रसादपदं प्रवर्तत इति जीव एव ग्रहीतुमुचितः। एवं च पूर्वपक्षोऽपि जीवोभूमेत्येवास्तु। 'प्राणो वा आशाया भूयान्' इत्यादौ प्राणपदमपि जीवलक्षकमेवास्तु-इति चेत्;

अस्तु। नैतावता सिद्धान्तिनः काचित् क्षतिः। परं तु, श्रुतौ प्राण-पदस्य जीवलक्षणाग्राहकप्रमाणाभावात् सिद्धान्ते पूर्वपक्षे च यथाश्रुतमेव प्राणपदं स्वीकृतम्।

न च प्राणस्य यानदानकर्तृत्वकीर्तनं पितृत्वादिकीर्तनं[3] च चेतनतायां लिङ्गमिति वाच्यम्। अत्र पितृत्वादिकीर्तनं न चेतनतायां लिङ्गम्। पित्रादि-

---

1. मु. विधीयत इति नाम
2. मु. स्वप्नजागरितवाक्य
3. **कीर्तनमिति** 'प्राणः प्राणेन याति, प्राणः प्राणं ददाति' 'प्राणो ह पिता प्राणो माता' इत्यादिश्रुतेः इति भावः।

स्थानाभ्यां सह पाठात्। तस्यां च संप्रसादावस्थायां प्राणो जागर्तीति प्राणोऽत्र संप्रसादोऽभिप्रेयते। प्राणादूर्ध्वं भूम्न उपदिश्यमानत्वादित्यर्थः। प्राण एव चेद्भूमा स्यात् स एव तस्मादूर्ध्वमुपदिश्येतेति अश्लिष्टमेवैतत् स्यात्। न हि नामैव 'नाम्नो भूयः' इति नाम्न ऊर्ध्वमुपदिष्टम्। किं तर्हि? नाम्नोऽन्यदर्थान्तरमुपदिष्टं वागाख्यं 'वाग्वाव नाम्नो भूयसी' इति। तथा वागादिभ्योऽपि आ प्राणात् अर्थान्तरमेव तत्र तत्र ऊर्ध्वमुपदिष्टम्। तद्वत् प्राणादूर्ध्वमुपदिश्यमानो भूमा प्राणादर्थान्तरभूतो भवितुमर्हति।

---

पदानां शरीरपरत्वस्य दाह्यत्वलिङ्गावगतत्वात्। परं तु, प्राणस्य पित्रादिसामानाधिकरण्यं कथमित्यपेक्षायां, 'पित्रादिशरीरेषु प्राणस्थितिदशायां पित्रादिविषयप्रतिकूलवचनमात्रेण पितृहन्तृत्वादिव्यपदेशो भवति प्राणोत्क्रान्तौ तु पित्रादिशरीराणां शूलेन समीकृत्य व्यत्यस्य दाहेऽपि न पितृहन्तृत्वादिव्यपदेशो भवति' इति 'स यदि पितरं वा' इत्यादिवाक्यशेषेण प्रतिपादनात् प्राणोत्क्रान्तितदभावप्रयुक्तः तेषां शरीराणां पित्रादिपदव्यपदेश इति प्राण एव पित्रादिव्यपदेश्यो भवतीति गौणं [1]इति प्रतिपादितम्, अतोऽपि न प्राणस्य चेतनता सिध्यति। प्रत्युत वाक्यशेषपर्यालोचनया प्राणपदस्य मुख्यप्राणपरता अवगम्यते। वाक्यशेषे हि शरीरदाहप्रयोजिका प्राणोत्क्रान्तिः लोकप्रसिद्धा प्रतिपाद्यते। लोके च पामरविवेकिपुरुषसाधारण्येन श्वासनिर्गम एव दाहप्रयोजकतया प्रसिद्धः। ततश्च यानदानकर्तृत्वमपि [2]प्राणप्रयुक्तत्वात् प्राणे उपचर्यते। न तु तावन्मात्रेण आशान्तजीवोपकरणप्रायपठिता उपक्रमगता अभ्यस्त[3]वाक्यशेषगतप्रसिद्धोत्क्रान्तिलिङ्गोपबृंहिता [4]प्राणश्रुतिः अन्यथा नेतुमुचिता। तथा च श्रुत्यनुसारेण सौत्रसम्प्रसादशब्दोऽपि प्राणपरतयैव भाष्ये व्याख्यातः।

---

1. मु. 'इति' नास्ति
2. आ. प्राणायत्तत्वात्
3. मु. वाक्यशेषप्रसिद्धो°
4. मु. 'प्राण' नास्ति

ननु इह नास्ति प्रश्नः 'अस्ति भगवः प्राणाद्भूयः' इति, नापि प्रतिवचनमस्ति 'प्राणाद्वाव भूयोऽस्ति' इति, कथं प्राणादधि भूमोपदिश्यत इत्युच्यते। प्राणविषयमेव चातिवादित्वमुत्तरत्रानुकृष्यमाणं पश्यामः 'एष तु वा अतिवदति यः सत्येनातिवदति' इति। तस्मान्नास्ति प्राणादध्युपदेश इति।

अत्रोच्यते—न तावत् प्राणविषयस्यैवातिवादित्वस्यैतदनुकर्षणमिति शक्यं वक्तुं; विशेषवादात् 'यः सत्येनातिवदति' इति।

ननु विशेषवादोऽप्ययं प्राणविषय एव भविष्यति। कथम्? यथा 'एषोऽग्निहोत्री यः सत्यं वदति' इत्युक्ते न सत्यवदनेनाग्निहोत्रित्वं, केन तर्हि, अग्निहोत्रेणैव, सत्यवदनं त्वग्निहोत्रिणो विशेष उच्यते। तथा 'एष तु वा अतिवदति यः सत्येनातिवदति' इत्युक्ते न सत्यवदनेनातिवादित्वम्, केन तर्हि, प्रकृतेन प्राणविज्ञानेनैव, सत्यवदनं तु प्राणविदो विशेषो विवक्ष्यत इति।

नेति ब्रूमः। श्रुत्यर्थपरित्यागप्रसङ्गात्।

---

प्राणादध्युपदेशादिति वक्तव्येऽपि सम्प्रसादशब्दप्रयोगः सुप्तौ प्राणप्राधान्यद्योतनद्वारा यत्रनान्यत्पश्यतीत्यादिवाक्यानां प्राणपूर्वपक्षे सङ्गमनार्थः। प्राणादूर्ध्वं-प्राणादधिकत्वेन। एतच्च उत्तरत्र स्पष्टं भविष्यति। ननु प्राणादधिकत्वोपदेशो प्राणान्यत्वं सिध्यति भूम्नो न तु ब्रह्मत्वमिति चेन्न। सौत्रोपदेशपदस्य [1]सत्यशब्देनोपदेशार्थकत्वात्।

पूर्वपक्ष्युक्तं प्राणप्रकरणानुवृत्तिप्रयोजकमनुवदति—**नन्विति**।

**श्रुत्यर्थपरित्यागप्रसङ्गादिति**। अयं भावः—एष तु वा अतिवदति यस्सत्येनातिवदतीत्यत्र न प्राणातिवादिनोऽनुकर्षणम्। तुशब्दसत्यशब्दविरोधात्। तुशब्दो हि प्रकृतादतिवादिनः सत्यकरणकातिवादिनोऽतिशयद्योतनार्थः। 'प्राण-

---

1. मु. सत्यशब्देनोपदेश इत्यर्थकत्वात्

करणकातिवादी नातिवादी, अपि तु सत्यकरणकातिवाद्येवातिवादी' [1]इति तुशब्देन प्रथमतोऽर्थावगमे सति, प्राणातिवादिनि अतिवादित्वसामान्यस्य निषेद्धुमशक्यतया प्रशंसान्यायेन 'प्राणातिवादी न प्रशस्तातिवादी, अपि तु सत्यातिवाद्येव प्रशस्तातिवादी' इति तुशब्दार्थपर्यवसानात्, पूर्वातिवदनमपेक्ष्य [2]अन्यदेवेदमतिवदनमित्यवगम्यते। एकत्वे च 'पूर्वमपेक्ष्येदं प्रशस्तं' इत्युक्तेरसम्भवात्। पूर्वं चातिवदनं 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति' इति वाक्ये प्राणविज्ञानकरणकमवगम्यते। इदं तु सत्येनेतितृतीयाश्रुत्या सत्यकरणकमवगम्यते। सत्यस्य च करणत्वमतिवदने प्राणस्येव स्वविज्ञानद्वारकमेव। तथा च वाक्यशेषः—'यदा वै विजानात्यथ सत्यं वदति' इति। तथा च प्राणासम्बन्ध्यतिवदनोपक्षेपेण [3]प्राणप्रकरणं विच्छिन्नम्। अग्निहोत्रिणि प्रस्तुते एषोऽग्निहोत्री यस्सत्यंवदति इत्यत्र तु प्रकृतस्यैवाग्निहोत्रिणः सत्यवदनरूपो धर्मो विधीयत इति युक्तम्। [4]प्रकृतादग्निहोत्रित्वात् भेदकस्य द्रव्यदेवतादेः अनुपन्यासेन तदनुवादेनसत्यवदनधर्मविधान[5]मात्रपरत्वावसायादेषोऽग्निहोत्रीतिवाक्यस्य। प्रकृते तु 'एष तु वा' इति वाक्ये तुशब्देन प्रकृतात् भेदमुपक्षिप्य तन्निर्वाहकतया सत्यस्य करणतयोपक्षेपात् भेदः स्थिरीकृतो भवति।

ननु—प्राणकरणकातिवदनानुकर्षणपक्षे स्वस्मादेव स्वस्यातिशयासम्भवेऽपि, प्राणकरणके सत्यस्य करणत्वासम्भवेऽपि [6]च, सत्यपदस्य सत्यवदने लक्षणामुपेत्य तृतीयायाः सहार्थकतां चोपेत्य सत्यवदनरहितात् प्राणातिवादित्वात् सत्यवदनसहितं प्राणातिवादित्वमतिशयितमिति सत्यवदनसाहित्यराहित्यरूपोपाधिभेदात् एकस्मिन्नेव भेदं कल्पयित्वा प्राशस्त्योपपादनमस्त्विति चेत्—

न - तथाक्लेशाङ्गीकारे नियामकाभावात्। तुशब्दो हि प्रकृताद्विशेषं प्रतिपादयति। प्रकृतश्च प्राणातिवाद्येव। न तु सत्यवदनरहितः। सत्यपदं च

1. मु. 'इति' नास्ति
2. मु. अन्यदेवातिवदन
3. मु. 'प्राण' नास्ति
4. आ. प्रकृताग्नि
5. मु. मात्रत्वावसायात्
6. मु. 'च' नास्ति

श्रुत्या ह्यत्र सत्यवदनेनातिवादित्वं प्रतीयते 'यः सत्येनातिवदति सोऽतिवदति' इति । नात्र प्राणविज्ञानस्य संकीर्तनमस्ति । प्रकरणात्तु प्राणविज्ञानं संबध्येत । तत्र प्रकरणानुरोधेन श्रुतिः परित्यक्ता स्यात् । प्रकृतव्यावृत्त्यर्थश्च तुशब्दो न संगच्छेत 'एष तु वा अतिवदति' इति । 'सत्यं त्वेव विजिज्ञासितव्यम्' (छा. उ. ७।१६) इति च प्रयत्नान्तरकरणमर्थान्तरविवक्षां सूचयति । तस्मात्, यथा एकवेदप्रशंसायां

---

ब्रह्मण्येव स्वरसम् । 'तस्य हैतस्य ब्रह्मणो नामधेयं सत्यमिति' इति 'सत्यं ज्ञानमनन्तं ब्रह्म' इति च श्रुतेः । तृतीया च करणत्वप्रतिपादिकैवोचिता । 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति न्यायात् । न च - त्वत्पक्षे एष इत्यस्य य इत्यस्य च प्रकरिष्यमाणपरामर्शकता प्राप्नोति, स च दोषः - इति वाच्यम् । [1]प्रकृतविच्छेदकतुशब्दसत्यशब्दप्राप्तस्य प्रकरिष्यमाणपरामर्शकत्वस्य अथैषज्योतिरित्यादाविवादोषत्वात् - इति ।

सङ्ग्रहवाक्यं विवृणोति—श्रुत्या हीति । सत्यवदनेनातिवादित्वमिति । सत्यवदनरूपातिवादित्वमित्यर्थः । [2]अनेन च विशेषणेन—'ननु यद्यतिवदने सत्यस्य करणत्वं तदा 'यदा वै विजानात्यथ सत्यं वदति' इत्युत्तरवाक्ये सत्यपदार्थस्य कर्मत्वनिर्देशोऽनुपपन्नः, अतः उत्तरत्र [3]सत्यवदनमेव विवक्षितमिति तदनुसारेण अत्रापि सत्यवदनेनेत्यर्थो भविष्यति' - इति [4]शङ्का परास्ता । अतिवदने यथा सत्यस्य करणत्वं स्वज्ञानद्वारा तथा विषयतया कर्मत्वमप्यस्तीति सत्यकरणकातिवादित्वस्यैव सत्यंवदतीति निर्देशसम्भवात् न उपक्रमस्वारस्यहानमुपपद्यत इति ।

सत्यं त्वेव विजिज्ञासितव्यमिति चेति । अत्र सत्यपदार्थस्य पृथग्जिज्ञासावतरणेन तस्य प्राधान्यं प्रतीयते, तत्र सत्यपदस्य सत्यवदनलक्षकत्वे तस्य च

---

1. आ. प्रकृतत्वविच्छेदक
2. अनेन च विशेषणेन—अतिवादित्वे सत्यवदनरूपत्वविशेषणेव ।
3. सत्यवदनमेवेति एवेन सत्यवदनस्य अतिवादित्वात्मकत्वव्यवच्छेदः ।
4. शङ्कापरास्तेति सत्यवदनेनेति भाष्यपदेन वदनं प्रति सत्यस्य कर्मताप्रत्यायनात् सत्यस्य करणत्वेऽपि कर्मत्वाविरोधसूचनेन उक्तशङ्कापरासः इति भावः ।

**प्रकृतायां 'एष तु महाब्राह्मणो यश्चतुरो वेदानधीते' इत्येकवेदेभ्योऽर्थान्तरभूतश्चतुर्वेदः प्रशस्यते, तादृगेतद्द्रष्टव्यम्। न च प्रश्नप्रतिवचनरूपयैव अर्थान्तरविवक्षया भवितव्यमिति नियमोऽस्ति। प्रकृतसंबन्धासंभवकारितत्वादर्थान्तरविवक्षायाः।**

**तत्र प्राणान्तमनुशासनं श्रुत्वा तूष्णींभूतं नारदं स्वयमेव सनत्कुमारो व्युत्पादयति - 'यत् प्राणविज्ञानेन विकारानृतविषयेण अतिवादित्वं, अनतिवादित्वमेव तत्, एष तु वा अतिवदति यः सत्येनातिवदति' इति। तत्र सत्यमिति परं ब्रह्म उच्यते, परमार्थरूपत्वात्।**

---

प्राणोपासनाङ्गत्वे सत्यपदार्थस्य प्राधान्यप्रतीतिर्बाध्येतेति भावः। न च वाच्यं 'विज्ञानं त्वेव विजिज्ञासितव्यं' 'मतिस्त्वेव विजिज्ञासितव्या' इत्यादिना विज्ञानादीनामपि विजिज्ञासितव्यता प्रतीयत इति तेषामपि प्राधान्यप्रसङ्ग इति। विज्ञानादीनां ध्यानाद्यात्मनां स्वरूपसत्ताया एवापेक्षितत्वेन तत्र विजिज्ञासितव्यमितिपदस्य सम्पादनीयमित्यर्थकत्वात्, सम्पादनोपयोगितया ज्ञानस्याप्यपेक्षितत्वेन यथाश्रुतार्थपरत्वेऽपि 'यदा वै विजानात्यथ सत्यं वदति' 'यदा वै मनुते अथ विजानाति' इत्यादिवाक्यैरन्यशेषताप्रतिपादनात्। न च सत्यस्यापि सत्येनातिवदतीति अतिवदने करणताप्रतिपादनात् अन्यशेषतेति वाच्यम्। अतिवदने सत्यस्य करणत्वं हि स्वज्ञानद्वारा वा सर्वातिशायिसत्यमितिव्यवहाररूपे सत्यातिवदने व्यवहर्तव्यतया वा इति पक्षद्वयेऽपि न प्राधान्यविरोधः। आद्ये मननादिसम्पाद्यज्ञानविषयत्वं प्राधान्यलिङ्गं पर्यवस्यति, द्वितीये प्राणान्तसकलतत्त्वातिशयितत्वमपि प्राधान्यलिङ्गं पर्यवस्यतीति, एषतुवाअतिवदतीतिसन्दर्भे [1]प्रधानवस्तुप्रतिपादकतयाऽवगतस्य सत्यपदस्य न गुणभूतसत्यवचनपरता आस्थेया।

नन्वथापि पूर्वसन्दर्भे नारदस्य प्रतिपर्यायं प्रश्नदर्शनात् [2]इहापि तदकरणं किमिति; अत आह—**तत्र प्राणान्तमनुशासनमिति।** 'यथा वा अरा नाभौ समर्पिताः' इत्यादिना प्राणमाहात्म्यं श्रुत्वा प्राण एव उपक्रान्त आत्मेति नारदस्य

---

1, आ. प्राधान्येन वस्तु　　2, आ. इह तद°

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ. २।१) इति च श्रुत्यन्तरात्। तथा व्युत्पादिताय नारदाय 'सोऽहं भगवः सत्येनातिवदानि' इत्येवं प्रवृत्ताय विज्ञानादिसाधनपरम्परया भूमानमुपदिशति। तत्र यत् प्राणादधि सत्यं वक्तव्यं प्रतिज्ञातं तदेवेह भूमेत्युच्यत इति गम्यते।

तस्मात् अस्ति प्राणादधि भूम्न उपदेशः, इत्यतः प्राणादन्यः परमात्मा भूमा भवितुमर्हति।

एवं चेह आत्मविविदिषया प्रकरणस्योत्थानमुपपन्नं भविष्यति। प्राण एवेह आत्मा विवक्षित इत्येतदपि नोपपद्यते। न हि प्राणस्य मुख्यया वृत्त्या आत्मत्वमस्ति।

न चान्यत्र परमात्मज्ञानात् शोकविनिवृत्तिरस्ति, 'नान्यः पन्था विद्यतेऽयनाय' (श्वे. उ. ६।१५) इति श्रुत्यन्तरात्। 'तं मा भगवान् शोकस्य पारं तारयतु' (छा. उ. ७।१।३) इति चोपक्रम्य उपसंहरति 'तस्मै मृदितकषायाय तमसस्पारं दर्शयति भगवान् सनात्कुमारः' (छा. उ. ७।२६।२) इति। तम इति शोकादिकारणमविद्योच्यते।

---

भ्रमोऽभूदिति न पृष्टवानिति भावः। ततश्च प्राणप्रकरणविच्छेदात् सत्यपदमेव भूम्नो विशेषाकाङ्क्षां पूरयतीत्याह—तत्र यत् प्राणादधीति।

ननु-अत्र परमात्मनो महाप्रकरणं प्राणस्य अवान्तरप्रकरणं च स्वीक्रियते। तथा चोपक्रमगत आत्मशब्दः यथाश्रुत एव। शोकतरणं च उपक्रमोपसंहारगतं आत्मविज्ञानविषयमेव। 'आत्मतः प्राणः' इति च नानुपपन्नम्। यदि हि उपक्रमगत आत्मशब्दः प्राणपरः स्यात, तदा खलु प्राणादेव प्राणस्य उपसंहारे उत्पत्तिप्रतिपादनप्रसक्त्या असाङ्गत्यं भवेत्। न त्वेवम्। उभयत्राप्यात्मपदस्य परमात्मपरत्वाभ्युपगमात्। भाष्ये 'प्रकरणान्ते' इतिपदं प्रकरणादावित्यस्याप्युपलक्षणम्। प्राणावान्तरप्रकरणं च 'स एवाधस्तात्' इतिपर्यायमभिव्याप्य भविष्यति। ननु सन्दंशाभावे कथमवान्तरप्रकरणम्?

**प्राणान्ते चानुशासने न प्राणस्यान्यायत्तता उच्येत। 'आत्मतः प्राणः' (छा. उ. ७।२६।१) इति च ब्राह्मणम्। प्रकरणान्ते परमात्मविवक्षा भविष्यति भूमा तु प्राण एवेति चेत्, न—'स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि' (छा. उ. ७।२४।१) इत्यादिना भूम्न एव आप्रकरणसमाप्तेरनुकर्षणात्।**

---

*उच्यते*—*स एवाधस्तादितिपर्यायो हि न प्राकरणिकात्मसर्वात्मताप्रतिपादनार्थः।* आत्मैवाधस्तादितिपर्यायेण पौनरुक्त्यापत्तेः। अतः 'प्राणो वा आशाया भूयान्' *इति प्रस्तुतप्राणपरामर्शकः स एवाधस्तादित्यादौ सशब्दो वक्तव्यः।* ततश्च सिद्धः संदंश इति तदन्तर्गतो भूमा प्राण एव। ततश्च एषतुवाअतिवदतीतिवाक्यस्य प्राणावान्तरप्रकरणगतत्वात् प्राणविषयतैव क्लेशेन प्रतिपादनीया इत्यभिप्रेत्य शङ्कते—**प्रकरणान्ते परमात्मविवक्षा भविष्यतीति।**

**भूम्न एव आप्रकरणसमाप्तेरनुकर्षणादिति।** सएवाधस्तादित्येतत्पर्यन्तमेव[1] भूमा, अनन्तरं प्राकरणिक आत्मा - इत्येवं विभागोऽशक्य एव। एषतुवाअतिवदतीत्यारभ्य उपरितनस्य कृत्स्नस्य सन्दर्भस्य, प्राणाधिकपरमात्मनएवोपक्रमगतस्योपदेश इत्येव स्वारस्येन प्रतीतेः। न च तथासति स एवाधस्तादित्यतः पार्थक्येन आत्मैवाधस्तादिति न वक्तव्यं पौनरुक्त्यादिति वाच्यम्। स एवाधस्तादित्यनेन सर्वात्मकतया निर्दिष्टस्य परमात्मनः जीवाभेदं द्योतयितुं प्रतीचो निष्कृष्टरूपेण सर्वात्मताप्रतिपादनपरत्वात् आत्मैवाधस्तादितिपर्यायस्य। न च तथासति अहमेवाधस्तादिति व्यर्थम्। लोकप्रसिद्धप्रत्यग्रूपेण प्रथमतस्सर्वात्मताप्रदर्शनार्थं तत्। न च-लोकप्रसिद्धं यद्रूपमन्तःकरणादिसंभिन्नं न तस्य सर्वात्मकता, नापि तस्याभेदः परमात्मना विवक्षितः। अपि तु शुद्धस्य। अतः तस्य सर्वात्मतोपदेशो व्यर्थ एव - इति वाच्यम्। विशुद्धरूपेण सर्वात्मतां ग्राहयितुं स्थूलारुन्धतीन्यायेन तथानिर्देशोपपत्तेः। प्रतीचो हि परमात्माभेद इह बोधनीयः। प्रत्यग्रूपं च अहमित्येव गृह्यमाणं लोकसिद्धम्। ततश्च अहमर्थमुपादाय प्रथमतः सर्वात्मत्वे बोधिते बोध्यस्य इयं बुद्धिर्भवति-नूनमयं जीवस्य

---

1. मु. मेव प्राणः

वैपुल्यात्मिका च भूमरूपता सर्वकारणत्वात् परमात्मनः सुतरामुपपद्यते ॥ ८ ॥

## धर्मोपपत्तेश्च ॥ ९ ॥

अपि च ये भूम्नि श्रूयन्ते धर्माः ते परमात्मन्युपपद्यन्ते । 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इति दर्शनादिव्यवहाराभावं भूमन्यवगमयति । परमात्मनि चायं दर्शनादि-

---

सर्वात्मतां बोधयतीति । ततश्च बोध्यस्य [1]इयं शङ्का अवतरति—अहमिति गृह्यमाणस्य कथमयं सर्वात्मतोपदेशः परिच्छिन्नत्वात् —इति । तादृशशङ्कां निवारयितुं 'तस्य यन्निष्कृष्टं रूपमस्ति तदभिप्रायेणायं सर्वात्मतोपदेशः' इति प्रतिपादयति आत्मैवाधस्तादित्यादिना । अतो न कस्यापि व्यर्थता । युक्तश्च इत्थमेव एतेषां पर्यायाणां विभागः । निर्विशेषात्मप्रकरणानुगुणत्वात् । उपक्रमोपसंहारयोः शोकरूपाविद्यातरणस्य निर्विशेषविद्याऽसाधारणस्य फलस्य अवगमेन, मध्ये च यत्रनान्यत्पश्यतीत्यादिना निर्विशेषस्वरूपस्यैव बोधनेन, प्रकरणस्य निर्विशेषप्रत्यगभिन्नवस्तुबोधनपरत्वावसायात् । न च निर्विशेषपरत्वे तेषां 'सर्वेषु लोकेषु कामचारो भवति' 'स एकधा भवति' इत्यादि [2]सविशेषविद्याफलकीर्तनं असङ्गतमिति वाच्यम् । यावत्सर्वमोक्षं ब्राह्मेण रूपेण लोकदृष्ट्या अवस्थितस्य परमात्मधर्मैः स्तुतिसम्भवात् । [3]अत एव 'तस्य ह वा एतस्यैवं पश्यत एवंमन्वानस्यैवंविजानत आत्मतः प्राणः' इत्यादिना सर्वस्रष्टृताकीर्तनमपि विदुष उपपन्नं भवति । सविशेषविद्यायां जगद्व्यापारवर्जितस्यैव भोगस्य फलत्वेन, तत्कीर्तनासम्बन्धात् । अत एव च विद्वद्दृष्ट्या सर्वस्य भोग्यजातस्य आत्ममात्रता निरूप्यते 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन् आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति' इति । एवं च यस्य सन्दर्भस्य सविशेषात्मपरतायामपि स्वारस्यं न लभ्यते तस्य प्राणपरत्वे का प्रत्याशा ॥ ८ ॥

---

1. आ. इयं परं शङ्का 2. मु. सविशेषफल

3. अत एव—निर्विशेषविद्यापरत्वादेव ।

व्यवहाराभावोऽवगतः, 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' (बृ. उ. ४।५।१५) इत्यादिश्रुत्यन्तरात् ।

योऽप्यसौ सुषुप्तावस्थायां दर्शनादिव्यवहाराभाव उक्तः सोऽप्यात्मन एव असङ्गत्वविवक्षयोक्तः न प्राणस्वभावविवक्षया, परमात्मप्रकरणात् ।

यदपि तस्यामवस्थायां सुखमुक्तं, तदप्यात्मन एव सुखरूपत्वविवक्षयोक्तम् । यत आह 'एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' (बृ. उ. ४।३।३२) इति । इहापि 'यो

---

सोऽप्यात्मनएवासङ्गत्वविवक्षयोक्त इति । 'परे देवे मनस्येकीभवति' इति वाक्येन जीवे इन्द्रियाणां लयं व्युत्पाद्य अनन्तरं 'न शृणोति' इत्यादिना श्रवणाद्यभावप्रतिपादनात् 'इन्द्रियादिसम्पर्ककृतमेव द्वैतदर्शनं परमार्थतस्तु जीवोऽसङ्ग एव' इति वाक्यतात्पर्यावसायात् । ततश्च प्रश्नवाक्यपर्यालोचनया प्राणाधिकरणको दर्शनाद्यभावो न लभ्यत इति भावः । परं तु 'प्राणाग्नय एवैतस्मिन् पुरे जाग्रति' इति प्राणानां जागरणप्रतिपादनात् यत्रनान्यत्पश्यतीत्यादि 'यस्मिन् जाग्रति नान्यत् पश्यति' [1]इत्यध्याहारेण प्राणवादिना व्याख्येयम्, तत् क्लिष्टत्वात् परित्यक्तव्यम् । ननु प्रश्नोपनिषदि 'अथ तदा एतस्मिञ्छरीरे एतत् सुखं भवति' इति वाक्येन सौषुप्तं सुखं शरीरान्तर्गतमेवेति एतावन्मात्रं प्रतिपादितम् । तत् आत्मरूपमेवेति कुतो लभ्यते - इत्यत आह—**यत आह एषोऽस्येति** । इदं वाक्यं 'सलिल एको द्रष्टाऽद्वैतो भवति' इति सुषुप्त्यवस्थागतं जीवं प्रस्तुत्याम्नातम् । तथा च एतद्वाक्यपर्यालोचनया सौषुप्तसुखस्य जीवस्वरूपतानिर्धारणात् अथतदाएतस्मिन्शरीरेएतत्सुखंभवतीतिवाक्यप्रतिपाद्यमपि सुखं जीवरूपमेवेत्यर्थः ।

---

1. **इत्यध्याहारेणेति**—प्राणानां सुषुप्तौ जागरणप्रतिपादनात् व्यवहारसामान्याभावप्रतिपादनासम्भवेन प्राणजागरणव्यतिरिक्तव्यवहाराभावप्रतिपादनाय अध्याहार आवश्यक इति भावः ।

वै भूमा तत् सुखं नाल्पे सुखमस्ति भूमैव सुखम्' इति सामयसुखनिराकरणेन ब्रह्मैव सुखं भूमानं दर्शयति ।

'यो वै भूमा तदमृतम्' इत्यमृतत्वमपीह श्रूयमाणं परमकारणं गमयति । विकाराणाममृतत्वस्यापेक्षिकत्वात्, 'अतोऽन्यदार्तम्' (बृ. उ. ३।४।२) इति च श्रुत्यन्तरात् ।

तथा सत्यत्वं स्वमहिमप्रतिष्ठितत्वं सर्वगतत्वं सर्वात्मत्वमिति चैते धर्माः श्रूयमाणाः परमात्मन्येवोपपद्यन्ते नान्यत्र ।

तस्मात् भूमा परमात्मेति सिद्धम् ॥ ९ ॥

---

[1]नन्वत्र 'प्राणो वा आशाया भूयान्' इत्यारभ्य 'तं चेत् ब्रूयुरतिवाद्यसीति अतिवाद्यस्मीति ब्रूयान्नापह्नुवीत' इत्यन्तं मुख्यप्राणवाक्यमिति सिद्धान्तपूर्वपक्षयोरभ्युपगम्य, एषतुवाअतिवदतीत्यादिकं [2]प्राणवाक्यान्तर्गतमिति पूर्वपक्षं कृत्वा ततो बहिर्भूतमेवेति व्यवस्थापितं भूम्नः परमात्मतासिद्ध्यर्थम्; तदसङ्गतम्-'प्राणो वा आशाया भूयान्' इत्यादेरपि परमात्मपरत्वेन एषतुवाअतिवदतीत्यादेरपि तदेकवाक्यतया पूर्वपक्षसिद्धान्तयोरसम्भवात् । मुण्डके हि 'प्राणो ह्येष यस्सर्वभूतैर्विभाति विजानन् विद्वान् भवते नातिवादी । आत्मक्रीड आत्मर[ति][तिः]क्रियावानेष ब्रह्मविदां वरिष्ठः । सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्' इति मन्त्रेण परमात्मपरेण सह एकार्थताप्रत्यभिज्ञानात् । स हि मन्त्रः प्रकरणात् परमात्मपर इत्यविवादम् । तत्र यथा प्राणपदोदितस्य सर्वभूतैरित्यादिना सर्वात्मता प्रतीयते, सर्वभूतैरिति इत्थम्भावे तृतीया, एवमत्रापि 'यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वं समर्पितम्' इत्यादिना प्राणपदोदितस्य सर्वात्मता प्रतीयते । इह च यथा 'स वा एष एवंपश्यन्नेवंमन्वान एवंविजानन्नतिवादी भवति' इति प्राणविज्ञानेन अतिवादित्वं प्रतीयते, तथा तत्रापि 'विजानन् विद्वान् भवते नातिवादी' इति प्राणविज्ञानेन

---

1. नन्वत्रेति इयं शङ्का 'तदप्यसङ्गतमेवेतिचेत्' इत्यन्ता ।

2. आ. पूर्ववाक्यान्तर्गतमितिपूर्वपक्षं

[1]अतिवादित्वं प्रतीयते। यथा च तत्र 'सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्' इत्यादिना प्राणविज्ञानसाधनानि विहितानि, तथा अत्रापि 'एष तु वा अतिवदति यस्सत्येनातिवदति' इत्यादिना सत्यवदनादीनि विधीयन्त इत्येव स्वीकर्तव्यम्। श्रुत्यन्तरैकार्थ्यात्। अतः अत्रापि प्राणपदोदितः परमात्मैव। अत एवात्र प्राणवाक्ये उपक्रमगतशोकतरणातिरिक्तं फलं न प्रतिपाद्यते। प्राणपदस्य मुख्यप्राणपरतया नापह्नुवीतेत्यन्तस्य सन्दर्भस्य प्राणोपासनापरत्वे तु नामाद्युपासनेष्विव फलान्तरमपि श्रूयेत। अत एव नारदस्य न पृथगत्र प्रश्नः—'अस्ति भगवः प्राणात् भूयः' इति। ननु - प्राणपदस्य परमात्मपरत्वे 'अथ यद्यप्येनानुत्क्रान्तप्राणान्' इति तदुत्क्रान्तिः कथं प्रतिपादनीया। न हि ईश्वरस्योत्क्रान्तिरस्ति। उत्तरत्र च 'आत्मतः प्राणः' इत्यादिना प्राणस्योत्पत्तिर्निरूप्यते। साऽपि कथं परमेश्वरे उपपद्यताम्। न चोत्पत्तिवाक्ये प्राणपदं मुख्यप्राणपरमेवेति वाच्यम्। तस्मिन् वाक्ये नामादीनां प्राणान्तानां वैपरीत्येन क्रमप्रत्यभिज्ञानात् उभयोः प्राणपदयोरेकार्थतायाः स्थानप्रमाणसिद्धत्वात् - इति चेत्, न-उत्क्रान्तिस्तावदीश्वरेऽपि जीवेन सह 'प्राज्ञेनात्मनान्वारूढ उत्सर्जन् याति' [बृ. उ. ४. ३५] इति समाम्नाता। परं तु सा जीवनियामकस्येश्वरस्य स्वाधीनेति सैवेह प्रतिपाद्यत इति नानुपपत्तिः। श्रुत्यन्तरार्थप्रत्यभिज्ञया स्ववाक्यगतैश्च लिङ्गैः उपक्रमगतस्य प्राणपदस्य परमात्मपरत्वनिर्णये सति औपसंहारिकप्राणपदसमानार्थता स्थानप्रमाणप्राप्ता परित्यज्यते। लिङ्गमपेक्ष्य स्थानस्य दुर्बलत्वात्। एवं 'प्राणो वा आशाया भूयान्' इत्यत्र प्राणपदस्य परमात्मपरत्वे स्थिते, यत् पूर्वपक्षिणोक्तं प्राणवाक्यैकवाक्यतामुपेत्य भूम्नोऽब्रह्मत्वं तदसङ्गतम्। यच्च सिद्धान्तिना वाक्यभेदं साधयित्वा प्राणभूम्नोरर्थान्तरत्वमुपगतं, तदप्यसङ्गतमेव - इति चेत्,

---

1. **अतिवादित्वं प्रतीयत इति**—न च - छान्दोग्ये 'अतिवादी भवति' इति श्रूयते, मुण्डके 'नातिवादी' इति श्रूयते, तत् कथमनयोरेकार्थताप्रत्यभिज्ञानम्—इति शङ्क्यम्। छान्दोग्योक्तमतिवादित्वं स्वोपास्यस्य प्राणस्य अन्यस्मादुत्कर्षवादित्वरूपम्, मुण्डकोक्तश्च तदपेक्षया अन्यस्य उत्कर्षवादित्वाभावरूपोऽतिवादित्वाभावः तदुत्कर्षवादित्वे एव पर्यवस्यति - इत्येवमेकार्थपर्यवसायित्वेन प्रत्यभिज्ञानसम्भवात् - इति भावः।

उच्यते—आकाशप्रतर्दनाद्यधिकरणेषु हीदं व्यवस्थापितं—दुर्बलमपि लिङ्गवाक्यादिकं उपक्रमादितात्पर्यलिङ्गोपोद्बलितं प्रबलाया अपि श्रुतेः बाधकमिति। तथा च यत्र श्रुतिरेव स्वभावतो लिङ्गात् बलीयसी उपक्रमादितात्पर्यलिङ्गोपबृंहिता तस्या लिङ्गबाधकत्वे का विप्रतिपत्तिः। अस्ति चात्र प्राणश्रुतिः [1]उपक्रमाभ्यासाशान्तजीवोपकरणप्रायपाठोपसंहारिकस्थानादिरूपतात्पर्यलिङ्गोपसन्दब्धा। कथमेतस्याः सर्वात्मतादिलिङ्गैः बाधः स्यात्। तथा च 'यथा वा अरा नाभौ समर्पिताः' इत्यादिकं [2]प्रबलप्राणश्रुत्यनुसारेण शरीरेन्द्रियादिधारणपरमेव व्याख्येयम्। [3]तच्च श्रुत्यन्तरे 'मा मोहमापद्यथ अहमेवैतत् पञ्चधात्मानं प्रविभज्य एतद्बाणमवष्टभ्य विधारयामि' [प्र. उ. २. ३] इति प्राण एव प्रसिद्धम्। पित्राद्यात्मत्वं तु गौणमिति वाक्यशेषपर्यालोचनया लभ्यत इति प्रागेव प्रतिपादितम्। उत्क्रान्तिश्चेह प्रतिपाद्यमाना दाहादिष्वपि हन्तृत्वाद्युपक्रोशाभावप्रयोजिका लोकप्रसिद्धा जीवसम्बन्धिनीत्यपि वक्तुमशक्या अत्यन्ताप्रसिद्धेश्वरसम्बन्धिनीति दूरत एव निरस्ता। स्ववाक्यगतश्रुतिलिङ्गादिपर्यालोचनया मुख्यप्राणपरत्वे स्थिते मुण्डकवाक्यार्थप्रत्यभिज्ञा न ईश्वरपरतां सम्पादयति। [4]स्ववाक्यमात्रपर्यालोचनलभ्यश्रुतिलिङ्गादितो वाक्यद्वयपर्यालोचनसापेक्षायाः प्रत्यभिज्ञाया दुर्बलत्वात्। अत एव पशुकामवाक्ये अभ्युदयेष्टिवाक्ये च सत्यामपि प्रत्यभिज्ञायां [5]पूर्वतन्त्रे, छान्दोग्यबृहदारण्यकगतयोरुद्गीथवाक्ययोश्च सत्यामपि प्रत्यभिज्ञायां अस्मिञ्छास्त्रे, स्ववाक्यगतश्रुतिलिङ्गादिपर्यालोचनया अर्थभेदः स्वीकृतः। [6]इदं च 'अन्यथात्वं शब्दात्' [ब्र. सू. ३. ३. ६] इत्यत्र विशदं भविष्यति। तथा च 'प्राणोवा आशाया भूयान्' इति वाक्यस्य मुख्यप्राणपरत्वमभ्युपेत्य सिद्धान्तपूर्वपक्षयोः प्रवृत्तिः युक्तैव।

---

1. **उपक्रमेत्यादि** अत्र प्रायपाठस्थानयोः उपपत्तिरूपतया तात्पर्यलिङ्गत्वं बोध्यम्।
2. मु. प्रबलप्रमाणश्रुत्य°
3. मु. तच्छ्रुत्यन्तरे
4. मु. स्ववाक्यपर्यालोचन
5. **पूर्वतन्त्रे**—षष्ठप्रथमस्य आद्येऽधिकरणे।
6. मु. इदं तु

३ अक्षराधिकरणम्

## अक्षरमम्बरान्तधृतेः ॥ १० ॥

**'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति, स होवाच एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनणु' (बृ. ३।८।७,८) इत्यादि श्रूयते। तत्र संशयः—किं अक्षरशब्देन वर्ण उच्यते किं वा परमेश्वर इति। तत्र अक्षरसमाम्नाय इत्यादौ अक्षरशब्दस्य वर्णे**

---

अत्र यत्रनान्यत्पश्यतीत्यादिवाक्यप्रतिपाद्यानां परमात्मधर्माणां प्राणधर्मातिवादित्वानुकर्षणप्रश्नान्तराभावरूपप्राणलिङ्गाभिभूतत्वात् अस्पष्टता ॥ ९ ॥

**इति भूमाधिकरणम्** ॥ २ ॥

यथा पटः दीर्घभावेन तन्तुष्वोतः तिर्यग्भावेन च तत्रैव प्रोतः, एवमाकाशः कस्मिन्नोतश्च प्रोतश्चेति गार्ग्या पृष्टस्य याज्ञवल्क्यस्य प्रतिवचनम् [1]'एतद्वै तदक्षरम्' [बृ. उ. ३-८-८] इत्यादि।

भूमपदस्य [2]आधिक्यार्थाभिधायिनो धर्मिविशेषाकाङ्क्षायां प्राकारणिक आत्मैव धर्मीति निरूपितम्। अक्षरपदस्य तु वर्णे रूढतया उत्तरसन्दर्भस्वारस्यानुसारेणोपस्थितस्याप्यात्मनः [3]अन्वयायोग्यतया अक्षरपदार्थानुसारेण उत्तरत्र श्रूयमाणानां लिङ्गानामेव यथाकथञ्चिन्नयनम्। न तु नक्षरतीतियौगिकार्थमादाय वाक्यशेषोपस्थिते परमात्मनि भूमपदार्थस्य प्राकरणिके परमात्मनीव पर्यवसानमुचितम्। योगमपेक्ष्य रूढेः बलीयस्त्वात्। न च वर्णेऽपि नक्षरतीतियोगेनैव प्रयोगोपपत्तौ किमिति रूढिः कल्प्यत इति वाच्यम्। नित्यवर्णवादे सम्भवतोऽपि योगस्य तदनित्यत्ववादे अनुपपत्तेः। तन्नित्यत्ववादेऽपि वर्णसमुदाये ओङ्कारादिरूपे क्रमविशेषयुक्ते [4]योगासम्भवाच्च-इत्यभिप्रेत्याह—**तत्राक्षरसमाम्नाय इति**।

---

1. मु. एतस्मिन् खल्वक्षर इत्यादि
2. मु. अधिकार्थाभिधायिनः
3. **अन्वयायोग्यतयेति**—एतद्वैतदक्षरमितिवाक्यार्थे इत्यादिः।
4. मु. प्रयोगासम्भवाच्च

**प्रसिद्धत्वात् प्रसिद्ध्यतिक्रमस्य चायुक्तत्वात् 'ओङ्कार एवेदं सर्वम्' (छा. उ. २।२३।३) इत्यादौ च श्रुत्यन्तरे वर्णस्याप्युपास्यत्वेन सर्वात्मकत्वावधारणात् वर्ण एवाक्षरशब्द इति—**

---

ननु श्रुतिमपेक्ष्यापि प्रश्नप्रतिवचनरूपप्रबलतात्पर्यलिङ्गोपबृम्हितं आकाशतदाधेयसकलवस्तुसाक्षादाधारत्वं प्रबलम् । अतो रूढिं परित्यज्य अक्षरपदं योगेनैव व्याख्येयम् । न च - अक्षरपदेऽप्यभ्यासरूपं तात्पर्यलिङ्गमस्ति, अतः कथमक्षरपदे रूढिः परित्यज्यते-इति वाच्यम् । प्रश्नपर्यालोचनया हि प्रथमत एव इयं बुद्धिरुत्पन्ना सकलवस्त्वाधार इह प्रतिपिपादयिषित इति ; अतः अक्षरपदाभ्यासः चरमोपस्थितः तदनुसारेण व्याख्येयः - इति शङ्कां मनसि निधायाह—**प्रसिद्ध्यतिक्रमस्येति** । अयं भावः - नात्र प्रश्नः सकलवस्त्वाधारविषयः । 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इत्याकाशमात्रविषयकत्वात् । तन्मात्राधारत्वं च शब्दतन्मात्रात्मनि वर्णे अक्षरपदोदिते सम्भवत्येवेति किमिति रूढिः परित्यक्तव्या । अपि च - इह कस्मिन्नुखल्वाकाशओतश्चप्रोतश्चेत्यत्र, यथा तन्तुषु पट ओतः प्रोतश्च तदधिकरणकः तथा आकाशो यत्र ओतः प्रोतश्च तदधिकरणकः सः - इत्यर्थो न विवक्षितः । तथा सति पूर्वसन्दर्भासाङ्गत्यापत्तेः । 'अथ हैनं गार्गी वाचक्नवी पप्रच्छ' इति पूर्वस्मिन् गार्गिब्राह्मणे अब्वाय्वन्तरिक्षलोकगन्धर्वलोकादित्यलोकचन्द्रलोकनक्षत्रलोकदेवलोकेन्द्रलोकप्रजापतिलोकब्रह्मलोकानां मध्ये अन्तरिक्षलोकादयोऽधस्तना यथाक्रममुत्तरस्मिन् स्वस्मादूर्ध्वे ओताश्च प्रोताश्च प्रश्नप्रतिवचनरूपैर्वाक्यैः प्रतिपादिताः । न च अधस्तनस्य उर्ध्वे वर्तमान आधार इति वक्तुं शक्यम् । अतः, स्वस्मिन् ओतप्रोतात् पटात् तन्तवो यथा उत्कृष्टाः तथा अधस्तनाल्लोकात् ऊर्ध्वलोक उत्कृष्टः- इत्येव ओतप्रोतोक्तिभङ्ग्या विवक्षितमिति स्वीकर्तव्यम् । तत्प्रायपाठात् द्वितीयगार्गिब्राह्मणगते 'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इतिवाक्येऽपि उत्कृष्टत्वमेव आकाशापेक्षया वर्णस्य विवक्षितम् । तच्च प्रणवस्य सम्भवत्येव । सर्वसारतया श्रुतिषु प्रणवप्रतिपादनात् । अतो न अक्षरपदे रूढिः परित्यक्तव्या । अपि च इह आकाशपदेन ब्रह्मैव विवक्षितमित्यवश्यं वक्तव्यम् । पूर्वस्मिन् गार्गिब्राह्मणे ब्रह्मलोकपर्यन्तमोत-

प्रोतभावे निरूपिते 'कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्च' इति पुनर्गार्गी-प्रश्ने 'स होवाच गार्गि माऽतिप्राक्षीः मा ते मूर्धा व्यपप्तत् अनतिप्रश्न्यां वै देवतामतिपृच्छसि गार्गि माऽतिप्राक्षीः' इति याज्ञवल्क्येन गार्गी निवारिता। तन्निवारणवाक्यस्य अयमभिप्रायः—ब्रह्मलोकाधारगोचरः त्वदीयः प्रश्नः परमात्म-रूपदेवताविषय एव, सा च देवता अस्यां जल्पकथायां न प्रष्टुं शक्या, अपि तु गुरुशिष्यभावेन वादकथायामेव प्रष्टव्या - इति। तथा च कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति गार्गीप्रश्नः अनतिप्रश्न्यां वै देवतामितिनिवारणवाक्य-गतानतिप्रश्न्यदेवतात्वलिङ्गात् परमात्मविषय इति स्थितम्। तदनन्तर-मुद्दालकेन सूत्रान्तर्यामिगोचरे प्रश्ने कृते याज्ञवल्क्येन चोत्तरिते सक्रोधं निवा-रिताऽपि गार्गी सर्वेषां ब्राह्मणानां पराजयो मा भूदित्याशया, मत्प्रश्नाभिप्रेतां देवतां निर्विशेषात्मरूपां किमयं ज्ञात्वा मां निवारितवान् उत [1]अज्ञात्वैवेति सन्दिहाना, [2]यदि तामपि जानाति तदा तस्या अपि, [3]कयाचिद्विवक्षया आधारान्तरं प्रक्ष्यामि, तां विवक्षामज्ञात्वा व्यामुग्धो भविष्यति - [4]इत्यभिमानेन, शापभीता ब्राह्मणानुज्ञां प्रार्थितवती - 'अथ ह वाचक्नव्युवाच, ब्राह्मणा भगवन्तो हन्ताह-मिमौ द्वौ प्रश्नौ प्रक्ष्यामि तौ चेन्मे वक्ष्यति न वै जातु युष्माकं इमं कश्चित् ब्रह्मोद्यं जेतेति'। ब्राह्मणैः कृतानुज्ञा पृच्छ गार्गीति पुनश्च याज्ञवल्क्यमपि [5]प्रार्थितवती 'याज्ञवल्क्याहं त्वा द्वाभ्यां प्रश्नाभ्यां उपस्थिताऽस्मि तौ मे ब्रूहि' इति। याज्ञवल्क्येन कृतानुज्ञा पृच्छ गार्गीति। तदनन्तरं चायं गार्गीप्रश्नः -'यदूर्ध्वं याज्ञ-वल्क्य दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यत् भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतं चेति'। अयं च प्रश्नः शापपूर्वकं याज्ञवल्क्येन यः प्राक् निवारितः स एव। तस्यैव गार्ग्या मनसि विपरिवर्तमान-तौचित्यात्, शापभयनिवृत्त्युपयोगिब्राह्मणयाज्ञवल्क्यप्रार्थनालिङ्गाच्च। स च प्रश्नः

---

1. मु. अज्ञात्वेति
2. मु. यदि वा
3. **कयाचिद्विवक्षया**—'स्वे महिम्नि प्रतिष्ठितः' इतिवत् गौणाधाराभिप्रायेण प्रतीकाभिप्रायेण वा। अभिप्रायोऽयं पूर्वपक्षानुसारी। मुख्याधाराभिप्रायस्तु प्रश्नः सिद्धान्ते।
4. मु. इत्यभिमानेन च
5. आ. पृष्टवती

एवं प्राप्ते उच्यते—पर एवात्मा अक्षरशब्दवाच्यः। कस्मात्। म्बरान्तधृतेः—पृथिव्यादेराकाशान्तस्य विकारजातस्य धारणात्।

---

नतिप्रश्नस्यदेवतात्वलिङ्गात् [1]तदनुवादकैतद्वाक्यगतसर्वाधारत्वलिङ्गाच्च परमात्म-षय एवेति तदुत्तरवाक्ये प्रतिपाद्यमान आकाशः परमात्मैव। न ह्यन्यस्य र्वाधारदेवतात्वं वक्तुं शक्यम्। अव्याकृतस्य सर्वाधारत्वेऽपि देवतात्वस्य जडत्वे-सम्भवात्। तथा च परमात्मरूपाकाशाधारत्वेन निरूप्यमाणस्याक्षरस्य कथं रमात्मरूपता भवेत्, भवन्ती वा स्वमहिमप्रतिष्ठत्ववत् गौणी भवेत्। तथा च मात्मविवक्षायामपि गौणाधारतावश्यंभावात् अक्षरपदगतरूढ्यपरित्यागेन प्रणव व हृदयादिवत् परमात्माधारतया उपासनार्थं विवक्षितोऽस्तु।

न च-आकाशपदमेव आधारान्तरप्रश्नदर्शनात् भूताकाशपरं वा व्याकृताकाशपरं वा अस्तु, ब्रह्मपरत्वे आधारान्तरप्रश्नानुपपत्तेरिति वाच्यम्। सन्दर्भपर्यालोचनया अकाशपदस्य ब्रह्मपरत्वे स्थिते तदाधारप्रश्नस्य तत्प्रतीक-विक्षया प्रवृत्त्युपपत्तेः। 'एतस्य वा अक्षरस्य प्रशासने गार्गि' इत्यादिना क्तानां ब्रह्मधर्माणां प्रणवरूपेऽक्षरे एव तदभेददृष्ट्यभिप्रायेणाम्नानोपपत्तेरिति।

नन्वथापि अक्षरपदस्य सामान्येन वर्णवाचकस्य कथं प्रणवे पर्यव-नमित्यत आह—**ओङ्कार एवेदं सर्वमित्यादौ चेति।**

**पृथिव्यादेराकाशान्तस्य विकारजातस्येति।** अयं भावः—एतस्मिन् नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इत्यत्र आकाशापेक्षया क्षरसुत्कृष्टमिति पूर्वपक्ष्युक्तरीत्या अर्थो न विवक्षितः। तन्तुषु पटवत् अक्षरे काशस्य मुख्यौतप्रोतत्वसम्भवात्। न क्षरतीति योगेन अक्षरपदस्य ब्रह्मण्यपि तिसम्भवात्। क्लृप्तश्चायं अक्षरशब्दस्य योगो ब्रह्मणि 'अथ परा यया दक्षरमधिगम्यते' इत्यादौ। ततश्च अनेकब्रह्मलिङ्गानुसारेण अक्षरपदे रूढिः

---

1. मु. तदनुकर्ष एव तद्वाक्य
2. मु. परमात्मता
3. मु. 'एव' नास्ति

परित्यज्यते । न च - पूर्वस्मिन् पर्याये ओतप्रोतभावः ज्यायस्त्वापरपर्यायो विवक्षितः, अधस्तनानां [1]अन्तरिक्षादिलोकानां [2]गन्धर्वादिलोकेष्वोतप्रोततया आहितत्वासम्भवात् , तत्प्रायपाठादत्रापि तथैवेत्युक्तं - इति वाच्यम् । पूर्वत्रापि अब्वायुपर्याययोः मुख्यस्य ओतप्रोतभावेनाहितत्वस्य सम्भवात् , गौणार्थप्रायपाठस्य सम्भवन्मुख्यार्थस्थले गौणतापादकतायाः ईक्षत्यधिकरणे निराकृतत्वाच्च । अधस्तनानामपि च उपरितनेषु गृहबन्धनकाष्ठादिषु शिक्यपाशादिसंयोजनेन दधिभाण्डपुस्तकादीनां आहितत्वं दृष्टम् । स न्यायः गन्धर्वलोकादेरुपर्याहितत्वोपपादनाय कल्पनीय इति तत्रापि मुख्ययैव गत्या ओतप्रोतभाववर्णनं सम्भवति । अपि च इह अबादीनां वाय्वादिष्वोतप्रोतभाववर्णने न श्रुतेस्तात्पर्यम् । तत्प्रतिपादने प्रयोजनानवाप्तेः, वाक्यभेदापत्त्या प्रत्येकमुपासनकल्पनानुपपत्तेश्च । ततश्च यथा 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यत्र परत्ववर्णनस्य 'यत् सर्वान्ते श्रोष्यते तत् सर्वेभ्यः परं' इत्यत्र तात्पर्यं, तथा प्रकृतेऽपि 'यत् सर्वान्ते श्रोष्यते तस्य सर्वाधारता' इत्यत्र तात्पर्यं [3]एकवाक्यतोपपादनाय कल्प्यते । न चैवमप्याकाशाधारतामात्रं सिध्यति न तु सर्वाधारत्वमिति वाच्यम् । 'एतस्मिन् नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इत्येतावन्मात्रस्य श्रुतत्वेऽपि पूर्वपूर्वस्योत्तरोत्तराहितत्ववर्णनसार्थक्याय अन्ते श्रुतः सर्वाधार इत्येव सिध्यति । ततश्च तात्पर्याविषये ओतप्रोतभावस्य यथाकथञ्चित्प्रतिपादनेऽपि तात्पर्यविषयीभूतेऽपि तन्मुख्यतापरित्यागो न न्याय्यः । तथा च अम्बरान्तधृतेरिति हेतोः नासिद्धिः ।

न च अनतिप्रश्न्यांवैदेवतामतिपृच्छसीतिपूर्ववाक्यपर्यालोचनया अयमाकाशो ब्रह्मैवेति शङ्कनीयम् । तद्वाक्यपर्यालोचनयाह्येतावदवगम्यते - गार्ग्याः परमात्मरूपा देवता पिपृच्छिषितेति । एतावदपि च उत्तरसन्दर्भपर्यालोचनयैवावगन्तव्यम् । तस्मिन् वाक्ये [4]देवतापदमात्रश्रवणात् । अनतिप्रश्न्यत्वलिङ्गस्य देवताविज्ञानमात्रसाधारणत्वात् । 'कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्च' इति प्रश्नेनापि न

1. मु. गन्धर्वादिलोकानां
2. मु. देवलोकादिषु
3. मु. एकवाक्यतापादनाय
4. मु. देवतामात्रश्रवणात्

**तत्र हि पृथिव्यादेः समस्तविकारजातस्य कालत्रयविभक्तस्य 'आकाश एव तदोतं च प्रोतं च' इति आकाशे प्रतिष्ठितत्वमुक्त्वा 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इत्यनेन प्रश्नेन इदमक्षरमवतारितम्। तथाचोपसंहृतम्—'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इति। न च इयमम्बरान्तधृतिः ब्रह्मणोऽन्यत्र संभवति। यदपि 'ओङ्कार एवेदं सर्वम्' इति, तदपि ब्रह्मप्रतिपत्तिसाधनत्वात् स्तुत्यर्थं द्रष्टव्यम्।**

---

देवतापदं परमात्मपरमिति निर्णेतुं युक्तम्। ब्रह्मलोकाधारत्वस्य परमात्मासाधारणत्वाभावात्। तथा च, उत्तरसन्दर्भपर्यालोचनया यथा गार्ग्याः पिपृच्छिषितं [1]ब्रह्मेति कल्प्यते तथा तत्सन्दर्भपर्यालोचनया ब्रह्मलोकाधारगोचरः प्रश्नोऽव्याकृतविषय इत्येव कल्पयितुं युक्तम्। तदाधारान्तरस्यापि पुनः पृष्टत्वात्। आकाशाधारे एव च ब्रह्मधर्माणां समाम्नानात्। ब्रह्मलोकाधारप्रश्न एव च याज्ञवल्क्यस्य निवारणं तु 'ब्रह्मलोकाधारे उत्तरिते तदाधारमपि पुनः प्रक्ष्यति, स च ब्रह्मैव भविष्यति' इति दूरदृष्ट्या कृतं इति उत्तरसन्दर्भपर्यालोचनयैव[2] कल्प्यते।

ननु-यदन्ते श्रूयते तस्यैव सर्वाधारत्वमित्यत्र वाक्यस्य तात्पर्यं चेत् कथमक्षराधेय एव सर्वाधारत्वं निवेश्यते, न हि तच्चरमनिर्देश्यं-इति चेत्, न-चरमनिर्देश्यस्य ब्रह्मणोऽसङ्गस्वभावस्य स्वपरनिर्वाहकोपाधिसंसर्गकल्पनां विना सर्वाधारताया वक्तुमशक्यतया ब्रह्मगतसर्वाधारतोपपादनार्थत्वात् आकाशगतसर्वाधारत्वस्य। अत एव 'यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक्' इत्यादिना पुनस्तस्मिन्नेवार्थे पृष्टे 'आकाश एव तदोतं च प्रोतश्च' इत्येवकारेण आकाशोपाधिकं ब्रह्मणः सर्वाधारत्वं आकाशशिरस्येव निक्षिप्तम्। तथा च अम्बरान्तसकलाधारत्वानुसारेण अक्षरपदोदितं ब्रह्मैव सिध्यति। तदाह—**न चेयमम्बरान्तधृतिरिति**। 'प्रश्नेनेदमक्षरमवतारितं' 'तथा चोपसंहृतं' इत्यनेन

---

1. मु. ब्रह्मैवेति
2. मु. °यावगम्यत एव

तस्मात्, न क्षरति अश्नुते चेति नित्यत्वव्यापित्वाभ्यामक्षरं परमेव ब्रह्म ॥ १० ॥

स्यादेतत्—कार्यस्य चेत् कारणाधीनत्वं अम्बरान्तधृतिरभ्युपगम्यते, प्रधानकारणवादिनोऽपीयमुपपद्यते, कथमम्बरान्तधृतेर्ब्रह्मत्वप्रतिपत्तिरिति? अत उत्तरं पठति—

## सा च प्रशासनात् ॥ ११ ॥

सा च अम्बरान्तधृतिः परमेश्वरस्यैव कर्म। कस्मात्? प्रशासनात्। प्रशासनं हि इह श्रूयते—'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ. उ. ३।८।९) इत्यादि। प्रशासनं च पारमेश्वरं कर्म। न अचेतनस्य प्रधानस्य प्रशासनं भवति। न हि

---

उपक्रमोपसंहारैकरूप्य[1]प्रश्नप्रतिवचनरूपतात्पर्यलिङ्गोपसन्दब्धत्वात् अम्बरान्तधृतिरूपं लिङ्गं अक्षरपदगतरूढि[2]च्यावनसमर्थमिति ध्वनितम् ॥ १० ॥

**एतस्य वा अक्षरस्य प्रशासन इति।** प्रशासनवाक्यपर्यालोचनया यथा प्रधानं पराकृतं भवति एवं ओतप्रोतपदाभ्यां ज्यायस्त्वं विवक्षितमित्यपि अर्थान्निराकृतं भवति। अत्र हि धृतिः प्रतिपाद्यमाना [3]प्राक् ओतप्रोतशब्दनिर्दिष्टेत्येव वक्तुमुचितम्। पूर्वोक्तद्यावापृथिव्यादीनां प्रत्यभिज्ञानात्, 'यत् भूतं च भवच्च भविष्यच्च' इत्यादिना निर्दिष्टकालस्य [4]इहापि निमेषा मुहूर्ता इत्यादिना प्रत्यभिज्ञानाच्च। तथा च प्रशासनवाक्यस्यायमर्थः:—सूर्याचन्द्रमसौ द्यावापृथिव्यौ मुहूर्तादिः कालः अन्यच्च यत् परमात्मना ओतप्रोतभावेन स्वस्मिन् विधृतं तत् स्वप्रशासनेनैवेति। अत्र प्रशासन इति निमित्तस्याधिकरणत्वविवक्षया 'राजाज्ञायां देशस्तिष्ठति' इतिवत् प्रयोगः ॥ ११ ॥

---

1. **ऐकरूप्येति** एकविषयकत्वात्मकेत्यर्थः, तात्पर्यलिङ्गेत्यत्रान्वयः।
2. आ. व्यावर्तनसमर्थं
3. **प्राक्**—प्रश्नवाक्ये।
4. **इहापि**—उत्तरवाक्येऽपि।

अचेतनानां घटादिकारणानां मृदादीनां घटादिविषयं प्रशासनमस्ति ॥ ॥ ११ ॥

## अन्यभावव्यावृत्तेश्च ॥ १२ ॥

अन्यभावव्यावृत्तेश्च कारणात् ब्रह्मैवाक्षरशब्दवाच्यम् । तस्यैव अम्बरान्तधृतिः कर्म नान्यस्य कस्यचित् । किमिदं अन्यभावव्यावृ[त्ति][त्ते]रिति ? अन्यस्य भावः अन्यभावः, तस्माद्व्यावृत्तिः अन्यभावव्यावृत्तिरिति । एतदुक्तं भवति—यदन्यद्ब्रह्मणोऽक्षरशब्दवाच्यमिहाशङ्क्यते तद्भावात् इदमम्बरान्तविधारणं[1] अक्षरं व्यावर्तयति श्रुतिः—'तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ अश्रुतं श्रोतृ अमतंमन्तृ अविज्ञातंविज्ञातृ' (बृ. उ. ३।८।११) इति । तत्र अदृष्टत्वादिव्यपदेशः प्रधानस्यापि संभवति, द्रष्टृत्वादिव्यपदेशस्तु न संभवति अचेतनत्वात् । तथा 'नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोस्ति विज्ञातृ' इति आत्मभेदप्रतिषेधात् न शारीरस्याप्युपाधिमतोऽक्षरशब्दवाच्यत्वम् । 'अचक्षुष्कमश्रोत्रमवागमनः' (बृ. उ. ३।८।८) इति च उपाधिमत्ताप्रतिषेधात् । न हि निरुपाधिकः शारीरो नाम भवति । तस्मात् परमेव ब्रह्म अक्षरमिति निश्चयः ॥ १२ ॥

४. ईक्षतिकर्मव्यपदेशाधिकरणम्

## ईक्षतिकर्मव्यपदेशात् सः ॥ १३ ॥

'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति' इति प्रकृत्य श्रूयते—'यः पुनरेतं त्रिमात्रेण

---

[1]अम्बरान्तविधारणमिति अक्षरमिति च द्वितीया

अत्र आकाशपदस्य ब्रह्मपरतां प्रसाध्य पूर्वपक्षिप्रतिपादितेन ब्रह्माश्रयत्वलिङ्गेन प्रशासनादीनां ब्रह्मलिङ्गानां अभिभूतत्वादस्पष्टता ॥ १२ ॥

इत्यक्षराधिकरणम् ॥ ३ ॥

---

1. आ. अम्बरान्तविधरण

ओमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत ' (प्र. उ. ५।२,५) इति ।

किमस्मिन् वाक्ये परं ब्रह्म अभिध्यातव्यमुपदिश्यते आहोस्विद्-परमिति । एतेनैवायतनेन परमपरं[च](वा) एकतरमन्वेतीति प्रकृतत्वात् संशयः ।

तत्र अपरमिदं ब्रह्मेति प्राप्तम् । कस्मात् ? ' स तेजसि सूर्ये संपन्नः स सामभिरुन्नीयते ब्रह्मलोकम् ' इति च तद्विदो देशपरिच्छिन्नस्य फलस्य उच्यमानत्वात् । न हि परब्रह्मवित् देशपरिच्छिन्नं फलं अश्नुवीतेति युक्तम् , सर्वगतत्वात् परस्य ब्रह्मणः ।

---

प्रश्नोपनिषदि सत्यकामप्रश्ने प्रायणान्तोङ्कारध्यानस्य कतमलोकप्राप्तिः फलमिति प्रवृत्ते इदमुत्तरं—' एतद्वै सत्यकाम ' इत्यादि । परं - परमात्मरूपम् । अपरं-हिरण्यगर्भादिरूपम् । एतेन - ओङ्कारेण आयतनेन - परापरब्रह्मप्रतीकभूतेन एकतरं-तत्क्रतुन्यायेन परमुपासीनः परं अपरमुपासीनोऽपरं प्राप्नोति । त्रिमात्रेण-तिस्रो मात्राः [1]ऋष्यादियुक्ताः अस्येति त्रिमात्रः । मात्रात्रयानुयायिऋष्यादिज्ञान-पूर्वकमिति यावत् । अत्र ओङ्कारमभिध्यायीतेति परंचापरंचब्रह्मओङ्कार इति च प्रस्तुतत्वात् 'त्रिमात्रेण' 'ओमित्येतेनैवाक्षरेण' इति तृतीया द्वितीयार्थे ।

पूर्वस्मिन्नधिकरणे [2]अक्षरं निर्विशेषपरमात्मस्वरूपमित्युक्तम् । तस्येदानी-मोङ्कारायतनत्वं व्यवस्थाप्यत इति सङ्गतिः ।

**स तेजसि सूर्ये सम्पन्न इति ।** अर्चिरादिमार्गपर्वभूतां सूर्यदेवतां प्राप्त इत्यर्थः । सामभिः-तदभिमानिदेवताभिः ।

ननु परब्रह्मोपासनायाः ब्रह्मलोकफलत्वं नानुपपन्नम् । सगुणपरब्रह्मविद्यानां अहंग्रहरूपाणां ब्रह्मलोकफलतायाः कार्यंबादरिरित्यत्र व्यवस्थापयिष्यमाणत्वात् चक्षुष्यश्श्रुतोभवतीत्यत्र अल्पफलतायाश्च श्रवणात् कथं ब्रह्मलोकफलतामात्रेण अपरब्रह्मोपासनमेतत् । प्रत्युत उपक्रमगतपरब्रह्मणः परंपुरुषमभिध्यायीतेति

---

1. **ऋष्यादियुक्ता इति—**' ओमित्येतेनैवाक्षरेण ' इति निर्देशादेव त्रिमात्रत्वलाभे त्रिमात्रेणेत्युक्तिः ऋष्यादियुक्तत्वेन ध्यानज्ञापनार्था इति भावः ।

2. मु. अक्षरपदं निर्विशेषपरमात्मपरमित्युक्तम्

**ननु अपरब्रह्मपरिग्रहे 'परं पुरुषं' इति विशेषणं नोपपद्यते। नैष दोषः। पिण्डापेक्षया प्राणस्य परत्वोपपत्तेः - इति,**

---

प्रत्यभिज्ञानात् परमात्मैव ध्येयः-इत्यभिप्रायेण शङ्कते—**नन्वपरब्रह्मपरिग्रहे परं पुरुषमितीति।** इदमेव सिद्धान्तकोटिबीजं[1] सूचयितुं एतद्वैसत्यकामेत्यादिनोपक्रम उदाहृतः।

**नैष दोष इति।** अयं भावः—अन्यत्र ब्रह्मोपासनानां कार्यब्रह्मप्राप्तिफलकत्वेऽपि नेह तथा सम्भवति। उपक्रमे 'एतेनैवायतनेनैकतरमन्वेति' इति परापरोपासनयोः परापरप्राप्तेः व्यवस्थया फलत्वोपक्रमात्। तथा च परंपुरुषमभिध्यायीतेति विहितोपासनायाः ब्रह्मलोकप्राप्तिफलताकीर्तनात् अपरब्रह्मोपासनत्वे लिङ्गेन निर्णीते परपुरुषप्रत्यभिज्ञा [2]परित्यज्यते।

न चैवं परब्रह्मोपासनया परब्रह्मप्राप्तिः उपक्रमगता निरूपिता न भवेदिति वाच्यम्। 'स एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते' इति वाक्येन तदुपपादनोपपत्तेः। इदं वाक्यं परपुरुषध्यानेन ब्रह्मलोकं गतस्य तल्लोकाधिपहिरण्यगर्भसाक्षात्कारपरमिति चेत्, न—तल्लोकं गतः तदधिपमीक्षते इत्यस्य अर्थसिद्धत्वेन तदर्थं वचनानपेक्षणात्। अतः सिद्धान्ते वक्ष्यमाणया रीत्या तद्वाक्यं प्रत्यगभिन्नब्रह्मसाक्षात्कारपरमेव। न च—ब्रह्मलोकं गतः तत्त्वं साक्षात्करोतीति 'कार्यात्यये तदध्यक्षेण' इत्यत्र वक्ष्यते, अतो ब्रह्मलोकं गतस्य विशिष्य [3]अत्र तत्त्वसाक्षात्कारप्रतिपादकं वचनमपि अनर्थकमेव - इति वाच्यम्। ब्रह्मलोकं गतानां 'एतेन प्रतिपद्यमाना इमम्मानवमावर्तं नावर्तन्ते' इति वाक्ये इममितिविशेषणेन, यस्मिन् मानवे ब्रह्मलोकं गताः तस्मिन् मानवे नावर्तन्ते इत्येव नियमः। मानवान्तरे त्वनियमः। परं तु येषामुपासनानां क्रममुक्तिफलकतायां किञ्चित्प्रमाणमस्ति तेषामेव ब्राह्मलौकिकतत्त्वसाक्षात्कारं

---

1. मु. बीजमिति सूचयितुं

2. **परित्यज्यत इति** स्थलद्वयपरामर्शसापेक्षा प्रत्यभिज्ञा तदनपेक्षात् लिङ्गात् दुर्बलेति भावः।

3. मु. अमृतत्वसाक्षात्कार

विना तदनुपपत्तेः ब्रह्मलोके तत्त्वसाक्षात्कारः फलत्वेन कल्प्यते। ततश्च ब्रह्मलोकं गतस्य प्रत्यगभिन्नब्रह्मसाक्षात्कारपरं वचः सफलमेव। तथा च अनेन वाक्येन परमात्मसाक्षात्काररूपा परप्राप्तिरुक्तैव।

नन्वेतावतापि ओङ्कारालम्बनपरमात्मध्यानात् परप्राप्तिर्न लभ्यत इति चेत्, न—ब्रह्मलोकं गतः तत्र ओङ्कारालम्बननिर्विशेषात्मोपासनेन तं साक्षात्करोतीति सएतस्माज्जीवघनादित्यनेन विवक्षितत्वात्।

ननु कथमयमर्थः एतस्य वाक्यस्य भवेत्?

उपसंहारपर्यालोचनयेति। तत्र 'ऋग्भिरेतं यजुर्भिरन्तरिक्षं सामभिर्यत्तत् कवयो वेदयन्ते तमोङ्कारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परश्च' इति मन्त्रेण, सामभिर्यत् कवयो वेदयन्ते-प्राप्नुवन्ति ब्रह्मलोकाख्यं तमोङ्कारेणायतनेनान्वेति विद्वानिति त्रिमात्रप्रणवध्यानेन पूर्वोक्तं ब्रह्मलोकाख्यं फलं संगृह्य, यत्तच्छान्तमित्यादिना, [1]ओङ्कारेणायतनेन विद्वान् शान्त्यादिगुणकं परमात्मानं प्राप्नोतीति स एतस्मादिति वाक्यार्थः संगृहीतः।

'नन्वस्मिन् पक्षे त्रिमात्रं प्रणवं अपरब्रह्मदृष्ट्या ध्यायन् ब्रह्मलोकं गतः तमेव परमात्मदृष्ट्या ध्यायन् परं प्राप्नोतीत्यर्थवर्णनं पर्यवस्यति। तथा च एकस्मिन्नेव पुरुषे क्रमेण इह ब्रह्मलोके च परापरध्यानाभ्यां परापरप्राप्ती इति सिध्यति। तच्च उपक्रमाननुगुणम्। उपक्रमे हि 'स यो ह वै तत् भगवन् मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव स तेन लोकं जयतीति तस्मै स होवाच एतद्वै सत्यकाम परश्चापरश्च ब्रह्म यदोङ्कारः तस्मात् विद्वानेतेनैवायतनेनैकतरमन्वेति' इति मनुष्यलोक एव यद्यपरब्रह्मदृष्ट्या प्रणवमुपास्ते तदा अपरं यदि तत्रैव परदृष्ट्या उपास्ते तदा परमिति मनुष्यलोक एव पुरुषभेदेन उपासनव्यवस्थया परापरप्राप्त्योर्व्यवस्थाया अवगतत्वात्' इति यदि शंक्यते,

तदा, सएतस्मादिति वाक्यं ससामभिरुन्नीयतेब्रह्मलोकमिति पूर्ववाक्यात् भिन्नमस्तु। तत्र स इति शब्दश्च 'तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति' इतिवाक्यप्रतिपाद्ययोः परापरविदुषोर्मध्ये परविदुषो व्यवहितस्यापि परामर्शकः। आकाङ्क्षानुसारात्। तथा च सः ओङ्कारेणायतनेन परं

---

1. मु. ओङ्कारेणायतनेनान्वेतिविद्वान्

एवं प्राप्ते अभिधीयते—परमेव ब्रह्म इहाभिध्यातव्यमुपदिश्यते। कस्मात्? ईक्षतिकर्मव्यपदेशात्। ईक्षतिः दर्शनम्। दर्शनव्याप्यं ईक्षतिकर्म। ईक्षतिकर्मत्वेन अस्याभिध्यातव्यस्य पुरुषस्य वाक्यशेषे व्यपदेशो भवति—'स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' इति। तत्र अभिध्यायतेः अतथाभूतमपि वस्तु कर्म भवति,

---

ब्रह्म विद्वान् परात् परं पुरिशयं-प्रत्यग्रूपं पुरुषं आनन्दमात्रस्वरूपं स्वरूप-प्रकाशेन ईक्षते, स्वप्रकाशानन्दमात्रतयाऽवस्थितो भवतीत्यर्थः। यद्युपक्रमगतं विद्वत्पदं ओङ्कारकरणकतत्त्वसाक्षात्कारवत्पुरुषपरं, यदि तु ओङ्कारालम्बनपरोपा-सनावत्परं, तदा ईक्षत इति वृत्तिज्ञानपरमस्तु। तथा च उपक्रमानुसारेण ब्रह्मलोकप्राप्तिरूपस्य लिङ्गस्य अनुग्रहाय ओमित्येतेनैवेतिवाक्यस्य अपरब्रह्मोपा-सनाविधिपरत्वेऽपि न काचिदनुपपत्तिः। उपक्रमगतं परापरवेदनयोर्व्यवस्थित-फलकीर्तनमेव पूर्वपक्षोपोद्बलकं इत्यभिप्रायेण भाष्ये उक्तं 'एतेनैवायतनेन परमपरं[च][वा]एकतरमन्वेतीति प्रकृतत्वात् संशयः' इति।

सूत्रे स इति पदं अभिध्यातव्यस्य विषयवाक्योपस्थितस्य परामर्शकं इत्यभिप्रेत्याह—**परमेव ब्रह्मेहाभिध्यातव्यमिति**। अत्र ईक्षतिकर्मत्वेन व्यपदेशादिति हेतुः, ईक्षणकर्मत्वेन श्रुतस्य परात् परस्य पुरिशयस्य पुरुषस्य, [1]तथाव्यपदेशवैयर्थ्यपरिहाराय उपक्रमगतपरत्वप्रत्यभिज्ञाननिर्वाहाय असति बाधके ईक्षतिकर्मणो मिथ्यात्वं माभूदिति[2] च [3]परमेश्वररूपतामापादयन्, तदैक्यप्रत्यभिज्ञया ध्यातव्यस्यापि परमात्मतां साधयतीत्यभिप्रायेणाह—**ईक्षतिकर्मत्वेनेत्यादिना**।

---

1. **तथाव्यपदेशः** - ईक्षणकर्मत्वेन व्यपदेशः।

2. **चेति** तथा च ईक्षणकर्मणः परमेश्वरत्वे हेतुत्रयमुक्तं भवति—ब्रह्मलोकं गतस्य हिरण्यगर्भसाक्षात्कारकथनं अर्थसिद्धत्वात् व्यर्थम्, परमात्मसाक्षात्कारकथनं तु पूर्वपक्षनि-रूपणावसरोक्तरीत्या न व्यर्थम्, परपुरुषप्रत्यभिज्ञा, ईक्षणस्य औत्सर्गिकं तत्त्वविषयकत्वं चेति।

3. मु. परमेश्वरपरतां

मनोरथकल्पितस्याप्यभिध्यायतिकर्मत्वात् । ईक्षतेस्तु तथाभूतमेव वस्तु लोके कर्म दृष्टं, इत्यतः परमात्मैवायं सम्यग्दर्शनविषयभूतः ईक्षतिकर्मत्वेन व्यपदिष्ट इति गम्यते । स एव चेह परपुरुषशब्दाभ्यां अभिध्यातव्यः प्रत्यभिज्ञायते ।

नन्वभिध्याने परः पुरुष उक्तः, ईक्षणे तु परात्परः, कथं इतर इतरत्र प्रत्यभिज्ञायते इति ? अत्रोच्यते—परपुरुषशब्दौ तावत् उभयत्र साधारणौ । न चात्र जीवघनशब्देन प्रकृतोऽभिध्यातव्यः परः पुरुषः परामृश्यते, येन तस्मात्परात्परोऽयं ईक्षितव्यः पुरुषः अन्यः स्यात् । कस्तर्हि जीवघन इति ? उच्यते—घनो मूर्तिः । जीवलक्षणो

---

ईक्षतेस्तु तथाभूतमेवेति । ननु—लोकेऽपि ईक्षतेः अतथाभूतमेव सर्वं कर्म दृष्टम्, निर्विशेषब्रह्मसाक्षात्कारविषयव्यतिरिक्तस्य सर्वस्याप्यनृतत्वात् - इति चेत्, सत्यम् । अयमत्राभिप्रायः—लोके घटादीनां शुक्तिरजतादिवैलक्षण्यं तावदुपेयते । तत् कस्य हेतोः । लौकिकबाधानवतारात् । परं तु तत्र वैदिकबाधावतारात् न ब्रह्मवत् परमार्थता उपेयते । ततश्च घटादौ लौकिकबाधानवतारात् यथा शुक्तिरजतवैलक्षण्यमुपगतं, एवं प्रकृते ईक्षणकर्मणि कस्यचिद्बाधस्यावतार इत्यत्र विशिष्य प्रमाणाभावात् अत्यन्ताबाध्यनिर्विशेषपरमात्मता उपेयते । हिरण्यगर्भपक्षे तु तस्य चैतन्यातिरिक्तांशसंवलिततया तदंशे बाधोऽङ्गीकर्तव्यः स्यात्, स माभूत् - इति ।

नचात्र जीवघनशब्देनेति । अभिध्यातव्यस्य 'स सामभिरुन्नीयते ब्रह्मलोकं' इतिवाक्येन व्यवहितत्वात् न तस्य एतस्मादिति सर्वनाम्ना परामर्शः । अपि तु ब्रह्मलोकमित्यत्र निर्दिष्ट उपसर्जनीभूतो [1]ब्रह्मपदार्थो हिरण्यगर्भ एव निर्दिश्यते । तस्मात्परः परमात्मैवेति तस्य पुरिशयपदेन प्रत्यग्रूपतोच्यते । तथा च प्रत्यभिज्ञाविच्छेदकाभावात् ध्यातव्यः परमात्मैव सिध्यतीति भावः । जीवलक्षण इत्यादौ जीवपदं हिरण्यगर्भरूपजीवपरम् । एवं च जीवघनात्परात्परमिति लिङ्गादपि ईक्षणीयः परमात्मेति सिध्यति ।

---

1. मु. 'ब्रह्मपदार्थः' नास्ति

घनो जीवघनः। सैन्धवखिल्यवत् यः परमात्मनो जीवरूपः खिल्यभाव उपाधिकृतः परश्च विषयेन्द्रियेभ्यः सोऽत्र जीवघन इति।

अपर आह—'स सामभिरुन्नीयते ब्रह्मलोकम्' इति अतीतानन्तरवाक्यनिर्दिष्टो यो ब्रह्मलोकः परश्च लोकान्तरेभ्यः सोऽत्र जीवघन इत्युच्यते। जीवानां हि सर्वेषां करणपरिवृतानां सर्वकरणात्मनि हिरण्यगर्भे ब्रह्मलोकनिवासिनि संघातोपपत्तेः भवति ब्रह्मलोको जीवघनः। तस्मात्परो यः पुरुषः परमात्मा ईक्षणकर्मभूतः स एव अभिध्यानेऽपि कर्मभूत इति गम्यते।

परंपुरुषमिति च विशेषणं परमात्मपरिग्रहे एव अवकल्पते। परो हि पुरुषः परमात्मैव भवति यस्मात्परं किंचिदन्यन्नास्ति, 'पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः' इति च श्रुत्यन्तरात्।

---

अपर आहेति। ब्रह्मलोकशब्देन प्रधानतया प्रस्तुतस्य ब्रह्मलोकस्यैव एतस्मादिति सर्वनाम्ना परामर्श उचित इति तदाशयः।

अत्रायमस्वरसः—[1]एतस्मादित्यादीनि विशेषणानि सर्वातिशयितवस्तुप्रतिपत्त्यर्थानि। [2]परात्परमितिलिङ्गात्। तथा च पुरुषपदोदितस्य चेतनस्य [3]ईक्षतिकर्मणः, ब्रह्मलोकपदेन न्यग्भूततयोपस्थितस्य परामर्शे एव [4]एतत्पदेन सर्वातिशयिताद्धिरण्यगर्भात् चेतनत्वेन सजातीयात् उत्कर्षप्रतिपादनपरता वाक्यस्य सिद्धा भवतीति, सर्वातिशायि ईक्षणकर्मेति लभ्यते। तथा च सर्वनाम्ना योग्यतया न्यग्भूतोऽपि हिरण्यगर्भ एव परामृश्यते। सर्वनाम्नां सन्निहितयोग्यपरामर्शकत्वस्यैव व्युत्पत्तिसिद्धत्वात्। लोकपरामर्शे तु जडत्वेन विजातीयात्तस्मादुत्कर्षसिद्धावपि न वाक्यशैली सर्वातिशयनिरूपणपरा समञ्जसा भवति - इति।

---

1. मु. एतस्मादिति विशेषणानि

2. **परात्परमितिलिङ्गादिति** परादिति कस्यचित् परत्वमुक्त्वा परमिति तदपेक्षया परत्वकीर्तनेन सर्वातिशयितवस्तुप्रतिपत्तिपरत्वं ज्ञायते इति भावः।

3. **ईक्षतिकर्मण इति** उत्कर्षप्रतिपादनपरता इत्यनेन सम्बद्ध्यते।

4. **एतत्पदेनेति** परामर्शे एव इत्यनेन सम्बद्ध्यते।

'परं चापरं च ब्रह्म यदोंकारः' इति च विभज्य अनन्तरं ओंकारेण परंपुरुषमभिध्यातव्यं ब्रुवन् परमेव ब्रह्म परं पुरुषं गमयति।

'यथा पादोदरः त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुच्यते' इति पाप्मविनिर्मोकफलवचनं परमात्मानमिहाभिध्यातव्यं सूचयति।

अथ यदुक्तं परमात्माभिध्यायिनो न देशपरिच्छिन्नं फलं युज्यत इति,

अत्रोच्यते—त्रिमात्रेणोंकारेणालम्बनेन परमात्मानमभिध्यायतः फलं ब्रह्मलोकप्राप्तिः क्रमेण च सम्यग्दर्शनोत्पत्तिः इति क्रममुक्त्यभिप्रायमेतद्भविष्यतीत्यदोषः ॥ १३ ॥

---

अथ यदुक्तमिति। इदमुपलक्षणम् - ब्रह्मोपासनापक्षे ब्रह्मलोकप्राप्तिफलकथनमपि व्यर्थम्, 'ये चामी अरण्ये श्रद्धां सत्यमुपासते' [बृ.उ.६-२-१५] इत्यादिवचनानुसारेण [1]परमात्मोपासकानां सर्वेषां अर्चिरादिमार्गेण ब्रह्मलोकप्राप्तेर्वक्ष्यमाणत्वात् इत्यपि द्रष्टव्यम्। त्रिमात्रेणोङ्कारेणेति। इदं हि ओङ्कारालम्बनब्रह्मणः प्रतीकोपासनम्। प्रतीकोपासकानां च विशिष्य वचनं विना न ब्रह्मलोकप्राप्तिरिति 'अप्रतीकालम्बनान्नयतीति बादरायणः' [ब्र. सू. ४-३-१५] इत्यत्र वक्ष्यते। अतो न वचनवैयर्थ्यम्।

क्रममुक्त्यभिप्रायमिति। तथा च उपक्रमे यत् परोपासनायाः परप्राप्तिरूपं फलं विभज्य दर्शितं, न तस्य विरोधः। ब्रह्मलोकप्राप्तेः क्रममुक्तिपर्यन्तायाः फलत्वेन प्रतिपादनात्।

नन्वेवं उपक्रमे अपरब्रह्मोपासनायाः यत् अपरब्रह्मप्राप्तिरूपं फलं निर्दिष्टं तत् कुत्र निरूपितम्?

---

1, मु. परब्रह्मात्मोपासकानां

उच्यते—'स यद्येकमात्रमभिध्यायीत' इत्यादिना यःपुनरेतमित्यतः प्राचीनेन वाक्येन, पृथिवीलोकदृष्ट्या एकमात्रं प्रणवं उपासीनस्य पृथिवीलोके प्रणवप्रथममात्राभिमानिनीभिः ऋग्देवताभिः तपआदिसम्पन्नमनुष्यत्वप्रापणं अन्तरिक्षलोकदृष्ट्या द्विमात्रं प्रणवमुपासीनस्य तद्द्वितीयमात्राभिमानिनीभिः यजुर्देवताभिः अन्तरिक्षात्मकसोमलोके विभूतिप्रापणं फलमुपपाद्यते, तत्र अपरब्रह्मोपासनया अपरब्रह्मप्राप्तिर्निरूपितेति न काचिदनुपपत्तिः।

ननु चात्र अपरब्रह्मणः हिरण्यगर्भस्य शरीरैकदेशयोः पृथिव्यन्तरिक्षयोः फलत्वमुपास्यत्वं च निर्दिश्यते, न त्वपरब्रह्मणः, अतः कथमुपक्रमोपपत्तिः—इति चेत्,

उच्यते—उपसंहारपर्यालोचनया उपक्रमगतोऽपि अपरब्रह्मशब्दः तावन्मात्रपर्यवसितो भविष्यति। गत्यन्तराभावात्। न हि तस्य यथाश्रुतत्वोपपत्तये उपक्रमध्यानेक्षणवाक्यगतानां 'परं ब्रह्म' 'परं पुरुषं' 'परं पुरिशयं पुरुषं' इति पदानां परत्वप्रत्यभिज्ञया तुल्यार्थता परित्यक्तुं शक्यते। अपि चेह परापरब्रह्मणोरुभयोरपि न प्रकरणितया उपासनं विवक्षितम्। उभयपरत्वे वाक्यभेदापत्तेः। तथा च एकवाक्यतानिर्वाहाय परोपासनानिरूपणपर एव सन्दर्भः कल्प्यते। 'ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणाः' इति परमोपक्रमात्, इहाप्युपक्रमोपसंहारयोः परब्रह्मविद्याया एव संस्पर्शात्। तत्र च किमपेक्षया परत्वं इत्यपेक्षायां अपरं ब्रह्म निर्दिष्टम्। तत्प्रसङ्गाच्च तच्छरीरैकदेशयोः पृथिव्यन्तरिक्षलोकयोः अकृत्स्ने प्रणवे उपासने दर्शिते इति वक्तव्यम्। तथा च अप्रधानवाक्यार्थस्य यथाकथञ्चिन्नयने सत्यपि न तदनुसारेण प्रधानवाक्यस्वारस्यभङ्गो न्याय्यः—इति मनसि निधायाह—अदोष इति।

अत्र ईक्षतिकर्मत्वस्य हेतोः ब्रह्मलोकप्राप्तिरूपापरब्रह्मलिङ्गाभिभूतत्वात् अस्पष्टता ॥ १३ ॥

इति ईक्षतिकर्माधिकरणम् ॥ ४ ॥

### ५ दहराधिकरणम्

## दहर उत्तरेभ्यः ॥ १४ ॥

अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' (छा. उ. ८।१।१) इत्यादिवाक्यं समाम्नायते।

तत्र योऽयं दहरे हृदयपुण्डरीके दहर आकाशः श्रुतः स किं भूताकाशः अथ विज्ञानात्मा अथवा परमात्मेति संशय्यते। कुतः संशयः? आकाशब्रह्मपुरशब्दाभ्याम्। आकाशशब्दो ह्ययं भूताकाशे परस्मिंश्च प्रयुज्यमानो दृश्यते। तत्र किं भूताकाश एव दहरः स्यात्

---

**तद्वावविजिज्ञासितव्यमित्यादीति।** आदिपदेन 'तं चेत् ब्रूयुः यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति, स ब्रूयात् यावान् वा अयमाकाशः तावानेषोऽन्तर्हृदय आकाशः, उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितमिति, तं चेत् ब्रूयुः अस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितं सर्वाणि च भूतानि सर्वे च कामा यदैतत् जरा वाऽऽप्नोति प्रध्वंसते वा किं ततोऽतिशिष्यत इति, स ब्रूयात् नास्य जरयैतज्जीर्यति न वधेनास्य हन्यते एतत् सत्यं ब्रह्मपुरं अस्मिन् कामास्समाहिताः, एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामस्सत्यसङ्कल्पः' इत्यादिकं संगृह्यते।

पूर्वं यथा प्रतीकोपासनाया अपि वचनबलेन ब्रह्मलोकप्राप्तिद्वारा मोक्षफलकत्वं उपगतम्, एवमिहापि पूर्वपक्षे जीवस्य भूताकाशस्य वा उपास्यत्वेऽपि वचनबलात् सत्यसङ्कल्पादिप्राप्तिर्भविष्यतीति सङ्गतिर्द्रष्टव्या।

**आकाशब्रह्मपुरशब्दाभ्यामिति।** अत्र आकाशपदं भूताकाशकोटेरुत्थापकम्, आकाशपदस्य तत्र रूढत्वात्। ब्रह्मपुरशब्दो जीवकोटेरुत्थापकः। ब्रह्मकोटेस्तु औपसंहारिकं आकाशोपमितत्वादि इति द्रष्टव्यम्।

किंवा पर इति संशयः। तथा, ब्रह्मपुरमिति किं जीवोऽत्र ब्रह्मनामा तस्येदं पुरं शरीरं ब्रह्मपुरं, अथवा परस्यैव ब्रह्मणः पुरं ब्रह्मपुरमिति। तत्र जीवस्य परस्य वा अन्यतरस्य पुरस्वामिनो दहराकाशत्वे संशयः।

तत्र आकाशशब्दस्य भूताकाशे रूढत्वात् भूताकाश एव दहर-(शब्द) इति प्राप्तम्। तस्य च दहरायतनापेक्षया दहरत्वम्। 'यावान् वा अयमाकाशः तावानेषोऽन्तर्हृदय आकाशः' इति च बाह्याभ्यन्तर-

---

ननु - ब्रह्मपुरशब्दो ब्रह्मपदसमभिव्याहारात् ब्रह्मकोटेरुत्थापकः, स कथं जीवकोटेरुत्थापको भवेत् - इत्याशङ्क्य, तस्यापि वक्ष्यमाणया रीत्या जीव एव स्वारस्यमिति मनसि निधाय तस्य ब्रह्मकोट्यसाधारण्यं प्रत्याचष्टे—**तथा ब्रह्मपुरमितीति**।

**तत्राकाशशब्दस्येति**। ननु - आकाशस्तल्लिङ्गादित्यत्र अनन्यथासिद्ध-लिङ्गानुसारेण श्रुतेरन्यथानयनमुक्तम्। पुनः कथमिहाशङ्का। इहाप्युपसंहारे परमात्मलिङ्गानि सन्ति। उच्यते—तत्र हि न उपसंहारगतपरमात्मलिङ्गमात्रेण श्रुतिबाधो निरूपितः, अपि तु, अनन्तत्वलिङ्गस्य उपक्रमोपसंहारसंस्पर्शितया प्रबलस्य अनुग्रहाय, उपक्षिप्तान्तवत्त्वदोषस्य अन्यथाव्याख्याने परिहारालाभाच्च, श्रुतिभङ्ग आश्रितः। नेह तथाभूतं किञ्चिन्नियामकमस्तीति पूर्वपक्षिणोऽभिप्रायः। यथा च उपक्रमविरोधोऽपि दहरस्य भूताकाशत्वे नास्ति तथा 'न चात्र दहराकाशस्यान्वेष्टव्यत्वं' इत्यत्र स्पष्टं भविष्यति। तथा च आकाशश्रुति-रभ्यस्ता यथाश्रुतैवोपेया - इत्याह—**भूताकाश एव दहर इति**।

ननु-अत्र 'यावान् वा अयमाकाशः' इत्यादिवाक्ये बाह्याकाशो यत्परिमाणः तत्परिमाणो हृदयाकाश इत्यवगम्यते, न तु बाह्यान्तराकाशयोरुपमानोपमेय-भावोऽगम्यते, यस्योपपादनं पूर्वपक्षे क्रियेत। यदि तु—बाह्यान्तराकाशयोः परिमाणैक्यं न सम्भवति, आन्तरस्याल्पत्वात् बाह्यस्य महत्त्वात्। अतो यावांस्तावानित्यत्र वतुप्प्रकृतिभूतयोः यत्तत्पदयोः सादृश्यपरतामुपेत्य यादृश-परिमाणो बाह्यः तादृशपरिमाण आन्तर इति विवक्षितम्। तथा च पूर्वपक्षे भूताकाशविवक्षायां तद्गतपरिमाणस्यैकत्वात् कथं तेनैव परिमाणेन तस्य

उपमेयतेत्याशङ्कायां उपाधिभेदेन आकाशभेदकल्पनया तत्परिमाणयोरपि भेदारोपात् उपमानोपमेयभावोपपत्तिः—इति पूर्वपक्षे प्रतिपाद्यते ; तदाऽप्यनुपपत्तिः । कल्पितभेदस्य आन्तराकाशस्य बाह्याकाशपरिमाणसमानपरिमाणत्वानुपपत्तेः । 'द्यावापृथिव्यादि च तस्मिन् अन्तः समाहितं' इत्यप्यनुपपन्नमेव । हृदय-पुण्डरीकान्तर्वर्तिनि अल्पे तेषां समाधानानुपपत्तेः । 'अवकाशात्मना एकत्वात्' इत्यप्यसङ्गतम् । भेदकल्पनापूर्वकं हृदयान्तर्वर्तिन्येवाकाशे द्यावापृथिव्यादि-समाधानस्य प्रतिपिपादयिषितत्वात् । तत्र अवकाशात्मना एकत्वं कथमुपपादकम् ?

उच्यते—अन्तर्हृदये भूताकाशस्य व्यवहारगत्या अल्पत्वेऽपि प्रतिभासतो महत्त्वं सम्भवत्येव । व्यवहारसिद्धद्यावापृथिव्यादिसमाधानानाधारत्वेऽपि प्रातिभा-सिकविशेषाणां तेषां समाधानं तत्रोपपद्यते । तथा हि—द्यावापृथिव्यादयो यथा परमे-श्वरसृष्टाः सर्वसाधारणाः तथा उपासकभोगोपयोगिनः तन्मनसा सृष्टा इहैवाम्नायन्ते 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति' इत्यादिना 'यंयमन्तमभिकामो भवति यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति' इत्यन्तेन । ते च द्विविधाः । यदा उपासक इच्छया स्थूलशरीरं समालिङ्गति तद्दशानुभाव्याः, इच्छयैव यदा स्थूलशरीरं विहाय सूक्ष्मशरीरमात्रावशेषो भवति [1]तदा तद्दशानुभाव्याश्च । [2]तत्र स्थूलशरीरं गृहीत्वा यदा भोगं सम्पादयति, तदा ते भोग्याः पदार्थाः अस्मदादिजाग्रत्पदार्थवत् स्थिरभोगहेतवः सर्वेन्द्रियग्राह्याः । अशरीरावस्थायामनुभाव्यास्तु मानसा एव, स्वाप्नवत् । उपासकेन अशरीरावस्था-यामनुभाव्यान् पदार्थान् विषयीकृत्यैव[3] इयं श्रुतिः प्रवृत्ता—'मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके' [छा. उ. ८-१२-५] इति । एतच्च सर्वं 'तन्वभावे सन्ध्यवदुपपत्तेः' 'भावे जाग्रद्वत्' इति सूत्राभ्यां फलाध्याये निरूपयिष्यति । इह द्यावापृथिव्यादयो ब्राह्मलौकिका एव ग्राह्याः, तत्क्रतुन्यायात् । तेष्वपि ये अशरीरावस्थायामनुभाव्याः तेषामेव ग्रहणं न्याय्यम् । 'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते' इति हृदयाकाशान्तर्गततयैव समाधानवचनात् । न हि बाह्यानां अन्तरेव समाधानं ब्रह्मवादिनाऽपि शक्यं समर्थयितुम् । तदुपयोगितया च, स्वप्ने सूक्ष्मनाडीमध्यगतस्यापि जीवस्य यथा रथहयाद्यवस्थानोपयोगिवैपुल्यप्रति-

1. मु. तद्देशानुभाव्याश्च　2. मु. ततः　3. मु. 'एव' नास्ति

भाविकृतभेदस्य उपमानोपमेयभावः। द्यावापृथिव्यादि च तस्मिन्नन्तः समाहितं, अवकाशात्मना (आकाशस्य) एकत्वात्।

---

भासात् प्रातिभासिकं [1]तत् अङ्गीक्रियते, तथा ब्राह्मलौकिकमानसपदार्थावस्थान-योग्यं मानसं वैपुल्यं सूक्ष्मेऽपि [2]हृदये सम्भवत्येव।

नन्वेवं - तंचेद्ब्रूयुरित्यादिना 'हृदयपुण्डरीकमेव तावदल्पं तन्मध्ये विद्यमानः आकाशः ततोऽप्यल्पः तत्र किं वर्तते यदन्वेष्टव्यं भवेत्' इत्याक्षिप्ते, 'मानसं स्वाप्नवैपुल्यवत् तत्र अल्पत्वाविरोधि वर्तत एव वैपुल्यं' इति स्पष्टं परिहारं अनुक्त्वा किमिति 'यावान् वा अयमाकाशः' इत्यादिना बाह्याकाशपरिमाणता दहराकाशस्य प्रतिपाद्यते - इति चेत्,

अनयाऽप्युक्तिभङ्ग्या स एवार्थो विवक्षितः। परं तु स्वप्नदृष्टान्तेन तस्मिन्नर्थे प्रतिपाद्यमाने स्वप्नो यथाऽसन् एवं प्रकृतोपासनाभोगोऽप्यसन्निति मन्दमतीनामविश्वासस्स्यात्, स माभूदिति प्रकारान्तरेण कथनम्। न ह्यन्यथा 'अन्तर्हृदय आकाशः' इति वाक्यशेषः समञ्जसो भवति।

एतत्सर्वमभिप्रेत्योक्तं—अवकाशात्मनैकत्वादिति। उक्तगत्या बाह्या-भ्यन्तराकाशयोः अवकाश एकः-तुल्यः इति यावत्। नन्वेवमपि एष आत्मापहतपाप्मेत्यादिवाक्यार्थस्य कथं दहराकाशेऽन्वयः? न कथमपि। न हि एषआत्मापहतपाप्मेत्यत्र एषशब्दो दहराकाशपरामर्शकः। अपि तु सर्वंतदस्मिन् समाहितमिति प्रकृतं सर्वपदवाच्यं परामृशति, [3]समानविभक्तिनिर्देशात्। नपुंसकलिङ्गावगतस्यापि एष इति परामर्शस्तु आत्मपदसामानाधिकरण्यात्।

ननु-'नास्य जरया एतज्जीर्यति न वधेनास्य हन्यते एतत्सत्यं ब्रह्मपुरं अस्मिन् कामास्समाहिताः' इति पूर्ववाक्यगतैः इदमेतत्पदैः आकाशस्य परामर्शे-

---

1. तत्—नाडीमध्यस्य वैपुल्यम्।

2. मु. 'हृदये' नास्ति

3. समानेति 'सर्वं' इति 'एषः' इति पदयोः प्रथमान्तत्वेन समानविभक्तिकत्वं 'अस्मिन्' इत्यस्य तु न तथात्वं इत्यर्थः।

सति[1] अत्रैव कथं एषइतिपदं आकाशान्तर्वर्तिसर्ववस्तुपरम्। तत्र हि इदमेतत्पदाना-माकाशपरामर्शकतैव, न तु तदन्तर्वर्तिपरामर्शकता। 'अस्मिन् कामास्समाहिता:' इत्यत्र कामपदं हि ब्राह्मलौकिकपित्रादिपरम्। 'यो यो ह्यस्येत: प्रैति न तमिह दर्शनाय लभते अथ ये चास्येह जीवा ये च प्रेता: यच्चान्यदिच्छन्न लभते सर्वं तत् अत्र गत्वा विन्दते अत्र ह्यस्यैते सत्या: कामा:' इत्यत्र, ब्रह्मलोकं गतस्य इह लोके ये जीवन्तो वर्तन्ते ये चातीता: ये च एतदिच्छाविषया भविष्यन्त: पित्रादय: तान् सर्वानपि सङ्कल्पानुसारेण लभत इति उपासकप्राप्यान् पित्रादीन् प्रस्तुत्य तेषु कामपदप्रयोगात्। ते च प्राक् आकाशान्तर्गततया व्युत्पादिता:— 'यच्चेहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्' इति। तथा च तदेवेह कामाधारत्वेन प्रत्यभिज्ञायते। अत: तत्समानविषयाणां नास्यजरयैतज्जीर्यतीत्यादि-वाक्यगतानामपि सर्वनाम्नां आकाशविषयत्वे एषआत्मेत्याकाशपरामर्श एव भविष्यति। अत: कथं दहराकाशो भूताकाश: स्यात्- इति चेत्,

उच्यते—आक्षेपवाक्ये ह्याकाशो [2]न स्पृष्ट:। 'ब्रह्मपुराख्यशरीरजरा-प्रध्वंसाभ्यां तदन्तर्वर्ति किमपि नावशिष्यते' इत्येतावदेवाक्षिप्तम्। उत्तरवाक्येऽपि नास्यजरयैतज्जीर्यतीत्युच्यते। अत्र च एतत्पदेन द्यावपृथिव्यादिकमेव विवक्षितम्। आधारजराप्रध्वंसाभ्यां आहितम्मूर्तमेव[3] ध्वस्तं भवति न त्वमूर्तम्। तथा च आकाशविषयत्वे अप्रसक्तप्रतिषेधताऽपि[4] स्यात्। अत: प्रश्नोत्तरवाक्यपर्या-लोचनया नास्यजरयैतज्जीर्यतीत्यादौ 'शरीरजराप्रध्वंसाभ्यां तदन्तर्वर्ति द्यावा-पृथिव्यादिकं न जराप्रध्वंसशालि भवति' इत्यर्थो विवक्षित:। द्यावापृथिव्यादे: लिङ्गान्तरेण वचनान्तरेण च प्रस्तुतत्वेऽपि सर्वतदस्मिन्समाहितमित्यनेन[5] सङ्ग्रहेण, नपुंसकैकवचनेनापि तेषां प्रस्तुतत्वमस्ति। एतत्सत्यंब्रह्मपुरमित्यनेन च तस्यैव द्यावापृथिव्यादे: ब्रह्मता बोध्यते। यद्यपि द्यावापृथिव्यादे: न साक्षाद्ब्रह्मता सम्भवति, तथाऽपि तत्परामर्शकस्य एतत्पदस्य ब्रह्मसामानाधि-

---

1. मु. तत्रैव
2. मु. न पृष्ट:
3. मु. 'एव' नास्ति
4. मु. 'अपि' नास्ति
5. मु. 'अनेन' नास्ति

करण्यात् द्यावापृथिव्यादिशब्दास्तदवच्छिन्नब्रह्मपरा इत्युपेयते । न च - ब्रह्मपुर-शब्दोऽत्र श्रूयते, न ब्रह्मशब्दमात्रम्, स च प्राक् देहे प्रयुक्तः, अतः कथं ब्रह्मसामानाधिकरण्यं - इति वाच्यम् । ब्रह्मणःपुरमिति षष्ठीसमासः प्राचीनो ब्रह्मपुरशब्दः । अयं तु ब्रह्मपुरमिति कर्मधारयो वा पदद्वयं वा । सत्यपद-सामानाधिकरण्यात् । सत्यपदं हि ब्रह्मण्येव प्रसिद्धम् । विशिष्य च अत्रैव प्रकरणे 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति' इत्याम्नानाच्च । तस्मात् पूर्ववाक्ये [1]प्रधानतयाप्रस्तुतद्यावापृथिव्यादिपरामर्शकैतत्पदानुसारेण[2] 'अस्मिन् कामास्समाहिताः' इति एका प्रत्यभिज्ञा अन्यथा नेया । अस्मिन् - द्यावापृथि-व्याद्यवच्छिन्ने ब्रह्मणि कामाः - सृष्ट्यनुकूला इच्छाः - समाहिता इत्यर्थः । तथा च एषआत्माऽपहतपाप्मेत्यादिकं न आकाशान्वयि । एवं उपक्रमे ब्रह्मपुरपदेन ब्रह्मण उपास्यत्वावगमोऽपि न विरुध्यते। उपक्रमगतो ब्रह्मशब्दो हि, चैत्रान्वेषिणं प्रति मैत्रसद्मनि चैत्रस्तिष्ठतीत्यत्र मैत्रशब्दो यथा गृहान्तरव्यावर्तकः नैवं पुरान्तर-व्यावर्तकः । सर्वस्यापि शरीरस्य ब्रह्मपुरत्वात् । तथा च ब्रह्मपुरशब्देन यत् ब्रह्मण उपास्यत्वं [3]अवगतं तत् दहराकाशान्तर्वर्तिद्यावापृथिव्याद्यवच्छिन्नब्रह्मणः उपास्यत्वमादाय निर्वृणोति । तस्मात् दहराकाशो भूताकाशः ।

अथापि दहराकाश एवोपास्यः तत्रैव एषआत्माऽपहतपाप्मेत्यादि-[4]वाक्यार्थान्वयः, तथाऽपि नासौ ब्रह्म, अपि तु जीवः । द्यावापृथिव्यादिसमाधा-नाधारत्वं पूर्ववदेवोपपादनीयम् । जीवे मानसपदार्थोपादानतया स्वाप्नगजादिवत् मानसद्यावापृथिव्यादिसमाधानाधारत्वोपपत्तेः । 'यावान् वा' इत्यादिवाक्य-प्रतिपाद्यं वैपुल्यं तु अविद्यावच्छिन्नस्य तस्य उपपद्यते । अथ वा यावान् वा इति वाक्यं न महत्त्वं प्रतिपादयति, अपि तु अल्पत्वमेव । अत्र हि अयमिति-शब्दो न बाह्याकाशपरामर्शकः, अपि तु दहराकाशपरामर्शक एव । तस्यैव पूर्ववाक्ये शब्देन प्रस्तुतत्वात् । तथा च 'यावानयं दहराकाशः तावानेवैष

---

1. **प्रधानतयाप्रस्तुतेति** प्रथमान्तपदोपस्थितत्वात् इतराविशेषणतया प्रतीतेत्यर्थः ।
2. **एतत्पदानुसारेण** - एतत्पदद्वयानुसारेण ।
3. मु. उपक्षिप्त
4. मु. वाक्यस्यान्वयः

अथवा जीवो दहर इति प्राप्तम्, ब्रह्मपुरशब्दात्। जीवस्य हीदं पुरं सत् शरीरं ब्रह्मपुरमित्युच्यते। तस्य स्वकर्मणा उपार्जितत्वात्। भक्त्या च तस्य ब्रह्मशब्दवाच्यत्वम्। न हि परस्य ब्रह्मणः शरीरेण स्वस्वामिभावः संबन्धोऽस्ति। तत्र पुरस्वामिनः पुरैकदेशेऽवस्थानं दृष्टं यथा राज्ञः। मनउपाधिकश्च जीवः, मनश्च प्रायेण हृदये प्रतिष्ठितं, इत्यतो जीवस्यैवेदं हृदयेऽन्तरवस्थानं स्यात्। दहरत्वमपि तस्यैव आराग्रोपमितत्वादवकल्पते। आकाशोपमितत्वादि च ब्रह्माभेदविवक्षया भविष्यति।

---

दहराकाशः, नास्य परिमाणमन्येन तुलयितुं शक्यं' इति 'रामरावणयोर्युद्धं रामरावणयोरिव' इत्यादिवदुपपद्यते। अनेन च 'दहराकाशोऽतिसूक्ष्मः, नास्य सौक्ष्म्येऽन्यदुपमानं वर्तते' इति प्रतिपादिते दहराकाशो जीव इति पर्यवस्यति। 'आकाशोपमितत्वादि च' इति भाष्यं अस्यापि प्रकारस्य उपलक्षणम्। अपहत-पाप्मत्वादिकं च विशुद्धजीवस्वरूपस्य उपपद्यते। पापादीनामन्तःकरणोपाधि-कत्वात्। इहैव च नास्यजरयैतज्जीर्यतीत्यादिना शरीरदोषाणां तत्र निरासात्। अथवा अपहतपाप्मत्वं सत्यकामत्वसत्यसङ्कल्पत्वाभ्यां सह ब्राह्मलौकिकमेव ग्राह्यम्। अतो न तदनुपपत्तिः।

ननु - एवं उत्तरसन्दर्भो जीवपरतया नीयेत, यदि दहराकाशो जीव इति किञ्चित् प्रमाणमवगमयेत्। आकाशशब्दो हि तत्र न रूढः। नापि ब्रह्मवत् निरूढः। न च उपक्रमे ब्रह्मपुरपदस्य षष्ठीसमासगर्भस्य स्वस्वामिभाव-पर्यवसितस्य जीव एव स्वारस्यमिति तदनुसारेण आकाशपदं जीवपरमिति वाच्यम्। वाक्यान्तरगतस्याकाशपदस्य वाक्यान्तरगतषष्ठ्यर्थस्वारस्यमात्रेण जीव-परतायाः कल्पयितुमनुचितत्वात्। अपि तु ब्रह्मश्रुतिस्वारस्यानुसारेण आकाश-पदनिरूढ्यनुसारेण च ब्रह्मैव प्रकृते विवक्षणीयम् - इति चेत्।

उच्यते—इह हि वाक्ये दहरत्वमाम्नायते। तत् यथाश्रुतं स्वाभाविकमेव वक्तव्यम्। हृदयपुण्डरीकान्तर्गततया अर्थसिद्धस्यापि पुनराम्नानात्, उत्तरत्र यावान् वा इति वाक्येन तस्यैव दृढीकृतत्वाच्च। अतः स्वाभाविकेन दहरत्वलिङ्गेन

न चात्र दहराकाशस्य अन्वेष्टव्यत्वं विजिज्ञासितव्यत्वं च श्रूयते। 'तस्मिन् यदन्तः' इति परविशेषणत्वेनोपादानात् - इति।

अत उत्तरं ब्रूमः—परमेश्वर एवात्र दहराकाशो भवितुमर्हति, न भूताकाशो जीवो वा। कस्मात्? उत्तरेभ्यः-वाक्यशेषगतेभ्यो हेतुभ्यः।

तथाहि—अन्वेष्टव्यतया [अभि] [वि]हितस्य दहरस्याकाशस्य 'तं चेद्ब्रूयुः' इत्युपक्रम्य 'किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यम्' इत्येवमाक्षेपपूर्वकं प्रतिसमाधानवचनं भवति 'स ब्रूयात् यावान् वा अयमाकाशः तावानेषोऽन्तर्हृदय आकाशः उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते' (छा. उ. ८।१।३) इत्यादि। तत्र पुण्डरीकदहरत्वेनप्राप्तदहरत्वस्याकाशस्य प्रसिद्धाकाशौपम्येन दहरत्वं निवर्तयन् भूताकाशत्वं दहरस्याकाशस्य निवर्तयतीति गम्यते।

यद्यप्याकाशशब्दो भूताकाशे रूढः, तथापि तेनैव तस्योपमा नोपपद्यत इति भूताकाशशङ्का निवर्तिता भवति।

नन्वेकस्याप्याकाशस्य बाह्याभ्यन्तरत्वकल्पितेन भेदेन उप-

---

जीवे निर्णीते उक्तगत्या सर्वं जीवपरतयैव व्याख्येयम्। उपक्रमानुसारेण उपसंहारगतस्य ब्रह्मपदस्यापि तत्रैव वृत्तिरिति न ब्रह्मपुरपदादपि ब्रह्मनिर्णयः। इदमेव [1]पूर्वपक्षबीजं सूचयितुं आकाश इति धर्मिनिर्देशमकृत्वा सूत्रे दहर इति धर्मिनिर्देशः। [2]प्रकारान्तरेण जीवपूर्वपक्षस्तु इतरपरामर्शादित्यत्र भविष्यति।

एवं दहराकाशस्योपास्यत्वमुपेत्य जीवपूर्वपक्षो दर्शितः अथवेत्यादिना। इदानीं [3]तं परित्यजति—न चात्र दहराकाशस्येति। तथा च पूर्वोक्तगत्या दहराकाशो भूताकाश एव, तदन्तर्वर्तिद्यावापृथिव्याद्यवच्छिन्नं ब्रह्मैवोपास्यं इति भावः। तं चेद्ब्रूयुरिति। तं - उपाध्यायं शिष्याश्चेदाक्षेपं कुर्युः तदा स उपाध्यायो ब्रूयादित्यर्थः।

---

1. मु. पूर्वपक्षलिङ्गं
2. मु. 'प्रकारान्तरेण' नास्ति
3. आ. तं पक्षं

**मानोपमेयभावः संभवतीत्युक्तम्। नैवं संभवति। अगतिका हीयं गतिः, यत् काल्पनिकभेदाश्रयणम्। अपि च कल्पयित्वा(ऽपि) भेदं उपमानोपमेयभावं वर्णयतः परिच्छिन्नत्वादभ्यन्तराकाशस्य न बाह्याकाशपरिमाणत्वमुपपद्येत।**

**ननु परमेश्वरस्यापि 'ज्यायानाकाशात्' (शत॰ ब्रा॰ १०।६।३।२) इति श्रुत्यन्तरात् नैव आकाशपरिमाणत्वमुपपद्यते। नैष दोषः। पुण्डरीकवेष्टनप्राप्तदहरत्वनिवृत्तिपरत्वाद्वाक्यस्य न तावत्त्वप्रतिपादनपरत्वम्। उभयप्रतिपादने हि वाक्यं भिद्येत।**

**न च कल्पितभेदे पुण्डरीकवेष्टिते आकाशैकदेशे द्यावापृथिव्यादीनां अन्तः समाधानमुपपद्यते।**

---

**पुण्डरीकवेष्टनप्राप्तदहरत्वनिवृत्तिपरत्वादिति।** न च तथासति लक्षणा स्यादिति वाच्यम्। न हि शब्दगत्या न्यूनत्वाभावः प्रतिपाद्यते। अपि तु आकाशतुल्यपरिमाणता शब्दगत्या प्रतिपाद्यते। तच्च परममहति ब्रह्मणि सम्भवत्येव। तत्फलं तु न्यूनताव्यवच्छेदः, न त्वाधिक्यव्यवच्छेदोऽपि। ननु उभयव्यवच्छेदोऽपि फलमस्तु। नेत्याह—**उभयप्रतिपादन इति।** फलगत्येतिशेषः। **वाक्यं भिद्येतेति।** गौरवलक्षणो वाक्यभेद आपद्येतेत्यर्थः।

**नचेति।** ननु मानसानां द्यावापृथिव्यादीनां हृदयपुण्डरीकाकाशजीवयोः समाधानमुपपद्यत इत्युक्तमिति चेत्, न - द्यावापृथिव्यादिपदानां मानसमात्रविषयतया सङ्कोचे प्रमाणाभावात्। न च तत्क्रतुन्याय एव सङ्कोचक इति वाच्यम्। तत्क्रतुन्यायस्य हि 'प्राप्यं अवश्यं ध्येयं' इत्येतावति पर्यवसानम्। न तु प्राप्यमेव ध्येयम्। न च - तत्क्रतुन्यायस्य निरङ्कुशत्वमेव स्वीकर्तव्यम्, तदनुसारेण च ध्येयगुणा एव संकुचद्वृत्तयो व्याख्येयाः - इति [1]वाच्यम्। तासुतासूपासनासु हि पारमेश्वरा धर्मा बहवो निरूप्यन्ते। न च तेषां सर्वेषां [2]पदानां एकेन तत्क्रतुन्यायेन लक्षणोचिता। परं तु उत्सर्गभूतस्य तत्क्रतुन्याय-

---

1. मु. युक्तम्
2. मु. 'पदानां' नास्ति

'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः' इति च आत्मत्वापहतपाप्मत्वादयश्च गुणा न भूताकाशे संभवन्ति ।

यद्यप्यात्मशब्दो जीवे संभवति, तथापि इतरेभ्यः कारणेभ्यो

---

स्यैव सङ्कोचः तेषु गुणेष्वाश्रीयते । अतोऽत्र द्यावापृथिव्यादीनां साधारणानामुपासकासाधारणानां च समाधानाधारत्वं ध्येयम् । प्राप्यं तूपासकेन ध्येयैकदेशभूतं मानसद्यावापृथिव्यादिसमाधानाधारत्वम् । [1]तदुपपत्तये च प्रसिद्धमेव महत्त्वं यावान्वा इति वाक्येन प्रतिपाद्यं, न तु मानसम् । [2]तस्मिन् प्रसिद्धद्यावापृथिव्यादि समाधानानुपपत्तेः, अप्रसिद्धस्य शब्दार्थत्वे क्लेशापाताच्च ।

न च ब्रह्मण्यपि हृदयपुण्डरीकावच्छिन्ने प्रसिद्धाकाशौपम्यद्यावापृथिव्यादिसमाधाने न सम्भवत इति वाच्यम् । न हि हृदयपुण्डरीकावच्छेदेनैव तदुभयमुपपाद्यते, अपि तु '[3]यः आकाशवद्विभुः द्यावापृथिव्याद्याश्रयश्च सः हृदयपुण्डरीके ध्येयः' इति । न च तथासति 'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते' इति हृदयपुण्डरीकमध्यगत एव परमात्मनि द्यावापृथिव्यादिसमाधानवचनानुपपत्तिरिति वाच्यम् । न ह्यनेन वाक्येन हृदयपुण्डरीकावच्छेदेनैव द्यावापृथिव्यादिकमस्तीति प्रतिपाद्यते । अपि तु, यो हृदयपुण्डरीकगततया प्रतिपादित आत्मा तस्य व्यापकतया सर्वं तदन्तर्गतमेव, न त्वात्मनो बहिर्भूतं किञ्चित् - इत्येतावत् प्रतिपाद्यते । व्यापकस्यापि हृदयपुण्डरीकान्तर्गतिस्तु न साकल्येन तत्र वर्तनम्, अपि तु तत्संसृष्टतामात्रम् । न चेयं गतिः भूताकाशवादिना वक्तुं शक्यते । उपमानोपमेयभावसिद्ध्यर्थं हृदयपुण्डरीकावच्छिन्नस्यैव आकाशपदेन विवक्षणीयतया तत्र प्रसिद्धाकाशौपम्यद्यावापृथिव्यादिसमाधानवचनस्य असङ्गतत्वात् ।

एष आत्मेति । न च 'आक्षेपसमाधानवाक्ययोराकाशस्यास्पृष्टत्वेन

---

1. तदुपपत्तये इति व्यवहितोक्तमपि बुद्धिस्थं ध्येयं तच्छब्दार्थः ।
2. तस्मिन्—मानसमहत्त्ववति ।
3, मु. 'यः' नास्ति

तदन्तर्वर्तिद्यावापृथिव्यादिकमेव आत्मत्वादिना प्रतिपादनीयं' इति पूर्वपक्षोक्तं समञ्जसम्। 'तं चेत् ब्रूयुः अस्मिंश्चेदिदं ब्रह्मपुरे' इत्याक्षेपवाक्ये आकाशो न स्पृष्ट इति कथं वक्तुं शक्यम्। 'यावान् वा अयमाकाशः' इति वाक्ये द्यावापृथिव्यादिकं ब्रह्मपुरान्तर्वर्तिहृदयपुण्डरीकाकाशे हि समाहितमुक्तं, न तु ब्रह्मपुरे एव। तत्र विवक्षाविशेषं विना 'तं चेत् ब्रूयुरस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितं सर्वाणि च भूतानि सर्वे च कामाः' इत्याक्षेपवाक्ये आकाशानुवादमकृत्वा ब्रह्मपुरमात्रग्रहणं नोपपद्यते। 'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते' इत्यत्र योऽर्थ उक्तः, स एवार्थः 'अस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितं सर्वाणि च भूतानि सर्वे च कामाः' इत्यत्राक्षिप्तः, स एव चार्थः 'अस्मिन् कामास्समाहिताः' इत्यत्र उपपादनपूर्वकमुपसंहृत इति प्रतीयते, 'नास्य जरयैतज्जीर्यति' इत्यादि च तदुपपादकमिति च। ततश्च 'नास्य जरयैतज्जीर्यति न वधेनास्य हन्यते एतत् सत्यं ब्रह्मपुरं' इति परिहारवाक्यपर्यालोचनया आक्षेपवाक्ये अयं विवक्षाविशेष उन्नीयते—ब्रह्मपुरान्तर्गत आकाशे समाधानोक्त्या ब्रह्मपुर एव समाधानमुक्तम्। तत्र ब्रह्मपुरान्तर्गत आकाशो यदि ब्रह्मपुरजराप्रध्वंसानुसारिजराप्रध्वंसशीलः, तदा राजाधीनैश्वर्यामात्यभृत्यो यथा राजभृत्यः एवं ब्रह्मपुरमध्यगताकाशनिहितमपि ब्रह्मपुरे एव निहितम् - इत्येकोऽभिप्रायः। घटादिषु दध्यादिस्थापनानुकूलावकाशरूपे आकाशे विद्यमानं दध्यादि घटादावेव यथा निहितं भवति, एवं ब्रह्मपुरान्तर्गतावकाशरूपे आकाशे विद्यमानमपि द्यावापृथिव्यादि ब्रह्मपुरे निहितम् - इत्यपरोऽभिप्रायः। तथा च ब्रह्मपुरजराप्रध्वंसाभ्यां तदन्तर्गताकाशनिहितस्य द्यावापृथिव्यादेः स्थितिर्न लभ्यते। एवमुभयाभिप्राये आक्षेपे आद्यस्योत्तरं 'नास्य जरयैतज्जीर्यति न वधेनास्य हन्यते' इति। तथा च द्यावापृथिव्यादिसमाधानाधारस्याकाशस्य ब्रह्मपुरजराप्रध्वंसानुसारिजराप्रध्वंसशालित्वाभावात् ब्रह्मपुरे जीर्णे नष्टेऽपि द्यावापृथिव्यादिसमाधानाधारस्य आकाशस्य यथापूर्वं समवस्थितत्वात् द्यावापृथिव्यादिस्थितौ न काचिदनुपपत्तिः। द्वितीयाभिप्रायस्य च इदमुत्तरं एतत्सत्यंब्रह्मपुरमिति। नायमाकाशो घटान्तर्गताकाशवत् अवकाशमात्रम्, अपि तु स्वतन्त्राधारो ब्रह्मरूपः। तद्धि पुरं - पुरवत् सर्वस्य द्यावापृथिव्यादेर्भोगस्थानस्य अग्न्यादेर्भोगोपकरणस्य

पित्रादेर्भोग्यस्य च आश्रयः। अतः 'यथा घटादौ नष्टे दध्यादि नावतिष्ठते एवं ब्रह्मपुरे जीर्णे नष्टे वा द्यावापृथिव्यादिकं नावतिष्ठते' इति नाशङ्कनीयम्। तदाधारस्य ब्रह्मरूपस्य पृथगेव विद्यमानत्वात्। एवमाक्षेपसमाधानवाक्ययोराञ्जस्याय उत्तरवाक्यगतैतत्पदयोराकाशविषयत्वं अवश्यं वक्तव्यम्। यदि तु नास्यजरयैत्याद्युत्तरवाक्यगतैतत्पदयोः द्यावापृथिव्यादिविषयत्वमेवोच्येत, तथासति शरीरजराप्रध्वंसाभ्यां द्यावापृथिव्यादेर्जराप्रध्वंसाभावेऽपि तदाधारस्य अन्यस्य स्थिरस्य अप्रतिपादनात् 'शरीरनाशे कुसूलनाशेकुसूलगतधान्यादेरनवस्थानवत् शरीरगतद्यावापृथिव्यादेरनवस्थानं स्यात्' इति शङ्कासम्भवेन किंततोऽतिशिष्यते इत्याक्षेपोऽपरिहृत एव स्यात्। तस्मिन् पक्षे, ऐकरूप्याय 'अस्मिन् कामाः समाहिता एष आत्मा' इत्यत्रापि द्यावापृथिव्यादेरेव परामर्शनीयत्वेन कामसमाधानप्रत्यभिज्ञानमपि बाधितं स्यात्, आकाशे कामसमाधानस्य प्रागुपक्षिप्तत्वात्। नचेदं प्रत्यभिज्ञानं बाधनीयमिति वक्तुमुचितम्। 'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते' 'अस्मिन् कामास्समाहिताः' इत्युपक्रमोपसंहारैकरूप्येण तदर्थस्य [1]विवक्षितत्वावगमात्, कृत्स्नस्य तदन्तर्गतस्य वाक्यजातस्य तदुपपादकतायामेव स्वारस्यावगमाच्च।

अस्ति च आकाशस्यापि 'दहरोऽस्मिन्नन्तराकाशः' इति वाक्ये प्रथमान्ततया प्राधान्येन प्रस्तुतत्वम्। यद्यपि तदपेक्ष्य द्यावापृथिव्यादि सन्निहितं, तथापि कृत्स्नवाक्यतात्पर्यपर्यालोचनया तस्यैव परामर्शयोग्यतया अयोग्यद्यावापृथिव्यादिसन्निधानस्याप्रयोजकत्वात्। नास्यजरयैतदित्यादौ नपुंसकलिङ्गं तु, तस्मिन्नेव आकाशे ब्रह्मपदमपि प्रयुक्तं ब्रह्मपुरमितीति तदभिप्रायं भविष्यति। [2]सामान्ये वा भविष्यति। तथा ब्रह्मपदसामानाधिकरण्यादपि आकाशो ब्रह्मेति।

---

1. मु. विवक्षितत्वावश्यम्भावात्

2. **सामान्ये इति** 'स्तनकेशवती स्त्री स्यात् लोमशः पुरुषः स्मृतः। उभयोरन्तरं यच्च तदभावे नपुंसकम्' इतिलक्षणलक्षितानां लौकिकानां स्त्रीपुन्नपुंसकलिङ्गानां अचेतने खट्वामालादावसम्भवात् स्त्रीप्रत्ययोऽनुपपन्नः स्यात्। अतः, सत्वरजस्तमोगुणानां प्राकृतानां वृद्धौ पुंस्त्वं अपचये स्त्रीत्वं उभयसाधारणस्थितिमात्रे नपुंसकत्वम्, तदपि वृद्ध्यादिकं वैवक्षिकं इति पारिभाषिकं लिङ्गत्रयं अर्थनिष्ठं शब्दार्थयोस्तादात्म्यात् शब्दे स्वीकृत्य शब्दशास्त्रकार्याणां उपपत्तिः निर्वाह्या। तथा च, सामान्ये—गुणोपचयापचयावस्थासाधारणस्थितिमात्रविवक्षायां नपुंसकं इति प्रवादः॥ अनेन प्रकारेण अत्र नपुंसकलिङ्गोपपत्तिः इति भावः।

जीवाशङ्काऽपि निवर्तिता भवति। न ह्युपाधिपरिच्छिन्नस्य आराग्रोपमितस्य जीवस्य पुण्डरीकवेष्टनकृतं दहरत्वं शक्यं निवर्तयितुम्। ब्रह्माभेदविवक्षया जीवस्य सर्वगतत्वादि विवक्ष्येतेति चेत्; यदात्मतया जीवस्य सर्वगतत्वादि विवक्ष्येत तस्यैव ब्रह्मणः साक्षात्सर्वगतत्वादि विवक्ष्यतामिति युक्तम्।

यदप्युक्तं - ब्रह्मपुरमिति जीवेन पुरस्योपलक्षितत्वात् राज्ञ इव जीवस्यैवेदं पुरस्वामिनः पुरैकदेशवर्तित्वमस्त्विति;

---

तत् सिद्धम्-एषआत्माअपहतपाप्मेतिवाक्यं न आकाशादन्यत्रान्वेतीति।

ननु-नास्यजरयैतज्जीर्यतीत्यत्र आकाशपरामर्शे अप्रसक्तप्रतिषेधता, अमूर्तस्य तस्य शरीरजराद्यनुविधायिजरादेरप्रसङ्गात् - इति चेत्,

पूर्वपक्षिमतेऽपि असङ्गतमेव। द्यावापृथिव्याद्यवच्छिन्नस्य ब्रह्मण एव सर्वंतदस्मिन्समाहितमित्यनेन विवक्षिततया तत्रापि शरीरजराद्यनुविधायिजरादेरप्रसङ्गात्। सिद्धान्तिनस्तु नानुपपत्तिः-ब्रह्मपुरान्तर्गताकाशनिहिततयोक्तानां द्यावापृथिव्यादीनां ब्रह्मपुरान्तर्गततानुवादे किं तात्पर्यं इति विकल्पमुखेन अस्मिन्नुत्तरे प्रवृत्ते सम्भावितमसम्भावितं वा सर्वं विकल्प्य निरस्यत इति। [1]विकल्पाभिप्रायिकार्थखण्डने हि सर्वं सम्भावितमसम्भावितं वा निरस्यत इति आधुनिकप्रबन्धेषु व्युत्पन्नमेव। एतेन-यावान्वाअयमाकाशइत्यत्र आकाशौपम्येन पूर्ववाक्य एव ब्रह्मनिर्णये सति द्विविधोऽप्याक्षेपाभिप्रायो न सम्भवति, ब्रह्मणः शरीरानुविधायिजरादेरसम्भवात् स्वतन्त्राधारत्वाच्च इत्यपि-निरस्तम्। यावान्वा इति वाक्यस्य मानसवैपुल्यप्रतिपादकतेति सम्भावनया आकाशपदस्य ब्रह्मपरताया झटिति निर्णेतुमशक्यत्वात्। हृदयपुण्डरीकान्तर्गतस्याकाशस्य ब्रह्मत्वे एव 'स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृद्ययमिति तस्माद्धृदयम्' इति वाक्यशेषे 'हृदि आत्मा' इत्येतदर्थकतया हृदयपदनिर्वचनमपि आत्मनि सङ्गतं भवति।

तथा चायमर्थः—एषः - द्यावापृथिव्यादिसमाधानाधार आकाशः आत्मा,

---

1. मु. विकल्पाभिप्रायखण्डने।

अत्र ब्रूमः—परस्यैवेदं ब्रह्मणः पुरं सत् शरीरं ब्रह्मपुरमित्युच्यते, ब्रह्मशब्दस्य तस्मिन् मुख्यत्वात्। तस्याप्यस्ति पुरेणानेन संबन्धः, उपलब्ध्यधिष्ठानत्वात्। 'स एतस्माज्जीवघनात्परात् परं पुरिशयं पुरुषमीक्षते' (प्र. उ. ५।५) 'स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः' (बृ. उ. २।५।१८) इत्यादिश्रुतिभ्यः। अथ वा जीवपुर एवास्मिन् ब्रह्म संनिहितमुपलक्ष्यते, यथा सालग्रामे विष्णुः संनिहित इति तद्वत्। 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' (छा. उ. ८।१।३) इति च कर्मणामन्तवत्फलत्वमुक्त्वा 'अथ य इहात्मानमनुविद्य व्रजन्ति एतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवति' इति प्रकृतदहराकाशविज्ञानस्यानन्तफलत्वं वदन् परमात्मत्वमस्य सूचयति।

---

अपहतपाप्मा - अपहताः - अपगताः पाप्मानः - पुण्यपापरूपाः सर्वसंसारतापनिदानभूताः यस्मात् स तथाभूतः। 'नैनं सेतुमहोरात्रे तरतो न जरा न मृत्युः न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते अपहतपाप्मा ह्येष ब्रह्मलोकः' इति वाक्यशेषात्। एवं सति यद्यपि पाप्मपदेनैव जरादिसङ्ग्रहात् पृथक् विजर इत्यादि नापेक्षितं, तथाऽपि पुण्यपापमूलकशरीर[1]द्वारकजराद्यभावेऽपि स्वाभाविकमेव जरादिकमस्त्विति मन्दबुद्धिपरिकल्पितजरादिनिवृत्त्यर्थं पुनस्तन्निषेधः।

**स वा अयमिति** पूर्षु पुरीति च पुरुषपदे बहुवचनेन एकवचनेन वा विग्रहप्रदर्शनार्थम्। ब्रह्मपदस्य जीवपरत्वमुपेत्य प्रौढ्या पक्षान्तरमाह—**अथवेति**। अथापि उत्तरभाविभिर्बहुभिराकाशोपमितत्वादिभिः दहरो ब्रह्म भविष्यतीति भावः। अनुविद्य - आचार्यसमीपतो ज्ञात्वा, उपास्य। वस्तुतस्तु उपक्रमे ब्रह्मपदं यथाश्रुतमेव। षष्ठ्यर्थस्य उपलब्ध्यधिष्ठानत्वरूपासाधारणसम्बन्धस्य ब्रह्मण्यपि[2] उपपत्तेः। तच्च वाक्यं उपक्रमे एव ब्रह्मण उपास्यत्वमुपक्षिपति। अतः आकाशो ब्रह्मैव।

---

1. मु. शरीरद्वारा    2. मु. 'अपि' नास्ति

**यदप्येतदुक्तं-न दहरस्याकाशस्य अन्वेष्टव्यत्वं विजिज्ञासितव्यत्वं**

---

अत्रेयं [1]पूर्वपक्षिणः शङ्का—उपक्रमे ब्रह्मण उपास्यत्वावगमेऽपि दहराकाशस्य ब्रह्मत्वं न सिध्यति। उपक्रमगतमुपास्यत्वं यदि दहराकाश एव पर्यवसितं स्यात्, तदा खलु उपक्रमपर्यालोचनया दहराकाशस्य ब्रह्मत्वं सिध्येत्। तत्तु 'दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यं' इति वाक्यस्वारस्येन दहराकाशान्तर्वर्तिन एव प्राप्नोति।

ननु - एतद्वाक्यपर्यालोचनया दहराकाशान्तर्वर्तिन एव उपास्यत्वप्राप्तावपि 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' इति वाक्यपर्यालोचनया दहराकाशतदन्तर्वर्तिनोः उपास्यत्वं सिध्यति। तदेकदेशानुवादोऽयं तस्मिन्यदन्तरित्यादिः। 'अथ य इहात्मानमनुविद्य' इति वाक्यं च एष-आत्माऽपहतपाप्मेतिवाक्योक्तस्यात्मन उपासनां प्रतिपादयति। एष आत्मेति-वाक्यं च दहराकाशविषयमिति प्रागेव निरूपितम्। अतो दहराकाशस्योपास्यत्वे सिद्धे उपक्रमवशादपि तस्य ब्रह्मत्वं सिध्यति - इति चेत्—

न - एषआत्मेति वाक्यं हि द्यावापृथिव्यादिसमाधानाधारवस्तुपरं न तु द्यावापृथिव्यादिपरं इत्यस्तु। द्यावापृथिव्यादिसमाधानाधारश्च न दहराकाशः। अपि तु दहराकाशान्तर्वर्ती। तथा हि—उपक्रमे ब्रह्मण उपास्यत्वेऽवगते तस्य च तस्मिन्यदन्तरित्यनेन दहराकाशान्तर्वर्तिनि पर्यवसानकरणात् तत्स्वारस्यानुरोधेन, 'यावान् वा अयमाकाशः' इत्यस्यार्थोऽङ्गीक्रियते। 'यावान् वा अयमाकाशस्तावानेषः' इत्येकं वाक्यम्, 'अन्तर्हृदय आकाशः' इत्यपरम्। अन्तर्हृदये - दहराकाशे आकाशः परमात्मा, स चाकाशसमानपरिमाणः - इति वाक्यद्वयार्थः। दहराकाशान्तर्वर्ती च परमात्मा [2]उत्तरत्र द्यावापृथिव्यादिसमाधानाधारत्वेन प्रतिपाद्यत इति एषआत्मेत्यादावपि स एव सम्बध्यते। अतो न कथमपि दहराकाशस्यान्वेष्टव्यत्वादिकं प्राप्नोतीति मनसि [3]निधाय पूर्वपक्ष्युक्तं अनुवदति—**यदप्येतदुक्तमिति**।

---

1. **पूर्वपक्षिणः**—'यदप्येतदुक्तं न दहरस्य' इत्यादिभाष्यानूदितपूर्वपक्षवादिनः।
2. **उत्तरत्र**—'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते' इतिवाक्ये।
3. **निधायेति** उक्तमित्यनेन सम्बद्ध्यते।

च श्रुतं, परविशेषणत्वेनोपादानात्-इति ।

अत्र ब्रूमः—यद्याकाशो नान्वेष्टव्यत्वेनोक्तः स्यात् 'यावान् वा अयमाकाशः तावानेषोऽन्तर्हृदय आकाशः' इत्याद्याकाशस्वरूपप्रतिपादनं नोपयुज्येत ।

---

आकाशस्वरूपप्रतिपादनं नोपयुज्येतेति । यावान्वा इति वाक्यं हि दहराकाशस्यैव बाह्याकाशोपमितत्वं प्रतिपादयति, न तु दहराकाशान्तर्वर्तिनोऽन्यस्य कस्यचित् । उपक्रमे हि पुण्डरीकशब्दः पुण्डरीकसमानाकारहृदयपर एव । समानप्रकरणे तैत्तिरीयके 'पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखं' इति श्रवणात् । तदेव च अन्तर्हृदय आकाश इत्यत्र हृदयशब्देन प्रत्यभिज्ञायते, न तु दहराकाशः । तत्र तच्छक्तेरभावात् । आकाशपदेन च दहराकाश एवावगम्यते, तुल्यशब्दत्वात् । अवश्यं चेदं वाक्यं दहराकाशवैपुल्यप्रतिपादनपरमेवोपेयम् । अन्यथा कृताक्षेपसमाधानालाभात् । 'तं चेद् ब्रूयुः' इति वाक्ये हि अथयदिदमिति वाक्योक्तस्य सर्वस्यार्थस्य अनुवाददर्शनात् [1]आक्षेपोऽयमित्यवगम्यते, न तु 'दहराकाशे किं वर्तते' इति प्रश्नमात्रम् । उक्तानुवादवैयर्थ्यापत्तेः । कृत्स्नानुवादो हि विरोधस्फोरणार्थः । ततश्च अयमाक्षेपाभिप्रायः—हृत्पुण्डरीकमेव तावदल्पम्, तदन्तर्वर्ती दहराकाशस्तावदतीवाल्पः । अतस्तत्र कस्यापि वस्तुनोऽन्वेषणयोग्यस्य असम्भवात् किमन्वेष्टव्यं विजिज्ञासितव्यं च—इति । अयं चाक्षेपो न दहराकाशस्य महत्त्वनिरूपणं विना समाधातुं शक्यः । तथा च यावान्वा इति वाक्यं आकाशौपम्यप्रतिपादनपूर्वकं दहराकाशवैपुल्यप्रतिपादन-[2] एव पर्यवसितम् । न तु दहराकाशान्तर्वर्तिवस्तुप्रतिपादनपर्यवसितं तस्य वैपुल्यप्रतिपादकम् । कृताक्षेपसमाधानालाभात्, [3]वाक्यभेदापत्तेश्च । तदन्तर्वर्ति-

---

1. **आक्षेपइति** एतेन 'प्रश्नपरमिदं वाक्यं इत्युचितम्' इत्यादि श्रुतप्रकाशिकोक्तं अयुक्तमिति सूचितम् ।

2. मु. प्रतिपादनपर्यवसितं

3. **वाक्यभेदेति**—'यावान् वा अयमाकाशः तावानेषः' इत्येकं वाक्यम्, 'अन्तर्हृदय आकाशः' इत्यपरम्, इतिपूर्वोक्तवाक्यभेदेत्यर्थः ।

**नन्वेतदपि अन्तर्वर्तिवस्तुसद्भावप्रदर्शनायैव प्रदर्श्यते, 'तं चेद्ब्रूयुः यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यम्' इत्याक्षिप्य परिहारावसरे आकाशौपम्योपक्रमेण द्यावापृथिव्यादीनामन्तस्समाहितत्वप्रदर्शनात् ।**

**नैतदेवम् — एवं हि सति यदन्तःसमाहितं द्यावापृथिव्यादि तदन्वेष्टव्यं विजिज्ञासितव्यं चोक्तं स्यात् । तत्र वाक्यशेषो नोपपद्येत । 'अस्मिन् कामाः समाहिताः' 'एष आत्माऽपहतपाप्मा' इति हि प्रकृतं द्यावापृथिव्यादिसमाधानाधारमाकाशमाकृष्य 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' इति समुच्चयार्थेन चशब्देन आत्मानं कामाधारं आश्रितांश्च कामान् विज्ञेयान् वाक्यशेषो दर्शयति । तस्मात् वाक्योपक्रमेऽपि दहर एवाकाशो हृदयपुण्डरीकाधिष्ठानः**

---

वस्तुप्रतिपादनपरं तु भवेत् अस्मिन्नित्यादि । अतः एषआत्मेत्यादि द्यावापृथिव्यादिसमाधानाधारपरं सत् दहराकाश एव पर्यवस्यति । तथा च आक्षेपसमाधानाद्यनेकस्वारस्यानुग्रहाय 'तस्मिन् यदन्तः तदन्वेष्टव्यं' इत्येकं वाक्यं तदनुसारेणैव व्याख्येयम् ।

ननु यावान्वाअयमिति वाक्यं अस्तु दहराकाशस्य वैपुल्यप्रतिपादनपरम्, तथापि न तस्यान्वेष्टव्यत्वम्, अपि तु तदन्तर्वर्तिनो द्यावापृथिव्यादेरेव-इति मनसि निधाय शङ्कते—**नन्वेतदपीति** । परिहरति—**नैतदेवमिति** । इष्टापत्तिं वारयति—**तत्रेति** । एतदभिप्रायः [1]प्रागेव स्पष्टीकृतः ।

**तस्माद्वाक्योपक्रमेऽपीति** । ननु - कथमुपक्रमे दहराकाशो ज्ञेयत्वेन प्रतिपादित इति वक्तुं शक्यते । तस्मिन्यदन्तरिति अन्तर्वर्तिन एव अन्वेष्टव्यत्वादेरवगमात् । न च उपसंहारे दहराकाशस्य पूर्वोक्तगत्या उपास्यत्वसिद्धौ तदैकार्थ्याय उपक्रमोऽपि तथा व्याख्येय इति वाच्यम् । उपक्रमोपसंहारयोर-

---

1. **प्रागेवेति**—यद्प्येतदुक्तमितिभाष्यानूदितपूर्वपक्षाभिप्रायवर्णनावसरे 'नन्वेतद्वाक्यपर्यालोचनया' इत्यादिनेत्यर्थः ।

**सहान्तःस्थैः समाहितैः पृथिव्यादिभिः सत्यैश्च कामैः विज्ञेय उक्त इति गम्यते । स च उक्तेभ्यो हेतुभ्यः परमेश्वर इति ॥ १४ ॥**

---

विरोधो यथा भवति तथा [1]हि सन्दर्भो व्याख्येयः । अर्थविरोधे एकवाक्यतानुपपत्तेः, अन्यूनानतिरिक्तार्थकत्वं तु तयोः कुतस्त्यम् । [2]अप्रयोजकत्वात् । तथा च उपसंहारे दहराकाशस्य सहान्तस्थैः कामैः उपासनं फलाय विधीयते । उपक्रमे तु अन्तस्समाहितस्य वस्तुन एव अन्वेष्टव्यत्वानुवादः तंचेद्ब्रूयुरित्यादिशङ्कावसरदानार्थः-

उच्यते—उपक्रमोपसंहारयोरन्यूनानतिरिक्तार्थत्वं यद्यपि नास्ति, अप्रयोजकत्वात् । तथाऽपि प्रकृते उपक्रमे एव उपासनाविधिरङ्गीकर्तव्यः । उपसंहारे विहितस्यैवोपासनस्यानुवादेन फलसम्बन्धो बोध्यत इति वक्तव्यम् । उपसंहारगतस्यैव वाक्यस्य उभयार्थत्वे गौरवापत्तेः । तथा च उपसंहारे दहराकाशतदन्तर्वर्तिकामोपासनायाः फलसम्बन्धं बोधयितुं अनुवादात् उपक्रमे कामाधारस्य उपासनायां तात्पर्ये निर्णीते यथा तल्लाभो भविष्यति तथा वाक्ययोजना कर्तव्या । अपि च 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां' इति वाक्य एव उपासनाविध्यङ्गीकारे कामपदेन पित्रादीनामेव प्रतिपादनात् विशिष्य तत्प्रतिपादनं इतरगुणपरिसङ्ख्यार्थमित्यप्याशङ्क्येत । तस्मात् 'तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यं' इत्येव उपासनाविधिः । तत्र अन्वेषणं नाम गुरुमनुसृत्य आत्मनो विचारणम् । विज्ञानं तु ध्यानम् । 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेन' इति विज्ञानपदस्य ध्याने प्रयोगात् । इदं हि वाक्यं 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्युक्तार्थस्यैव प्रतिपादकम् । विजिज्ञासितव्यं इत्यत्र सनर्थो न विवक्षितः निदिध्यासितव्य इत्यत्र यथा । तदिदमुक्तं—**विज्ञेय उक्त इति गम्यत इति** ।

ननु, तावताऽपि कथमुपक्रमे आकाशस्य उपास्यत्वावगमः ?

---

1. मु. 'हि' नास्ति

2. **अप्रयोजकत्वादिति** केवलस्य उपक्रमत्वस्य उपसंहारत्वस्य वा अन्यूनानतिरिक्तार्थकत्वप्रयोजकत्वाभावात् इत्यर्थः ।

इत्थं—तस्मिन्यदन्तरिति आकाशाधिकरणकं यत् वक्ष्यमाणं द्यावापृथिव्यादिकं, तत् अन्वेष्टव्यं विजिज्ञासितव्यं चोच्यते। न च आकाशमविज्ञाय तदधिकरणकं द्यावापृथिव्यादिकं ज्ञातुं शक्यम्। तथा च उपक्रमे आकाशः अधिकरणत्वेन ज्ञेयः द्यावापृथिव्यादयश्च आधेयत्वेन ज्ञेयाः इति सिध्यति। न चैवंसति आकाशस्येतरविशेषणतयोपास्यत्वात् तदुपासनं प्राधान्येन न सिध्येदिति वाच्यम्। इष्टापत्तेः। इदमुपासनं 'आकाशे द्यावापृथिव्यादिकं' इत्येव कर्तव्यम्। वचनस्वारस्यात्। न चैवंसति 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' इति विशेष्यतयोपासनानुवादो न सङ्गच्छत इति वाच्यम्। न हि तत्र 'विशेष्यतया आत्मा उपास्यः' इति विशेष्यताबोधकं किञ्चित्पदमस्ति। अपि तु आत्मानमिति द्वितीया। सा तु विषयतामात्रं प्रतिपादयति। तावन्मात्रं आत्मप्रकारकोपासनायामपि न विरुध्यते। प्रकारताया अपि विषयताविशेषरूपत्वात्। अथवा, तस्मिन्यदन्तरिति आकाशाधिकरणकं यद्द्यावापृथिव्यादिकं उक्तं तावन्मात्रमेव तदन्वेष्टव्यमितितच्छब्दो न परामृशति। येन विषयनिर्देशकेन तत्पदेन आकाशस्य द्यावापृथिव्यादिविशेषणतयैव उपादानात् तथैवोपासना भवेत्। अपि तु अयं तच्छब्दो वाक्यार्थपरामर्शकः। तथा च 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' इत्यारभ्य यदुक्तं तत् अन्वेष्टव्यं विजिज्ञासितव्यं चेत्यर्थः। अवश्यं च तस्य इत्थमेवार्थः स्वीकर्तव्यः। कथमन्यथा हृदयपुण्डरीकादेरुपास्यता सिध्येत्। एवंसति अथयदिदमस्मिन्निति प्रथमं यत्पदमपि निराकाङ्क्षं भवति। तदन्वेष्टव्यमित्यत्र अन्तर्वर्तिवस्तुमात्रपरामर्शे द्वितीयस्य यत्पदस्य तत्पदेन प्रतिनिर्देशात् प्रथमं यत्पदं साकाङ्क्षमेव स्यात्। न चैवं आक्षेपे अन्तर्वर्तिन एव अन्वेष्टव्यतयाऽनुवादः असङ्गतस्स्यात् इति वाच्यम्। वाक्यार्थे कृत्स्नेऽप्यन्वेष्टव्ये प्रतिपादितेऽपि अन्तर्वर्तिन्येव असम्भावनायाः समुद्भवात् तावन्मात्रमेवाक्षिप्तम्। तदन्वेष्टव्यमिति वाक्यार्थपरामर्शके तत्पदे च सामान्याभिप्रायं नपुंसकं औत्सर्गिकं चैकवचनं उपपद्यते। वाक्यार्थस्य लिङ्गविशेषेण वचनविशेषेण च अप्रस्तुतत्वात्। यदि तु-अथयइहात्मनमनुविद्यव्रजन्त्येतांश्चसत्यान्कामानितिवाक्य एव फलेन विशिष्टमुपासनं विधीयते 'उद्भिदा यजेत पशुकामः' इतिवत्, चशब्दश्च उक्तवक्ष्यमाणगुणसङ्ग्रहार्थः

## गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥ १५ ॥

दहरः परमेश्वर उत्तरेभ्यो हेतुभ्यः इत्युक्तम् । त एवोत्तरे हेतवः इदानीं प्रपञ्च्यन्ते । इतश्च परमेश्वर एव दहरः, यस्मात् दहरवाक्यशेषे परमेश्वरस्यैव प्रतिपादकौ गतिशब्दौ भवतः—'इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' (छा. उ. ८।३।२) इति। तत्र प्रकृतं दहरं ब्रह्मलोकशब्देनाभिधाय तद्विषया गतिः प्रजाशब्दवाच्यानां जीवानां अभिधीयमाना दहरस्य ब्रह्मतां गमयति । तथा हि अहरहः जीवानां सुषुप्तावस्थायां ब्रह्मविषयं गमनं दृष्टं श्रुत्यन्तरे 'सता सोम्य तदा संपन्नो भवति' (छा० ६।८।१) इत्येवमादौ। लोकेऽपि किल गाढंसुषुप्तमाचक्षते—ब्रह्मीभूतः ब्रह्मतां गतः इति । तथा ब्रह्मलोकशब्दोऽपि प्रकृते दहरे प्रयुज्यमानो जीवभूताकाशशङ्कां निवर्तयन्

---

अन्येषां गुणानां आम्नानं व्यर्थं माभूदिति, तदाऽपि-दहराकाशस्य ब्रह्मत्वे न कोऽपि विरोधः इत्यपि द्रष्टव्यम् ॥ १४ ॥

ननु-अहरहर्गच्छन्त्य इति वाक्यशेषः पुण्डरीकान्तर्गते भूताकाशेऽप्युपपद्यते। यदा हि जीवो हृदयान्तस्स्थितं ब्रह्म गच्छति तदा हृदयान्तर्वर्त्याकाशमपि गच्छत्येव। त्हृदयगते भूताकाशे ब्रह्मलोकशब्दोऽप्युपपद्यते। ब्रह्मणो लोकः - उपासनास्थानं इति व्युत्पत्तिसम्भवात्। अतः, कथं सुषुप्तौ जीवैर्गन्तव्यत्वं ब्रह्मलोकशब्दश्च दहराकाशे श्रुतः तस्य ब्रह्मतां गमयेत् ? इत्यत आह—**तथा हि दृष्टमिति**। तद्व्याचष्टे - **तथाह्यहरहर्जीवानामिति**। यद्यपि भूताकाशेऽपि [1]उक्तरीत्या गतिशब्दावुपपद्येते, तथाऽपि श्रुत्यर्थः श्रौतप्रसिद्ध्यैव व्याख्येयः। श्रुतौ 'सता सोम्य तदा सम्पन्नो भवति' 'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरं' इत्यादौ ब्रह्मण्येव सुषुप्तगतिः श्रुता। श्रुतिप्रस्थानपाटवशालिनो लोकस्यापि तथैव प्रसिद्धिः। 'एष ब्रह्मलोकस्सम्राडिति हैनमनुशशास' इति ब्रह्मलोकशब्दोऽपि श्रुतौ ब्रह्मणि प्रसिद्धः। अतः श्रौतप्रसिद्ध्यनुगृहीतौ गतिशब्दौ भूताकाशशङ्कां व्यावर्तयत इति युक्तम्। यद्यपि गतिशब्द-

---

1. आ. उक्तगत्या

**ब्रह्मतामस्य गमयति। ननु कमलासनलोकमपि ब्रह्मलोकशब्दो गमयेत्। गमयेत् यदि ब्रह्मणो लोक इति षष्ठीसमासवृत्त्या व्युत्पाद्येत। सामानाधिकरण्यवृत्त्या तु व्युत्पाद्यमानो ब्रह्मैव लोको ब्रह्मलोक इति परमेव ब्रह्म गमयिष्यति। एतदेव च अहरहर्ब्रह्मलोकगमनं दृष्टं ब्रह्मलोकशब्दस्य सामानाधिकरण्यवृत्तिपरिग्रहे लिङ्गम्। न हि अहरहः इमाः प्रजाः कार्यब्रह्मलोकं सत्यलोकाख्यं गच्छन्तीति शक्यं कल्पयितुम्॥ १५॥**

---

योरुभयोः प्रस्तुतत्वात् 'तथाहि दृष्टौ' इति वक्तव्यं, तथाऽपि द्वयोरपि प्रत्येकाभिप्रायमेकत्वं सामान्ये नपुंसकं च उपपद्यत इति भावः। **सामानाधिकरण्यवृत्त्या त्विति।** सम्भवति सामानाधिकरण्ये वैयधिकरण्यं ह्यन्याय्यम्। वैयधिकरण्ये हि प्रातिपदिकार्थानन्तर्गतोऽपि स्वस्वामिभावादिः अन्यः[1] सम्बन्धः कल्पनीयः। अभेदपक्षे तु प्रातिपदिकार्थस्वरूपभूत एव स इति लाघवम्। अपि च नामार्थानां अभेदसंसर्ग एव शब्दबोध्यः। 'भूतलं घटः' इत्यादौ आधाराधेयभावबोधादर्शनात्। तथा च प्रकृते ब्रह्मलोकप्रातिपदिकयोरेकार्थपर्यवसिततैवोचितेति भावः।

ननु - ब्रह्मलोकशब्दः सत्यलोके प्रसिद्धः। [2]अत्रैव च 'अरश्च ह वै ण्यश्च अर्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि' इति [3]अत्रैव प्रयुक्तः। अतश्चात्र [4]उत्सर्गप्राप्तोऽप्यभेदान्वयः परित्यक्तव्यः। दृश्यते हि नरपतिशब्दादौ प्रसिद्ध्यनुसारेण सामानाधिकरण्यपरित्यागः - इत्याशङ्क्योक्तं - लिङ्गं चेति। तत् 'ब्रह्मलोकशब्दस्य (सामानाधिकरण्यार्थत्वे') [सामानाधिकरण्यवृत्तिपरिग्रहे'] इत्यंशाध्याहारेण व्याचष्टे—**एतदेवचेति**॥ १५॥

---

1. **सम्बन्धः कल्पनीय इति** सम्बन्धापेक्षितो भेदः कल्पनीय इत्यर्थः। तथा चात्र भेदकल्पनागौरवं दोषः, न तु लक्षणाकल्पनम्, लक्षणाया अकल्पनात्, कर्मधारये ऐक्यस्येव षष्ठीसमासे सम्बन्धस्य संसर्गमर्यादया भानसम्भवात् इति भावः।

2. **अत्रैव**—सत्यलोके एव।

3. **अत्रैव**—छान्दोग्ये एव।

4. **उत्सर्गप्राप्तइति** 'यत्र शब्दतोऽर्थतो वा नास्ति विरोधः तत्र लाघवात् ऐक्यं ग्राह्यम्' इति औत्सर्गिको न्याय इति भावः।

## धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥

धृतेश्च हेतोः परमेश्वर एवायं दहरः । कथम्? 'दहरोऽस्मिन्नन्तराकाशः' इति हि प्रकृत्य आकाशौपम्यपूर्वकं तस्मिन् सर्वसमाधानमुक्त्वा, तस्मिन्नेव च आत्मशब्दं प्रयुज्य अपहतपाप्मत्वादिगुणयोगं चोपदिश्य, तमेवानतिवृत्तप्रकरणं निर्दिशति 'अथ य आत्मा स सेतुर्विधृतिः एषां लोकानामसंभेदाय' (छा. उ. ८।४।१) इति । तत्र विधृतिरिति आत्मशब्दसामानाधिकरण्याद्विधारयितोच्यते, क्तिचः कर्तरि स्मरणात् । यथा उदकसन्तानस्य विधारयिता लोके सेतुः क्षेत्रसंपदामसंभेदाय, एवमयमात्मा एषामध्यात्मादिभेदभिन्नानां लोकानां वर्णाश्रमादीनां च विधारयिता सेतुः असंभेदाय असंकरायेति । एवमिह

---

ननु - 'अथ य आत्मा स सेतुर्विधृतिः' इत्येतत् दहराकाशविषयं न भवति । अथशब्दस्य अधिकारार्थत्वेन तद्घटितस्य वाक्यस्य प्रकृतदहराकाशविषयत्वे पृथगधिकारप्रतिपादनविरोधात् । तदनुसारेण अन्यस्यैवायमधिकार इति प्रतीयते । तथा च कथमयं हेतुः दहराकाशस्य ब्रह्मतां गमयेत्-इत्याशङ्क्य, 'अथ य आत्मा स सेतुः' इति वाक्यगतेन यत्पदेन पूर्वप्रकृतं परामृश्यते तादृग्विधश्च दहराकाश एव । आत्मपदेनापि स एव प्रत्यभिज्ञायते, एषआत्मेति तत्र आत्मशब्दस्य पूर्वं प्रयुक्तत्वात् । तथा च यत्पदात्मपदानुसारेण 'अथ य आत्मा' इतिवाक्यस्य दहराकाशविषयत्वे निर्णीते अथशब्दः आनन्तर्यार्थको भविष्यति । न च तदुक्तिर्व्यर्था । आनन्तर्यमात्रं हि न वक्तव्यम् । तदनुक्तावपि तस्य आम्नानमात्रेणैव अवगन्तुं शक्यत्वात् । अतः स्वापेक्षितात्पूर्वस्मादनन्तरमिति विशिष्टानन्तर्ये परिणतोऽथशब्दः उक्तवक्ष्यमाणगुणानां समुच्चयं द्योतयन्, 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' इति वाक्ये विशिष्य ग्रहणं सत्यानां कामानां इतरपरिसंख्यार्थमिति शङ्काव्यावर्तको भविष्यतीत्येतदभिप्रेत्याह—कथं? दहरोऽस्मिन्नन्तराकाश इति हि प्रकृत्येत्यादि ।

**प्रकृते दहरे विधारणलक्षणं महिमानं दर्शयति । अयं च महिमा परमेश्वर एव श्रुत्यन्तरादुपलभ्यते 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' [बृ.उ.३-८-९] इत्यादेः । तथा अन्यत्रापि निश्चिते परमेश्वरवाक्ये श्रूयते 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय' [बृ. उ. ४-४-२२] इति । एवं धृतेश्च हेतोः परमेश्वर एवायं दहरः ॥ १६ ॥**

## प्रसिद्धेश्च ॥ १७ ॥

**इतश्च परमेश्वर एव 'दहरोऽस्मिन्नन्तराकाशः' इत्युच्यते ।**

---

ननु 'आकाशे वै सूर्याचन्द्रमसौ उभौ विद्युन्नक्षत्राणि' [छा. उ. ७. १२] इत्यादिना भूताकाशस्यापि सर्वविधारकत्वमुपपाद्यते । 'एषां लोकानामसम्भेदाय' इत्यपि तत्र सम्भवत्येव । अवकाशसम्पादकतया असाङ्कर्यहेतुत्वात् । 'आकाशे रमते आकाशे न रमते आकाशे जायते आकाशमभिजायते' [छा. उ. ७-१२] इति च ब्राह्मणम् । ततः कथं [1]धृतेः परमात्मैव दहराकाशः ? इत्यत आह—**अयं च महिमेति ।** न केवलं जगदाधारत्वमेव प्रकृते [2]धृतित्वम् , अपि तु महिमविशेषरूपं ऐश्वर्यापरपर्यायम् , तत् ईश्वरस्यैव शासनपूर्वकं धृतिहेतुत्वं इति भावः ॥ १६ ॥

ननु - परमात्मन्याकाशपदं किं शक्त्या, उत गौण्या । न तावत् परमात्मनि शक्तिः । प्रथमभूते एव तस्य रूढत्वात् । नापि गौणी । आकाशपदस्य हि व्यापकत्वेन गुणेन सा कल्पनीया परमात्मनि । न चेह तथा वक्तुं शक्यम् । तथा सति धर्मिनिर्देशकेनैव पदेन व्यापकत्वगुणस्य लब्धतया 'यावान् वा अयमाकाशः तावानेषोऽन्तर्हृदय आकाशः' इतिवाक्यवैयर्थ्यप्रसङ्गात् । अथ नित्यत्वं गुणः आकाशपदस्य ब्रह्मणि [3]प्रवृत्तौ । तथा सति तेन गुणेन जीव एव प्रकृते तदर्थः किं न स्यात् - अत आह—**प्रसिद्धेश्चेति ॥**

विभुत्वेनैव[4] गुणेन परमात्मा इह आकाशपदप्रतिपाद्यः । न च 'यावान्

---

1. धृतेः—धारणात् ।
2. धृतित्वम्—धारकत्वम् ।
3. मु. वृत्तौ
4. मु. 'एव' नास्ति

**यत्कारणं आकाशशब्दः परमेश्वरे प्रसिद्धः । 'आकाशो वै नाम नामरूपयोर्निर्वहिता (छा. उ. ८।१४) 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' (छा. उ. १।९।१) इत्यादिप्रयोगदर्शनात् । जीवे तु न क्वचित् आकाशशब्दः प्रयुज्यमानो दृश्यते । भूताकाशस्तु सत्यामप्याकाशशब्दप्रसिद्धौ उपमानोपमेयभावाद्यसंभवात् न ग्रहीतव्य इत्युक्तम् ॥ १७ ॥**

---

वा' इत्यादिवाक्यवैयर्थ्यम् । तद्बलादेव आकाशपदस्य ब्रह्मपरतालाभात् । न ह्यन्यथा गौण्या ब्रह्मपरता लब्धुं शक्यते । भूताकाशस्यैव मुख्यस्य ग्रहणप्रसक्तेः ।

अथापि अनन्वयो [1]भवति यावान् वा इतिवाक्ये । तत्र उपमेयनिर्देशकेन व्यापकतयागौणेनाकाशपदेन व्यापकत्वे उद्देश्यतावच्छेदके अवगते उपमानपदेन पुनरपि व्यापकत्वे विधेये कथं अनन्वयो न स्यात् । न हि 'व्यापको व्यापकः' इत्यन्वयः सम्भवति - इति चेत्,

न - उद्देश्यतावच्छेदकतया आकाशपदप्रतिपाद्यत्वस्यैव प्रकृते निवेशेन अनन्वयाप्रसरात् । परं तु यावान्वाइतिवाक्यपर्यालोचनया 'दहरोऽस्मिन्नन्तराकाश-इतिवाक्ये आकाशपदं व्यापकतया गौणं' इति बुद्धिःस्थिरा भवति ।

अस्तु वा नित्यत्वेनैव गुणेन आकाशपदं ब्रह्मणि । तथाऽपि जीवाशङ्का निरूढ्या वाक्यशेषैश्च परिहृता भवति । तदिदमुक्तम् - **आकाशशब्दः परमेश्वरे प्रसिद्ध इत्यादिना ॥ १७ ॥**

'एष सम्प्रसादः' इति वाक्येन, शरीरात् समुत्थितस्य उत्क्रान्तस्य अर्चिरादिमार्गपर्वभूतादित्यात्मकज्योतिरुपसम्पन्नस्य स्वेन-ब्राह्मलौकिकेन आविर्भूत-सत्यकामत्वादिना रूपेण अभिनिष्पत्तिः प्रतिपाद्यत इति, इदं वाक्यं जीवविषयमिति तावत् सिद्धम् । तदनन्तरपठितेन एषआत्मेतिहोवाचेति वाक्येन स एव प्रकृतः अपहतपाप्मादिरूप आत्मेति चोच्यते । एवं सति वचनेनैव [2]दहराकाशात्मक आत्मा जीव इति व्यवस्थापिते, द्यावापृथिव्यादयो ब्राह्मलौकिका एव जीवसम्भाविनो ग्राह्याः । एषआत्मेतिवचनानुसारेण, तत्सङ्कोचोऽपि न

---

1. मु. भविष्यति
2. आ. 'प्रकृतः' इत्यधिकम्

## इतरपरामर्शात् स इति चेन्नासंभवात् ॥ १८ ॥

यदि वाक्यशेषबलेन दहर इति परमेश्वरः परिगृह्येत, अस्ति इतरस्यापि जीवस्य वाक्यशेषे परामर्शः 'अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच' (छा.उ.८।३।४) इति। अत्र हि संप्रसादशब्दः श्रुत्यन्तरे सुषुप्तावस्थायां दृष्टत्वात् तदवस्थावन्तं जीवं शक्नोत्युपस्थापयितुम्, न अर्थान्तरम्। तथा शरीरव्यपाश्रयस्यैव जीवस्य शरीरात्समुत्थानं संभवति। यथा आकाशव्यपाश्रयाणां वाय्वादीनां आकाशात्समुत्थानं तद्वत्। यथा च अदृष्टोऽपि लोके परमेश्वरविषय आकाशशब्दः परमेश्वरधर्मसमभिव्याहारात् 'आकाशो वै नाम नामरूपयोर्निर्वहिता' इत्येवमादौ परमेश्वरविषयोऽभ्युपगतः, एवं जीवविषयोऽपि भविष्यति। तस्मात् इतरपरामर्शात् 'दहरोऽस्मिन्नन्तराकाशः' इत्यत्र स एव जीव उच्यत इति चेत्,

नैतदेवं स्यात्। कस्मात्। असंभवात्। न हि जीवो बुद्ध्याद्यु-

---

दोषः। न च सत्यकामत्वं सत्यसङ्कल्पत्वं जीवे असम्भवीति वाच्यम्। कामशब्दो हि काम्यमानपित्रादिपरः। पित्रादिषु अस्मिन् प्रकरणे 'त इमे सत्याः कामाः' इति प्रयोगदर्शनात्। सत्यत्वं च भोगसमर्थत्वम्। तथा च भोगसमर्थपित्रादिशालित्वं सत्यकामत्वम्। तदुपयोगिसङ्कल्पशालित्वं सत्यसङ्कल्पत्वम्। तथा च [1]उपासकस्वरूपमेव ब्राह्मलौकिकं उपास्यमिति आकाशपदं तत्रैव व्याख्येयम् - इत्यभिप्रेत्याह—**यदिवाक्यशेषबलेनेत्यादिना**। **यथा आकाशव्यपाश्रयाणामित्यादि**। 'अशरीरो वायुरभ्रं विद्युत् स्तनयित्नुः अशरीराण्येतानि, तद्यथा एतान्यमुष्मादाकाशात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यन्ते' इति वाक्यं इन्द्रप्रजापतिसंवादे उत्तरत्राम्नायते। तदर्थं इह दृष्टान्तीकृतः। **असम्भवादिति**। अयं भावः—निरङ्कुशं

---

1. मु. उपासकस्य स्वस्वरूपमेव

पाधिपरिच्छेदाभिमानी सन् आकाशेनोपमीयेत । न च उपाधिधर्मानभिमन्यमानस्य अपहतपाप्मत्वादयो धर्माः संभवन्ति । प्रपञ्चितं चैतत् प्रथमसूत्रे । अतिरेकाशङ्कापरिहाराय अत्र तु पुनरुपन्यस्तम् । पठिष्यति चोपरिष्टात् 'अन्यार्थश्च परामर्शः' (ब्र. सू. १।३।२०) इति ॥ १८ ॥

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥

इतरपरामर्शात् या जीवाशङ्का जाता सा असंभवान्निराकृता । अथेदानीं मृतस्येवामृतसेकात् पुनः समुत्थानं जीवाशङ्कायाः क्रियते

---

द्यावापृथिव्यादिसमाधानाधारत्वं जीवे न सम्भवत्येव । एवं सत्यकामत्वमपि । यदि कामपदं यथाश्रुतं तदा सत्यः कामः-इच्छा यस्येत्यर्थः । सत्यत्वं च फलाविनाभूतत्वम् । न च जीवस्य सर्वे कामाः सफलाः । मानोरथिकपदार्थगोचराणां [1]कामानां उपासनया ब्रह्मलोकं गतेऽपि स्वभोगानुपयुक्तानां [2]च फलपर्यवसानाभावात् । [3]यदि कामशब्दः काम्यमानवस्तुपरः तदापि न सर्वे [4]काम्याः उपासकस्यार्थक्रियाकारिणः । तन्मात्रभोगपर्यवसायिनामेव पित्रादीनां अर्थक्रियाकारित्वात् । अतः कामपदं उपासकभोगोपयुक्तपित्रादिविषयं सङ्कोचनीयम् । एवं सत्यसङ्कल्पत्वमपि । स्वीकृतेऽपि सङ्कोचे असम्भवः । उपासनाकाले ब्राह्मलौकिकानां द्यावापृथिव्यादीनां उपासके अविद्यमानत्वात् - इति । नन्वेवं एषसम्प्रसाद इति वाक्यशेषस्य का गतिः? तत्राह—**पठिष्यति चेति** । वाक्यशेषपरिहारं इति शेषः ॥ १८ ॥

**पुनस्समुत्थानं जीवाशङ्काया इति** । अयं भावः—

असंकुचितसत्यकामत्वादीनां सम्भवशङ्कैव नास्ति जीवे, संकुचितास्तु न ग्राह्या एव सत्यकामत्वादयः, तद्ग्रहणेऽपि ब्रह्मलोकगमनानन्तरभाविनां तेषां उपासनादशायामसम्भव एव-इत्युक्तम् ।

---

1. **कामानामिति** इह लोके इति शेषः ।
2. मु. 'च' नास्ति
3. मु. यदि हि
4. मु. कामाः

तत्राशङ्का—संकुचिता एव सत्यकामत्वादयो दहरविद्यायां उत्तर-वाक्यपर्यालोचनया ग्राह्याः। 'य आत्मा अपहतपाप्मा' इत्यादिकं हि वाक्यं यत्पदसमभिव्याहारात् अनुवाद इत्यविवादम्। तत्र च पुरोवादापेक्षायां 'एष आत्माऽपहतपाप्मा विजरः' इत्यादिकं पूर्ववाक्यमेव पुरोवादः। ततश्च प्रजापतिविद्यायां पूर्वोक्तमपहतपाप्मत्वादिगुणकमनूद्य तस्य 'य एषोऽक्षिणि पुरुषो दृश्यते' इत्यादिना जीवभावप्रतिपादनात् दहरविद्योपास्यो जीव इत्येव प्रतीयते। तत्र च असंकुचितसत्यकामत्वादेरसम्भवात् संकुचितमेव तत् उपादीयते। न च तस्यापि अधुना असत्त्वम्। आविर्भूतस्य तस्य अधुना असत्त्वेऽपि ब्रह्मलोकगमनानन्तरमाविर्भविष्यतस्तस्य तिरोहितस्य अधुना सम्भवात्। एवं द्यावापृथिव्यादिष्वपि द्रष्टव्यम्। अधुना सतामेव तेषां तिरोधानं तु 'परं ज्योतिरुपसम्पद्य स्येन रूपेणाभिनिष्पद्यते' इति [1]वाक्यशेषात् अवगम्यते।

यद्यप्येवंविधः पूर्वपक्षः 'त इमे सत्याः कामा अनृतापिधानाः' इति पूर्ववाक्यपर्यालोचनयाऽपि घटयितुं शक्यते,

तथापि तत्र सिद्धान्ती इत्थमपि वदेत्—दहरवाक्ये द्विविधं सत्यकामत्वम्। एकं उपास्यकोटिनिविष्टम्। एकं फलकोटिनिविष्टम्। आद्यं एष आत्माऽपहतपाप्मेत्यादिना निरूप्यते। तत् असंकुचितमेव [2]पूर्वोक्तगत्या [3]नित्याविर्भूतं च पारमेश्वरमेव। द्वितीयं तत्सदृशं जैवं स्वभोगोपयुक्तं संकुचितम्। द्वितीयस्यैव तिरोधानं 'त इमे सत्याः कामाः' इति वाक्यप्रतिपाद्यम्। वस्तुतस्तु 'त इमे सत्याः कामाः' इति अर्थवादमात्रं तात्कालिकशिष्यसमाधानोपयोगि। 'दहरोपासनाफलप्राप्तौ संशयो माऽस्तु, यत् विद्यमानमेव स्वस्मिन् तत्फलम्, परं तु [4]अनृतेन आवृतम्, उपासनया तदपगमे पित्रादिकमाविर्भविष्यति,

---

1. 'वाक्यशेषात्—दहरविद्यावाक्यशेषात्।

2. पूर्वोक्तगत्येति—पारमेश्वरमेवेत्यनेन सम्बध्यते। असङ्कुचितं नित्याविर्भूतञ्चेति पारमेश्वरत्वे हेतुगर्भं विशेषणम्। सङ्कोचे कारणाभावात् तिरोधानावचनाच्चेति भावः।

3. मु. 'नित्य' नास्ति

4. मु. अनृतेन वस्तुना

उत्तरस्मात् प्राजापत्याद्वाक्यात् । तत्र हि 'य आत्माऽपहतपाप्मा'

---

अधुना नोपलभ्यते' इति प्रतिपादने हि रुचिविशेषसम्भवात् । [1]न तु विद्यमानमेव तत् आवृतमिति वस्तुस्थितिः । 'सर्वं तदत्र गत्वा विन्दते' इति उत्तरवाक्येन ब्रह्मलोकगमनानन्तरमेव तत्प्राप्तेः प्रतिपादनात् । अतो [2]न जीवः तद्वाक्यपर्यालोचनया उपास्य इति लभ्यते - इति ।

अनेन तु प्रजापतिवाक्येन, ये उपास्यत्वेन सम्मता अपहतपाप्मत्वादयः तदनुवादपूर्वकं 'य एषोऽक्षिणि' इत्यादिना जीवस्य प्रतिपादनात्, [3]जीवगता एव उपास्यकोटौ निविष्टा इत्येव सिध्यतीति तन्निर्वाहः [4]पूर्वोक्तरीत्यैवाश्रयणीयः । 'सर्वं तदत्र गत्वा विन्दते' इति वाक्यमपि ब्रह्मलोकगमनानन्तरमाविर्भूतं सत्यकामत्वं प्राप्नोतीत्यर्थकं द्रष्टव्यम् ।

ननु - प्रजापतिवाक्ये अपहतपाप्मत्वादिकं पारमेश्वरमेव प्रतिपाद्यते । अतो न तद्वाक्यपर्यालोचनया पूर्ववाक्यगतं जैवं तदिति वक्तुं शक्यम् । न च तथासति 'य एषोऽक्षिणि पुरुषः' इत्यादिना जाग्रत्स्वप्नसुषुप्तिसम्बन्धिजीवप्रतिपादनमसङ्गतमिति वाच्यम् । तत्प्रतिपादनस्य तत्त्वमस्यादिवाक्य इव जीवब्रह्माभेदबोधपर्यवसितत्वात् । अत एव च 'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमभयमेतद् ब्रह्म' इति प्रतिपर्यायं पुरुषसामानाधिकरण्येन अमृताभयब्रह्मप्रतिपादनं सङ्गच्छते - इति चेत्—

न - तथा सति निर्गुणविद्यात्वापत्त्या उपक्रमे अपहतपाप्मत्वादिगुणकीर्तनवैयर्थ्यापत्तेः । न च यथा सद्विद्यादौ निर्विशेषविषयत्वेऽपि सृष्ट्यादिप्रतिपादनं तथेदमपि किं न स्यादिति वाच्यम् । तत्र हि सृष्ट्यादिप्रतिपादनमपवादार्थम् ।

---

1. **नत्विति** वस्तुस्थितिरित्यनेन सम्बध्यते । आ. वस्तुगतिः

2. **नेति** लभ्यते इत्यनेन सम्बध्यते ।

3. **जीवगता एवेति** अनयैव युक्त्या - दहरविद्या परमात्मविद्या, प्रजापतिविद्या जीवात्मविद्या दहरविद्याङ्गभूता—इति वदन्ति विशिष्टाद्वैतिनः, द्विविधं सत्यकामत्वादिकमादाय स्वाभिमतं निर्वहन्ति च । उक्तयुक्तेराभासीकरणे सति तन्मतस्य नावकाशः ।

4. **पूर्वोक्तरीत्यैव** सङ्कोचेनैव ।

इति अपहतपाप्मत्वादिगुणकमात्मानमन्वेष्टव्यं विजिज्ञासितव्यं च प्रतिज्ञाय 'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मा' (छा. उ. ८।७।४) इति ब्रुवन् अक्षिस्थं द्रष्टारं जीवं आत्मानं निर्दिशति। 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' (छा. ८।९।३) इति च तमेव पुनः पुनः परामृश्य 'य एष स्वप्ने महीयमानश्चरति एष आत्मा' (छा. उ. ८।१०।१) इति 'तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाति

---

[1]तथा च तत्रैव आदावन्ते च अपवादः श्रूयते—'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' इति। नैवं सत्यकामत्वादिकं तदर्थम्। अपवादाश्रवणात्। अत उपासनापरेऽस्मिन् वाक्ये तत्त्वमस्यादिवाक्यन्यायस्य वक्तुमशक्यतया जीव उपास्य एव विवक्षितः।

य एषोऽक्षिणि पुरुष इति। अक्षिणि सन्निहितः यो जीवरूपः पुरुषः दृश्यते-अक्षिव्यापारेणानुमीयते [2]इत्यर्थः। महीयमानः-स्त्र्यादिभिः पूज्यमानः। यत्रैतदिति। यस्यां दशायां, एतत्-क्रियाविशेषणमिदं स्वापार्थकम्, ततश्च, स्वापं सुप्तः-कृतवान्, पाकंपचतीतिवत्। समस्तः-उपसंहृतसकलकरणः। अनेन स्वप्नावस्थानुयायिस्वापव्यावृत्तिः। अत एव इन्द्रियसम्बन्धकृतकालुष्याभावात् सम्प्रसन्नः।

प्रजापतिविद्यायामेवमुपाख्यायते—अपहतपाप्मत्वादिगुणकमात्मानं यो जानाति तस्य सर्वलोककामावाप्तिः इति श्रुत्वा,तमात्मानं ज्ञातुं प्रजापतिसकाशमिन्द्रविरोचनावागत्य द्वात्रिंशतं वर्षाणि ब्रह्मचर्यं कृत्वा, तमात्मानमन्विच्छाव इति ऊचतुः। ताभ्यां स्वाशये कथिते, [3]प्रजापतिवचनं 'य एषोऽक्षिणि पुरुषः' इति। तदनन्तरं विरोचने स्वगृहं गते इन्द्रः पुनरपि परावृत्तः। तं प्रति द्वात्रिंशतं [4]संवत्सराणि ब्रह्मचर्याज्ञायां कृतायां तथाकृत्वा समागतं प्रत्येतद्वचनं 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' इत्युक्तिपूर्वकं 'य एष स्वप्ने महीयमानश्चरत्येष

---

1. मु. 'तथा च' नास्ति
2. इत्यर्थ इति अयमेवार्थः विशिष्टाद्वैत्यभिमतः।
3. मु. प्रजापतिरुवाच
4. मु. वर्षाणि

एष आत्मा' इति च जीवमेवावस्थान्तरगतं व्याचष्टे। तस्यैव च अपहतपाप्मत्वादि दर्शयति—'एतदमृतमभयमेतद्ब्रह्म' इति। 'नाह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि' (छा.उ. ८।११।१,२) इति च सुषुप्तावस्थायां दोषमुपलभ्य 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्मात्' इति चोपक्रम्य शरीरसंबन्धनिन्दापूर्वकं 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' इति जीवमेव शरीरात्समुत्थितमुत्तमंपुरुषं दर्शयति। तस्मात् अस्ति संभवो जीवे पारमेश्वराणां धर्माणाम्। अतः 'दहरोऽस्मिन्नन्तराकाशः' इति जीव एवोक्त इति चेत् कश्चिद्ब्रूयात्,

तं प्रति ब्रूयात् 'आविर्भूतस्वरूपस्तु' इति। तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः। न उत्तरस्मादपि वाक्यात् इह जीवस्याशङ्का संभवतीत्यर्थः। कस्मात्? यतः तत्रापि आविर्भूतस्वरूपो जीवो विवक्ष्यते। आविर्भूतं स्वरूपं अस्येत्याविर्भूतस्वरूपः। भूतपूर्वगत्या जीववचनम्। एतदुक्तं भवति—'य एषोऽक्षिणि' इत्यक्षिलक्षितं द्रष्टारं निर्दिश्य, उदशराव-

---

आत्मा' इत्यादि। तद्वचनं श्रुत्वा किञ्चित् गत्वा पुनःपरावृत्यागतं प्रति द्वात्रिंशत्संवत्सरब्रह्मचर्याज्ञायां [1]कृतायां तथा कृत्वा पुनरागतं प्रति एतद्वचनं 'एतं त्वेव ते' इत्युक्तिपूर्वकं 'यत्रैतत्सुप्तः समस्तः' इति। चतुर्थपर्याये पञ्चसंवत्सरं [2]ब्रह्मचर्यवासे सम्पन्ने 'एतं त्वेव ते' इत्युक्तिपूर्वकं प्रजापतेर्वचनं 'मघवन् मर्त्यं वा इदं शरीरम्' इत्यादि। चतुर्थपर्याये च परावृत्यागतस्येन्द्रस्य इदं सुषुप्तविषये तृतीयपर्याये दोषोद्भावनं नाहखल्वयमेवं सम्प्रत्यात्मानं जानातीत्यादि। अहेतिनिपात एवार्थकः। नैव जानाति। सम्प्रति - सुषुप्तौ। अज्ञानविषयमाह—अयमहमस्मीति नोएवेमानि भूतानीति। शरीरसम्बन्धनिन्दापूर्वकमिति। 'मघवन् मर्त्यं वा इदं शरीरं आत्तं मृत्युना' इत्येवंप्रकारेण।

---

1. मु. 'कृतायां' नास्ति 2. आ. ब्रह्मवासे

प्रजापतिविद्या प्रत्यगभिन्नब्रह्मस्वरूपबोधनपरा, न तु जीव एव सत्यकामत्वादीनां बोधनपरा-इति प्रतिपादयितुमुपक्रमते—**एतदुक्तं भवतीति ।**

**उदशरावब्राह्मणेनेति ।** इन्द्रविरोचनाभ्यां अपहतपाप्मत्वादिविशिष्टे आत्मनि पृष्टे प्रजापतिना 'य एषोऽक्षिणि पुरुषो दृश्यत एष [1]आत्मा एतदमृतमभयमेतद्ब्रह्म' इति प्रत्युक्तम्। अक्षिप्रेरकतया यच्चैतन्यं पुरुषाख्यमुपलभ्यते एतदेव प्रकृतात्मरूपमिति प्रजापतेराशयः। तस्मिन् वाक्ये तमाशयमज्ञात्वा, अक्षिगतः प्रतिबिम्बः प्रजापतिना प्रकृतात्मरूपतया निर्दिष्ट इति तयोर्भ्रमोऽभूत्[2], तथाभ्रान्तयोस्तयोः प्रश्नः—अक्षिप्रतिबिम्ब आत्मा चेत्, अप्स्वादर्शे च [3]यः प्रतिबिम्बो भासते अयं कः इति। किमक्षिप्रतिबिम्बादभिन्नः सन् अबादर्शादिप्रतिबिम्बोऽप्यात्मा उत तद्भिन्नोऽनात्मेति प्रश्नाभिप्रायः। तथा तयोः प्रश्नमुपलभ्य प्रजापतेः संमुग्धाकारं प्रतिवचः 'यो मयोक्तः [4]एष एव सर्वत्र प्रतिभासते' इति। तत्र संमुग्धाकारप्रतिवचने अयमभिप्रायः—यदि 'मया [5]अक्ष्युपलक्षितः चिन्मयः पुरुषो निर्दिष्टः, प्रतिबिम्ब इति तु भवतोः भ्रमः' इति प्रतिपाद्येत, तदा आरोपितपाण्डित्यगर्वितयोः मनसि खेदे सति उत्तरत्र प्रतिपाद्यमानार्थग्रहणं व्यग्रचित्ततया न स्यात्। यदि तु उत्तरमेव न दीयेत तदा अवमतिः कृता स्यात् इति पुनरपि चित्तक्षोभ एव। अतः उभयाशयानुसारेण प्रथमतः प्रतिवचनं दत्वा युक्त्या तयोः भ्रममपनेष्यामि - इति। तत्र प्रतिबिम्बभ्रममपनेतुं 'उदशराव आत्मानमवेक्ष्य योऽशोऽनवगत आत्मनः स पुनः प्रष्टव्यः' इति प्रजापतिनोक्तयोः तथाकृतवतोः प्रतिबिम्ब एवात्मेति पुनरपि भ्रमो दृढोऽभवत्। ततः प्रजापतिं किमपि न पृष्टवन्तौ। प्रजापतिना 'अहो बत अस्माभिः शरीरानुपातित्वादुदशरावप्रतिबिम्बोऽनात्मेति तन्न्यायेन चक्षुःप्रतिबिम्बोऽप्यनात्मेति बुद्धिर्भवत्विति

---

1. मु. आत्मेति होवाच

2. मु. 'अभूत्' नास्ति  3. मु. यो यः

4. **एष एव सर्वत्रेति** प्रजापतिनोक्तस्य आत्मनः सर्वान्तरत्वात् सर्वत्रप्रतिभासमानत्वसम्भवेन तथोक्तं इति भावः।

5. मु. चक्षुष्युपलक्षितः

ब्राह्मणेन एनं शरीरात्मताया व्युत्थाप्य 'एतं त्वेव ते' इति पुनःपुनः तमेव व्याख्येयत्वेनाकृष्य, स्वप्नसुषुप्तोपन्यासक्रमेण 'परं ज्योतिरुप-

---

नियुक्तौ प्रतिबिम्बदर्शनार्थं, पुनरपि तयोर्भ्रमो दृढोऽभवत्, अस्तु नाम, उपायान्तरमाचरिष्यामः' इत्यभिप्रायेण 'साध्वलंकृतौ सुवसनौ भूत्वा उदशराव आत्मानं पश्यतं' इति पुनरपि नियुक्तौ। तत्र प्रजापतेः 'मया ह्यमृताभयलक्षण आत्मा उपदिष्टः, शरीरं तु नानाविकारयुक्तं अपरिष्कारदशायां जुगुप्सितं हेयं परिष्कारदशायामुपादेयम्, अतः शरीरमेवानात्मा, तदनुपातिनः प्रतिबिम्बस्य अनात्मत्वमिति किमु वक्तव्यमिति निर्णयो भविष्यति' इत्यभिप्रायः। तथाकृतवतोस्तयोर्मध्ये विरोचनस्य शरीरमेवात्मेति भ्रमोऽभवत्। इन्द्रस्तु प्रतिबिम्ब एवात्मेति पुनरपि गृहीतवान्। प्रजापतिस्तु पुनरपि संमुग्धाकारमेव उपदिष्टवान् 'एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्म' इति, पूर्वोत्तरवाक्यपर्यालोचनया स्वगृहीतेऽर्थे विरोधस्फूर्तौ स्वयमेव मदभिप्रेतार्थग्रहणं भविष्यति, पुनरपि वा मम निकटमागमिष्यतः, तदा सम्यग्बोधयिष्यामीति[1]। तथा च प्रजापतितात्पर्यानुसारेण उदशरावब्राह्मणं शरीरात्मतायाः व्युत्थापकं भविष्यतीत्यर्थः।

ननु य एषोऽक्षिणीत्यत्र न द्रष्टा जीवो निर्दिश्यते, येन उदशरावब्राह्मणं शरीरविवेकोपयुक्तं स्यात्। अपि तु 'य एषोऽक्षिणि' इत्याद्युपकोसलविद्यागतवाक्यसारूप्यात् तदर्थप्रत्यभिज्ञानेन परमेश्वरः प्रथमपर्याये अक्षिगततयोपासनाय निर्दिश्यते; अत आह—**एतं त्वेव त इतीति**। अक्षिपर्यायनिर्दिष्टस्यैव व्याख्येयत्वमुपक्रम्य स्वप्नाद्यवस्थासम्बन्धिनः प्रतिपादनात् अक्षिपर्याये जीव एव निर्दिष्ट इत्यवगम्यते। न च उपकोसलविद्यावाक्यार्थप्रत्यभिज्ञानं प्रकृते परमेश्वरपरतानिर्णायकं सम्भवति। स्ववाक्यशेषानुसारेण जीवपरत्वेऽवगम्यमाने वाक्यान्तरप्रत्यभिज्ञाया अनिर्णायकत्वात्। 'य एषोऽक्षिणि' इत्येतदेव वाक्यं स्वतः प्रतिबिम्ब एव स्वरसं तद्वाक्यशेषानुसारेण जीव एव योजनीयम्। न च- 'यत्रैतत् सुप्तः' इति तृतीयपर्याये स्वापाधिकरणं यः स आत्मेति निर्दिश्यते, स्वापाधिकरणं च परमात्मैव - इति वाच्यम्। 'स्वमपीतो भवति' इति वाक्येन जीवस्यैव स्वापाधिकरणतायाः निरूपितत्वात् तदभेदेनैव परमात्मनोऽपि तदधि-

---

1, **इतीति** इत्यभिप्रायः सन् इत्यर्थः।

**संपद्य स्वेन रूपेणाभिनिष्पद्यते' इति यदस्य पारमार्थिकं स्वरूपं परं ब्रह्म तद्रूपतया एनं जीवं व्याचष्टे, न जैवेन रूपेण। यत् परं ज्योतिः उपसंपत्तव्यं श्रुतं तत् परं ब्रह्म, तच्च अपहतपाप्मत्वादिधर्मकं, तदेव**

---

करणत्वस्य वक्तव्यत्वात्। अतश्च त्रिषु पर्यायेषु जीव एव निर्दिश्यते। ततश्च उपक्रमगतमपहतपाप्मत्वादिप्रतिपादनं तत्तत्पर्यायगतं एतदमृतमभयमेतद्ब्रह्मेति प्रतिपादनं च तस्यैव पराभेदबोधनार्थमिति न प्रजापतिवाक्यपर्यालोचनया जीव एव अपहतपाप्मत्वादिगुणविशिष्टः दहरविद्योपास्य इति भावः।

ननु - यदि जीवस्य पराभेदबोधनार्थं अपहतपाप्मत्वादिरूपेण पर एव उपक्रमे निर्दिश्यते, तर्हि सूत्रे 'आविर्भूतस्वरूपो जीव इह निर्दिश्यते' इति [1]कथं उच्यत इति चेत्—

उच्यते—उपक्रमे पर एव निर्दिश्यते। परं तु 'अनन्तरं जीवनिर्देशः कथम्? परमात्मानमुपक्रम्य 'एतं त्वेव ते' इति च तमेव व्याख्येयत्वेन [2]उपस्थाप्य जीवनिर्देशस्यासङ्गतत्वात्' इत्याशङ्कायां जीवपर्यायाभिप्रायेणायं सूत्रकृतो निर्देशः 'आविर्भूतस्वरूपस्तु' इति। न उत्तरत्न जीवनिर्देश उपक्रमविरोधी। यदि शबलितो जीवो निर्दिष्टस्स्यात्, तदा खलु पराभेदो बाधितः स्यात्। इह तु अवस्थात्रयात् [3]विनिर्मुक्तो जीवः क्रमेण प्रतिपादितः, अवस्थात्रयविनिर्मुक्त एव आविर्भूतस्वरूप इत्युच्यते, स च परमात्मैवेति न उपक्रमस्य काचिदनुपपत्तिः। तदिदमाह—
**यदस्य पारमार्थिकं स्वरूपं परं ब्रह्म तद्रूपतयैनं जीवं व्याचष्ट इति।**

ननु - यदि जीवब्रह्माभेदबोधनपरं एतद्वाक्यं, तर्ह्युपक्रमे अपहतपाप्मत्वादिगुणकीर्तनं व्यर्थं स्यात्, इत्यत आह—[4]**यत् परं ज्योतिरुपसम्पत्तव्यमिति।** अयं भावः - परंज्योतिरुपसम्पद्येत्यत्र ज्योतिःपदं नादित्यादिज्योतिःपरमिति ज्योतिर्दर्शनादित्यत्र वक्ष्यते। ततश्च ज्योतिःपदेन परमात्मैव उपक्रम-

---

1. मु. कथं निर्दिश्यते। उच्यते
2. मु. उपक्षिप्य
3. मु. विविक्तः
4. आ. यत्तत्

च जीवस्य पारमार्थिकं स्वरूपं, 'तत्त्वमसि' इत्यादिशास्त्रेभ्यः, नेतरदुपाधिकल्पितम्। यावदेव हि स्थाणाविव पुरुषबुद्धिं द्वैतलक्षणामविद्यां निवर्तयन् कूटस्थनित्यदृक्स्वरूपमात्मानं अहंब्रह्मास्मीति न प्रतिपद्यते, तावत् जीवस्य जीवत्वम्। यदा तु देहेन्द्रियमनोबुद्धिसंघाताद्व्युत्थाप्य श्रुत्या प्रतिबोध्यते, 'नासि त्वं देहेन्द्रियमनोबुद्धिसंघातः, ना[पि](सि) संसारी, किं तर्हि, तद्यत्सत्यं स आत्मा चैतन्यमात्रस्वरूपः तत्त्वमसि' इति, तदा कूटस्थनित्यदृक्स्वरूपमात्मानं प्रतिबुध्य अस्माच्छरीराद्यभिमानात् समुत्तिष्ठन् स एव कूटस्थनित्यदृक्स्वरूप आत्मा भवति। 'स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति' (मु. उ. ३।२।९) इत्यादिश्रुतिभ्यः। तदेव चास्य परमार्थिकं स्वरूपं येन शरीरात्समुत्थाय स्वेन रूपेण अभिनिष्पद्यते।

कथं पुनः स्वं च रूपं स्वेनैव च निष्पद्यत इति संभवति कूटस्थनित्यस्य? सुवर्णादीनां तु द्रव्यान्तरसंपर्कादभिभूतस्वरूपाणां अनभिव्यक्तासाधारणविशेषाणां क्षारप्रक्षेपादिभिः शोध्यमानानां स्वरूपेणाभिनिष्पत्तिः स्यात्। तथा नक्षत्रादीनां अहन्यभिभूतप्रकाशानां अभिभावकवियोगे रात्रौ स्वरूपेणाभिनिष्पत्तिः स्यात्। न तु तथा आत्म-

---

गतः [1]तत्र गृह्यते। तेन 'मुक्तिकाले जीवस्य यावत्सर्वमुक्ति अपहतपाप्मत्वादिना ब्राह्मेण रूपेणावस्थानं, तदनन्तरं सर्वमुक्तौ निर्विशेषचिदात्मना अवस्थानम्' इत्यर्थो लभ्यते। अतः इह मुक्तप्राप्यं ज्योतिः अपहतपाप्मत्वादिरूपमिति द्योतयितुं अपहतपाप्मत्वादिरूपेण परमात्मा उपक्रमे दर्शित इति न तस्य व्यर्थताशङ्का। अयं चार्थो 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' इत्यादित्रिसूत्र्या अस्य स्पष्टो भविष्यति चतुर्थे।

**कथं पुनरिति।** नित्यस्य जीवस्य स्वरूपाभिनिष्पत्तिः उत्पत्तिरिति वक्तुं न शक्यते। अतः प्रागावृतस्य जीवस्वरूपस्य अभिव्यक्तिरिति वक्तव्यम्। तदपि न सम्भवति, असङ्गे स्वरूपावारकपदार्थसंसर्गायोगात्—इति शङ्कितुरभि-

---

1. तत्र—परञ्ज्योतिरुपसंपद्येति वाक्ये।

चैतन्यज्योतिषो नित्यस्य केनचिदभिभवः संभवति, असंसर्गित्वात् व्योम्न इव। दृष्टविरोधाच्च। दृष्टिश्रुतिमतिविज्ञातयो हि जीवस्य स्वरूपम्। तच्च शरीरादसमुत्थितस्यापि जीवस्य सदा निष्पन्नमेव दृश्यते। सर्वो हि जीवः पश्यन् शृण्वन् मन्वानो विजानन् व्यवहरति, अन्यथा व्यवहारानुपपत्तेः। तच्चेत् शरीरात्समुत्थितस्य निष्पद्येत प्राक्समुत्थानाद्दृष्टो व्यवहारो विरुध्येत। अतः किमात्मकमिदं शरीरात्समुत्थानं किमात्मिका वा स्वरूपेणाभिनिष्पत्तिरिति?

अत्रोच्यते—प्राग्विवेकविज्ञानोत्पत्तेः शरीरेन्द्रियमनोबुद्धिविषयवेदनोपाधिभिरविविक्तमिव जीवस्य दृष्ट्यादिज्योतिस्स्वरूपं भवति। यथा—शुद्धस्य स्फटिकस्य स्वाच्छ्यं शौक्ल्यं च स्वरूपं प्राग्विवेकग्रहणात् रक्तनीलाद्युपाधिभिरविविक्तमिव भवति, प्रमाणजनितविवेकग्रहणात्तु पराचीनः स्फटिकः स्वाच्छ्येन शौक्ल्येन च स्वेन रूपेण अभिनिष्पद्यत इत्युच्यते प्रागपि तथैव सन्; तथा-देहाद्युपाध्यविविक्तस्यैव सतो जीवस्य श्रुतिकृतं विवेकविज्ञानं शरीरात्समुत्थानं, विवेकविज्ञानफलं स्वरूपेणाभिनिष्पत्तिः केवलात्मस्वरूपावगतिः। तथा विवेका-

---

मानः। 'अहं करोमि जानामि' [1]इत्यादिजीवस्वरूपस्य प्रकटत्वात् आवरणकल्पनापि न सम्भवतीत्याह—**दृष्टविरोधाच्चेति**। सङ्ग्रहं विशदयति—**दृष्टीत्यादि**।

परमार्थतोऽसङ्गस्वभावेऽपि काल्पनिकोऽनादिसङ्गः आवारकस्य वस्तुनः सम्भवति, द्रष्टृभोक्तृस्वरूपस्य काल्पनिकस्य अनावृतत्वेऽपि असङ्गपरिपूर्णसुखात्मकस्य स्वरूपस्य आवृतत्वमपि सम्भवतीति अत्रोच्यतइत्यादिपरिहारस्याभिप्रायः।

श्रुतिकृतंविवेकविज्ञानमित्यादिना 'एषसम्प्रसादः' इति वाक्यं इत्थं व्याख्यातं भवति - एष सम्प्रसादः - जीवः अस्माच्छरीरात् समुत्थाय - शरीराद्विविक्तमात्मानं ज्ञात्वा वेदान्तविचारेण, स्वेन रूपेण अभिनिष्पद्यते-स्वेन विशुद्धचिन्मा-

---

1. **इत्यादिजीवस्वरूपस्य** — इत्यादिप्रतीतिसाक्षिकं यत् कर्त्रादिरूपं तदात्मकस्य जीवस्वरूपस्य।

विवेकमात्रेणैव आत्मनः अशरीरत्वं सशरीरत्वं च, मन्त्रवर्णात्—'अशरीरं शरीरेषु' (क. उ. १।२।२२) इति, 'शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते'(भ.गी.१३।३१) इति च सशरीरत्वाशरीरत्वविशेषाभावस्मरणात्। तस्मात् विवेकविज्ञानाभावादनाविर्भूतस्वरूपः सन् विवेकविज्ञानादाविर्भूतस्वरूप इत्युच्यते। न त्वन्यादृशावाविर्भावानाविर्भावौ स्वरूपस्य

---

आत्मना अभिव्यक्तो भवति - तादृक्स्वरूपगोचरसाक्षात्कारवान् भवति। तदनन्तरं परंज्योतिरुपसम्पद्यते। अत्र परंज्योतिरुपसम्पद्येति क्त्वाप्रत्ययार्थो न विवक्षितः।

ननु - क्त्वाप्रत्ययं यथाश्रुतं गृहीत्वाऽपि वाक्यं व्याख्यातुं शक्यम्। एषः - जीवः अस्माच्छरीरात् समुत्थाय - [1]शरीराद्विविक्तं आत्मानं परमात्माभेदेन साक्षात्कृत्य अनन्तरं यावत्सर्वमुक्ति [2]अपहतपाप्मादिरूपपरंज्योतिरात्मना अवस्थाय सर्वमुक्तौ स्वेन - विशुद्धेन रूपेण चिन्मात्रात्मना अवस्थितो भवति इति। एवं [3]प्रकारान्तरेणापि क्त्वाप्रत्ययं यथाश्रुतं स्वीकृत्य व्याख्यातुं शक्यते। अतः स्वेन रूपेणाभिनिष्पद्यत [4]इत्यत्रैव किमिति वृत्तिरूपः साक्षात्कारो विवक्षितः इति चेत्,

---

1. मु. शरीराद्विविक्ततया

2. मु. अपहतपाप्मत्वादिरूप

3. **प्रकारान्तरेणेति**—एष संप्रसादः अस्माच्छरीरात् समुत्थाय - वेदान्तश्रवणमननसंपादितेन विवेकविज्ञानेन देहात्माभिमानपरित्यागरूपं देहात्समुत्थानं कृत्वा, परञ्ज्योतिः परमात्मरूपं उपसम्पद्य - साक्षात्कृत्य, स्वेन रूपेण - निर्विशेषचिदात्मना अभिनिष्पद्यते - इत्येवंप्रकारेणेत्यर्थः। वक्ष्यते चैतत् प्रकारान्तरं ज्योतिर्दर्शनाधिकरणे।

4. इत्यत्रैव वृत्तिरूपः साक्षात्कारो न विवक्षितः इति चेत् - इति मु. पाठे, इत्यत्रैव वृत्तिरूपः साक्षात्कारो विवक्षितः इति न - इत्यर्थः। शरीरात्समुत्थाय इत्यत्र परञ्ज्योतिरुपसंपद्य इत्यत्र च उक्तप्रकारेण तद्विवक्षासंभवात् इति भावः। किमिति विवक्षितः - इति पाठेऽपि अयमेव भावः।

संभवतः, स्वरूपत्वादेव । एवं मिथ्याज्ञानकृत एव जीवपरमेश्वरयोर्भेदो न वस्तुकृतः, व्योमवदसङ्गत्वाविशेषात् ।

कुतश्चैतदेवं प्रतिपत्तव्यम् । यतः 'य एषोऽक्षिणि पुरुषो दृश्यते' इत्युपदिश्य 'एतदमृतमभयमेतद्ब्रह्म' इत्युपदिशति । योऽक्षिणि प्रसिद्धो द्रष्टा द्रष्टृत्वेन विभाव्यते सोऽमृताभयलक्षणाद्ब्रह्मणोऽन्यश्चेत्स्यात् ततोऽमृताभयब्रह्मसामानाधिकरण्यं न स्यात् । नापि प्रतिच्छायात्मा अयमक्षिलक्षितो निर्दिश्यते, प्रजापतेर्मृषावादित्वप्रसङ्गात् । तथा द्वितीयेऽपि पर्याये 'य एष स्वप्ने महीयमानश्चरति' इति न प्रथम-

---

उच्यते—पूर्वस्मिन् वाक्ये 'अशरीरो वायुरभ्रं विद्युत् स्तनयित्नुः अशरीराण्येतानि तद्यथैतान्यमुष्मादाकाशात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यन्ते' इति वाय्वादीनि अशरीरस्य समुत्थाने दृष्टान्ततयोपक्षिप्तानि । तत्र दृष्टान्तस्यायमर्थः—वाय्वादीनि प्रावृडन्ते आकाशे निलीनानि सन्ति पुनः प्रावृडारम्भे आकाशात्समुत्तिष्ठन्ति - ततो विविक्तानि किञ्चिदुपलभ्यन्ते । ततः परं ज्योतिः - प्रावृट्कालारम्भे सौरमतितीक्ष्णं ज्योतिः उपसम्पद्य - प्राप्य - स्वेन-वृष्टिप्रदेन रूपेण अभिनिष्पद्यन्ते - साक्षात्क्रियन्ते - इति । अत्र उपसम्पद्येतिशब्देन प्राप्तिर्विवक्षितेति दार्ष्टान्तिकेऽपि परंज्योतिरुपसम्पद्येत्यत्रैव प्राप्तौ विवक्षणीयायां 'स्वेन रूपेणाभिनिष्पद्यते' इत्यत्रैव साक्षात्कारो बिवक्षितः। [1]क्त्वाप्रत्ययो विवक्षितार्थश्चेत् [2]पूर्वोक्तगत्या अर्थो द्रष्टव्यः । यथाकथञ्चित् निर्विशेषविद्यानुगुणो वाक्यार्थो विवक्षणीय इत्यत्रैव परं भाष्यकारनिर्बन्धः ।

ननु - प्रथमपर्याये जाग्रदभिमानी पुरुषो निर्दिश्यत इति स्वीकारेऽपि कथमुत्तरत्र 'एतं त्वेव ते' इत्युपक्रम्य [3]स्वप्नदृङ्निरूपणं भवेत् । तयोर्भिन्नत्वात् । तत् अवश्यं 'एतं त्वेव ते' इति वाक्यस्य स्वारस्ये हातव्ये य एषोऽ

---

1. मु. क्त्वाप्रत्ययोऽपि

2. **पूर्वोक्तगत्या**—यावत्सर्वमुक्ति अपहतपाप्मादिरूपपरञ्ज्योतिरात्मनाऽवस्थाय इति रीत्या ।

3. मु. स्वप्ननिरूपणं

पर्यायनिर्दिष्टादक्षिपुरुषाद्द्रष्टुः अन्यो निर्दिष्टः, 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' इत्युपक्रमात् ।

किंच 'अहमद्य स्वप्ने हस्तिनमद्राक्षं नेदानीं तं पश्यामि' इति दृष्टमेव प्रतिबुद्धः प्रत्याचष्टे । द्रष्टारं तु तमेव प्रत्यभिजानाति 'य एवाहं स्वप्नमद्राक्षं स एवाहं जागरितं पश्यामि' इति । तथा तृतीयेऽपि पर्याये 'नाह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि' इति सुषुप्तावस्थायां विशेषविज्ञानाभावमेव दर्शयति, न विज्ञातारं प्रतिषेधति । यत्तु तत्र 'विनाशमेवापीतो भवति' इति, तदपि विशेषविज्ञानविनाशाभिप्रायमेव, न विज्ञातृविनाशाभिप्रायम् । 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्' (बृ. उ. ४।३।३०) इति श्रुत्यन्तरात् । तथा चतुर्थेऽपि पर्याये 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एव अन्यत्रैतस्मात्' इत्युपक्रम्य 'मघवन् मर्त्यं वा इदं शरीरम्' इत्यादिना प्रपञ्चेन शरीराद्युपाधिसंबन्धप्रत्याख्यानेन संप्रसादशब्दोदितं जीवं 'स्वेन रूपेणाभिनिष्पद्यते' इति ब्रह्मस्वरूपापन्नं दर्शयन् न परस्माद्ब्रह्मणोऽमृताभयस्वरूपात् अन्यं जीवं दर्शयति ।

---

क्षिणीति वाक्यं छायापुरुषमेव यथाश्रुततया प्रतिपादयतु ; इत्यत आह—किंचेति । तथा च जाग्रत्स्वप्नाभिमानिनोर्भेदाभावात् 'एतं त्वेव ते' इत्यस्य न स्वारस्यभङ्गः । 'मघवन् मर्त्यं वा इदं शरीरं' इत्यादिनेति आदिपदेन 'आत्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानम् , आत्तो वै सशरीरः प्रियाप्रियाभ्यां, न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति, अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति गृह्यते । अत्र, शरीरोपाधिकः प्रियाप्रियादिः सकलः संसारः इति शरीरसम्बन्धस्त्वात्मनोऽनृतः इति च प्रतिपाद्यते । अशरीरस्यैव शरीराधिष्ठानत्वप्रतिपादनेन शरीरसम्बन्धस्य मिथ्यात्वावगमात् । अशरीरमिति हि न शरीरान्यतापरम् । मर्त्यंशरीरममृतस्याधिष्ठानं इत्यत एव

केचित्तु परमात्मविवक्षायां 'एतं त्वेव ते' इति जीवाकर्षण-मन्याय्यं मन्यमानाः, एतमेव-वाक्योपक्रमसूचितमपहतपाप्मत्वादि-गुणकमात्मानं ते भूयोऽनुव्याख्यास्यामीति कल्पयन्ति। तेषां एतमिति संनिहितावलम्बिनी सर्वनामश्रुतिः विप्रकृष्येत भूयश्श्रुतिश्चोपरुध्येत, पर्यायान्तराभिहितस्य पर्यायान्तरेऽनभिधीयमानत्वात्। 'एतं त्वेव ते' इति च प्रतिज्ञाय प्राक्चतुर्थात्पर्यायात् अन्यमन्यं व्याचक्षाणस्य प्रजापतेः प्रतारकत्वं प्रसज्येत। तस्मात्, यत् अविद्याप्रत्युपस्थापितमपारमार्थिकं जैवं रूपं कर्तृत्वभोक्तृत्वरागद्वेषादिदोषकलुषितमनेकानर्थयोगि, तद्विलयनेन तद्विपरीतमपहतपाप्मत्वादिगुणकं पारमेश्वरं स्वरूपं विद्यया प्रतिपद्यते, सर्पादिविलयनेनेव रज्ज्वादीन्।

अपरे तु वादिनः पारमार्थिकमेव जैवं रूपमिति मन्यन्ते, अस्मदीयाश्च केचित्। तेषां सर्वेषां आत्मैकत्वसम्यग्दर्शनप्रतिपक्षभूतानां प्रतिषेधाय इदं शारीरकमारब्धम्-एक एव परमेश्वरः कूटस्थनित्यो विज्ञानधातुः अविद्यया माययामायाविवत् अनेकधा विभाव्यते नान्यो विज्ञानधातुरस्तीति। यत्त्विदं परमेश्वरवाक्ये जीवमाशङ्क्य प्रतिषेधति सूत्रकारः—'नासंभवात्' इत्यादिना, तत्रायमभिप्रायः—नित्यशुद्धबुद्धमुक्तस्वभावे कूटस्थनित्ये एकस्मिन्नसङ्गे परमात्मनि तद्विपरीतं जैवं रूपं व्योम्नीव तलमलादि परिकल्पितम्, तत् आत्मैकत्वप्रतिपादन-

---

अन्यतायास्सिद्धत्वात्। अतः अशरीरमिति शरीराधिष्ठानकालेऽपि तदभावं प्रतिपादयत् तन्मिथ्यात्वमेवोपहरति। इदं प्रकरणस्य प्रत्यगभिन्नब्रह्मपरत्वे एव समञ्जसम्।

अपरे तु वादिन इति। केचित्त्वितिपक्षस्तु - अन्येषां वाक्यानां प्रत्यगभिन्नवस्तुपरत्वेऽपि प्रजापतिवाक्यं न तत्परम्, अपहतपाप्मत्वादिकीर्तनवैयर्थ्यापत्तेः-इति। अयं तु पक्षो न कुत्रापि प्रत्यगभिन्नं वस्तु प्रतिपाद्यत इति - इति भेदः॥ १९॥

परैर्वाक्यैर्न्यायोपेतैः द्वैतवादप्रतिषेधैश्च अपनेष्यामीति, परमात्मनो जीवादन्यत्वं द्रढयति। जीवस्य तु न परस्मादन्यत्वं प्रतिपिपादयिषति, किं त्वनुवदत्येव अविद्याकल्पितं लोकप्रसिद्धं जीवभेदम्। एवं हि स्वाभाविककर्तृत्वभोक्तृत्वानुवादेन प्रवृत्ताः कर्मविधयो न विरुध्यन्त इति मन्यते। प्रतिपाद्यं तु शास्त्रार्थं आत्मैकत्वमेव दर्शयति 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' (ब्र. सू. १।१।३०) इत्यादिना। वर्णितश्चास्माभिः विद्वदविद्वद्भेदेन कर्मविधिविरोधपरिहारः॥ १९॥

## अन्यार्थश्च परामर्शः॥ २०॥

अथ - यो दहरवाक्यशेषे जीवपरामर्शो दर्शितः 'अथ य एष संप्रसादः' (छा० ८।६।४) इत्यादिः, स दहरे परमेश्वरे व्याख्यायमाने न जीवोपासनोपदेशो नापि प्रकृतविशेषोपदेश इति अनर्थकत्वं प्राप्नोतीति, अत आह—अन्यार्थोऽयं जीवपरामर्शः, न जीवस्वरूपपर्यवसायी। किं तर्हि? परमेश्वरस्वरूपपर्यवसायी। कथम्? संप्रसादशब्दोदितो जीवो जागरितव्यवहारे देहेन्द्रियपञ्जराध्यक्षो भूत्वा तद्वासनानिर्मितांश्च स्वप्नान् नाडीचरोऽनुभूय श्रान्तः शरणं प्रेप्सुः उभयरूपादपि

---

सम्प्रसादशब्दोदितो जीव इति। अनेन संदर्भेण एषसम्प्रसाद इतिवाक्यं दहरविद्यागतं एवं व्याख्यातम्—'अहरहर्वा एवंवित् स्वर्गं लोकमेति' इति पूर्ववाक्यप्रस्तुतः सुप्तो जीवः एष इति परामृश्यते। [1]तत्प्रकारः असाच्छरीरादित्यादिना निरूप्यते। अस्मात् स्थूलसूक्ष्मशरीरात् समुत्थाय, परं ज्योतिः सुप्तावुपसम्पद्य 'प्राज्ञेनात्मना सम्परिष्वक्तः' इति श्रुतिप्रसिद्धं, तदेव प्राज्ञात्मकं यत् स्वं रूपं 'स्वमपीतो भवति' इति श्रुतिसिद्धं तेन रूपेणाभिनिष्पद्यते। विशेषविज्ञानोपाधेरपगमात्। एष सुप्तजीवप्राप्यः प्राज्ञ आत्मा दहरविद्योपास्यः-इति। अनेन वाक्येन सुषुप्तजीवाधारत्वं परमात्मनो महिमा दर्शितो भवतीति न एतद्वाक्यपर्यालोचनया जीवो दहर इति सिध्यति॥ ॥ २०॥

---

1. तत्प्रकारः—स्वर्गलोकगमनप्रकारः।

शरीराभिमानात् समुत्थाय सुषुप्तावस्थायां परं ज्योतिः आकाशशब्दितं परं ब्रह्म उपसंपद्य विशेषविज्ञानवत्त्वं च परित्यज्य स्वेन रूपेण अभिनिष्पद्यते, यदस्योपसंपत्तव्यं परं ज्योतिः येन स्वेन रूपेण अयमभिनिष्पद्यते स एष आत्मा अपहतपाप्मत्वादिगुण उपास्यः - इत्येवमर्थोऽयं जीवपरामर्शः परमेश्वरवादिनोऽप्युपपद्यते ॥ २० ॥

## अल्पश्रुतेरिति चेत् तदुक्तम् ॥ २१ ॥

यदप्युक्तं—'दहरोऽस्मिन्नन्तराकाशः' इति आकाशस्याल्पत्वं श्रूयमाणं परमेश्वरे नोपपद्यते, जीवस्य तु आराग्रोपमितस्य अल्पत्वमवकल्पते-इति, तस्य परिहारो वक्तव्यः। उक्तो ह्यस्य परिहारः परमेश्वरस्याप्यापेक्षिकमल्पत्वमवकल्पत इति 'अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च' (ब्र. सू. १।२।७) इत्यत्र। स एवेह परिहारोऽनुसंधातव्य इति सूचयति। श्रुत्यैव चेदमल्पत्वं प्रत्युक्तं

---

दहरपुण्डरीकवेश्मगतत्वादेव दहरत्वे सिद्धे पुनर्दहरत्वकीर्तनं तस्य स्वाभाविकतासिद्ध्यर्थमिति शङ्कितुस्तात्पर्यम्।

परिहारस्यायमभिप्रायः—आत्मनो दहरत्वस्य कीर्तनं न स्वाभाविकताद्योतनार्थम्। [1]अपि तु, सद्विद्यायां 'स य एषोऽणिमा ऐतदात्म्यमिदं सर्वं' इति नवकृत्वोऽभ्यस्तं [2]तत् परमार्थगत्या विवक्षितम्, 'यो वै भूमा तदमृतं अथ यदल्पं तन्मर्त्यं' इति भूमविद्यागतेन वाक्येन अल्पत्वं निषिद्धं वैपुल्यं च प्रतिपादितम्, इत्यनयोर्विरोधे प्रसक्ते तत्परिहारार्थं अष्टमोऽध्याय आरब्धः। तत्र सद्विद्यागतमल्पत्वमनूद्य तस्य दहरपुण्डरीकवेश्मतोपाधिकता प्रतिपाद्यत इति, पुनःकीर्तनं सद्विद्यावाक्यगताल्पत्वानुवादः दहरपुण्डरीकोपाधिकत्वविधानार्थः। तत्प्रसङ्गात् उपासनमपि किञ्चित् प्रतिपादितमिति नैतावता जीवो दहर इति वक्तुं शक्यते। युक्तश्चायमेवार्थ इत्याह—श्रुत्यैव चेति।

---

1. अपित्विति विधानार्थः इत्युत्तरेण सम्बध्यते।

2. तत्—अणिमशब्दोक्तं दहरत्वम्। अणुत्वं तत् - इति आ. पाठे अणुत्वरूपं दहरत्वं इत्यर्थः।

प्रसिद्धेनाकाशेनोपमिमानया 'यावान् वा अयमाकाशः तावानेषोऽन्तर्हृदय आकाशः' इति ॥ २१ ॥

६ अनुकृत्यधिकरणम्

## अनुकृतेस्तस्य च ॥ २२ ॥

'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' (मु.उ. २।२।१०) इति समामनन्ति। तत्र, यं भान्तमनुभाति सर्वं यस्य च भासा सर्वमिदं विभाति स किं तेजोधातुः कश्चित्? उत प्राज्ञ आत्मेति विचिकित्सायां तेजोधातुरिति तावत् प्राप्तम्। कुतः? तेजोधातूनामेव सूर्यादीनां भानप्रतिषेधात्। तेजस्स्वभावकं हि चन्द्रतारकादि तेजस्स्व-

---

[1]अत्र अपहतपाप्मत्वादिगुणानां दहरपुण्डरीकान्तर्गतवस्त्वन्वयित्वेन प्रतीयमानतया दहराकाशान्तर्वर्तिन उपास्यत्वलिङ्गेन दहराकाशान्वयस्याभिभूततया [2]च भूताकाशपूर्वपक्षे अभिभूतता, जीवपूर्वपक्षे दहरत्वादिना अभिभूतता - इति पादसङ्गतिः ॥ २१ ॥

इति दहराधिकरणम् ॥ ६ ॥

'परं ज्योतिरुपसम्पद्येत्यत्र ज्योतिः परमेव भवति, तदेव उपक्रमगतापहतपाप्मादिस्वरूपं' इत्युक्तम्। अत्रापि परमात्मन एव ज्योतिस्स्वरूपत्वं निरूप्यत इति [3]सङ्गतिः।

तेजोधातुरितितावत्प्राप्तमित्यादि। नन्वत्र तेजोग्रहणे किं नियामकं, किंरूपं वा तत् तेजः। तत्र [4]न तावत् 'न तत्र सूर्यो भाति' इत्यनेन 'यस्मिन् सति सूर्यादयो न भान्ति' इत्यर्थकेन सूर्यादिज्योतिरभिभावकत्वं प्रतीतं तेजोलिङ्गम्। [5]तत्रेति न सतिसप्तमी, अपि तु विषयसप्तमी। कारकविभक्तित्वात्। सतिस-

---

1. मु. 'अत्र' नास्ति    2. मु. 'च' नास्ति
3. सङ्गतिः - प्रसङ्गसङ्गतिः।
4. मु. 'न' नास्ति    5. तत्रेतीति यत इत्यादिः।

प्तमीत्वपक्षे उपपदविभक्तित्वापत्तेः। तथा च सूर्याद्यभास्यत्वं ब्रह्मलिङ्गम्। ब्रह्मणः स्वत एव भासमानत्वात्। नापि, तस्मिन् भात्येव सर्वस्य चन्द्रसूर्यादेरनुभानं तेजोलिङ्गम्। तेजसः तेजःप्रतिघातकत्वेन तदनुसृत्य अन्यतेजोभानासम्भवात्। न चेदं ज्योतिः प्रसिद्धज्योतिष्ष्वन्तर्भवति। प्रसिद्धज्योतिरभिभावकत्वादिना तदतिरिक्तस्यैव कस्यचित् पूर्वपक्षे अवगम्यमानत्वात्। नाप्यप्रसिद्धमेव किञ्चित् कल्पनीयम्। कल्पनागौरवात्। तदनित्यत्वे च [1]तत्कारणान्तरकल्पनायां पुनरपि गौरवम्। नित्यत्वे चन्द्रतारकाद्यभावदशायामपि घटपटादिभानं स्यात्। अनुपलब्धिपराहतं चैतत्। अपिचायं मन्त्रः कठवल्ल्यां मुण्डके चाम्नायते। तच्च ब्रह्मप्रकरणम्। तत्र अलौकिकस्य ज्योतिषः प्रतिपादनं न प्रकरणोपयुक्तम्। अतः प्रकरणोत्कर्षं प्रकल्प्य तदुपासनाविधिः तत्फलं च कल्पनीयमित्यतिगौरवम्। 'तस्य भासा सर्वमिदं विभाति' इति च सर्वावभासकत्वं प्रतीयते। तदपि तेजःपक्षे न समञ्जसम्। चाक्षुषेष्वेवार्थेषु भानार्थं तेजोऽपेक्षा न सर्वत्र। न च सर्वशब्दः प्रकृतसूर्यादिपर इति नानुपपत्तिरिति वाच्यम्। तेजश्चाक्षुषेऽपि तेजसोऽनपेक्षणात्। तस्मात् अयुक्तोऽयं पूर्वपक्ष इति चेत्,

अत्रोच्यते—नतत्रेति नेयं विषयसप्तमी। भाधातूक्तज्ञाने ज्ञाधातूक्त इव विषयानपेक्षणात्। अतस्तत्र विषयापेक्षाजननाय भातीत्यस्य णिजर्थगर्भता आश्रयणीया। तथा च भासयतीत्यत्रेव विषयापेक्षा भवेत्। तद्वरं उपपदसप्तम्येव [2]भावलक्षणे भविष्यति। तथा च तस्मिन् सति सूर्यादिकं न भातीत्यर्थो लभ्यते।

नन्वेवं 'तस्मिन् सति सूर्यादिकं न भाति, तमनुभाति' इति परस्परविरुद्धं वाक्यार्थद्वयं आपद्यत इति चेत्—

न-' तस्मिन् सति न भाति ' इत्यनेन [3]तत्प्रयुक्तस्पष्टभाननिषेधाभ्युपगमात्। ततश्च तमनुभातीत्यनेन अर्थात् ' तमनुसृत्य अस्पष्टं भाति ' इति लभ्यते। तमेव भान्तमनुभातीत्यत्र सर्वशब्दः प्रकृतसूर्यादिपरः। सर्वनाम्नः सति सम्भवे

---

1. मु. तत्तत्कारणान्तर

2. भावलक्षणे इति भावः - क्रिया, लक्षणं - ज्ञापनं, तस्मिन्नर्थे गम्यमाने 'यस्य च भावेन भावलक्षणं' इति सूत्रेण सप्तमी इत्यर्थः।

3. तत्प्रयुक्तेति निषेधे अन्वेति। निषेधः - अभावः।

प्रकृतपरामर्शिताया: न्याय्यत्वात् । ततश्च सूर्याद्यस्पष्टभानहेतुत्वे सति तत्स्पष्टभानविरोधित्वं मन्त्रगतपादत्रयेण लभ्यते । इदं च ज्योतिष एव लिङ्गम् ज्योतिषामेव सौरादीनां दीपादिज्योतिस्स्पष्टभानविरोधित्वे सति तदस्पष्टभानहेतुत्वं प्रायेण दृष्टम् । अत: तेजोधातुरेव मन्त्रप्रतिपाद्य: ।

स च नित्यो न भवति । अपि तु सृष्ट्याद्युत्पन्नापञ्चीकृततेजसा सूर्यादिरिव [1]समुत्पद्यते । न च तथासति सूर्यचन्द्राद्यभावेऽपि पदार्थभानं स्यादिति वाच्यम् । तस्य [2]सूर्यचन्द्रादितेजोमण्डलमात्रनिष्ठत्वाभ्युपगमेन तदुदयाद्यनुविधाय्युदयादेरभ्युपगमात् । न च चन्द्रसूर्यादिषु स्पष्टं भासमानेषु तेषां स्पष्टभाननिषेध: कथमिव वक्तुं शक्यत इति वाच्यम् । चन्द्रसूर्यादिमण्डलेषु हि तदेव ज्योति: स्पष्टं भाति । 'चन्द्रसूर्यादय: स्पष्टं भान्ति' इति तु प्रकृतज्योतिर्विवेकाग्रहात् भ्रममात्रम् । एतेन अनुपलब्धिपराहतत्वं निरस्तम् ।

तस्यभासासर्वमिदंविभातीत्यत्र च सर्वपदमादित्यादिपरमेव । न च आदित्यादिभाने तेजसोऽनपेक्षेति पुनरप्यसाङ्गत्यमिति वाच्यम् । तस्यभासेत्यत्र न करणतृतीया, अपि तु साहित्यार्था । उपक्रमानुसारेण मन्त्रस्य ज्योति:परतानिर्णये सति तदनुसारेणोपपदविभक्तिग्रहणे विरोधाभावात् । ततश्च 'तस्य भासा [सह] सर्वमिदं विभाति' इति मन्त्रशेषेण प्रतिपादिते 'सूर्याद्यभावदशायामपि घटपटादिभासेत' इति शङ्का श्रुत्यैव [3]परास्ता भवति ।

अस्तु वा करणतृतीया तथाऽपि न दोष: । चाक्षुषत्वेनैव तेजोऽपेक्षाया: कल्पनात्, न तु तत्र तेजोभिन्नत्वमपि विशेषणीयम्, गौरवात् । तेजश्चाक्षुषेऽपि सर्वत्र विषये तेजस्संयोगस्य सुलभत्वात्, तेजोऽवयवान्तरेण तेजोऽवयवान्तरसंयोगस्य क्वापि तेजश्चाक्षुषे व्यतिरेकादर्शनात् ।

तथा च मन्त्रस्वारस्येन तेजस्येव प्रतिपाद्ये स्थिते तदुपासनादिकल्पनं न दोषाय । लिङ्गेन ब्रह्मप्रकरणबाधश्चोपपन्न एव ।

---

1. मु. समुत्पद्यत इति 2. मु. सूर्यचन्द्रादिमण्डल

3. **परास्तेति** प्रकृतस्य आदित्यादेरेव सर्वशब्देन प्रतिपादनात् तृतीयया करणत्वाप्रतिपादनाच्च तस्य घटपटादिभानाहेतुत्वसूचनात् तस्य सूर्यचन्द्रादिमण्डलनिष्ठत्वेऽपि तत्प्रयुक्तास्पष्टताकभानै: सूर्यचन्द्रादिभिरेव घटपटादीनां भानाङ्गीकारात् - इति भाव: ।

**भावके एव सूर्ये भासमाने अहनि न भासत इति प्रसिद्धम् । तथा, सह सूर्येण सर्वमिदं चन्द्रतारकादि यस्मिन् न भासते सोऽपि तेजस्स्वभाव एव कश्चिदित्यवगम्यते । अनुभानमपि तेजस्स्वभावक एवोपपद्यते, समानस्वभावकेष्वेवानुकारदर्शनात् । गच्छन्तमनुगच्छतीतिवत् । तस्मात् तेजोधातुः कश्चित्-इत्येवं प्राप्ते ब्रूमः—**

**समानस्वभावकेष्वेवानुकारदर्शनादिति ।** ननु—'षट्पदान्यनुनिष्क्रामति' 'छायेव तां भूपतिरन्वगच्छत्' इत्यादौ वेदे लोके च गोपुरुषयोरनुकारो निबध्यते । अतः कथं समानस्वभावकेष्वेवेति नियन्तुं शक्यम् ।

उच्यते—तत्र गोपुरुषयोः [1]विषमस्वभावत्वेऽपि समानक्रियत्वमस्त्येव । इह तु तदपि न सम्भवति । ब्रह्मपक्षे हि 'तमेवभान्तमनुभाति सर्वम्' इत्यत्र भास्वरतारूपा भा विवक्षितेति वक्तुं न शक्यते । नीरूपत्वात् ब्रह्मणः । अतो ज्ञानरूपा सेति वक्तव्यम् । तत्र वृत्तिरूपं ब्रह्मविषयं ज्ञानं यदि विवक्ष्येत, तदा विरोधः । ब्रह्मज्ञानबाध्यस्य सर्वस्य ब्रह्मज्ञानानुसारिज्ञानविषयत्वायोगात् । यदि स्वरूपज्ञानं विवक्ष्येत, तदाऽप्यनुपपत्तिरेव । ब्रह्मात्मज्ञानसदृशघटादिविषयज्ञानान्तराभावेन तमेवभान्तमित्यादिसमानक्रियत्वनिर्देशानुपपत्तेः । तमेवभान्तमिति भानाश्रयत्वनिर्देशोऽपि स्वरूपज्ञानपक्षे नोपपद्यते । तस्यभासेति व्यतिरेकनिर्देशोऽप्यनुपपन्न एव । तेजःपक्षे 'तत्र, तं, तस्य' इतितच्छब्दास्तु [2]तन्मन्त्रार्थपर्यालोचनलभ्यमेव तेजः परामृक्ष्यन्ति । न ह्ययमस्ति नियमः—त्यदादिभिः स्वसन्निहितमेव प्रकृतं प्रकरिष्यमाणं वा शब्दतो यत् तदेव परामर्शनीयमिति । 'तद्वति तत्प्रकारकत्वं' इत्यादिलक्षणवाक्येषु पुरुषभेदेन यदेव लक्ष्यस्वरूपपरिचायकतया बुद्धौ विपरिवर्तते, तत् सर्वं हि परामृश्यते । 'तेन रक्तं रागात्' [पा. सू. ४-२-१] इत्यादौ च सूत्रे [3]उदाहरणगतप्रकृत्यर्थपरामर्शकता सर्वनाम्न उपलभ्यते । न ह्यत्र लक्षणादौ ते ते अर्थाः तच्छब्दपरामर्शनीयाः पूर्वत्रोत्तरत्र वा तेषु तेषु सन्दर्भेषु शब्दतः सन्निहिता भवन्ति । अतः प्रकरणबाधेन तेजोधातुरेव लिङ्गबलात् मन्त्रार्थतया स्वीकर्तव्य इति ।

1. आ. विषमस्वरूपत्वेऽपि	2. मु. तन्मन्त्रपर्या

3. **उदाहरणं** 'काषायः पटः' इत्यादि ।

प्राज्ञ एवाऽयमात्मा भवितुमर्हति। कस्मात्? अनुकृतेः। अनुकरण-मनुकृतिः। यदेतत् 'तमेव भान्तमनुभाति सर्वम्' इत्यनुभानं, तत् प्राज्ञ-परिग्रहे अवकल्पते। 'भारूपः सत्यसंकल्पः' (छा. उ. ३।१४।२) इति हि प्राज्ञमात्मानमामनन्ति। न तु तेजोधातुं कंचित् सूर्यादयोऽनु-भान्तीति प्रसिद्धम्। समत्वाच्च तेजोधातूनां सूर्यादीनां न तेजोधातुमन्यं प्रति अपेक्षाऽस्ति यं भान्तमनुभायुः। न हि प्रदीपः प्रदीपान्तरमनु-

---

**यदेतत् तमेव भान्तमनुभाति सर्वमित्यनुभानमिति।** तमेवभान्तमनुभातिसर्वमित्यत्र हि 'तस्मिन् सति अस्पष्टंभाति'इत्यर्थपर्यवसानं दर्शयित्वा पूर्वपक्षिणा तेजोलिङ्गप्रतिपादकता तस्य वाक्यस्य [1]दर्शिता। [2]नेदमर्थपर्यवसानमक्षरानुगुणम्। अयं हि तत्र अक्षरार्थः प्रतिपाद्यते—एवकारबलात्तावत् 'स एव भाति नान्यः' इत्येकोऽर्थः, पुनश्च 'तमनुसृत्य अन्यत् भासते' इत्यपरः। द्वितीयार्थस्य च पर्य-वसानं, अन्यस्य सर्वस्य भानं तत्प्रयुक्तमिति तस्यभासेतिचतुर्थचरणेन क्रियते। न च 'अन्यत् न भासते' इति 'तद्भानमनुसृत्य अन्यत् भासते' इति च विरुद्धम्। ज्ञानरूपं हि ब्रह्म स्वत एव भासमानम्। जडं तु प्रपञ्चजातं भानर-हितमेव यद्यपि भवति, तथापि ज्ञानरूपे ब्रह्मणि अध्यासात् स्वावच्छिन्नेन ब्रह्मरूप-ज्ञानांशेन स्फुरति। अतः अध्यासपरिनिष्पन्नं स्वरूपमादाय अनुभातीत्युच्यते। अतः परमार्थतः कल्पनातश्च उभयमुपपद्यत इति न विरोधः। अत इदं ब्रह्मपक्ष एव समञ्ज-सम्। तेजःपक्षे तु नेदं वाक्यं समञ्जसमित्याह—**न तु तेजोधातुमिति।** सूर्यादय इति सर्वशब्दसङ्कोचमङ्गीकृत्योक्तम्। यथाश्रुते तु सर्वशब्दे सुतरामप्रसिद्धिः, चाक्षुषे-ष्वेव तेजसोऽपेक्षणात्। **समत्वाच्चेति।** न च चाक्षुषत्वात्तेजोऽपेक्षेति नियन्तुं श-क्यम्। तमश्चाक्षुषे तदनपेक्षणात्। यद्यपि चक्षूरूपं तेजः तत्राप्यस्ति, तथापि तद्भिन्नं तेजस्तत्र नापेक्षितम्। न च तमोभिन्नचाक्षुषे आलोकापेक्षेति वाच्यम्। दीप-प्रभातमस्सन्धिभागगते आलोकांशे तेजोऽन्तरसंयोगाभावेन अचाक्षुषतापत्तेः। अतः तमोभिन्नतेजोभिन्नवस्तुगोचरचाक्षुष एव तेजोऽपेक्षेति स्वीकर्तव्यमिति भावः।

---

1. आ. वर्णिता 2. मु. नेदमर्थवर्णनं

भाति । यदप्युक्तं समानस्वभावकेष्वनुकारो दृश्यत इति । नायमेकान्तः । भिन्नस्वभावकेष्वपि ह्यनुकारो दृश्यते । यथा-सुतप्तोऽयःपिण्डोऽग्न्यनुकृतिः अग्निं दहन्तमनुदहति, भौमं वा रजो वायुं वहन्तमनुवहतीति ।

अनुकृतेरिति अनुभानमसूसूचत् । तस्य चेति चतुर्थं पादं अस्य श्लोकस्य सूचयति । 'तस्य भासा सर्वमिदं विभाति' इति च तद्धेतुकं भानं सूर्यादेरुच्यमानं प्राज्ञमात्मानं गमयति । 'तद्देवा ज्योतिषां ज्योतिः आयुर्होपासतेऽमृतम्' (बृ. उ. ४।४।१६) इति हि प्राज्ञमात्मानमामनन्ति । तेजोऽन्तरेण तु सूर्यादितेजो विभातीति अप्रसिद्धम् । विरुद्धं च, तेजोऽन्तरेण तेजोऽन्तरस्य प्रतिघातात् ।

अथ वा, न सूर्यादीनामेव श्लोकपरिपठितानां इदं तद्धेतुकं विभानमुच्यते । किं तर्हि ? 'सर्वमिदम्' इत्यविशेषश्रुतेः सर्वस्यैवास्य नामरूपक्रियाकारकफलजातस्य या अभिव्यक्तिः सा ब्रह्मज्योतिस्सत्तानिमित्ता, यथा सूर्यादिज्योतिस्सत्तानिमित्ता सर्वस्य रूपजातस्याभिव्यक्तिः तद्वत् ।

'न तत्र सूर्यो भाति' इति च तत्रशब्दमाहरन् प्रकृतग्रहणं दर्श-

---

अपि चेह 'तमनुभाति सर्वम्' इत्येव नोच्यते । अपि तु 'तं भान्तम्' इत्यप्युच्यते । तथा च तद्भानानुसारि अन्यभानं [1]इत्युक्तं भवति । भानं चेह ज्ञानरूपमेव विवक्षितम् । तथा च अन्यभाने तेजस्वरूपापेक्षायामपि न तज्ज्ञानापेक्षेति न तेजःपक्षे इदं वाक्यं समञ्जसम् । **भिन्नस्वभावकेष्विति** । यदि त्वेतादृशस्थले क्रियासादृश्यं वर्तत इति अनुकारो भवतीत्युच्यते, प्रकृतेऽपि तर्हि क्रियासादृश्यं वर्तत एव । ब्रह्मचैतन्यमेव हि घटपटाद्यवच्छिन्नं घटादिभानमिति ब्रह्मभानघटादिभानयोः काल्पनिकभेदमादाय सादृश्योपपत्तेः ।

**तत्रशब्दमाहरन् प्रकृतग्रहणं दर्शयतीति** । न च 'तद्वति तत्प्रकारकत्वं' इत्यादाविव प्रकृते अप्रकृतार्थपरामर्शकतोचितेति युज्यते । द्विविधानि हि

---

1. मु. इत्युच्यते

यति । प्रकृतं च ब्रह्म 'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतम्' (मु. उ. २।२।५) इत्यादिना । अनन्तरं च—

'हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् ।
तच्छुभ्रं ज्योतिषां ज्योतिः तद्यदात्मविदो विदुः' ॥ इति ।

कथं तज्ज्योतिषां ज्योतिः इत्यत इदमुत्थितम्—'न तत्र सूर्यो भाति' इति ।

यदप्युक्तं सूर्यादीनां तेजसां भानप्रतिषेधः तेजोधातावेवान्यस्मिन्नवकल्पते सूर्य इवेतरेषामिति । तत्र तु, स एव तेजोधातुः अन्यो न संभवतीत्युपपादितम् । ब्रह्मण्यपि चैषां भानप्रतिषेधोऽवकल्पते । यतः,

---

सर्वनामानि-व्यवस्थितैकार्थानि अव्यवस्थितैकार्थानि च । तत्र [1]लक्षणवाक्यगतान्यनेकलक्ष्यसङ्ग्रहोपयोगीनि अव्यवस्थितैकार्थानीति तत्र बुद्धिस्थं यदेव [2]कस्यचिल्लक्ष्यं भवति तस्य परामर्श उचितो भवति । व्यवस्थितैकार्थपरेषु तु वाक्येषु लोकवेदयोः व्यवस्थितार्थानि सर्वनामानि । तानि च शब्दतः प्रकृतमेव स्वरसतः परामृशन्ति । तदलाभे प्रकरिष्यमाणमपि, यथा 'अथैष ज्योतिः' इत्यादौ । क्वचित्तु प्रसिद्धमेव प्रतिपादयन्ति, [3]यथा —'तौ राघवावाम्' इति वालिनं प्रति राघववचने । तत्र हि परशुरामधनुर्भञ्जकत्वादिना प्रसिद्धाविति विवक्षितम् । एवं स्थिते अस्मिन् मन्त्रे तत्पदस्य प्रकृतब्रह्मपरामर्शकतोपपत्तौ न स्ववाक्यपर्यालोचनलभ्यमेव ज्योतिः परामृश्यत इति वक्तुमुचितम् । तथाव्युत्पत्तेरभावेन क्लिष्टत्वात् ।

अपि च अपेक्षितार्थप्रतिपादनसम्भवे अनपेक्षितार्थप्रतिपादकता न वक्तव्या। तेजःपक्षे च अनपेक्षितार्थप्रतिपादनपरता स्यात्, अस्मिन् सन्दर्भे तदकीर्तनात् । ब्रह्मपक्षे तु [4]तदपि लभ्यते इत्याह–**अनन्तरं चेति ।**

**ब्रह्मण्यपि चैषामिति ।** येन 'तत्रेति सतिसप्तमी' इत्युच्यते,

---

1. आ. लक्षणवाक्यादि
2. **कस्यचिल्लक्ष्यं** कस्यचिल्लक्ष्यस्य परिचायकम् ।
3. मु. 'यथा' नास्ति
4. **तत्**—अपेक्षितार्थप्रतिपादनम् ।

यदुपलभ्यते तत् सर्वं ब्रह्मणैव ज्योतिषा उपलभ्यते, ब्रह्म तु नान्येन ज्योतिषा उपलभ्यते स्वयंज्योतिस्स्वरूपत्वात्, येन सूर्यादयः तस्मिन् भायुः। ब्रह्म हि अन्यद्व्यनक्ति नतु ब्रह्म अन्येन व्यज्यते। 'आत्मनैवायं ज्योतिषाऽऽस्ते' (बृ. उ. ४।३।६), 'अगृह्यो न हि गृह्यते' (बृ. उ. ४।२।४) इत्यादिश्रुतिभ्यः॥ २२॥

## अपिच स्मर्यते॥ २३॥

अपि च ईदृग्रूपत्वं प्राज्ञस्यैवात्मनः स्मर्यते भगवद्गीतासु—
'न तद्भासयते सूर्यो न शशाङ्को न पावकः।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम' (१५।६) इति,
'यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' (१५।१२) इति च
॥ २३॥

---

तेनापि स्पष्टमित्यध्याहारः समाश्रित एव। तथा च उपपदविभक्तित्वमप्याश्रयणीयं अध्याहारश्चेति दोषद्वयम्। मम तु वैषयिकाधारार्था कारकसप्तमीं वदतः अन्तर्भावितण्यर्थतामात्रं स्वीकर्तव्यं विषयापेक्षासमुन्मेषार्थमिति न उपपदविभक्तित्वस्वीकारप्रयुक्तो दोषः। एवं प्रकरणतत्पदश्रुतिसर्वावभासकत्वादिलिङ्गैः ब्रह्मपरतायां मन्त्रस्य निर्णीतायां 'तमेव भान्तं' 'तस्य भासा' इति भानाश्रयत्वं भानसम्बन्धित्वं च भानरूपेऽपि ब्रह्मणि यथाकथञ्चित् भेदकल्पनया योज्यमिति न काचिदनुपपत्तिः।

भानसम्बन्धित्वादिना च अब्रह्मलिङ्गेन पूर्वपक्षिकल्पितेन ब्रह्मलिङ्गानां सर्वावभासकत्वादीनामभिभूततया अस्पष्टब्रह्मलिङ्गता॥ २२॥

**न तत् भासयत इति**। तथा च उपबृंहणानुसारेणापि भातीति अन्तर्भावितण्यर्थम्, तत्रेति च विषयसप्तमी। **यदादित्यगतं तेज इति**। ननु - नेयं स्मृतिरिहोदाहर्तव्या। अत्र हि स्मृतौ 'जगदवभासिका आदित्यादिप्रभा परमात्मसम्बन्धिनी' इत्येतावत् प्रतिपाद्यते। नतत्रेतिश्रुतौ तु 'परमात्मस्वरूपभूतं यद्भानं तदेव घटपटाद्यवच्छिन्नं घटपटादिभानं भवति, न तु सर्वस्य प्रपञ्चस्य अन्यत् भानं विद्यते' इति। अतोऽनयोः श्रुतिस्मृत्योः उपबृंहणीयोपबृंहणभावः कथम्,

७ प्रमिताधिकरणम्

## शब्दादेव प्रमितः ॥ २४ ॥

'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' इति श्रूयते। [क. उ. २. ४. १२] तथा 'अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः। ईशानो भूतभव्यस्य स एवाद्य स उ श्वः। एतद्वै तत्' (क. उ. २।४।१३) इति च।

तत्र योऽयमङ्गुष्ठमात्रः पुरुषः श्रूयते स किं विज्ञानात्मा किंवा परमात्मेति संशयः। तत्र परिमाणोपदेशात् विज्ञानात्मेति तावत् प्राप्तम्। न हि अनन्तायामविस्तारस्य परमात्मनः अङ्गुष्ठ[मात्र]परिमाणत्वमुपपद्यते। विज्ञानात्मनस्तु उपाधिमत्त्वात् संभवति कयाचित्कल्पनया अङ्गुष्ठमात्रत्वम्। स्मृतेश्च—

'अथ सत्यवतः कायात् पाशबद्धं वशं गतम्।

अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् ॥' (म. भा. वनपर्व २९७।१७) इति। न हि परमेश्वरो बलात् यमेन निष्क्रष्टुं शक्यः।

---

[1]असमानार्थकत्वात् - इति चेत्, उच्यते—आद्यमेव वचनं [2]प्रकृतोपबृंहणम्। यदादित्येति वचनं तु दृष्टान्तार्थम्। यथा आदित्यादितेजः परमात्मसम्बन्धि - परमात्मशक्त्यधिष्ठितम्, एवं घटपटादिभानमपि परमात्मसम्बन्धि-परमात्मनः खिल्यभावः इति ॥ २३ ॥

इति अनुकृत्यधिकरणम् ॥ ७ ॥

**ज्योतिरिवाधूमक इति।** अधूमकं ज्योतिरिव प्रकाशमान इत्यर्थः। **स एवाद्य स उ श्व इति।** सर्वदा विद्यमानः - नित्य इति यावत्। त्वया यत् पृष्टं तत् एतद्वै-इति नचिकेतसं प्रति यमस्य वचनम्। पूर्वं यथा नतत्रेतिवचनस्य स्मृत्यनुसार्यर्थो वर्णितः, एवमस्यापि मन्त्रस्य स्मृत्यनुसारेण जीवपरत्वं वर्णनीयम्-इत्यभिप्रेत्याह—**स्मृतेश्चेति।**

---

1. **असमानार्थकत्वात्**—जडचिद्रूपविभिन्नार्थकत्वात्।
2. मु. प्रकृतोदाहरणम्

[1]ननु - अङ्गुष्ठमात्रत्वं जीवेऽपि स्वाभाविकं वक्तुं न शक्यते। अपित्वौपाधिकम्। जीवो हि स्वभावतो विभुरिति 'तद्गुणसारत्वात्' इत्यत्र प्रतिपादयिष्यते। एवमौपाधिकं ईश्वरेऽपि प्रतिपादयितुं शक्यम्। अतः कथं जीव एवाङ्गुष्ठमात्र इति निर्धारयितुं शक्यते। न च स्मृत्यनुसारेण तन्निर्णयः। तथासति श्रुतौ 'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः। ईशस्सर्वस्य जगतः प्रभुः [2]प्रीणाति विश्वभुक्' [महाना. उ. १६-५] इति ब्रह्मणोऽङ्गुष्ठमात्रत्वनिर्देशात् श्रुतिप्रसिद्धमेव [3]प्रत्यासत्त्या इहाङ्गुष्ठमात्रत्वं ग्राह्यं स्यात्।

नन्वङ्गुष्ठमात्र इति श्रुतौ 'अङ्गुष्ठं च समाश्रितः' इति वाक्यशेषपर्यालोचनया पादाङ्गुष्ठोपाधिकमेवाङ्गुष्ठमात्रत्वं परमात्मनो निर्दिश्यत इति गम्यते। भोजनानन्तरं पादाङ्गुष्ठोपरि जलप्रस्रावणार्थो ह्ययं मन्त्रः। अतः तत्र 'अङ्गुष्ठं च समाश्रितः' इति पादाङ्गुष्ठग्रहणमेव ह्युचितम्। 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' इत्यत्र तु हृदयोपाधिकं तत् प्रतीयते। अत्र ह्यात्मशब्दः शरीरपरः। यद्यप्यात्मपदम् 'आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि' इति अनेकार्थसाधारणम्, तथापि 'मध्ये' इति पदसमभिव्याहारात् सावयवस्य ग्रहणमुचितमिति सावयवो देह एव प्रकृते आत्मपदेन ग्राह्यः। तन्मध्यं च योग्यतया हृदयमेव भवति। अतो नानयोर्मन्त्रयोरर्थप्रत्यभिज्ञाऽस्ति। स्मृत्या त्वस्ति। तत्र मरणकाले अङ्गुष्ठमात्रत्वं निर्दिष्टम्। तदा च जीवो हृदयोपाधिक एव। 'स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति' [बृ. उ. ४. ४. १] इति हृदय एव मरणकाले प्रवेशप्रतिपादनात्। अतो हृदयोपाधिकमङ्गुष्ठमात्रत्वं निर्दिश्यमानं जीवस्यैवासाधारणमिति चेत्; न—'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः। हृदा मनीषा मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति' [श्वे. उ. ३.१३] इति श्वेताश्वतरे हृदयोपाधिकमप्यङ्गुष्ठमात्रत्वं परमात्मनो निर्दिष्टम्। अतः अङ्गुष्ठमात्रत्वं श्रुतिप्रसिद्धं परमात्मन एवेति स एवेहाङ्गुष्ठमात्रः स्यात्। यदि तु— 'स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः सञ्चरते स्वकर्मभिः। अङ्गुष्ठमात्रो रवितु-

---

1. अयं नन्वित्यादिशङ्काग्रन्थः 'परमात्मपरतैवास्त्विति चेत्' इत्यन्तः।

2. आ. प्रीणातु 3. **प्रत्यासत्त्या** - प्रथमोपस्थित्या।

स्यरूपः सङ्कल्पाहङ्कारसमन्वितो यः' [श्वे. उ. ५. ८] इति श्रुतौ जीवेऽपि अङ्गुष्ठमात्रत्वमुक्तम्—इत्युच्यते, तदा [1]अङ्गुष्ठमात्रत्वश्रुतेः हृदयोपाधिकायाः जीवब्रह्मसाधारण्येन प्रकृतमन्त्रस्य ईशानोभूतभव्यस्येतिवाक्यशेषानुसारेण परमेश्वर परतैवास्त्विति चेत्—

उच्यते—परमात्मनो हृदयोपाधिकत्वं नासाधारणम्, सर्वोपादानस्य सर्वनियन्तुः सर्वानुप्रवेशेन सर्वेण समत्वात्। उपासनार्थमपि हृदयमेव नासाधारणमायतनम्, चक्षुरादीनामपि तथात्वाम्नानात्। प्रत्युत उपासनोपयुक्तहृदयोपाधिकत्वेऽभ्युपगम्यमाने हृदयाग्रोर्ध्वसुषिरोपाधिकमणीयस्त्वमेव प्राप्नुयात्। तथा च श्रुतिः—'एष म आत्माऽन्तर्हृदयेऽणीयान्' इति, 'दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' इति च। जीवस्य तु अन्तःकरणोपाधिकत्वात् अन्तःकरणस्य हृदयपुण्डरीकात्मकगोलकनिष्ठत्वात् असाधारणं हृदयमायतनं भवतीति तदुपाधिकमङ्गुष्ठमात्रत्वं जीवे स्फुटम्। लोकेऽपि हि आत्मा हृदयदेश एव प्रसिद्धः। अत एव आत्मानं हृदयदेशे निर्दिशन्ति। नन्वेवमपि 'अङ्गुष्ठमात्रत्वं [2]उक्तगत्या [3]न्यायेन जीवपरम्' इति यावत् कल्प्यते तावत् वाक्यशेषानुसारेण परमात्मन एव तत् सिध्यतीति चेत्, न - 'ईशानो भूतभव्यस्य' इति वाक्यशेषोऽपि हि प्रकृते झटिति नेश्वरनिर्णयक्षमः। 'इतः [4]पूर्वमन्त्रे 'य इमं मध्वदं वेद आत्मानं जीवमन्तिकात्। ईशानं भूतभव्यस्य न ततो विजुगुप्सते एतद्वै तत्।' इति स्वशब्देनैव जीवं निर्दिश्य भूतभव्येशतायास्तत्राम्नानात् जीवगतं भूतभव्येशानत्वं यत् सङ्कुचितं स्वोपकरणविषयं तत्पर एव स मन्त्रभागो वक्तव्यः, तत्प्रत्यभिज्ञानात् अङ्गुष्ठवाक्येऽपि सङ्कुचितस्यैव तस्य ग्रहणमुचितम्' इतिशङ्काकलङ्कितस्य वाक्यशेषस्य ईश्वरनिर्णायकत्वासम्भवात्। अतः प्रथमश्रुतेनाङ्गुष्ठमात्रत्वेन जीव [5]एव स्वरसेन जीवे निर्णीते भूतभव्येशानत्वं चरमश्रुतं पूर्वमन्त्रानुसारेण जीवविषयतया प्रत्यभिज्ञायमानं च जीव एव यथाकथ-

---

1. **अङ्गुष्ठमात्रत्वश्रुतेः**—श्रूयमाणाङ्गुष्ठमात्रतायाः। 2. मु. उपक्रमगत्या
3. **न्यायेन**—'परमात्मनो हृदयोपाधिकत्वं न असाधारणम्' इति पूर्वोक्तयुक्त्या।
4. **पूर्वमन्त्रे**—व्यवहितपूर्वमन्त्रे - सप्तभ्यो मन्त्रेभ्यः पूर्वमन्त्रे।
5. मु. 'एव' नास्ति

तेन तत्र संसारी अङ्गुष्ठमात्रो निश्चितः, स एव इहापि-इत्येवं प्राप्ते ब्रूमः—

परमात्मैवायं अङ्गुष्ठमात्रपरिमितः पुरुषो भवितुमर्हति। कस्मात्, शब्दात् 'ईशानो भूतभव्यस्य' इति। न ह्यन्यः परमेश्वरात् भूतभव्यस्य निरङ्कुशमीशिता। 'एतद्वै तत्' इति च प्रकृतं पृष्टं इहानुसंदधाति। एतद्वै तत् यत् पृष्टं ब्रह्मेत्यर्थः। पृष्टं चेह ब्रह्म 'अन्यत्रधर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद'

---

श्चिद्याख्येयमिति। न चैवं - 'एतद्वै तत्' इति वाक्यशेषानुपपत्तिः, अन्यत्रधर्मादित्यादिना परमात्मन एव पृष्टत्वात् इति - वाच्यम्। तदुपयोगितया 'येयं प्रेते' इति जीवस्यापि पृष्टत्वात्। परमेश्वरवादिनाऽपि तथैव वक्तव्यम्। न ह्यत्र ईशानत्वादिना परमात्मा विवक्षितः। अन्यत्रधर्मादित्यादिना निर्विशेषस्यैव पृष्टत्वात्। परं तु तदुपयोगितया तत्पदवाच्यार्थनिरूपणं इति परमात्मपक्षे वक्तव्यम्, तत् पूर्वपक्षिणोऽपि त्वंपदार्थविषयत्वे इति न काचिदनुपपत्तिः।

**न ह्यन्यः परमेश्वरादिति।** अङ्गुष्ठमात्रत्वं परमात्मन्यपि सम्भवतीत्युत्तरत्र वक्ष्यति 'हृद्यपेक्षया' इति। यद्यपि तत् जीवे न्यायानुसारेण प्राप्नोति, तथाऽपि ईशानोभूतभव्यस्येति वाक्यशेषानुसारेण[1] परमात्मविषयमेवेति झटिति निर्णीयते। न्यायानुसारेण निर्णयमपेक्ष्य वाक्यशेषानुसारेणैव हि तं अभ्यर्हितं मन्यन्ते। [2]न चात्र वाक्यशेषोऽपि 'य इमं मध्वदं वेद' इति [3]मन्त्रविशेषानुसारेण सङ्कुचद्वृत्तिराश्रयणीयः, श्रुतिभङ्गकस्य प्रायपाठस्य [4]अनादरणीयत्वादिति भावः। **एतद्वैतदितिचेति।** यद्यपि तत्त्वंपदार्थनिरूपणमुभयमपि प्रकृतोपयुक्तम्, तथापि त्वंपदार्थस्य परिच्छिन्नतया स्वविभूतिस्वामित्वेन च लोकसिद्धत्वात् तेन रूपेण प्रतिपादनं न शास्त्रमपेक्षते, अपि तु असङ्गत्वादिरूपेण। तत्पदार्थस्तु वाच्यो लक्ष्यश्च शास्त्रेणैव व्युत्पादनीय इति अस्ति विशेष इति भावः।

---

1. मु. °णैव पर°
2. मु. न च वाक्य
3. मु. मन्त्रशेषानु°
4. मु. अनाश्रयणीय

(क. उ. १।२।१४) इति । शब्दादेवेति, अभिधानश्रुतेरेव ईशान इति परमेश्वरोऽयं गम्यत इत्यर्थः ॥ २४ ॥

---

**शब्दादेवेत्यभिधानश्रुतेरेवेति** । ईशानशब्दो हि परमेश्वरे योगरूढः । तथा च प्रकृते परमात्मविषयं न लिङ्गमात्रं भूतभव्येशानत्वम्, अपितु ईशान-श्रुतिरपि ।

ननु-नात्र ईशानपदस्य रूढ्यर्थग्रहो वक्तुं शक्यते, येन श्रुतिः स्यात् । योगरूढपदानां हि यत्र यौगिकार्थप्रतिसम्बन्ध्यर्थोपादानं न तत्र रूढ्यर्थविवक्षा । अत एव 'पद्मानि यस्याग्रसरोरुहाणि विकासयत्यूर्ध्वमुखैर्मयूखैः' इत्यत्र सरोरुहप-दातिरेकेण पद्मपदमुपात्तम्, सरोरुहपदयोगार्थप्रतिसम्बन्धिनो हिमवदग्रभागस्य यस्याग्रेत्युपादानात्—

उच्यते—रूढ्यर्थाविवक्षायां न योगार्थप्रतिसम्बन्ध्युपादानं अनुगतं प्रयोजकम् । तथा सति 'कुर्यां हरस्यापि पिनाकपाणेः धैर्यच्युतिं के मम धन्विनोऽन्ये' [1]इत्यत्र पिनाकपाणिपदगम्ययोगार्थप्रतिसम्बन्धिनोऽनुपादानात् तत्र रूढ्यर्थाविवक्षाकारणाभावात् हरस्येति पृथक्पदं नोपादीयेत ।

अपि च 'योगार्थप्रतिसम्बन्ध्युपादानमात्रं रूढ्यर्थाविवक्षायां कारणं' इति निर्बीजं कथं वक्तुं शक्यम् । न हि [2]तात्पर्याभावेन तद् व्याप्तम् । [3]तादृशव्याप्तेः निर्मूलत्वात् । न च तत् रूढ्यर्थप्रतिपत्तिप्रतिबन्धकम् । अतः 'पद्मानि यस्य' इत्यादौ रूढ्यर्थाविवक्षायां अन्यदेव कारणं वक्तव्यम् । [4]तत्र काव्यानां व्य-ञ्जनाप्रधानत्वात् व्यञ्जनोपयोगी योऽर्थः तत्रैव कवेस्तात्पर्यातिशय इति, यस्याग्र-सरोरुहाणीत्यत्र 'हिमवदग्रभागगतेषु सरस्सु विद्यमानानां विकसनं ऊर्ध्वमुखरविम-यूखकृतं' इति वर्णनं हिमवदौन्नत्यव्यञ्जनक्षममिति सरोरुहपदं तादृशव्यञ्जनो-पयुक्तं योगार्थमादायैव भवतीति कवेस्तत्रैव तात्पर्यमिति, रूढ्यर्थप्रतीतिर्झटिति न स्यादिति तदर्थं पुनः पद्मपदोपादानम् । एवंच सति पिनाकपाणेरित्यत्रापि हरस्येति पृथग्ग्रहणमुपपद्यते । पिनाकपाणिपदस्य शिवे शौर्यातिशयद्योतकतया

---

1. मु. इत्यत्रापि 2. **तात्पर्याभावेन** - रूढ्यर्थाविवक्षया ।
3. मु. 'तादृशव्याप्तेः' नास्ति.
4. **तत्र**—कारणे वक्तव्ये सति । उच्यत इति शेषः ।

कथं पुनः सर्वगतस्य परमात्मनः परिमाणोपदेश इति? अत्र ब्रूमः—

## हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥

सर्वगतस्यापि परमात्मनो हृदयेऽवस्थानमपेक्ष्य अङ्गुष्ठमात्रत्वमिदमुच्यते। आकाशस्येव वंशपर्वापेक्षमरत्निमात्रत्वम्। न ह्यञ्जसा अतिमात्रस्य परमात्मनः अङ्गुष्ठमात्रत्वमुपपद्यते। न चान्यः परमात्मन इह ग्रहणमर्हति ईशानशब्दादिभ्यः-इत्युक्तम्।

ननु प्रतिप्राणिभेदं हृदयानामनवस्थितत्वात् तदपेक्षमप्यङ्गुष्ठमात्रत्वं नोपपद्यत इत्यत उत्तरमुच्यते—मनुष्याधिकारत्वादिति। शास्त्रं

---

योगार्थपरत्वस्यैवाभिमतत्वात्। अतिशूरस्य पिनाकपाणेरपि धैर्यच्युतिं सम्पादयामि, किमु वक्तव्यं अन्यस्य धैर्यच्युतौ इति हि तत्र विवक्षितोऽर्थः। ततश्च, यत्र योगरूढं पदं व्यञ्जनाव्यापारव्यग्रं तन्निर्वाहकतया योगार्थमेवापेक्षते तत्र रूढ्यर्थाविवक्षा युक्ता। झटिति तदप्रतीतेः। नैवं प्रकृते वाच्यातिरेकेण अन्यार्थो विवक्षितः। परमात्मन एव मुख्यवृत्त्या गम्यमानस्य विवक्षाविषयत्वात्।

अपि च भूतभव्यस्येति ईशानपदे गुणभूतम्। न तेन प्रधानपदगतरूढेः परित्यागो न्याय्यः। पद्मानियस्येत्यत्र तु सरोरुहपदं अग्रपदमपेक्षते। न हि तेन विना व्यञ्जनोपयोगि हिमवदग्रभागगतसरस्सु विद्यमानत्वं अर्थो लभ्यते। अतस्तत्र यः पदस्वारस्यलभ्यो योगार्थः सोऽपि परित्यज्यत एव। पदस्वारस्यलभ्यस्य योगार्थस्य सामान्यरूपस्य निरङ्कुशत्वात्। तथा च विशेषणेनापि यस्याग्रेत्यनेन स्वापेक्षितेन यथा योगार्थसङ्कोचोऽपि सह्यते, एवं रूढ्यर्थपरित्यागोऽपि सोढव्यः। प्रकृते तु भूतभव्यपदं न योगलभ्यार्थसङ्कोचकम्। तदभावेऽपि ईशानपदेनैव सङ्कोचकाभावात् निरङ्कुशमैश्वर्यं लभ्यते। परं तु तत् सिद्धार्थानुवादमात्रमिति न तेन रूढ्यर्थसङ्कोचोऽङ्गीकर्तुं युक्तः। अतो युक्तं ईशानपदं प्रकृते श्रुतिरेवेति ॥ २४ ॥

हि अविशेषप्रवृत्तमपि मनुष्यानेवाधिकरोति, शक्तत्वादर्थित्वादपर्युदस्तत्वादुपनयनादिशास्त्राच्च - इति वर्णितमेतत् अधिकारलक्षणे (जै. सू. ६।१।) । मनुष्याणां च नियतपरिमाणः कायः, औचित्येन नियतपरिमाणमेव चैषामङ्गुष्ठमात्रं हृदयम् । अतो मनुष्याधिकारत्वाच्छास्त्रस्य मनुष्यहृदयावस्थानापेक्षमङ्गुष्ठमात्रत्वमुपपन्नं परमात्मनः ।

यदप्युक्तं परिमाणोपदेशात् स्मृतेश्च संसार्येवायमङ्गुष्ठमात्रः प्रत्येतव्य इति, तत्प्रत्युच्यते—'स आत्मा तत्त्वमसि' इत्यादिवत् संसारिण एव सतोऽङ्गुष्ठमात्रस्य ब्रह्मत्वमिदमुपदिश्यत इति । द्विरूपा हि वेदान्तवाक्यानां प्रवृत्तिः, क्वचित् परमात्मस्वरूपनिरूपणपरा क्वचित्

---

**मनुष्यानेवाधिकरोतीति** । मनुष्यग्रहणं [1]वक्ष्यमाणाधिकारवत्परं सत् त्रैवर्णिकानेव विषयीकरोति । शक्तिः-साङ्गप्रयोगानुष्ठानसामर्थ्यं तदभिव्यञ्जकं च [2]अग्निविद्यादिकं हिरण्यव्रीह्यादिकं च । तेन विद्यादिरहितानां व्यावृत्तिः । अर्थित्वादिति वीतरागव्यावृत्तिः । अपर्युदस्तत्वात् उपनयनादिशास्त्राच्चेति पतितशूद्रषण्डादिव्यावृत्तिः । **अधिकारलक्षणे**—पूर्वतन्त्रगतषष्ठाध्याये ।

**यदप्युक्तमित्यादि** । नन्वियं शङ्का, परमेश्वरेऽपि मनुष्यहृदयेऽन्तर्यामितया स्थिते हृदयोपाधिकमङ्गुष्ठमात्रत्वं सम्भवतीति हृद्यपेक्षयेतिसूत्रेण परिहृतैव । पुनः किमर्थमनूद्यते । कथं च तत्त्वमस्यादिवाक्यतुल्यताभ्युपगमेन परिहारोऽस्याः । तथासति अङ्गुष्ठमात्रपदं जीवपरं स्यात् । तथा च 'अतिमात्रस्यापि परमात्मनः अङ्गुष्ठमात्रत्वमुपपद्यते' इत्यादिभाष्यवाक्यं च विरुध्येत ।

उच्यते—पूर्वं 'केवलतत्पदार्थपर एवायं मन्त्रः' इति स्वीकृत्य सिद्धान्तपूर्वपक्षौ प्रवृत्तौ । तदनुगुणतया [3]'पूर्वोक्तमुपपन्नम्' । अधुना तु तत्त्वमस्यादिवाक्यसमानार्थक इति पक्षमादाय शङ्कासमाधानादिकमिति न काचिदनुपपत्तिः । युक्तश्चायमेव पक्षः । अस्मिन् पक्षे अङ्गुष्ठमात्रपदस्वारस्यहानाभावात् ।

---

1. **वक्ष्यमाणेति** अपशूद्राधिकरणे इत्यादिः ।
2. **अग्निविद्येति** द्वन्द्वः ।
3. मु. 'पूर्वोक्तमुपपन्नं' नास्ति

**विज्ञानात्मनः परमात्मैकत्वोपदेशपरा। तदत्र विज्ञानात्मनः परमात्मना एकत्वमुपदिश्यते, न अङ्गुष्ठमात्रत्वं कस्यचित्।**

**एतमेवार्थं परेण स्फुटीकरिष्यति—'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः। तं स्वाच्छरीरात्प्रवृहेत् मुञ्जादिवेषीकां धैर्येण। तं विद्याच्छुक्रममृतम्' (क. उ. २।६।१७) इति॥२५॥**

---

अस्मिन् पक्षे उत्तरमन्त्रैकार्थ्यं दर्शयति—**एतमेवार्थमित्यादिना।** अयं हि मन्त्रो जीवानुवादेन [1]परमात्मैक्यबोधपर एवेति अङ्गुष्ठमात्रपदं जीवपरमेव। 'तं स्वाच्छरीरात् प्रवृहेत्' इति हि 'स्वशरीराद्विविक्तं गृह्णीयात्' इत्यर्थकं सत् जीवलिङ्गमेव। देहविविक्ततया ज्ञातव्यत्वं हि तदविविक्ततया गृहीते जीव एवोचितम्। किं च एवंसति 'य इमं मध्वदं वेद' इति [2]पूर्वमन्त्रैकार्थ्यमपि लभ्यते। एवंचसति 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः। हृदा मनीषा मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति' इति श्वेताश्वतराणां मन्त्रोऽपि तत्त्वमस्यादिवाक्यसमानार्थकः।

अस्मिंश्च पक्षे अधिकरणमित्थं द्रष्टव्यम्—'अङ्गुष्ठमात्रः' इत्यादिर्मन्त्रः जीवस्य ईशानत्वेन उपासनापरः तत्त्वमस्यादिवाक्यसमानार्थको [3]वेति। तत्र 'अभेदपरत्वे जीवस्य विशिष्य अङ्गुष्ठमात्रत्वेनोपादानं व्यर्थं स्यात्' इति पूर्वपक्षे, 'अङ्गुष्ठमात्रत्वेन तदनुवादः परिच्छिन्नपरिमाणतायाः अपवादार्थं इति जीवब्रह्माभेदपरमेव' इति सिद्धान्त इति। हृद्यपेक्षयेति सूत्रमपि जीव एव औपाधिकाङ्गुष्ठमात्रतोपपादनपरमिति न काचिदनुपपत्तिः।

अङ्गुष्ठमात्रत्वेन जीवलिङ्गेन परमात्मलिङ्गस्य तदभेदलिङ्गस्य चेशानत्वस्य अभिभूतत्वात् अस्पष्टता॥ २५॥

**इति प्रमिताधिकरणम्॥ ८॥**

---

1. मु. परमात्मैक्यपर

2. **पूर्वमन्त्रेति** स हि मन्त्रः जीवपरमात्मैक्यबोधकः। 'जीवं ईशानं वेद' इत्युक्तेः। अत्र विशिष्टाद्वैतिभिः चकारोऽध्याहृतः स्वसिद्धान्तरक्षणाय-जीवं ईशानं च इति।

3. **वेतीति** संशय इति शेषः।

८ देवताधिकरणम्

## तदुपर्यपि बादरायणः संभवात् ॥ २६ ॥

**अङ्गुष्ठमात्रश्रुतिर्मनुष्यहृदयापेक्षया, मनुष्याधिकारत्वाच्छास्त्रस्य इत्युक्तं, तत्प्रसङ्गेनेदमुच्यते ।**

**बाढं मनुष्यानधिकरोति शास्त्रम्, न तु मनुष्यानेवेति इह ब्रह्मज्ञाने नियमोऽस्ति । तेषां-मनुष्याणां उपरिष्टात्-ये देवादयः तानप्यधिकरोति शास्त्रमिति बादरायण आचार्यो मन्यते । कस्मात् । संभवात् । संभवति हि तेषामप्यर्थित्वादि अधिकारकारणम् । तत्र अर्थित्वं तावत् मोक्षविषयं देवादीनामपि संभवति विकारविषयविभूत्यनित्यत्वालोचनादिनिमित्तम् । तथा सामर्थ्यमपि तेषां संभवति, मन्त्रार्थवादेतिहासपुराणलोकेभ्यो विग्रहवत्त्वाद्यवगमात् । न च तेषां कश्चित्प्रतिषेधोऽस्ति । न चोपनयनशास्त्रेण एषामधिकारो निवर्त्येत, उपनयनस्य वेदाध्ययनार्थत्वात्,**

---

प्रासङ्गिकीं सङ्गतिमाह—**अङ्गुष्ठमात्रश्रुतिरिति । तत्प्रसङ्गेनेति ।** 'मनुष्याधिकारत्वात्' इति श्रवणे हि 'मनुष्याणामेवाधिकारो नान्येषां' इति भ्रमः प्रसक्तः, तन्निवृत्तये इत्यर्थः । सूत्रे तदुपरीत्येतत् न 'तेषां-मनुष्याणां उपरि' इत्येतदर्थकं षष्ठीसमासरूपम् । 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन' [पा. सू. २. २. ११] इति अव्ययस्य षष्ठीसमासप्रतिषेधात् । अपि तु [1]तदिति लुप्तषष्ठीकं भिन्नं पदम् - इत्यभिप्रेत्य व्याचष्टे—**तेषामिति ।**

देवादीनां चेतनत्वादिसम्भवासम्भवाभ्यां ब्रह्मविद्याधिकारसंशये सिद्धान्तोपक्रममिदमधिकरणम् । पूर्वपक्षस्तु 'विरोधः कर्मणि' इत्यादिना दर्शयिष्यते ।

**सम्भवादिति ।** उत्सर्गप्राप्तस्य बाधानुपलम्भादित्यर्थः । **विकारविषयविभूतीति ।** अमरावत्यादिविकारगोचरैश्वर्येत्यर्थः । मन्त्रः-'सहस्राक्षो गोत्रभिद्वज्रबाहुः' इत्यादिः । अर्थवादः - इन्द्रप्रजापतिसंवादादिरूपः । इतिहासः-भारतादिः । पुराणं-विष्णुपुराणादि । लोकः-शिल्पशास्त्रम् ।

**उपनयनस्य वेदाध्ययनार्थत्वादिति ।** ननु न उपनयनं वेदाध्ययनमा-

---

1. मु. 'तदिति' नास्ति

**तेषां च स्वयंप्रतिभातवेदत्वात् । अपि चैषां विद्याग्रहणार्थं ब्रह्मचर्यादि दर्शयति–'एकशतं ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास' (छा. उ. ८।११।३), 'भृगुर्वै वारुणिः । वरुणं पितरमुपससार। अधीहि भगवो ब्रह्म' (तै. उ. ३।१) इत्यादि ।**

---

त्रार्थम् , अपि तु यानि वैदिकानि कर्माणि सन्ध्यावन्दनप्रभृतीनि [1]तत्सर्वार्थम् , अत एव मूकबधिरादीनामप्युपनयनं सम्भवद्वैदिककर्माधिकारसिद्ध्यर्थं [2]स्वीक्रियते । तथा च 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यादिभिर्वाक्यैः ब्राह्मणत्वादिसंयुक्तस्यैवोपनयनविधानात् तदभावे देवानां कथं वैदिक्यां ब्रह्मविद्यायां अधिकारस्स्यात् । अपि च अध्ययनाभावे स्वयंभातवेदत्वमात्रेण कथमधिकारः । [3]अध्ययनसंस्कृतस्यैव वेदस्य स्वकार्ये फलपर्यन्ते उपयुक्ततया स्वयम्भातवेदेन जातमप्यात्मतत्त्वज्ञानं नापरोक्षतापर्यवसायि भवेत् —

उच्यते—यान् प्रत्युपनयनं विहितं तान् प्रत्येव तत् वैदिककर्माधिकारप्रयोजकम् । अन्यथा शूद्रादीनां साधारणेषु धर्मेषु असाधारणेषु च तान् प्रत्येव विहितेषु अधिकारो न स्यात् । विद्यार्थोपनयनं तु देवादीनामप्यस्ति । 'तौ ह....समित्पाणी प्रजापतिसकाशमाजग्मतुः [छा. उ. ८. ७. २] एकशतं ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास' [छा. उ. ८. ११. ३] इति लिङ्गात् । अतः अष्टवर्षादिवाक्यविहितोपनयनस्य देवेष्वभावेऽपि न काचित् क्षतिः । स्वयंभातवेदानामपि जन्मान्तरकृताध्ययनसंस्कारस्य [4]अविनष्टतया न स्वाध्यायाध्ययनविधिविरोधः । अस्मिन्नपि हि जन्मनि क्रियमाणमध्ययनं न तत्कालमेव विचारादिषूपयुज्यते, अपि तु संस्कारद्वारैव । तथाच अध्ययनविधिरपि ' अध्ययनजन्यसंस्कारप्रयुक्तस्मृतिविषयीभूत एव स्वाध्यायः स्वकार्ये उपयुज्यते ' इत्येतावदेव बोधयतीति, स्वयंभातवेदानां देवानां अध्ययनसंस्कारजन्यस्मृतेर्विद्यमानतया नाधिकारानुपपत्तिः ।

वस्तुतस्तु संभवमात्रेणेदमुक्तम् । न तु देवानामध्ययननियमोऽपेक्षितः-'स्वाध्यायोऽध्येतव्यः' इति हि स्वशाखायामेवाध्ययननियमः । कथमन्यथा सर्ववेदा-

---

1. तत्सर्वेति कर्मधारयः ।　　2. मु. 'स्वीक्रियते' नास्ति
3. मु. अध्ययनसंस्मृत　　4. मु. अविशिष्टतया

यदपि कर्मस्वनधिकारकारणमुक्तम्—'न देवानां देवतान्तराभावात्' इति, 'न ऋषीणामार्षेयान्तराभावात्' (जै. सू. भा. ५.६.१) इति, न तत् विद्यास्वस्ति। न हि इन्द्रादीनां विद्यास्वधिक्रियमाणानां इन्द्राद्युद्देशेन किंचित्कृत्यमस्ति। न च भृग्वादीनां भृग्वादिसगोत्रतया। तस्माद्देवादीनामपि विद्यास्वधिकारः केन वार्यते। देवाद्यधिकारेऽप्यङ्गुष्ठमात्रश्रुतिः स्वाङ्गुष्ठापेक्षया न विरुध्यते ॥

**विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥**

स्यादेतत्, यदि विग्रहवत्त्वाद्यभ्युपगमेन देवादीनां विद्यास्वधिकारो वर्ण्येत, विग्रहवत्त्वादृत्विगादिवदिन्द्रादीनामपि स्वरूपसंनिधानेन

---

र्थोपसंहारेण क्रियमाणे कर्मणि अधिकारः। सर्वशाखोपेतसकलवेदानामध्ययनासम्भवात्, स्वपदार्थस्य विवक्षितत्वाच्च। पितृपितामहादिपरंपरागता च स्वीया शाखा न देवानामस्तीति न तेषु स्वाध्यायाध्ययननियमः प्रवर्तते - इत्यपि वक्तुं शक्यम्।

**न देवानां देवतान्तराभावादिति।** इन्द्रादयो देवाः कर्मसु नाधिक्रियन्ते। ऐन्द्रयागे हि इन्द्रमुद्दिश्य दध्यादिकं त्यक्तव्यम्। तत्र इन्द्रो नाधिक्रियते। इन्द्रेण स्वोद्देशेन द्रव्यत्यागायोगात्। स्वत्वनिवृत्त्यनुकूलो व्यापारो हि त्यागः। न चेन्द्रेण [1]स्वोद्देशेन कृते स्वत्वनिवृत्तिर्भवति। अतः अन्योद्देश एव स्वत्वनिवृत्त्युपयोगीति इन्द्रदेवत्ये [2]यागे नेन्द्रस्याधिकारः। एवं भृग्वादीनां गोत्रप्रवर्तकानामृषीणां नाधिकारः। तेषां स्वप्रवरभूतऋष्यन्तराभावेन 'त्रीन् वृणीते' इतिशास्त्रविहितार्षेय[3]वरणाङ्गासम्भवादित्यर्थः ॥ २६ ॥

नन्वत्र-अन्तःकरणाद्युपेतशरीराभावे देवानां विद्याधिकारो न सम्भवतीति तदुपपत्तये सिद्धान्तिना देवानां मन्त्रार्थवादप्रामाण्यमनुसृत्य शरीरे अभ्युगते, 'देवानां कर्माङ्गभूतानां यदि शरीरित्वमभ्युपगम्यते तदा ऋत्विगादिवत् कर्मसु

---

1. आ. स्वोद्देशे 2. आ. त्यागे
3. वरणाङ्गेति कर्मधारयः। मु. वरणाङ्गाभावा°

सन्निधानं स्यात् '-इत्यापाद्यते विग्रहमनभ्युपगच्छता पूर्वपक्षिणा। तत् नोपपद्यते। तथा हि—किमत्र सन्निधानापादकं शरीरित्वमात्रम्, उत अङ्गत्वविशिष्टम्। नाद्यः। न हि शरीरिणः सर्वस्य कर्मसन्निधानम्। असन्निहितानां शरीरिणां भूयसां [1]उपलम्भात्। न द्वितीयः। [2]शरीरीत्यंशस्य व्यर्थत्वात्। अङ्गत्वमेव हि कर्मसन्निधाने प्रयोजकम्। उपकार्योपकारकभावापन्नानां दण्डचक्रचीवरादीनां[3] समानदेशकालत्वं दृष्टमिति हि अङ्गप्रधानभावापन्नानां एकदेशकालत्वरूपं सन्निधानं स्वीक्रियते। तत्र शरीरित्वे सतीति व्यर्थम्। अत एव जुह्वादीनामशरीराणामपि कर्मसन्निधानं सिध्यति। तथा च यन्मते देवानां शरीरं नास्ति तेनापि अङ्गत्वादेव कर्मसन्निधानं स्वीकर्तव्यम्। तथा च तत्प्रयुक्तो दोष उभयोरपि तुल्य इति कथं विग्रहवत्त्वाभ्युपगम एव पूर्वपक्षिणा स आपाद्यते। यदि तु 'अङ्गस्य कर्मसु सन्निधानमित्युत्सर्गः, प्रवसद्यजमानकर्तृके विष्णुक्रमादौ असन्निधानस्यापि बाधकवशेनोपगमात्' इत्युच्यते, तत् ममापि तुल्यम्। न च-येन विग्रहोऽभ्युपगम्यते तेन शब्दातिरिक्तैव देवता स्वीकर्तव्या, तमनभ्युपगच्छता तु शब्दरूपत्वमपि स्वीकर्तुं शक्यत इति तस्याः कर्मकाले शब्दोच्चारणे सन्निधानमुपपद्यते, न तु तदर्थरूपायाः—इति वाच्यम्। विग्रहमनभ्युपगच्छताऽपि हि इन्द्रादिपदानामर्थोऽभ्युपगन्तव्यः। तथा च 'ऐन्द्रं दध्यमावास्यायाम्' इत्यादौ तद्धितार्थस्येन्द्रादिप्रातिपदिकार्थेनैवान्वयात् तस्यैव देवतात्वमभ्युपेतव्यं, न तु शब्दमात्रस्य। ननु - ऐन्द्रंदधीत्यत्र अयं वाक्यार्थः - चतुर्थ्यन्तपदप्रतिपाद्यमानेन्द्रसम्बन्धि दधि - इति। इन्द्रस्य दध्नश्च सम्बन्ध [4]उद्देशघटित एव। तथा च 'इन्द्रविषयकचतुर्थ्यन्तपदोद्देशतुल्यकालयजमानकर्तृकत्यागविषयो दधि' इति पर्यवसितोऽर्थः। तथा च अत्र कर्माङ्गतया उद्देश एव विधीयत इति स सन्निहितः - इति चेत्, तुल्यं विग्रहवादिनोऽपि। अतः कथं विग्रहवादिमत एव इन्द्रादिदेवानां कर्मसन्निधानमापाद्य अनुपलब्ध्यादिविरोध आशङ्क्यते - इति चेत्;

---

1. **उपलम्भादिति** स्वस्थान एव स्थित्वा धनदानयज्ञवाटरक्षणादिना कृतूपकारकाणां राजादीनां उपलम्भात् इति भावः।

2. **शरीरीत्यंशस्य**—शरीरित्वस्य।

3. **चीवरः** जीर्णपटः।                4. आ. उद्देश्य

**कर्माङ्गभावोऽभ्युपगम्येत। तदा च विरोधः कर्मणि स्यात्। न हीन्द्रादीनां स्वरूपसन्निधानेन यागेऽङ्गभावो दृश्यते। न च संभवति, बहुषु यागेषु युगपदेकस्येन्द्रस्य स्वरूपसंनिधा[नता](ना)नुपपत्तेरिति चेत्। नायमस्ति विरोधः। कस्मात्। अनेकप्रतिपत्तेः। एकस्यापि देवतात्मनो युगपदनेकस्वरूपप्रतिपत्तिः संभवति। कथमेतदवगम्यते। दर्शनात्। तथाहि—'कति देवाः' इत्युपक्रम्य 'त्रयश्च त्री च शता त्रयश्च त्री च सहस्रा' इति निरुच्य 'कतमे ते' इत्यस्यां पृच्छायाम् 'महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवाः' (बृ. उ. ३।९।१,२) इति निर्ब्रुवती श्रुतिः एकैकस्य**

---

एवम्मन्यते—येन हि मन्त्रार्थवादप्रामाण्यमुपेयते तेन इन्द्रागमनादिप्रतिपादकार्थवादादीनामपि तदेष्टव्यम्। एवं च तदाह्वानादिप्रतिपादकानां मन्त्राणामपि दृष्टार्थत्वमुपेयम्। नेदं तेषांस्वार्थेप्रामाण्यमनभ्युपगछता स्वीकर्तव्यमिति अस्ति विशेषः पूर्वपक्षसिद्धान्तिनोः। अतः कर्मणि विरोधः प्राप्नोतीति भावः।

**एकस्यापि देवतात्मन इति।** यद्यपि - मानान्तराविरोधे मन्त्रार्थवादानां स्वार्थे प्रामाण्यमभ्युपगतमिति, देवतागमनाद्यर्थप्रतिपादकानां मन्त्रार्थवादानामर्थस्यानुपलब्ध्यादिविरोधोऽस्ति चेत् तेषां स्वार्थे प्रामाण्यं नास्ति, इत्यपि परिहारो वक्तुं शाक्यत एव। एवंच सति 'आयाहीन्द्र' इत्यादिमन्त्राणामिन्द्राह्वानादिप्रतिपादकानां इन्द्रागमनाद्यर्थवत्त्वासम्भवात् अदृष्टार्थत्वमप्यस्तु इत्यपि वक्तुं शक्यम्। अनेनैवाभिप्रायेण देवतागमनमनभ्युपगम्यैव परिहारभागस्यार्थान्तरं वक्ष्यति 'अनेकप्रतिपत्तेर्दर्शनादित्यस्यापरा व्याख्या' इत्यादिना। अत्र [1]तु वस्तुगतिमनुसृत्य परिहारो दर्शित इति द्रष्टव्यम्।

दर्शनादित्येतत् सौत्रं पदं 'श्रुतिस्मृत्योः महिमविशेषवतां कायव्यूहदर्शनात्' इत्यर्थकतया व्याचष्टे **तथाहीति। कति देवा इति।** शाकल्येन 'वैश्वदेवशस्त्रे

---

1. तु शब्दः वैलक्षण्यद्योतकः पूर्वं यद्यपीत्युक्त्या तथाऽपिसमानार्थकः। तथा च, 'तथाऽप्यत्र' इत्युक्तं भवति।

प्रतिपाद्याः कति देवाः' इति [1]गूढाभिसन्धिना पृष्टे 'स ह एतयैव निविदा प्रतिपेदे, यावन्तो वैश्वदेवस्य निविद्युच्यन्ते त्रयश्च त्रीच शता त्रयश्च त्रीच सहस्रा' इति, सः - याज्ञवल्क्यः, यया निविदा[2]-मन्त्रविशेषेण देवतासंख्यामवगम्य तन्मन्त्रप्रतिपाद्याः कति देवा इति शाकल्येन पृष्टः, एतयैव निविदा शाकल्यं प्रत्युत्तरं दत्तवान्। उत्तरमेवाह—यावन्तो वैश्वदेवस्येति। तस्यैवार्थस्य विशेषेण प्रदर्शनं 'त्रयश्च त्रीणि च शतानि त्रयश्च त्रीणि च सहस्राणि' इति। पुनः पुनस्तदनन्तरं शाकल्येन देवताविषये संख्याप्रश्ने कृते, त्रयस्त्रिंशदिति षडिति त्रय इति द्वाविति अध्यर्ध इति एक इति च याज्ञवल्क्येनोत्तरितम्। पुनश्च 'तादृशसंख्याविशिष्टाः के ते' [3]इति प्रश्ने षडधिकत्रिशतोत्तरत्रिसहस्रसंख्याका ये पूर्वमुक्ताः ते [4]त्रयस्त्रिंशत एव महिमानः—[5]व्यूहाः। 'कतमे ते त्रयस्त्रिंशत्' इति प्रश्ने 'अष्टौ वसवः, एकादश रुद्राः, द्वादशादित्याः। तत्र अग्निपृथिवीवाय्वन्तरिक्षादित्यद्युचन्द्रनक्षत्राणि अष्टौ वसवः, सर्ववासहेतुत्वात्। एकादशेन्द्रियाणि एकादश रुद्राः, मरणकाले रोदनहेतुत्वात्। द्वादश मासा द्वादशादित्याः, परिपाचकतया सर्वेषामायूंष्यादाय यन्तीत्येते आदित्याः। अशनिपशुभ्यां सहिताः [6]त्रयस्त्रिंशत्। एते त्रयस्त्रिंशदपि [7]अग्न्यादिषुड्लोकान्तेषु षट्स्वन्तर्भवन्ति। तेऽपि षट् त्रिषु लोकेषु। ते त्रयोऽपि द्वयोरन्नप्राणयोरन्तर्भवन्ति। अध्यर्धशब्दार्थश्च [8]सर्ववृद्धिहेतुर्वायुः। स एवैकः प्राणः।

---

1. **गूढाभिसन्धिनेति** वैश्वदेवशस्त्रे निविदा प्रतिपाद्यान् देवान् अभिसन्धाय 'कति देवाः' इति पृष्टं न तु कण्ठत उक्तम्, अतो गूढोऽभिसन्धिः।

2. शस्यमानदेवतासङ्ख्यावाचकानि मन्त्रपदानि निविदित्युच्यन्ते।

3. आ. इति व्यक्तिविशेषप्रश्ने

4. **त्रयस्त्रिंशत इति** षष्ठ्यन्तं पदम्।

5. **व्यूहाः**—विभूतयः, विस्तराः। इत्युत्तरितं इति शेषः।

6. **त्रयस्त्रिंशदिति** इत्युत्तरितं इति शेषः।

7. **अग्न्यादयः**—अग्निपृथिवीवाय्वन्तरिक्षादित्याः।

8. **सर्ववृद्धीति** तथा च भाष्यम्-अस्मिन् वायौ सति इदं सर्वं अध्यार्ध्नोत्-अधि ऋद्धिं प्राप्नोति, तेन अध्यर्धः-इति।

देवतात्मनो युगपदनेकरूपतां दर्शयति। तथा त्रयस्त्रिंशतोऽपि षडाद्यन्तर्भावक्रमेण 'कतम एको देव इति, प्राणः' इति प्राणैकरूपतां देवानां दर्शयन्ती तस्यैवैकस्य प्राणस्य युगपदनेकरूपतां दर्शयति ।
तथा स्मृतिरपि—

'आत्मनो वै शरीराणि बहूनि भरतर्षभ ।
योगी कुर्याद् बलं प्राप्य तैश्च सर्वैर्महीं चरेत् ॥
प्राप्नुयाद्विषयान् कैश्चित् कैश्चिदुग्रं तपश्चरेत् ।
संक्षिपेच्च पुनस्तानि सूर्यो रश्मिगणानिव ॥'

इत्येवंजातीयका प्राप्ताणिमाद्यैश्वर्याणां योगिनामपि युगपदनेकशरीरयोगं दर्शयति। किमु वक्तव्यं आजानसिद्धानां देवानाम्। अनेकरूपप्रतिपत्तिसंभवाच्च एकैका देवता बहुभी रूपैः आत्मानं प्रविभज्य बहुषु यागेषु युगपदङ्गभावं गच्छति, परैश्च न दृश्यते अन्तर्धानादि[क्रिया] [शक्ति]योगादित्युपपद्यते ।

अनेकप्रतिपत्तेर्दर्शनादित्यस्य अपरा व्याख्या—विग्रहवतामपि कर्माङ्गभावचोदनासु अनेका प्रतिपत्तिर्दृश्यते। क्वचिदेकोऽपि विग्रहवान् अनेकत्र युगपदङ्गभावं न गच्छति, यथा बहुभिर्भोजयद्भिर्नैको ब्राह्मणो

---

अत्र प्रकरणे आद्यपर्याये षडधिकत्रिशतोत्तरत्रिसहस्राणि ये [1]दर्शिताः, ते त्रयस्त्रिंशतो व्यूहा एवेति भवत्यनेकप्रतिपत्तावुदाहरणम् । षडाद्यन्तर्भावस्तु, अधिकसङ्ख्यानामेव पुनः संग्रहविशेषेण परिगणनं [2]न व्यूहरूपः, इति द्योतयितुं षडाद्यन्तर्भावक्रमेणेत्युक्तम् । प्रकृतवाक्यतात्पर्यविषयीभूतस्त्वर्थः, प्राणदेवतायाः सर्वेष्वपि प्राणिषु वृद्धिहेतुतया आध्यात्मिकवायुरूपेण आत्मानं व्यूह्य अवस्थितत्वात् सर्वात्मकतेति, भवति तदपि अनेकप्रतिपत्तावुदाहरणम् । तदिदमाह— प्राणैकरूपतामित्यादिना । देवानामिति तु प्राणिमात्रोपलक्षणम् ॥ २७ ॥

---

1. आ. निदर्शिताः
2. न व्यूहेति विस्तारो हि व्यूहः, अन्तर्भावस्तु सङ्कोच इति भावः ।

युगपद्भोज्यते। क्वचिच्चैकोऽपि विग्रहवान् अनेकत्र युगपदङ्गभावं गच्छति, यथा बहुभिर्नमस्कुर्वाणैरेको ब्राह्मणो युगपन्नमस्क्रियते। तद्वदिह उद्देश-परित्यागात्मकत्वाद्यागस्य विग्रहवतीमप्येकां देवतामुद्दिश्य बहवः स्वं स्वं द्रव्यं युगपत्परित्यक्ष्यन्तीति विग्रहवत्त्वेऽपि देवानां न किञ्चित् कर्मणि विरुध्यते॥ २७॥

## शब्द इति चेन्न अतः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॥२८॥

मा नाम विग्रहवत्त्वे देवादीनामभ्युपगम्यमाने कर्मणि कश्चि-द्विरोधः प्रसञ्जि। शब्दे तु विरोधः प्रसज्येत। कथम्? औत्पत्तिकं हि

---

**औत्पत्तिकं हि शब्दस्येति।** अनेन 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यान-पेक्षत्वात्' इति जैमिनिसूत्रार्थः संगृहीतः। तस्य चायमर्थः—बादरायणग्रहणं पूजार्थम्। शब्दस्य अर्थेन—प्रतिपाद्येन सम्बन्धो [1]वाचकताशक्तिरूपः औत्पत्तिकः। यथा देवदत्तादिव्यक्तिविशेषे उत्पन्ने पिता [2]तत्र 'अयं देवदत्तः' इति सङ्केतयति, नैवं व्रीह्यादिशब्दः तेष्वर्थेषु केनचित् सङ्केतितः। अतस्तत्र शब्दार्थयोः सम्बन्धोऽसाङ्केतिकः। अतः सङ्केतार्थं बुध्यपेक्षाभावात् सापेक्षताल-क्षणमप्रामाण्यं न प्रसज्यते। तदिदमुक्तं अनपेक्षत्वादिति। अर्थे—अलौकि-कश्रेयस्साधनतादिरूपे अनुपलब्धे-प्रमाणान्तरानधिगते। अनेन ज्ञातार्थज्ञापकत्वं प्रामाण्यपरिपन्थि नास्तीत्युक्तम्। उपदेशः—विधिवाक्यम्। तस्य-श्रेयस्साधनता-दिरूपस्यार्थस्य, ज्ञानं-ज्ञानकरणम्। अनेन अज्ञापकत्वं प्रामाण्यपरिपन्थि निरस्तम्। अव्यतिरेकश्च-व्यतिरेको बाधः, तद्राहित्यम्। अनेन भ्रमसंशयरूपज्ञानजनकत्वं प्रामाण्यपरिपन्थि निरस्तम्। यतः औत्पत्तिकः शब्दस्यार्थेन सम्बन्धः, अतोऽन-पेक्षत्वात् तस्य ज्ञानमुपदेशः। अव्यतिरेकश्च यतः, अतोऽपि अर्थे अनुपलब्धे बादरा-यणस्य तत् प्रमाणम्-इति योजना जैमिनिसूत्रे द्रष्टव्या। अनेन सूत्रेण 'चोदना धर्मे प्रमाणमेव' इति यश्चोदनासूत्रार्थभागः स व्युत्पादितः।

---

1. मु. वाच्यवाचकता 2. मु. यत्र देवदत्त

**शब्दस्यार्थेन संबन्धं आश्रित्य 'अनपेक्षत्वात्' इति वेदस्य प्रामाण्यं स्थापितम्। इदानीं तु विग्रहवती देवता अभ्युपगम्यमाना यद्यप्यैश्वर्ययोगाद्युगपदनेककर्मसंबन्धीनि हवींषि भुञ्जीत, तथापि विग्रहयोगादस्म-**

---

[1]**विग्रहयोगादस्मदादिवज्जननमरणवतीति।** न च विग्रहादिमत्त्वेऽपि नित्यत्वं शङ्कनीयम्। विग्रहस्य सावयवस्य भावकार्यतया अनित्यत्वावश्यंभावेन तद्विशिष्टस्येन्द्रादिशब्दार्थस्यानित्यत्वापातात्। न च-स्थूलशरीरस्यानित्यत्वेऽपि तदन्तःकरणादिरूपसूक्ष्मशरीरविशिष्टैव व्यक्तिः इन्द्रादिपदवाच्या, सूक्ष्मशरीरस्य च [2]प्रलयेऽपि वासनारूपेण विद्यमानत्वात् नानित्यतादोषापत्तिः-इति वाच्यम्। त्वया हि देवानां विग्रहादिकं ब्रह्मविद्याधिकारसिद्ध्यर्थमुपेयते। ततश्च इन्द्रादेर्ब्रह्मविद्याधिकारित्वेन ब्रह्मविद्यया मुक्त्यवश्यंभावेन तदानीं इन्द्रान्तरमेव तदधिकारे समायातीति वक्तव्यम्। अन्यथा पूर्वभावीन्द्रमुक्त्यनन्तरं इन्द्रपदं निरर्थकमेव स्यात्। तथा च इन्द्रव्यक्तिभेदे तन्मुक्त्यभ्युपगमवादिना अवश्यवक्तव्ये, तत्रानुगतस्य धर्मस्य व्रीहित्वादिवदनुपलम्भात् इन्द्रादिपदानां डित्थादिपदवद्व्यक्तिवाचित्वस्य [3]अभ्युपेयतया पुनःपुनरुद्भूते व्यक्तिविशेषे इन्द्रादिपदं कश्यपादिभिस्सङ्केतितं [4]इति वक्तव्यम्। तथा सति सापेक्षतापत्त्या वेदप्रामाण्यविरोधः।

नन्विन्द्रादिपदस्य कश्यपादिसङ्केतविषयार्थप्रतिपादकत्वेन पुरुषबुद्ध्यपेक्षत्वेऽपि को दोषः। व्युत्पत्तिरूपपुरुषबोधापेक्षं हि बोधजनकत्वं उपेयत एव [5]वेदस्य। परं तु स्वप्रामाण्यस्य मूलभूतप्रमाणान्तरापेक्षैव दोषावहा, तथात्वे तादृशप्रमाणस्यानुपलम्भेन प्रामाण्यस्य वेदे अनिर्व्यूढत्वप्रसङ्गात् इति चेत्,

उच्यते—पुरुषान्तरसङ्केतितार्थप्रतिपादकत्वे इन्द्रादिपदानामभ्युपगम्यमाने सङ्केतयितृपुरुषाणामव्यवस्थितत्वेन बहूनां सङ्केतविषयत्वे सति क इन्द्रः प्रकृते [6]यागे देवतेति निर्धारणं न स्यात्। अतः सङ्केतसापेक्षत्वे इन्द्रादिशब्दानां वेदस्य अननुष्ठानलक्षणमप्रामाण्यं प्रसज्येतेति।

---

1. आ. विग्रहादियोग  2. मु. लयेऽपि  3. आ. अप्युपेयतया
4. मु. 'इति' नास्ति  5. मु. वेदवाक्यस्य  6. मु. यागदेवतेति

दादिवज्जननमरणवती सेति नित्यस्य शब्दस्य नित्येनार्थेन नित्ये संबन्धे प्रतीयमाने यद् वैदिके शब्दे प्रामाण्यं स्थितं तस्य विरोधः स्यादिति चेत्—

नायमप्यस्ति विरोधः। कस्मात्। अतः प्रभवात्। अत एव हि वैदिकाच्छब्दात् देवादिकं जगत् प्रभवति।

ननु 'जन्माद्यस्य यतः' (ब्र. सू. १।१।२) इत्यत्र ब्रह्मप्रभवत्वं जगतोऽवधारितं, कथमिह शब्दप्रभवत्वमुच्यते। अपिच यदि नाम वैदिकाच्छब्दादस्य प्रभवोऽभ्युपगतः, कथमेतावता विरोधः शब्दे परिहृतः,यावता वसवो रुद्रा आदित्या विश्वेदेवा मरुत इत्येतेऽर्था अनित्या एव उत्पत्तिमत्त्वात्। तदनित्यत्वे च तद्वाचिनां वैदिकानां वस्वादिशब्दानां अनित्यत्वं केन निवार्यते। प्रसिद्धं हि लोके देवदत्तस्य पुत्रे उत्पन्ने यज्ञदत्त इति तस्य नाम क्रियत इति। तस्माद्विरोध एव शब्द इति चेत्, न-गवादिशब्दार्थसंबन्धनित्यत्वदर्शनात्। न हि गवादिव्यक्तीनामुत्पत्तिमत्त्वे तदाकृतीनामप्युत्पत्तिमत्त्वं स्यात्। द्रव्यगुणकर्मणां हि व्यक्तय एवोत्पद्यन्ते नाकृतयः। आकृतिभिश्च शब्दानां संबन्धो न व्यक्तिभिः। व्यक्तीनामानन्त्यात् संबन्धग्रहणानुपपत्तेः। व्यक्तिषूत्पद्यमानास्वपि आकृतीनां नित्यत्वात् न गवादिशब्देषु कश्चिद्विरोधो दृश्यते। तथा देवादिव्यक्ति-

---

'अतः प्रभवात्' इत्यनेन शब्दस्य ब्रह्मवत् कारणत्वं विवक्षितमिति भ्रान्त्या शङ्कते—**नन्विति**। शब्दप्रभवत्वेऽभ्युपगम्यमाने जन्मादिसूत्रविरोध उद्भावितदोषापरिहारश्च इत्याशङ्कितम्। तत्र द्वितीयां शङ्कां परिहरति—**गवादिशब्दार्थसम्बन्धेति**। सङ्ग्रहं विवृणोति—**न हीति**। **व्यक्तीनामानन्त्यादिति**। यदा वृद्धव्यवहारेण एकस्यां व्यक्तौ शक्तिर्गृह्यते, तदा व्यक्त्यन्तरस्यानुपस्थितत्वेन तत्र शक्तिग्रहासम्भवात् व्यक्त्यन्तरमुद्दिश्य प्रवृत्ताच्छब्दात् तदर्थबोधो न स्यात्। अतः सर्वव्यक्त्यनुस्यूतायां जातावेव शक्तिग्रहः। इदं तु केवलव्यक्तिवाचित्व एव दूषणम्।

प्रभवाभ्युपगमेऽप्याकृतिनित्यत्वात् न कश्चित् वस्वादिशब्देषु विरोध इति द्रष्टव्यम्। आकृतिविशेषस्तु देवादीनां मन्त्रार्थवादादिभ्यो विग्रहवत्त्वाद्यवगमादवगन्तव्यः। स्थानविशेषसंबन्धनिमित्ता[वा](श्च)इन्द्रादिशब्दाः सेनापत्यादिशब्दवत्। ततश्च यो यः तत्तत्स्थानमधिरोहति स स इन्द्रादिशब्दैरभिधीयत इति न दोषो भवति।

न चेदं शब्दप्रभवत्वं ब्रह्मप्रभवत्ववत् उपादानकारणत्वाभिप्रायेणोच्यते। कथं तर्हि? स्थिते वाचकात्मना नित्ये शब्दे नित्यार्थसंबन्धिनि शब्दव्यवहारयोग्यार्थव्यक्तिनिष्पत्तिः 'अतः प्रभवः' इत्युच्यते।

कथं पुनरवगम्यते शब्दात् प्रभवति जगदिति। प्रत्यक्षानुमानाभ्याम्। प्रत्यक्षं श्रुतिः, प्रामाण्यं प्रत्यनपेक्षत्वात्। अनुमानं स्मृतिः, प्रामाण्यं प्रति सापेक्षत्वात्। ते हि शब्दपूर्वां सृष्टिं दर्शयतः। 'एते इति

---

यदि तु घटादिशब्दात् [1]घटत्वप्रकारकघटविशेष्यकोपस्थितेः अनुपपत्त्यनुसन्धानं विनैव सर्वत्र जायमानायाः लक्षणाव्यापाराधीनत्वानुपपत्तेः तत्तद्धर्मं प्रवृत्तिनिमित्तीकृत्य [2]व्यक्तौ शक्तिग्रह इष्यते, तदा नायं दोषः। गोत्वावच्छेदेनैव आदौ शक्तेर्गृहीततया व्यक्त्यन्तरेऽपि शक्यतावच्छेदकसत्त्वेन बोधोपपत्तेः। **आकृतिविशेषस्त्विति।** सहस्राक्षत्वाद्यभिव्यङ्ग्यो जातिविशेष इन्द्रत्वादिरित्यर्थः। **स्थानविशेषेति।** दिक्पालाधिपतित्वादिरूपोपाधिविशेष इत्यर्थः। जन्मादिसूत्रविरोधं परिहरति—**न चेदं शब्दप्रभवत्वमिति।** ब्रह्मणो ह्येकस्यैव उपादानत्वं निमित्तत्वं चेत्युभयरूपं कारणत्वं जन्मादिसूत्रेण निबद्धम्, अनेन तु सूत्रेण 'यथा शिल्पी शिल्पशास्त्रं दृष्ट्वा देवताप्रतिकृतीस्सृजतीति तत्र शिल्पशास्त्रानुसन्धानस्य स्रष्टव्यसमानाकारार्थज्ञानजननोपयोगात् परम्परया शब्दस्योपयोगः, एवमिहापि परम्परया तद्द्रष्टव्यम्' इत्युच्यत इति भावः। **एत इति वै प्रजापतिर्देवानसृजतेति।** 'एते असृग्रमिन्दवस्तिरःपवित्रमाशवः। विश्वान्यभिसौभगा' इतीयमृक् पठ्यते। तदन्तर्गतैः पदैः प्रकृते सृष्टिरुच्यते।

---

1. मु. घटत्वप्रकारकोपस्थितेः 2. मु. व्यक्तावेव

ननु—तत्तदर्थासाधारणाकारप्रतिपादकेन शब्देन तं तमर्थं स्मृत्वा सोऽर्थः प्रजापतिना सृज्यत इति वक्तव्यम्। एतन्मन्त्रान्तर्गतानां च पदानां न [1]तत्तद्देवताकारपरामर्शकता सम्भवति। अपि चायं मन्त्रः सोमलतास्तुतिरूपे बहिष्पवमाने [2]विनियुक्तः—'[3]बहिष्पवमानेन वै यज्ञस्सृज्यते, यत् एतेअसृग्रमिन्दव इति प्रस्तौति, यज्ञमेव तत् सृष्टं देवेभ्यः प्राह' [ता.ब्रा. ६-९-२२] इति। अतो विनियोगानुसारेण सोमलताप्रतिपादकत्वे मन्त्रस्य स्थिते इत्थं तदर्थवर्णनम्—तिरःपवित्रं-तिर्यग्भूतं दशापवित्रं प्रति आशवः—शीघ्रगामिनः एते इन्दवः-सोमाः विश्वानि सौभगा-सर्वाणि सौभाग्यानि अभि-उद्दिश्य असृग्रं—सृष्टाः-इति। अतः कथं एतइत्यादीनां पदानां सृष्टिहेतुत्वम्—इति चेत्।—

उच्यते—'एते असृग्रमिन्दव इति बहुभ्यः प्रतिपदं कुर्यात्, एत इति सर्वानेवैनान् ऋध्यै भूत्या अभिवदति' [ता. ब्रा. ६-९-१३-१४] इति अनेकयजमानके क्रतौ एतइत्यादेः [4]प्रतिपद्रूपतया विहितस्य बहुयजमानप्रकाशकताप्रतिपादनात् सोमलतां विहाय अर्थान्तरप्रतिपादकता अवश्यं वक्तव्या। तद्वत् सृष्टिविनियुक्तस्य मन्त्रस्य तत्तत्स्रज्यार्थप्रतिपादकता भविष्यति। न च एतइत्यादिशब्दानां तत्तदर्थस्मारकता तेष्वर्थेषु शक्त्यभावात् न सम्भवतीति वाच्यम्। विनियोगानुसारेण यथाकथञ्चित् तत्तदर्थप्रतिपादकताया उन्मेषणीयत्वात्। प्रजापतेरपि 'एत इति वै प्रजापतिर्देवान्' इत्याद्यर्थवादसहकृतेभ्यः एतन्मन्त्रान्तर्गतेभ्यः पदेभ्यः तत्तदर्थासाधारणरूपोपस्थितिसम्भवात्। तथा हि—एत इति सर्वनाम अर्थवादोपस्थितान् देवान् परामृशति। असृजि-रुधिरप्रधाने शरीरे रमन्त इति [5]योगेन असृग्रमिति पदं मनुष्याणां स्मारकं, इन्दव इति पदं

---

1 मु. तत्तद्देवतापरा

2 **विनियुक्तइति** 'एते असृग्रमिन्दव इति बहुभ्यः प्रतिपदं कुर्यात्' [ताण्ड्यब्रा- ६.९.१३] इति वाक्येन इत्यादिः।

3 **'बहिष्पवमानेन वै'** इत्यादिः विनियोगानुसार्यर्थवादः।

4 **प्रतिपदिति** प्रतिपद्यते-प्रारभ्यते अनयेति प्रतिपत्-इति व्युत्पत्त्या प्रथमतृचमेव प्रतिपदित्युच्यते।

5 मु. 'योगेन' नास्ति

वै प्रजापतिर्देवानसृजत, असृग्रमिति मनुष्यान्, इन्दव इति पितृन्, तिरःपवित्रमिति ग्रहान्, आशव इति स्तोत्रं, विश्वानीतिशस्त्रं, अभिसौभगेत्यन्याः प्रजाः' [ता. ब्रा. ६-९-१५] इति श्रुतिः। तथा अन्यत्रापि 'स मनसा वाचं मिथुनं समभवत्' (बृ. उ. १।२।४) इत्यादिना तत्रतत्र शब्दपूर्विका सृष्टिः श्राव्यते। स्मृतिरपि—

'अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥' म.भा. शा. २३३-२४]

इति। उत्सर्गोऽप्ययं वाचः संप्रदायप्रवर्तनात्मको द्रष्टव्यः, अनादिनिधनाया अन्यादृशस्योत्सर्गस्यासंभवात्। तथा—

'नाम रूपं च भूतानां कर्मणां च प्रवर्तनम्।
वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः॥'
(वि. पु. १।५।६४) इति।

'सर्वेषां तु स नामानि कर्माणि च पृथक्पृथक्।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे॥'
(मनु० १।२१) इति च।

---

इन्दुमण्डलस्थानां पितृणां, तिर्यग्भूतं दशापवित्रं अस्मिन्निति तिरःपवित्रमिति पदं ग्रहाणाम्, अश्नुवते-प्रयोगं व्याप्नुवन्तीति आशव इति पदं स्तोत्राणां, विशन्ति प्रयोगमिति विश्वपदं शस्त्राणाम्, अभितः सौभगं-सौभाग्यं आसामिति योगेन अभिसौभगपदं प्रजानां इति भावः। स मनसा वाचं उद्दिश्य मिथुनं-वाचा मिलितं समभवत्, मनसा वैदिकीं वाचं अनुसन्धाय तदर्थभूतान् देवाद्याकारान् सृष्ट्यर्थमालोचितवानित्यर्थः। कर्मणां-यागादीनां कृष्यादीनां च, प्रवर्तनं-अनुष्ठानप्रकारम्। पृथक्संस्थाः—असाधारणाकारान्।

ननु शब्देनार्थमनुसन्धाय पदार्थास्स्रष्टव्या इति नास्ति नियमः। प्रत्यक्षेणापि तंतमर्थं विषयीकृत्यानुसन्धाय समानाकारपदार्थसृष्ट्युपपत्तेः। अन्यथा

अपि च-चिकीर्षितमर्थमनुतिष्ठन् तस्य वाचकं शब्दं पूर्वं स्मृत्वा पश्चात् तमर्थमनुतिष्ठतीति सर्वेषां नः प्रत्यक्षमेतत्। तथा प्रजापतेरपि स्रष्टुः सृष्टेः पूर्वं वैदिकाः शब्दा मनसि प्रादुर्बभूवुः, पश्चात् तदनुगता-

---

[1]एडमूकादिषु शब्दप्रपञ्चानभिज्ञेषु कुलालादिषु का गतिः। न च-तथापि प्रकृते पूर्वकल्पसमानाकारा सृष्टिर्वक्तव्या, तत्र पूर्वकल्पीयस्य संस्कारस्य प्रमोषात् शब्दं विना न पूर्वसमानाकारा सृष्टिः सम्भवति-इति वाच्यम्। सर्वज्ञस्य परमात्मनः पूर्वपदार्थानुसन्धानाय शब्दानपेक्षणात्। कथमन्यथा वेदस्य [2]वा स्वत एव भानं सम्भवेत्। ननु हिरण्यगर्भस्य तदनुसन्धानाय शब्दापेक्षा, न - तस्य स्रष्टृत्वा-सम्भवेऽपि परमेश्वरेणैव आद्यसृष्ट्युपपत्तेः। यदि त्वाद्यायामपि देवतासृष्टौ हिर-ण्यगर्भः कारणं, तदा तस्यापि ' ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः। ऐश्वर्यं चैव धर्मश्च सहसिद्धं चतुष्टयम्॥' इति सर्वज्ञत्वस्मरणात् [3]वेदतदर्थयोरिव स्रष्टव्यपदार्थसमानाकारप्राचीनपदार्थगोचरानुसन्धानस्यापि स्वत एव सम्भवात्। अतः कथं शब्दस्य निरुपपत्तिकं सृष्ट्युपयोगित्वं स्वीक्रियते ? इत्यत आह—**अपि चेति**। अयं भावः—न वयं शब्दस्य सृष्ट्युपयोगित्वं युक्तिमात्रेण साधयामः, अपि तु उदाहृतवचनबलात्। तत्र परं 'लोकतः सोऽर्थः सम्भावनीयः' इत्येतावन्मात्रमवशिष्यते। अस्ति च लोके शिल्पशास्त्रं पर्यालोच्य शिल्पिभिः [4]विचित्रा देवतादिप्रतिकृतयो निर्मीयन्ते। तत्र शब्दस्य सृष्टावुपयोगः। प्रकृते च यद्यपि सर्वज्ञेश्वरस्य न तदुपयोगः, तथापि हिरण्यगर्भस्य अस्त्येव तदपेक्षा। यथा हि घटादौ कुलाल ईश्वरश्च इत्युभावपि कर्तारौ, तथा देवतादिसृष्टौ हिरण्यगर्भ-सचिव एवेश्वरः कारणम्। तस्य च सृष्ट्यारम्भे परमेश्वरानुग्रहलब्धवेदतदर्थज्ञाना-धीनमेव सार्वज्ञ्यम्। [5]तथा च श्रुतिः—' यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च

---

1 **एडमूकः**-मूकबधिरः। 'एडमूकः स्मृतो धीरैः शठे वाक्श्रुतिवर्जिते' इति विश्वः।

2 मु. 'वा' नास्ति

3 **वेदतदर्थयोः**—वेदतदर्थज्ञानयोः।

4 मु. विचित्रदेवतादि

5 मु. यथा श्रुतिः

नर्थान् ससर्जेति गम्यते । तथा च श्रुतिः-'स भूरिति व्याहरत् स भूमिमसृजत' (तै० ब्रा० २।२।४।२) इत्येवमादिका भूरादिशब्देभ्य एव मनसि प्रादुर्भूतेभ्यो भूरादिलोकान् सृष्टान् दर्शयति ।

---

प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये' इति, [श्वे. उ. ६. १८] 'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत्' इति च । [श्वे. उ. ५. २.] कपिलशब्दः अत्र मन्त्रे हिरण्यगर्भ-परः । ज्ञानैर्बिभर्ति-वेदार्थज्ञानैः सृष्ट्युपयोगिभिः पूरयतीत्यर्थः । अत्र च वेदत-दर्थज्ञानस्य उत्पत्तिकाल एव । [1]ईश्वरानुग्रहलब्धत्वात 'हिरण्यगर्भः सहजसिद्ध-ज्ञानः' इति प्रसिद्धिः । अतो युक्तं-हिरण्यगर्भः सृष्ट्यर्थं शब्दमनुसन्धत्ते-इति । सः-हिरण्यगर्भः भूरिति व्याहृतिं पृथिवीलोकप्रतिपादिकां व्याहरत् - स्मृतवान् ।

ननु— व्यक्तिवाचिनामिन्द्रादिपदानां व्यक्त्यनित्यतया सापेक्षत्वे शङ्किते जातिवाचकतया तत्परिहारो विवक्षितश्चेत् तदेव सूत्रकृता सूत्रणीयम्, किमर्थं शब्दप्रभवत्वं सूत्र्यते । न च तदपि जातिसिद्ध्युपयोगितया सूत्र्यत इति वाच्यम् । प्रत्यभिज्ञादेर्जातिसाधकतया शब्दप्रभवत्वस्य तदसाधकत्वात्— इति चेत् -

उच्यते—यद्यपि शब्दस्य जातिवाचकत्वमेव सूत्रणीयं, तथापि इन्द्रादि-गतजातिसिद्धिं विना न इन्द्रादिपदस्य जातिवाचकता लभ्यते । न च 'अयमिन्द्रः' 'अयमिन्द्रः' इत्येवंरूपेण लौकिकी प्रत्यभिज्ञा अत्रास्ति । अतः इन्द्रत्वादिजातिसाधकतया शब्दप्रभवत्वमिह सूत्रितम् । तथा हि - शिल्पी यदा तच्छास्त्रं पर्यालोच्य देवादिप्रतिमा निर्माति, तदा प्रसिद्धस्वानुसंहितेन्द्रव्यक्ति-समानाकारामेव तां सृजतीति प्रसिद्धम् । ततश्च अनुसन्धीयमानस्य प्राचीनस्य सृज्यमानस्य चाभिनवस्य तुल्यसंस्थानत्वं शब्दपूर्वकनिर्माणे दृष्टम् । अतः प्रजा-पतिनापि इन्द्रादयः तत्तद्वाचकशब्दानुसन्धानपूर्वकं सृज्यमानाः प्राचीनेन्द्रा-दिसमानसंस्थानैश्वर्यादियुक्ता एव सृज्यन्त इति तुल्यसंस्थानादिव्यङ्ग्येन्द्रत्वादि-जातिसिद्धिः ।

---

1 ईश्वरानुग्रहलब्धत्वात्—ईश्वरानुग्रहलब्धत्वप्रतिपादनात् ।

**किमात्मकं पुनः शब्दं अभिप्रेत्य इदं शब्दप्रभवत्वमुच्यते ? स्फोटमित्याह । वर्णपक्षे हि तेषामुत्पन्नप्रध्वंसित्वात् 'नित्येभ्यः शब्देभ्यो देवादिव्यक्तीनां प्रभवः' इत्यनुपपन्नं स्यात् । उत्पन्नप्रध्वं-**

---

ननु, शब्दपूर्वकसृष्टिः पूर्वसमानाकारेति नियन्तुं न शक्यते। नृसिंहमिव कञ्चनापूर्वसंस्थानं पदार्थं मनसि कल्पयित्वा यत्र शब्देन तादृशमर्थमारचयेति शिल्पी नियुज्यते तत्र अपूर्ववस्तुसृष्टिरपि शब्दपूर्वा उपलभ्यत इति प्रकृतेऽपि तथा किं न स्यात् -

न स्यात् । न ह्यत्र इन्द्रादिसंस्थानप्रतिपादकः शब्दः अपूर्वाकारप्रतिपादकः प्रजापतेर्भवति, अपि तु 'धाता यथापूर्वमकल्पयत्' इति श्रुतिपर्यालोचनया समानाकारप्रतिपादक एवेति, शिल्पशास्त्रन्याय एव प्रकृते समाश्रयणीयः। तथा च सृष्ट्यारम्भे हिरण्यगर्भस्य ईश्वरेण वेदतदर्थार्पणमपि 'पूर्वकल्पवृत्तान्तमनुसन्धाय तथाभूतामेव सृष्टिमारचयतु' इति तात्पर्येणैवेति न काचिदनुपपत्तिः ।

अत्र भाष्ये '[1]यदि इन्द्रादयस्सर्वेऽपि समानसंस्थाना एव तदा जात्यभिव्यञ्जकस्य संस्थानस्य विद्यमानत्वात् जातिवाचकत्वमिन्द्रादिपदानां सिध्यति, यदा तु कल्पभेदेन विषमसंस्थाना एवेन्द्रादय इति कश्चिद्वदेत् तदा जात्यसिद्धावपि स्वर्गलोकाधिपतित्वोपाधिका एवेन्द्रादिशब्दाः सन्तु' इति मनसि निधाय उपाधिपक्षोऽपि[2] दर्शितः ।

'अतः प्रभवात्' इत्यत्र एकदेशिभिर्विवक्षितं वाचकस्वरूपं उपन्यस्य दूषयितुं पृच्छति—**किमात्मकमिति** । 'उत्पन्नो गकारः नष्टो गकारः' इति प्रतीतेः सार्वजनीनत्वात् अनित्यत्वं वर्णानामास्थेयम् । इयं च प्रतीतिरौपाधिकी भ्रान्तिरिति नित्यत्ववादिना वक्तव्यम् । नैतदुपपद्यते, स्थायित्वग्राहकप्रबलप्रमाणाभावात् । न च प्रत्यभिज्ञा तथा भविष्यति । भेदेन प्रतीयमानेषु गकारादिषु 'सैवेयं ज्वाला' इति [3]प्रत्यभिज्ञावत् तस्या जातिविषयत्वोपपत्तेः—इत्यभिप्रेत्य,

---

1 मु. 'यदि' नास्ति 2 मु. 'अपि' नास्ति

3 मु. प्रत्यभिज्ञा वक्तव्या । जाति

सिनश्च वर्णाः, प्रत्युच्चारणं अन्यथा चान्यथा च प्रतीयमानत्वात्। तथा हि—अदृश्यमानोऽपि पुरुषविशेषः अध्ययनध्वनिश्रवणादेव विशेषतो निर्धार्यते 'देवदत्तोऽयमधीते, यज्ञदत्तोऽयमधीते' इति। न चायं वर्णविषयोऽन्यथात्वप्रत्ययो मिथ्याज्ञानं, बाधकप्रत्ययाभावात्। न च वर्णेभ्योऽर्थावगतिर्युक्ता। न ह्येकैको वर्णः अर्थं प्रत्याययेत्, व्यभिचारात्। न च वर्णसमुदायप्रत्ययोऽस्ति, क्रमवर्तित्वाद्वर्णानाम्।

---

वैलक्षण्यसाधिकां प्रतीतिमुपन्यस्यति—**प्रत्युच्चारणमिति।** प्रत्यक्षसिद्धेऽपि वैलक्षण्यप्रत्यये यदि कश्चिद्विप्रतिपद्येत, तं बोधयितुं वैलक्षण्यप्रत्ययकार्यभूतां व्यवहितदेवदत्ताद्यनुमितिं दर्शयति—**तथा ह्यदृश्यमान इति।**

नन्वनित्यत्वेऽपि वर्णानां न वेदनित्यत्वविरोधः। न हि स्फोटवादिमतेऽपि स्फोटस्वरूपमेव वेदः, अपि तु क्रमविशेषविशिष्टं स्वरविशेषविशिष्टं च। न च नित्यानां विभूनां [1]एकरूपाणां स्फोटानां स्वत एव क्रमो वा स्वरो वा उपपद्यते, अपि तु ध्वन्युपाधिक एव। तथा च अभिव्यञ्जकध्वनिविशेषविशिष्ट एव स्फोटो वेद इति, ध्वनीनामनित्यतया तुल्यस्वरानुपूर्वीकतया वेदनित्यत्वं विवक्षणीयम्। सा विवक्षा वर्णात्मकवेदवादिनोऽप्यविशिष्टा-इति शङ्कां मनसि निधाय [2]वर्णवादिनि दूषणान्तरमाह—**न च वर्णेभ्य इति। व्यभिचारादिति।** घ इत्येकवर्णोच्चारणे [3]अर्थप्रत्ययाभावादिति भावः।

**न च वर्णसमुदायप्रत्ययोऽस्तीति।** ननु वर्णानां क्रमिकत्वेन वर्णसमुदायप्रत्यक्षाभावेऽपि पूर्वपूर्वानुभवजनितसंस्कारैर्वर्णसमुदायगोचरं स्मरणं [4]भविष्यतीति चेत् -

---

1 **एकरूपाणामिति** स्वतस्स्वरासम्भवे हेतुगर्भमिदं विशेषणम्, 'नित्यानां' 'विभूनां' इति कालतो देशतश्च क्रमासम्भवे।

2 मु. वर्णवादिनो

3 **अर्थेति** घटरूपार्थेत्यर्थः।

4 **भविष्यतीति** चरमवर्णप्रत्यक्षोत्पत्तितृतीयक्षणे इत्यादिः।

**पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितः अन्त्यो वर्णः अर्थं प्रत्याययिष्यतीति यद्युच्येत, तन्न - संबन्धग्रहणापेक्षो हि शब्दः स्वयं प्रतीयमानः अर्थं**

---

न-तथा सति 'राजा' 'जारा' इतिपदस्मृतिविशेषाभावेन अर्थबोधविशेषो न स्यात्। न च तत्र क्रमवैचित्र्याद्वर्णस्मृतिवैचित्र्ये सति अर्थबोधवैचित्र्यमुपपद्यत इति वाच्यम्। वर्णानामनित्यत्वमते तदुत्पत्तिक्रमात्, नित्यत्वमते तदभिव्यञ्जक-ध्वनिक्रमाद्धि, वर्णेषु क्रमः स्वीकर्तव्यः। न चेदं द्वयमपि मौनिना लिखिते [1]मौनिनैव अनुसंहिते श्लोके सम्भवति-इति स्फोटवादी मन्यते।

पूर्वपूर्ववर्णसंस्कारसचिवस्यान्त्यवर्णस्य बोधकत्वे हि अन्त्यवर्ण एव वाचकः, पूर्वपूर्ववर्णसंस्कारस्तु योग्यतादिवत् सहकारी, तथा च संस्कारोऽपि ज्ञातव्य इत्यापतेदित्याह—**तन्न-सम्बन्धग्रहणापेक्ष इति। स्वयं प्रतीयमान इति।** संस्कारविशिष्टतयेति शेषः।

अत्रेदमनुमानं विवक्षितं—[2]यद्धि मानविभाजकोपाध्यवच्छेदेन सम्बन्धग्र-हमपेक्ष्य बोधकं, तत् [3]मानविभाजकोपाध्यवच्छेदेनभावरूपयावत्सहकारिविशिष्ट-मेव ज्ञातं बोधकम्। धूमादिवत्। ततश्च संस्कारस्य सहकारित्वे सोऽपि ज्ञात-व्यस्स्यात्। शब्दस्य मानविभाजकोपाध्यवच्छेदेन सम्बन्धग्रहमपेक्ष्य बोधकत्वात्।

अत्र व्याप्तौ 'भूतलसंयुक्तो घटः' इति ज्ञाने जननीये चक्षुषः [4]सम्बन्ध-ग्रहणापेक्षत्वेऽपि न [5]यावत्सहकारिमत्तयाज्ञातव्यताऽस्तीति व्यभिचारवारणाय

---

1 मौनिना लिखितेऽपि अमौनिना अनुसंहिते-स्वयं मौनिश्लोकस्य पाठे वर्णोत्पत्ति-ध्वन्योः सम्भवात् असम्भवोक्त्यसङ्गतिमाशङ्क्य 'मौनिनैव अनुसंहिते' इत्युक्तम्। 'मौनिनैव पठिते' इति आ. पाठः।

2 **यद्धीत्यादि** यन्निष्ठा सम्बन्धग्रहणमपेक्ष्यबोधकता स्वनिष्ठमानविभाजकोपाध्य-वच्छिन्ना इत्यर्थः।

3 **मानविभाजकोपाध्यवच्छेदेनेति** सहकारीत्यनेनान्वेति। प्रत्यक्षत्वा-दिरूपमानविभाजकोपाध्यवच्छिन्नकार्यतानिरूपितकारणताश्रयेत्यर्थः।

4 **सम्बन्धेति** भूतलसम्बन्धेत्यर्थः। विशेषणज्ञानविधया तज्ज्ञानस्य हेतुत्वात् इति भावः।

5 **यावत्सहकारीति** इन्द्रियसन्निकर्षालोकसंयोगकालादृष्टादयः सहकारिणः।

**प्रत्याययेत् धूमादिवत्। न च पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितस्यान्त्यवर्णस्य प्रतीतिरस्ति, अप्रत्यक्षत्वात् संस्काराणाम्। कार्यप्रत्यायितैः संस्कारैः सहितोऽन्त्यो वर्णः अर्थं प्रत्याययिष्यतीति चेत्, न - संस्कारकार्यस्यापि स्मरणस्य क्रमवर्तित्वात्। तस्मात् स्फोट एव शब्दः।**

---

मानविभाजकोपाध्यवच्छेदेनेति व्याप्यकोटौ [1]विवक्षितम्। व्यापककोटौ यावत्पदादाने संस्कारे ज्ञातव्यतापादनं न स्यात्, व्याप्तेः योग्यतादियत्किञ्चित्सहकारिज्ञानमादाय [2]उपपन्नत्वात्, अतस्तन्निवेशः। तावत्युक्ते, सिद्ध्यभावस्य स्वरूपसत एव सहकारित्वात् धूमस्य यावत्सहकारिविशिष्टतयाज्ञातस्यैव बोधकत्वाभावात् [3]व्यभिचारःस्यात्, तद्व्यावृत्त्यर्थं भावरूपेति। अदृष्टस्य सर्वसहकारितया तज्ज्ञानस्य च अनपेक्षणात् पुनरपि व्यभिचारस्स्यात्, तद्व्यावृत्त्यर्थं व्यापककोटावपि मानविभाजकोपाध्यवच्छेदेनेति [4]विवक्षितम्।

एवं संस्कारस्य ज्ञातव्यतामापाद्य, इष्टापत्तिं वदन्तं प्रत्याह—**न चेति**। **कार्यप्रत्यायितैरिति**। कार्यं वर्णस्मृतिः। **स्मरणस्य क्रमवर्तित्वादिति**। तथा च सर्ववर्णगोचरस्मरणस्य यौगपद्याभावेन न सर्वसंस्कारानुमितिः स्यात्। इदमुपलक्षणम्। तस्यां दशायां चरमवर्णतत्साक्षात्कारयोरपि नाशापत्त्या शाब्दबोधानुदयप्रसङ्ग इत्यपि द्रष्टव्यम्।

---

1 **विवक्षितमिति** तथा च घटमात्रविषयकप्रत्यक्षे गन्धादिप्रत्यक्षे च जननीये चक्षुरादेः सम्बन्धग्रहणापेक्षाया अभावेन उक्तस्थलीयबोधकतायाः मानविभाजकोपाध्यवच्छिन्नत्वाभावात् व्याप्यस्याप्यभाव इति न व्यभिचार इति भावः।

2 **उपपन्नत्वादिति** तथा च सिद्धसाधनं इति भावः।

3 **व्यभिचारः स्यादिति** 'सिद्ध्युत्तरानुमितिस्थले एव उक्तपक्षतायाः परामर्शसहकारित्वम्' इति मते तु नायं दोषः। मानविभाजकोपाध्यवच्छेदेन सहकारित्वाभावात् सिद्ध्यभावस्य।

4 **विवक्षितमिति** अदृष्टनिष्ठसहकारितायाः कार्यत्वावच्छिन्ननिरूपितत्वेन प्रत्यक्षत्वादिरूपमानविभाजकोपाध्यवच्छिन्नानिरूपितत्वात् व्यापकशरीरप्रविष्टं सहकारित्वं नादृष्टस्येति नोक्तव्यभिचार इति भावः।

**स च एकैकवर्णप्रत्ययाहितसंस्कारबीजे अन्त्यवर्णप्रत्ययजनितपरिपाके प्रत्ययिनि एकप्रत्ययविषयतया झटिति प्रत्यवभासते । न चायमेकप्रत्ययो वर्णविषया स्मृतिः । वर्णानामनेकत्वादेकप्रत्ययविषयत्वानुपपत्तेः । तस्य च प्रत्युच्चारणं प्रत्यभिज्ञायमानत्वात् नित्यत्वम् । भेदप्रत्ययस्य वर्णविषयत्वात् ।**

---

ननु-परेण स्फोटो ध्वनिव्यङ्ग्य इत्युच्यते । तन्मते च ध्वनय एव वर्णाः न तु ध्वनिव्यतिरिक्तो वर्ण इति, गत्वाद्याश्रयभूतैर्ध्वनिभिः स्फोटोऽभिव्यज्यते, न तु भेर्यादिध्वनिभिः । तत्र गकारादयः क्रमेण व्यञ्जयन्ति, उत मिलिताः ? इति विकल्पः तं प्रत्यपि प्राप्तः - इत्याशङ्क्य ; तन्मते प्रत्येकमेव गकारादयः स्फोटं व्यञ्जयन्ति, न च तथा सति वर्णान्तरवैयर्थ्यम् , यथा हि रत्नतत्त्वं बहुधा निरीक्ष्यमाणं पूर्वपूर्वसाक्षात्काराहितसंस्कारे चेतसि जायमानेन चरमसाक्षात्कारेण स्पष्टं भासते एवमत्राप्येकैकवर्णजनितस्फोटसाक्षात्कारैः स्फोटविषयास्संस्काराः 'एकमिदं पदम् , एकमिदं वाक्यम्' इत्येवंरूपं यत् स्फुटं स्फोटप्रत्यक्षं तद्बीजभूता आधीयन्ते, तादृशसंस्कारसमानाधिकरणेन अन्त्यवर्णप्रत्ययेन स्पष्टं स्फोटोऽभिव्यज्यत इति न कस्यापि वैयर्थ्यम् - इत्यभिप्रेत्याह—**स चेति** । परिपाको नाम यदनन्तरमेव स्फुटं स्फोटाभिव्यक्तिर्भवति [1]तादृशवृत्त्यधीनः चेतसोऽवस्थाविशेषः ।

**न चायमेकप्रत्यय इति** । 'एकं पदम्' 'एकं वाक्यम्' इति प्रत्यय इत्यर्थः । **प्रत्युच्चारणं प्रत्यभिज्ञायमानत्वादिति** । 'तदेवेदं पदं' 'तदेवेदं वाक्यम्' इतिप्रत्यभिज्ञाविषयत्वादिति यावत् ।

न च गकारादिसमुदायातिरिक्ते स्फोटे अभ्युपगम्यमाने गत्वादिरूषितः पदवाक्यप्रत्ययो बाधितस्स्यादिति वाच्यम् । यथा दर्पणादिगतः प्रतिबिम्बो दर्पणादिगतनीलिमादिना रूषित एवावभासते, एवं ध्वनिव्यङ्ग्यःस्फोटो ध्वनिगतगत्वादिरूषितो भासत इति किमनुपपन्नम् ।

स च घटकलशादिपर्यायेषु एक एव घटप्रतिपादकः स्फोटः, न तु प्रतिपर्यायं भिन्नभिन्नः । एवं च - प्रजापतिना वाचकपदमनुसन्धाय प्रजास्सृष्टाः

---

1. आ. तादृशप्रत्ययिनश्चेतसः

तस्मात् नित्याच्छब्दात्स्फोटरूपादभिधायकात् क्रियाकारकफललक्षणं जगत् अभिधेयभूतं प्रभवतीति ।

'वर्णा एव तु शब्दः' इति भगवानुपवर्षः । ननु उत्पन्नप्रध्वंसित्वं वर्णानामुक्तं, तन्न - त एवेति प्रत्यभिज्ञानात् । सादृश्यात् प्रत्यभिज्ञानं केशादिष्विवेति चेत्, न - प्रत्यभिज्ञानस्य प्रमाणान्तरेण बाधानुपपत्तेः । प्रत्यभिज्ञानमाकृतिनिमित्तमिति चेत्, न - व्यक्तिप्रत्यभिज्ञानात् । यदि हि प्रत्युच्चारणं गवादिव्यक्तिवत् अन्या अन्या वर्णव्यक्तयः प्रतीयेरन्, तत आकृतिनिमित्तं प्रत्यभिज्ञानं स्यात् । न त्वेतदस्ति । वर्णव्यक्तय एव हि प्रत्युच्चारणं प्रत्यभिज्ञायन्ते । 'द्विर्गोशब्द उच्चारितः' इति हि प्रतिपत्तिः, न तु 'द्वौ गोशब्दौ' इति । ननु-वर्णा अप्युच्चारणभेदेन भिन्नाः प्रतीयन्ते,देवदत्तयज्ञदत्तयोः अध्ययनध्वनिश्रवणादेव भेदप्रतीतेः-इत्युक्तम् । अत्राभिधीयते–सति वर्णविषये निश्चिते प्रत्यभिज्ञाने, संयोगविभागाभिव्यङ्ग्यत्वाद्वर्णानां अभिव्यञ्जकवैचित्र्यनिमित्तोऽयं वर्णविषयो

---

इत्यत्र 'वाचकानां बहुत्वात् किं वाचकमनुसन्धाय प्रजाः [1]सृष्टाः विनिगमनाविरहेण निर्धारणासम्भवात्' इति शङ्कापि-निरस्ता भवति। वाचकनानात्वस्य अस्मिन् पक्षे असम्मतत्वात् । अपि च स्फोटानङ्गीकारमते घटादिपर्यायाणां सर्वेषामेव वाचकत्वमुपेयम्, तथा सति प्रतिपर्यायं शक्तयः स्वीकर्तव्या इत्यनेकशक्तिकल्पनात् गौरवम् । स्फोटपक्षे तु सर्वपर्यायव्यङ्ग्यस्य तस्य एकत्वात् तत्र एकैव शक्तिरुपेयत इति लाघवम् ।

**प्रत्यभिज्ञानस्य प्रमाणान्तरेणेति** । यद्यपि लूनप्ररूढकेशेषु 'त एव' इति प्रत्यभिज्ञानं भेदग्राहकेण प्रमाणेन बाध्यते, तथापि प्रकृते वर्णप्रत्यभिज्ञाने तादृशं बाधकं भेदग्राहिप्रमाणं प्रबलं नास्तीति भावः । **संयोगविभागाभिव्यङ्ग्यत्वादिति** । संयुज्यमाना [2]विभज्यमानाश्च ये प्राणवायवः तदुपाधिकत्वा-

---

1. मु. सृष्टा इति वि°
2. मु. वियुज्यमानाश्च

-विचित्रः प्रत्ययो न स्वरूपनिमित्तः। अपि च वर्णव्यक्तिभेदवादिनाऽपि प्रत्यभिज्ञानसिद्धये वर्णाकृतयः कल्पयितव्याः, तासु च परोपाधिको भेदप्रत्यय इत्यभ्युपगन्तव्यम्। तद् वरं वर्णव्यक्तिष्वेव परोपाधिको भेदप्रत्ययः स्वरूपनिमित्तं च प्रत्यभिज्ञानमिति कल्पनालाघवम्। एष एव च वर्णविषयस्य भेदप्रत्ययस्य बाधकः प्रत्ययो यत् प्रत्यभिज्ञानम्।

कथं ह्येकस्मिन् काले बहूनामुच्चारयतां एक एव सन् गकारो युगपदनेकरूपः स्यात्-उदात्तश्चानुदात्तश्च स्वरितश्च सानुनासिकश्च निरनुनासिकश्चेति। अथ वा ध्वनिकृतोऽयं भेदप्रत्ययः न वर्णकृत इत्यदोषः।

---

दित्यर्थः। न च तेषां वायूनां श्रावणत्वाभावेन तद्धर्मस्याप्युदात्तत्वादेः देवदत्तादिप्रभवत्वप्रयोज्यजातिविशेषस्य च श्रावणता न स्यादिति वाच्यम्। आकाशस्याश्रावणत्वेऽपि तद्धर्मस्य श्रावणत्ववदुपपत्तेः इति भावः।

ननु वर्णेषु भेदप्रत्ययोऽपि विद्यते, प्रत्यभिज्ञा च विद्यते, तत्र प्रत्यभिज्ञा स्वाभाविकी भेदप्रत्यय एवौपाधिक इत्यत्र किं नियामकम्? इत्यत आह—**अपि चेति**। अतिरिक्तगत्वादिजातिकल्पनाराहित्येन प्रत्यभिज्ञायाः लाघवानुसारित्वात् तदनुसारेण भेदप्रत्ययस्यैवौपाधिकत्वकल्पनमिति भावः।

एवमभिव्यञ्जकवायूपाधिकं वैलक्षण्यादिकमुक्तम्। इदानीं ध्वन्युपाधिकं तदिति पक्षान्तरं वक्तुं उत्तरितामेव शङ्कां पुनरुपक्षिपति—**कथं हीति**। कथं तर्हीत्यर्थः। परिहरति—**अथवेति**। इत्थमिति वक्तव्ये अथवेत्युक्तिः-अस्यामेव शङ्कायां 'संयोगविभागाभिव्यङ्ग्यत्वात्' इति परिहारः [1]प्राक् प्रदर्शित एव, इदं तु [2]परिहारान्तरम्-इतिद्योतनाय। प्रत्यभिज्ञाया बाधकत्वस्फुटीकरणाय एकत्वस्य उदात्तत्वादीनां च विरोधप्रदर्शनार्थो वा कथंह्येकस्मिन्नित्यादिग्रन्थ इति [3]यथाश्रुत एव वा।

---

1. मु. 'प्राक्' नास्ति
2. मु. परिहारान्तरद्योतनाय
3. **यथाश्रुत इति** 'कथं तर्हि' इत्यर्थवर्णनं मास्तु इत्यर्थः। मु. यथाश्रुतमेव

**कः पुनरयं ध्वनिर्नाम? यो दूरादाकर्णयतो वर्णविवेकमप्रतिपद्यमानस्य कर्णपथमवतरति, प्रत्यासीदतश्च पटुमृदुत्वादिभेदं वर्णेष्वा-**

---

ध्वनिस्वरूपं निरूपयितुं पृच्छति—**कः पुनरिति**।

ननु - दूरादाकर्ण्यमानोऽवर्णात्मको ध्वनिरूपः शब्दः, स एव वर्णेषु वैलक्षण्यादिप्रत्ययोपाधिरनित्यश्च - इत्युक्तमसङ्गतम्। कोलाहलप्रत्ययो हि न [1]वर्णातिरिक्तविषयः, अपि तु गत्वाद्यप्रकारको वर्णसामान्यप्रत्यय एव। समीपोपसर्पणानन्तरं तु तत्रैव गत्वादिर्गृह्यते। अतो नानेन प्रत्ययेन वर्णविलक्षणध्वन्यात्मकःशब्दः सिध्यति। अपि च प्रत्यभिज्ञानुसारेण वर्णानां यदि नित्यत्वमुपेयते, तर्हि 'स एवायं ध्वनिः, स एवायं कोलाहलः' इति प्रत्यभिज्ञानुसारेण तस्यापि नित्यत्वं किं न स्यात्। ध्वन्युपाधिका वर्णेषु वैलक्षण्यादयः वर्णोपाधिका ध्वनिषु वा वैलक्षण्यादयः इत्यत्रापि[2] नियामकं नास्ति - इति चेत्,

उच्यते — भेरीमृदङ्गादिशब्दस्थले जायमानः कोलाहलप्रत्ययो गत्वाद्यनवगाहिवर्णसामान्यविषयः- इति तावत् वक्तुं न शक्यते। तत्र कण्ठताल्वादिरूपवर्णाभिव्यक्तिसामग्र्यभावेन वर्णानामसम्प्रतिपन्नत्वात्। शुकशारिकादिरवस्थले कोलाहलप्रत्ययोऽपि वर्णविलक्षणशब्दविषय एवेत्यपि सम्प्रतिपन्नमेव, समीपोपसर्पणेऽपि वर्णानामनुपलम्भात्। तत्र च उदात्तादिप्रत्यया वर्णोपाधिका इति वक्तुं न शक्यते। यद्यपि शुकशारिकादिरवस्थले [3]प्राणवायूपाधिका इति वक्तुं शक्यं, तथापि भेर्यादिरवस्थले तदुपाधिका इत्यपि वक्तुं न शक्यते। तत्र वायूनामभावात्। अतो ध्वनावुदात्तादिप्रत्ययाः स्वाभाविका एवेति तत्र प्रत्यभिज्ञानं जातिविषयमेवेति बलादापतति, भेदप्रत्ययस्यौपाधिकत्वासम्भवात्। एवमापणादिस्थले कोलाहलप्रत्ययो भेर्यादिस्थल इव ध्वनिविषय इत्येव वक्तव्यम्, कोलाहलप्रत्ययस्य ध्वनिविषयतायाः [4]अन्यत्र क्लृप्तत्वात्। वर्णस्थले च ध्वन्युत्पत्तिरपि स्वीकर्तव्या। हसितरुदितशुकशारिकादिध्वनौ कण्ठादेरपि कारणतायाः क्लृप्तत्वेन वर्णस्थले उभयसामग्रीस-

---

1. मु. वर्णातिरिक्तध्वनिविषयः 2. मु. 'अपि' नास्ति
3. **प्राणेति** संयुज्यमानवियुज्यमानप्राणेत्यर्थः।
4. मु. 'अन्यत्र' नास्ति·

सञ्जयति। तन्निबन्धनाश्चोदात्तादयो विशेषा न वर्णस्वरूपनिबन्धनाः, वर्णानां प्रत्युच्चारणं प्रत्यभिज्ञायमानत्वात् ।

एवं च सति सालम्बना उदात्तादिप्रत्यया भविष्यन्ति । इतरथा हि वर्णानां प्रत्यभिज्ञायमानानां निर्भेदत्वात् संयोगविभागकृता उदात्तादिविशेषाः कल्प्येरन् , संयोगविभागानां चाप्रत्यक्षत्वात् न तदाश्रया विशेषा वर्णेष्वध्यवसितुं शक्यन्ते, इत्यतो निरालम्बना एवैते उदात्तादिप्रत्ययाः स्युः । अपि च नैवैतदभिनिवेष्टव्यम्-उदात्तादिभेदेन वर्णानां प्रत्यभिज्ञायमानानां भेदो भवेत्-इति । न ह्यन्यस्य भेदेन अन्यस्याभिद्यमानस्य भेदो भवितुमर्हति । न हि व्यक्तिभेदेन जातिं भिन्नां मन्यन्ते ।

वर्णेभ्यश्चार्थप्रतीतेः संभवात् स्फोटकल्पना अनर्थिका । न कल्पयाम्यहं स्फोटं, प्रत्यक्षमेव त्वेनमवगच्छामि, एकैकवर्णग्रहणाहित-संस्कारायां बुद्धौ झटिति प्रत्यवभासनात्- इति चेत् , न - अस्या अपि बुद्धेर्वर्णविषयत्वात् । एकैकवर्णग्रहणोत्तरकाला हि इयमेका बुद्धिः 'गौः'

---

मावेशात् । तथा च वर्णेषूदात्तादिप्रत्ययस्य ध्वन्युपाधिकत्वमित्यत्र नास्ति विनिगमनाविरहः ।

**एवं च सति सालम्बना इति**। संयोगविभागोपाधिकत्वे[1] तेषां श्रावणप्रत्यक्षाविषयत्वात् तद्धर्माणामप्युदात्तत्वादीनां [2]वर्णेष्वारोपणे श्रावणता न स्यात्-इति [3]शङ्काया अपि इहानवसर इति भावः ।

स्फोटवादिना हि 'वर्णानामनित्यत्वात् नित्यता वेदस्य वर्णपक्षे न स्यात्, अतः स्फोटरूपः शब्दो नित्योऽभ्युपगन्तव्यः' इत्युक्तम् । तत् वर्णनित्यतासमर्थनेन निरस्तम् । 'वर्णानां प्रत्येकसमस्तविकल्पग्रासात् वाचकत्वं नोपपद्यते, अतो वर्णातिरिक्तमेव किञ्चिद्वाचकं पदतत्त्वमुपेयम्' इति चोक्तं, तन्निराकर्तुमुपक्षिपति—**वर्णेभ्यश्चेति**। स्फोटवादिपरिकल्पितं प्रत्यक्षं अनुवदति—**न कल्पयामीति**। **अस्याअपिबुद्धेर्वर्णविषयत्वादिति**। ननु—यथा वर्णविषय-

---

1. मु. °पाधिकत्वमिति पक्षे	2. मु. वर्णेष्वारोपेण	3. आ. मन्दशङ्काया

इति समस्तवर्णविषया, नार्थान्तरविषया। कथमेतदवगम्यते। यतोऽस्यामपि बुद्धौ गकारादयो वर्णा अनुवर्तन्ते न तु दकारादयः। यदि ह्यस्या बुद्धेः गकारादिभ्योऽर्थान्तरं स्फोटो विषयः स्यात् ततो दकारादय इव गकारादयोऽप्यस्या बुद्धेः व्यावर्तेरन्। न तु तथाऽस्ति। तस्मात्, इयमेकबुद्धिः वर्णविषयैव स्मृतिः।

ननु अनेकत्वाद्वर्णानां न एकबुद्धिविषयतोपपद्यत इत्युक्तम्,

---

बुद्धेर्ध्वनिरूषितत्वेऽपि ध्वनिव्यङ्ग्यो वर्णोऽतिरिक्त इष्यते, उदात्तत्वादयश्च ध्वन्युपाधिका एव वर्णेष्वास्थीयन्ते, एवं गत्वादिरूषिते पदप्रत्यये सत्यपि गत्वाद्याश्रयादन्य एव स्फोटोऽस्तु, गत्वादिरूषिततया तद्बुद्धिस्तु व्यञ्जकोपाधिनिबन्धना - इति चेत् - न - हसितरुदितकोलाहलस्थले उदात्तत्वाद्याश्रयतया वर्णविलक्षणशब्दसिद्धौ गत्वाद्याश्रयशब्दस्यापि प्रत्यक्षसिद्धत्वे तस्य अनन्यथासिद्धप्रत्यभिज्ञया स्थायित्वसिद्धौ वर्णस्थले ध्वनिसामग्र्या अपि संप्रतिपन्नत्वात् उदात्तत्वादिप्रत्ययस्तदुपाधिक इति कल्पनं युक्तम्। नैवं गत्वाद्यनाश्रयः स्फोटः कैश्चिदनुभूयते।

एतेन—रत्नतत्त्वमिव पुनःपुनः निरीक्षणानि, स्फोटं प्रत्येकमेव वर्णा व्यञ्जयन्ति, स चरमवर्णावसरे स्फुटं भासते - इति कल्पनं निरस्तम्। रत्नतत्त्वं हि प्रतिनिरीक्षणं किञ्चित् किञ्चित् भासत इत्यनुभवसिद्धम्। तत्र च पूर्वपूर्वदर्शनाविषयीकृतास्तत्तद्रत्नत्वावान्तरजातिचिह्नभूता[1] उत्तरोत्तरदर्शनविषयाः सम्भवन्तीति सार्थक्यमपि बहूनां दर्शनानामुपपद्यते। नैवं प्रकृते सम्भवति। न ह्यत्र उत्तरोत्तरवर्णसाक्षात्कारेण स्फोटे पूर्वपूर्ववर्णसाक्षात्काराव्यञ्जिताः तेतेंऽशाः कस्यचिदनुभवपदमारूढाः, धर्मिण एव [2]अनुभवानारूढत्वेन धर्माणां दूरनिरस्तत्वात्।

एकत्वबुद्धिस्तु वर्णविषयैव इत्युपपादयितुं शङ्कते-नन्विति।

---

1. आ. जातिविशेषभूताः

2. मु. अनुभवानारूढत्वे तद्धर्माणां

**तत् प्रतिब्रूमः—संभवत्यनेकस्याप्येकबुद्धिविषयत्वं 'पङ्क्तिः' 'वनं' 'सेना' 'दशत्' '(दश)' 'शतं' 'सहस्रम्' इत्यादिदर्शनात्। या तु 'गौरित्येकोऽयं शब्दः' इति बुद्धिः, सा बहुष्वेव वर्णेषु एकार्थावच्छेदनिबन्धना औपचारिकी वनसेनादिबुद्धिवदेव।**

---

**सहस्रमित्यादीति**। ननु—वनादिप्रत्ययः बहुष्वेकत्वावगाही एकदेशस्थत्वाद्युपाधिनिबन्धन इति युक्तम्। 'शतादिप्रत्ययस्तु [1]बहूनामेकत्वानां किञ्चिदुपाधिनिबन्धनः, न तु शतादिकमेकत्वातिरेकेण विद्यते' इति वक्तुं न शक्यते। 'कियतामेकत्वानां समुदायः शतं' इति सन्देहे [2]शतस्यैकत्वानां इति हि निर्धारयितव्यम्। ततश्च एकत्वेषु शतसंख्या अपरा स्वीकर्तव्यैव। तद् वरमेकत्वाश्रयेष्वेव साऽस्तु। तथा च प्रत्येकवृक्षव्यक्तिव्यतिरेकेण वनस्यानभ्युपगमेऽपि प्रत्येकैकत्वातिरेकेण यथा शतादिसङ्ख्या उपेयते, तथा वर्णव्यतिरेकेण स्फोटोऽभ्युपगन्तव्यः - इति चेत् - न-उक्तयुक्त्या शतादिसङ्ख्याया एकत्वातिरेकेण उपगमेऽपि वर्णातिरेकेण स्फोटकल्पनाया निर्मूलत्वात् न वर्णातिरिक्तस्फोटसिद्धिः। अवान्तरसङ्ख्यातिरेकेण [3]शतादिमहासङ्ख्यायाः सत्त्वेऽपि अवान्तरसङ्ख्येयातिरेकेण शतादिसङ्ख्येयो महान् नास्ति इत्यभिप्रायकं 'दश, शतं, सहस्रं' इत्यादिभाष्यमिति ध्येयम्।

**एकार्थावच्छेदनिबन्धनौपचारिकीति**। न च तथा सति एकपदत्वज्ञानादेकार्थत्वनिश्चयः तस्मिन् सत्येकपदत्वज्ञानं इत्यन्योन्याश्रय इति वाच्यम्। एकपदत्वनिश्चय एव हि एकार्थत्वज्ञाननिबन्धनः। [4]अत एव अव्युत्पन्नानां काव्यश्लोके न पदविभागज्ञानम्। न त्वेकपदत्वैकवाक्यत्वज्ञानमेकार्थत्वनिर्णये

---

1. **बहूनामेकत्वानामिति** एकत्वावगाही इति शेषः। आ. बहूनामेवैकत्वानां
2. मु. शतानामेकत्वानां
3. मु. शतादिसङ्ख्यायाः
4. **अत एवेति** अन्यथा तत्तदर्थेषु अगृहीतशक्तिकस्यापि पुंसः काव्यश्लोकश्रवणे तदन्तर्गतपदानां 'इदमेकं पदं, इदमेकं पदं' इत्यादिक्रमेण 'एतावन्त्यत्र पदानि इत्यवधारणापत्तेः।

अत्राह—यदि वर्णा एव सामस्त्येन एकबुद्धिविषयतामापद्यमानाः पदं स्युः, ततो 'जारा, राजा' 'कपिः, पिकः' इत्यादिषु पदविशेषप्रतिपत्तिर्न स्यात् , त एव हि वर्णा इतरत्र चेतरत्र च प्रत्यवभासन्त इति ।

अत्र वदामः—सत्यपि समस्तवर्णप्रत्यवमर्शे, यथा क्रमानुरोधिन्य

---

कारणम् । तत्र वृद्धव्यवहारानुसारेण [1]शक्तिग्रहः तात्पर्यनिर्णयश्च कारणम् । यावतां हि वर्णानां एकस्मिन्नर्थे शक्तिर्गृहीता तावन्त एव एकार्थका इति व्यवह्रियन्ते[2] । यावत्सु च पदेषु एकस्मिन्नर्थे विशिष्टे तात्पर्यं गृहीतं तावन्ति एकार्थकानीति एकं वाक्यमिति चोच्यन्ते । एवं च यथासम्भवं बहुषु वर्णेषु एकत्वबुद्ध्युपपत्तौ गत्वादिरूपितः 'इदं एकं पदं, एकं वाक्यं' इत्यादिप्रत्ययो न वर्णातिरिक्तस्फोटसाधकः। न चैवं सन्ध्यक्षराणामपि स्वावयवभूताकारेकारादिव्यतिरेको न स्यादिति दूषणम् । इष्टापत्त्या तस्य दूषणत्वाभावात् । अत एव 'तानेकधा समभरत्तदेतदोमिति' [वासुदेवोप] इति प्रणवस्य तदवयवभूताकारोकारमकारात्मकता दर्शिता श्रुत्यैव । 'ओङ्कारोऽधिमात्रं, पादा मात्रा मात्राश्च पादा अकार उकारो मकारः' [मा. उ. १-८] इति क्वचिदाधाराधेयभावेन प्रणवतदन्तर्गतमात्राणां निर्देशस्तु समुदायसमुदायिनोर्भेदोपचारेणेति द्रष्टव्यम् ।

ननु - वाचके गत्वादिप्रत्यये [3]एकत्वप्रत्यये च सति 'गत्वादिप्रत्यय एव स्वाभाविकः, नानाभूतेषु एकत्वप्रत्यय एवौपाधिकः' इत्यत्र किं नियामकं इति चेत्-

उच्यते—स्फोटपक्षस्यातिरिक्तपदार्थकल्पनागौरवग्रस्तत्वेन एकत्वबुद्धेस्तदालम्बनत्वासम्भव एव नियामकः । न च वर्णपक्षेऽपि बह्व्यः शक्तयः कल्पनीया इति गौरवमुक्तमिति शङ्कनीयम् । येन हि प्रतिपर्यायं व्यञ्जनीयस्फोट एक इत्युच्यते तेनापि प्रतिपर्यायं वर्णेषु शक्तिरुपेयैव । अन्यथा घटादिपदव्यञ्जनीये स्फोटे एकपर्यायान्तर्भावेन शक्तिग्रहमात्रेण पर्यायान्तरेणापि[4] गृहीतशक्तिकस्यैव स्फोटस्य व्यञ्ज-

---

1. शक्तीत्यादि पदे शक्तिग्रहः वाक्ये तात्पर्यनिर्णयश्च कारणं इत्यर्थः ।
2. व्यवह्रियन्त इति ततश्च 'एकं पदं' इति व्यवहारोपपत्तिरिति भावः ।
3. मु. एकत्वादिप्रत्यये 4. मु. 'अपि' नास्ति

**एवं पिपीलिकाः पङ्क्तिबुद्धिमारोहन्ति, एवं क्रमानुरोधिन एव वर्णाः पदबुद्धिमारोक्ष्यन्ति। तत्र वर्णानामविशेषेऽपि क्रमविशेषकृता पदविशेषप्रतिपत्तिर्न विरुध्यते। वृद्धव्यवहारे चेमे वर्णाः क्रमाद्यनुगृहीता गृहीतार्थविशेषसंबन्धाः सन्तः स्वव्यवहारेऽपि एकैकवर्णग्रहणानन्तरं समस्तप्रत्यवमर्शिन्यां बुद्धौ तादृशा एव प्रत्यवभासमानाः तंतमर्थं अव्यभिचारेण प्रत्याययिष्यन्तीति वर्णवादिनो लघीयसी कल्पना। स्फोटवादिनस्तु दृष्टहानिरदृष्टकल्पना च। वर्णाश्चेमे क्रमेण गृह्यमाणाः स्फोटं व्यञ्जयन्ति स स्फोटोऽर्थं व्यनक्ति–इति गरीयसी कल्पना स्यात्।**

---

नीयतया तस्मिन् पर्याये अगृहीतशक्तिकस्यापि पुंसः शाब्दबोधापत्तेः। यदि तु एतद्दोषपरिहारार्थं तत्तत्पर्यायानुसन्धानोत्तरभाविशाब्दत्वावच्छेदेनतत्तत्पर्यायाभिव्यङ्ग्यत्वावच्छेदेनस्फोटगतशक्तिग्रहत्वेन कारणतेत्युच्यते, तथासति शाब्दं प्रति तत्पर्यायशक्तिग्रहत्वेनैव कारणता आस्थेया, न तु तादृशस्फोटगतशक्तिग्रहत्वेन, गौरवात् - इति शक्तिग्रहगतकारणतावच्छेदकलाघवानुसारेण पर्यायेष्वेव शक्तयः सिध्यन्तीति नेदं गौरवं दूषणावहम्। धर्म्यन्तरकल्पनापत्त्या तु स्फोटपक्ष एव गौरवग्रस्तः। एवं च 'कं पर्यायमनुसन्धाय प्रजापतिना प्रजाः सृष्टाः' इति विनिगमनाविरहोऽपि न, वेदगता ये पर्याया [1]प्रजापतेः मनसि विपरिवृत्ताः [2]तैर्देवादिसृष्ट्युपपत्तेः। अन्यथा 'किम्पर्यायाभिव्यक्तेन स्फोटेन प्रजाः सृष्टाः' इति[3] तवापि का गतिः।

**क्रमानुरोधिन एव वर्णा इति।** स्फोटवादिना प्रत्येकसमस्तवाचकतायां विकल्पपूर्वं दूषणमुक्तम्। तत्र समस्तपक्ष एवाश्रितः। 'कपिः' 'पिकः' इत्यादौ तु नाविशेषः। यथा पूर्वमुच्चारणदशायां प्रत्येकमनुभूता वर्णाः समूहालम्बनस्मरणेन विषयीक्रियन्ते, तथा पूर्वपूर्ववर्णोत्तरत्वेनानुभूताः तथैव स्मर्यन्ते। तथा च 'कपिः पिकः' इत्यादौ वर्णाविशेषेऽपि क्रमविशेषात् पदभेदः। न च क्रमस्य कथं पदभेदकतेति शङ्कनीयम्। शक्तत्वं हि पदत्वम्। वृद्धव्यवहारे

---

1. मु. 'प्रजापतेः' नास्ति 2. मु. तैरेवादि
3. **इतीति** प्रश्ने इति शेषः।

अथापि नाम प्रत्युच्चारणमन्येऽन्ये वर्णाः स्युः, तथापि प्रत्यभिज्ञालम्बनभावेन वर्णसामान्यानामवश्याभ्युपगन्तव्यत्वात् या वर्णेष्वर्थप्रतिपादनप्रक्रिया रचिता सा सामान्येषु संचारयितव्या । ततश्च नित्येभ्यः शब्देभ्यो देवादिव्यक्तीनां प्रभव इत्यविरुद्धम् ॥ २८ ॥

## अत एव च नित्यत्वम् ॥ २९ ॥

(स्वतन्त्रस्य) कर्तुरस्मरणादेव हि स्थिते वेदस्य नित्यत्वे, देवादिव्यक्तिप्रभवाभ्युपगमेन तस्य विरोधमाशङ्क्य 'अतः प्रभवात्' इति परिहृत्य, इदानीं तदेव वेदनित्यत्वं स्थितं द्रढयति - अतएव च नित्यत्व-

---

च क्रमविशेषावच्छेदेनैव शक्तेर्गृहीततया अवच्छेदकभेदे शक्तिभेदस्यावश्यकतया पदभेदोपपत्तेः । न च मौनिना लिखिते युगपदेव लिप्यक्षरैरन्येनानुमिते श्लोके क्रमो न सम्भावित इति वाच्यम् । तत्रापि लिपिक्रमानुसारेणैव 'क्रमेणानुसन्धायानेन लिखितानि' इति लेखकानुसन्धानक्रमबोधोपपत्तेः । अवश्यं चेदं स्फोटवादिनाप्युपेयम् । तस्यापि 'तत्तदर्थप्रतिपादकस्फोटव्यञ्जका एते वर्णाः' इति ग्रहोऽपेक्षित एवेति क्रमानुरोधेनैव स्फोटव्यञ्जकतायास्समर्थनीयत्वात् ।

पूर्वं वर्णानां नित्यतां [1]आश्रित्य वेदनित्यता व्यवस्थापिता, इदानीं तु 'उत्पन्नो गकारो विनष्टो गकारः' इति प्रतीतेः स्फुटवैलक्षण्यप्रतीतेश्च 'गकारादयोऽनन्ता अनित्याश्च' इति पक्षमाश्रित्यापि वेदनित्यत्वविरोधः परिहर्तुं शक्यत इत्यभिप्रेत्याह—**अथापि नामेति** । वर्णनित्यत्ववादिनापि हि समानानुपूर्वीकत्वेनैव वेदनित्यत्वं व्यवस्थापनीयम् । तत् अनित्यवर्णवादिनोऽपि तुल्यम् ॥ २८ ॥

**कर्तुरस्मरणादेवेति** । यथा हि भारतादौ 'इति कृष्णद्वैपायनकृतौ' इति रघुवंशादिवर्णनपरकाव्येष्विव कर्ता स्मर्यते, नैवं 'वेदोऽनेन कृतः' इति विशिष्य स्मरणमस्तीत्यतः वेदो नित्य इति । **वेदनित्यत्वं स्थितं द्रढयतीति** । कर्तुरस्मरणमसिद्धम्, 'संहिताकारपदकारब्राह्मणकाराणां' 'मन्त्रकृतो वृणीते' 'विश्वामित्रस्य सूक्तं भवति' इत्यादिभिर्वाक्यैः वेदकर्तॄणां प्रतिपादनात्-इतिशङ्कानिराकरणेनेत्यर्थः।

---

1. मु. अभिप्रेत्य

मिति। अत एव-नियताकृतेर्देवादेर्जगतो वेदशब्दप्रभवत्वात् वेदशब्दे नित्यत्वमपि प्रत्येतव्यम् । तथा च मन्त्रवर्णः—'यज्ञेन वाचः पदवीयमायन् तामन्वविन्दन्नृषिषु प्रविष्टाम्' (ऋ० सं० १०।७१।३) इति स्थितामेव वाचं अनुविन्नां दर्शयति । वेदव्यासश्च एवमेव स्मरति—

'युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः ।
लेभिरे तपसा पूर्वं अनुज्ञाताः स्वयंभुवा' ॥ इति ॥ २९ ॥

**समाननामरूपत्वाच्चावृत्तवप्यविरोधोदर्शनात्स्मृतेश्च॥३०॥**

अथापि स्यात् - यदि पश्वादिव्यक्तिवत् देवादिव्यक्त्योऽपि संत-

---

वेदशब्दनित्यत्वमपि प्रत्येतव्यमिति । 'अस्य निश्वसितं' इतिश्रुतिपर्यालोचनया वियदादिवत् परमेश्वरसृष्टत्वेऽपि विवक्षितवेदनित्यत्वस्य नानुपपत्तिः। यथा हि अध्यापकाध्येतृव्यवहारदशायां वेदस्मृत्यनुकूलसंस्काराश्रयाः पुरुषा विद्यन्ते, एवं प्रलयकालेऽपि उत्तरकल्पीयस्मृत्यनुकूलवेदगोचरसंस्काराश्रयपुरुषसद्भावः, इत्येव हि वेदनित्यत्वं विवक्षितम् । [1]तत्र च अतश्शब्देन देवादीनां वेदवाक्यप्रभवत्वं [2]पूर्वसूत्रे प्रतिपादितं [3]यत् तदिह[4] हेतुत्वेन परामृश्यते । सृष्ट्यारम्भे वेदवाक्यस्मरणं विना पूर्वकल्पीयपदार्थानुसन्धानपूर्वाया एतत्कल्पीयसृष्टेः असम्भवात् तदानीं पूर्वकल्पानुभूतवेदस्मृतिरवश्यं वक्तव्या, सा च प्रलयकाले [5]स्मर्तृपुरुषगतसंस्कारं विना नोपपद्यते-इत्यनेन हेतुना उक्तसाध्यसिद्धिः । तथा च 'मन्त्रकृतः' इत्यादिवचनानि तेषांतेषामृषीणां कल्पादावुद्भूतानां पुण्यविशेषात् जन्मान्तराधीतस्य वेदस्य स्वत एव स्मरणं इत्यभिप्रायेण व्याख्येयानीति परिहाराभिप्रायः ।

वाचः—वेदस्य । पदवीयं-ग्रहणयोग्यताम् । ऋषिषु-विश्वामित्रादिषु । प्रविष्टां-संस्काररूपेण स्थिताम् ॥ २९ ॥

अयमत्र शङ्काभिप्रायः—अवान्तरप्रलये स्मृत्युपयोगिवेदगोचरसंस्काराश्रयपुरुषसद्भावेऽपि महाप्रलये न संभवति । अवान्तरप्रलयो हि प्रजापतेस्सुषु-

---

1. तत्र-वेदनित्यत्वे ।　　2. मु -पूर्वत्र
3. मु. 'यत्' नास्ति　　4. इह - अस्मिन् सूत्रे ।
5. मु. सूक्ष्मपुरुष

तिकालः। तत्र च विद्यमानसंस्कारः पुनरुत्थानानन्तरं अस्मदादिसुप्तोत्थितवत् प्रजापतेरुपपद्यते स्मरणोपयोगी। एवं महर्षीणामपि। महाप्रलयस्तु प्रकृतिमात्रावशेषः प्रजापतिप्रभृतीनां सर्वेषामपि देहवियोगकालः। तदनन्तरं च [1]जन्मान्तरानुष्ठितपुण्यवशात् अन्य एव प्रजापत्याद्यात्मना पुण्यविशेषेणोपचिता अधिकारिपुरुषा उत्पद्यन्ते। न च तेषां पूर्वकल्पीयवेदानुभवजनितः संस्कारः विद्यमानोऽपि सृष्ट्यारम्भे स्मृतिहेतुस्सम्भवति। मरणस्य स्मृतिप्रमोषहेतुत्वेन संस्कारोद्बोधविघटकत्वात्। न च तदानीं ईश्वर एव [2]तान् वेदं पूर्वकल्पसमानानुपूर्वीकं अध्यापयिष्यतीति वाच्यम्। तस्य शरीराभावेन अध्यापकत्वासम्भवात्। अतः, प्रजापत्यादिभिः तदानीं कालिदासवत् अपूर्वो[3] वेदः काव्यमिव सृष्ट इत्यभ्युपेयम्। 'यज्ञेन वाचः पदवीयं' इत्यादिपूर्वसूत्रोदाहृतानि वचनानि तु अवान्तरप्रलयाभिप्रायाणि भविष्यन्ति। एवं च 'मन्त्रकृतः' इत्यादिवाक्यानि स्वारस्येनोपपद्यन्ते। एवमेव च व्यवस्था युक्ता। वचनद्वयस्यापि अवान्तरमहाप्रलयभेदेन व्यवस्थोपपत्तौ कस्यापि क्लेशेनार्थवर्णनायोगात्। अन्यथा हि 'मन्त्रकृतः' इति वचनं क्लेशेन व्याख्यातं भवेत्। नन्वभिनववेदसृष्ट्यभ्युपगमे तस्य पूर्वकल्पीयपदार्थानुसन्धानानुपयोगित्वात् कथं समानाकारसृष्ट्युपयोगित्वमिति चेत्, मास्तु तथात्वम्। वेदप्रभवत्वप्रतिपादकवचनजातस्यापि अवान्तरप्रलयविषयत्वोपपत्तेः। एवंसति 'उपायाभावेन पूर्वकल्पतुल्यैव प्रजापतिना सृष्टिः कर्तुमशक्या' इत्यापादनमपि [4]इष्टापत्तिपराहतमेव। तथा च, यत् पूर्वसूत्रे वेदस्य नित्यत्वं व्यवस्थापितं तन्नोपपद्यते। एवं शब्दइतिचेदितिसूत्रे यत् शब्दार्थसम्बन्धस्य जातिमादाय नित्यत्वं व्यवस्थापितं तदपि नोपपद्यते। जातिव्यक्त्यात्मकस्य कृत्स्नस्यापि प्रपञ्चस्य महाप्रलये असम्भवात्। [5]तत्र जात्याश्रयव्यक्त्यभावेन जात्यवस्थानायोगात् जातिनित्यत्ववादोऽपि[6] निरालम्बन एव। तदिदमुक्तम्—

---

1. **जन्मान्तरेत्यादि** अन्ये एव पुण्यविशेषेणोपचिता अधिकारिपुरुषाः जन्मान्तरानुष्ठितपुण्यवशात् प्रजापत्याद्यात्मना उत्पद्यन्ते—इति संबन्धः।

2. आ. तेभ्यः

3. मु. 'अपूर्वः' नास्ति

4. आ. इष्टापत्तिग्रस्तमेव

5. आ. प्रलये

6. मु. 'अपि' नास्ति

त्यैवोत्पद्येरन्निरुध्येरंश्च ततः अभिधानाभिधेयाभिधातृव्यवहाराविच्छेदात् संबन्धनित्यत्वेन विरोधः शब्दे परिह्रियेत। यदा तु खलु सकलं त्रैलोक्यं परित्यक्तनामरूपं निर्लेपं प्रलीयते प्रभवति चाभिनवमिति श्रुतिस्मृतिवादा वदन्ति, तदा कथमविरोधः-इति ।

तत्रेदमभिधीयते—समाननामरूपत्वादिति । तदापि संसारस्यानादित्वं तावदभ्युपगन्तव्यम् । प्रतिपादयिष्यति चाचार्यः संसारस्यानादित्वम्—'उपपद्यते चाप्युपलभ्यते च' (ब्र. सू. २।१।३६) इति । अनादौ च संसारे यथा स्वापप्रबोधयोः प्रलयप्रभवश्रवणेऽपि पूर्वप्रबोधवदुत्तरप्रबोधेऽपि व्यवहारात् न कश्चिद्विरोधः, एवं कल्पान्तरप्रभवप्रलययोरपीति द्रष्टव्यम् । स्वापप्रबोधयोश्च प्रलयप्रभवौ श्रूयेते — 'यदा सुप्तः

---

**अभिधानाभिधेयेत्यादिना** । अत्र [1]अभिधानग्रहणेन, स्वरूपतोऽपि वेदनित्यत्वं न सम्भवतीति सूचितम् । **सम्बन्धनित्यत्वेन विरोधः शब्दे परिह्रियेतेति** । व्यवहितपूर्वसूत्रार्थाक्षेपप्रदर्शनं तु अव्यवहितपूर्वसूत्रार्थाक्षेपस्याप्युपलक्षणम् ।

ननु अत्रेयं शङ्का देवताविग्रहमनिच्छतो[2] मीमांसकस्य वेदान्तिनं विग्रहमङ्गीकुर्वाणं प्रति वक्तव्या । सा न विग्रहाङ्गीकारप्रयुक्ता, अपि तु महाप्रलयाभ्युपगमप्रयुक्ता । सा मीमांसकस्यापि तुल्या । विग्रहानङ्गीकारेऽपि महाप्रलये अभिधानाभिधेयाभिधातृव्यवहारविच्छेदस्यापरिहार्यत्वात्-इति चेत्, उच्यते—मीमांसको हि मन्त्रार्थवादादिप्रामाण्यमनभ्युपगम्य यथा देवताविग्रहादिकं नाभ्युपगच्छति तथा सृष्ट्यादिकमपि नाभ्युपगच्छतीति, नायं दोषो मम प्रसरतीति तदभिमानः ।

ननु-सूत्रे समाननामरूपत्वादित्यत्र केन समानत्वं विवक्षितं इत्याशङ्क्य, पूर्वेण कल्पेनेति परिहारमभिप्रेत्य, पूर्वकल्पसद्भावबोधनाय वक्ष्यमाणमनादित्वं स्मारयति—**तदाऽपि संसारस्येति** । 'यदा सुप्तः' इति श्रुतौ स्वप्नपदं जाग्रतो-

---

1. **अभिधानग्रहणेनेति** अभिधेयाभिधातृमात्रग्रहणे अभिधानसत्ता संभाव्येत इति भावः ।

2. मु. 'अपि' इत्यधिकम्

स्वप्नं न कंचन पश्यति अथास्मिन् प्राण एवैकधा भवति तदैनं वाक् सर्वैर्नामभिः सहाप्येति चक्षुः सर्वैः रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति स यदा प्रतिबुध्यते यथाऽग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन् एवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः' (कौ. उ. ३।३) इति ।

स्यादेतत्—स्वापे पुरुषान्तरव्यवहाराविच्छेदात् स्वयं च सुप्तप्रबुद्धस्य पूर्वप्रबोधव्यवहारानुसंधानसंभवात् अविरुद्धम् । महाप्रलये तु सर्वव्यवहारोच्छेदात् जन्मान्तरव्यवहारवच्च कल्पान्तरव्यवहारस्यानुसंधातुमशक्यत्वात् वैषम्यम्-इति ।

नैष दोषः—सत्यपि सर्वव्यवहारोच्छेदिनि महाप्रलये परमेश्वरानुग्रहात् ईश्वराणां हिरण्यगर्भादीनां कल्पान्तरव्यवहारानुसन्धानोपपत्तेः । यद्यपि-प्राकृताः प्राणिनो न जन्मान्तरव्यवहारमनुसंदधाना दृश्यन्त इति, तथापि न प्राकृतवत् ईश्वराणां भवितव्यम् । यथा हि प्राणित्वाविशेषेऽपि मनुष्यादिस्तम्बपर्यन्तेषु ज्ञानैश्वर्यादिप्रतिबन्धः परेण परेण भूयान् भवन् दृश्यते, तथा मनुष्यादिष्वेव हिरण्य-

---

ऽप्युपलक्षणम् । तथोपलक्षणं तु जाग्रतोऽपि स्वप्नतुल्यतया प्रातिभासिकताद्योतनाय । अत एव जाग्रत्पदार्थानामपि सुप्तावेव लयप्रतिपादनमपि सङ्गतम् । प्राणे-परमात्मनि । एकधा-अभिन्नो भवति । यथायतनं-यथागोलकम् । प्राणाः—इन्द्रियाणि । प्राणेभ्य इत्यादयः पञ्चम्यः अनन्तरपदाध्याहारेण व्याख्येयाः । देवाः-करणानुग्राहकाः । लोकाः-विषयाः ।

कल्पान्तरव्यवहारानुसन्धानोपपत्तेरिति । सा च [1]वेदानुसन्धाननिबन्धनेति कल्पान्ते संस्कारात्मना वेदाः पुरुषविशेषेष्ववस्थिताः । [2]अतो न तस्यानित्यत्वम् ।

---

1. आ. वेदानुसन्धानेनेति 2. आ. तथा च न

गर्भपर्यन्तेषु ज्ञानैश्वर्याद्यभिव्यक्तिरपि परेण परेण भूयसी भवतीत्येतत् श्रुतिस्मृतिवादेष्वसकृदनुश्रूयमाणं न शक्यं नास्तीति वदितुम्। ततश्च अतीतकल्पानुष्ठितप्रकृष्टज्ञानकर्मणामीश्वराणां हिरण्यगर्भादीनां वर्तमानकल्पादौ प्रादुर्भवतां परमेश्वरानुगृहीतानां सुप्तप्रतिबुद्धवत् कल्पान्तरव्यवहारानुसन्धानोपपत्तिः। तथाच श्रुतिः—

'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै।

तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये॥' (श्वे. उ. ६।१८) इति। स्मरन्ति च शौनकादयः 'मधुच्छन्दःप्रभृतिभिर्ऋषि-

---

कल्पान्तरानुसन्धानं वेदपूर्वकमेवेत्यत्र नियामकमाह—**तथा च श्रुतिरिति**। ततश्च, कल्पान्तरे यादृशो वेदोऽवस्थितः तादृशं वेदं परमात्मा नित्यसिद्धसार्वज्ञ्यादिगुणः अशरीरोऽपि अन्तर्यामितया तं प्रति उद्बोधयति। दृष्टं च जन्मान्तरानुभूतपदार्थानुसन्धानं जातिस्मरादिषु। स्तन्यपानादिप्रवृत्तिश्च [1]जन्मान्तरानुभूतेष्टसाधनत्वस्तन्यपानत्वादिव्याप्त्यनुसन्धानमूलैव। दृश्यते च जन्मान्तरसंस्कारवशादेव तत्तज्जातिप्राप्त्युद्बोधितात् मर्कटादिषु [2]प्लवनादिकौशलं सहजम्। एवं हिरण्यगर्भादीनामपि जन्मान्तराधीतो वेदः स्वयमेव पुण्यविशेषलब्धपरमेश्वरानुग्रहशालिनां उद्बुद्धो भविष्यतीति न तस्य विभिन्नानुपूर्वीकत्वं प्रलयवशादुच्छिन्नसंस्कारत्वं वा सम्भवति। **मधुच्छन्दःप्रभृतिभिः ऋषिभिः दाशतय्यो दृष्टा इति।** दशमण्डलात्मको ऋग्वेदो दशतयः। तदन्तर्गता ऋचो दाशतय्यः। एवं च मन्त्रकारपदकारनिर्देशोऽपि तेषांतेषामृषीणां [3]स्वत एव तत्तद्भाग[4]द्रष्टृत्वमित्येव पर्यवस्यति, न त्वपूर्वतया मन्त्रपदादिरचयितृत्वम्। [5]तेषां हि तथासामर्थ्यं पुण्यविशेषाधीनं वक्तव्यम्। ततश्च पूर्वं

---

1. मु. जन्मान्तरानुभूतेष्टसाधनत्वादि
2. मु. धावनकौशलं
3. मु. ऋषीणां तत्र तत्तद्भाग
4. **द्रष्टृत्वमित्येव** - द्रष्टृत्वमित्यस्मिन्नेवार्थे।
5. उक्तार्थे उपपत्तिमाह—**तेषां हीत्यादिना**।

**भिर्दाशतय्योदृष्टाः' इति। प्रतिवेदं चैवमेव काण्डर्ष्यादयः स्मर्यन्ते। श्रुतिरपि ऋषिज्ञानपूर्वकमेव मन्त्रेणानुष्ठानं दर्शयति—'यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वा अध्यापयति वा स्थाणुं वर्च्छति गर्तं वा प्रतिपद्यते' इत्युपक्रम्य 'तस्मादेतानि मन्त्रे मन्त्रे विद्यात्' (आर्षेय ब्रा १) इति। प्राणिनां च सुखप्राप्तये धर्मो विधीयते, दुःखपरिहाराय चाधर्मः प्रतिषिध्यते। दृष्टानुश्रविकसुखदुःखविषयौ च रागद्वेषौ भवतः न विलक्षणविषयौ, इत्यतो धर्माधर्मफलभूता उत्तरा**

---

तादृशान् मन्त्रादिप्रवर्तकान् ऋषीनुपलभ्य तेषां च कीर्त्यादिकमुपलभ्य 'अहमपि तथा स्याम्' इति कामनया पुण्यानुष्ठानं तत्तद्वेदभागप्रवर्तकताफलकं तैस्तैस्सम्पादितमिति वक्तव्यम्। तत्र विसदृशवेदभागरचयितृत्वे कामनाननुरूपं फलं स्यादिति पूर्वकल्पसदृशवेदभागरचयितृत्वं गुर्वधीनाध्ययनं विनैव तेषां भवतीति प्राप्नोति। इदमेव च मन्त्रादिद्रष्टृत्वम्। एवं च हिरण्यगर्भेणापि तत्तदृषिमाहात्म्यप्रतिपादकं वेदभागं पूर्वकल्पीयं दृष्ट्वैव ते ते ऋषयः सृष्टा इति सिद्धं वेदस्य समानानुपूर्वीकत्वं महाप्रलयव्यवधानेऽपि। इदमेव [1]वेदस्य नित्यत्वम्—यत् पूर्वपूर्वानुपूर्वीगोचरसंस्कारवशात् पुनःपुनः तादृशानुपूर्वीकस्यैवाध्ययनादिकम्।

[2]अमुमर्थमभिप्रेत्याह—**प्रतिवेदं चैवमेव काण्डर्ष्यादयःस्मर्यन्त इति।** एवं - पूर्वपूर्वसमानानुपूर्वीकस्य वेदभागस्य द्रष्टृत्वेनैव, न त्वपूर्वस्य रचयितृत्वेन। ऋषिज्ञानपूर्वकमेव, न तु कर्तृज्ञानपूर्वकम्। ऋषिश्च मन्त्रभागद्रष्टैव। आर्षेयं - ऋषिः, छन्दः - गायत्र्यादिः, दैवतं - मन्त्रप्रतिपाद्या देवता, ब्राह्मणं - विनियोजकवाक्यम्। एतानि अविदितानि यस्मिन् मन्त्रे इति बहुव्रीहिः। स्थाणुं- स्थाणुत्वम्। ऋच्छति-गच्छति। दृष्ट-लौकिकम्। आनुश्रविकं-वैदिकम्। **धर्माधर्मफलभूतेति।** तथात्वं च प्रपञ्चवैचित्र्यान्यथानुपपत्त्या स्वीकर्तव्यम्। अन्यथा सृष्ट्यारम्भे 'केचन सुखिनः केचन दुःखिनः' इति वैलक्षण्यं निर्हेतुकमेव स्यात्। तथा च कल्पान्तरानुष्ठितधर्माधर्माधीनत्वे वैचित्र्यस्य स्थिते

---

1. मु. इदमेव च तस्य नित्यत्वम् 2. आ. इत्यमु.

सृष्टिर्निष्पद्यमाना पूर्वसृष्टिसदृश्येव निष्पद्यते ।

स्मृतिश्च भवति—

तेषां ये यानि कर्माणि प्राक्सृष्ट्यां प्रतिपेदिरे ।
तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनः पुनः ॥
हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते ।
तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ॥' [वि. पु. १-५-६२]

इति । प्रलीयमानमपि चेदं जगत् शक्त्यवशेषमेव प्रलीयते, शक्तिमूलमेव

---

तयोः कामनानुरूपफलजनकतया अनिष्टसाधनत्वेन नरकादिकं शास्त्रतोऽवगत्य दाहच्छेदादिकं च लोकतोऽवगत्य तत्परिहारार्थमधर्मवर्जनं यैः कृतम्, इष्टसाधनतया इन्द्रादिस्थानं शास्त्रतो राजादिस्थानं लोकतोऽवगत्य धर्माचरणं च यैस्तत्प्राप्त्यर्थं कृतं, तेषां कल्पान्तरे नरकाद्यप्राप्तिः [1]अनिष्टसाधनतया अपेक्षिता, इन्द्रादिपदप्राप्तिश्च इष्टसाधनतया अपेक्षिता । तत्र कल्पभेदेन पदार्थानां वैजात्येऽभ्युपगम्यमाने यदि नरकं [2]इष्टसाधनं, इन्द्रादिपदं च कल्पान्तरे अनिष्टसाधनं, तथासति कल्पान्तरानुभाव्यानि यानि कर्माणि पूर्वकल्पेऽनुष्ठितानि तेष्विन्द्रादिपदप्रापकं पुण्यमनिष्टसाधनं स्यात् नरकप्रापकपापपरिहारश्च इष्टवियोगहेतुस्स्यादिति कर्मणां एकस्मिन्नेव कल्पे [3]फलप्रापकताया अनिर्णीतत्वात् कस्यापि [4]वेदवाक्याधीना प्रवृत्तिर्निवृत्तिश्च न स्यादिति तुल्यरूपतैव पदार्थानामुपेया । तदाह—[5]**पूर्वसृष्टिसदृश्येवेति** । तथा च तुल्यरूपसृष्टिसिद्धये कल्पान्तरव्यवहारानुसन्धानाय हिरण्यगर्भाय वेदप्रदानमीश्वरीयमिति न वेदानित्यता । हिंस्रादयो धर्मप्रधानाः शब्दाः । तैर्हिंस्रत्वादिभिः भाविताः - संस्कृताः पुरुषाः हिंस्रत्वादिकं जन्मान्तरे प्रपद्यन्त इति योजना । **शक्त्यवशेषमिति** । शक्तिः सूक्ष्मावस्था । तथा च प्रलयेऽपि सूक्ष्मावस्थवस्तुसद्भावात् शब्दार्थसम्बन्धानित्यता नेति भावः ।

---

1. **अनिष्टसाधनतया** नरकादिप्राप्तेः इत्यादिः ।
2. मु. इष्टसाधनं, तथा सति
3. मु. फलप्रापकतया
4. मु. वेदवाक्याधीनप्रवृत्तिः
5. आ. पूर्वपूर्वसदृश्येवेति । अत्र पाठे 'उत्तरोत्तरा' इति भाष्यपाठः ।

च प्रभवति। इतरथा आकस्मिकत्वप्रसङ्गात्। न च अनेकाकाराः शक्तयः शक्याः कल्पयितुम्। ततश्च विच्छिद्यविच्छिद्याप्युद्भवतां भूरादिलोकप्रवाहाणां देवतिर्यङ्मनुष्यलक्षणानां च प्राणिनिकायप्रवाहाणां वर्णाश्रमधर्मफलव्यवस्थानां च अनादौ संसारे नियतत्वं इन्द्रियविषयसंबन्धनियतत्ववत् प्रत्येतव्यम्। न हि इन्द्रियविषयसंबन्धादेर्व्यवहारस्य प्रतिसर्गमन्यथात्वं षष्ठेन्द्रियविषयकल्पं शक्यमुत्प्रेक्षितुम्। अतश्च सर्वकल्पानां तुल्यव्यवहारत्वात् कल्पान्तरव्यवहारानुसंधानक्षमत्वाच्च ईश्वराणां समाननामरूपा एव प्रतिसर्गं विशेषाः प्रादुर्भवन्ति। समाननामरूपत्वाच्च आवृत्तावपि महासर्गमहाप्रलयलक्षणायां जगतोऽभ्युपगम्यमानायां न कश्चिच्छब्दप्रामाण्यादिविरोधः।

समाननामरूपतां च श्रुतिस्मृती दर्शयतः—'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। दिवं च पृथिवीं चान्तरिक्षमथो स्वः' (ऋ. सं. १०।१९०।३) इति। यथा पूर्वस्मिन् कल्पे सूर्याचन्द्रमःप्रभृति जगत् क्लृप्तं तथा अस्मिन्नपि कल्पे परमेश्वरोऽकल्पयदित्यर्थः। तथा 'अग्निर्वा अकामयत अन्नादो देवानाꣳ स्यामिति। स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवपत्' (तै. ब्रा. ३।१।४।१) इति नक्षत्रेष्टिविधौ योऽग्निर्निरवपत् यस्मै वाऽग्नये निरवपत् तयोः समाननामरूपतां दर्शयतीति एवंजातीयका श्रुतिः इह उदाहर्तव्या।

---

तथा अग्निर्वा अकामयतेत्यादि। नन्वत्र एकोऽग्निः यष्टव्यः अपरो यष्टा इति एतावदवगम्यते, तावता भविष्यन्नग्निः पूर्वेण समान इति कथं सिध्यति।

उच्यते—'यागादिषूपयुक्त एक एवाग्निः' इति तावदुपेयम्। अन्यथा 'केन कोऽग्निर्यष्टव्यः' इत्यनिर्धारणप्रसङ्गात्। तथा च, यष्टृपरं यदग्निपदं मुख्यं स्वीक्रियेत, तदा तस्य मुख्यतासिद्ध्यर्थं यष्टृतादशायां तस्य तदधिकारे वर्तमानता उपेयेति तस्य स्वोद्देशेनैव हविस्त्यक्तव्यमापद्यते। ततश्च वाक्यम-

स्मृतिरपि—

'ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः ।
शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः ॥
यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥ [वि.पु. १-५-६६]
यथाभिमानिनोऽतीताः तुल्यास्ते सांप्रतैरिह ।
देवा देवैरतीतैर्हि रूपैर्नामभिरेव च ॥'

इत्येवंजातीयका द्रष्टव्या ॥ ३० ॥

---

सदर्थकं स्यात् । स्वोद्देशेन निर्वापे स्वत्वत्यागासम्भवात् । प्रकृते निर्वपतेः [1]त्यागपगपर्यन्तत्वात् । न च - अत्र अग्निना स्वीयं द्रव्यं कृत्तिकासाधारणं कृतं, इत्येव कल्प्यताम्, 'अग्नये कृत्तिकाभ्यः' इति श्रवणात् - इति वाच्यत् । साधारणीकरणेऽपि अग्निस्वामिकत्वस्यानिवृत्त्या अग्निकर्तृकयागानिष्पत्तेः । अतो यष्टृपरमग्निपदं भविष्यद्वृत्त्याग्नित्वमादाय यष्टव्यादग्नेर्भिन्नमेव त्रैवर्णिकमधिकारिणं प्रतिपादयतीति वक्तव्यम् । तथा च वर्तमानाग्न्यधिकारनिवृत्त्यनन्तरं अयं यष्टा अग्निर्भविष्यतीति लभ्यते । अतः अतीतस्य वर्तमानस्य च तुल्यनामतायां इदमुदाहरणं भवत्येव । न च यष्टव्यपराग्निपदमेव भूतपूर्वगत्या अनग्नावेव लाक्षणिकमस्त्विति वाच्यम् । एवं हि सति अवैरूप्याय अस्माकमपि अतीताधिकार एवाग्निः यष्टव्यस्स्यात्, अतीतानां च बहुत्वात् कोऽग्निर्यष्टव्य इति विनिगमना च न स्यात् । अतः सर्वैः वर्तमान एवाग्निर्यष्टव्यः । एवं च सति 'अग्निमावह' इत्यादिमन्त्रगतान्यप्यग्निपदानि मुख्यानि सम्पद्यन्ते । 'अभून्नो दूतो हविषो जातवेदाः' इत्यादिमन्त्रैः [2]वर्तमानाग्निकर्मप्रतिपादनमप्युपपद्यते । अतो यष्टृपरस्यैवाग्निपदस्य भविष्यद्वृत्त्या लाक्षणिकत्वमास्थेयम् । ऋषीणां-प्राचीनानाम् । शर्वर्यन्ते-प्रलयान्ते । पर्यये-पर्याये-पुनरप्यृतूनामागमने ॥ ३० ॥

---

1. मु. यागपर्यन्तत्वात्　　2. मु. वर्तमानाग्निप्रतिपादन

## मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ ३१ ॥

इह 'देवादीनामपि ब्रह्मविद्यायामस्त्यधिकारः' इति यत् प्रतिज्ञातं तत् पर्यावर्त्यते। देवादीनामनधिकारं जैमिनिराचार्यो मन्यते। कस्मात्। मध्वादिष्वसंभवात्। ब्रह्मविद्यायामधिकाराभ्युपगमे हि विद्यात्वाविशेषात् मध्वादिविद्यास्वप्यधिकारोऽभ्युपगम्येत। नचैवं संभवति। कथम्। 'असौ वा आदित्यो देवमधु' (छा.उ.३।१।१) इत्यत्र मनुष्या आदित्यं मध्वध्यासेनोपासीरन्। देवादिषु ह्युपासकेष्वभ्युपगम्यमानेषु आदित्यः कमन्यमादित्यमुपासीत। पुनश्च आदित्यव्यपाश्रयाणि पञ्च रोहितादीन्यमृतानि उपक्रम्य, वसवो रुद्रा आदित्या मरुतः साध्याश्च पञ्च देवगणाः क्रमेण तत्तदमृतमुपजीवन्तीत्युपदिश्य, 'स य एतदेवममृतं वेद वसूनामेवैको भूत्वा अग्निनैव मुखेन एतदेवामृतं दृष्ट्वा तृप्यति' इत्यादिना वस्वाद्युपजीव्यान्यमृतानि विजानतां वस्वादिमहिमप्राप्तिं दर्शयति। वस्वादयस्तु कानन्यान् वस्वादीनमृतोपजीविनो विजानीयुः। कं वाऽन्यं वस्वादिमहिमानं प्रेप्सेयुः।

---

प्रथमसूत्रे देवादीनामुपासनास्वधिकार इत्युक्तम्। तत्र किं सर्वासूपासनासु अधिकारो विवक्षितः उत कासुचिदेव इति विकल्पे, आद्यनिराकरणार्थं इदं सूत्रं इत्यभिप्रायेण व्याचष्टे–इहेत्यादिना। मधुविद्यायां हि आदित्ये मधुदृष्टिर्विहिता 'असौ वा आदित्यो देवमधु' इति वाक्येन। अतः तस्यां आदित्य उपास्यः। पुनश्च आदित्यस्य प्रागादिषु चतसृषु दिक्षु ऊर्ध्वं च विद्यमानेषु रश्मिषु कर्मफलभूतानां यशस्तेजइन्द्रियवीर्यान्नाद्यानां संश्रयणमुक्त्वा तेषां रसत्वं चोक्तम्। ते च रसा [1]आदित्यगततया प्रत्यक्षीक्रियमाणानि यानि रोहितशुक्लकृष्णपरः-कृष्णमध्यगतक्षोभमाणात्मकानि पञ्च रूपाणि तदात्मतया निरूपिताः। [2]तेषां यथाक्रमं वस्वाद्युपजीव्यत्वं च दर्शितम्। वस्वाद्युपजीव्यतया तेषाममृतपदोदितानांरसानामुपासनाया[3] वस्वादिप्राप्तिश्च फलं निर्दिष्टम्। अस्यामुपासनायां आदित्यस्य वस्वादीनां चाधिकारो नोपपद्यते। कर्तृकर्मविरोधात्।

---

1. मु. आदित्यादिगततया 2. मु. तेषां च 3. आ. उपासनया

**तथा 'अग्निः पादो वायुः पाद आदित्यः पादो दिशः पादः' (छा. उ. ३।१८।२), 'वायुर्वाव संवर्गः' (छा. उ. ४।३।१) 'आदित्यो ब्रह्मेत्यादेशः' (छा.उ.३।१९।१) इत्यादिषु देवतात्मोपासनेषु न तेषामेव देवतात्मनां अधिकारः संभवति। तथा 'इमावेव गोतमभरद्वाजौ अयमेव गोतमः अयं भरद्वाजः' (बृ. उ. २।२।४) इत्यादिषु ऋषिसंबन्धेषूपासनेषु न तेषामेवर्षीणां अधिकारः संभवति ॥ ३१ ॥**

---

ननु - कर्तृकर्मविरोधो न, उपासनासु स्वस्य स्वेनैवोपासितुं शक्यत्वात्। यागादिस्थल एव परं तथाविरोधः। स्वस्योद्देशे स्वत्वनिवृत्तेरसम्भवात्। कथमन्यथा पञ्चाग्न्यादिविद्यासु जीवस्योपास्यत्वम्। कथं च ब्रह्मविद्यास्वप्यहङ्ग्रहेणोपासनं स्यात्। अत एव वस्वादीनां [1]वसुत्वादिप्राप्तिरूपं फलमपि न विरुध्यते। अस्मिन्जन्मनिवसूनामेव जन्मान्तरेऽपिवसुत्वप्राप्तिरस्त्वित्यभिलाषसम्भवात्। अतो वस्वादीनां अस्यामुपासनायां कथमनधिकारः-इति चेत्,

उच्यते - वस्वादीनामुपास्यतया एतदुपासनाप्रीणनीयत्वं तेषां वक्तव्यम्। न च वस्वादीनामुपासनया स्वस्यैव प्रीणनीयत्वं वसून् प्रति सम्भवति। अत उपासनाजनिताया वस्वादिप्रीतेः वसुष्वसम्भवात् न तत्राधिकारो वस्वादीनाम्। पञ्चाग्निविद्यायां तु अगत्या ईश्वरप्रीतिरेव द्वारत्वेन कल्पनीयेति न तत्रानधिकारः। अहङ्ग्रहेण परब्रह्मोपासनायां (च)[तु] उपास्यस्य ब्रह्मण एव प्रीतिः द्वारमिति न तत्राप्यधिकारविरोधः। अतो न वस्वादीनां मधुविद्यायामधिकार उपपद्यते।

**अग्निः पाद इति।** अधिदैवतं आकाशस्य ब्रह्मत्वेन उपासनं विधाय तस्य अग्न्यादयश्चत्वारः पादा अनेन वाक्येन निर्दिश्यन्ते। **इमावेव गोतमभरद्वाजाविति।** 'इदं वै तच्छिरः एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' इति चमसत्वेन मुखं प्रस्तुत्य 'तस्यासत ऋषयस्सप्ततीरे' इति मुखसम्बन्धित्वेन सप्तर्षीन् प्रस्तुत्य तद्विवरणार्थं इदं वाक्यं प्रवृत्तम्। तथा च इमाविति कर्णावित्यर्थो द्रष्टव्यः॥३१॥

अथ, यत्र एवं विरोधो नास्ति तेष्वेवोपासनेषु देवादीनामधिकारो न सर्वत्रेति द्वितीयपक्षनिरासार्थत्वं मनसि निधाय [2]सूत्रान्तरमवतारयति—

---

1. मु. वसुत्वप्राप्ति    2. आ. सूत्रमवतारयति

कुतश्च देवादीनामनधिकारः—

ज्योतिषि भावाच्च ॥ ३२ ॥

**यदिदं ज्योतिर्मण्डलं द्युस्थानं अहोरात्राभ्यां बम्भ्रमत् जगदवभासयति तस्मिन् आदित्यादयो देवतावचनाः शब्दाः प्रयुज्यन्ते, लोकप्रसिद्धेः वाक्यशेषप्रसिद्धेश्च । न च ज्योतिर्मण्डलस्य हृदयादिना विग्रहेण**

---

**कुतश्चेति । वाक्यशेषप्रसिद्धेश्चेति ।** आदित्यं प्रस्तुत्य 'पुरस्तादुदेता पश्चादस्तमेता' [छा. उ. ३-६-४] इति वाक्यशेषः । स ज्योतिर्मण्डलमेव प्रतिपादयति । तत्रैव हि उदयास्तमयौ प्रसिद्धौ । एवं 'आदित्येनैवायं ज्योतिषाऽऽस्ते पल्ययते' 'चन्द्रमसैवायं ज्योतिषाऽऽस्ते पल्ययते' [बृ. उ. ४-३-२-३] इत्यादिकमपि मण्डलविषयमेव । एवं 'रोहिणी नक्षत्रं प्रजापतिर्देवता' 'ज्येष्ठा नक्षत्रमिन्द्रो देवता' इत्यादिवाक्यैः इन्द्रप्रजापत्यादिपदानामपि ज्योतिर्मण्डलविशेषवाचकतैवावगम्यते ।

ननु-मन्त्रार्थवादादिभ्यः प्रतीयमानं देवताविग्रहादिकं कथं नास्तीत्यपलप्यते । अन्यथा ज्योतिष्टोमादिवाक्यात्प्रतीयमानस्वर्गयागादिसाध्यसाधनभावोऽप्यपलप्येत । न च - ज्योतिष्टोमादिवाक्यस्य तस्मिन्नर्थे तात्पर्यात् सोऽर्थो नापलप्यते, अर्थवादादीनां तु न स्वार्थे तात्पर्यमिति - वाच्यम् । एतादृशवैषम्ये मूलाभावात् - इति चेत्-

उच्यते - वेदवाक्यानां हि प्रमाणान्तरानधिगते तदविरुद्धे च प्रयोजनवत्यर्थे प्रामाण्यम् । तत्र यद्यपि देवताविग्रहादिकं प्रमाणान्तरानधिगतं भवति, तथापि न प्रमाणान्तराविरुद्धम् । आदित्यादिपदानां चैतन्यादिमद्देवताभिधायित्वे हि लोके तेषां मण्डलादिषु गृहीता शक्तिः [1]विरुध्यते ।

अपि च यदि देवताप्रीतिपर्यन्ततां कर्मणामुपेत्य प्रीतायास्तस्याः फलदातृत्वमुपेयते, तदा कल्पान्तरानुभाव्येषु फलेषु का गतिः । कर्माराधिताया देवतायाः प्रलये नष्टत्वात् । अश्वमेधाङ्गभूताश्वस्याङ्गादिकमुद्दिश्य ये होमा आम्नाताः-'दद्भ्यः स्वाहा हनूभ्यां स्वाहा' [तै. सं. ७-३-१६] इत्यादयः तेषु कथं

---

1. मु. निरुध्यते

देवताप्रीत्यर्थता कर्मणामुपेतव्या। कथं च ध्यवदानसमित्कुशादिभिः अत्यल्पैः अनदनीयैश्च देवताप्रीतिस्स्यात्। तत्र चेत् कर्मण एव देवताप्रीतिं विना फलं स्यात्, परमेश्वरप्रीत्यर्थता वा [1]अभ्युपगम्येत, तदा सर्वत्रापि तथाऽस्तु, किमर्धजरतीयेन।

अपि च उत्सर्गतः शब्दस्य एकस्मिन्नर्थे तात्पर्यम्। न च प्रयाजादिवाक्यानामवान्तरवाक्यार्थे महावाक्यार्थे चोभयत्र तात्पर्यं [2]दृष्टमिति वाच्यम्। अवान्तरवाक्यविधया प्रयाजादिवाक्यैः योऽर्थः प्रतिपादितः, महावाक्यघटकतादशायामपि प्रयाजादिवाक्यांशेन तावानेवार्थः प्रतिपाद्यते, न त्वधिकः। परं तु बोधद्वयं तदर्थगोचरं जायते। अवान्तरवाक्यविधया एको बोधः, महावाक्यविधया अपरो बोधः। अर्थवादवाक्येषु तु मुख्यार्थ एकः लक्षणीयश्च अपरः स्तुतिरूप इति कथमर्थद्वये तात्पर्यम्। न च-विनिगमनाविरहात् उभयत्रापि तात्पर्यं कल्पनीयम्, श्रुत्यनुग्रहाय मुख्यार्थ एव वा तदस्त्विति - वाच्यम्। मुख्यार्थस्य [3]विध्यनपेक्षितत्वेन तत्र तात्पर्यकल्पनायोगात्। न च [4]विध्यपेक्षितत्वं तात्पर्यविषयत्वे अप्रयोजकमिति वाच्यम्। प्रयोजनपर्यवसायी हि अध्ययनविधिगृहीतानां वेदवाक्यानां अर्थो वर्णनीयः। तत्र विधिवाक्यानां ज्योतिष्टोमादिविषयप्रवृत्तिजननद्वारा स्वर्गादिपुरुषार्थपर्यवसायितया [5]स्वार्थतात्पर्यकत्वे, अर्थवादलक्षितायास्स्तुते रुच्युत्पादनद्वारा प्रवृत्त्युपयोगितया युक्ता तात्पर्यविषयता। देवताविग्रहादिज्ञानं तु न ब्रह्मज्ञानवत् स्वत एव पुरुषार्थपर्यवसायि, नापि स्तुतिज्ञानवत् प्रवृत्त्युपयोगि। अतो विध्यनपेक्षितविग्रहादिप्रतिपादकतायां वाक्यवैयर्थ्यं स्यात्। [6]तथा च अवश्यापेक्षितेन स्तुत्यर्थेनैव आम्नानचारितार्थ्यात् न पुनः [7]व्युत्पत्तिविरुद्धं स्वार्थे तात्पर्यं कल्पनीयमिति तात्पर्याभावे कथं वाक्यस्य तत्र प्रामाण्यम्। न च - तात्पर्याभावेऽपि यथा रेवत्याधारकत्वं वारवन्तीयसाम्नः प्रतीतमित्येतावता स्वीक्रियते।

1. मु॰ तत्राभ्युपगम्येत
2. मु॰ इष्टमिति  3. मु. विध्यनपेक्षत्वेन
4. मु. विध्यपेक्षत्वं
5. मु. पर्यवसायितायाः  6. मु. तथा च नास्ति
7. व्युत्पत्तिः—'उत्सर्गतः शब्दस्य एकस्मिन्नर्थे तात्पर्यम्' इति नियमः।

चेतनतया अर्थित्वादिना वा योगोऽवगन्तुं शक्यते, मृदादिवदचेतनत्वावगमात् । एतेन अग्न्यादयो व्याख्याताः ।

स्यादेतत् - मन्त्रार्थवादेतिहासपुराणलोकेभ्यो देवादीनां विग्रहवत्त्वाद्यवगमात् अयमदोषः- इति -

नेत्युच्यते । न हि तावत् लोको नाम किंचित् स्वतन्त्रं प्रमाणमस्ति । प्रत्यक्षादिभ्य एव ह्यविचारितविशेषेभ्यः प्रमाणेभ्यः प्रसिद्ध्यन्नर्थो लोकात्प्रसिद्ध्यतीत्युच्यते । न चात्र प्रत्यक्षादीनामन्यतमं प्रमाणमस्ति । इतिहासपुराणमपि पौरुषेयत्वात् प्रमाणान्तरमूलमाकाङ्क्षति । अर्थवादा अपि विधिनैकवाक्यत्वात् स्तुत्यर्थाः सन्तो न पार्थगर्थ्येन देवादीनां विग्रहादिसद्भावे कारणभावं प्रतिपद्यन्ते । मन्त्रा अपि श्रुत्यादिविनियुक्ताः प्रयोगसमवायिनोऽभिधानार्था न कस्यचिदर्थस्य प्रमाणं इत्याचक्षते । तस्मादभावो देवादीनामधिकारस्य ॥ ३२ ॥

---

'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' [ता. ब्रा. १७-७-१] इति हि[1] वाक्यं रेवत्याधारकवारवन्तीयसामसाध्याग्निष्टोमस्तोत्रविशिष्टक्रतुविधिपरम्, न च तस्य वाक्यस्य विशेषणेषु तात्पर्यं विद्यते, एवं स्तुत्यालम्बनस्यार्थस्य तात्पर्याविषयत्वेऽपि, प्रतीतत्वेन तत्रापि प्रामाण्यं किं न स्यादिति - वाच्यम् । वारवन्तीयस्य रेवत्याधारकत्वे वाक्यतात्पर्यविषयता नास्तीत्यनुपपन्नम् । विशेषणविशेष्यतत्संसर्गघटितस्य विशिष्टस्य तात्पर्यविषयत्वे घटकीभूतानां पदार्थानां तात्पर्यविषयत्वावश्यंभावात् । न हि घटकीभूततत्तत्पदार्थव्यतिरेकेण विशिष्टं नाम किञ्चिदस्ति । परं तु [2]तत् तात्पर्यं तावत्सु सर्वेषु व्यासक्तमिति, न तेषां सर्वेषां प्रत्येकं तात्पर्यपर्याप्त्यधिकरणता । स्तुत्यालम्बनीभूतस्य तु न कथञ्चिदपि तात्पर्यसंस्पर्श इति कथं स वेदप्रमाणकस्स्यात् । अतः प्रतीतोऽपि सोऽर्थः अप्रामाणिकत्वात् परित्यज्यते - इत्यभिप्रेत्योपसंहरति— तस्मादभावो देवादीनामिति ॥ ३२ ॥

---

1. मु. 'हि' नास्ति 2. आ. 'तत्' नास्ति

## भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥

तुशब्दः पूर्वपक्षं व्यावर्तयति । बादरायणस्त्वाचार्यो भावमधिकारस्य देवादीनामपि मन्यते । यद्यपि मध्वादिविद्यासु देवादिव्यामिश्रासु असंभवोऽधिकारस्य, तथाप्यस्ति हि शुद्धायां ब्रह्मविद्यायां संभवः, अर्थित्वसामर्थ्याप्रतिषेधाद्यपेक्षत्वादधिकारस्य । न च क्वचिदसंभव इत्येतावता यत्र संभवः तत्राप्यधिकारोऽपेद्येत । मनुष्याणामपि न सर्वेषां

---

**यद्यपि मध्वादिविद्यास्विति** । अत्र यद्यपीत्यनेन अनधिकारे अनभिमतिः द्योत्यते । यद्यपि वस्वादीनां स्वोपासना स्वप्रीत्यर्था न भवति, तथापि ईश्वरप्रीत्यर्था भवत्येवेति ततः प्रीत ईश्वर एव तेभ्यः फलं दास्यतीति न काचिदनुपपत्तिः । अवश्यं हि अस्मदादिभिरपि कल्पावसानकृतायां वस्वाद्युपासनायां ईश्वरप्रीतिरेव द्वारत्वेनास्थेया, उपासनप्रीतानां वस्वादीनां प्रलये नष्टत्वात् । **देवादिव्यामिश्रास्विति** । न च - मधुविद्या ब्रह्मविद्यैव भवति, 'य एतामेवं ब्रह्मोपनिषदं वेद' [छा.उ.३-११-३] इति उपसंहारदर्शनात्, 'न ह वा अस्मा उदेति न निम्लोचति सकृद्दिवा हैवास्मै भवति' [छा. उ. ३-११-३] इति क्रममुक्तिफलकत्वाच्च । अतः तत्रादित्यादिशब्दा गायत्र्यादिशब्दवत् तत्तदवच्छिन्नब्रह्मपरा इति - वाच्यम् । अत्र हि 'असौ वा आदित्यो देवमधु' इति उपक्रमगत आदित्यशब्दः, 'तदादित्यमभितोऽश्रयत्' इत्यादावभ्यस्तश्च । भूयांसि च आदित्यलिङ्गान्येव रश्मिप्रभृतीनि उपक्षिप्तानि । एवं वस्वादिपदान्यप्यभ्यस्यन्ते, 'वसूनामेवैकः' इत्यादिना च वस्वादिपदार्थस्य बहुत्वयोगोऽवगम्यते, उपासकस्य च तेषु मध्ये [1]वसुत्वादिना निवेशः श्रूयते । न चेदं वस्वादिपदानां ब्रह्मलक्षकत्वे उपपद्यते । ब्रह्मण एकत्वात् बहुवचनावधारणषष्ठ्यर्थान्वयानुपपत्तेः । अत इयं वस्वादिजीवोपासनैव । क्रममुक्तिस्तु ततो वचनबलात् भविष्यति । उपसंहारस्थब्रह्मशब्दोऽपि वेदपरो भविष्यति । ब्रह्मोपनिषदं - वेदोपनिषदमित्यर्थः । अतो युक्तमुक्तं **देवादिव्यामिश्रास्विति** । आदिपदात् पूर्वोक्ता [2]ऋषिव्यामिश्रोपासनादिर्विवक्षिता ।

---

1. मु॰वसुत्वादीनां　　2. ऋष्यादि

ब्राह्मणादीनां सर्वेषु राजसूयादिष्वधिकारः संभवति। तत्र यो न्यायः सोऽत्रापि भविष्यति। ब्रह्मविद्यां च प्रकृत्य भवति लिङ्गदर्शनं श्रौतं देवाद्यधिकारस्य सूचकम्—'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत् तथर्षीणां तथा मनुष्याणाम्' (बृ. उ. १।४।१०) इति, 'ते होचुः हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् इति इन्द्रो ह वै देवानामभिप्रवव्राज विरोचनोऽसुराणाम्' (छा. उ. ८।७।२) इत्यादि च। स्मार्तमपि गन्धर्वयाज्ञवल्क्यसंवादादि।

यदप्युक्तं ज्योतिषि भावाच्चेति। अत्र ब्रूमः—ज्योतिरादिविषया अपि आदित्यादयो देवतावचनाः शब्दाः चेतनावन्तमैश्वर्याद्युपेतं तं तं देवतात्मानं समर्पयन्ति, मन्त्रार्थवादादिषु तथा व्यवहारात्। अस्ति हि ऐश्वर्ययोगाद्देवतानां ज्योतिराद्यात्मभिश्चावस्थातुं यथेष्टं च तं तं विग्रहं ग्रहीतुं सामर्थ्यम्। तथा हि श्रूयते सुब्रह्मण्यार्थवादे—'मेधातिथेर्मेष' इति 'मेधातिथिं ह काण्वायनमिन्द्रो मेषो भूत्वा जहार' (षड्विंश. ब्रा. १।१) इति। स्मर्यते च—'आदित्यः पुरुषो भूत्वा कुन्तीमुपजगाम ह' इति। मृदादिष्वपि चेतना अधिष्ठातारोऽभ्युपगम्यन्ते, 'मृदब्रवीत्' 'आपोऽब्रुवन्' [शत. ६।१।३।२,४] इत्यादिदर्शनात्। ज्योतिरादेस्तु भूतधातोः आदित्यादिष्वप्यचेतनत्वमभ्युपगम्यते। चेतनास्त्वधिष्ठातारो देवतात्मानः, मन्त्रार्थवादादिषु व्यवहारात् इत्युक्तम्।

यदप्युक्तं मन्त्रार्थवादयोरन्यार्थत्वात् न देवताविग्रहादिप्रकाशनसामर्थ्यमिति।

अत्र ब्रूमः—प्रत्ययाप्रत्ययौ हि सद्भावासद्भावयोः कारणं, न अन्यार्थत्वमनन्यार्थत्वं वा। तथा हि अन्यार्थमपि प्रस्थितः पथि पतितं तृणपर्णादि अस्तीत्येव प्रतिपद्यते।

अत्राह—विषम उपन्यासः, तत्र हि तृणपर्णादिविषयं प्रत्यक्षं प्रवृत्तमस्ति, येन तदस्तित्वं प्रतिपद्यते। अत्र पुनः विध्युद्देशैकवाक्यभावेन स्तुत्यर्थे अर्थवादे न पार्थगर्थ्येन वृत्तान्तविषया

प्रवृत्तिः शक्या अध्यवसातुम् । न हि महावाक्ये अर्थप्रत्यायके अवान्तरवाक्यस्य पृथक्प्रत्यायकत्वमस्ति । यथा 'न सुरां पिबेत्' इति नञ्वति वाक्ये पदत्रयसंबन्धात् सुरापानप्रतिषेध एव एकोऽर्थोऽवगम्यते । न पुनः 'सुरां पिबेत्' इति पदद्वयसंबन्धात् सुरापानविधिरपीति ।

अत्रोच्यते—विषम उपन्यासः - युक्तं यत् सुरापानप्रतिषेधे पदान्वयस्यैकत्वात् अवान्तरवाक्यार्थस्याग्रहणम् । विध्युद्देशार्थवादयोस्तु अर्थवादस्थानि पदानि पृथगन्वयं वृत्तान्तविषयं प्रतिपद्य अनन्तरं कैमर्थ्यवशेन कामं विधेः स्तावकत्वं प्रतिपद्यन्ते । यथा हि 'वायव्यं श्वेतमालभेत भूतिकामः' [तै. सं. २-१-१] इत्यत्र विध्युद्देशवर्तिनां वायव्यादिपदानां विधिना संबन्धः, नैवं 'वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति' [तै. सं. २-१-१] इत्येषामर्थवादगतानां पदानाम् । न हि भवति 'वायुर्वा आलभेत' इति 'क्षेपिष्ठा देवता वा आलभेत' इत्यादि । वायुस्वभावसंकीर्तनेन तु अवान्तरमन्वयं प्रतिपद्य 'एवंविशिष्टदैवत्यमिदं कर्म' इति विधिं स्तुवन्ति । तत् यत्र सोऽवान्तरवाक्यार्थः प्रमाणान्तरगोचरो भवति तत्र तदनुवादेनार्थवादः प्रवर्तते । यत्र प्रमाणान्तरविरुद्धः तत्र गुणवादेन । यत्र तु तदुभयं नास्ति तत्र, किं प्रमाणान्तराभावाद् गुणवादः स्यात् आहोस्वित् प्रमाणान्तराविरोधाद्विद्यमानवादः इति, प्रतीतिशरणैर्विद्यमानवाद आश्रयणीयो न गुणवादः । एतेन मन्त्रो व्याख्यातः ।

---

प्रतीतिशरणैर्विद्यमानवाद आश्रयणीय इति । अयं भावः— यथा हि 'न सुरां पिबेत्' इति वाक्ये नञ्समभिव्याहारात् 'सुरापानं बलवदनिष्टाननुबन्धीष्टसाधनं न भवति' इत्यर्थपरे 'सुरापानमिष्टसाधनम्' इति बोध एव नास्ति, नैवं 'अर्थवादानामालम्बनीभूतार्थप्रत्यायकत्वमेव नास्ति' इति

वक्तुं शक्यते । तत्प्रत्ययस्य आकाङ्क्षादिबलायातस्य सर्वसम्प्रतिपन्नत्वात् । अन्यथा मुख्यार्थप्रत्यये स्तुतिलक्षणैव न स्यात् । सा च प्रतीतिः प्रमारूपा इत्यपि स्वीकर्तव्यम् । अनवगताबाधितार्थगोचरं हि ज्ञानं प्रमेति प्रसिद्धम् । न च देवताविग्रहादिरूपोऽर्थः प्रमाणान्तरेणावगतः, येन तद्गोचरज्ञानस्य स्मृतिज्ञानवदप्रामाण्यं भवेत् । नापि केनचित् प्रमाणेन बाधितः, येन इदंरजतमितिज्ञानवत् अप्रामाण्यं भवेत् । अथापि क्लृप्तप्रमाणाजन्यत्वादप्रमात्वमिति चेत्, न - प्रतीत्यनुसारेण शब्दस्य तत्र करणत्वात् । न च 'तात्पर्यविषय एव शब्दस्य ज्ञानजनकत्वं' इति प्रतीतिविरुद्धमास्थातुं शक्यते । मन्त्रार्थवादार्थस्य सतोऽसतो वा प्रतीतेः सर्वानुभवसिद्धत्वात् । यदि तु तात्पर्यविषय एव प्रतीतिजनकत्वं शब्दस्येति निर्बन्धः, तथासति आलम्बनीभूतस्यार्थस्य प्रतीयमानत्वात् तत्रापि तात्पर्यमस्तु । [1]स तु प्रमाणान्तराविरोधे तथाभूत एव भवति । न च शब्दस्य उभयत्र तात्पर्यं व्युत्पत्तिविरोधि । श्लेषकाव्ये तथापि व्युत्पत्तेः । न च अत्र लौकिकशक्तिग्रहविरोधः, आदित्यादिपदानां ज्योतिर्मण्डल एव शक्तिग्रहात् - इति वाच्यम् । यथा स्वर्गादिपदानां सुखसामान्यादौ शक्तिग्रहे लोकसिद्धे सत्यपि [2]'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् ॥' इत्याद्यर्थवादानुसारेण सुखविशेषादिवाचकत्वे निर्णीते 'सुखसामान्यादौ लौकिकप्रयोगो लाक्षणिकः तादृशसुखविशेषाज्ञानप्रयुक्तः' इति निर्णीयते, एवं मण्डलादिषु प्रयोगोऽपि लाक्षणिको भविष्यति । 'रोहिणी नक्षत्रं प्रजापतिर्देवता' इत्यादिनिर्देशस्तु 'रोहिणी नक्षत्रं तस्य प्रजापतिर्देवता' इति अध्याहारेण व्याख्येयः। 'प्रजापते रोहिणी वेतु पत्नी' 'इन्द्रो ज्येष्ठामनुनक्षत्रमेति' इति व्यतिरेकप्रतिपादनात् ।

---

1. मु. 'स तु' नास्ति

2. **यन्न दुःखेनेत्यादि** व्याख्यातमेतत् न्यायरक्षामणौ—स्वर्गो हि नाम सङ्कल्पमात्रोपनतस्रक्चन्दनवनितादिसाधनप्रभवः साधनार्जनदुःखासम्भिन्नः स्वदारनियमभ्रंशादिप्रयुक्ताग्रिमनरकदुःखग्रासरहितश्च सुखविशेषः-इति ।

**अपि च विधिभिरेव इन्द्रादिदैवत्यानि हवींषि चोदयद्भिः अपेक्षितमिन्द्रादीनां स्वरूपम् । न हि स्वरूपरहिता इन्द्रादयः चेतस्यारोपयितुं शक्यन्ते । न च चेतस्यनारूढायै तस्यै तस्यै देवतायै हविः प्रदातुं शक्यते ।**

---

यच्चोक्तं [1]देवताविग्रहादेः [2]विध्यनपेक्षितत्वेन तत्प्रतिपादने प्रयोजनं नास्तीति, तत्रोच्यते-मास्तु तत्प्रतिपादने साक्षादेव प्रयोजनम् । न ह्येतावता असति बाधके सोऽर्थः असन्निति वक्तुं शक्यते । परं तु प्रयोजनपर्यवसानाय स्तुतिलक्षणा आश्रीयते । वस्तुतस्तु मुख्यार्थोऽपि विध्यपेक्षित इत्याह—**अपि चेति । न हि स्वरूपरहिता इति ।** यद्यपि स्वरूपरहिता अपि स्वरूपारोपेण चेतसि समारोहयितुं शक्यन्ते, तथापि अपेक्षितस्य स्वरूपस्य मन्त्रार्थवादादिभिः उत्सर्गतः सत्त्वेनैव प्राप्तस्य असत्त्वं परिकल्प्य आरोपकल्पना न प्रमाणानुसारिणी । एवं यानि कर्माणि इन्द्रादिपदप्राप्त्यर्थं विहितानि, तान्यपि इन्द्रादिरूपफलसिद्ध्यै चेतनानिन्द्रादीनपेक्षन्ते । न हि चेतनस्य [3]अचेतनभावः सम्भवति । ततश्च यथा स्वर्गादिस्वरूपसमर्पकस्यार्थवादस्य आस्वर्गादिविषयककामनामुखेन स्वर्गादिफलके कर्मणि प्रवर्तकत्वात् स्वार्थपरता आस्थीयते, एवं इन्द्रादिस्वरूपसमर्पकाणामप्यर्थवादानां इन्द्रत्वादिप्राप्त्युपयोगिषु कर्मसु प्रवृत्त्युपयोगित्वमिति स्वार्थपरता आस्थेया ।

एवं 'अभून्नो दूतो हविषो जातवेदा अवाड्ढव्यानि सुरभीणि कृत्वा' इत्यादिमन्त्रार्थवादप्रतिपाद्यं प्रसिद्धाग्निव्यतिरिक्तमाहवनीयादिस्वरूपमपि अग्नीनादधीतेति विधिना अपेक्ष्यते । आधानजन्यसंस्काराश्रयत्वस्य प्रसिद्धाग्निष्वनुपपत्तेः । पवमानेष्ट्यनन्तरमेव[4] आहितस्य प्रसिद्धस्याग्नेः परित्यागेन तत्र विद्यमानसंस्कारस्य नाशापत्तेः अग्निहोत्रादिकर्मकाले आहवनीयाद्यननुवृत्तिप्रसङ्गात् । [5]अजस्रधारणपक्षेऽपि अनुगतस्य पुनर्मथनादिना सम्पादनेन

---

1. मु. देवतादिः　　2. मु. विध्यनपेक्षत्वेन
3. आ. अचेतनेन्द्रादिभावः　　4. आ. °मेव हि तस्य
5. आ. गार्हपत्याद्यग्नित्रितयधारणपक्षे नष्टस्य पुन°

आधानसंस्कृतस्याननुवर्तनात्। अतः [1]सम्भारेषु मथिताग्निस्थापनरूपेणाधानेन अग्न्यभिमानिन्यो देवता एव संस्क्रियन्ते। यथा दीक्षादिसंस्कारैः प्रत्यगात्मा। न च यथा आधानं आहवनीयत्वादिप्रयोजकं एवं प्रणयनमथनादिकमपि तत्प्रयोजकमितिवाच्यम्। तथा सति आहवनीयादिपदानां [2]एकविधप्रवृत्तिनिमित्ताभावेनानेकार्थता स्यात्। अत आधानेन देवता एव संस्क्रियन्ते। ताः अजस्रधारणपक्षे मध्ये अनुगत्यभावे अन्त्येष्टिपर्यन्तं तेष्वायतनेषु सन्निदधते। अनुगतौ तु पुनर्मथने मथितामावायान्ति। अजस्रधारणाभावपक्षे - प्रणयनेन आहवनीयान्वाहार्यपचनदेवतयोरायतनेषु सन्निधानं,[3] कर्मान्ते पुनः गार्हपत्यायतने गमनं, पशावौत्तरवेदिकप्रणयने पूर्वमाहवनीयाधिष्ठितं गार्हपत्योऽधितिष्ठति, प्रणीतमग्निमाहवनीयोऽधितिष्ठति - इति कल्पनीयम्। न चैवमग्निसंसर्गनिमित्तप्रायश्चित्तापत्तिः। तस्य प्रत्यक्षाग्निसंसर्गनिमित्तकत्वात्। न चैवं गार्हपत्यादिपदानां देवतावाचकत्वे 'आहवनीये जुहोति' 'गार्हपत्ये हवींषि श्रपयति' इत्यादिचोदनासु देवतानामेवाधारता स्यादिति वाच्यम्। इष्टापत्तेः। 'अभूत्रो दूतो हविषो जातवेदा अवाड्ढव्यानि सुरभीणि कृत्वा' इति देवान् प्रति हविःप्रापकत्वेनावगताया एव पाकप्रयोज्यसुरभीकरणकर्तृत्वावगमात्। यदि तु अस्मिन् मन्त्रे अभिमान्यभिमानविषययोरभेदोपचारः, तदा 'गार्हपत्ये हवींषि श्रपयति' इत्यादावपि तथाऽस्तु।

अतः अलौकिकानि देवतास्वरूपाणि तत्तद्विध्यपेक्षितान्येव मन्त्रार्थवादैः प्रतिपाद्यन्ते। तथा च देवताचैतन्य[4]विग्रहादिसिद्धौ, हविर्भोगः ऐश्वर्यं प्रसन्नता वरप्रदानं इत्येवमादिकं यत् मन्त्रार्थवादादिभिरवगम्यते तदभ्युपेयमेव, न्यायतौल्यात्।[5] ये तावत् देवताप्रसादवरप्रदानार्थतया जपादिविधयः प्रवृत्ताः, ते वरप्रदाना-

1. सम्भारेषु—तत्तदायतनविशेषनिहितेषु सम्भारेषु।
2. आ. एकविधप्रवृत्तिनिमित्तालाभेन
3. मु. 'भवति' इत्यधिकम्
4. आ. तद्विग्रहा
5. न्यायतौल्यादित्युक्तं, विध्यपेक्षितत्वरूपं तमेव न्याय-युक्तिं उपपादयति— ये तावदित्यादिना।

दिकं फलतया अपेक्षन्ते, तदुपयोगितया ऐश्वर्यमपेक्षितम्, अनीश्वराया देवताया वरदातृत्वासम्भवात्। एवं देवताह्वानमन्त्रविधिः देवतागमनं दृष्टार्थत्वात् अपेक्षते तच्च दृष्टार्थतायै हविर्भोजनं, इति न कस्यापि [1]विध्यनपेक्ष्यता। 'दद्भ्यः स्वाहा हनूभ्यां स्वाहा' इत्यादौ तु यदि प्रसिद्धार्थव्यतिरेकेण देवताप्रतिपादकं किञ्चित् प्रमाणं नास्ति, तदा मा भूत्तत्र अप्रसिद्धा देवता, [2]प्रसिद्धोऽचेतन एवार्थो देवता [3]अस्तु। न ह्येकत्र [4]तथा स्वीकृतमिति यत्र प्रमाणमवतरति तत्रापि तथा स्वीकर्तुं युक्तम्।

यत्तु ह्यवदानादिभिरल्पैः समित्कुशादिभिरनदनीयैश्च कथं देवताप्रीतिस्स्यादिति, तन्न - शास्त्रप्रामाण्यात् तैरेव प्रीतिकल्पनात्। लोकेऽपि हि रुचिवैचित्र्यमुपलभ्यते। अपि च 'यावदेका देवता कामयते यावदेका, तावदाहुतिः प्रथते' 'यद्वै देवा हविर्जुषते अल्पमप्येकामाहुतिमपि तद्गिरिमात्रं वर्धयन्ते' इत्यर्थवादानुसारेण हविषो देवतातृप्तिपर्याप्तवृद्ध्युपपत्तेः नोक्तदोषः प्रसरति। एवं समित्कुशादीनामपि गोभक्षिततृणादिवत् अदनीयत्वेन परिणामः सम्भवति। तथा च लिङ्गम्—'एतद्वै दैव्यं मधु यत् घृतं' इति। अत्र हि घृतस्य मधुत्वं देवतोपयोगे सति परिणामविशेषेण उपपादनीयम्।

अतो मन्त्रार्थवादादिभिः विध्यपेक्षित एवार्थः प्रतिपाद्यत इति न स्वार्थाविवक्षा।

ननु - यद्यर्थवादेषु क्वचित् मुख्यार्थ एव विध्यपेक्षितो बाधप्राप्तिरहितः प्रतिपाद्यते, तर्हि तत्र स्वार्थ एव प्रामाण्यप्रयोजनयोर्लाभात् स्तुतिलक्षणा न सम्भवतीति कथं सर्वार्थवादसाधारण्येन स्तुतिलक्षणा स्यात् - इति चेत्, मास्तु सर्वार्थवादसाधारण्येन स्तुतिलक्षणा, का हानिः। तथा हि—यत्र स्वार्थे प्रामाण्यप्रयोजनयोरलाभः, तत्र स्तुतिनिन्दालक्षणा सम्भवत्येव। यत्र तु विधिवाक्यसमभिव्याहृतैरर्थवादैः समभिव्याहृतविध्युपयुक्त [5]एव स्वार्थः प्रतिपाद्यते यथा 'यन्न दुःखेन संभिन्नम्' इत्यादिभिर्विध्युद्देशगत[6]स्वर्गपदार्थ-

---

1. मु. विध्यनपेक्षता　　2. मु. प्रसिद्धा चात्र चेतन
3. मु. 'अस्तु' नास्ति　　4. मु. 'तथा' नास्ति
5. मु. एवार्थः　　6. आ. स्वर्गपदनिर्वचनं

श्रावयति च 'यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट्करिष्यन्' (ऐ. ब्रा. ३।८।१) इति। न च शब्दमात्रमर्थस्वरूपं संभवति, शब्दार्थयोर्भेदात्। तत्र, यादृशं मन्त्रार्थवादयोः इन्द्रादीनां स्वरूपमवगतं न तत् तादृशं शब्दप्रमाणकेन प्रत्याख्यातुं युक्तम्। इतिहासपुराणमपि व्याख्यातेन मार्गेण संभवन्मन्त्रार्थवादमूलत्वात् प्रभवति देवताविग्रहादि साधयितुम्। प्रत्यक्षादिमूलमपि संभवति - भवति हि अस्माकमप्रत्यक्षमपि चिरंतनानां प्रत्यक्षम्। तथा च व्यासादयो देवादिभिः प्रत्यक्षं व्यवहरन्तीति स्मर्यते। यस्तु ब्रूयात् - इदानींतनानामिव पूर्वेषामपि नास्ति देवादिभिर्व्यवहर्तुं सामर्थ्यम् - इति, स जगद्वैचित्र्यं प्रतिषेधेत्। इदानीमिव च न अन्यदापि सार्वभौमः क्षत्रियोऽस्तीति ब्रूयात्। ततश्च राजसूयादिचोदना उपरुन्ध्यात्। इदानीमिव च कालान्तरेऽपि अव्यवस्थितप्रायान् वर्णाश्रमधर्मान् प्रतिजानीत। ततश्च व्यवस्थाविधायि शास्त्रं अनर्थकं स्यात्। तस्मात् धर्मोत्कर्षवशात् चिरंतना देवादिभिः प्रत्यक्षं व्यवजह्रुरिति श्लिष्यते। अपि च स्मरन्ति—'स्वाध्यायादिष्टदेवतासंप्रयोगः' (यो. सू. २।४४) इत्यादि। योगोऽप्यणिमाद्यैश्वर्यप्राप्तिफलः स्मर्यमाणो न शक्यते साहसमात्रेण प्रत्याख्यातुम्। श्रुतिश्च योगमाहात्म्यं प्रख्यापयति—

'पृथिव्यप्तेजोऽनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते।
न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम्॥'
(श्वे. उ. २।१२)

इति। ऋषीणामपि मन्त्रब्राह्मणदर्शिनां सामर्थ्यं न अस्मदीयेन सामर्थ्येन उपमातुं युक्तम्। तस्मात् समूलं इतिहासपुराणम्। लोकप्रसिद्धिरपि

---

निर्वचनं, तत्र समभिव्याहारस्यापि मुख्यार्थमादाय चरितार्थत्वात् नास्त्येव स्तुतिलक्षणा। यत्र तु 'अधस्तात् समिधं धारयन्ननुद्रवेत् उपरि हि देवेभ्यो धारयति' इत्येवमादौ प्रकृतविध्यनुपयुक्त एव स्वार्थोऽपूर्वो भवति, तत्र हिशब्दाद्यवगतप्रकृत-

विध्येकवाक्यतानिर्वाहाय स्तुतिलक्षणाप्यवश्यमास्थेया। एवं [1]देवताविग्रहादि-प्रतिपादकेष्वप्यर्थवादेषु यथासम्भवमवगन्तव्यम्।

वषट्करिष्यन्—[2]वौषडिति शब्दोच्चारणं यः करिष्यति स होता।

केश्चित् चतुर्थ्यन्तशब्दस्वरूपमेव देवतेत्युच्यते, तन्न सम्भवति—'ऐन्द्रं दधि' इत्यादिदेवताप्रतिपादकेन तद्धितप्रत्ययेन प्रकृत्यर्थस्यैव देवतात्वं प्रतिपाद्यते, प्रकृत्यर्थश्च न इन्द्रशब्द एवेत्याह-**न च शब्दमात्रमिति**। अर्थस्य देवतात्वेऽपि तद्विषयकचतुर्थ्यन्तपदोद्देशस्यैव अङ्गतया क्रतुषु विधानात्, विध्युद्देशगत एव शब्दः कर्मकाले उच्चार्य इति सन्निधानात् सिध्यतीति भावः। **स्वाध्यायादिष्टेति**। तत्तद्देवताविषयकमन्त्रजपात् तत्तद्देवतासाक्षात्कार इत्यर्थः। **अणिमाद्यैश्वर्यप्राप्तिफलक इति**। अणिमा, लघिमा, गरिमा, महिमा, प्राप्तिः, प्राकाम्यम्, ईशित्वं, वशित्वम्। झटिति परमाणुतुल्यतयावस्थानं अणिमा। तूलपिण्डवल्लघुत्वापादनं लघिमा। लोहादिवद्[3]गुरुत्वापादनं गरिमा। पर्वतादिवदाकारसम्पादनं महिमा। अङ्गुल्यग्रेण चन्द्रादिस्पर्शः प्राप्तिः। 'उदकादिवत् भूमावपि निमज्जनं कुर्याम्' [4]इत्याद्यभिलाषाप्रतिघातः प्राकाम्यम्। ईशित्वं [5]सृष्ट्यादिसामर्थ्यम्। वशित्वं राजादिवत् आज्ञाया अप्रतिघातः। इदं च सर्वं [6]कामावसायितायां-सङ्कल्पसिद्धतायामेव भवति। **पृथ्व्यप्तेजोऽनिलेति**। पादतलमारभ्य आजानोः, जानुमारभ्य आनाभिदेशं, तत आग्रीवं, तत आकेशप्रान्तं, तत आब्रह्मरन्ध्रं क्रमेण पृथिव्यादिपञ्चभूतात्मताया यथाशास्त्रमनुसन्धानेन पृथिव्यादिपञ्चमहाभूतगणे समुत्थिते-जिते सति योगगुणे-योगफले अणिमादौ प्रवृत्ते-प्राप्ते सति योगाग्निमयं-योगनिष्पन्नपुण्यविशिष्टं शरीरं प्राप्तस्य रोगादिकं नेत्यर्थः।

---

1. मु. देवतादि
2. आ. वषडिति
3. मु. दुर्वहत्वापादनं
4. मु. इत्यभिलाषा°
5. मु. स्रष्टृत्वादि
6. **कामावसायितायामिति** यत्रकामावसायितेति योगशास्त्रप्रसिद्धिः। यस्मिन् विषये अस्य कामः—इच्छा भवति, तं विषयं स्वीकारद्वारेण अभिलाषसमाप्तिपर्यन्तं नयतीति तदर्थः।

**न सति संभवे निरालम्बना अध्यवसातुं युक्ता। तस्मात् उपपन्नो मन्त्रादिभ्यो देवादीनां विग्रहवत्त्वाद्यवगमः। ततश्च अर्थित्वादिसंभवात् उपपन्नो देवादीनामपि ब्रह्मविद्यायामधिकारः। क्रममुक्तिदर्शनान्यपि एवमेवोपपद्यन्ते ॥ ३३ ॥**

---

ननु—[1]देवाद्यधिकारविचारः नास्मासूपयुज्यते। नापि देवादिषु, तदीयविग्रहादेः तैः न्यायं विना प्रत्यक्षेण निर्णेतुं शक्यत्वात् ब्रह्मविद्यास्वधिकारज्ञानार्थमुक्तन्यायानपेक्षणात्। तस्मात् व्यर्थोऽयं विचारः—इत्यत आह—**क्रममुक्तिदर्शनानीति**। अयं भावः—अस्मास्वेवायं न्याय उपयुज्यते। दहराद्युपासना हि [2]अस्मदादिभिरनुष्ठिताः, ब्रह्मलोके देवशरीरप्राप्तिद्वारा निर्विशेषसाक्षात्कारमुत्पाद्य परममुक्तिं सम्पादयन्तीति, क्रममुक्तिफला इष्यन्ते। तथा च देवानामनधिकार इति पक्षे तासु प्रवृत्तिर्न स्यात्। अतः तत्र प्रवृत्तिसिद्ध्यर्थं देवानामधिकारनिर्णयः अस्मासूपयुज्यते—इति।

इदमुपलक्षणम्। उपासनास्वपि विशेषः सिध्यति—मन्त्रार्थवादादिप्रामाण्येन प्रसिद्धमण्डलाद्यतिरिक्तस्य आदित्यादिशब्दार्थस्य सिद्धौ 'य उदगान्महतोऽर्णवाद्विभ्राजमानस्सरिरस्य मध्यात् स मा वृषभो रोहिताक्षस्सूर्यो विपश्चिन्मनसा पुनातु' इत्यादिमन्त्रपर्यालोचनया आदित्यपदवाच्यो देवताविशेषस्सिध्यति। ततश्च 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इत्याद्युपासनासु आदित्यदेवतान्तर्यामित्वेन परमात्मोपासनं सिध्यति। पूर्वपक्षे तु मण्डलान्तर्वर्तित्वेनोपासनम्-इति। तथा सर्वास्वर्चिरादिमार्गवतीषूपासनासु मार्गध्यानं वक्ष्यति 'तच्छेषगत्यनुस्मृतियोगाच्च' [ब्र. सू. ४-२-१७] इति। तत्र पूर्वपक्षे [3]प्रसिद्धा अर्चिरादय एव मार्गचिन्हत्वेन ध्येयाः, सिद्धान्ते तु अर्चिराद्यभिमानिदेवतासिद्धौ ता एव आतिवाहिकत्वेन ध्येयाः, इति व्युत्पादयिष्यति—'आतिवाहिकास्तल्लिङ्गात्' [ब्र. सू. ४-३-४] इति। एवं 'प्लवा ह्येते अदृढा यज्ञरूपाः

---

1. अत्र आदिशब्देन देवर्षयो ग्राह्याः। आ. देवाद्यधिकारनिरूपणं
2. आ. अस्माभिः
3. मु. प्रसिद्धा एवार्चिरादयः

९ अपशूद्राधिकरणम्

**शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि ॥ ३४ ॥**

यथा मनुष्याधिकारनियममपोह्य देवादीनामपि विद्यास्वधिकार उक्तः, तथैव द्विजात्यधिकारनियमापवादेन शूद्रस्याप्यधिकारः स्यात् - इत्येतामाशङ्कां निवर्तयितुं इदमधिकरणमारभ्यते ।

तत्र शूद्रस्याप्यधिकारः स्यादिति तावत् प्राप्तम् । अर्थित्वसामर्थ्ययोः संभवात् । 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' (तै. सं. ७।१।१।६) इतिवत् 'शूद्रो विद्यायामनवक्लृप्तः' इति च निषेधाश्रवणात् । यच्च कर्मस्वनधिकारकारणं शूद्रस्य अनग्नित्वं, न तत् विद्यास्वधिकारस्यापवादकम् । न ह्याहवनीयादिरहितेन विद्या वेदितुं न शक्यते ।

---

[मु. उ. १-२-७] तद्देवानामन्नं तं देवा भक्षयन्ति' [छा. उ. ५-१०-४] इत्यर्थवादपर्यालोचनया वैराग्यविशेषोऽपि सिद्धान्ते सिध्यति। अतो युक्त एव अस्मदाद्यर्थो [1]देवताविचारः ॥ ३३ ॥

**इति देवताधिकरणम् ॥ ८ ॥**

पूर्वोत्तराधिकरणयोस्सङ्गतिमाह—**यथेति** ।

**न ह्याहवनीयादिरहितेनेति** । ननु - आहवनीयादेः विद्यायामङ्गत्वाभावेऽपि आहवनीयादियुक्तानि कर्माणि सविशेषविद्यायामपेक्षितानि, 'विद्यां चाविद्यां च' [ई. उ. ११.] इति वचनेन तेषां समुच्चयात् । निर्विशेषविद्यायामपि चित्तशुद्ध्यर्थानि तान्यपेक्षितान्येवेति, कथं तदभावे तस्याधिकारस्स्यात्—

उच्यते - शूद्रस्यापि स्ववर्णोचितानि कर्माणि यान्यग्निनिरपेक्षाणि तैः समुच्चिता सविशेषविद्या उपपद्यते। चित्तशुद्धिस्तु जन्मान्तरानुष्ठितैरग्निहोत्रादिभिः तस्योपपद्यते । अस्मिन्नपि जन्मनि स्ववर्णोचितानि कर्माणि सम्भवन्त्येव चित्तशुद्ध्युपयुक्तानि । 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' [भ. गी. १८-४६] इति वचनात् ।

नन्वथापि —विद्याप्रकरणे तत्र तत्र उपसदनोपनयनयोराम्नानेन विद्याङ्गत्वं तयोरवगम्यते । शूद्रस्य च तत्र सम्भवति । 'न शूद्रे पातकं किञ्चित् न च

---

1. **देवताविचारः**—देवताधिकारविचारः ।

**भवति च श्रौतं लिङ्गं शूद्राधिकारस्योपोद्बलकम्। संवर्गविद्यायां हि जानश्रुतिं पौत्रायणं शुश्रूषुं शूद्रशब्देन परामृशति 'अह हारेत्वा शूद्र तवैव सह गोभिरस्तु', (छा. उ. ४।२।३) इति। विदुरप्रभृतयश्च शूद्रयोनिप्रभवा अपि विशिष्टविज्ञानसंपन्नाः स्मर्यन्ते। तस्मात् अधिक्रियते शूद्रो विद्यासु - इति—**

संस्कारमर्हति' इति वचनेन संस्कारमात्रस्य तं प्रति प्रतिषिद्धत्वात्। तथा 'न शूद्राय मतिं दद्यात्' इति तं प्रति [1]मतिदानमात्रप्रतिषेधेन विद्यामात्रे तस्य अनधिकारावगमात्। अतः कथं शूद्रस्य उपासनायामधिकारस्स्यात् - इति चेत् - उच्यते— शूद्रस्याप्यमन्त्रकः संस्कारोऽस्त्येव। नचसंस्कारमर्हतीतिवचनानन्तरमेव 'धर्मेप्सवस्तु धर्मज्ञाः सतां वृत्तिमनुव्रताः। मन्त्रवर्जं [2]न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च' इतिवचनेन तदभ्यनुज्ञानात्। 'न शूद्राय मतिं दद्यात्' इति प्रतिषेधस्तु यत्र शूद्रस्याधिकारे विशिष्य प्रमाणं नास्ति, [3]तद्विषयः। अन्यथा शूद्रस्य स्वजात्युचितकर्मस्वप्यधिकारो न स्यात्। उपासनायां तु विशिष्याधिकारद्योतनोपयोगि लिङ्गमस्ति - [4]इत्यभिप्रेत्याह—**भवति चेति**।

एवं छान्दोग्ये उपाख्यायते–जानश्रुतिः जनश्रुतस्यापत्यम्। पौत्रायणः– पुत्रस्य गोत्रापत्यम्। श्रद्धापूर्वं बहुदानशीलः - आतिथेयः आस। स च 'सर्वत आगता अतिथयो ममैवान्नेन तृप्ता भवन्तु' इति सर्वतो गृहान् कारयामास। तस्मिन् कदाचिद्रात्रौ हर्म्योपरिभागे शयाने तदीयान्नादिदानतुष्टा[5] ऋषयो हंसरूपमास्थाय तदुपरि विहायसि मालामाबद्धा जग्मुः। तस्य हितोपदेशाय तेषु हंसेषु अग्रगामिनं पृष्ठगामी उवाच—मन्दबुद्धे! जानश्रुतेः पौत्रायणस्य द्युलोकपर्यन्तं तेजो व्याप्तमस्ति, तत्सक्तिं मा कुरु, [6]तत्सङ्गे हि तव दाहो भविष्यति, अतो मार्गान्तरेणैव गन्तव्यम् - इति। तं पृष्ठगामिनं अग्रगामी

1. मु. मतिदानप्रतिषेधेन 2. न दुष्यन्तीति संस्कारेषु इत्यादिः।
3. आ. तदभावविषयः 4. मु. इत्याह
5. मु. तोषिता 6. आ. तत्संयोगे

हंसोऽवदत् - एनं वराकं एतादृशमहिमशालितया किमिति प्रस्तौषि, नायमेतादृशस्तुतियोग्यः, अपि तु शकटयुक्तो रैक्व एव एतादृशस्तुतियोग्यः—इति। 'कथं पुनः सशकट एतादृशमाहात्म्यविशिष्टः' इति पृष्ठगामिना पृष्टे तमग्रगाम्याह—रैक्वस्य [1]हि उपासनाख्यो महान् धर्मः, तामुपासनां अन्योऽपि[2] यो वेद, तस्य धर्मे फलतः सर्वेऽपि धर्मा अन्तर्भवन्ति, अतः स रैक्व एवोत्कृष्टः—इति। इत्युक्त्वा तेषु हंसेषु गतेषु तद्वाक्यं श्रुत्वा जानश्रुतिः शयनस्थानादुत्तिष्ठन्नेव क्षत्तारमुवाच—यस्य धर्मे सर्वेषां धर्मा अन्तर्भवन्ति, तादृशो महर्षिः शकटसहितो रैक्वनामा अस्ति, तं उचितदेशे एकान्ते नदीपुलिनादौ विद्यमानं परिशोध्य मह्यं निवेदय - इति। स च क्षत्ता तथैव परिशोध्य क्वचित् तं शकटस्य समीपे विद्यमानं भार्याधनादिरहितं दृष्ट्वा तथैव राज्ञे निवेदयामास। राजा च गवां षट्शतानि निष्कयुतं हारं अश्वतरीरथं च उपहारं आदाय तमुपससाद। [3]उपसद्य च 'इममुपहारं स्वीकृत्य त्वदुपास्यां देवतां मह्यमुपदिश' इति प्रार्थयामास। तत्र जानश्रुतिं प्रति रैक्वस्येदं वचनं - 'अह हारेत्वा शूद्र तवैव सह गोभिरस्तु' इति। निष्कयुक्तेन हारेण युक्त इत्वा - रथः, यन्त्यनेनेत्यर्थे एतेः क्वनिप्। सह गोभिः-गोसहितः तवैवास्त्विति। इदं वचनं श्रुत्वा जानश्रुतिः पुनरपि सहस्रं गवां निष्कयुतं हारं अश्वतरीरथं स्वदुहितरं च उपहारमादाय उपससाद—'इदं सर्वं स्वीकुरु, यस्मिन् ग्रामे त्वं तिष्ठसि इमं च ग्रामं स्वीकृत्य तां देवतां मह्यमुपदिश' [4]इति। स च तत्सर्वं स्वीकुर्वन् उवाच - आजहारेमाः शूद्र अनेनैव मुखेन आलापयिष्यथाः - इति। हे शूद्र इदं सर्वमाहृतवानसि, अनेनैव मुखेन - विद्याग्रहणोपायभूतेन मामालापयिष्यसि, मत्तो विद्यां ग्रहीष्यसीति यावत्। ते हैते रैक्वपर्णा नाम महावृषेषु - देशविशेषेषु प्रसिद्धा ग्रामाः, यत्रायमुवास रैक्वः, तान् सर्वानस्मै प्रददौ—इति।

अत्र यद्यपि अशूद्र एव जानश्रुतौ कोपवशात् रैक्वेन शूद्रपदं प्रयुक्तमिति शक्यं वक्तुम्, 'शुश्रूषादिकं विहाय धनेन विद्यां ग्रहीतुं आगतोऽसि, धनमपि स्वसामर्थ्यानुसारेण, मदुपयुक्तं नानीतवानसि' इति कोपसम्भवात्; तथापि

1. मु. 'हि' नास्ति  2. मु. 'अपि' नास्ति
3. मु. उपसद्य चोवाच  4. मु. इत्युवाच

**एवं प्राप्ते ब्रूमः—न शूद्रस्याधिकारः, वेदाध्ययनाभावात्। अधीतवेदो हि विदितवेदार्थो वेदार्थेष्वधिक्रियते। न च शूद्रस्य वेदाध्ययनमस्ति, उपनयनपूर्वकत्वाद्वेदाध्ययनस्य। उपनयनस्य च वर्णत्रयविषयत्वात्।**

---

पुनः समृद्धधनानयनानन्तरं प्रसादसमयेऽपि 'आजहारेमाश्शूद्र अनेनैव मुखेन' इति शूद्रशब्दो न कोपाभिप्रायइतिवर्णयितुं उचितः। न च विद्याधिकारिण्येव त्रैवर्णिके 'रुजं द्रावयतीति रुद्रः' इत्येवं रुद्रशब्दस्येव 'शुचा द्रवतीति शूद्रः' इत्येवमादिनिर्वचनं शूद्रपदे प्रकृते स्वीकृत्य तद् व्याख्येयमिति वाच्यम्। योगमपेक्ष्य रूढेर्बलीयस्त्वेन निरुक्तप्रक्रियया [1]तथा योगस्वीकारस्य अनुचितत्वात्।

**अधीतवेदो हि विदितवेदार्थो वेदार्थेष्वधिक्रियत इति।** अयं भावः - 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधौ प्रयोजनसमर्पकं पदं स्वर्गकामादिपदवत् न श्रूयते। न च प्रकरणेन व्रीहीन्प्रोक्षतीत्यादिवत् तल्लाभः। अनारभ्याधीतत्वात्। अतः 'सुवर्णं हिरण्यं भार्यम्' 'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति' इत्यादिवत् अलौकिकं किञ्चिदध्याहृत्य विध्याकाङ्क्षापूरणं कर्तव्यम्? उत विधेयस्वाध्यायाध्ययनसामर्थ्यलभ्यं किञ्चित् दृष्टमेव स्वीकर्तव्यम् - इति विशये, दृष्टे सम्भवति अदृष्टकल्पनाया अन्याय्यत्वात् दृष्टमेव यथासम्भवं स्वीकर्तव्यम्। सम्भवति चेह स्वाध्यायप्राप्तितद्विचारद्वारा अर्थज्ञानं दृष्टं प्रयोजनम्। अतः तदेव विधेयाध्ययनस्य प्रयोजनमुपेयते। ततश्च 'अध्ययनसंस्कृतेन स्वाध्यायेन अर्थज्ञानं सम्पादयेत्' इति तव्यप्रत्ययावगतस्वाध्यायसंस्कार्यतां [2]अभङ्क्त्वैव अध्ययनविधि-वाक्यार्थः स्वीक्रियते। न च - एवंसति वाक्यं व्यर्थमेव स्यात्, अध्ययनाद्वेद-प्राप्तिः तस्माद्विचारितादर्थज्ञानमिति विधिलभ्यस्यार्थस्य लोकत एव सिद्धत्वात्, अतो विधिवाक्यसार्थक्याय अलौकिकमेव स्वर्गरूपं फलं अध्याहर्तव्यम्—इति [3]वाच्यम्। प्रकारान्तरेण सार्थक्यात्। यथा ह्यध्ययनेन वेदप्राप्तिः एवं पुस्तक-

---

1. मु. तथायोगार्थ

2. **अभङ्क्त्वैवेति** अदृष्टार्थत्वपक्षे हि 'स्वाध्यायाध्ययनेन अदृष्टं स्वर्गादिकं भावयेत्' इति वाक्यार्थात् स्वाध्यायस्य अध्ययनसंस्कार्यत्वालाभात् तव्यप्रत्ययस्वारसिकार्थ-भङ्ग इति भावः। 3. मु. वाच्यम्। यथाह्यध्य

निरीक्षणेनापि वेदप्राप्तिरुपपद्यते। वेदस्य प्राप्तिर्हि गुरुमुखोच्चारणानूच्चारणरूपाध्ययनकृता इयमेव—यत् ब्रह्मयज्ञविचारादिकाले तत्तत्क्रमयुक्तवेदाक्षराणां अविच्छिन्नस्मृतिप्रयोजकः संस्कारो वेदाक्षरगोचरः, यथा [1]ब्रह्मयज्ञादिकाले निरन्तरमुच्चारणं भविष्यति तथा जिह्वामूलादिस्थानेषु [2]च अध्ययनकालकृतवेदाक्षरोच्चारणकृतः संस्कारविशेषः। यथा कटादिषु स्थितस्थापकः। [3]इयं च प्राप्तिः स्वयं पुस्तकं निरीक्ष्य वेदाभ्यासेनापि सम्पादयितुं शक्या। अतः अध्ययननियमाय विधिः सार्थकः। नियमस्य च प्रयोजनं तदेव कल्प्यते, यत् [4]अध्ययनस्य प्रयोजनम्। तथा च अध्ययननियमवतैव सम्पादितं वेदार्थज्ञानं तदर्थानुष्ठाने उपयुज्यत इति सिध्यति, न तु पुस्तकनिरीक्षणादितः सम्पादितम्। अध्ययनं च उपनयनसंस्कारयुक्तस्यैव, नान्यस्य। 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यादिवाक्यैः उपनयनं त्रैवर्णिकानां विधाय 'तमध्यापयीत' इति उपनीतस्यैवाध्ययनविधानात्। तत्र यद्यपि-उपनयनं नाध्ययनाङ्गम्, 'अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः। सावित्रीरहिता व्रात्याः भवन्त्यार्यविगर्हिताः॥' इत्यादिवाक्यैः अकरणे दोषश्रवणेन नित्यतावगमात् स्वतन्त्रमेव व्रात्यतानिवृत्त्युपयोगि, अत एव मूकादीनामपि सम्भवत्कर्माधिकारसिद्ध्यर्थं तदुपेयते। तथापि अध्ययनेऽधिकारिविशेषणं तत्, 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति वाक्यबलात् दर्शपूर्णमासयोरिव सोमाधिकारिविशेषणत्वम्। उपनयनं च त्रैवर्णिकानामेव। अतः उपनयनाभावात् शूद्रस्य न वेदाध्ययनाधिकारः। तदभावे अध्ययननियमसम्पादितवेदार्थज्ञानाभावात् न वैदिकेष्वर्थेष्वधिकारः।

ननु-वेदाध्ययनभावना न अर्थज्ञानपर्यन्ता। न ह्यर्थज्ञानं स्वतः पुरुषार्थः, अपि तु पश्वादिवत् पुरुषार्थोपयोगितया। तथा सति, अध्ययनजनिता या वेदाक्षरावाप्तिः तामुल्लङ्घ्य किमर्थमर्थज्ञानपर्यन्तधावनं क्रियते। तथा च 'अध्ययनेन वेदं प्राप्नुयात्' इत्येव नियमः पर्यवस्यति। अतः 'अध्ययनसम्पादितमेव वेदार्थज्ञानं क्रतुषूपयुज्यते' इति कथं कल्पयितुं शक्यते। ज्ञानपर्यन्तत्वे हि,

---

1. मु. ब्रह्मयज्ञकाले

2. चेति संस्कारविशेषश्च इति सम्बन्धः। तथा च संस्कारद्वयं प्राप्तिशब्दार्थ इति भावः।  3. आ. इयं तदुभयप्राप्तिः  4. मु. वेदाध्ययनस्य

नियमो ज्ञानस्वरूपेऽनुपयुक्तः, ज्ञानस्य या अदृष्टार्थकर्मोपकारकता वर्तते तस्मिन्नंशे उपयुज्यत इति नियमस्सिध्यति ।

उच्यते - अक्षरावाप्तिपक्षेऽपि तस्याः स्वतः पुरुषार्थत्वाभावात् अवाप्तैस्स्वाध्यायाक्षरैः यद्यदिष्टं सम्पाद्यते तत् अध्ययनावाप्तैरेवेति नियमपर्यवसानात्, अक्षरावाप्तेः यत् प्रयोजनं ब्रह्मयज्ञादिरूपं वा अर्थज्ञानद्वारा क्रत्वनुष्ठानादिरूपं वा तत्र सर्वत्र अध्ययननियमवत एवाधिकार इति पर्यवस्यतीति, तत्रापि पक्षे न शूद्रस्याधिकारः ।

ननु - यदि अध्ययनावाप्तैरक्षरैर्वा वेदार्थज्ञानेन वा तथाभूतेन विशिष्टस्यैव वेदार्थेऽधिकारः, तथासति शाखान्तराध्ययनाभावेन तदर्थानुष्ठाने अधिकारो न स्यात् । सर्वशाखार्थोपसंहारेण च कर्माणि कर्तव्यानि । न च सर्वशाखाध्ययनं सम्भवति ।

यदि तु 'स्वाध्यायोऽध्येतव्यः' इत्यत्र स्वशब्दश्रवणेन स्वशाखारूपेण स्वाध्यायेन यद्यदिष्टं सम्पादनीयं तत् अधीतेनैवेति नियमाभ्युपगमात्, शाखान्तरार्थः तदध्ययनं विनैव अनुष्ठातुं शक्य इत्युच्यते ;

तथासति न शूद्रस्य अधिकाराभावः सिध्यति । पितृपितामहादिपरम्परागता हि शाखा स्वशाखा । न च शूद्रस्य तादृशी शाखा विद्यते । अतः अध्ययनाभावेऽपि शूद्रोऽधिकारी स्यात् ।

यदुच्यते—शूद्रस्य ह्यनुष्ठानोपयोगिवेदार्थज्ञानं स्वत एव सिद्धं न भवति, अपि तु क्रतुविद्यानुष्ठानार्थं विधिनाऽऽक्षेप्तव्यम् । न चात्र[1] आक्षेपः प्रसरति । अध्ययनविधिसिद्धज्ञानैस्त्रैवर्णिकैरेव क्रतुविद्याविधीनामाकाङ्क्षाया उपशान्तत्वात्-इति ;

तत्रेदमुत्तरं - विधीनामाक्षेपकताशक्तिर्हि न कुण्ठिता, शाखान्तरार्थे अध्ययनसिद्धज्ञानाभावेन तदर्थोपसंहारपूर्वकं कर्मानुष्ठानाय त्रैवर्णिकेष्वपि विद्यायाः आक्षेपणीयत्वात् । न च - कर्मविधीनां त्रैवर्णिकेषु शाखान्तरार्थज्ञानाक्षेपकत्वेऽपि न सर्वार्थविषयकज्ञानाक्षेपकत्वम्, स्वशाखार्थज्ञानस्य स्वतस्सिद्धत्वात् । शूद्रे तु

1. मु. 'अत्र' नास्ति

यत्त्वर्थित्वं, न तत् असति सामर्थ्ये अधिकारकारणं भवति। सामर्थ्यमपि न लौकिकं केवलं अधिकारकारणं भवति। शास्त्रीयेऽर्थे शास्त्रीयस्य सामर्थ्यस्य अपेक्षितत्वात्। शास्त्रीयस्य च सामर्थ्यस्य अध्ययननिराकरणेन निराकृतत्वात्।

यच्चेदं 'शूद्रो यज्ञेऽनवक्लृप्तः' [तै. सं. ७।१।१।६] इति, तत् न्यायपूर्वकत्वात् विद्यायामप्यनवक्लृप्तत्वं द्योतयति, न्यायस्य साधारणत्वात्।

यत् पुनः संवर्गविद्यायां शूद्रशब्दश्रवणं लिङ्गं मन्यसे, न तत् लिङ्गं, न्यायाभावात्। न्यायोक्ते हि लिङ्गदर्शनं द्योतकं भवति। न चात्र न्यायोऽस्ति। कामं चायं शूद्रशब्दः संवर्गविद्यायामेवैकस्यां

---

सर्वस्याप्याक्षेपः स्वीकर्तव्यः, अतो लाघवानुसारेण त्रैवर्णिकेषु स्वल्पाक्षेपेण चरितार्थाः न शूद्रे आक्षेपगौरवं सहन्ते-इति वाच्यम्। एवं हि यस्य कर्मणः शाखाभेदेन अधिकस्वल्पाङ्गयुक्तमाम्नानं तस्य अधिकाम्नानयुक्तशाखाध्यायिनं प्रति स्वल्पस्यैवाक्षेपणीयतया तत्र तस्यैवाधिकारस्स्यात्, न त्वल्पाम्नानयुक्तशाखाध्यायिनः, आक्षेपगौरवात्।

यदि तु—अल्पाम्नानयुक्तशाखाध्यायिनं प्रति [1]यत्किञ्चित्कर्माङ्गाध्ययनस्य सार्थक्याय [2]तत्र आक्षेपगौरवमपि सह्यते, अत एव 'वर्षासु रथकार आदधीत' 'एतया निषादस्थपतिं याजयेत्' इत्यत्र अत्रैवर्णिकयोरेव[3] अधिकारावगमात् वचनसार्थक्याय आक्षेपगौरवं[4] सह्यते, ततश्च यत्र विशेषप्रमाणं नास्ति तत्र न आक्षेपगौरवं सोढव्यं - इत्युच्यते,

तर्हि, कर्मसु शूद्रस्य विशेषप्रमाणाभावेन तत्रानधिकारेऽपि विद्यासु तदधिकारिणो जानश्रुतेः शूद्रपदेनामन्त्रणात् अधिकारः प्राप्नोत्येवेति[5] आक्षेपसम्भवात्। [6]न चैवं संवर्गविद्यायामेवाधिकारः न सर्वासु विद्यास्विति वाच्यम्। जानश्रुतेः

---

1. मु. यत्किञ्चित्कर्मभागाध्ययनस्य।
2. मु. 'तत्र' नास्ति
3. मु. 'एव' नास्ति
4. मु. 'अपि' इत्यधिकम्
5. मु. 'इति' नास्ति
6. आ. न चैवमपि

**शूद्रमधिकुर्यात्, तद्विषयत्वात्, न सर्वासु विद्यासु। अर्थवादस्थत्वात्तु न क्वचिदप्ययं शूद्रमधिकर्तुमुत्सहते।**

---

विद्यार्थं गमनदशायां रैक्वः संवर्गविद्यानिष्ठ इति अज्ञानेन विद्यासामान्योद्देशेनैव प्रवृत्तत्वात्, अत आह—**अर्थवादस्थत्वात्तु न क्वचिदपीति।**

अयं भावः—यथा विद्याधिकारिणः शूद्रपदेन सम्बोधनात् स शूद्र इत्यवगम्यते, तथा अस्मिन्नेव प्रकरणे विद्याधिकारिणो जानश्रुतेः क्षत्रियत्वलिङ्गमप्युपलभ्यते - क्षत्तृप्रेषणं तावदिह तस्मिन् उपलभ्यते 'स ह सञ्जिहान एव क्षत्तारमुवाच' 'तं होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमर्च्छ' इति वाक्येन। क्षत्तृप्रेषणं च क्षत्रियस्यैवोपपद्यते। 'वैश्यात् ब्राह्मणकन्यायां क्षत्ता नाम प्रजायते। जीविका वृत्तिरेतस्य राजान्तःपुररक्षणम्॥' इति क्षत्तुः राजभृत्यत्वस्यैव नियमनात्।

तथा 'ते हैते रैक्वपर्णा नाम महावृषेषु यत्रास्मा उवास' इति वाक्येन महावृषाख्येषु देशेषु विद्यमानानां रैक्वावासभूतानां अद्यापि रैक्वपर्णा इति तन्नामाङ्किततया प्रसिद्धानां तं प्रति दानं चावगम्यमानं [1]तद्देशतद्ग्रामाधिपत्यं सूचयति। न चेदं शूद्रस्य सम्भवति। 'ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि। सर्वस्यास्य यथान्यायं कर्तव्यं परिरक्षणम्। अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा। जीवेत् क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः। यो मोहादधमो भूत्वा जीवेदुत्कृष्टकर्मणा। तं राजा निर्धनं कृत्वा क्षिप्रमेव प्रवासयेत्॥' इति वचनेन क्षत्रियवृत्तित्वेनाभ्यनुज्ञातस्य तस्य वैश्यशूद्रयोः प्रतिषेधात्। तथा रैक्वस्य तत्पालितेषु ग्रामेषु वासोऽवगम्यते। तदपि जानश्रुतेरशूद्रत्वं गमयति। [2]'नाधार्मिकैः श्रिते ग्रामे न व्याधिबहुले तथा। न शूद्रराज्ये निवसेत् न पाषण्डजनैर्वृते॥' इति, शूद्रेण मर्यादामतिक्रम्य विद्यमानेन राज्यपालनसम्भवात् तत्र वासो निषिद्धोऽनेन।

एवमादीन्यन्यान्यपि अस्यामाख्यायिकायां स्वदुहितृप्रतिग्रहादीनि [3]क्षत्रियत्वलिङ्गानि द्रष्टव्यानि। न चैतानि सर्वाण्यपि मर्यादामतिक्रम्य

---

1. मु. तद्देशे 2. मु. नाधार्मिकाश्रिते 3. **क्षत्रियत्वलिङ्गानीति** न वै शूद्रा ब्राह्मणस्य भार्या भवितुमर्हति-इति याज्ञवल्क्यस्मरणात् इति भावः।

शक्यते चायं शूद्रशब्दः अधिकृतविषये योजयितुम्। कथमिति? उच्यते—'कम्वर एनमेतत्सन्तं सयुग्वानमिव रैक्कमात्थ' (छा.उ.४।१।३) इत्यस्माद्धंसवाक्यात् आत्मनोऽनादरं श्रुतवतो जानश्रुतेः पौत्रायणस्य शुक् उत्पेदे, तां ऋषी रैक्कः शूद्रशब्देनानेन सूचयांबभूव आत्मनः परोक्षज्ञताख्यापनाय इति गम्यते। जातिशूद्रस्यानधिकारात्।

कथं पुनः शूद्रशब्देन शुगुत्पन्ना सूच्यत इति? उच्यते—तदाद्रवणात्। शुचमभिदुद्राव, शुचा वा अभिदुद्रुवे, शुचा वा रैक्कमभिदुद्राव-

---

विद्यमानाभ्यामेव जानश्रुतिरैक्काभ्यां कृतानि इह आख्यायिकायां निबद्धानीति शक्यं वक्तुम्। एकेन शूद्रपदेन बहूनां तेषां अशास्त्रीयत्वकल्पनाया अनुचितत्वात्। तथासति शूद्राय मतिदानमपि अन्याय्यमेव रैक्केण कृतमित्यपि वक्तुं शक्यत्वेन नेदं शूद्रपदं शूद्रस्य विद्यानुष्ठानं धर्म्यमिति सूचयेत्। अतो बहुभिर्लिङ्गैः अस्य क्षत्रियत्वेऽवगते तस्मिन्नेव एकं शूद्रपदं [1]यथाकथञ्चिद्व्याख्येयमित्यभिप्रेत्याह—**शक्यते चायमित्यादिना।**

अनेन सूत्रेण जानश्रुतौ शूद्रपदस्य योगः प्रतिपाद्यते। तत्र शूद्रपदस्य यौगिकार्थप्रदर्शनपरोऽयमंशः—'तदाद्रवणात्' इति। तदुपयोगितया अस्य-जानश्रुतेः तस्मात् - हंसवाक्यात् अनादरश्रवणात् शुक् उत्पन्ना - इति प्रतिपादनार्थोऽयमंशः—'शुगस्य तदनादरश्रवणात्' इति। हंसवाक्यात् अनादरं श्रुतवतो जानश्रुते रैक्वं प्रति शोकेन गमनं - इत्येतत् अस्यामाख्यायिकायामवगम्यत इति प्रतिपादनार्थं 'सूच्यते हि' इत्यंशः। एतत् सर्वं प्रतिपादयति-**कथमित्यादिना।** तदाद्रवणादित्यत्र तां-शुचं प्रति आद्रवणात्, तया - शुचा कर्त्र्या जानश्रुतिं प्रति आद्रवणात्, शुचा-करणेन तं रैक्वं प्रति आद्रवणात् - इति त्रेधा तदाद्रवणादितिसौत्रपदं विगृह्णाति-**शुचमभिदुद्रावेत्यादिना।** तथा च शुचा शुचं प्रति वा आद्रवणात् शूद्र इति पदं पृषोदरादित्वाद्यौगिकं द्रष्टव्यम्। 'रुजं द्रावयतीति रुद्रः' इत्यादिवत् औणादिकप्रत्ययेन वा यथा-

---

1. मु. यथाकथञ्चिद्व्याख्यातुं शक्यमित्य°

इति शूद्रः। अवयवार्थस्य संभवात् रूढ्यर्थस्य चासंभवात्। दृश्यते च अयमर्थोऽस्यामाख्यायिकायाम् ॥ ३४ ॥

## क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥

इतश्च न जातिशूद्रो जानश्रुतिः। यत्कारणं प्रकरणनिरूपणेन क्षत्रियत्वमस्य उत्तरत्र चैत्ररथेनाभिप्रतारिणा क्षत्रियेण समभिव्याहारात्

---

कथञ्चित् [1]नैरुक्तप्रक्रियया [2]वा प्रकृतिप्रत्ययविभागः कल्पनीयः।

न चात्र रुढिप्राबल्यन्यायावतारः। यौगिको ह्यर्थो वाक्यार्थवत् अनेकपदार्थाकाङ्क्षादिभिरवगम्यमानो विलम्बितप्रतीतिकत्वात् पदानुसन्धानमात्रेण गृहीतशक्तिकस्य पुंसोऽवगम्यमानाच्छीघ्रोपस्थितिकात् रूढ्यर्थात् दुर्बलः—इति हि रूढ्यर्थप्राबल्यवादिना वक्तव्यम्। प्रकृते तु यौगिक एवार्थे उपाख्यानपर्यालोचनया बुद्धिस्थे [3]पदतात्पर्यं झटिति गृह्यते।

अत्र च यद्यपि 'कम्वरे' इत्यादिहंसवाक्यपर्यालोचनया शकटचिह्नयुक्तरैक्वो महाविद्यानिष्ठ इत्यवगमात्, तादृशोत्कृष्टविद्योपदेष्टा गुरुरवगत इति हर्ष एव सम्भावितो जानश्रुतेः, 'रैक्ववदयं जानश्रुतिः प्रशंसनीयो न भवति' इति तु हंसवाक्यं निन्दामापाततोऽवगमयदपि न शोकावहम्, समीचीनविद्योपदेष्टृबोधनपरत्वात्;

तथापि 'एतावन्तं कालं समीपेविद्यमानमप्याचार्यमनवगत्य अविदुषो मम वृथैव जीवितमभवत् एतादृशनिन्दापात्रं चाभूवम्' इति शोकोऽपि जानश्रुतेः आख्यायिकात उपस्थित एव भवति। एकस्य च वाक्यस्य ऋजुक्लिष्टयोजनायुक्तस्य क्लिष्टोऽप्यर्थः प्राक् यदि बुद्धौ विपरिवर्तमानो भवति, तदा तत्रैव शब्दस्य तात्पर्यं झटिति अवगम्यते - इत्यपि लोके व्युत्पन्नमेव। तथा च 'अबुद्धिस्थात् ऋज्वर्थादपि बुद्धिस्थक्लिष्टार्थस्यैव प्राबल्यं, शीघ्रोपस्थितत्वात्' इति न्यायेन प्रकृते रूढिप्राबल्यन्यायं भङ्क्त्वा यौगिक एव शूद्रपदार्थो ग्राह्यः - इत्यभिप्रेत्याह—**अवयवार्थस्य सम्भवात् रूढ्यर्थस्य चासम्भवादिति** ॥३४॥

---

1. **नैरुक्तप्रक्रिया** - अक्षरसाम्येन निर्वचनम्।
2. मु. 'वा' नास्ति
3. मु. 'पद' नास्ति

लिङ्गात् गम्यते। उत्तरत्र हि संवर्गविद्यावाक्यशेषे चैत्ररथिरभिप्रतारी क्षत्रियः संकीर्त्यते—'अथ ह शौनकं च कापेयं अभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे' (छा. उ. ४।३।५) इति। चैत्ररथित्वं चाभिप्रतारिणः कापेययोगादवगन्तव्यम्। कापेययोगो हि चित्ररथस्यावगतः 'एतेन वै चित्ररथं कापेया अयाजयन्' (ता. ब्रा. २०।१२) इति। समानान्वयानां च प्रायेण समानान्वया याजका भवन्ति। 'तस्माच्चैत्र[थीनामे] (थिर्नामै)कः क्षत्रपति[र्जायते](रजायत)'

---

चैत्ररथेनाभिप्रतारिणा क्षत्रियेण समभिव्याहारादिति। अनेन - सूत्रगतश्चैत्ररथशब्दः 'अथ ह शौनकं' इत्याद्याख्यायिकागताभिप्रतारिपरः चैत्ररथेनेत्यनन्तरं समभिव्याहारादित्यध्याहारश्च-सूचितः।

ननु — अत्र अभिप्रतारी कापेयसमभिव्याहृतोऽवगम्यते, न तु कापेययाज्यो वा चैत्ररथो वा। तथा च कापेयसमभिव्याहृतेनाभिप्रतारिणा सह एकस्मिन् सन्दर्भे पठितस्य जानश्रुतेः कथं क्षत्रियत्वावगमः? अथोच्येत - कापेयसमभिव्याहारात् अभिप्रतारी तद्याज्य इत्यवगम्यते। कापेयस्य च [1]चित्ररथयाजकत्वं, द्विरात्रे प्रस्तुत्याम्नातेन 'एकाकिनमेवैनं अन्नाद्यस्याध्यक्षं करोति' इति तत्फलकीर्तनानन्तरं तदुपपादकेन 'एतेन वै चित्ररथं कापेया अयाजयन् तं एकाकिनमन्नाद्यस्याध्यक्षमकुर्वन् तस्मात् [2]चैत्ररथीनामेकः क्षत्रपतिर्जायते' इत्यर्थ-

---

1. मु. चैत्ररथियाज

2. 'एतेन वै चित्ररथं कापेया अयाजयन्, तमेकाकिनमन्नाद्यस्याध्यक्षमकुर्वन्, तस्मात् चैत्ररथीनां एकः क्षत्रपतिर्जायते, नुलम्ब इव द्वितीयः' [ता. ब्रा. २०-१२] इति ताण्ड्यब्राह्मणपाठः।

व्याख्यातश्चैतदेवं वेदभाष्यकृद्भिः—कपिगोत्रे समुत्पन्ना महर्षयः कापेयाः। ते हि एतेनैव द्विरात्रेण चित्ररथनामकं राजानं याजयित्वा तमेव अन्नाद्यस्य अध्यक्षं अकुर्वन्। तस्मात् कारणात्, अद्यापि [क्षत्र] [चित्ररथ] वंशोत्पन्नानांमध्ये एक एव राजा क्षत्रपतिः—बलाधिपतिः भवति, द्वितीयस्तु तस्माद्धेतोः नुलम्ब इव - तस्य अनुचर इव भवति - इति। मु. चैत्ररथिर्नामैकः।

**इति च क्षत्रपतित्वावगमात् क्षत्रियत्वमस्यावगन्तव्यम्। तेन क्षत्रियेणाभिप्रतारिणा सह समानायां विद्यायां संकीर्तनं जानश्रुतेरपि क्षत्रियत्वं सूचयति। समानानामेव हि प्रायेण समभिव्याहारा भवन्ति। क्षत्तृप्रेषणाद्यैश्वर्ययोगाच्च जानश्रुतेः क्षत्रियत्वावगतिः। अतो न शूद्रस्याधिकारः॥ ३५॥**

---

वादेन अवगम्यते। अतः कापेययाज्यत्वोपपादनाय चित्ररथात् भेदेन [1]नामान्तरकरणादवगतस्य अभिप्रतारिणः चैत्ररथित्वेन क्षत्रपतित्वे सिद्धे, तेन सह समानसन्दर्भपठितो जानश्रुतिरपि क्षत्रियस्स्यादिति (चेत्,) अत्रोच्यते-कापेयेन सह परिविष्यमाणतारूपो हि समभिव्याहारः अभिप्रतारिणोऽवगतः। तादृशसमभिव्याहारश्च न याज्यत्वनियतः, मैत्र्यादिरूपसम्बन्धान्तरेणापि सहपरिविष्यमाणतोपपत्तेः। तद्याज्यत्वेऽपि चित्ररथवंश्यत्वं कुतोऽवगम्यते, कापेयानामनेककुलयाजकत्वोपपत्तेः। न हि समानान्वयानां [2]समानान्वया याजका भवन्तीति नियमोऽस्ति। अस्तु वा कापेययाज्यत्वेन चैत्ररथत्वम्। तथापि क्षत्रियत्वं कथम्, अक्षत्रियस्यापि क्षत्रपतित्वोपपत्तेः। अस्तु वा अभिप्रतारिणः क्षत्रियत्वम्। तथापि तत्सन्दर्भगतत्वेन जानश्रुतेः कथं क्षत्रियत्वम्, तत्सन्दर्भगतेष्वेव रैक्वादिषु क्षत्रियत्वानभ्युपगमात्। 'यत्रारे ब्राह्मणस्यान्वेषणा तदेनमर्च्छ' इतिवाक्यपर्यालोचनया रैक्वस्य ब्राह्मणत्वावगतेः—इति शङ्कां मनसि निधाय उक्तं—**क्षत्रियत्वं सूचयतीति**। नेदमभिप्रतारिणः साक्षादेव क्षत्रियत्वबोधकम्, अपि तु तत्र अन्यार्थदर्शनरूपं लिङ्गमात्रं क्षत्रियत्वं तस्य सूचयति।

तथाहि - लोके उपाध्यायत्वेन प्रसिद्धे पुरुषे तत्समभिव्याहृतोऽन्यो योऽवगम्यते स तच्छिष्य इति बुद्धिः औचित्येन भवति। तथा याजकत्वेन

---

1. **नामान्तरकरणादिति** यद्यपि नामान्तरकरणात् चित्ररथत्वं नास्ति, तथाऽपि तद्वंश्यत्वमस्तीति भावः। मु. नामान्तरेणाव।

2. मु. समानान्वया एव याजका

## संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥

**इतश्च न शूद्रस्याधिकारः, यत् विद्याप्रदेशेषु उपनयनादयः**

---

प्रसिद्धे कापेये तत्समभिव्याहृतोऽभिप्रतारी [1]तद्याज्य इत्येव बुद्धिः झटिति भवति । याज्ययाजकभावश्च समानान्वयानामेव [2]प्रशस्तः, तथैव प्राचीनराजचरित-वर्णनेषु दर्शनात् । अनेककुलयाजकत्वं च ब्राह्मणस्य न प्रशस्तम् । अतः कापेययाज्यत्वेन अभिप्रतारिणश्चैत्ररथित्वमवगम्यते क्षत्रपतित्वं च । तच्च क्षत्रि-यस्यैव[3] उपपद्यते । कर्मधारयस्याभ्यर्हितत्वात् ।

ननु - अत्र नरपतिन्यायः प्रवर्तते, तथा च 'क्षत्रस्य पतिः' इत्येव युक्तमिति-चेत्,

तथापि समानजातीयेष्वेव तदधिपतित्वं विवक्षितम् । 'तमेकाकिनम-न्नाद्यस्याध्यक्षमकुर्वन्' इति पूर्ववाक्ये हि 'सर्वेष्वपि मध्ये अयमेकः अन्नाध्यक्षः' इति न निर्धारयितुं शक्यम्, तस्मिन् काले अन्येषामपि मनुष्याणां देवानां चेन्द्रादीनां अन्नाद्याधिपतित्वस्य सम्भवात् । अतः सजातीयेष्विति औचित्येन विवक्षणीयम् । तत्प्रायपाठात् क्षत्रपतित्वमपि तादृगेव भविष्यति ।

अस्मिंश्च सन्दर्भे संवर्गविद्याशालिनोर्द्वयोर्मध्ये ब्राह्मणद्वितीयत्वं क्षत्रियस्यैवाभिप्रतारिणो दृष्टम् । अतः संवर्गविद्याशालिनोर्द्वयोर्मध्ये ब्राह्मणद्वि-तीयस्य जानश्रुतेरपि एतत्सन्दर्भगतस्य क्षत्रियत्वमेवोचितमिति न काचिद-नुपपत्तिः ॥ ३५ ॥

सूत्रद्वयेन जानश्रुतेः क्षत्रियत्वसमर्थनेन, संवर्गविद्यागतं शूद्रेत्यामन्त्रणरूपं शूद्रस्य विद्याधिकारलिङ्गं निरस्तम् । संस्कारपरामर्शादित्यादित्रिसूत्र्या तु, शूद्रस्य विद्याधिकारव्यावर्तकं प्रमाणं उपन्यस्यते ।

**उपनयनादय इति ।** आदिपदेन उपसदनगुरुकुलवासादयो विद्योप-योगिनः संस्कारा उपादीयन्ते । अध्ययनाङ्गोपनयनादिवत् विद्याङ्गोपनयनादि-कमपि पृथगस्ति । तदभावात् न शूद्रस्य[4]विद्याधिकारः ।

---

1. मु. 'तद्' नास्ति
2. मु. मेव प्रसिद्धः
3. मु. 'एव' नास्ति
4. मु. 'विद्या' नास्ति

संस्काराः परामृश्यन्ते—'तं होपनिन्ये' (श. ब्रा. ११।५।३।१३) इति, 'अधीहि भगव इति होपससाद' (छा. उ. ७।१।१) इति, 'ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः' (प्र. उ. १।१) इति च। 'तान् हानुपनीयैव' (छा. उ. ५।११।७) इत्यपि प्रदर्शितैव उपनयनप्राप्तिर्भवति। शूद्रस्य च संस्काराभावोऽभिलप्यते, 'शूद्रश्चतुर्थो वर्ण एकजातिः' (गौ.ध.सू. २।१।५१) इति एकजातित्वस्मरणात्। 'न शूद्रे पातकं किंचिन्न च संस्कारमर्हति' (मनु.१०।१२६) इत्यादिभिश्च॥३६॥

---

उपनयनादीनामङ्गत्वबोधकानि विद्याप्रकरणगतानि वाक्यान्युदाहरति—**तं होपनिन्य** इत्यादिना। उपसदनं नाम गुरुसमीपे शिष्यस्य गमनम्। उपनयनं तु उपसन्नस्य विद्यां दास्यामीत्यङ्गीकारपूर्वकं शिष्यत्वेन स्वनिकटे [1]स्थापनम्।

ननु-प्राचीनशालादिषु षट्स्वृषिषु वैश्वानरविद्यार्थिषु अश्वपतिं केकयमुपसन्नेषु उपनयनं विनैव तेन तेभ्यो विद्योक्तेति 'तान् हानुपनीयैवैतदुवाच' इति वाक्यबलादवगम्यते। अतः कथं सर्वत्र उपनयनमपेक्षितम्? इत्याशङ्क्याह—**तान्हानुपनीयैवेत्यपीति**। उपनयनस्य विद्याङ्गत्वेऽपि यत्र उत्कृष्टस्य निकृष्ट उपदेष्टा आपद्धर्मत्वेनानुज्ञातत्वादङ्गीक्रियते तत्र विनैवोपनयनं उपसन्नाय विद्या वक्तव्येति 'प्रतिलोमं चैतत् यत् ब्राह्मणः क्षत्रियमुपेयात्' इत्यादिवचनबलादवगम्यते। अतो वैश्वानरविद्योपदेष्ट्रा क्षत्रियेणाश्वपतिना प्राचीनशालादीनामुपपनयनं न कृतम्। तथा च, यत्र उत्कृष्ट उपदेष्टा तत्र सर्वत्र उपनयनमवश्यापेक्षितमेवेति भावः।

नन्वेवमपि अमन्त्रकं [2]उपनयनादिकं शूद्रस्याप्यस्तु, अतः कथं तस्य विद्यानधिकारः। अन्यथा कथं स्त्रीणां विद्योपदेशस्स्यात्, मन्त्रपूर्वकोपनयनस्य तत्रानभ्युपगमात्, अत आह—**शूद्रस्य च संस्काराभाव इति**। अयं भावः—'न शूद्रे पातकं' इत्यादिना वचनेन शूद्रे संस्कारमात्र

---

1. आ. अवस्थापनम् 2. मु. उपसदता

## तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

इतश्च न शूद्रस्याधिकारः। यत् सत्यवचनेन शूद्रत्वाभावे निर्धारिते जाबालं गौतम उपनेतुमनुशासितुं च प्रववृते, 'नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहर उप त्वा नेष्ये न सत्यादगाः' (छा. उ. ४।४।५) इति श्रुतिलिङ्गात् ॥ ३७ ॥

---

निषिद्धम्। 'मन्त्रवर्जं न दुष्यति' इति वचनेन अमन्त्रपूर्वकं तदभ्यनुज्ञातम्। अयं च अमन्त्रकसंस्काराङ्गीकारो जातकर्मादिविधिनिमित्तसंस्कारविषय एव, न तु [1]उपनयनादिरूपविद्योपयोगिसंस्कारविषयः। 'शूद्रश्चतुर्थो वर्ण एकजातिः' इति द्वितीयजन्मप्रयोजकसंस्कारनिषेधात्।

ननु - अनेन वचनेन येषु संस्कारेषु द्वितीयजन्मप्रतिपादकोऽर्थवादोऽस्ति त एव [2]निषिध्यन्ते। तादृशार्थवादश्च अध्ययनाङ्गोपनयन एव, तत् प्रस्तुत्य 'एतत् द्वितीयं जन्म' इत्याम्नानात् - इति चेत्, न—विद्याङ्गोपनयनेऽपि 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि' इत्यर्थवादश्रवणेन विद्याप्रदस्य पितृत्वावगमात् विद्यातदुपनयनयोः द्वितीयजन्मत्वप्रतिपत्तेः। अतः अङ्गाभावेन, कृतमपि विद्यानुष्ठानं निष्फलमिति, [3]न शूद्रस्याधिकारो विद्यासु ॥ ३६ ॥

**यत् सत्यवचनेनेत्यादि**। एवमुपाख्यायते - 'सत्यकामो जाबालः प्रमीतपितृकः जबालां स्वमातरमुवाच-आचार्यकुले ब्रह्मचर्येण स्थातुमिच्छामि, किं गोत्रं ममेति। सोवाच-बह्वहं परि चरन्ती - परिचारिणी यौवने त्वामलभं, नाहमेतद्वेद यद्गोत्रस्त्वमिति, सत्यकामो नाम त्वमसि जबाला तु नाम अहमस्मि, अतः 'सत्यकामो जाबालः' इत्येव त्वया आचार्यपृष्टेन वक्तव्यम्-इति। स गौतमं

---

1. मु. उपसदनादि

2. मु. निषिध्यन्ताम्

3. **न शूद्रस्याधिकार इति** स्त्रीणां तु, याज्ञवल्क्यादिभिः मैत्रेयीप्रभृतीनां विद्योपदेशदर्शनात् अस्त्यधिकारः इति ज्ञायते वैदिकलिङ्गेन, शूद्रादीनां तु अधिकारे वैदिकं लिङ्गं नास्ति - इति भावः।

प्रत्येत्य ' ब्रह्मचर्यं भगवति वत्स्यामि उपेयां भगवन्तं ' इत्युक्त्वा गौतमेन किंगोत्र-त्वमिति पृष्टः मात्रा यथोक्तं तथैव सर्वमुक्तवान् । तदनन्तरं गौतमस्य वचनं—नैतदब्राह्मणो विवक्तुमर्हति, समिधं सोम्याहर उप त्वा नेष्ये न सत्यादगाः - इति । तमुपनीय कृशानां गवां चतुश्शतसङ्ख्यानां रक्षणाय नियोजयामास । स ता आदाय 'यावत् सहस्रसङ्ख्या न भविष्यन्ति तावन्न निवर्ते' इति प्रतिज्ञाय अरण्यं तृणजलसमृद्धं प्रापयामास । यदा ताः सहस्रं सम्पन्नाः, अथ तं आचार्य-कुलं प्रापयितुं ऋषभ उवाच 'प्राप्तास्सोम्य सहस्रं स्मः प्रापय न आचार्यकुलम्' इति । उक्त्वा स ऋषभः तस्मै सत्यकामाय षोडशकलस्य चतुष्पदो ब्रह्मण एकं पादमुक्तवान् । ततोऽवशिष्टान् त्रीन् पादान् अग्निहंसमद्गव ऊचुः । स तथाभूत आचार्यकुलं प्राप, तमाचार्य उवाच—सत्यकाम ! ब्रह्मविदिव भासि, कस्त्वामनु-शशास - इति । सत्यकाम उवाच—अन्यो मनुष्येभ्यः, परं तु न तावता मम सन्तोषः, यतः 'आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्' इति भगवत्सदृशेभ्यः श्रुतमस्ति, अतः त्वत्त एव [1]श्रोतुमिच्छामि - इति । आचार्यः ऋषभादिभिर्यदुक्तं ब्रह्म, तदेव पुनरपि तस्मै उक्तवान् - इति ।

ननु — अत्र शूद्रत्वाभावनिर्धारणपूर्वकमेव विद्यार्थमुपनीय विद्याया उपदिष्टत्वात् न शूद्रस्याधिकार इति विवक्षितं, तदसङ्गतम् - ' नैतदब्राह्मणः' इत्यादिवचनं हि शूद्रत्वाभावनिर्धारकं वक्तव्यम् । तन्न सम्भवति, तस्य ' नैतद-ब्राह्मणः' इति स्वारस्यानुरोधेन ब्राह्मण्यनिर्धारणपरत्वात् । न चात्र विद्याङ्गोपन[2]-यनमप्यस्ति प्रस्तुतम् । ' तं होपनीय' 'उपेयां भगवन्तं' इत्यादौ हि अध्य-यनाङ्गोपनयनमेव विवक्षितम् । किंगोत्र इति गोत्रप्रश्नस्य अध्ययनाङ्गोपनयने [3]एव गोत्रभेदेनेतिकर्तव्यताविशेषवति उपयोगात्—इति ;

अत्रोच्यते-नैतदब्राह्मणइतिवाक्यं न ब्राह्मण्यनिर्धारणपरम्, अपि तु 'न सत्यादगाः' इति वाक्यशेषानुसारेण शूद्रत्वाभावनिर्धारणपरमेव । ' अनृतं चातिवादश्च पैशुन्यमतिलोभता । निकृतिश्चाभिमानश्च जातितश्शूद्रमाविशत्' ॥ इति अनृतवादस्य शूद्रासाधारणत्वोक्त्या तद्व्यतिरेकस्य तदभावनिर्धारण एव

1. आ. पुनरपिश्रोतु    2. मु. नयनमस्ति
3. मु. 'एव' नास्ति

## श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥ ३८ ॥

**इतश्च न शूद्रस्याधिकारः। यत् अस्य स्मृतेः श्रवणाध्ययनार्थ-**

---

स्वारस्यात्, अब्राह्मणपदस्य क्षत्रियादित्रयसाधारणस्य शूद्रासाधारणानृतवादव्यतिरेकोक्त्या विशेषपरत्वस्यैव न्याय्यत्वात्।

अथापि गोत्रप्रश्नसमभिव्याहृतस्य शूद्रत्वाभावनिर्धारणस्यापि अध्ययनाङ्गोपनयन एव पूर्वप्रस्तुत उपयोगो न विद्यायां इति चेत्,

उच्यते—इदं हि षोडशकलब्रह्मविद्याप्रकरणम्। अतः तदुपक्रमाम्नातस्योपाख्यानस्य तत्र उपयोगो वक्तव्य इति, इत्थमुपक्रमे विवक्षितम्— 'उपेयां भगवन्तम्' इति सामान्योक्त्या विद्याङ्गोपनयनमध्ययनाङ्गोपनयनं च द्वयमपि सत्यकामेन प्रार्थितम्। अध्ययनाङ्गोपनयनमपि हि 'विद्यायामुपनयनादिर्नियमः' इति वचनानुसारेण सकलवैदिकाधिकारप्रयोजकत्वादुपयुज्यत एव। ततः [1]"वयोरूपविशेषेण अध्ययनोपयुक्तकाल एव अयमुपनयनं प्रार्थयत इति नूनं ब्राह्मणो भवति, अतो गोत्रं प्रक्ष्यामि' इत्यभिप्रायेण गौतमेन गोत्रे पृष्टे तेन च गोत्राज्ञाने उद्भाविते, पुनर्गौतमस्य सन्देहोऽभवत् - किमयं गोत्राभावादेव गोत्रं न जानाति, आहो विद्यमानमेव न जानाति? गोत्राभावे च शूद्रोऽपि सम्भावितोऽयम् - इति तत्काल वितर्क्य, 'सर्वथाप्ययं सत्यवचनात् शूद्रो न भवति, अत उपनयनद्वयेऽप्यधिकारी' इति निश्चित्य, 'मातरं प्रति गोत्रस्य पृष्टत्वात् ब्राह्मणोऽपि भवत्येवायम्' इति च मनसि निधाय, अध्ययनोपनयनाभावे कुत्राप्यधिकाराभावात् प्रथमतः तेन संस्कृत्य, अध्ययनमपि कारयित्वा, गुरुशुश्रूषया शुद्धान्तःकरणाय तस्मै ब्रह्मविद्यामुपदेक्ष्यामीति मनसि निधाय, तथैव कृतवान्। अतः शूद्रत्वाभावनिर्धारणपूर्वकमेव द्विविधमप्युपनयनं कृत्वा विद्याया उपदिष्टत्वात् युक्तमुक्तं 'तदभावनिर्धारणे च प्रवृत्तेः न शूद्रस्याधिकारः' इति ॥ ३७ ॥

स्मृतेश्श्रवणाध्ययनार्थप्रतिषेधाच्च न शूद्रस्याधिकारः-इति सूत्रं योजयति— **इतश्चेत्यादिना।**

---

1. **वयोरूपविशेषेणेति** आकृतिविशेषानुमितेन इत्यादिः।

प्रतिषेधो भवति। वेदश्रवणप्रतिषेधः वेदाध्ययनप्रतिषेधः तदर्थज्ञाना-नुष्ठानयोश्च प्रतिषेधः शूद्रस्य स्मर्यते। श्रवणप्रतिषेधस्तावत् 'अथ हास्य वेदमुपशृण्वतः त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्' (गौ. ध. सू. २।३।४) इति, 'पद्यु ह वा एतच्छ्मशानं यच्छूद्रः, तस्माच्छूद्रसमीपे नाध्येतव्यम्' [वा. ध. सू. १८-११] इति च। अत एव अध्ययनप्रतिषेधः। यस्य हि समीपेऽपि नाध्येतव्यं भवति स कथमश्रुतमधीयीत। भवति च 'उदाहरणे जिह्वाच्छेदः धारणे शरीरभेदः' [गौ. ध. सू. २।३।५-६] इति। अतएव च अर्थात् अर्थज्ञानानुष्ठानयोः प्रतिषेधो भवति, 'न शूद्राय मतिं दद्यात्' (मनु.४।८०) इति, 'द्विजातीनां अध्ययनमिज्या

---

त्रपुजतुभ्यां सीसलाक्षाभ्याम्। पद्यु-सञ्चारि। तस्मादिति, 'अध्ययनं वर्जयेत्' इत्यनुवृत्तौ 'श्मशाने सर्वतः शम्याप्रासात्' इत्युक्तेः शूद्रस्यापि श्मशानत्वेन ततोऽप्यध्ययनं वर्जयितव्यमिति हेत्वर्थवादः। उदाहरणे-वेदस्योच्चारणे।

ननु-शूद्रस्य एतेषु प्रतिषेधेषु सत्स्वपि, तेषां प्रत्यवायबोधकत्वात्, यः प्रत्यवायमङ्गीकृत्य 'विद्यायां सम्पन्नायां सर्वः प्रत्यवायोऽपगतो भविष्यति' इति बुद्ध्या विद्यामनुष्ठातुमिच्छेत्, तस्य विद्याधिकारे न काचिदनुपपत्तिः-इति चेत्,

उच्यते—'न शूद्रे पातकं किञ्चित् न च संस्कारमर्हति। धर्मेऽस्य नाधिकारोऽस्ति नाधर्मात् प्रतिषेधनम्॥' इति वचनेन, शूद्रं प्रति ये विशिष्य नोक्ता धर्माः तदकरणे प्रत्यवायाभावस्य, विशिष्यानुक्तेषु संस्कारेषु अयोग्यतायाः, विशिष्यानुक्तेषु धर्मेषु अनधिकारस्य, यच्च विशिष्य न प्रतिषिद्धं तदनुष्ठानेऽपि प्रत्यवायाभावस्य च[1] स्मरणेन वेदवाक्यविचारतदर्थविद्यानुष्ठानस्य च विशिष्याविहिततया अधिकाराभावात् तेषु कृतेष्वपि फलपर्यवसानाभावेन, 'कपिलाक्षीरपानेन ब्राह्मणीगमनेन च। वेदाक्षरविचारेण शूद्रश्चण्डालतां व्रजेत्॥' इत्यादिवचनेन प्रत्यवायकरतायाः विशिष्यावगतेश्च तन्मात्रभागिता परं स्यात्। तत् सिद्धं-विशिष्य [2]वेदविचारादिप्रापकलिङ्गाभावेन विद्याविधीनां तदाक्षेपकत्वा-

---

1. स्मरणेनेति स्मृतौ पादचतुष्टयस्यार्थः यथासङ्ख्यं षष्ठ्यन्तचतुष्टयेनोक्तः।

2. मु. वेदविचारप्रापक

दानम्' (गौ. ध. सू. २।१।१) इति च। येषां तु पूर्वकृतसंस्कारवशात् विदुरधर्मव्याधप्रभृतीनां ज्ञानोत्पत्तिः, तेषां न शक्यते फलप्राप्तिः प्रतिषेद्धुं, ज्ञानस्यैकान्तिकफलत्वात्। 'श्रावयेच्चतुरो वर्णान्' (म। भा।)

---

भावात्, उपनयनादिसंस्कारप्रतिषेधेन अङ्गराहित्यात्, विशिष्य च अनधिकारस्मरणात्, शूद्रैरनुष्ठिता विद्या शूद्राणां प्रत्यवायायैव न तु मोक्षाय-इति।

ननु विदुरधर्मव्याधादीनां ब्रह्मविदां पुराणेषु कीर्तनं तर्हि कथमुपपादनीयम्? तत्राह—**येषां त्विति**। ननु तर्हि ये मुमुक्षवः शूद्राः तेषां किं मोक्षोपाया एव अपलप्यन्ते? नेत्यभिप्रेत्याह—**श्रावयेच्चतुरोवर्णानिति**।

नन्वेतद्वचनपर्यालोचनया भार(त)[तादि]श्रवणेऽधिकारोऽस्तु नाम, तावता कथं मोक्षाधिकारितेति चेत्,

उच्यते—मोक्षो नाम आनन्दसाक्षात्कारः। तदधिकारो नाम तत्रेच्छा। सा तु स्वत एव सर्वेषां न निषेद्धुं शक्या। न हि सा धर्मः। तत्साधनीभूतो यो वृत्तिरूपः साक्षात्कारः सोऽपि 'धर्मेऽस्य नाधिकारोऽस्ति' इति प्रतिषेधस्य विषयो न भवति। विधिना अलौकिकश्रेयस्साधनतया अनुष्ठेयत्वेन यो बोध्यते स हि धर्मः। ब्रह्मज्ञानस्य च प्रमाणवस्तुपरतन्त्रस्य पुरुषकृत्यसाध्यस्य अननुष्ठेयतया धर्मत्वाभावात्। तथा च तत्रापि तदिच्छारूपोऽधिकारो नानुपपन्नः। तदुपायेषु परं वेदान्तश्रवणादिषु विधेयतया धर्मभूतेषु अधिकारस्य निषिद्धत्वात् न तदनुष्ठानं फलपर्यवसायि - इति वक्तव्यम्। धर्मेऽस्य नाधिकारोऽस्तीति च वचनं विशेषविहितेतरविषयम्। भार[तादि](त)श्रवणं च विशिष्य विहितम्। अतः तदन्तर्गतब्रह्मभागश्रवणे सति जायमानं ज्ञानं केन वारयितुं शक्यम्। न च-वाक्यश्रवणमात्रेणार्थबोधो न भवति, अपि तु तदर्थध्यानादिकमपि अपरोक्षज्ञानायापेक्षितम्, तत्तु शूद्रस्य [1]विशिष्य न विहितमिति - वाच्यम्। तावता हि भार[तादि](त)श्रवणजनितं ज्ञानं अपरोक्षतापर्यवसायि न भविष्यति। परोक्षं तु ब्रह्मज्ञानं भारतादिश्रवणेन शूद्राणामपि सम्भाव्यत एव।

ननु—यदि परोक्षब्रह्मज्ञानमेव अद्वितीयवस्तुपरभारतांशश्रवणस्य फलं, तर्हि तत् भाषाप्रबन्धेनापि सम्पादयितुं शक्यमिति शूद्राणां भार[तादि](त)श्रवण

---

1. मु. 'विशिष्य' नास्ति

इति च इतिहासपुराणाधिगमे चातुर्वर्ण्यस्याधिकारस्मरणात् वेदपूर्वकस्तु नास्त्यधिकारः शूद्राणां इति स्थितम् ॥ ३८ ॥

१० कम्पनाधिकरणम्

## कम्पनात् ॥ ३९ ॥

अवसितः प्रासङ्गिकोऽधिकारविचारः। प्रकृतामेवेदानीं वाक्यार्थविचारणां प्रवर्तयिष्यामः।

'यदिदं किंच जगत् सर्वं प्राण एजति निःसृतम्।
महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति' (क. उ. २।३।२)

इति। एतद्वाक्यं 'एजृ कम्पने' इति धात्वर्थानुगमात् लक्षितम्। अस्मिन् वाक्ये, सर्वमिदं जगत् प्राणाश्रयं स्पन्दते महच्च किंचित् भयकारणं वज्रशब्दितमुद्यतं तद्विज्ञानाच्चामृतत्वप्राप्तिः - इति श्रूयते।

---

एव को निर्बन्ध इति चेत्,

भारतादिश्रवणजनितस्यात्मज्ञानस्य जन्मान्तरे हि अपरोक्षतायामुपयोगो वक्तव्यः। तत्र प्रतिबन्धकीभूतदुरितक्षपणं नियमादृष्टस्य प्रयोजनं भविष्यति।

एवं यानि सगुणोपासनानि विशिष्य शूद्रं प्रति शैववैष्णवतन्त्रेषु प्रदर्शितानि तत्र शूद्रस्याधिकारे न काचिदनुपपत्तिः।

वेदान्तवाक्यश्रवणतद्विचारादिषु [1]तु नाधिकार इत्याह—**वेदपूर्वकस्त्विति** ॥ ३८ ॥

**इति अपशूद्राधिकरणम् ॥ ९ ॥**

अव्यवहिताधिकरणस्य प्रासङ्गिकत्वात् तेन सङ्गतिं विहाय, अङ्गुष्ठाधिकरणेन सङ्गतिमाह—**अवसित इत्यादिना**। तथा च यथा अङ्गुष्ठवाक्ये ईशानशब्दात् [2]परमात्मैवाङ्गुष्ठमात्रः, तथा प्राणशब्दात् पञ्चवृत्तिर्वायुविकार एव एजयिता प्रकृतमन्त्रे, वज्रपदाच्च अशनिरेव भयानकत्वेन ग्राह्यः - इति दृष्टान्तसङ्गतिर्विवक्षिता।

---

1. मु. 'तु' नास्ति
2. **परमात्मैवेति** प्रमिताधिकरणप्रथमवर्णकाभिप्रायेणेदम्।

तत्र, कोऽसौ प्राणः? किं तत् भयानकं वज्रम्? इत्यप्रतिपत्तेः विचारे क्रियमाणे, प्राप्तं तावत् - प्रसिद्धेः पञ्चवृत्तिर्वायुः प्राण इति, प्रसिद्धेरेव च अशनिर्वज्रं स्यात्। वायोश्चेदं माहात्म्यं संकीर्त्यते। कथम्? सर्वमिदं जगत् पञ्चवृत्तौ वायौ प्राणशब्दिते प्रतिष्ठाय एजति। वायुनिमित्तमेव च महद्भयानकं वज्रमुद्यम्यते। वायौ हि पर्जन्यभावेन विवर्तमाने विद्युत्स्तनयित्नुवृष्ट्यशनयो विवर्तन्त इत्याचक्षते। वायुविज्ञानादेव चेदममृतत्वम्। तथा हि श्रुत्यन्तरम्—'वायुरेव व्यष्टिः वायुः समष्टिः अप पुनर्मृत्युं जयति य एवं वेद' [बृ. उ. ३.३.२] इति। तस्मात् वायुरयमिह प्रतिपत्तव्यः- इति।

---

आकाशप्राणाधिकरणयोः आकाशादिपदस्य उपक्रमगतानन्तत्वदेवतात्वलिङ्गाभ्यां अवधारणोपोद्बलितजगत्कारणत्वादिलिङ्गसहकृताभ्यां ब्रह्मपरत्वमास्थितम्। नेह तथाविधं किञ्चिल्लिङ्गमस्ति। जगच्चालनहेतुत्वं तु प्राणस्यापि सम्भवति, भयहेतुत्वं च अशनेरपि। तथा च प्रकृतवाक्ये पञ्चवृत्त्यात्मना वज्रात्मना च परिणतो वायुरेवोपास्यः। अतो वाक्यभेदोऽपि न भवति, उभयविषयकैकोपासनविधेः स्वीकारात्। तदिदमाह-**प्रसिद्धेः पञ्चवृत्तिर्वायुरित्यादिना। वायौ प्राणशब्दिते प्रतिष्ठायैजतीति**। यद्यपि प्राणएजतीत्येव श्रुतं, तथापि 'यो यस्मिन्नधिकरणे [1]चेष्टते स तत्र प्रतिष्ठाय' इति अर्थाल्लभ्यत इति तथोक्तम्।

नन्वत्र 'यदिदं किञ्च' इति सर्वस्य जगतः चालनमवगम्यते। नेदं प्राणस्य सम्भवति, अपि तु प्राणिवर्गचालकत्वमेव तस्य। अतः सर्वपदसङ्कोचः पूर्वपक्षे प्राप्नोति। अपि च प्रकृते अमृतफलकवेदनविषयत्वं प्राणवज्रश्रुत्यर्थस्य अवगम्यते। तत्र, यद्यपि अपमृत्युतरणहेतुत्वं वायुविज्ञानस्य अन्यत्र श्रुतम्, तथापि मोक्षरूपामृतहेतुत्वं वायुविज्ञानस्य न सम्भवति। प्रकरणं चेदं परमात्मनः। अतः कथं पञ्चवृत्तिप्राणात्मना वज्रात्मना च परिणतस्य वायोः इदमुपासनं स्यात्-इति चेत्—

उच्यते—सर्वशब्दः प्राणचालनीयेषु प्राणिषु सङ्कुचद्वृत्तिराश्रीयते।

---

1. **अधिकरणे इति** प्राणे इति सप्तम्या अधिकरणत्वं लभ्यत इति भावः।

**एवं प्राप्ते ब्रूमः—ब्रह्मैवेदमिह प्रतिपत्तव्यम् । कुतः? पूर्वोत्तरालोचनात् । पूर्वोत्तरयोर्हि ग्रन्थभागयोः ब्रह्मैव निर्दिश्यमानमुपलभामहे । इहैव कथं अकस्मात् अन्तराले वायुं निर्दिश्यमानं प्रतिपद्येमहि ।**

---

ब्रह्मपक्षे हि प्राणश्रुतेः सर्वात्मना परित्यागः स्यात् । [1]श्रुतित्यागापेक्षया च श्रुतिसङ्कोचो न्याय्यः । ब्रह्मप्रकरणेऽपि प्राणवज्रोपासनं न विरुध्यते । [2]प्राकरणिकब्रह्मोपासनां प्रति चित्तशुद्धिद्वारा अङ्गत्वोपपत्तेः । अत एव अमृतत्वफलकीर्तनमुपपद्यते । प्रधानफलस्य अङ्गे कीर्तनोपपत्तेः । ' विज्ञानं ब्रह्म चेद्वेद । तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा । सर्वान् कामान् समश्नुते ' [तै. उ. २. ५] इति ब्रह्मप्रकरणे सर्वकामावाप्तिरूपमोक्षफलकविज्ञानमयकोशोपासनाम्नाने हि इयमेव गतिराश्रयणीया । अतो न काचिदनुपपत्तिः । वायुरेव व्यष्टिः वायुस्समष्टिः - विविधा अष्टिः - व्याप्तिः अस्येति व्यष्टिः, साकल्येन अष्टिरस्येति समष्टिः । आध्यात्मिकवायुरूपेण परिणतस्य हि वायोः विविधेषु मशकादिशरीरेषु तत्तच्छरीरसमानपरिमाणतामापन्नस्य तत्तच्छरीरसंयोगरूपा व्याप्तिः विविधोच्यते । देवतात्मना स्थितस्य सर्वेषु [3]प्राणेषु अभिमानरूपा व्याप्तिः साकल्येन व्याप्तिरुच्यते ।

**ब्रह्मैवेदमिहेति** । अनेन विषयवाक्योपस्थितः प्राणो वज्रश्च इह पक्षत्वेन सम्बध्यते । ब्रह्मेति साध्यं च आधिकारिकब्रह्मपदसम्बन्धाल्लभ्यते । तत्र हेतुसमर्पकं सूत्रं ' कम्पनात् ' इति ।

ननु - प्राणस्य ब्रह्मत्वे सर्वजगच्चालकत्वं हेतुः, वज्रस्य ब्रह्मत्वे अग्निसूर्यादिभयानकत्वं हेतुः । तत् कथं [4]उभयत्रापि ' कम्पनात् ' इतिसौत्रहेतोरन्वयः । अपि च सूत्रकृता कम्पनादितिहेतुरुपक्षिप्तः । तं परित्यज्य कथं भाष्ये पूर्वोत्तर-

---

1. **श्रुतित्यागेत्यादि** श्रुतित्यागः— वाच्यार्थबोधकत्वपरित्यागः, श्रुतिसङ्कोचः- कतिपयवाच्यार्थविशेषबोधकत्वस्वीकारः ।

2. मु, प्रकरणिब्रह्मोपासनां प्रति विशुद्धि° 3. आ. प्राणिषु

4. **उभयत्रापीत्यादि** प्राणब्रह्मत्वे वज्रब्रह्मत्वे च कथं अन्वयः-हेतुत्वं, साधकत्वमिति यावत् । कम्पनशब्दार्थस्य चालनस्य प्राणमात्रनिष्ठस्य प्राणब्रह्मत्वमात्रसाधकत्वात् - इति भावः । आ. उभयमपि

पर्यालोचनादितिहेतुरुपक्षिप्यते । जगत्सर्वमेजतीत्यनेन लोकाश्रयत्वप्रत्यभिज्ञोक्तिरप्यनुपपन्ना । लोकाश्रयत्वचालकत्वयोर्भिन्नत्वेन प्रत्यभिज्ञानाभावात् । नप्राणेनेति मन्त्रोपन्यासोऽपि प्रकृते नोपपद्यते । तत्र हि जीवनहेतुत्वं परमात्मन उच्यते, इह तु चालकत्वं प्राणस्येति किं केन सङ्गतम् ।

अत्रोच्यते—सूत्रे कम्पनादिति चालनं भावव्युत्पत्त्या विवक्षितं करणव्युत्पत्त्या तु कम्पनहेतुभूतं भयं विवक्षितमिति [1]उभयहेतुसम्भवः । भाष्ये पूर्वोत्तरपर्यालोचनोपक्षेपस्तु चालकत्वं भयहेतुत्वं च ब्रह्मगतमेव ग्राह्यं न प्राणवज्रगतं पूर्वपक्षोक्तरीत्या ग्राह्यमिति [2]सौत्रहेतूपयुक्त एव क्रियते, न तु तमतिलङ्घ्य हेत्वन्तरम् । पूर्वत्र हि 'ऊर्ध्वमूलोऽवाक्छाख एषोऽश्वत्थस्सनातनः' इत्युक्त्वा 'तदेव शुक्रं' इति [3]पठ्यते । तत्र न ज्ञायते - कोऽसौ ऊर्ध्वमूलोऽश्वत्थः, तदेवशुक्रमित्यत्र च तत्पदेन किं अश्वत्थमूलत्वेन निर्दिष्टं यत् तदेव परामृश्यते उताश्वत्थ एव-इति । एतादृशाकाङ्क्षानिवर्तकत्वेन यदिदंकिञ्चेतिमन्त्रः पठ्यते । आकाङ्क्षितार्थसमर्पकत्वसम्भवे अनाकाङ्क्षितार्थसमर्पकताया अनुचितत्वात् । अस्य च मन्त्रस्य अयमर्थः — यदिदं किञ्च जगत् सर्वं, तत् प्राणान्निस्सृतं सत् प्राण एजति - इति । अस्मिन् मन्त्रे जगतो निस्सृतत्वोक्त्या पूर्ववाक्यनिर्दिष्टोऽश्वत्थो जगदिति निर्णीयते । अश्वत्थो हि मूलान्निस्सृतो भवति । तथा च अश्वत्थपदस्य जगत्परत्वे, तदेवशुक्रमित्यत्र ब्रह्मपदसमानाधिकरणस्य तत्पदस्य अश्वत्थपरामर्शकत्वासम्भवात् तन्मूलं परामृश्यते तत्पदेन । तथा च पूर्वमन्त्रे जगत्कारणतया ब्रह्मणो निर्देशात् इहापि प्राणशब्दोदितं जगत्कारणं ब्रह्मैवेति निर्धार्यते । एवं च सर्वशब्देन निरङ्कुशेन यत् कृत्स्नजगच्चालकत्वमवगतं, तत् प्राणस्य ब्रह्मत्वे लिङ्गं भवत्येव । तत्र परं पूर्वपक्षिणा सर्वपदस्य सङ्कोच आशङ्कितः । स तु न सम्भवति । पूर्वमन्त्रपर्यालोचनया ब्रह्मकार्यनिरूपणपरेऽस्मिन् मन्त्रे सर्वपदसङ्कोचायोगात् । एवं च प्राणएजतीत्युक्त्या प्राणेप्रतिष्ठायैजतीति लभ्यते । तथा च

---

1. **उभयहेतुसंभवः**—साध्यद्वयहेतुनिर्देशसंभवः । 'उभयहेतुत्वग्रहः' इति आ-पाठः । तत्र पाठे 'कम्पनादितिसौत्रहेतोः' इति आदिः पूरणीयः ।

2. आ. सौत्रहेतूपयुक्तमेवोच्यते

3. मु. प्रतिपाद्यते

पूर्वत्र तावत् 'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ॥ (क.उ.२।६।१) इति ब्रह्म निर्दिष्टं, तदेव इहापि, संनिधानात् 'जगत्सर्वं प्राण एजति' इति च लोकाश्रयत्वप्रत्यभिज्ञानात् निर्दिष्टमिति गम्यते । प्राणशब्दोऽप्ययं परमात्मन्येव प्रयुक्तः, 'प्राणस्य प्राणम्' (बृ. उ. ४।४।१८) इति दर्शनात् । एजयितृत्वमपीदं परमात्मन एवोपपद्यते न वायुमात्रस्य । तथाचोक्तम्—

'न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥' (क.उ.२।२।५) इति।

उत्तरत्रापि-'भयादस्याग्निस्तपति भयात्तपति सूर्यः ।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः' (क. उ. २।३।३) इति ब्रह्मैव निर्देक्ष्यते न वायुः, सवायुकस्य जगतो भयहेतुत्वाभिधानात् ।

---

'तस्मिन् लोकाश्श्रिताः' इत्यस्य इह प्रत्यभिज्ञानमपि सम्भवत्येव । नप्राणेनेत्यादिमन्त्रोपन्यासोऽपि प्रकृते युक्त एव । यस्य हि यदधीनं जीवनं तस्य तदधीना चेष्टेति, तेन वाक्येन ब्रह्माधीना चेष्टापि लभ्यत एवेति, तदैकार्थ्याय इहापि प्राणो ब्रह्मैवेति । एवं नप्राणेनेत्यादिवाक्यपर्यालोचनोपस्कृतेन सर्वजगच्चालकत्वेन प्राणो ब्रह्मेति सिद्धम् ।

एवं वज्रशब्दोदितमपि पूर्वोत्तरपर्यालोचनया ब्रह्मैव भवति । पूर्वत्र हि, 'तदु नात्येति कश्चन' इति सर्वस्याप्यनतिक्रमणीयं ब्रह्म इत्युक्तम् , 'तत् कथं ? महाप्रभावानामग्न्यादीनां विद्यमानत्वात्' इत्याशङ्क्य महद्भयंवज्रमुद्यतमित्युक्तम् । तद्विवरणार्थं च भयादस्याग्निस्तपतीत्यादि । तदाह—उत्तरत्रापीति ।

ननु—यदिदंकिञ्चेतिमन्त्रे, पूर्वार्धेन 'सर्वं जगत् प्राणपदोदितात् ब्रह्मणो निस्सृतं सत् तत्रैव प्रतिष्ठाय चेष्टते' इत्यर्थः प्रतिपाद्यते, महद्भयमित्यनेन तु अग्न्यादिशासकत्वं विवक्षितम्— इति किमर्थमुच्यते । कृत्स्नेनापि मन्त्रेण पूर्वोक्तानतिक्रमणीयत्वसिद्ध्यर्थं जगच्छासकत्वमेव विवक्षितं—इत्येव हि वक्तुमुचितम् । एजतीत्येतद्धि न चेष्टासामान्यप्रतिपादकम् , अपि तु भयक्रोधादिनिमित्तकम्पनरूपचेष्टाप्रतिपादकम् । तथा च एजतीतिपदेन कम्पे उक्ते 'जगतः कम्पः

तदेवेहापि संनिधानात् महद्भयंवज्रमुद्यतमिति च भयहेतुत्वप्रत्यभिज्ञानात् निर्दिष्टमिति गम्यते। वज्रशब्दोऽप्ययं भयहेतुत्वसामान्यात् प्रयुक्तः। यथा हि 'वज्रमुद्यतं ममैव शिरसि निपतेत् यद्यहमस्य शासनं न कुर्याम्' इत्यनेन भयेन जनो नियमेन राजादिशासने प्रवर्तते, एवं इदमग्निवायुसूर्यादिकं जगत् अस्मादेव ब्रह्मणो बिभ्यत् नियमेन स्वव्यापारे प्रवर्तत इति भयानकं वज्रोपमितं ब्रह्म। तथा च ब्रह्मविषयं श्रुत्यन्तरम्—'भीषास्माद्वातः पवते। भीषोदेति सूर्यः। भीषास्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चमः' (तै. उ. २.८।१) इति। अमृतत्वफलश्रवणादपि ब्रह्मैवेदमिति गम्यते। ब्रह्मज्ञानाद्धि अमृतत्वप्राप्तिः। 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वे. उ. ६।१५) इति मन्त्रवर्णात्।

यत्तु वायुविज्ञानात् क्वचिदमृतत्वमभिहितं, तत् आपेक्षिकम्। तत्रैव प्रकरणान्तरकरणेन परमात्मानमभिधाय 'अतोऽन्यदार्तम्' (बृ.उ.३।४) इति वाय्वादेरार्तत्वाभिधानात्।

---

प्राणाधीनः कथम्' इत्यपेक्षायां, उद्यतं वज्रमिव भयानकं तदिति, भयहेतुत्वं तु ब्रह्मणः राजवच्छासकत्वादिति, भयादस्याग्निरित्यनेनोच्यते—इति चेत्।

सत्यम्। अस्मिन् पक्षे हि यदिदंकिञ्चजगत्सर्वमिति न कृत्स्नं जगत् विवक्षितुं शक्यम्, परमात्मशासनानभिज्ञानां मूढानां तद्भयनिमित्तकम्पासम्भवात्। अपि तु [1]अग्निसूर्यादिकं तच्छासनाभिज्ञं जगदेव विवक्षणीयम्। तथा च अयमप्यर्थो भाष्ये 'अग्निवायुसूर्यादिकं जगत्' इत्यत्र [2]जगत्पदोपादानेन सूचित एव। परं तु, सर्वशब्दसङ्कोचापत्त्या नायमर्थोऽभिमत इति स्थितिनिमित्तं चलनमात्रं विवक्षितम्। न च चलनमात्रे एजतिरनुपपन्नः। [3]पूर्वत्र जगतो वृक्षत्वेन रूपिततया वृक्षचलने 'वृक्षः कम्पते' इति प्रयोगानुसारेण जगच्चलनमपि कम्पत्वेन रूपितम्।

---

1. मु. सूर्यादिकं जगत् एतच्छासना°　　2. मु. जगत्पदेन

3. पूर्वत्रेति यतः इत्यादिः

प्रकरणादपि अत्र परमात्मनिश्चयः । 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद' (क. उ. १।२।१४) इति परमात्मनः पृष्टत्वात् ॥ ३९ ॥

११ ज्योतिर्दर्शनाधिकरणम्

## ज्योतिर्दर्शनात् ॥ ४० ॥

'एषसंप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' (छा. उ. ८।१२।३) इति श्रूयते ।

तत्र संशय्यते - किं ज्योतिःशब्दं चक्षुर्विषयतमोऽपहं तेजः किं वा परं ब्रह्मेति । किं तावत् प्राप्तम्? प्रसिद्धमेव तेजो ज्योतिश्शब्दमिति ।

---

प्रकरणादप्यत्र परमात्मनिश्चय इति । तथा च, ब्रह्मप्रकरणे प्राणवज्रोपासनां विवक्षित्वा तत्र अमृतत्वफलकीर्तनं तदुपासनायाः ब्रह्मज्ञानाङ्गत्वं कल्पयित्वा परम्परया घटनीयम् - इति क्लेशोऽपि निर्मूल एव पूर्वपक्षिण इति ।

अत्र जगच्चलनहेतुत्वं भयहेतुत्वं च प्राणवज्रसाधारणं सर्वपदसङ्कोचापत्त्या पूर्वापरपर्यालोचनसनाथया ब्रह्मासाधारणं सम्पादनीयमिति अस्पष्टब्रह्मलिङ्गता ॥३९॥

इति कम्पनाधिकरणम् ॥ १० ॥

'एष सम्प्रसादः' इति वाक्यं यद्यपि प्रजापतिविद्यायां प्रत्यगभिन्नब्रह्मविषयायां पठ्यते, तथापि न तदनुसारेण अनेकश्रुतिभङ्गं कृत्वा व्याख्येयम् । अपि तु, श्रुत्यनुसारेण प्रकरणबाधं कृत्वा तत [1]उत्कर्ष एव स्वीकर्तव्यः । पूर्वत्र हि प्राणवज्रश्रुतिभङ्गः न केवलं प्रकरणमात्रेण, अपि तु, पूर्वोत्तरमन्त्रार्थप्रत्यभिज्ञानसहकृतसर्वपदासङ्कोचोपोद्बलितजगच्चालकत्वभयानकत्वलिङ्गेन । इह तु ज्योतिश्श्रुतेरेवोपोद्बलिका समुत्थानादिश्रुतिरस्ति । समुत्थानं हि अनुत्कर्षवादिना विवेकज्ञानं वक्तव्यम् । तथा च क्लेशः । शरीरात् समुत्थानं हि शरीरादुत्क्रान्तिरेव स्वरसतः प्रतीयते । अतः तदनुसारेण ज्योतिःपदमादित्यपरमेव व्याख्येयम् । न च तथा सति परमितिविशेषणानुपपत्तिः । आदित्यज्योतिषोऽपि नक्षत्राद्यपेक्षया परत्वोपपत्तेः । अमुमर्थमभिप्रेत्याह—प्रसिद्धमेव तेजो ज्योतिश्शब्दमिति ।

---

1. उत्कर्षः प्रकरणान्तरस्थस्य प्रकरणान्तरे नयनम्

कुतः ? तत्र ज्योतिश्शब्दस्य रूढत्वात् । 'ज्योतिश्चरणाभिधानात्' (ब्र. सू. १।१।२४) इत्यत्र हि प्रकरणात् ज्योतिश्शब्दः स्वार्थं परित्यज्य ब्रह्मणि वर्तते । न चेह तद्वत् किंचित् स्वार्थपरित्यागे कारणं दृश्यते । तथा च नाडीखण्डे—'अथ यत्रैतदस्माच्छरीरादुत्क्रामति अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' (छा. उ. ८।६।५) इति मुमुक्षोरादित्यप्राप्तिरभिहिता । तस्मात् प्रसिद्धमेव तेजो ज्योतिश्शब्दमिति ।

एवं प्राप्ते ब्रूमः-परमेव ब्रह्म ज्योतिश्शब्दम् । कस्मात् ? दर्शनात् ।

---

ज्योतिश्चरणाभिधानादित्यनेन पौनरुक्त्यमाशङ्क्याह—**ज्योतिश्चरणाभिधानादित्यत्र हीति । प्रकरणादिति ।** प्रकृतत्रिपाद्ब्रह्मपरामर्शकयत्पदसामानाधिकरण्यादित्यर्थः । **तथा च नाडीखण्ड इति ।** 'अथ या एता हृदयस्य नाड्यः' इत्यारभ्य आम्नाते दहरविद्याप्रकरणान्तर्गते, 'अथ यत्रैतत्' इत्यादिवाक्यम् । तत्र शरीरादुत्क्रमणमुक्त्वा रश्मिभिरूर्ध्वगतस्य 'स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छति' इत्यादित्यप्राप्तिरभिहिता । सैवेह उत्क्रान्तिरादित्यप्राप्तिश्च 'शरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य' इत्यत्र प्रत्यभिज्ञायते । अतः स्ववाक्यगतसमुत्थानश्रुतिज्योतिश्श्रुतिभ्यां वाक्यान्तरार्थप्रत्यभिज्ञानुसारेण च 'एष सम्प्रसादः' इति वाक्यस्य अर्चिरादिमार्गपर्वभूतादित्यप्रतिपादकत्वात्, तदर्थस्य निर्विशेषप्रकरणे, निर्विशेषविदां 'प्रतिषेधादिति चेन्न शारीरात्' [ब्र. सू. ४. २. १२] इत्यधिकरणे गतिप्रतिषेधस्य वक्ष्यमाणतया अनन्वयात्, उत्कर्ष एवेति पूर्वपक्ष्याशयः ।

अयमत्र सिद्धान्ताशयः—यद्यपि यथाश्रुतार्थस्य वाक्यस्य न प्रकरणे समावेशः, तथापि लक्षणया प्रकरण एव निवेशः स्वीकर्तव्यः । यथाश्रुतार्थमादाय उत्कर्षे उपगम्यमाने सगुणविद्यासूत्कर्षो वक्तव्यः । तथासति वाक्यं व्यर्थमेव स्यात् । पञ्चाग्निविद्यागतस्य 'तद्य इत्थं विदुः ये चेमेऽरण्ये श्रद्धा तप इत्युपासते, तेऽर्चिषमभिसम्भवन्ति' इत्यादिवाक्यस्य 'अनियमस्सर्वासामविरोधश्शब्दानुमानाभ्याम्' [ब्र. सू. ३.३. ३१] इत्यधिकरणे सर्वासु सगुणोपासनासु मार्गप्रापकतायाः वक्ष्यमाणत्वेन, तेनैव सर्वसाधारण्येन सकलपर्वोपेतस्य मार्गस्य प्रापिततया, तदनुक्तस्य पर्वविशेषस्य अनेन वाक्येनाप्रतिपादनात् ।

[1]न च - 'शतं चैका च' इति श्लोके 'तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' इत्यनेन मूर्धन्यनाडीतो निर्गतस्य अमृतत्वमुक्तम्, तत् कथम् - इत्यपेक्षायां, परंज्योतिरुपसम्पद्येत्यनेन परस्य ज्योतिषः—आदित्यस्य समीपे यो ब्रह्मलोकः, तत्र सम्पद्य - स्थित्वा स्वेन - निर्विशेषशुद्धचिदात्मना अवतिष्ठते - इति तयोर्ध्वमायन्निति वाक्यापेक्षितः सविशेषोपासनानां क्रममुक्तिप्रकारः [2]आम्नातः— इति वाच्यम्।

अमृतत्वमेतीत्यत्र अमृतत्वशब्दो हि न मुख्यामृतत्वपरः, अपि तु आभूत-सम्प्लवस्थानगौणामृतत्वपरः। तथा च वक्ष्यति चतुर्थे [3]सूत्रकारः—' अमृतत्वं चानुपोष्य ' इति। न च इदमपि वाक्यं क्रममुक्तिप्रकारं स्पष्टं प्रतिपादयति। आदित्यं प्राप्तस्य स्वेन रूपेणाभिनिष्पत्तिः - इत्येतावन्मात्रप्रतिपादनात्, ' ब्रह्म-लोकं गत्वा निर्विशेषमात्मानं साक्षात्कृत्य' इत्यंशस्याप्रतिपादनात्। अस्ति च तदर्थ-प्रतिपादकं स्पष्टं वचनं तैत्तिरीयके दहरविद्याप्रकरणे —' वेदान्तविज्ञानसुनिश्चि-तार्थाः सन्न्यासयोगाद्यतयश्शुद्धसत्त्वाः। ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे ' इति। अत्र ये सन्न्यासयोगाद्यतयश्शुद्धसत्त्वाः, ब्रह्मलोके गत्वा वेदान्तविज्ञानसुनिश्चितार्थाः ते परामृतं प्राप्य परिमुच्यन्ति सर्वे - इत्यन्वयो द्रष्टव्यः।

तथा च उत्कर्षवादिनः ' एष सम्प्रसादः ' इति वाक्यं व्यर्थमेव स्यात्। अतो वैयर्थ्यपरिहाराय प्रकरण एव निवेशमुपगम्य लक्षणया तदनुगुण एवार्थो वर्णनीयः, वरं हि वैयर्थ्यापेक्षया लक्षणाश्रयणमिति। तथा च, एष संप्रसादः अस्माच्छरीरात् समुत्थाय - वेदान्तश्रवणमननसंपादितेन विवेकज्ञानेन देहात्माभि-मानपरित्यागरूपं देहात्समुत्थानं कृत्वा परं ज्योतिः - परमात्मरूपं उपसम्पद्य-साक्षात्कृत्य स्वेन रूपेण निर्विशेषचिदात्मना अभिनिष्पद्यते—इत्येवंरूपार्थो

---

1. न चेत्यादि यद्यपि दहरविद्याप्रकरणेऽपि ' एष सम्प्रसादः' इत्यादि वाक्यं अस्ति, तथाऽपि तद्वाक्यं सुषुप्तजीवाधारत्वं परमात्मन आचष्टे, इति ' अन्यार्थश्च परामर्शः' इति दहराधिकरणगुणसूत्रेण व्याख्यातम्, इत्यतः अपेक्षितक्रममुक्तिप्रकारोपपादनाय इदं प्रजापतिवाक्यं उत्कष्टव्यं इति शङ्कस्य आशयः।

2. आ. आम्नायते 3. मु. ' सूत्रकारः ' नास्ति

तस्य हि इह प्रकरणे वक्तव्यत्वेनानुवृत्तिर्दृश्यते, 'य आत्माऽपहतपाप्मा' (छा.उ.८।७।१) इति अपहतपाप्मत्वादिगुणकस्यात्मनः प्रकरणादावन्वेष्टव्यत्वेन विजिज्ञासितव्यत्वेन च प्रतिज्ञानात्, 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' (छा.उ. ८।९।३) इति चानुसंधानात्। 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (छा. उ. ८।१२।१) इति च अशरीरतायै ज्योतिस्संपत्तेरस्याभिधानात्, ब्रह्मभावाच्चान्यत्र अशरीरतानुपपत्तेः।

---

द्रष्टव्यः। न च–तथासति 'अशरीरो वायुरभ्रं विद्युत्स्तनयित्नुः अशरीराण्येतानि तद्यथैतान्यमुष्मादाकाशात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यन्ते' इति दृष्टान्तवाक्ये परंज्योतिरुपसम्पद्येति आदित्यप्राप्तिर्विवक्षिता, इह तु एवमेवैष सम्प्रसादः परंज्योतिरिति दार्ष्टान्तिके ब्रह्मसाक्षात्कारो विवक्षितः, इति दृष्टान्तदार्ष्टान्तिकयोः वैरूप्यं स्यात् - इति वाच्यम्। येन हि, शरीरात्समुत्थायेत्यत्र उत्क्रान्ति विवक्षितेत्युच्यते, तस्यापि अमुष्मादाकाशात्समुत्थायेत्यत्र वैरूप्यम्। वाय्वादीनां हि आकाशात् समुत्थानं न तत उत्क्रान्तिरूपम्, तेषां सदा आकाशेन संसृष्टत्वात्। किं तु, निदाघे [1]निलीनानि, पुरोवातादीनि आकाशात् विविच्य न गृह्यन्ते, प्रावृडारम्भे तु किञ्चिद्विविच्य गृह्यन्त इति, तदेव तेषां आकाशात् समुत्थानम्। [अथ–] अर्थतो वैरूप्ये सत्यपि [2]'सकलकलं पुरमेतत् जातं सम्प्रति सुधांशुबिम्बमिव' इत्यादाविव शब्दैकरूप्यात् समुत्थायेतिशब्दस्य उभयत्र दृष्टान्ते दार्ष्टान्तिके च प्रयोगात् सारूप्यमुपेयते, तथा सति परंज्योतिरुपसम्पद्येत्यत्रापि तथास्त्विति न काचिदनुपपत्तिः।

सूत्रे दर्शनादित्यस्य निर्विशेषप्रकरणानुवृत्तेर्दर्शनादित्यर्थमभिप्रेत्य, 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' इत्यत्र प्रजापतिविद्याया निर्विशेषपरतायाः स्थापितत्वात् इह तमंशं सिद्धवत्कृत्य, एषसम्प्रसाद इति वाक्ये तस्यानुवृत्तिं दर्शयति— यआत्मापहतपाप्मेत्यादिना।

---

1. आ. लीनानि

2. सकलकलमिति पुरे कलकलशब्दसहितं इति, चन्द्रबिम्बे सम्पूर्णकलं इति, अर्थवैरूप्यम्।

'परं ज्योतिः' 'स उत्तमः पुरुषः' (छा. उ.८।१२।३) इति च विशेषणात्।

यत्तूक्तं मुमुक्षोरादित्यप्राप्तिरभिहितेति। नासौ आत्यन्तिको मोक्षः, गत्युत्क्रान्तिसंबन्धात्। न ह्यात्यन्तिके मोक्षे गत्युत्क्रान्ती स्त इति वक्ष्यामः ॥ ४० ॥

१२ अर्थान्तरत्वव्यपदेशाधिकरणम्।

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥

'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा' (छा. उ. ८।१४।१) इति श्रूयते। तत् किं आकाश-

---

स उत्तमः पुरुष इति च विशेषणादिति। यद्यपि 'स उत्तमः पुरुषः' इत्यत्र तच्छब्दः, यः 'स्वेन रूपेणाभिनिष्पद्यते' इति मुक्तजीवो निरूपितः तस्य परामर्शकः, सतत्रपर्येतीत्यादिना मुक्तधर्माणामाम्नानात् ज्योतिरपेक्ष्यात्यन्तसन्निहितत्वाच्च; तथाऽपि इह उत्तमपदश्रवणेन तत्समानार्थकपरशब्दस्य तत्र श्रवणात् ज्योतिष एव प्रत्यभिज्ञानात् तस्य परामर्शकः। जक्षणादयश्च नेह स्वरूपेण विवक्षिताः। 'नोपजनं स्मरन्निदं शरीरं' इति निषेधात्, निर्विशेषमुक्ते तदसम्भवाच्च। किं तु सर्वात्मताद्योतनाय। तदर्थश्च ब्रह्मण्यपि सम्भवतीति भावः।

इह ज्योतिषः परत्वं ब्रह्मत्वे लिङ्गमस्पष्टम्, नक्षत्राद्यपेक्षया परत्वस्य आदित्येऽपि सम्भवात्, तत् प्रकरणानुसारेणोन्मेषणीयमिति अस्पष्टता ॥४०॥

इति ज्योतिर्दर्शनाधिकरणम् ॥ ११ ॥

पूर्वस्मिन्नधिकरणे [1]ज्योतिश्श्रुतेः, प्रकरणादुत्कर्षे आनर्थक्यापातात् प्रकरणे च यथाश्रुताया निवेशासम्भवात्, ब्रह्मपरत्वमास्थितम्। इह तु न प्रकरणादुत्कर्ष उच्यते, अपि तु 'यदन्तरा' इत्युत्तरवाक्येन ब्रह्मोपासनं विधीयते, तदङ्गतया नामरूपनिर्वोढृतया भूताकाशोपासनं विधीयत इति, प्रकरणे तस्या यथाश्रुतत्वे न काचिदनुपपत्तिः - इति [2]सङ्गतिः।

---

1. ज्योतिश्श्रुतेः ज्योतिःपदघटितायाः 'एष सम्प्रसादः' इत्यादिश्रुतेः।
2. सङ्गतिः - प्रत्युदाहरणसङ्गतिः।

**शब्दं परं ब्रह्म किं वा प्रसिद्धमेव भूताकाशमिति विचारे - 'भूतपरिग्रहो युक्तः, आकाशशब्दस्य तस्मिन् रूढत्वात्, नामरूपनिर्वहणस्य च अवकाशदानद्वारेण तस्मिन् योजयितुं शक्यत्वात्, स्रष्टृत्वादेश्च स्पष्टस्य ब्रह्मलिङ्गस्य अश्रवणात्' इत्येवं प्राप्ते-**

---

ननु - आकाशस्तल्लिङ्गादित्यत्र आकाशपदस्य ब्रह्मपरत्वं व्यवस्थापितं 'सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते' [1]इत्यादिब्रह्मलिङ्गात्। इहापि नामरूपयोर्निर्वहितेति नामरूपकर्तृत्वमवगम्यते। 'ते यदन्तरा तद्ब्रह्म' इत्युत्तरवाक्ये च ब्रह्मश्रुत्यादयः। अतः तेन गतार्थमिदम् - इत्यत आह—**नामरूपनिर्वहणस्य चेति**।

अयं भावः—निर्वहणं न कर्तृत्वम्। उपद्रवादिनिवर्तनेन देशस्थितिहेतौ देशानुत्पादकेऽपि राज्ञि 'देशनिर्वाहकः' इति प्रयोगात्, पटोत्पादकेऽपि[2] तन्तुवाये तदपरिपालके तदप्रयोगाच्च। अतः परिपालनमेव निर्वहणम्। तच्च आकाशेऽप्यवकाशदानेन सम्भवति। अतो न निर्वहितेत्यस्य ब्रह्मलिङ्गसमर्पकता।

तेयदन्तरेति वाक्यं तु ब्रह्मविषयं, न आकाशविषयम्। न च - तेयदन्तरेत्यत्र यत्पदेन प्रकृताकाशं परामृश्य तत्र ब्रह्मादिशब्दप्रयोगात् उभयोरेकविषयतेति - शङ्कनीयम्। [3]तत्पदस्य तदमृतमित्यत्र तत्पदप्रतिनिर्दिष्टवस्तुपरत्वेन प्रकृतपरामर्शकताया अभावात्। स एव हि यच्छब्दः प्रकृतपरामर्शी, यः तत्पदेन प्रतिनिर्देशं नापेक्षते। यथा 'देवदत्तः स्नाति यस्त्वया आहूयते' इति उत्तरवाक्ये श्रूयते। पूर्ववाक्यनिर्दिष्टस्तु प्रतिनिर्देशकतदादिपदेनैव निराकाङ्क्षो भवति। परं तु येन रूपेण यत्पदसमभिव्याहृतं वाक्यं कञ्चिदर्थं प्रतिपादयति तस्य प्रसिद्धिः पूर्वमपेक्षिता। अत एव 'अथ यदतः परः' इत्यत्र विद्यमानस्य यत्पदस्य द्युसम्बन्धित्वेन ज्योतिषः प्रसिद्ध्यपेक्षस्य पूर्ववाक्यार्थपरामर्शकता उपेयते, न तु प्रकृतपरामर्शकत्वमिति निर्बन्धेनैव। प्रकृते तु 'ते-नामरूपे

---

1. मु॰ इति लिङ्गात्

2. मु॰ 'अपि' नास्ति

3. **तत्पदस्य**—तस्य पदस्य, यत्पदस्येत्यर्थः। मु॰ यत्पदस्य तदमृतमित्यत्र प्रतिनिर्दिष्टवस्तुनिर्देशकतत्पदेनैव निराकाङ्क्षत्वात्।

यदन्तरा' इति वाक्येन नामरूपास्पृष्टत्वं प्रतिपाद्यते । न च तेन रूपेण पूर्ववाक्ये प्रसिद्धिरस्ति । नामरूपनिर्वाहकत्वस्यैव पूर्ववाक्ये प्रसिद्धेः । तेयदन्तरेतिवाक्येन [1]नामरूपास्पृष्टत्वेन प्रसिद्धौ अपेक्षितायां पूर्ववाक्यस्य तदशक्तत्वात् अस्थूलादिवाक्यमेव तथा आस्थेयम् । अतो न आकाशवाक्यस्य ब्रह्मवाक्यस्य च [2]यत्पर्यालोचनया एकार्थता, प्रत्युत तयोर्भिन्नार्थतैव प्रतीयते । यथा 'एतयोर्ग्रामयोर्निर्वाहको देवदत्तः, ताभ्यामस्पृष्टा तु या सा [3]मैत्री' इत्यत्र भिन्नधर्मनिर्देशात् भिन्नलिङ्गनिर्देशाच्च अर्थभेदः प्रतीयते, एवं अत्रापि 'नामरूपयोर्निर्वाहक आकाशः, ताभ्यामस्पृष्टं तु ब्रह्म' इति भिन्नलिङ्गधर्मनिर्देशात् भेद एव स्वरसतः प्रतीयते ।

अपि च, आकाशोवैनामेतिनिपातावगता प्रसिद्धिः इह आकाशपदार्थेनान्विता । तथा च 'प्रसिद्धो य आकाशः' इत्यर्थो लभ्यते । यथा च भूताकाशस्य लोकवेदप्रसिद्धिः नैवं आत्माकाशस्य लोकवेदप्रसिद्धिः, अपि तु वैदिक्येव । तथा च आत्मग्रहणे वैनामेतिनिपातार्थोऽपि सङ्कोचनीयस्स्यात् । [4]न चैतत् असङ्कोचसम्भवे न्याय्यम् ।

न च तथासति 'सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते' इति वाक्येऽपि 'ह वा' इति निपातश्रवणात् तत्रापि ब्रह्मनिर्णयो न स्यादिति वाच्यम् । सर्वाणीति वाक्ये 'ह वा' इति पदद्योतिता प्रसिद्धिः न आकाशप्रातिपदिकार्थेऽन्वेति । 'आकाशो वै नाम' इत्यत्रेव प्रथमान्ततया श्रवणाभावेन आकाशप्रातिपदिकार्थप्राधान्याभावात् । किं तु 'आकाशादेव समुत्पद्यन्ते' इति पञ्चमीश्रवणेन विभक्त्यर्थकारणतायाः प्राधान्यात् तत्रैवान्वेति । तस्याश्च सर्वभूतकार्यतानिरूपिताया लोकप्रसिद्धत्वाभावेन श्रौतप्रसिद्धेरेव अगत्या आश्रयणीयत्वात् न तद्वाक्यतुल्यता अस्य वाक्यस्य ।

तदिदं[5] वक्ष्यति - आकाशस्तल्लिङ्गादित्यस्यैवायं प्रपञ्चः - इति ।

---

1. मु. नामास्पृष्टत्वेन
2. **यत्पर्यालोचनया** यत्पदपर्यालोचनया। तथैव आ. पाठः
3. **मैत्री** - मित्रसम्बन्धिनी 4. आ. न चैवं तदसङ्कोच°
5. **तदिदं वक्ष्यतीति** तदिदं - एतदधिकरणविषयवाक्यस्य 'आकाशस्तल्लिङ्गात्' इत्यधिकरणविषयवाक्यतौल्यं पृथगधिकरणारम्भप्रयोजकमुक्तविशेषश्च - वक्ष्यति - प्रपञ्चपदेन सूचयिष्यतीत्यर्थः ।

इदमुच्यते—परमेव ब्रह्म इह आकाशशब्दं भवितुमर्हति । कस्मात्? अर्थान्तरत्वादिव्यपदेशात् । 'ते यदन्तरा तद्ब्रह्म' इति हि नामरूपाभ्या-

---

ते यदन्तरा तद्ब्रह्मेति हि नामरूपाभ्यामर्थान्तरभूतमाकाशं व्यपदिशतीति । 'ते नामरूपे अन्तरा यत्', इति योजनायां नामरूपमध्यस्थत्वं ब्रह्मणो दर्शितं भवति । तच्च निरवधिके ब्रह्मणि यथाश्रुतमघटमानं 'यथा मध्यस्थः [1][ता][द्वा]भ्यामसंस्पृष्टो भवति, तथा ब्रह्मापि ताभ्यामसंस्पृष्टं' इति प्रतिपादयत् नाम[2]रूपाभ्यां ब्रह्मणः अर्थान्तरत्वं सूचयति । यदि तु यत्पदेन अन्तरापदस्य अव्यवधानात् तदर्थस्यैव अन्तरापदार्थेनान्वयः उपगम्यते, तदा नामरूपे यस्यान्तरा-यदाधारके - सर्वाधारो ब्रह्म-इत्यर्थः पर्यवस्यति । तदापि नामरूपाभ्यामर्थान्तरत्वं ब्रह्मणः सिद्ध्यत्येव ।

न च द्वितीययोजनायां [3]अवधिद्वयनिर्देशाभावात् अन्तरापदमसङ्गतं स्यादिति वाच्यम् । 'ततः खड्गं समुद्यम्य रावणः क्रूरविग्रहः । वैदेहीमन्तरा क्रुद्धः क्षणमूचे विनिश्वसन् ॥' इति भट्टिकाव्ये अवधिद्वयनिर्देशं विनैव अन्तरा-पदप्रयोगेण तथा नियमाभावात् ।

ननु - नामरूपाभ्यामर्थान्तरत्वात् आकाशस्य कथं ब्रह्मत्वम्, आकाशे नामरूपाभ्यामर्थान्तरत्वस्याश्रवणात् - इति चेत्—

उच्यते - तेयदन्तरेतिवाक्ये यत्पदस्य प्रकृताकाशपरामर्शकतया तत्रापि तदवगतिसम्भवात् । न च तद्ब्रह्मेति तत्पदेन प्रतिनिर्देशात् प्रकृते न यत्पदस्य प्रकृतपरामर्शकत्वनिर्बन्ध इति वाच्यम् । त्यदादीनां हि सर्वेषां प्रकृतपरामर्श-कत्वमेव स्वरसतः । न तत् यत्पदे सङ्कोचनीयम् । परं तु, यथा यत्पदस्य प्रसिद्धत्वं परामर्शनीये अधिकमपेक्षितं एवं पूर्ववाक्यगतस्य तत्पदादिना प्रति-निर्देशोऽप्यधिकोऽपेक्षितः, न तु तावता प्रकृतपरामर्शकता परित्यक्तव्या । दृश्यते

---

1. नामासंस्पृष्टो

2. मु. रूपाभ्यां अर्थान्तरत्वं ब्रह्मणः साधयत्येव । न च

3. अवधिद्वयनिर्देशाभावादिति दृश्यते हि अन्तरापदयोगे अवधिद्वयनिर्देशः 'त्वां च मां च अन्तरा कमण्डलुः' इत्यादौ इति भावः ।

**मर्थान्तरभूतं आकाशं व्यपदिशति। न च ब्रह्मणोऽन्यत् नामरूपाभ्यामर्थान्तरं संभवति, सर्वस्य विकारजातस्य नामरूपाभ्यामेव व्याकृतत्वात्। नामरूपयोरपि निर्वहणं निरङ्कुशं न ब्रह्मणोऽन्यत्र संभवति। 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' (छा.उ.६।३।२)**

---

हि, अदसो देशकालाभ्यां विप्रकृष्टत्वम्, इदमः सन्निहितत्वम्, एतदः अपरोक्षत्वं, तदस्तु परोक्षत्वम् - इत्येवमाद्यसाधारणप्रयोगोपाध्यपेक्षत्वेऽपि, परामर्शनीये सर्वेषां प्रकृतत्वापेक्षा। तथा च यत्पदेन आकाशपरामर्शे तदर्थस्यापि नामरूपाभ्यामर्थान्तरता प्रदर्शितैव भवति। तथा च आकाशपदं ब्रह्मपरमेव उक्तलिङ्गात् सिध्यति।

तदाह—**न च ब्रह्मणोऽन्यदिति**। न च तथासति आकाशप्रातिपदिकार्थान्वयिनि वैनामेतिनिपातद्योतिता प्रसिद्धिः विरुध्यत इति वाच्यम्। 'देवदत्तः खलु पण्डितः' इत्यादौ खलुशब्दद्योतितायाः प्रसिद्धेरिव विशिष्ट एव अन्वयोपपत्तेः। खलुशब्दद्योतिता प्रसिद्धिः विधेयपाण्डित्यविशिष्ट [1]एव देवदत्ते अन्वेति, न तु केवले। तथैवान्वयबोधात्। न हि 'देवदत्तः खलु पण्डितः' इत्यत्र 'प्रसिद्धो यो देवदत्तः स पण्डितः' इत्यन्वयबोधोऽस्ति, अपि तु 'पाण्डित्यशालितया देवदत्तः प्रसिद्धः' इत्येव। तथा च प्रसिद्धिद्योतकानां निपातानां विधेयधर्मान्वयिस्वार्थसमर्पकताया व्युत्पन्नत्वात् इहापि वैनामेतिनिपातद्योतिता प्रसिद्धिःविधेयनामरूपनिर्वाहकत्वविशिष्टाकाशान्वयिन्येव, न तु केवलाकाशप्रातिपदिकार्थान्वयिनीति न तद्बलात् भूताकाशग्रहः।

नामरूपनिर्वाहकता तु न भूताकाशस्येत्याह—**नामरूपयोरपि निर्वहणमिति**। यद्यपि स्थितिहेतुः निर्वाहको भवति, तथापि न अचेतने आधारतया स्थितिहेतौ निर्वाहकपदप्रयोगः। घटाधारे भूतले घटनिर्वाहकत्वाप्रसिद्धेः। अपि तु, यश्चेतनः इष्टप्रापणेन अनिष्टनिवर्तनेन च नियच्छति स एव निर्वाहक इत्युच्यते, न तु तथा भूताकाशः इति भावः। ननु-तथापि इन्द्रादिभौतिकविषयनामरूपनिर्वाहकता हिरण्यगर्भस्यापि सम्भवति, 'सर्वेषां तु स नामानि रूपाणि च पृथक्पृथक्। वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे॥' इति

---

1. मु. 'एव' नास्ति।

इत्यादिब्रह्मकर्तृकत्वश्रवणात् । ननु जीवस्यापि प्रत्यक्षं नामरूपविषयं निर्वोढृत्वमस्ति । बाढमस्ति । अभेदस्त्विह विवक्षितः । नामरूपनिर्वहणाभिधानादेव च स्रष्टृत्वादि ब्रह्मलिङ्गं अभिहितं भवति । 'तद्ब्रह्म तदमृतं स आत्मा' (छा. उ. ८।१४) इति च ब्रह्मवादस्य लिङ्गानि । 'आकाशस्तल्लिङ्गात्' (ब्र. सू. १।१।२२) इत्यस्यैवायं प्रपञ्चः ॥ ४१ ॥

---

तस्यापि तदवगमात्, अत उक्तं—**निरङ्कुशमिति** । निरङ्कुशत्वं-अनन्याधीनत्वं असङ्कुचितनामरूपविषयत्वं च । तथा च, 'यस्यां क्रियायां यश्चेतनः प्रथमावयवमारभ्य फलनिष्पत्तिपर्यन्तं कर्तृत्वेनानुस्यूतो भवति स तस्या निर्वाहकः' इत्युक्तलक्षणं निर्वाहकत्वं हिरण्यगर्भस्य नामरूपोत्पत्तौ उदाहृतवचनपर्यालोचनया । 'हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ।' इति वचनपर्यालोचनया स्थितावपि भौतिकनामरूपयोः तदस्ति । तथापि, न तस्य सर्वनामरूपगोचरं तत्, नाप्यनन्याधीनम् । ईश्वरतन्त्रत्वात् । अतो नेह स विवक्षितः ।

ननु - 'अनेन जीवेन' इति श्रुतौ जीवात्मना स्थितस्य परमात्मनो नामरूपव्याकर्तृता अवगम्यते, तथा च जीवस्यैव तत् पर्यवस्यति - इति शङ्कते— **ननु जीवस्यापीति** । अत्र हि जीवपदं सर्वजीवविषयम् । न च सर्वेषां जीवानां नामरूपव्याकरणं त्रिवृत्करणं च सम्भवति । तथाचात्र जीवात्मनानुप्रवेशानन्तरं [1]ऐश्वरेणैव रूपेण नामरूपव्याकरणादिकं विवक्षितम् । नामरूपव्याकरणादेर्जीवरूपप्रवेशानन्तरत्वोक्तिस्तु [2]'तद्भोगार्थत्वं नामरूपव्याकरणस्य' इति द्योतनाय, न तु 'तेनैवरूपेण कर्तृत्वम्' इति द्योतनाय-इत्यभिप्रेत्य परिहरति—**बाढमित्यादिना** ।

यच्चोक्तं 'नामरूपयोर्निर्वहिता आकाशः, तदसंस्पृष्टं तु ब्रह्म' इत्येवंनिर्देशः उभयोर्भेदे लिङ्गम्, तत्तु, अभेदसमर्पकेण यत्पदेन नामरूपनिर्वहितृत्वस्य ब्रह्मलिङ्गत्वव्यवस्थापनेन च बाध्यते । भेदाभेदलिङ्गयोर्मध्ये अभेदलिङ्गस्यैव

---

1. मु. ऐश्वरेण रूपेण व्याकरणा°

2. मु. तद्भोगार्थत्वान्नाम°

## १३ सुषुप्त्युत्क्रान्त्यधिकरणम्

# सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥

**व्यपदेशादित्यनुवर्तते ।**

**बृहदारण्यके षष्ठे प्रपाठके 'कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' (बृ.उ.४।३।७) इत्युपक्रम्य भूयान् आत्मविषयः प्रपञ्चः कृतः । तत् किं संसारिस्वरूपमात्रान्वाख्यानपरं वाक्यं उत असंसारिस्वरूपप्रतिपादनपरं इति संशयः । किं तावत् प्राप्तम् । संसारिस्वरूपमात्रविषयमेवेति ।**

---

प्रबलत्वात् । अभेदस्य स्वरूपतया धर्मिप्रतियोग्युपस्थितिसापेक्षात् भेदात् लघूपस्थितिकत्वात् । नामरूपनिर्वाहकत्वं च आकाशस्य उत्तरवाक्यपर्यालोचनां विनैव ब्रह्मत्वमवगमयतीति वाक्यद्वयपर्यालोचनासापेक्षात् निर्देशविशेषरूपात् भेदलिङ्गात् प्रबलमिति ।

अत्र-उक्तनिर्देशविशेषरूपात् भेदलिङ्गात् आकाशे ब्रह्मलिङ्गमभिभूतमिति अस्पष्टब्रह्मलिङ्गता ॥ ४१ ॥

इति अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ १२ ॥

**व्यपदेशादित्यनुवर्तत इति ।** आकाशोऽर्थान्तरत्वादिव्यपदेशादितिपूर्वसूत्रात् इति शेषः ।

**संसारिस्वरूपमात्रविषयमेवेतीति ।**

ननु - उपक्रमे 'किञ्ज्योतिरेवायं पुरुषः' इति जनकस्य याज्ञवल्क्यं प्रति प्रश्ने, जीवस्य व्यवहारसाधनीभूतं ज्योतिः किम् - इत्यर्थो विवक्षितः । तदनन्तरं च याज्ञवल्क्येन आदित्यचन्द्राग्निवाचां मध्ये पूर्वपूर्वाभावे उत्तरोत्तरं व्यवहारसाधनम् - इत्युत्तरिते, वाचोऽप्यस्तमये किञ्ज्योतिरिति पृष्टे आत्मैवास्य ज्योतिरित्युत्तरितम् । तत्र आत्मपदं न जीवपरम्, अस्येति जीवस्य पृथङ्निर्देशात् । अपि तु परमात्मपरम् । अत एव तदनन्तरं कतमआत्मेति प्रश्नोऽपि सङ्गच्छते । आत्मपदस्य जीवपरत्वे तु तस्य अहमितिप्रत्यक्षसिद्धस्य प्रष्टव्यतानुपपत्तिः । अत एव मध्येऽपि 'स्वप्नेन शारीरमभिप्रहत्य असुप्तः सुप्तानभिचाकशीति' इति

**कुतः । उपक्रमोपसंहाराभ्याम् । उपक्रमे 'योऽयं विज्ञानमयः प्राणेषु' इति शारीरलिङ्गात्, उपसंहारे च 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' (बृ. उ. ४।४।२२) इति तदपरित्यागात्, मध्येऽपि बुद्धान्ताद्यवस्थोपन्यासेन तस्यैव प्रपञ्चनात् - इति ।**

---

शारीरपदोक्तस्य जीवस्य स्वप्नेनाभिप्रहन्ता परमात्मा पृथङ्निर्दिश्यते। अतः उपसंहारेऽपि 'स वा एष महानज आत्मा' इत्यादिकं परमेश्वरपरमेव भविष्यति। एवं च 'सर्वस्य वशी सर्वस्येशानः' इत्यादिना परमात्मधर्मकीर्तनमपि प्रकृतात्मन्युपपद्यते। अथोच्येत—'स समानस्सन् उभौलोकावनुसञ्चरति ध्यायतीव लेलायतीव' इति जीवधर्माः कीर्त्यन्ते। अत्र सइति पदं प्रकृतात्मपरम्। समान इत्यत्र 'केन समानः' इत्यपेक्षायां, विज्ञानमयःप्राणेष्विति पूर्ववाक्यनिर्दिष्टयोः विज्ञानप्राणयोः सम्बन्धे, ताभ्यां समान इति निश्चीयते। तथा च, विज्ञानाद्युपाधिकं यस्य लोकसञ्चारादिकं स जीव एव इह वाक्ये प्रतिपाद्यते। उत्तरत्र च 'स वा अयं पुरुषो जायमानः' इत्यादिना जन्ममरणादिकीर्तनं 'स वा एष एतस्मिन् सम्प्रसादे रत्वा चरित्वा' 'स वा एष एतस्मिन् स्वप्ने रत्वा चरित्वा' 'स वा एष एतस्मिन् बुद्धान्ते रत्वा चरित्वा' इति वाक्यैः तदेतत्पदाभ्यां प्रकृतमात्मानं परामृश्य, तत्र सुषुप्तिस्वप्नजाग्रदवस्थानां प्रतिपादनं च, जीवपक्ष एव सङ्गच्छते। अतो वाक्यशेषपर्यालोचनया अयमात्मशब्दो जीवपर एव स्यात् - इति; न स्यात् इति प्रतिपादयामः—उपक्रमानुसारेण हि उपसंहारो व्याख्येयः। तथा च, उपक्रमे जीवातिरिक्तात्मपरत्वे निर्धारिते मध्ये विद्यमानानां जीवलिङ्गानां सर्वान्तर्यामिणि परमात्मन्येव यथाकथञ्चिन्नयनोपपत्तिः। एवं सर्वस्यवशीत्यादय उपसंहारगताः परमात्मधर्मा अपि समञ्जसा भवन्ति। तस्मात् उपक्रमोपसंहारपरामर्शैः परमात्मैवात्र प्रतिपाद्यत इति चेत्—

अत्रोच्यते - 'आत्मैवास्यज्योतिः' इत्युपक्रमो न जीवातिरिक्तपरमात्मपरः। 'आत्मैव ह्यात्मनो बन्धुः आत्मैव रिपुरात्मनः। बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः॥' इत्यादौ अभेदेऽप्येतादृशसम्बन्धनिर्देशात्। तथा च उभयथासम्भवत उपक्रमस्य उत्तरत्र जीवधर्मकीर्तनानुसारेण जीवपरतैवाङ्गीकर्तव्या। अपि च, आत्मैवास्यज्योतिर्भवतीत्यस्योपसंहारे 'अत्रायं पुरुषः स्वयं ज्योतिर्भवति'

इत्युक्तम्। तत्र स्वयमितिपदं पुरुषपरमेव, तथैव व्युत्पत्तेः। न हि 'देवदत्तेन स्वयं गतं' इत्यादौ देवदत्तादन्योऽर्थः प्रतीयते। अतो न उपक्रमो जीवान्यपर इति सम्भवति।

कतम आत्मेति प्रश्नस्यापि न जीवविषयत्वे अनुपपत्तिः। अहमित्येवंरूपेण प्रसिद्धस्यापि देहादिव्यतिरिक्ततया निर्णयार्थं प्रश्नोपपत्तेः। अत एव 'कतमः' इति पदं प्रयुक्तम्। तस्य ह्ययमर्थः—अहमित्येवं देहप्राणमनआदयो बहवो भासन्ते, [1]एतेषां मध्ये ज्योतिस्स्वरूप आत्मा कः–इति। तत्रोत्तरं योऽयंविज्ञानमयःप्राणेष्विति। अत्र विज्ञानमय इति क्षणिकविज्ञानव्यतिरेको दर्शितः-विज्ञानविशिष्टः, न तु विज्ञानमेव। प्राणेष्विति सामीपिकाधारत्वेन प्राणानां निरूपणात् तदतिरेको दर्शितः। हृदीति मनोव्यतिरेकोपपादनम्। अन्तरिति बाह्यशरीरादिव्यतिरेकः। तादृश आत्मा ज्योतिस्स्वरूप इति तस्य प्रकाशान्तरनिरपेक्षता प्रतिपादिता। पुरुष इत्यनेन 'किंज्योतिरेवायं पुरुषः' इति ज्योतिःप्रतिसम्बन्धित्वेन निर्दिष्टात् पुरुषात् अभेदः सूचितः। अतः उपक्रमस्तावत् स्वारस्येन जीवपर एव प्रतीयते। यस्य हि देहाद्यव्यतिरेको गृहीतः तस्यैव तद्व्यतिरेकः प्रतिपादनीयः।

'स्वप्नेन शारीरमभिप्रहत्य' इत्यत्रापि [2]शरीराभिप्रहन्ता जीव एव प्रतिपाद्यते। 'शुक्रमादाय पुनरेति स्थानं' इति वाक्यशेषात्। तत्र शुक्रपदं प्रकाशसाधनेन्द्रियगणपरम्। तथा च, स्वप्नारम्भे येभ्यः स्थानेभ्यः इन्द्रियाण्याकृष्टानि तान्यादाय जाग्रदारम्भे पुनः तत्स्थानमेतीति तदर्थः। न चैतत् परमात्मन्याञ्जसम्। जीवस्यैव च 'स यत्र प्रस्वपिति अस्य लोकस्य सर्वावतो मात्रामुपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति' इति विहन्तृत्वमाम्नातम्। [3]तस्य ह्ययमर्थः—अस्य लोकस्य-शरीरस्य, सर्वावतः-सर्वभोगपालकस्य-तदुपयोगिन इति यावत्, मात्रां-एकदेशमिन्द्रियादिकं उपादाय, स्थूलशरीरं जाग्रदुपयुक्तं स्वयं विहत्य, स्वप्नशरीरं स्वयं निर्माय, स्वेन भासा - स्वीयेन[4]भासा जाग्रद्वासनारूपेण, स्वेन ज्योतिषा

1. मु· तेषां
2. आ. शारीराभिप्रहन्ता
3. आ, तत्र ह्ययमर्थो विवक्षितः
4. मु. 'भासा' नास्ति

स्वरूपभूतेन सहितः प्रस्वपिति - इति। इदं च वाक्यं [1]स्वपितिलिङ्गात् जीवपरमिति तदनुगुण [2]एवार्थो वर्णनीयः। तथा च, पूर्ववाक्ये जीवस्यैव शरीर-हन्तृत्वेन प्रतिपादनात्, स्वप्नेनशारीरमभिप्रहत्येत्यत्रापि 'तदेते श्लोका भवन्ति' इति पूर्वोक्तार्थे सम्मतित्वेनोपन्यस्ते तत्समानार्थकताया आवश्यकत्वात्, जीवपरतैव आस्थातुमुचिता। तथा च शारीरपदं शरीरपरम्। जीवस्य स्वप्नदशायां शरीर-हन्तृत्वं नाम तस्यां दशायां तेन उपभोगाभाव एव। तथा च, उत्तरश्लोकेऽपि जीव एव कीर्त्यते 'प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायाद-मृतश्चरित्वा। स ईयतेऽमृतो यत्र कामं हिरण्मयः पुरुष एकहंसः' इत्यादौ। अतो मध्ये परामर्शोऽपि जीवपरः।

पूर्वं यथोपक्रान्तो जीवो देहादिव्यतिरिक्ततया, [3]तथैव उत्तरत्रोपसंह्रियते 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' इति। अतः उपक्रमोप-संहारपरामर्शैः जीवपरमेव[4] एतद्वाक्यम्।

ननु - परमेश्वरोऽपि सुषुप्तौ 'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरं' इति, उत्क्रान्तौ च 'प्राज्ञेनात्मनान्वारूढ उत्सर्जन् याति' इति जीव-सम्बन्धितया निरूप्यते। तथा 'सर्वस्य वशी सर्वस्येशानः' इति परमात्मधर्मा भूयांस आम्नायन्ते। तद्विज्ञानार्थतया च 'तमेतं वेदानुवचनेन ब्राह्मणा विवि-दिषन्ति' इत्यादिना वेदानुवचनादीन्याम्नायन्ते। 'अत ऊर्ध्वं विमोक्षायैव ब्रूहि' इति [5]च प्रष्टा जनको मुमुक्षुरवगम्यते। अतः अङ्गुष्ठवाक्यवत् जीवानुवादोऽयं[6] जीवपरमात्मनोरभेदबोधनार्थ इति, परमात्मनो यद् विशुद्धं प्रत्यगभिन्नं स्वरूपं तत्पर एवायं सन्दर्भ इति चेत्—

अत्रोच्यते—जीवातिरिक्ते कस्मिंश्चिदसंसारिणि सिद्धे हि तस्य वशित्वा-दीनि लिङ्गानीति शक्यते वक्तुम्। स एव सिद्धः। न च जन्मादिसूत्रमारभ्य तत्तच्छ्रुत्युदाहरणेन अधिकः परमात्मा व्यवस्थापित इति वाच्यम्। तत्र हि

1. आ. प्रस्वपितीतिलिङ्गात्
2. आ. एव तदर्थो
3. मु. तथोतरत्र
4. मु. 'एव' नास्ति
5. मु. 'च' नास्ति
6. मु. 'अयं' नास्ति

एवं प्राप्ते ब्रूमः—परमेश्वरोपदेशपरमेवेदं वाक्यं, न शारीरमा-

---

जीवातिरिक्तं परमात्मानं सिद्धवत्कृत्य जगत्कारणत्वादिकं तस्यैव धर्म इति व्यवस्थापितम्। तन्न सम्भवति, अतिरिक्तमीश्वरमुपेत्य तस्य जगत्कारणत्वमिति कल्पनायाः गौरवग्रस्तत्वात्, अपि तु क्लृप्तानामेव जीवानां जगत्कारणत्वमात्रं कल्पनीयं लाघवादिति।

अस्तु वा जीवातिरिक्तो व्यवहारतः परमार्थतो जीवस्वरूपभूतः परमेश्वरः[1], तथापि न तत्परं एतद्वाक्यम्। उपक्रमोपसंहारयोः प्राणादिसम्बन्धित्वेन कीर्तितस्य जीवस्य तदभेदबोधनासम्भवात्।

ननु - मध्ये असङ्गत्वादिना जीवः कीर्त्यते 'असङ्गो ह्ययं पुरुषः' इति,

सङ्गित्वेनापि कीर्त्यत एव, जाग्रत्स्वप्नसुषुप्त्याद्यवस्थोपन्यासात्। 'साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेन' इति च। तथा च, संसारित्वासंसारित्ववर्णनयोर्मध्यगतयोः कलहे उपक्रमाद्यनुसारेण संसारित्वनिरूपणानुसारेण असङ्गत्वादिवचनानि व्याख्येयानि। तथा च उपक्रमादिपर्यालोचनया जीवपरत्वे वाक्यस्य स्थिते, औपसंहारिकसर्ववशित्वादिपरमात्मधर्मकीर्तनं जीवे तद्दृष्टिविधानार्थम्। सुषुप्त्युत्क्रान्त्योः परमात्मसम्परिष्वक्तत्वकीर्तनमपि तथोपासनार्थम्। वेदानुवचनादीनां च तत्रैवोपासनायां चित्तशुद्ध्यर्थतयोपयोगो भविष्यति। मोक्षफलकीर्तनमपि 'न लिप्यते कर्मणा पापकेन' इत्यौपसंहारिकपापनिवृत्त्यर्थकमेव भविष्यति। तस्मात् संसारित्वरूपान्वाख्यानपरत्वं युक्तमेव।

अत एव न अङ्गुष्ठाधिकरणेन गतार्थतापि। तत्र एतादृशजीवोपक्रमोपसंहारैकरूप्याभावेन तस्य वाक्यस्य [2]ब्रह्मात्मना जीवोपासनापरत्वानभ्युपगमात्।

आकाशपदस्य नामरूपनिर्वाहकत्वादिप्रबलब्रह्मलिङ्गानुसारेण अस्तु ब्रह्मलक्षकता। अस्य तु वाक्यस्य सविशेषजीवपरतायाः प्रबललिङ्गैरवगतत्वात् न विशुद्धजीवस्वरूपलक्षकता - इति सङ्गतिः।

**परमेश्वरोपदेशपरमेवेदं वाक्यमिति।** अयं भावः—येन हि अनु-

---

1. आ. 'परमेश्वरः' नास्ति 2. आ. ब्रह्मदृष्ट्या

त्रान्वाख्यानपरम्। कस्मात्। सुषुप्तावुत्क्रान्तौ च शारीराद्भेदेन परमेश्वरस्य व्यपदेशात्। सुषुप्तौ तावत् 'अयं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्' (बृ. उ. ४।३।२१) इति शारीराद्भेदेन परमेश्वरं व्यपदिशति। तत्र पुरुषः शारीरः स्यात्, तस्य वेदितृत्वात् बाह्याभ्यन्तरवेदनप्रसङ्गे सति तत्प्रतिषेधसंभवात्। प्राज्ञः परमेश्वरः, सर्वज्ञत्वलक्षणया प्रज्ञया नित्यमवियोगात्। तथा उत्क्रान्तावपि 'अयं शारीर आत्मा प्राज्ञेनात्मनान्वारूढ उत्सर्जन् याति' (बृ. उ. ४।३।३५) इति जीवाद्भेदेन परमेश्वरं व्यपदिशति। तत्रापि शारीरो जीवः स्यात्, शरीरस्वामित्वात्। प्राज्ञस्तु स एव परमेश्वरः। तस्मात् सुषुप्त्युत्क्रान्त्योः भेदेन व्यपदेशात् परमेश्वर एवात्र विवक्षित इति गम्यते।

---

मानेन ईश्वरः प्रसाध्यते तं प्रत्येव 'अतिरिक्तेश्वरकल्पनं गौरवग्रस्तं' इति दूषणं शक्यं वक्तुं, न त्वौपनिषदं प्रति। श्रुतिभिर्हि, जीवानामपि नियामकत्वेन जीवासम्भाव्यमानेक्षणादिपूर्वकस्रष्टृत्वादिना च ईश्वरः प्रतिपाद्यत इति प्राचीनाधिकरणैः निपुणतरं व्यवस्थापितम्। तथा च प्रामाणिकं गौरवं न दोषाय। अस्मिंश्चार्थे 'भेदेन व्यपदेशात्' इति सूत्रांशो योजनीयः - (तत्र) श्रुतिषु संसारिणो जीवात् भेदेन व्यपदेशात् अस्ति परमेश्वरः - इति।

यदि तु-अन्यासूपनिषत्सु ईश्वरप्रतिपादनमस्तु, अथापि प्रकृते ज्योतिर्ब्राह्मणे तत्प्रतिपादनं नास्ति, तथा च ईश्वरस्यैवात्राप्रतिपादनात् तदभेदप्रतिपादनं दूरत एव निरस्तम्-इति-वदेत्, तं प्रति पुनरपि सुषुप्त्युत्क्रान्त्योरितिपदाभ्यां सह भेदेनव्यपदेशादित्यनेनावृत्तेन उत्तरमुच्यते। **परमेश्वरोपदेशपरमित्यादिना** तद्व्याचष्टे।

**अन्वारूढ उत्सर्जन् यातीति।** परमेश्वरेणाधिष्ठितो मरणसमये वेदनावशात् नानाविधान् शब्दान् कुर्वन् यातीत्यर्थः।

'पत्यादिशब्देभ्यः' इति सूत्रेण, 'जीवं प्रस्तुत्य सर्ववशित्वसर्वाधिपतित्वादिकीर्तनात् प्रतीचो ब्रह्माभेदबोधनपरमेतद्वाक्यम्' इति [1]वक्ष्यति। तदुपयोगितया

---

1. मु. प्रतिपाद्यते

यदुक्तम्-आद्यन्तमध्येषु शारीरलिङ्गात् तत्परत्वं अस्य वाक्यस्येति। अत्र ब्रूमः—उपक्रमे तावत् 'योऽयं विज्ञानमयः प्राणेषु' इति न संसारिस्वरूपं विवक्षितं; किं तर्हि ? अनूद्य संसारिस्वरूपं परेण ब्रह्मणा अस्य एकतां विवक्षति । यतः 'ध्यायतीव लेलायतीव' इत्येवमाद्युत्तरग्रन्थप्रवृत्तिः संसारिधर्मनिराकरणपरा लक्ष्यते । तथा उपसंहारेऽपि यथोपक्रममेव उपसंहरति—'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' इति । योऽयं विज्ञानमयः प्राणेषु संसारी लक्ष्यते, स वा एष महानजआत्मा - परमेश्वर एव अस्माभिः प्रतिपादित इत्यर्थः ।

---

प्रथमत एव त्वंपदार्थशोधनपरतामवान्तरवाक्यानां कथयति-अत्रब्रूमइत्यादिना ।

अयं भावः—'कतमआत्मेतिप्रश्नस्तावत् मुमुक्षया जनकस्य' इति तावत् 'अत ऊर्ध्वं विमोक्षायैव ब्रूहि' इति तदीयवचनैरवगम्यते । मोक्षश्च निर्विशेष-प्रत्यगभिन्नब्रह्मज्ञानादेवेति ज्योतिर्ब्राह्मणपूर्वभाविनः कूर्चब्राह्मणात् अवगम्यते । तत्र हि - दक्षिणवामाक्षिगततया इन्धविराट्छब्दोदितौ पुरुषपत्नीभावेन [1]जीवस्य स्थूलसूक्ष्मावस्थौपाधिकभेदौ उपन्यस्य, तस्यैव जीवस्य मूर्तामूर्तब्राह्मणप्रतिपाद्यं अथातआदेशोनेतिनेतीति एतदेव पारमार्थिकंरूपमिति 'स एष नेति नेत्यात्मा अगृह्यो न हि गृह्यते अशीर्यो न हि शीर्यते असङ्गो न हि सज्जते असितो न व्यथते न रिष्यति' इत्युक्त्वा 'अभयं वै जनक प्राप्तोऽसि' इति हि-[2]उक्तम् । श्वेताश्वतरे च 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् । अमृतस्य परं सेतुं दग्धेन्धनमिवानलम् । यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति' इति निर्विशेषपरमात्मविज्ञानादेव मोक्षोऽवधारितः । न च अतऊर्ध्वंविमोक्षायब्रूहीत्यादिवाक्यगतो मोक्षशब्दः पापाभावपरतया सङ्कोचयितुं युक्तः । अभ्यस्तस्य सङ्कोचासहिष्णुत्वात् । 'न लिप्यते कर्मणा पापकेन' इत्युपसंहारस्तु एकदेशद्वारा मोक्षप्रति-पादनपर एव ।

---

1. आ. जीवस्य सूक्ष्मस्थूलावस्थे उपाधिभेदौ उपन्यस्य । मु. सूक्ष्मस्थूलावस्थौपाधि-कभेदौ 2. म. तत्रोक्तम

यस्तु मध्ये बुद्धान्ताद्यवस्थोपन्यासात् संसारिस्वरूपविवक्षां मन्यते, स प्राचीमपि दिशं प्रस्थापितः प्रतीचीमपि दिशं प्रतिष्ठेत। यतो न बुद्धान्ताद्यवस्थोपन्यासेन अवस्थावत्त्वं संसारित्वं वा विवक्षति, किं तर्हि? अवस्थारहितत्वमसंसारित्वं च। कथमेतदवगम्यते? यत् 'अत ऊर्ध्वं विमोक्षायैव ब्रूहि' इति पदे पदे पृच्छति, यच्च 'अनन्वागतस्तेन भवति असङ्गो ह्ययं पुरुषः' (बृ. उ. ४।३।१४, १५) इति पदे पदे प्रतिवक्ति। 'अनन्वागतं पुण्येन अनन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवति' (बृ.उ. ४।३।२२) इति च। तस्मात् असंसारिस्वरूपप्रतिपादनपरमेवैतद्वाक्यमित्यवगन्तव्यम् ॥ ४२ ॥

---

उपक्रमोपसंहारौ तु असङ्गात्मस्वरूपप्रतिपादन एव स्वरसौ।

[1]ज्योतिर्ब्राह्मणं हि 'स एष नेति नेत्यात्मा' इत्यनेन पूर्ववाक्येन यत् संक्षेपेणोक्तं निर्विशेषप्रत्यगभिन्नब्रह्मस्वरूपं तस्यैव विवरणार्थमिति तावत् अवगम्यते, सन्निधानात् असङ्गत्वादिप्रत्यभिज्ञानाच्च।

तत्र, आत्मैवास्यज्योतिरित्यनेन, स्वप्रकाशचिद्रूपब्रह्माभेदोपयोगितया जीवस्य ज्योतिस्स्वरूपता प्रतिपादिता। तेन च, 'अगृह्यो न हि गृह्यते' इत्यविषयता ब्रह्मणः स्वप्रकाशता उपक्षिप्ता पूर्वत्र या सा विशदीकृता।

'अशीर्यो न हि शीर्यते' इत्यनेन शरणयोग्येभ्यः प्राणादिभ्यः सावयवेभ्यो यो व्यतिरेक उपक्षिप्तः तद्विवरणं 'योऽयं विज्ञानमयः प्राणेषु' इत्यादिना कृतम्।

'असङ्गो न हि सज्जते' इत्यनेनोपक्षिप्तस्यासङ्गत्वस्य व्युत्पादनाय, स्वप्नान्ताद्युपन्यासेन 'अवस्थानामागमापायिनीनां सदैकरूपमात्मानं प्रति स्वाभाविकता नास्तीति परमार्थतस्तदसंस्पृष्ट एवात्मा' इति प्रतिपाद्यते। तथा च प्रतिपर्यायं वदति—'स यत् तत्र किञ्चित् पश्यति अनन्वागतस्तेन भवति, असङ्गो ह्ययं पुरुषः' इति।

---

1. उक्तं स्वरसत्वं उपपादयति—ज्योतिर्ब्राह्मणंहीत्यादिना

## पत्यादिशब्देभ्यः ॥ ४३ ॥

इतश्च असंसारिस्वरूपप्रतिपादनपरमेवैतद्वाक्यमित्यवगन्तव्यम् । यत् अस्मिन् वाक्ये पत्यादयः शब्दा असंसारिस्वरूपप्रतिपादनपराः संसारिस्वभावप्रतिषेधनाश्च भवन्ति । 'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः' इत्येवंजातीयका असंसारिस्वरूपप्रतिपादनपराः 'स न साधुना कर्मणा भूयान् नो एव असाधुना कनीयान्' इत्येवंजातीयकाः संसारिस्वभावप्रतिषेधनाः । तस्मात् असंसारी परमेश्वर इहोक्त इत्यवगम्यते ॥ ४३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्यपादशिष्य-
श्रीमच्छङ्करभगवतः कृतौ श्रीमच्छारीरकमीमांसाभाष्ये
प्रथमाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

अस्वाभाविकत्वादेव औपाधिकत्वे संसारित्वस्य सिद्धे, सुषुप्तौ च पूर्वं 'स समानः' इतिवाक्येनोपक्षिप्तस्य उपाधेः लये सिद्धे सति, 'अत्र पिता अपिता भवति' इत्यादिना 'तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवति' इत्यन्तेन वाक्येन विशुद्धता जीवस्य प्रतिपाद्यते । तेन च, 'न व्यथते' इति पूर्वं यत् संक्षेपेणोक्तं तत् विवृतं भवति ।

'न रिष्यति' इत्यनेन यः प्रतीचो नाशाभाव उक्तः, स तु 'स वा अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः पाप्मभिस्संसृज्यते स उत्क्रामन् म्रियमाणः पाप्मनो विजहाति' इत्यनेन, 'देहसंयोगवियोगावेव आत्मनो जन्ममरणे, न त्वभूतप्रादुर्भावस्वरूपध्वंसरूपे' इति व्युत्पादयता, विशदीक्रियते ।

'असितः' इत्यनेन यत् बन्धराहित्यमुक्तं तत् 'एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयान्' इत्यादिवाक्यैः बन्धमूलपुण्यपापासंसर्गं वदद्भिः विशदीक्रियते ।

अतः संक्षेपविस्तराभ्यां सर्वोऽप्ययं सन्दर्भः विशुद्धप्रत्यक्स्वरूपप्रतिपादनपूर्वकं तस्य परामेदबोधनार्थमेव प्रवृत्त इत्यवसीयते ।

तथा चोपसंहृतं—'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशः तस्मिन् शेते, सर्वस्य वशी-सर्वनियमनसामर्थ्यवान्, सर्वस्येशानः-सर्वनियामकः, सर्वस्याधिपतिः—सर्वस्यापि कर्मोचितफलदानेन पालयिता - इति ।

तथा च मध्ये यत् [1]किञ्चित् 'पुण्यः पुण्येन कर्मणा भवति पापः पापेन' इत्यादि संसारिस्वरूपप्रतिपादनं उपलभ्यते, तत् 'न साधुना कर्मणा भूयान्' इत्यादिनिषेधशेषभूतमित्यवगन्तव्यम्, उपक्रमाद्यनेकलिङ्गोपसंदब्धत्वात् विशुद्धजीवप्रतिपादनपरतायाः ।

तस्मात् - ज्योतिर्ब्राह्मणं यथा सविशेषपरमात्मपरं [2]न भवति एवमेव संसारिजीवपरमपि न भवति, अपि तु जीवस्य परमात्माभेदबोधपरमेव - इति सिद्धम् ॥ ४२ ॥ ४३ ॥

इति सुषुप्त्युत्क्रान्त्यधिकरणम् ॥ १३ ॥

इति श्रीमच्छारीरकभाष्यव्याख्यायां

ब्रह्मविद्याभरणाख्यायां

प्रथमस्याध्यायस्य

तृतीयः पादः

ॐ

---

1. मु. क्वचित्

2. न भवतीति विशिष्टाद्वैतिनस्तु सविशेषपरमात्मपरत्वं अभिप्रयन्ति, तदेतेन निरस्तम् - जीवातिरिक्तपरमात्मपरसन्दर्भे जीवासङ्गत्वादिनिरूपणस्य विरुद्धत्वात् ।

प्रथमाध्याये चतुर्थः पादः

१ आनुमानिकाधिकरणम्

## आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥

ब्रह्मजिज्ञासां प्रतिज्ञाय ब्रह्मणो लक्षणमुक्तम्— 'जन्माद्यस्य यतः' (ब्र. सू. १।१।२) इति। तल्लक्षणं प्रधानस्यापि समानं इत्याशङ्क्य तदशब्दत्वेन निराकृतम् 'ईक्षतेर्नाशब्दम्' (ब्र. सू. १।१।५) इति। गतिसामान्यं च वेदान्तवाक्यानां ब्रह्मकारणवादं प्रति विद्यते न प्रधानकारणवादं प्रतीति प्रपञ्चितं गतेन ग्रन्थेन।

इदं त्विदानीमवशिष्टं आशङ्क्यते—यदुक्तं प्रधानस्याशब्दत्वं तदसिद्धम्, कासुचिच्छाखासु प्रधानसमर्पणाभासानां शब्दानां श्रूयमाणत्वात्। अतः प्रधानस्य कारणत्वं वेदसिद्धमेव महद्भिः परमर्षिभिः कपिलप्रभृतिभिः परिगृहीतमिति प्रसज्यते; तत्, यावत् तेषां शब्दानां अन्यपरत्वं न प्रतिपाद्यते, तावत् सर्वज्ञं ब्रह्म जगतः कारणमिति प्रतिपादितमप्याकुलीभवेत्। अतः तेषामन्यपरत्वं दर्शयितुं परः संदर्भः प्रवर्तते।

---

ओम्

वृत्तानुवादपूर्वकं तुरीयपादस्य त्रिपाद्या सङ्गतिं वदन् वक्ष्यमाणपादार्थमाह —ब्रह्मजिज्ञासां प्रतिज्ञायेत्यादिना तेषामन्यपरत्वं दर्शयितुं परस्सन्दर्भः प्रवर्तत इत्यन्तेन। अयमर्थः—ईक्षत्यधिकरणे हि—'जन्मादिसूत्रोक्तं ब्रह्मलक्षणत्वेनाभिमतं जगत्कारणत्वादिकं श्रुतिप्रतिपाद्यं प्रधानेऽपि सङ्घटयितुं शक्यम्, अतः अनुमानसिद्धसावयवप्रधानपरत्वमेव वेदान्तानामस्तु, न त्वलौकिकनिरवयवब्रह्मपरत्वम्' इति किञ्चिदवान्तरवाक्याभासमूलतया लक्षणासम्भवशङ्कायां, प्रधाने श्रुतिस्वारस्यनिराकरणेन सा शङ्का परिहृता।

आनुमानिकमपि-अनुमाननिरूपितमपि प्रधानं एकेषां शाखिनां शब्दवत् उपलभ्यते। काठके हि पठ्यते 'महतः परमव्यक्तं अव्यक्तात् पुरुषः परः' (१।३।११) इति। तत्र य एव यन्नामानो यत्क्रमाश्च

तदुपोद्बलनाय च सर्वासां श्रुतीनां [1]गतिसामान्यं-ब्रह्मणि प्रतिज्ञाय, 'आनन्दमयोऽभ्यासात्' इत्यादिभिः 'पत्यादिशब्देभ्यः' इत्यन्तैः सूत्रैः [2]तत्तच्छ्रुतिस्वारस्यपर्यालोचनया गतिसामान्यमेव शङ्काविशेषनिराकरणपूर्वकं व्यवस्थापितम्।

अस्मिन् पादे तदाशङ्कयत इति, त्रिपाद्या सह आक्षेपिकी अस्य पादस्य सङ्गतिः। तत्र प्रथमतः त्रिभिरधिकरणैः, यत् प्रधानस्य अशब्दत्वोक्त्या 'क्वचिदपि वेदे तत् न प्रतिपाद्यते' इत्युक्तं तदाक्षिप्य समाधीयते, तथा च ब्रह्मलक्षणस्यातिव्याप्तिशङ्का निराकृता [3]भवति। प्रधानस्य क्वचित् कारणत्वेन प्रतिपादने हि जन्मादिसूत्रोक्तं ब्रह्मलक्षणं अतिव्याप्तं स्यात्। चतुर्थाधिकरणेन च, 'वेदान्तानां विरुद्धार्थप्रतिपादकतया न ऐकरूप्येण ब्रह्मप्रतिपादकत्वमस्ति' इति गतिसामान्यमाक्षिप्य समाधीयते। तदनन्तरं द्वाभ्यामधिकरणाभ्यां, 'जीवे ब्रह्मलक्षणस्यातिव्याप्तिः' इत्याशङ्कय समाधीयते। ततः प्रकृत्यधिकरणेन, जन्मादिसूत्रोक्तं कारणत्वं ब्रह्मणः कर्तृत्वरूपमेव पर्यवस्यति उपादानं तु प्रधानमेव भविष्यतीति पुनरपि 'प्रधानस्याशब्दत्वमसिद्धम्' इत्याशङ्का निराक्रियते इति [4]कृत्स्नोऽप्ययं पादः पूर्वोक्ताक्षेपसमाधानार्थः इति। एतेनेत्यधिकरणं तु, यानि प्रातिस्विकरूपेण नोदाहृतानि वाक्यानि तेषु उक्तानामेव न्यायानां सञ्चारार्थमिति, अध्यायान्ते कृतम्। अतः तुरीयपादे [5]विशिष्य सङ्गतिः न वक्तव्यैवेति।

'महतः परमव्यक्तं अव्यक्तात् पुरुषः परः' इत्यत्र अव्यक्तपदेन किं साङ्ख्यतन्त्रप्रसिद्धं प्रधानं गृह्यते? किं वा 'आत्मानं रथिनं विद्धि शरीरं रथमेव तु' इत्यादिरूपकवाक्यगतं शरीरं गृह्यते? इति संशये, सूत्रे आनुमानिकमप्येकेषामिति- चेदितिशङ्काविभागं विवृण्वन्नेव पूर्वपक्षमाह—**आनुमानिकमपीत्यादिना।**

1. मु. गतिसामान्यन्यायं 2. आ. तत्तच्छ्रुतिपर्यालोचनया
3. आ. भविष्यति 4. मु. कृत्स्नोऽयं
5. **विशिष्य सङ्गतिः**—पार्थक्येन समन्वयाध्यायसङ्गतिः।

तत्र य एवेत्यादि ।

[1]ननु-साङ्ख्येन, स्मृतिप्रसिद्धमहदादिशब्दानां तत्क्रमस्य च इह प्रत्यभिज्ञानात् तदनुसारेण स एवेहार्थो विवक्षितः इत्युच्यते । तत्र वक्तव्यं—तस्याः स्मृतेः किमियमेव श्रुतिर्मूलम्, उत श्रुत्यन्तरम् । तत्र न तावदाद्यः । यदि हि इयमेव श्रुतिर्मूलं भवेत्, तदा एतच्छ्रुतिपूर्वोत्तरसन्दर्भपर्यालोचनया योऽर्थोऽवगम्यते तदनुसारित्वं तस्याः वक्तव्यम् । न तु तां स्मृतिं अनुरुध्य प्रकृता श्रुतिः व्याख्यातुं युक्ता । अस्यां तु, रूपकवाक्यविन्यस्ता ये आत्मादिपदार्थाः तेषामेव ग्रहणं न्याय्यम् ।

ननु-रूपकवाक्यविन्यस्ता एव इह ग्राह्या इत्यत्र किं नियामकम् । अन्योन्याकाङ्क्षेति चेत्-रूपकवाक्ये हि आत्मशरीरादीनां [2]रथिरथादिभावेन विन्यासः, [3]तत्र प्रयोजनाकाङ्क्षा । [4]अत्र च 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यत्र 'परापरभावेन उपन्यस्ता इन्द्रियादयः के' इत्यपेक्षा । अतः त एव इह ग्राह्या इति अन्योन्याकाङ्क्षा वर्णनीया । सा तु न सम्भवति । रूपकवाक्योक्तानामिन्द्रियादीनां तदनन्तरवाक्य एव वशीकरणविधिर्दृश्यते । 'यस्त्वविज्ञानवान् भवति अयुक्तेन मनसा सदा । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः । यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ।' इत्याभ्यां मन्त्राभ्यां, 'यो बाह्यान् विषयानध्यवस्यन् इदं मे भूयादिति सङ्कल्पयति, तस्य बुद्ध्यपरपर्यायं विज्ञानं अप्रशस्तं मनश्च अयुक्तं, तथाभूतस्येन्द्रियाणि विषयेभ्योऽपरावृत्तानि अवश्यान्येव भवन्ति-परावर्तयितुं पुनरशक्यानि भवन्ति । यस्य तु विज्ञानमनसी विषयाध्यवसायसङ्कल्पविमुखे, तस्य चक्षुरादीनि विषयप्रवृत्तिस्वभावान्यपि परावर्तयितुं योग्यानि भवन्त्येव' इत्युक्त्वा, अवश्येन्द्रियत्ववश्येन्द्रियत्वयोः फलं च दर्शितं - 'यस्त्वविज्ञानवान् भवत्यमनस्कस्सदाऽशुचिः । न स तत्पदमाप्नोति संसारं चाधिगच्छति । यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः । स तु तत्पदमाप्नोति यस्मात् भूयो न जायते ।'

---

1. नन्विति अयं शङ्काग्रन्थः 'अतः कथं निर्मूलसाङ्ख्यस्मृत्यनुसारेण श्रुतिः व्याख्यातुं शक्या' इत्यन्तः 2. मु. रथरथिभावेन 3. मु. तत्र च

4. अत्र—अर्थादीनां इन्द्रियादिभ्यः परत्वकथनवाक्ये ।

इति। तथा च, वशीकृतहयाद्युपकरणस्य यथा समीचीनदेशप्राप्तिः तद्वत् वश्येन्द्रियस्य मोक्षप्राप्तिरिति दृष्टान्तमुखेन इन्द्रियजयसम्पादनविध्यर्थावगमे रूपकवाक्यस्योपयुक्तत्वात् न तदाकाङ्क्षा। नापि 'इन्द्रियेभ्यः परा ह्यर्थाः' इति वाक्यस्य। तत्र हि तावत् न इन्द्रियादिशब्दार्थनिर्णयार्थं तद्वाक्यापेक्षा, प्रसिद्धार्थत्वात् तेषां पदानाम्। नापि परत्वेन प्रतिपाद्यमानस्य पुरुषस्य परत्वावध्यपेक्षा, स्ववाक्योपात्तैरेवेन्द्रियादिभिः तदाकाङ्क्षायाः शान्तत्वात्। अतः कथं पूर्वापरसन्दर्भपर्यालोचनया रूपकवाक्यगता एव ग्राह्याः—इति चेत्,

उच्यते—पूर्वं रूपकवाक्यविन्यस्तानां यद्यपि वशीकरणविधिरस्ति, तथाऽपि स यावत्पर्यन्तं 'इन्द्रियादिषु मध्ये इदं प्रथमतः वशीकर्तव्यं यत्नेन' इति विशिष्य न प्रतिपाद्यते तावत् साकाङ्क्ष एव भवति। 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यत्र च सर्वेभ्यः परत्वेन पुरुषः प्रतिपाद्यः, 'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः' इति वाक्यशेषात्। तत्र च, 'इन्द्रियादिभ्यः सर्वेभ्यः परः' इत्येकया [1]हेलया वक्तव्ये, किमिति 'इन्द्रियेभ्यः परा ह्यर्थाः' इति अवान्तरपरापरभावो वर्ण्यते-इत्याकाङ्क्षा भवत्येव। तदाकाङ्क्षानिवृत्तये रूपकवाक्यविन्यस्तानामेव [2]वश्यताक्रियायां परापरभावबोधनार्थं 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यस्य अवान्तरतात्पर्यं कल्प्यते। तथा च रूपकवाक्यविन्यस्तानामेव इह ग्रहणे, शरीरातिरिक्तानां पदान्तरैरेव गृहीतत्वात्, परिशेषात् अव्यक्तपदेन शरीरमेव गृह्यते। तथा च अयमर्थः—येन इन्द्रियाणि वशीकर्तव्यानीति चिकीर्षितं, तेन अर्थाः प्रथमतो [3]वशीकर्तव्याः। तद्वश्यता च तत्सन्निधिपरित्याग एव। अर्थसन्निधिपरित्यागेऽपि, तद्विषयकमनस्सङ्कल्पे पुनरपि ते [4]इन्द्रियक्षोभका एवेति, मनसा तद्विषयस्सङ्कल्पोऽपि परित्यक्तव्यः। तत्सङ्कल्पपरित्यागोऽपि बुद्धिवृत्त्यध्यवसायपरित्यागं विना न

---

1. **हेलया**—वाचोयुक्त्या—विचित्रया वाचा, लघ्व्या वाचा इति यावत्। आ. उक्त्या　　2. मु. वश्यतायां

3. **वशीकर्तव्या इति** वश्येन्द्रियस्यापि विषयसन्निधौ इन्द्रियविजृम्भणात् इति भावः।

4. **इन्द्रियक्षोभका एवेति** मनसि विषयध्यानप्रवृत्ते विषयासन्निधानेऽपि रागविजृम्भणात् इति भावः।

भवतीति, विषयगोचरोऽध्यवसायः [1]परिहर्तव्यः। इदं सर्वमपि नित्यनैमित्तिककर्मभिः परमेश्वराराधकस्य भवतीति तदाराधनेन विशुद्ध आत्मा [2]सम्पादनीयः। परमेश्वराराधनं च शरीरस्वास्थ्ये भवतीति हितमितमेध्याशनेन [3]शरीरं वशे कर्तव्यम्। तदिदमुच्यते 'इन्द्रियेभ्यः परा ह्यर्थाः' [4]इत्यादिपरत्ववाचोयुक्त्या। इन्द्रियेभ्यः अर्थाः पराः वश्यतापादने। इन्द्रियाणि वशीकर्तुमिच्छता [5]प्रथमतः अर्थसान्निध्यं परिहर्तव्यं भवति, अतः ते इन्द्रियेभ्यः पराः। एवमुत्तरत्र द्रष्टव्यम्। तथा च पूर्वापरपर्यालोचनायां नेयं श्रुतिः साङ्ख्यस्मृतेर्मूलं भवति। [6]एवं श्रुत्यन्तरमपि तत्र मूलं नोपलभ्यते। अतः कथं निर्मूलसाङ्ख्यस्मृत्यनुसारेण श्रुतिर्व्याख्यातुं शक्या।

उच्यते—साङ्ख्यस्मृतिः न निर्मूला। अनुमानमूलत्वसम्भवात्। साङ्ख्या हि इत्थं वदन्ति—स्थूलानर्थान् दृष्ट्वा तत्कारणत्वेन तन्मात्रपदप्रतिपाद्याः सूक्ष्माः पृथिव्यादयः कल्प्यन्ते। पञ्चतन्मात्राणामिन्द्रियाणां च कारणत्वेन अहङ्कारः कल्प्यते। इन्द्रियाणि तु विषयोपलब्ध्या अनुमीयन्ते। अहङ्कारकारणत्वेन महत्तत्वं, तस्यापि कारणं अव्यक्तम्। तत्तु न कस्यापि कार्यम्। परं तु तस्य भोग्यभूतस्य भोक्ता पुरुषः कल्प्यते। तथा च साङ्ख्यानां स्थूला अर्थाः प्रत्यक्षसिद्धाः, अन्ये त्वानुमानिकाः। तथा च प्रधानादिकमानुमानिकमेवेति तन्मूलायाः स्मृतेः श्रुतिसंवादोऽपि पूर्वपक्षे प्रतिपाद्यते। तदिदमुक्तं सूत्रकृता—'आनुमानिकमप्येकेषाम्' इति। अनुमानसिद्धं यत् प्रधानं तत् इह श्रुतौ क्वचित् प्रतिपाद्यते इति।

---

1. **परिहर्तव्य इति** इदमित्थंकर्तव्यमित्यध्यवसायाभावे मनसोऽकिञ्चित्करत्वात् इति भावः।

2. **सम्पादनीय इति** आत्मनो बुद्धेःपरत्वोक्तेः अर्थोऽयम्। महच्छब्दार्थो विशुद्ध इति।

3. **शरीरं वशे कर्तव्यमिति** अव्यक्तस्य महतःपरत्वोक्तेः अर्थोऽयम्।

4. मु. इति। परत्व°

5. औ. प्रथमतः तत्सान्निध्यं परित्यक्तव्यं

6. साङ्ख्यस्मृतेः किं इयमेव श्रुतिर्मूलं उत श्रुत्यन्तरम् - इति, 'ननु साङ्ख्यैर्' इत्यादिशङ्काग्रन्थोपक्रमे विकल्पितम्। तत्र प्रथमः कल्पो निरस्तः। द्वितीयं निरस्यति—**एवमिति**।

यदुक्तं - श्रुतिः [1]पूर्वापरपर्यालोचनायां न साङ्ख्यतत्त्वपरा, अपि त्वन्योन्याकाङ्क्षया रूपकविन्यस्तेन्द्रियादिपरा, ततश्च परिशेषात् अव्यक्तपदं शरीरपरम् - इति

अत्रोच्यते — रूपकविन्यस्तानां वश्यताक्रियायां विनियोगे सति, तत्रापि पुनः 'प्रथमतः किं वशीकर्तव्यं' इत्याकाङ्क्षा जायत इत्युक्तम्। सा, किं क्रियापदश्रवणे कारकाकाङ्क्षेव स्वारसिकी? उत नीलोघटोऽस्तीत्यत्र घटस्य नीलांश इव उत्थाप्यते?

नाद्यः - 'यस्तु विज्ञानवान् भवति' इत्यादिवाक्यस्य हि अभिधानमभिधेयं वा पर्यवसानाय नापेक्षते इन्द्रियेभ्यः परा इति वाक्यम्। न च - अभिधानपर्यवसानेऽपि न अभिधेयं पर्यवसितम्, प्रथमत इदं अनन्तरमिदं वशीकर्तव्यमिति विशिष्यानुक्तेः - इति वाच्यम्। एतादृशविशेषानभिधानेऽपि अभिधेयपर्यवसानसम्भवात्। परं तु 'कथं बुद्ध्यादीनि वशे कर्तव्यानि' इत्यपेक्षा तत्प्रकारानभिज्ञस्य भवति। सा तु 'ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते' 'इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते॥' [1]इत्यादिशास्त्रेण इन्द्रियप्रवृत्तेः प्रयोजकं ज्ञात्वा 'तन्निरोधस्तत्र प्रकारः' इत्यवगतिसम्भवात् निवर्तनीया। न तु तादृशी आकाङ्क्षा 'इन्द्रियेभ्यः पराः' इति वाक्येन निवर्तयितुमपि शक्या। तत्प्रकारस्य तत्रानवगमात्। अतो न उक्तस्वारसिकी आकाङ्क्षा सम्भवति।

नापि द्वितीयः - तदुत्थापकादर्शनात्। वशीकरणविधिवाक्ये हि तदुत्थापकं नोपलभ्यते। न च अवान्तरपरापरभावकथनं 'इन्द्रियेभ्यः पराः' इति वाक्यगतं स्वसार्थक्याय तथाकाङ्क्षामुत्थापयतीति वाच्यम्। अवान्तरपरापरभावकथनस्य सोपानपङ्क्तिन्यायेन 'सर्वेभ्यः पुरुषः परः' इति सुखेन बुद्ध्युपारोहार्थत्वात्।

अपि च तदुत्थापकत्वकल्पनेऽपि बुद्धिमनइन्द्रियाणामेव परापरभावो वक्तव्यः स्यात्। वश्यताविधौ तेषामेव कीर्तनात्।

1. मु. पूर्वोत्तरपर्या° 2. मु. इति शास्त्रेण

**महदव्यक्तपुरुषाः स्मृतिप्रसिद्धाः त एवेह प्रत्यभिज्ञायन्ते । तत्र अव्यक्त- मिति, स्मृतिप्रसिद्धेः शब्दादिहीनत्वाच्च नव्यक्तमव्यक्तमिति व्युत्पत्ति-**

---

अपि च, प्रकृतसन्दर्भे 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इतिवाक्यपर्यालोचनया, बुद्धेरेव वशीकरणे यत्नोऽतीवास्थेय इत्यवगम्यते । उक्तगत्या अव्यक्तपदस्य शरीरपरत्वे 'तस्य वशीकरणे अत्यन्तं यत्नः कर्तव्यः' इति कल्पनीयं स्यात् । तथा च 'दृश्यते त्वग्र्यया' इतिवाक्यविरोधोऽपि ।

अपि च, 'इन्द्रियेभ्यः परा ह्यर्थाः' इति वाक्यं 'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः' इतिवाक्यपर्यालोचनया 'सर्वेभ्यस्तत्त्वेभ्यः परः पुरुषः' इतिप्रतिपत्तिपरमित्यवगम्यते । तच्च साङ्ख्यीयतत्त्वग्रहण एव समञ्जसं भवति । [1]अर्था दश, इन्द्रियाणि दश, मनः, बुद्धिपदोदितोऽहङ्कारः, महानात्मेति महत्तत्वम्, अव्यक्तपदोदितं प्रधानमिति [2]चतुर्विंशतितत्त्व-सङ्ग्रहसम्भवात् । रूपकवाक्योदितानां ग्रहणे तु न सर्वतत्त्वसङ्ग्रहः । रूपकवाक्ये हि 'विषयांस्तेषु गोचरान्' इति स्थूलानामेव ग्रहणं, न सूक्ष्माणाम् । तेषामिन्द्रियगोचरत्वाभावात् । तथा तन्मात्राणां अहङ्कारमहत्तत्त्वाव्यक्तानां च तस्मिन् पक्षे ग्रहणासम्भवात् न सर्वेभ्यः परत्वं पुरुषस्याभिहितं स्यात् ।

अतः [3]श्रुतितात्पर्यवशात् साङ्ख्यीयानामेव तत्त्वानां 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यादिना ग्रहणं वक्तव्यमिति, सिद्धं साङ्ख्यप्रक्रियायाः श्रुतिसम्मतत्वम् ।

तदिदमाह—**तत्र य एव यन्नामान इत्यादि** । अपि च अव्यक्त-शब्दः प्रधाने रूढः । योगोऽपि तस्य प्रधान एव, न शरीरे, तस्य व्यक्तत्वात् । नापि अव्यक्तपदस्य शरीरे रूढिः । तदाह—**तत्राव्यक्तमित्यादि** । न च साङ्ख्यतन्त्रे प्रसिद्धिः न वैदिकलौकिकव्यवहारे उपयुज्यत इति वाच्यम् । तथाहि सति तार्किकप्रसिद्धिरपि न शब्दार्थनिर्णये उपयुक्ता स्यात् । तान्त्रिकप्रसिद्धत्वा-विशेषात् । न चेष्टापत्तिः । [4]तथापि महाकविव्यवहारदर्शनात् । तथा च भारते नारदं

---

1. आ-तथाहि अर्था दश
2. मु, चतुर्विंशतितत्त्वग्रहण
3. मु. श्रुतितात्पर्यात्
4. मु. तथापि

संभवात् स्मृतिप्रसिद्धं प्रधानं अभिधीयते। तस्य शब्दवत्त्वात् अशब्दत्वमनुपपन्नम्। तदेव च जगतः कारणं श्रुतिस्मृतिन्यायप्रसिद्धिभ्यः—इति चेत्-

नैतदेवम्-न ह्येतत् काठकवाक्यं स्मृतिप्रसिद्धयोर्महदव्यक्तयोरस्तित्वपरम्। न ह्यत्र यादृशं स्मृतिप्रसिद्धं स्वतन्त्रं कारणं त्रिगुणं प्रधानं तादृशं प्रत्यभिज्ञायते। शब्दमात्रं ह्यत्र अव्यक्तमिति प्रत्यभिज्ञायते। स च शब्दः 'न व्यक्तं अव्यक्तं' इति यौगिकत्वात् अन्यस्मिन्नपि सूक्ष्मे सुदुर्लक्ष्ये च प्रयुज्यते। न चायं कस्मिंश्चिद्रूढः।

---

प्रस्तुत्योक्तम्—'ऐक्यनानात्मसंयोगसमवायविशारदः। पञ्चावयवयुक्तस्य वाक्यस्य गुणदोषवित्॥' इति। अत्र [1]समवायपञ्चावयवशब्दाः तार्किकसमयप्रसिद्धाः। अतः साङ्ख्यप्रसिद्ध्यापि शब्दार्थग्रहणे नानुपपत्तिः। यद्यपि प्रधानं [2]सूक्ष्मावस्थशब्दादियुक्तमेव, तथापि [3]स्थूलावस्थशब्दादिहीनत्वं शब्दादिहीनत्वाच्चेत्यनेन विवक्षितम्। 'तदेव च जगतः कारणम्' इत्यत्र एवकारोऽपिकारार्थः। न च-महतःपरमित्यत्र परत्वमात्रं प्रतिपाद्यते, न कारणत्वं-इति वाच्यम्। तत्र परत्वे किंप्रयोजकमित्यपेक्षायां कारणत्वमेव पर्यवस्यतीति भावः।

न च - अर्थमनसोरिन्द्रियार्थाभ्यां परत्वं कारणत्वेन वक्तुं न शक्यत इति, अर्थानामिन्द्रियक्षोभकत्वात् ततः परत्वं मनसस्तु अर्थावभासकत्वात् तेभ्यः परत्वं इति कल्पने, तदनन्तराम्नातानां च कारणत्वेन परत्वमिति, तस्मिन्नेव सन्दर्भे परशब्दस्यार्थवैरूप्यं स्यात् - इति वाच्यम्। परशब्देन हि उत्कर्षमात्रं प्रतिपाद्यते, तत्र प्रयोजकं यथासम्भवं कल्प्यते, इति न वैरूप्यम्।

श्रुतिस्मृतिन्यायेति। श्रुतिः प्रकृता, स्मृतिः साङ्ख्यीया, न्यायः अनुमानम्।

न ह्यत्र यादृशं स्मृतिप्रसिद्धमिति। परशब्दो हि न साक्षादेव कारणत्वमाह, अपि तु पर्यवसानगत्या तथा कल्पनीयम्, न च कारणत्वेनैव

---

1. समवायपञ्चावयवशब्दाः—समवायपञ्चावयवादिशब्दाः।

2. मु. सूक्ष्मावस्थाशब्दा° 3. मु. स्थूलावस्थाशब्दा°

या तु प्रधानवादिनां रूढिः सा तेषामेव पारिभाषिकी सती न वेदार्थ-निरूपणे कारणभावं प्रतिपद्यते । न च क्रममात्रसामान्यात् समानार्थ-प्रतिपत्तिर्भवति असति तद्रूपप्रत्यभिज्ञाने । न ह्यश्वस्थाने गां पश्यन् अश्वोऽयमिति अमूढोऽध्यवस्यति ।

प्रकरणनिरूपणायां च अत्र न परपरिकल्पितं प्रधानं प्रतीयते । शरीररूपकविन्यस्तगृहीतेः । शरीरं ह्यत्र रथरूपकविन्यस्तं अव्यक्त-शब्देन परिगृह्यते ।

---

पर्यवसानमित्यत्र किञ्चिन्नियामकम् - इति भावः । **न वेदार्थनिरूपणे कारण-भावं प्रतिपद्यत इति ।** वेदस्य पुरुषसङ्केतितार्थप्रतिपादकत्वे सापेक्षत्वलक्षणा-प्रामाण्यापातेन साङ्ख्यकल्पिताया रूढेः [1]वेदार्थकरणेऽनुपयोगात्, भारतादीनां तु पौरुषेयत्वेन [2]साङ्केतिकार्थप्रतिपादकत्वे न काचिदनुपपत्तिः इति भावः ।

एवं सौत्रं [3]तन्त्रं व्याख्यातुं सूत्राद् बहिरेव उपपत्तिमुक्त्वा 'शरीररूपकवि-न्यस्तगृहीतेः' इत्यनेन 'सिद्धान्त्यभिमतार्थस्यैव स्वारस्येन प्रतीतिः' इतितत्रोक्तां उपपत्तिं व्याचष्टे–**प्रकरणनिरूपणायां चेति । शरीरं ह्यत्र रथरूपकविन्यस्त मिति ।** [4]स्वेन रूपेण प्रतीतिविषयतां अन्यस्यापादयन्तीति, रूपकपदेन शरीरादि-सामानाधिकरण्येन विन्यस्ता रथादयो विवक्षिताः । तथा च रूपकात्मको यो रथः तत्सामानाधिकरण्येन विन्यस्तं-प्रतिपादितं इत्यर्थो द्रष्टव्यः । अत्र च रूपकपदस्य, रूपवन्तं करोतीति विग्रहे रूपवच्छब्दात् तत्करोतीति णिचि मतुपो लुकि टिलोपे च सति [5]रूपिधातोः ण्वुलि तस्याकादेशे णेरनिटीति णिलोपे च सति निष्पत्तिर्द्रष्टव्या ।

---

1. **वेदार्थकरणे**—वेदार्थनिरूपणे ।
2. **साङ्केतिकार्थाः**—पूर्वोक्ताः समवायादयः ।
3. मु. सौत्रं तन्त्रं
4. **स्वेनरूपेणेत्यादि** स्वेनरूपेण—प्रकृते रथत्वादिना । प्रतीतिविषयतां–'शरीरं रथमेव तु' इति श्रुतिवाक्यजन्यप्रतीतिविषयताम् । सामानाधिकरण्येन - अभेदेन । विन्यस्ताः- बोधिताः ।
5. **रूपिधातोरिति** सनाद्यन्तत्वेन धातुतां प्राप्तात् रूपिशब्दात्-इत्यर्थः ।

कुतः। प्रकरणात्, परिशेषाच्च। तथा हि-अनन्तरातीतो ग्रन्थ आत्मशरीरादीनां रथिरथादिरूपककॢप्तिं दर्शयति—

आत्मानं रथिनं विद्धि शरीरं रथमेव तु।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥
इन्द्रियाणि हयानाहुः विषयांस्तेषु गोचरान्।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः॥'

(क. उ. १।३।३,४) इति।

---

नन्वथापि रूपकविन्यस्तशरीरगृहीतेरिति वक्तव्यम्, शरीरस्यैव [1]विशेष्यत्वसिद्धेः।

उच्यते—तथासति रूपकविन्यस्तेति विशेषणं अरूपकविन्यस्तशरीरव्यावर्तकम्। तथा च अयमर्थो भवेत्—रूपकविन्यस्तं यच्छरीरं वर्तते तदेव [2]इह गृह्यते अव्यक्तपदेन, न तु ततोऽन्यत् [3]इति। एवं च सति प्रकृतासङ्गतिः। न हीह अव्यक्तपदेन शरीरग्रहणं सिद्धवत्कृत्य तद्विशेषग्रहणे विवादः। अपि तु, प्रधानं ग्राह्यमिति परः, शरीरमिति तु सिद्धान्ती। तत्र च शरीरग्रहणमित्यत्र सिद्धान्तिना युक्तिर्द्विप्रकारा विवक्षिता सामान्यविशेषाभ्याम्। रूपकविन्यस्ता एव इन्द्रियेभ्यःपरा इत्यादौ गृह्यन्ते, प्रकृतत्वात्, तेष्वपि, परिशेषात् अव्यक्तपदेन शरीरमेव गृह्यते-इति। तथा च 'रूपकविन्यस्तगृहीतेः' [4]इत्यंशेन सामान्ययुक्तिर्निरूप्यते। तत्रापि 'अव्यक्तपदेन रूपकविन्यस्तेषु मध्ये न सर्वे गृह्यन्ते, अपि तु शरीरं' इति इन्द्रियादिव्यावृत्त्यर्थं तद्विशेषणं शरीरमिति। अतो विशेषणविशेष्यभावव्यत्यासः सूत्रे समाश्रितः।

तदिदमाह—**प्रकरणात् परिशेषाच्चेति**। प्रकरणं व्युत्पादयितुं सौत्रं दर्शयतीतिपदं अवतारयति—**तथा ह्यनन्तरातीतो ग्रन्थ इत्यादिना**। 'इन्द्रि-

---

1. **विशेष्यत्वसिद्धेः**—पूर्वं अनुपदं विशेष्यत्वस्य निश्चितत्वात्। मु. विशेष्यत्वप्रसिद्धेः
2. मु. 'इह' नास्ति     3. मु 'इति' नास्ति
4. मु. इत्यंशो सामा

तैश्च इन्द्रियादिभिरसंयतैः संसारमधिगच्छति, संयतैस्तु अध्वनः पारं तद्विष्णोः परमं पदं आप्नोतीति दर्शयित्वा, 'किं तत् अध्वनः पारं विष्णोः परमं पदम्' इत्यस्यामाकाङ्क्षायां, तेभ्य एव प्रकृतेभ्य इन्द्रियादिभ्यः परत्वेन परमात्मानं अध्वनः पारं विष्णोः परमं पदं दर्शयति— इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिः बुद्धेरात्मा महान् परः ॥
महतः परमव्यक्तं अव्यक्तात् पुरुषः परः ।
पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः'
(क. उ. १।३।१०,११)

---

येभ्यः परा ह्यर्थाः' [1]इत्यादिवाक्ये न साङ्ख्यीयस्मृतिप्रसिद्धानि तत्त्वानि गृह्यन्ते, तेषां विप्रकृष्टत्वात्, अपि तु सन्निहितत्वात् रूपकवाक्यविन्यस्ता एव इन्द्रियादयो [2]विवक्षिता इति। अत्र यद्यपि-इन्द्रियादिपदानि तत्र अत्र च तुल्यान्येव प्रत्यभिज्ञायन्त इति न तदर्थैक्ये काचिद्विप्रतिपत्तिः, तथापि-तत्र 'विषयांस्तेषु गोचरान्' 'शरीरं रथमेव तु' 'तद्विष्णोः परमं पदम्' इति, इह तु - अर्था इति, अव्यक्तमिति, पुरुष इति च, पदभेदोऽस्ति। अतः तदैकार्थ्याय सन्निहितत्वादियुक्त्याश्रयणम् ।

युक्त्यन्तरमाह—तैश्चेन्द्रियादिभिरिति । अयमर्थः—पूर्वत्र 'सोऽध्वनः पारमाप्नोति तद्विष्णोःपरमं पदम्' इति प्राप्यत्वेनावगतं विष्णोः परमं पदम् । इहापि पुरुषस्य 'सा परा गतिः' इति कर्मव्युत्पन्नेन गतिशब्देन प्राप्यत्वमवगम्यते । अतस्तयोरभेदः । पूर्वत्र च इन्द्रियादीनां वशीकृतानां तत्प्रापकत्वेनाङ्गत्वं तं प्रति क्लृप्तम् । इहापि तस्य परत्वेनावगतौ अवधित्वेन निबध्यमानानीन्द्रियादीनि तदङ्गानीति वक्तव्यम् । तथा च पूर्वत्र पुरुषं प्रत्यङ्गत्वेन क्लृप्तानि यानि तान्येव इहापि अङ्गत्वेन निबध्यन्त इति युक्तम् । पुरुषोपकारकतायाः क्लृप्तत्वेन [3]अवगतिरूपद्वारभेदमात्रकल्पनायाः लघुत्वात् । अन्येषां तु ग्रहणे उपकारकत्वमपि कल्पनीयमिति गौरवं भवेत् ।

---

1. मु. इति वाक्ये
2. मु. इह विवक्षिताः
3. अवगतिः—परत्वावगतिः ।

इति। तत्र य एवेन्द्रियादयः पूर्वस्यां रथरूपककल्पनायां अश्वादिभावेन प्रकृताः त एव इह परिगृह्यन्ते प्रकृतहानाप्रकृतप्रक्रियापरिहाराय। तत्र इन्द्रियमनोबुद्धयस्तावत् पूर्वत्र इह च समानशब्दा

---

यत्तूक्तं—सर्वेभ्यः परत्वेन इह पुरुषः प्रतिपाद्यः। अतः साङ्ख्यीयतत्त्वग्रहणमेव समञ्जसम्, सर्वसङ्ग्रहसम्भवात्। रूपकविन्यस्तानां ग्रहणे तु तस्मिन् वाक्ये सर्वेषामनुक्तेः 'सर्वेभ्यः परः पुरुषः' इति प्रतिपत्तिः न स्यात्—इति।

अत्रोच्यते—न ह्यत्र 'सर्वेभ्यः परः पुरुषः' इत्येतावन्मात्रबोधने वाक्यस्य तात्पर्यम्, अपि तु, 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इतिवाक्येनोपक्षिप्तस्य भोक्तुः रथित्वेन कल्पितस्य प्राप्यं वैष्णवं पदमित्युक्तेः प्राप्तं भेदं अपोदितुं 'तस्यैव यद्विशुद्धं स्वरूपं तदेव विष्णोः परमं पदं' इति बोधने। प्राप्यत्वं च तस्य प्राप्तस्यैवाप्राप्तत्वभ्रमव्युदासमात्रम्। अत एव च ऋतंपिबन्ताविति पूर्वमन्त्रेण जीवस्य समीपवर्तितया बुद्धिगुहायामेव परमात्मा विशुद्धसाक्षिस्वभाव उपक्षिप्तः। उत्तरत्र च अव्यवधानेनैव 'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः॥' इति परमात्मन एव जीवरूपेण गूढत्वं वक्ष्यति। तथा च, विशुद्धसाक्षिस्वरूपबोधनाय, ये तदभेदेन अहमित्येव गृहीताः शरीरादयः तेभ्यः परत्वं बोधयितुं प्रवृत्ते अस्मिन् वाक्ये, न सर्वतत्त्वग्रहनिर्बन्धः। अत एव 'इन्द्रियेभ्यः परं मनः मनसः सत्त्वमुत्तमम्। सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम्। अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च। यं ज्ञात्वा मुच्यते जन्तुः अमृतत्वं च गच्छति' इति वाक्ये अर्था न निर्दिष्टाः। तत्र जीवाभेदभ्रमाभावात्। इह तु तेषां ग्रहणं रूपकवाक्यविन्यस्तानामेव ग्रहणमिति द्योतनार्थम्। तथा च 'अव्यक्तात् पुरुषः परः' इत्यन्तेन विशुद्धं साक्षिणं निरूप्य, ततोऽपि परं विष्णोः परमं पदमस्तीति भ्रमनिरासार्थं 'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः' इति तदभेदो बोध्यते। एवं च प्रकरणानुगुण्यं भवति। कठवल्लीनां प्रत्यगभिन्नब्रह्मप्रकरणत्वं च 'त्रयाणामेव च' इति सूत्रे विशदं भविष्यति।

इति। तत्र य एवेन्द्रियादयः पूर्वस्यां रथरूपककल्पनायां अश्वादिभावेन प्रकृताः त एव इह परिगृह्यन्ते प्रकृतहानाप्रकृतप्रक्रियापरिहाराय। तत्र इन्द्रियमनोबुद्धयस्तावत् पूर्वत्र इह च समानशब्दा

---

यत्तूक्तं—सर्वेभ्यः परत्वेन इह पुरुषः प्रतिपाद्यः। अतः साङ्ख्यीयतत्त्वग्रहणमेव समञ्जसम्, सर्वसङ्ग्रहसम्भवात्। रूपकविन्यस्तानां ग्रहणे तु तस्मिन् वाक्ये सर्वेषामनुक्तेः 'सर्वेभ्यः परः पुरुषः' इति प्रतिपत्तिः न स्यात्—इति।

अत्रोच्यते—न ह्यत्र 'सर्वेभ्यः परः पुरुषः' इत्येतावन्मात्रबोधने वाक्यस्य तात्पर्यम्, अपि तु, 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इतिवाक्येनोपक्षिप्तस्य भोक्तुः रथित्वेन कल्पितस्य प्राप्यं वैष्णवं पदमित्युक्तेः प्राप्तं भेदं अपोदितुं 'तस्यैव यद्विशुद्धं स्वरूपं तदेव विष्णोः परमं पदं' इति बोधने। प्राप्यत्वं च तस्य प्राप्तस्यैवाप्राप्तत्वभ्रमव्युदासमात्रम्। अत एव च ऋतंपिबन्ताविति पूर्वमन्त्रेण जीवस्य समीपवर्तितया बुद्धिगुहायामेव परमात्मा विशुद्धसाक्षिस्वभाव उपक्षिप्तः। उत्तरत्र च अव्यवधानेनैव 'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः॥' इति परमात्मन एव जीवरूपेण गूढत्वं वक्ष्यति। तथा च, विशुद्धसाक्षिस्वरूपबोधनाय, ये तदभेदेन अहमित्येव गृहीताः शरीरादयः तेभ्यः परत्वं बोधयितुं प्रवृत्ते अस्मिन् वाक्ये, न सर्वतत्त्वग्रहनिर्बन्धः। अत एव 'इन्द्रियेभ्यः परं मनः मनसः सत्त्वमुत्तमम्। सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम्। अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च। यं ज्ञात्वा मुच्यते जन्तुः अमृतत्वं च गच्छति' इति वाक्ये अर्था न निर्दिष्टाः। तत्र जीवाभेदभ्रमाभावात्। इह तु तेषां ग्रहणं रूपकवाक्यविन्यस्तानामेव ग्रहणमिति द्योतनार्थम्। तथा च 'अव्यक्तात् पुरुषः परः' इत्यन्तेन विशुद्धं साक्षिणं निरूप्य, ततोऽपि परं विष्णोः परमं पदमस्तीति भ्रमनिरासार्थं 'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः' इति तदभेदो बोध्यते। एवं च प्रकरणानुगुण्यं भवति। कठवल्लीनां प्रत्यगभिन्नब्रह्मप्रकरणत्वं च 'त्रयाणामेव च' इति सूत्रे विशदं भविष्यति।

एव । अर्था ये शब्दादयो विषया इन्द्रियहयगोचरत्वेन निर्दिष्टाः । तेषां च इन्द्रियेभ्यः परत्वम्, 'इन्द्रियाणां ग्रहत्वं विषयाणामतिग्रहत्वम्' इति श्रुतिप्रसिद्धेः । विषयेभ्यश्च मनसः परत्वं, मनोमूलत्वाद्विषयेन्द्रियव्यवहारस्य । मनसस्तु परा बुद्धिः । बुद्धिं ह्यारुह्य भोग्यजातं भोक्तारमुपसर्पति । बुद्धेरात्मा महान् परः, यः स 'आत्मानं रथिनं

---

अपि च साङ्ख्यस्यापि न सर्वतत्त्वसङ्ग्रहः । 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यत्र हि [1]इन्द्रियसमभिव्याहारात् अर्थशब्दः स्थूलार्थपर एव पर्यवस्यति स्वरसतः । बुद्धिशब्दोऽपि स्वारस्येन न अहङ्कारवाचकः । स हि अध्यवसायवृत्तिकान्तःकरणावान्तरभेदवाचको वा, महत्तत्त्ववाचको वा । महानात्मापि हैरण्यगर्भबुद्धिर्वा, जीवो वा, [2]न तु साङ्ख्यीयं महत्तत्त्वम् । तथा च न स्वरसतः साङ्ख्यस्यापि सर्वतत्त्वसङ्ग्रहः । यथाकथञ्चिल्लक्षणया अर्थाद्वा सर्वसङ्ग्रहः सिद्धान्तिनापि वक्तुं शक्य एव । परं तु प्रकरणविरुद्धार्थप्रतिपादकता परस्यावशिष्यते । अतः, प्रकरणात् परिशेषाच्च शरीरमेव अव्यक्तपदेन ग्राह्यमिति सिद्धम् ।

इन्द्रियाणां ग्रहत्वमित्यादि । प्राणवाग्जिह्वाचक्षुश्श्रोत्रमनोहस्तत्वचः अष्टौ ग्रहत्वेन, गन्धनामरसरूपशब्दकामकर्मस्पर्शा अष्टौ अतिग्रहत्वेन च 'प्राणो वै ग्रहः सोऽपानेनातिग्रहेण गृहीतः अपानेन हि गन्धान् जिघ्रति' इत्यादिना बृहदारण्यके समाम्नाताः । तत् सर्वेषामिन्द्रियाणां तद्विषयाणां च उपलक्षणम् । इन्द्रियाणां ग्रहत्वं च प्रसिद्धपिशाचादिग्रहवत् पुरुषव्यामोहकत्वात् । विषयाणां चातिग्रहत्वं सन्निधानाभावेऽपि स्मृतिमात्रेण व्यामोहहेतुत्वात् । ननु 'बुद्धेरात्मा महान् परः' इत्यत्र न आत्मपदं विशेष्यसमर्पकं, किं तु महत्पदमेव । तेन च महत्तत्त्वमेव प्रतिपाद्यते । आत्मपदं तु तस्यैव स्वरूपपरं सत् विशेषणम् । अत एव, उत्तरत्र महतःपरमव्यक्तमिति महत्पदस्यैवोपादानम्-

---

1. मु: इन्द्रियसमभिव्याहृतार्थशब्दः

2. न तु साङ्ख्यीयमिति आत्मशब्दस्य तस्मिन् अयोगात् इति भावः ।

विद्धि' इति रथित्वेनोपक्षिप्तः। कुतः? आत्मशब्दात्। भोक्तुश्च भोगोपकरणात् परत्वोपपत्तेः। महत्वं चास्य स्वामित्वादुपपन्नम्।

अथ वा,

'मनो महान् मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः।
प्रज्ञा संविच्चितिश्चैव स्मृतिश्च परिपठ्यते॥' इति स्मृतेः,

'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' (श्वे॰ ६।१८) इति च श्रुतेः, या प्रथमजस्य हिरण्यगर्भस्य बुद्धिः सा सर्वासां बुद्धीनां परमा प्रतिष्ठा। सा इह महानात्मेत्युच्यते। सा च पूर्वत्र बुद्धिग्रहणेनैव गृहीता सती हिरुक् इहोपदिश्यते। तस्या अपि अस्मदीयाभ्यो बुद्धिभ्यः परत्वोपपत्तेः। एतस्मिंस्तु पक्षे परमात्मविषयेणैव परेण पुरुषग्रहणेन रथिन आत्मनो ग्रहणं द्रष्टव्यम्, परमार्थतः परमात्मविज्ञानात्मनोः भेदाभावात्।

तदेवं शरीरमेवैकं परिशिष्यते। इतराणीन्द्रियादीनि प्रकृतान्येव परमपदं दिदर्शयिषया समनुक्रामन् परिशिष्यमाणेन इहान्त्येनाव्यक्तशब्देन परिशिष्यमाणं प्रकृतं शरीरं दर्शयतीति गम्यते।

---

इत्यभिप्रायेण पृच्छति—कुत इति। आत्मशब्दादिति। 'आत्मानं रथिनं विद्धि' इत्यत्र रथित्वेनोपक्षिप्तस्यात्मनः इह आत्मपदेन प्रत्यभिज्ञानात्, 'आत्मा महान्' इति समभिव्याहारे गुणवाचकत्वेन लोके प्रसिद्धस्य महत्पदस्य स्वरसतो विशेषणत्वस्यैव प्रतीतेः, स्वरूपपरत्वे व्यर्थतापाताच्च, उत्तरत्र विशेषणद्वारा आत्मन एव निर्देशसम्भवात्, भोक्तैवात्र निर्दिश्यत इति भावः। स्वामित्वादिति। इदमुपलक्षणं—स्वरूपतोऽपि व्यापकतया महत्त्वोपपत्तेः।

प्रौढ्या पक्षान्तरमाह—अथ वेति। ननु हिरण्यगर्भस्यैवाप्रसिद्धेः तदीयबुद्धेर्ग्रहणं दूरापास्तं इत्यत आह—यो ब्रह्माणं विदधातीति। हिरुगिति। पृथगित्यर्थः। एतादृशक्लेशाश्रयणे न किञ्चिन्नियामकमिति भोक्तृपक्ष एव समीचीनः।

शरीरेन्द्रियमनोबुद्धिविषयवेदनासंयुक्तस्य ह्यविद्यावतो भोक्तुः शरीरादीनां रथादिरूपककल्पनया संसारमोक्षगतिनिरूपणेन प्रत्यगात्मब्रह्मावगतिः इह विवक्षिता। तथा च 'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥' (क. उ. १।३।१२) इति वैष्णवस्य परमपदस्य दुरवगमत्वमुक्त्वा तदवगमार्थं योगं दर्शयति— 'यच्छेद्वाङ्मनसी प्राज्ञः तद्यच्छेज्ज्ञान आत्मनि ।

ज्ञानमात्मनि महति नियच्छेत् तद्यच्छेच्छान्त आत्मनि ॥'

(का.उ. १।३।१३) इति ।

एतदुक्तं भवति—वाचं मनसि संयच्छेत्— वागा[दी](दिबाह्ये)-

---

एवं, दर्शयतीत्यंश 'सन्निहितत्वात् अङ्गत्वेन क्लृप्तत्वाच्च रूपकवाक्यविन्यस्तानामेवेह ग्रहणम्' इत्यभिप्रायं व्याख्याय, 'प्रकरणपर्यालोचनयापि तद्ग्रहणम्, प्रत्यगभिन्नब्रह्मप्रकरणे तद्विरुद्धस्य साङ्ख्यीयाव्यक्तस्य ग्रहीतुमनुचितत्वात्' इत्यभिप्रायेणापि दर्शयतीत्येतद्व्याचष्टे—**शरीरेन्द्रियेत्यादिना** ।

ननु - प्रकरणोद्धाटनं त्रयाणामितिसूत्रे भविष्यति, ततश्च दर्शयतीत्यनेनापि तदुद्धाटने पुनरुक्तता स्यात् - इति,

न - तत्र महाप्रकरणोद्धाटनम्। इह तु, 'ऋतं पिबन्तौ' इत्यारभ्य 'निचाय्य तं मृत्युमुखात् प्रमुच्यते' इत्यन्तमवान्तरप्रकरणं 'वशीकृतेन्द्रियगणेन 'यच्छेद्वाङ्मनसी प्राज्ञ': इत्यादिमन्त्रप्रतिपाद्ययोगबलात् प्राप्यं वैष्णवं परमं पदं देहादिव्यतिरिक्तप्रत्यगभिन्नस्वरूपमेव' इत्यनया भङ्ग्या [1]यत् परमात्मप्रतिपादकं तदुद्धाट्यत इति कुतः पौनरुक्त्यम् ।

मन्त्रस्यास्फुटत्वात् तं व्याचष्टे - **एतदुक्तमित्यादिना** । 'तद्यच्छेज्ज्ञाने' इत्यादावुत्तरत्र अधिकरणाधेयभावस्य स्फुटमवगमात् वाङ्मनसीत्यत्रापि तथैव विवक्षितमित्यभिप्रेत्य, वागित्यत्र द्वितीया मनसीति च सप्तमी छान्दसप्रक्रियया स्वीकर्तव्येत्याह—**वाचं मनसि नियच्छेदिति** । वाग्ग्रहणं इन्द्रियमात्रोपलक्षणम्। नियमनं च तत्तद्व्यापारनिरोध एवेत्याह—**वागादीन्द्रियव्यापारमित्यादिना** ॥ १ ॥

---

1. मु. 'यत्' नास्ति

न्द्रियव्यापारमुत्सृज्य मनोमात्रेणावतिष्ठेत। मनोऽपि विषयविकल्पाभिमुखं विकल्पदोषदर्शनेन ज्ञानशब्दोदितायां बुद्धौ अध्यवसायस्वभावायां धारयेत्। तामपि बुद्धिं महत्यात्मनि भोक्तरि अग्र्यायां वा बुद्धौ सूक्ष्मतापादनेन नियच्छेत्। महान्तं त्वात्मानं शान्त आत्मनि-प्रकरणवति परस्मिन् पुरुषे परस्यां काष्ठायां प्रतिष्ठापयेत्-इति च। तदेवं पूर्वापरालोचनायां नास्त्यत्र परपरिकल्पितस्य प्रधानस्य अवकाशः॥१॥

## सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥

उक्तमेतत् 'प्रकरणपरिशेषाभ्यां शरीरं अव्यक्तशब्दं न प्रधानम्' इति। इदमिदानीमाशङ्कयते – कथमव्यक्तशब्दार्हत्वं शरीरस्य, यावता स्थूलत्वात् स्पष्टतरमिदं शरीरं व्यक्तशब्दार्हम्, अस्पष्टवचनस्त्व-व्यक्तशब्दः-इति। अत उत्तरमुच्यते—सूक्ष्मं तु इह कारणात्मना शरीरं विवक्ष्यते, सूक्ष्मस्य अव्यक्तशब्दार्हत्वात्। यद्यपि, स्थूलमिदं शरीरं न स्वयं अव्यक्तशब्दमर्हति, तथापि, तस्य त्वारम्भकं भूतसूक्ष्मं अव्यक्तशब्दमर्हति। प्रकृतिशब्दश्च विकारे दृष्टः। यथा 'गोभिः श्रीणीत मत्सरम्' (ऋ० सं० ९।४।६।४) इति। श्रुतिश्च—तद्धेदं तर्ह्यव्याकृतमासीत्, (बृ. उ. १।४।७) इति, इदमेव व्याकृतनामरूप-विभिन्नं जगत् प्रागवस्थायां परित्यक्तव्याकृतनामरूपं बीजशक्त्यवस्थं अव्यक्तशब्दयोग्यं दर्शयति ॥ २ ॥

---

सूत्रव्यावर्त्यां शङ्कां दर्शयितुं वृत्तं कीर्तयति—**उक्तमेतदित्यादिना**। स्पष्टतरं-प्रत्यक्षम्। अस्पष्टवचनः-अप्रत्यक्षवाचकः। सूक्ष्मशरीरस्य अव्यक्त-शब्दार्हत्वात् प्रकृते स्थूलमेव शरीरं कारणात्मना सूक्ष्मं विवक्षितम्—इत्येवं सूत्रं योजयन् परिहारमाह—**अत उत्तरमुच्यत इत्यादिना**। **तस्य त्वारम्भकं भूतसूक्ष्ममिति**। सूक्ष्मं सूक्ष्मतापन्नं भूतं-भूतसूक्ष्मम्। भूतपूर्वादिवत् समासः। इदं च 'तदन्तरप्रतिपत्तौ' इत्यत्र निरूपयिष्यते। अथवा, भूतसूक्ष्मम् - अविद्या। गोभिः-पयोभिः। श्रीणीत-मिश्रयेत्। मत्सरं-सोमम्। अत्र गोपदं तत्कार्ये पयसि प्रयुक्तम् ॥ २ ॥

## तदधीनत्वादर्थवत् ॥ ३ ॥

अत्राह—यदि जगदिदमनभिव्यक्तनामरूपं बीजात्मकं प्रागवस्थं अव्यक्तशब्दार्हमभ्युपगम्येत, तदात्मना च शरीरस्याप्यव्यक्तशब्दार्हत्वं प्रतिज्ञायेत, स एव तर्हि प्रधानकारणवाद एवं सति आपद्येत। अस्यैव जगतः प्रागवस्थायाः प्रधानत्वेनाभ्युपगमात् - इति।

अत्रोच्यते—यदि वयं स्वतन्त्रां कांचित् प्रागवस्थां जगतः कारणत्वेनाभ्युपगच्छेम, प्रसञ्जयेम तदा प्रधानकारणवादम्। परमेश्वराधीना त्वियं अस्माभिः प्रागवस्था जगतः अभ्युपगम्यते, न स्वतन्त्रा। सा च अवश्याभ्युपगन्तव्या। अर्थवती हि सा। न हि तया विना परमेश्वरस्य स्रष्टृत्वं सिद्ध्यति। शक्तिरहितस्य तस्य प्रवृत्त्यनुपपत्तेः।

---

यद्यपि जगतः सूक्ष्मावस्थाभ्युपगमः परस्य सिद्धान्तिनश्च अविशिष्टः, तथापि, परस्य सा स्वतन्त्रा, सेश्वरसाङ्ख्यस्यापि सा परमात्मनः सकाशात् परमार्थतो भेदवती, सिद्धान्ते तु, परमात्मनि स्वरूपेण कल्पिता-इत्यस्ति विशेषः— इति परिहाराभिप्रायमाह—अत्रोच्यत इत्यादिना। **प्रागवस्था जगत इति।** जगत्प्रागवस्थाश्रयाविद्येत्यर्थः। तदधीनत्वादित्यंशं व्याख्याय, अर्थवदित्यंशं व्याचष्टे—**अर्थवती हि सेति।** परमात्मनो जगदुपादानत्वकर्तृत्वे न शक्तिं विना सम्भवतः। निर्विकारस्वभावस्य हि परमात्मनः कामसङ्कल्पादिरूपो विकारो वियदादिरूपश्च औपाधिकोऽनृतो वक्तव्यः, स्फटिकारुणिमादिवत्। अत उपाधिभूता तस्य मायादिशब्दप्रतिपाद्या शक्तिः एष्टव्या।

ननु - असङ्गस्वभावे परमात्मनि यथा अविद्याध्यारोपः उपाध्यन्तरं विनैव आस्थीयते, अविद्यारोपस्याप्युपाध्यन्तरायत्तत्वे अनवस्थापातात्, लोकेऽपि शुक्तिरजतादिभ्रमो निरुपाधिकत्वेन प्रसिद्धः; एवं वियदादिभ्रमोऽपि निरुपाधिक एवास्तु। निर्विकारस्यापि परमार्थगत्या अनृतविकारसंसर्गे विरोधाभावात्। तथा च, न वियदादिकारणत्वनिर्वाहाय परमात्मनि उपाधिभूता शक्तिः एष्टव्या - इति चेत्,

**मुक्तानां च पुनरनुत्पत्तिः । कुतः ? विद्यया तस्या बीजशक्तेः दाहात् ।**

उच्यते - द्विविधभ्रमदर्शने सति वियदादिभ्रमः परमात्मनि श्रुतिप्रामाण्यात् औपाधिक एष्टव्यः । 'मायी सृजते विश्वमेतत्' 'मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम् ।' [श्वे. उ. ४-१०) 'य एकोऽवर्णो बहुधा शक्तियोगात् वर्णाननेकान्निहितार्थो दधाति ।' [श्वे. उ. ४-१] अत्र आद्योऽवर्णशब्दः [1]परमात्मपरः । [2]द्वितीयः कार्यपरः । 'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् । सम्भवः सर्वभूतानां ततो भवति भारत । सर्वयोनिषु कौन्तेय मूर्तयस्सम्भवन्ति याः । तासां ब्रह्म महद्योनिः अहं बीजप्रदः पिता ॥' [भ. गी. १४.३-४] इत्यादिश्रुतिस्मृतिवादैः उपाधिसाचिव्येनैव परमात्मनः कारणताप्रतिपादनात् । तथा च जीवेश्वरजगद्रूपविभ्रमास्पदत्वं परमात्मनो मायाविद्याद्यपरपर्यायशक्तिनिबन्धनं आस्थेयम् ।

ननु - यद्यविद्याधीनो जीवत्वादिविभ्रमः, तर्हि सा तत्त्वज्ञानेन निवर्तते, न वा । यदि न, तदा तत्त्वविदामपि बन्धानुवृत्तिः स्यात् । यदि निवर्तते, भ्रमोपादानकोटिनिविष्टोपाधेरभावात् वियदादिप्रपञ्चो [3]न स्यात् - इत्याशङ्क्याह—

**मुक्तानां च (न पुनरु) [पुनरनु]त्पत्तिरिति ।**

एवमपि द्वितीयदोषस्तदवस्थ इति चेत्,

अत्र [4]केचिदाहुः— अविद्या एकैव सावयवा । तथा च, कस्यचित्तत्त्वज्ञानेन तस्य बन्धापादको यः अविद्यांशो वर्तते, स निवर्तते, अतो न तस्य पुनर्बन्धः, अवशिष्टैरंशैः प्रपञ्चानुवृत्तिरुपपद्यत इति न द्वितीयदोषावसरः - इति ।

अन्ये[5] तु 'यो योनिं योनिं अधितिष्ठत्येकः' [श्वे. उ. ४.११]' इन्द्रो मायाभिः पुरुरूप ईयते' [बृ. उ. २.५.१९] इत्यादिश्रुतिभिः परमात्मोपाधिभूता माया अनेकाः तत्तज्जीवबन्धापादिकाः । ततश्च तस्यतस्य तत्त्वज्ञानेन तत्तद्बन्धा-

---

1. **परमात्मपर इति** करणकर्मव्युत्पत्त्या नाम रूपञ्च वर्णशब्दार्थः, तद्रहितः इति भावः ।

2. **द्वितीयः**—अवर्ण इत्यत्र यो वर्णशब्दः तदपेक्षया द्वितीयः 'वर्णान्' इत्यत्र-वर्णशब्दः । उभयत्रापि 'वर्णशब्दः' इत्येव मु. पाठः ।

3. **नस्यादिति**—तथा च बन्धमुक्तिव्यवस्थानुपपत्तिः इति भावः ।

4. **केचित्**—मूलाज्ञानैकत्ववादिषु नानाजीववादिनः ।

5. **अन्ये**—मूलाज्ञाननानात्ववादिनः ।

**अविद्यात्मिका हि सा बीजशक्तिः अव्यक्तशब्दनिर्देश्या परमेश्वराश्रया मायामयी महासुप्तिः, यस्यां स्वरूपप्रतिबोधरहिताः शेरते संसारिणो जीवाः। तदेतदव्यक्तं क्वचित् आकाशशब्दनिर्दिष्टम्—'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' (बृ. उ. ३।८।११) इति श्रुतेः।**

---

पादकाज्ञानमेव नश्यतीति 'न बन्धमुक्त्यनुपपत्तिः[1] - इति।

नन्विदं मायाख्यं तत्त्वं किं जीवगतम्? उतेश्वरगतम्? नाद्यः - तथासति तदुपाधिकं जगत्कर्तृत्वादिकं जीवस्यैव स्यात्। न द्वितीयः - तथात्वे तत्कार्यभूतमज्ञत्वादिकमपि परमात्मनः स्यात्, ततश्च सर्वज्ञत्वादिवचनविरोधः - इत्यत आह - **परमेश्वराश्रयेति**। परमेश्वरपदलक्ष्यं यत् विशुद्धं चैतन्यं तदाश्रयेत्यर्थः।

अयं भावः—जीवेश्वरानुयायि यत् विशुद्धं चैतन्यं, तत् मायाधिष्ठानम्। तत्र च आवरणशक्तिः विक्षेपशक्तिश्च। तत्र आवरणशक्तिकार्यं अज्ञत्वादिकं, विक्षेपशक्तिकार्यं क्रियारूपं जगत्सृष्टिः गत्यादिकं च। शक्तिद्वयमपि 'माययापहृतज्ञाना आसुरं भावमाश्रिताः।' [भ. गी. ७.१५] 'मायां तु प्रकृतिं विद्यात्' इत्यादिश्रुतिस्मृतिभिः[2] अवगम्यते। सा च विक्षेपशक्त्यंशेन परमात्मनि सर्वज्ञत्वादिरूपं वियदादिरूपं च विक्षेपं आदधाति, जीवे तु संसाररूपम्। अतो विक्षेपांशः उभयावच्छेदेनैव वर्तते। आवरणांशस्तु जीवत्वावच्छेदेनैव, न ईश्वरत्वावच्छेदेन। अतो न ईश्वरे सर्वज्ञत्वादिविरोधः। इयं च व्यवस्था, ईश्वरे सर्वज्ञत्वश्रुतेः अहमज्ञइति जीवे प्रत्यक्षेणाज्ञत्वावगतेश्च उपेयते। एवं च सति 'ज्ञाज्ञौ द्वावजावीशानीशौ' [श्वे. उ. १-९] इति श्रुतौ व्यवस्थिततया ज्ञत्वाज्ञत्वनिर्देशोऽपि परमेश्वरजीवयोः सङ्गच्छते।

तदिदमाह—**मायामयी महासुप्तिरिति**। माया वियदादि अनृतकार्यं, तद्विशिष्टा। अनेन विक्षेपांशो दर्शितः। महासुप्तिरिति आवरणांशः। तस्य विवरणं—**यस्यां स्वरूपप्रतिबोधरहिता इत्यादि**। अनेन च तदंशस्य जीवगतत्वं ध्वनितम्। तादृशशक्तिविशेषं श्रुतिसिद्धमाह—**तदेतदव्यक्तमिति**।

---

1. **न बन्धमुक्त्यनुपपत्तिः**—न बन्धमुक्तिव्यवस्थानुपपत्तिः।
2. आ. स्मृतिभिः सिद्धम्

**क्वचित् अक्षरशब्दोदितम्—'अक्षरात्परतः परः' (मु. उ. २।१।) इति श्रुतेः। क्वचित् मायेति सूचितम्—'मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्' (श्वे. उ. ४।१०) इति मन्त्रवर्णात्। अव्यक्ता हि सा माया, तत्त्वान्यत्वनिरूपणस्य अशक्यत्वात्।**

---

यथा च एतयोः अक्षराकाशपदयोः जगत्कारणत्वोपाधिभूतशक्तिपरत्वं, तथा 'अदृश्यत्वादिगुणको धर्मोक्तेः' 'अक्षरमम्बरान्तधृतेः' इत्यधिकरणयोर्व्यवस्थापितम्। मायापदस्य तु तत्परत्वं उत्तराधिकरणे व्यक्तं भविष्यति।

ननु - यथोक्ता दैवी शक्तिः 'वेदान्तवेद्यं प्रत्यक्तत्त्वं न जानामि' इति-प्रत्यक्षसिद्धा सिद्धान्तिभिरास्थीयते। कथमस्यां [1]अस्फुटत्ववचनोऽव्यक्तशब्दो वर्तताम्? अत आह—**अव्यक्ता हि सा माया तत्त्वान्यत्वनिरूपणस्याशक्यत्वादिति।** तत्त्वं - अबाध्यत्वम्, अन्यत्वं - लब्धस्वरूपान्यत्वम् - असत्त्वमिति यावत्। तथा च, अबाध्यत्वेन असत्त्वेन च निर्वक्तुमशक्यत्वं - लब्धस्वरूपत्वात् 'अथात आदेशो नेति नेति' इत्यादिवचनबाधितत्वाच्च यत् अनिर्वचनीयत्वं अविद्यायां आस्थीयते, तदेव तस्या अव्यक्तत्वमिति।

ननु - यदि अव्यक्तपदे अनिर्वचनीयत्वं प्रवृत्तिनिमित्तं, तर्हि शरीरेऽपि तदस्तीति, किमिति पूर्वं 'यद्यपि स्थूलं इदं शरीरं नाव्यक्तशब्दमर्हति' इत्यादिना 'कारणाभेदोपचारेण शरीरे अव्यक्तपदप्रतिपाद्यता' इत्युक्तम्?

उच्यते—स्फुटप्रत्यक्षागोचरत्वं अव्यक्तपदप्रवृत्तिनिमित्तमिति लोकप्रसिद्ध्यनुसारात् तथोक्तम्। न च - तादृशं प्रवृत्तिनिमित्तं अविद्यायामपि नास्तीति कथं कारणाभेदोपचारेण निर्वाहः-इति शङ्क्यम्। अविद्यायाः प्रत्यक्षत्वे सत्यपि 'प्रत्यक्तत्त्वं न जानामि' इतिप्रत्यक्षस्य शङ्काविशेषकलुषितत्वेन स्फुटत्वाभावात्।

एवं ह्यत्र [2]शङ्का—'प्रत्यक्तत्त्वं न जानामि' इतिप्रत्यक्षं न भावरूपमायाशक्तिविषयम्। ज्ञानाभावविषयत्वात्।

---

1. मु. अस्पष्टत्ववचनः

2. शङ्केति इयं शङ्का 'तथा नजानामीत्यनुभवस्य अभावविषयत्वे न काचिदनुपपत्तिः' इत्यन्ता।

ननु - ज्ञानाभावविषयत्वे, आत्माधिकरणकः आत्मविषयकज्ञानप्रतियोगिकोऽयमभावः इति वक्तव्यम्। तस्य च ज्ञानं अधिकरणतया प्रतियोगितावच्छेदककोटिप्रविष्टतया च आत्मनो ज्ञानमपेक्षते। तथा च आत्मज्ञाने सति तदभावस्यासम्भवात् कथमिदं आत्मज्ञानाभावविषयकं प्रत्यक्षं इति वक्तुं शक्यम् - इति चेत्,

यन्मतेऽपि भावरूपशक्तिविषयं एतत् प्रत्यक्षं, तेनापि सा शक्तिः आत्मविषया स्वसमानविषयज्ञाननिवर्त्या च उपेया। अन्यथा प्रत्यक्तत्त्वमिति [1]विषयोल्लेखस्य आत्मज्ञानस्याविद्यानिवर्तकताप्रतिपादकशास्त्रस्य च अनुपपत्तेः। सविषयत्वे च, विषयज्ञानं विना तद्विशिष्टस्य ज्ञानं न सम्भवतीति, आत्मविषयभावरूपाज्ञानावगमाय आत्मज्ञानमपेक्षितम्। न हि कस्यचिदपि प्रत्यक्तत्त्वज्ञानाभावदशायां 'तन्नजानामि' इति व्यवहारो दृश्यते। ततश्च, सामान्यतस्तत्त्वमवगम्य विशेषविषयकंतदज्ञानमनुभूयते - इति स्वीकृत्य [2]निरूपकात् सामान्याकारात् विषयतावच्छेदकं अन्यदेव विशेषरूपं स्वीकर्तव्यम्। एवं अभाववादिनापि रूपभेदमादाय स्वपक्षः समर्थयितुं शक्यत एव। यद्यपि प्रत्यग्विषयज्ञानत्वमेव [3]प्रतियोगितायां निरूपकतया भासते, तथापि न तत् प्रतियोगितावच्छेदकम्, अपि तु आत्मविषयकनिर्णयज्ञानत्वमेव। सामान्यधर्मपुरस्सरं च विशेषाभाव एव अत्र भासते। [4]अत्र च प्रतियोगिभूतो निर्णयः यो मोक्षजनकः स एव विवक्षितः। धर्मितया[5] प्रतियोगितावच्छेदकनिविष्टत्वेन च तज्ज्ञानं न तथाभूतमिति न विरोधः, प्रतियोगिसामान्यस्य विशेषाभावविरोधित्वाभावात्।

न च - सविषयभावरूपपदार्थोल्लेखो [6]निरूपकविषयतावच्छेदकभेदेनापि दृष्टः। 'घटं जिज्ञासे' इत्यत्र हि जिज्ञासाविषयो न ज्ञानसामान्यम्। सर्वात्मना घटज्ञानस्यैवाभावे तज्जिज्ञासाया एवाभावात्। अतः, सामान्यतो

---

1. आ. सविषयोल्लेखस्य
2. **निरूपकात्**—विषये प्रकारतया भासमानात्।
3. **प्रतियोगितायां निरूपकतया**—प्रतियोगिनि प्रकारतया।
4. मु. अपि च प्रति
5. 'धर्मितया' 'निविष्टत्वेन' इति च तृतीये प्रयुक्तत्वार्थिके।
6. **निरूपकेत्यादि**-निरूपकाद्भिन्नेन विषयतावच्छेदकेन विशिष्टतया दृष्ट इत्यर्थः।

घटज्ञाने तज्जिज्ञासोपयोगिनि सति, सिद्धे तस्मिन् इच्छाया असम्भवात् ज्ञानविशेष एव तद्विषयतया आस्थेयः। अतः भावरूपशक्तिविषयकत्वपक्षे न रूपभेदानुपपत्तिः। अभाववादिमते तु अनुपपत्तिरेव। विशेषाभावस्य सामान्यरूपेण क्वचिदप्यनुल्लेखात्। न हि पीतघटवति भूतले नीलघटाभावः 'घटो नास्ति' इत्यनुभूयते। अतः कथं रूपभेदेनाभावविषयत्वं समर्थयितुं शक्यम्-इति वाच्यम्।

श्वासादिचेष्टावति पुरुषे 'निश्चेष्टोऽहम्' इत्यनुभवस्य सर्वजनीनस्य सामान्यरूपेणैव विशेषाभावोल्लेखित्वात्। तथा 'न जानामि' इत्यनुभवस्य अभावविषयत्वे न काचिदनुपपत्तिः-इति।

एतादृश(स्य) शङ्काकलुषिततया अस्फुटस्य अस्य प्रत्यक्षस्य भावरूपशक्तिविषयत्वं एतादृशन्यायानुसन्धानेन व्यवस्थापनीयम्। [1]यद्धर्मवदाश्रयतया यदधिकरणं गृहीतं तस्मिन्नधिकरणे तद्धर्मविशेषितप्रतियोगिताकोऽभावो नानुभूयते इति तावत् नियमेन दृष्टम्। न हि घटत्ववदाश्रयतया गृहीतेऽधिकरणे विद्यमानोऽपि घटविशेषाभावः 'घटोनास्ति' इत्येवमनुभूयते। तथा च [2]प्रतियोगिघटितपरम्परासम्बन्धेन तद्धर्मवत्ताज्ञानं तद्धर्मनिरूपितप्रतियोगिताकाभावज्ञाने प्रतिबन्धकमास्थेयम्। श्वासादिमत्तयाऽवगते स्वस्मिंस्तु निश्चेष्टोऽहमितिज्ञानं 'श्वासादिकं चेष्टा न भवति' इति भ्रमवत एव। 'तदपि चेष्टा' इति निश्चयवतस्तु तत् व्यवहारमात्रं, न त्वनुभवः। व्यवहारस्तु श्वासातिरिक्तचेष्टायां लाक्षणिकः। 'प्रत्यक्तत्त्वं न जानामि' इति तु [3]अनुभवः। नात्र तादृशक्लेशाश्रयणं न्याय्यम्। जीवत्वावच्छेदेन आवरणशक्तिमत्तया श्रुतिस्मृतिसिद्धायाः [4]तस्या एव अनुभवोपपत्तौ अभावविषयतया क्लेशसहनायोगात्।

तथा च, धर्मिप्रतियोगिज्ञानदशायां ज्ञानत्ववदाश्रयतया आत्मनोऽवश्यमवभासात् ज्ञानत्वनिरूपितप्रतियोगिताकाभावानुभवत्वस्य प्रत्यक्तत्त्वंनजानामीत्यत्र

---

1. अनुसन्धातव्यं न्यायं आह—**यद्धर्मवदित्यादिना**।

2. **प्रतियोगीत्यादि** प्रतियोगी—अभावज्ञाने भासमानः योऽभावप्रतियोगी सः। तथा चायमर्थः—स्वाश्रयघटवत्त्वसम्बन्धेन घटत्ववत्ताज्ञानं घटत्वनिरूपितप्रतियोगिताकाभावज्ञाने विशेष्यनिष्ठप्रत्यासत्त्या प्रतिबन्धकं-इति।

3. मु. अनुभवे न तादृश

4. **तस्याः**-भावरूपाविद्यायाः।

तदिदं 'महतः परमव्यक्तम्' इत्युक्तम्, अव्यक्तप्रभवत्वात् महतः, यदा हैरण्यगर्भी बुद्धिर्महान्। यदा तु जीवो महान् तदापि अव्यक्ताधीनत्वाज्जीवभावस्य महतःपरमव्यक्तमित्युक्तम्। अविद्या हि अव्यक्तम्। अविद्यावत्त्वेनैव जीवस्य सर्वः संव्यवहारः संततो वर्तते। तच्च अव्यक्तगतं महतः परत्वं अभेदोपचारात् तद्विकारे शरीरे परिकल्प्यते। सत्यपि शरीरवत् इन्द्रियादीनां तद्विकारत्वाविशेषे शरीरस्यैव अभेदोपचारात् अव्यक्तशब्देन ग्रहणं, इन्द्रियादीनां स्वशब्दैरेव गृहीतत्वात्, परिशिष्टत्वाच्च शरीरस्य।

अन्ये तु वर्णयन्ति—द्विविधं हि शरीरं स्थूलं सूक्ष्मं च। स्थूलं यदिदमुपलभ्यते। सूक्ष्मं यदुत्तरत्र वक्ष्यते 'तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्' (ब्र. सू. ३।१।१) इति। तच्चोभयमपि शरीरं अविशेषात् पूर्वत्र रथत्वेन संकीर्तितम्। इह तु सूक्ष्मं अव्यक्तशब्देन परिगृह्यते। सूक्ष्मस्य अव्यक्तशब्दार्हत्वात्। तदधीनत्वाच्च बन्धमोक्षव्यवहारस्य जीवात् तस्य परत्वम्, यथा अर्थाधीनत्वादिन्द्रियव्यापारस्य इन्द्रियेभ्यः परत्वं अर्थानाम् - इति।

तैस्तु एतद्वक्तव्यं, अविशेषेण शरीरद्वयस्य पूर्वत्र रथत्वेन संकीर्तितत्वात् समानयोः प्रकृतत्वपरिशिष्टत्वयोः कथं सूक्ष्ममेव शरीरं इह गृह्यते न पुनः स्थूलमपीति। 'आम्नातस्यार्थं प्रतिपत्तुं प्रभवामः, न आम्नातं पर्यनुयोक्तुम्, आम्नातं चाव्यक्तपदं सूक्ष्ममेव

---

वक्तुमशक्यतया भावरूपाविद्याशक्तिविषयत्वं तस्य आस्थेयम्। तथा च अविद्यायाः प्रत्यक्षगोचरत्वेऽपि न अव्यक्तत्वानुपपत्तिः। तत्प्रत्यक्षस्य स्पष्टत्वाभावात्।

एवं स्वमतेन सूत्रद्वयं योजयित्वा मतान्तरेण तत् योजयति—अन्ये त्वित्यादिना। द्वितीयसूत्रं तन्मते योजयति—तदधीनत्वाच्चेत्यादिना। पूर्वव्याख्यायां अर्थवदिति सौत्रपदं मतुबन्ततया व्याख्यातम्। इदानीं तुल्यताप्रतिपादकतया वतिप्रत्ययान्तं व्याचष्टे—यथा अर्थाधीनत्वादिति।

प्रतिपादयितुं शक्नोति नेतरत्, व्यक्तत्वात्तस्य' इति चेत्, न - एकवाक्यताधीनत्वादर्थप्रतिपत्तेः। न हि इमे पूर्वोत्तरे आम्नाते एकवाक्यतामनापद्य कंचिदर्थं प्रतिपादयतः, प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गात्। न च आकाङ्क्षामन्तरेण एकवाक्यताप्रतिपत्तिरस्ति। तत्र अविशिष्टायां शरीरद्वयस्य ग्राह्यत्वाकाङ्क्षायां यथाकाङ्क्षं संबन्धेऽनभ्युपगम्यमाने एकवाक्यतैव बाधिता भवति, कुत आम्नातस्यार्थस्य प्रतिपत्तिः। न चैवं मन्तव्यम् - दुःशोधत्वात् सूक्ष्मस्यैव शरीरस्य इह ग्रहणं, स्थूलस्य तु दृष्टबीभत्सतया सुशोधत्वात् अग्रहणम् - इति। यतो नैवेह शोधनं कस्यचित् विवक्ष्यते। न ह्यत्र शोधनविधायि किंचित् आख्यातमस्ति। अनन्तरनिर्दिष्टत्वात्तु 'किं तत् विष्णोः परमं पदम्' इतीदमिह विवक्ष्यते। तथा हि, इदमस्मात्परमिदमस्मात्परमित्युक्त्वा 'पुरुषान्न परं किंचित्' इत्याह। सर्वथापि तु आनुमानिकनिराकरणोपपत्तेः तथा नामास्तु, न नः किंचिच्छिद्यते ॥ ३ ॥

---

अविशिष्टायां शरीरद्वयस्य ग्राह्यत्वाकाङ्क्षायामिति।

ननु - अव्यक्तपदं यौगिकत्वात् व्यक्तिविशेषपर्यवसानाय रूपकवाक्यमपेक्षते, न तु [1]शरीरपदं अव्यक्तपदेन स्वार्थग्रहणमपेक्षते। अव्यक्तपदवत् अपर्यवसितार्थत्वाभावात्। रूपकप्रयोजनस्यापि वशीकरणविधिनैव लब्धत्वात्। यद्यपि तत्र शरीरस्य वशीकरणं नोक्तं, तथापि, इन्द्रियादीनां वशीकरणविध्युपयोगितया [2]हयत्वादिना रूपणे कर्तव्ये तत्परिपूरणाय शरीरस्यापि रथत्वेन रूपणमावश्यकम्। अतो न तस्याकाङ्क्षा - इति चेत्,

उच्यते—यद्यपि न तस्याकाङ्क्षा स्वारसिकी, तथापि परत्ववाक्ये रूपकवाक्ये च [3]इन्द्रियादिपदानां तुल्यतया प्रत्यभिज्ञानात् रूपकविन्यस्तेभ्य एवेन्द्रियादिभ्यः परत्वं बोध्यत इति सिद्धे, शरीरपदस्य परत्ववाक्ये अश्रवणात् ततः परत्वं केन बोध्यत इत्याकाङ्क्षा समुन्मिषत्येव ॥ ३ ॥

---

1. मु. शरीरपदमपि अव्यक्त 2. आ. हेयत्वादिना

3. मु. इन्द्रियपदानां

## ज्ञेयत्वावचनाच्च ॥ ४ ॥

ज्ञेयत्वेन च सांख्यैः प्रधानं स्मर्यते 'गुणपुरुषान्तरज्ञानात् कैवल्यम्' इति वदद्भिः, न हि गुणस्वरूपमज्ञात्वा गुणेभ्यः पुरुषस्यान्तरं शक्यं ज्ञातुं-इति। क्वचिच्च विभूतिविशेषप्राप्तये प्रधानं ज्ञेयमिति स्मरन्ति। न चेदमिहाव्यक्तं ज्ञेयत्वेनोच्यते। पदमात्रं ह्यव्यक्तशब्दः। नेह 'अव्यक्तं ज्ञातव्यमुपासितव्यं च' इति वाक्यमस्ति। न चानुपदिष्टं पदार्थज्ञानं पुरुषार्थमिति शक्यं प्रतिपत्तुम्। तस्मादपि न अव्यक्तशब्देन प्रधानमभिधीयते। अस्माकं तु, रथरूपकक्लृप्तशरीराद्यनुसरणेन विष्णोरेव परमं पदं दर्शयितुमयमुपन्यास इति, अनवद्यम् ॥ ४ ॥

## वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

अत्राह सांख्यः—'ज्ञेयत्वावचनात्' इत्यसिद्धम्। कथम्? श्रूयते ह्युत्तरत्र अव्यक्तशब्दोदितस्य प्रधानस्य ज्ञेयत्ववचनम्—

'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्।
अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते ॥'
(क. उ. २।३।१५) इति।

अत्र हि, यादृशं शब्दादिहीनं प्रधानं महतः परं स्मृतौ निरूपितं तादृशमेव निचाय्यत्वेन निर्दिष्टं, तस्मात् प्रधानमेवेदं, तदेव च अव्यक्तशब्दनिर्दिष्टमिति।

---

गुणपुरुषान्तरज्ञानादिति। गुणाः सत्त्वरजस्तमांसि प्रधानं, पुरुषो जीवः, तयोरन्तरं भेदः, तज्ज्ञानादित्यर्थः। क्वचिच्च विभूतिविशेषप्राप्तय इति। 'पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः' इत्यादौ। नेहाव्यक्तं ज्ञातव्यमुपासितव्यञ्चेति। यथा चात्र न उपासनाविध्यध्याहारः, तथा 'आध्यानाय प्रयोजनाभावात्' [ब्र. सू. ३-३-१४] इत्यत्र व्यक्तं भविष्यति ॥ ४ ॥

अशब्दमस्पर्शमित्यादिमन्त्रः शब्दादिहीनत्वालिङ्गात् महतःपरत्वलिङ्गाच्च प्रधानपर इति शङ्कितुरभिमानः।

अत्र ब्रूमः—नेह प्रधानं निचाय्यत्वेन निर्दिष्टम्, प्राज्ञो हि इह परमात्मा निचाय्यत्वेन निर्दिष्ट इति गम्यते। कुतः? प्रकरणात्। प्राज्ञस्य हि प्रकरणं विततं वर्तते। 'पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः' इत्यादिनिर्देशात्, 'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते' इति च दुर्ज्ञानत्ववचनेन तस्यैव ज्ञेयत्वाकाङ्क्षणात्। 'यच्छेद्वाङ्मनसी प्राज्ञः' इति च तज्ज्ञानायैव वागादिसंयमस्य विहितत्वात्। मृत्युमुखप्रमोक्षणफलत्वाच्च। न हि प्रधानमात्रं निचाय्य मृत्युमुखात् प्रमुच्यत इति सांख्यैरिष्यते। चेतनात्मविज्ञानाद्धि मृत्युमुखात् प्रमुच्यते इति तेषामभ्युपगमः। सर्वेषु वेदान्तेषु प्राज्ञस्यैवात्मनः अशब्दादिधर्मत्वमभिलप्यते। तस्मात् न प्रधानस्यात्र ज्ञेयत्वं अव्यक्तशब्दनिर्दिष्टत्वं वा ॥ ५ ॥

## त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

इतश्च न प्रधानस्य अव्यक्तशब्दवाच्यत्वं ज्ञेयत्वं वा। यस्मात् त्रयाणामेव पदार्थानां अग्निजीवपरमात्मनां अस्मिन् ग्रन्थे कठवल्लीषु

---

प्राज्ञस्य हि [1]प्रकरणमिति। ननु - अत्र 'यच्छेद्वाङ्मनसी प्राज्ञः' इति प्राज्ञशब्दो जीवे प्रयुक्तः, प्रकरणिनि तु परमात्मनि पुरुषादिशब्दाः प्रयुक्ताः। तथा च प्रकरणिनि परमात्मनि पुरुषादिशब्दे प्रयोक्तव्ये किमिति सूत्रभाष्ययोः प्राज्ञशब्देन परमात्मा व्यवह्रियत इति,

उच्यते—कठवल्लीनां हि जीवाभिन्नपरमात्मप्रतिपादनपरतां त्रयाणामित्युत्तरसूत्रे व्यवस्थापयिष्यति। अतः [2]तमर्थं संक्षेपेण अत्र सूचयितुं जीववाचकशब्देनैव प्रकरणी परमात्मा सूत्रभाष्ययोर्व्यवह्रियते - इति ॥ ५ ॥

ननु - कठवल्लीनां परमात्मप्रकरणत्वेपि यथा अग्निविद्यापि तत्र निरूप्यते, एवं प्रधानविद्यानिरूपणमपि अशब्दमित्यादिमन्त्रेण किं न स्यात्। 'येयं प्रेते'

---

1. आ. हि इदं प्रक　　2. आ. तदर्थं

**वरप्रदानसामर्थ्याद्वक्तव्यतयोपन्यासो दृश्यते । तद्विषय एव च प्रश्नः । न अतोऽन्यस्य प्रश्न उपन्यासो वा अस्ति ।**

**तत्र तावत् 'स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम्' (क. उ. १।१।१।३) इति अग्निविषयः प्रश्नः ।**

**'येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके ।**
**एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः ॥' (क. उ. १।१।२०)**

---

इत्यादिविशिष्यपरमात्मप्रश्नानन्तरमपि 'अन्यच्छ्रेयोऽन्यदुतैव प्रेयः' इत्यादिना सांसारिकफलवर्णनं क्रियते, तद्वत् प्रधानवर्णने काऽनुपपत्तिः—इतिशङ्कानिराकरणार्थं सूत्रम् ।

**वरप्रदानसामर्थ्यात् वक्तव्यतयेति ।** एवमत्रोपाख्यायते–[1]वाजश्रवसस्य ऋषेः नचिकेता नाम पुत्र आस । स च [2]वाजश्रवसेन यज्ञे जरद्गवीषु दक्षिणात्वेन कल्पितासु, 'न एतया दक्षिणया पितुः सफलः क्रतुः भविष्यति' इति मन्यमानः [3]स्वात्मप्रदापनेन क्रतुं सगुणं कारयिष्यामीति 'तात मां कस्मै दास्यसि' इति पुनः पुनः पितरं पप्रच्छ । [4]निर्बन्धक्रुद्धस्तु [5]वाजश्रवसो मृत्यवे ददामीत्युवाच । तदनन्तरं च 'सत्पुत्रस्य यमाय दानं कथं कृतम्' इत्यनुशयानं वाजश्रवसमालक्ष्य, 'क्षणमात्रावस्थायीदं शरीरं, न अत्रासक्त्या प्राचीनैरपि परिपालितं सत्यं परित्यक्तुं शक्यते, अतः प्रेषय मां यमं प्रति' इति नचिकेताः पितरमुक्त्वा, तदनुज्ञया यमसदनं गत्वा तिस्रो रात्रीरुवास । तथाभूतं नचिकेतसं दृष्ट्वा 'यतो मम सदने तिस्रो रात्रीः अनश्नन्नुषितवानसि अतस्त्रीन् वरान् प्रार्थय' इति तं प्रति त्रयो वरा यमेन दत्ताः । तत्र नचिकेताः - यतो यमो मामतिथिं मत्वा वरान् प्रददौ, अतो मम जीवनं सिद्धमेव । [6]परं तु जीवता मया पुनः पितृसमीपं [7]गते, यमसदनादागतं मां पुत्रइति न प्रत्यभिज्ञास्यति, [8]तत्प्रत्यभि-

---

1. आ. वाजश्रवसो
2. आ. वाजश्रवसा
3. मु. स्वात्मप्रदानेन
4. आ. प्रश्ननिर्बन्ध
5. आ. वाजश्रवा
6. मु. परं तु तावता मया
7. मु. गमने
8. आ. प्रत्यभिजानन् वा

**इति जीवविषयः प्रश्नः ।**

**'अन्यत्र धर्मादन्यत्राधर्मात् अन्यत्रास्मात् कृताकृतात् ।**
**अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यसि तद्वद ॥' (क. उ. १।२।१४)**

**इति परमात्मविषयः ।**

---

ज्ञानवान् वा, मदाज्ञामुल्लङ्घ्य पुनः गृहं प्रत्यागतवानिति कुपितःस्यात्, [1]तदुभयं माभूदिति, प्रथमेन वरेण पितुः प्रत्यभिज्ञापूर्वकं प्रीतिरस्त्विति प्रार्थितवान् । यमेनापि तथेत्युक्ते द्वितीयवरः अग्निविद्याविषयः प्रश्नः-सत्वमग्निमिति । सः-सर्ववित्त्वेन प्रसिद्धः । स्वर्ग्यम् - [2]अर्चिरादिमार्गप्राप्यं स्थानं इह स्वर्गपदार्थः । "स्वर्गे लोके न भयं किञ्चनास्ति न तत्र त्वं न जरया बिभेति । उभे तीर्त्वा अशनायापिपासे शोकातिगो मोदते स्वर्गलोके' । इति पूर्ववाक्ये, 'स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेण' इत्युत्तरवाक्ये च, इन्द्रादिस्थानभूतस्वर्गासम्भविधर्मकीर्तनात्, तादृशस्वर्गाय हितं स्वर्ग्यम्, अध्येषि-स्मरसि । तृतीयवरान्तर्गतौ च द्वौ प्रश्नौ—'येयं प्रेते विचिकित्सा' इति 'अन्यत्र धर्मात्' इति च । लोकादिमग्निम्—अग्नेर्लोकादित्वं [3]विराडात्मदृष्ट्यभिप्रायम्, तस्मिन्नग्नौ यथा - यत्संस्थानाः यावतीः - यत्सङ्ख्याकाः याः - शास्त्रसिद्धाः इष्टका विद्यन्ते तास्सर्वा उक्तवान् । 'हन्त त इदं प्रवक्ष्यामि' इति जीवविषयप्रतिवचनप्रतिज्ञा । 'योनिमन्ये प्रपद्यन्ते' इत्यादिना तन्निरूपणम् । तच्च 'देवैरत्रापि विचिकित्सितं पुरा' इत्यादिना 'इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ' इत्यन्तेन महता परमात्मपरप्रबन्धेन व्यवहितम् । अत्र च [4]जीवविषयप्रतिज्ञायां गुह्यंब्रह्मसनातनमिति परब्रह्माभेदाभिप्रायम् । 'मरणानन्तरं आत्मा अस्ति उत नास्ति'इति विचिकित्सितम्, तत्रोत्तरं—मरणं प्राप्य आत्मा भवति - अस्तीति यावत्, यथाचैतत् तथा वक्ष्यामि । योनिं मनुष्यसम्बन्धिनीम्, अन्ये-तदुपयोगिपुण्यादिशालिनः, शरीरत्वाय-शरीरवत्त्वाय,[5]

---

1. आ. अतः तदुभयं
2. मु. अर्चिरादिप्राप्यं
3. आ. विराडात्मना दृष्ट्य
4. जीवविषयेति—जीवविषयप्रतिवचनेत्यर्थः ।
5. आ. शरीरित्वाय

प्रतिवचनमपि 'लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा' (क. उ. १।१।१५) इति अग्निविषयम्।

'हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम्।
यथा च मरणं प्राप्य आत्मा भवति गौतम ॥

योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः।
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्' (क. उ. २।२।६,८)

इति व्यवहितं जीवविषयम्। 'न जायते म्रियते वा विपश्चित्' (क. उ. १।२।१८) इत्यादि बहुप्रपञ्चं परमात्मविषयम्। नैवं प्रधानविषयः प्रश्नोऽस्ति, अपृष्टत्वाच्च अनुपन्यसनीयत्वं तस्येति।

अत्राह—योऽयमात्मविषयः प्रश्नो येयं प्रेते विचिकित्सा मनुष्येऽस्तीति, किं स एवायम् 'अन्यत्र धर्मादन्यत्राधर्मात्' इति पुनरनुकृष्यते? किं वा ततोऽन्योऽयमपूर्वः प्रश्न उत्थाप्यते? इति। किंचातः? स एवायं प्रश्नः पुनरनुकृष्यत इति यद्युच्येत, तदा, द्वयोरात्मविषययोः प्रश्नयोः एकतापत्तेः अग्निविषय आत्मविषयश्च द्वावेव प्रश्नौ इत्यतः, न वक्तव्यं त्रयाणां प्रश्नोपन्यासाविति। अथ अन्योऽयमपूर्वः प्रश्न उत्थाप्यत इत्युच्येत, ततो यथैव वरप्रदानव्यतिरेकेण प्रश्नकल्पनायामदोषः, एवं प्रश्नव्यतिरेकेणापि प्रधानोपन्यासकल्पनायामदोषः स्यात्—इति।

---

देहिनः - जीवाः, स्थाणुं - स्थाणुत्वं, कर्म - पुण्यपापरूपं, श्रुतं - विद्या विहिता प्रतिषिद्धा च, तदनुसारेण।

**नैवं प्रधानविषयः प्रश्नोऽस्तीति।** अयं भावः—अग्निनिरूपणवत् प्रधाननिरूपणं किं न स्यादिति शङ्कितुमशक्यम्। 'येयं प्रेते' इत्यतः प्राक् प्रश्नानुसारेण अग्नेरप्यस्ति प्रकरणम्, प्रधानस्य तु न तथा प्रश्नः—इति।

सूत्रकारवचनविरोधपरिहाराय, अन्यत्रधर्मादिति प्रश्नः 'येयं प्रेते' इति प्रश्नात् अन्य एव स्वीकर्तव्यः, तथा च मदिष्टसिद्धिः-इति मन्वानो विकल्पयति प्रधानवादी—**अत्राहेत्यादिना।**

अत्रोच्यते—नैवं वयमिह वरप्रदानव्यतिरेकेण प्रश्नं कंचित् कल्पयामः, वाक्योपक्रमसामर्थ्यात्। वरप्रदानोपक्रमा हि मृत्युनचिकेतःसंवादरूपा वाक्यप्रवृत्तिः आसमाप्तेः कठवल्लीनां लक्ष्यते। मृत्युः किल नचिकेतसे पित्रा प्रहिताय त्रीन् वरान् प्रददौ। नचिकेताः किल तेषां प्रथमेन वरेण पितुः सौमनस्यं वव्रे। द्वितीयेन अग्निविद्याम्। तृतीयेन आत्मविद्याम्, 'येयं प्रेते' इति। 'वराणामेष वरस्तृतीयः' (क. उ. १।१।२०) इति लिङ्गात्। तत्र यदि अन्यत्रधर्मादिति अन्योऽयमपूर्वः प्रश्न उत्थाप्येत, ततो वरप्रदानव्यतिरेकेणापि प्रश्नकल्पनात् वाक्यं बाध्येत।

ननु प्रष्टव्यभेदात् अपूर्वोऽयं प्रश्नो भवितुमर्हति। पूर्वो हि प्रश्नो जीवविषयः, 'येयं प्रेते विचिकित्सा मनुष्ये-अस्ति नास्ति' इति विचिकित्साभिधानात्। जीवश्च धर्मादिगोचरत्वात् न अन्यत्रधर्मादिति प्रश्नमर्हति। प्राज्ञस्तु धर्माद्यतीतत्वात् अन्यत्रधर्मादिति प्रश्नमर्हति। प्रश्नच्छाया च न समाना लक्ष्यते। पूर्वस्य अस्तित्वनास्तित्वविषयत्वात्, उत्तरस्य धर्माद्यतीतवस्तुविषयत्वात्। तस्मात् प्रत्यभिज्ञानाभावात् प्रश्नभेदः, न पूर्वस्यैवोत्तरत्रानुकर्षणम् - इति चेत्—

---

सूत्रविरोधमुत्तरत्रपरिहरिष्यामीत्यभिप्रेत्य, उपक्रमगतवरत्रित्वपर्यालोचनया अन्यत्रधर्मादित्यादि न अपूर्वः प्रश्न इत्याह—अत्रोच्यत इति। वाक्यं बाध्येतेति। तथा सति चतुर्थवरत्वापत्त्या[1] तं प्रति त्रीन्वरान्वृणीष्वेति वाक्यं बाध्येतेति भावः। अपि च 'एतत् त्रयाणां प्रथमं वरं वृणे' 'एतद्द्वितीयेन वृणे वरेण' 'वराणामेष वरस्तृतीयः' इति वरत्रित्वमेव यथोपक्रममुपसंहृतम्। तद्बाधश्च न न्याय्यः।

पूर्वं सूत्रविरोधपरिहाराय अन्यत्रधर्मादित्यादिः अन्य [2]एव प्रश्न इति शङ्कितम्। इदानीं श्रुतिस्वारस्यानुसारेण अन्यत्वं शङ्कते—नन्वित्यादिना।

---

1. मु. 'तं' नास्ति　　2. मु. 'एव' नास्ति

ननु-उपक्रमगतवरत्रित्वानुरोधेन 'येयं प्रेते' इत्यस्यैव [1]इदमनुकर्षणं अन्यत्रधर्मादिति [2]इति कल्प्यते। न च जीवविषयस्य तस्य कथं परमात्मविषयकेणोत्तरेणैकार्थ्यं कल्प्यत इति वाच्यम्। 'येयं प्रेते' इत्यस्य, मनुष्ये प्रेते-मृते सति अयं मनुष्यः अस्ति उत नास्तीति [3]यथाश्रुतोऽर्थः प्रकृते विवक्षितुं न शक्यते। मरणानन्तरं सविशेषमुक्तिपर्यन्तमनुयायिनो देहातिरिक्तस्यात्मनो निर्णीततया नचिकेतसः तावन्मात्रस्य प्रष्टव्यत्वानुपपत्तेः। अतः 'प्रेते मनुष्ये' इत्यस्य अयमर्थः - प्रकर्षेण इते-शरीरात् अत्यन्तं निर्गते - आत्मसाक्षात्कारविध्वस्तसर्वबन्धे निर्विशेषचैतन्यमात्रतयाऽवस्थिते - इति। तथा च मुक्तजीवस्य परमात्मरूपत्वात् तद्विषयकेण 'येयं प्रेते' इत्यनेन अन्यत्रधर्मादित्यादेरैकार्थ्ये न काचिदनुपपत्तिः—इति चेत्,

अत्रोच्यते—यद्यपि, 'जरद्गवीनां दाने क्रतुसाद्गुण्यं न भविष्यति, अतः मां कस्मै दास्यसि' इति पितरं प्रति पृष्टवान्नचिकेतसा, तस्य कर्मश्रद्धा अवगम्यते, 'स्वर्गे लोके न भयं किञ्चन' इति अग्निविद्याफलस्य चानुकीर्तनं तत्कृतमस्ति, न चेदं देहातिरिक्तात्मज्ञानं विना सङ्गच्छते। तथाऽपि 'येयं प्रेते' इत्यस्य न यथाश्रुतार्थता परित्यक्तुं शक्यते। 'नचिकेतो मरणं मानुप्राक्षीः' 'यत् साम्पराये महति ब्रूहि नस्तत्' 'यथा च मरणं प्राप्य आत्मा भवति' इत्युत्तरसन्दर्भे एकरूपेण कीर्तितस्य यथाश्रुतार्थस्य त्यागायोगात्, देहातिरिक्तात्मनिश्चयवतोऽपि नचिकेतसः तद्दाढर्याय पुनः प्रश्नोपपत्तेश्च। अतो देहातिरिक्तजीवमात्रविषयस्यास्य प्रश्नस्य कथं अन्यत्रधर्मादित्यनेनैकार्थ्यं-[4]उपपादयितुं शक्यम्। यमेन वरत्रयदानस्य प्रतिज्ञातत्वेऽपि यथा नचिकेतसा अप्रार्थितावेव द्वौ वरौ तस्मै पुनः दत्तौ, एवं यमेन देयतया अप्रतिज्ञातस्य चतुर्थवरस्य नचिकेतसा प्रार्थनं सम्भवत्येव। पूर्वत्र हि, यमेन यथोक्तामग्निविद्यां यदा नचिकेता उज्जग्राह, तदा तस्मै यमो नानावर्णां स्रजं दत्तवान्, मदुक्तस्याग्नेः तवैव नाम्ना प्रसिद्धिर्भविष्यतीति चोक्तवान्-इति प्रतिपादितं 'स चापि तत् प्रत्यवदद्यथोक्तं अथास्य मृत्युः पुनरेवाह तुष्टः। तमब्रवीत् प्रीयमाणो

1. मु. 'इदं' नास्ति
2. मु. 'इति' नास्ति
3. आ. यथाभूतोऽर्थः
4. आ. आपादयितुं

न - जीवप्राज्ञयोरेकत्वाभ्युपगमात् । भवेत् प्रष्टव्यभेदात् प्रश्नभेदः, यद्यन्यो जीवः प्राज्ञात् स्यात् । न त्वन्यत्वमस्ति, तत्त्वमसीत्यादिश्रुत्यन्तरेभ्यः । इह च अन्यत्रधर्मादित्यस्य प्रश्नस्य प्रतिवचनं 'न जायते म्रियते वा विपश्चित्' इति जन्ममरणप्रतिषेधेन प्रतिपाद्यमानं शारीरपरमेश्वरयोरभेदं दर्शयति । सति हि प्रसङ्गे प्रतिषेधो भागी भवति । प्रसङ्गश्च जन्ममरणयोः शरीरसंस्पर्शात् शारीरस्य भवति, न परमेश्वरस्य । तथा—

'स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥' (क. उ. २।१।४)

इति स्वप्नजागरितदृशो जीवस्यैव महत्त्वविभुत्वविशेषणस्य मननेन शोकविच्छेदं दर्शयन् न प्राज्ञादन्यो जीव इति दर्शयति । प्राज्ञविज्ञानाद्धि शोकविच्छेद इति वेदान्तसिद्धान्तः । तथा अग्रे—

'यदेवेह तदमुत्र यदमुत्र तदन्विह ।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ।' (क. उ. २।१।१०)

---

महात्मा वरं तवेहाद्य ददामि भूयः । तवैव नाम्ना भवितायमग्निः सृङ्कांश्चेमामनेकरूपां गृहाण ' इति वाक्यैः । अतः अन्यत्रधर्मादित्यादेश्चतुर्थवरत्वेऽपि न काचिदनुपपत्तिः ।

**जीवप्राज्ञयोरेकत्वाभ्युपगमादिति ।** पूर्वत्र हि वरद्वयं नचिकेतसा अप्रार्थितमपि यमेन दत्तमिति ' वरं तवेहाद्य ददामि भूयः' इति यमवचनादवगम्यते, भूयःपदस्य वृतादधिकं इत्यर्थकत्वात् । अन्यत्रधर्मादित्यत्र तु 'अधिकं याचे' इत्यस्य द्योतकं किमपि नास्ति, अतो नायमन्यः प्रश्न इति भावः । देहातिरिक्तात्मगोचरप्रश्नश्च त्वंपदार्थशोधनद्वारा परमात्माभेदपर्यवसाय्येव - इत्यभिप्रेत्य संग्रहवाक्यं विवृणोति—**भवेत्प्रष्टव्यभेदादिति ।**

**स्वप्नजागरितदृशो जीवस्यैव महत्त्वविभुत्वविशेषणस्येति ।** ननु - अयं जीवः स्वप्नजागरिते येन पश्यति तस्य परमात्मनो महत्त्वादिकमवगम्यते, न तु स्वप्नदृश एव, तथा हि सति उभौयोऽनुपश्यतीति भाव्यम् - इति चेत्,

इति जीवप्राज्ञभेददृष्टिमपवदति। तथा जीवविषयस्यास्तित्वनास्तित्वप्रश्नस्यानन्तरम् 'अन्यं वरं नचिकेतो वृणीष्व' इत्यारभ्य मृत्युना तैस्तैः कामैः प्रलोभ्यमानोऽपि नचिकेता यदा न चचाल, तदा एनं मृत्युः अभ्युदयनिःश्रेयसविभागप्रदर्शनेन विद्याविद्याविभागप्रदर्शनेन च 'विद्याभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवोऽलोलुपन्त' (क. उ. १।२।४) इति प्रशस्य प्रश्नमपि तदीयं प्रशंसन् यदुवाच—

'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्।
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति॥'
(क. उ. १।२।१२)

इति, तेनापि जीवप्राज्ञयोरभेद एवेह विवक्षित इति गम्यते। यत्प्रश्ननिमित्तां च प्रशंसां महतीं मृत्योः प्रत्यपद्यत नचिकेताः यदि तं विहाय प्रशंसानन्तरं अन्यमेव प्रश्नं उपक्षिपेत्, अस्थान एव सा सर्वा प्रशंसा प्रसारिता स्यात्। तस्मात् 'येयं प्रेते' इत्यस्यैव प्रश्नस्य एतदनुकर्षणम्—'अन्यत्र धर्मात्' इति। यत्तु प्रश्नच्छायावैलक्षण्यमुक्तं तददूषणम्।

येनेति तृतीया प्रथमार्थं एव प्रकृते विवक्षिता। अथवा, येन विशुद्धसाक्षिणा विशिष्टो जीवः स्वप्नादिकं पश्यति - इति विवक्षितम्। [1]तथाकल्पनं च, 'पराञ्चि खानि व्यतृणत् स्वयंभूः तस्मात् पराङ् पश्यति नान्तरात्मन्। कश्चिद्धीरः प्रत्यगात्मानमैक्षत् आवृत्तचक्षुरमृतत्वमिच्छन्' [2]इति पूर्वमन्त्रे 'य इमं मध्वदं वेद आत्मानं जीवमन्तिकात्। ईशानं भूतभव्यस्य न ततो विजुगुप्सते' इत्युत्तरमन्त्रे च प्रत्यगभिन्नात्मविज्ञानस्यैव मोक्षहेतुत्वावगमेन अस्यापि तदैकार्थ्यस्यैव न्याय्यत्वात् उपेयते।

यत्प्रश्ननिमित्तां च प्रशंसां महतीमिति। ननु - जीवविषयप्रश्नस्य प्रशंसा 'पुनरपि प्रश्नान्तरं करोतु' इत्यभिप्रायवतो मृत्योः नचिकेतसि उत्साहवर्धनार्था भविष्यति, अतो न प्रशंसाविरोधः-इति चेत्,

उच्यते—पूर्वसन्दर्भपर्यालोचनया हि 'येयं प्रेते' इति यत् पृष्टं

1. तथाकल्पनं—प्रकारद्वयेनापि जीवब्रह्माभेदवाक्यार्थकल्पनं। 2. मु. इति मन्त्रे

तदतिरिक्तं मुमुक्षूणां प्रष्टव्यं नास्तीति मृत्योरभिप्रायोऽवगम्यते। तथा हि— नचिकेतसा 'येयं प्रेते' इति देहातिरिक्ते आत्मनि पृष्टे मृत्युर्वितर्कयामास— देहातिरिक्तात्मज्ञानवानयं नचिकेताः, किं तावन्मात्रमेव पुनः दार्ढ्यार्थं कर्मसु प्रवृत्त्युपयोगितया पृच्छति? आहोस्वित् देहातिरिक्तस्यैव जीवस्य यद्विशुद्धं परमात्मस्वरूपं तावत्पर्यन्तं देहातिरिक्तत्वोपक्षेपेण क्रमेण पृच्छामीति मन्यते?। तत्र, आद्ये पक्षे उत्तरं सुखेनैव दातुं शक्यम्, द्वितीयपक्षे तु तद्ग्रहणाधिकारोऽस्य विचारणीयः-इत्यभिप्रायेण तत्पृष्टस्यात्यन्तगहनता उपक्षिप्ता- 'देवैरत्रापि विचिकित्सितं पुरा न हि सुज्ञेयमणुरेष धर्मः। अन्यं वरं नचिकेतो वृणीष्व मा मोपरोत्सीः अति मा सृजैनम्' इति। तथा यमवचनं श्रुत्वा नचिकेता उवाच-'देवैरत्रापि विचिकित्सितं किल त्वं च मृत्यो यन्न सुज्ञेयमात्थ। वक्ता चास्य त्वादृगन्यो न लभ्यो नान्यो वरस्तुल्य एतस्य कश्चित्' इति। ततो यमो नचिकेतसः सूक्ष्मार्थग्रहणे धैर्यमुपलभ्य 'अथापि कामी सन् कर्माधिकारोपयुक्तमेव किं पृच्छति' इतिसंशयनिवृत्त्यर्थं [1]पुनः अलौकिकैरद्भुतैः कामैः प्रलोभयामास। नचिकेतास्तु तेषु सर्वेषु अनासक्त एवाभवत्। ततो मृत्युः 'नचिकेताः सर्वतो विरक्तः - 'अजीर्यताममृतानामुपेत्य जीर्यन् मर्त्यः क्वधःस्थः प्रजानन्। अभिध्यायन् वर्णरतिप्रमोदान् अतिदीर्घे जीविते को रमेत'। कुः - भूमिः, सैव अधोभागः, तत्र विद्यमानः मर्त्यः, वर्णाः - स्त्र्यादयः, तेषु रतिः-आसक्तिः तत्कृताः प्रमोदाः - सुखविशेषाः, तान् अनित्यत्वादिदोषयुक्ततया अभिध्यायन्, अमृतानां - मुक्तानां युष्मादृशानां सकाशं उपेत्य अतिदीर्घे जीविते को रमेत'- इति वदन् मुमुक्षुर्भवतीति निश्चित्य; 'अविद्याख्यकर्मसाध्यमभ्युदयाख्यं मन्दमतिः प्रार्थयमानः पुनःपुनः संसरति, विद्यासाध्यनिश्श्रेयसार्थी तु न पुनः संसारं प्राप्नोति, त्वां तु विद्याभीप्सिनं मन्ये, यतो बहवः कामाः त्वां न लोलुपन्त - न [2]मोक्षमार्गादुत्थानं [3]कृतवन्तः' इति ब्रह्मविद्यार्थितया तं प्रशंसयामास। अतो मृत्युना कृतेयं प्रशंसा न प्रश्नान्तरोत्थापनार्था, अपि तु 'अयमेव प्रश्नः सर्वातिशायी, न अतोऽन्यत् प्रष्टव्यमस्ति' इत्यभिप्रायेव।

अपि च, नचिकेतसोऽपि न प्रश्नान्तरे तात्पर्यमिति 'नान्यो वरस्तुल्य

---

1. आ. पुनःपुनः 2. मु. मोक्षमार्गच्छेदनं 3. कृतवन्तः-कारितवन्तः।

एतस्य कश्चित्' 'वरस्तु मे वरणीयस्स एव' 'नान्यं तस्मान्नचिकेता वृणीते' इति येयंप्रेतइतिप्रश्नाधिकारगतैस्तद्वचनैरेव अवगम्यते । ततश्च 'येयं प्रेते' इत्यस्यैवानुकर्षणं अन्यत्रधर्मादित्यादि । पृष्टस्यैव पुनःप्रश्नस्तु, संक्षेपेणोक्तस्य विस्तरेण प्रतिपादनार्थः । 'येयं प्रेते' इति देहातिरिक्तोपक्षेपेण परमात्मपर्यन्तं[1] जीवस्वरूपं नचिकेतसा पृष्टमिति निर्धार्य, देहातिरिक्तात्मज्ञानरहितानां देहात्मभ्रमवतां परलोको नास्तीति निन्दाव्याजेन 'अविद्यायामन्तरे वर्तमानाः' इत्यादिना 'अयं लोको नास्ति पर इतिमानी पुनःपुनर्वशमापद्यते मे' इत्यन्तेन देहातिरेकमात्मनः संक्षेपेण प्रतिपाद्य, 'देहविविक्त आत्मा परमात्माभिन्नः' इति तंदुर्दर्शमितिवाक्येन सूचयामास ।

अत्र, तमिति पदं 'येयं प्रेते' इतिप्रश्नविषयपरामर्शकम्, तदधिकारपठितत्वात् । दुर्दर्शत्वे हेतुः गूढमिति । तदुपपादयति अनुप्रविष्टमिति । कुत्रेत्यपेक्षायां गुहाहितं, गुहा अत्र पञ्चकोशरूपा, अध्यात्माधिकारात् । गुहायास्सुगमत्वे दुर्दर्शत्वं कथं इत्यत आह - गह्वरेष्ठं - कण्टकवृक्षस्थानीया अनेके ये देहाभिमानादयः परमात्मावगतिप्रतिबन्धकाः, तत्सङ्कीर्णायां गुहायां विद्यमानं - एवंविधं प्रत्यञ्चम्, अध्यात्मयोगः - 'यच्छेद्वाङ्मनसी प्राज्ञः' इत्यादिना वक्ष्यमाणः, तस्याधिगमः - प्राप्तिः, तेन देवं - परमात्मानं मत्वा - साक्षात्कृत्य हर्षशोकोपलक्षितं संसारं जहातीति । अत्र तमितिपदपरामृष्टे जीवे संसारनिवृत्तिप्रयोजकज्ञानविषयत्वा[2]ध्यात्मयोगाधिगमजन्यमतिविषयत्वलिङ्गाभ्यां देवश्रुत्या च परमात्माभेदो बोध्यते ।

तथा च अन्यत्रधर्मादन्यत्राधर्मादित्यतः प्राक्तनेन सन्दर्भेण जीवस्यैव परमात्माभेदेन संक्षिप्ततया प्रतिपादितस्य विशेषेण प्रतिपित्सया अन्यत्रधर्मादित्यादिप्रश्न इति श्लिष्यते । 'न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत्' इति वाक्येन अध्रुवैः - कर्मभिः ध्रुवं-नित्यं परमात्मस्वरूपं न प्राप्यत इति संक्षेपावसरोक्तं धर्मादिफलविलक्षणत्वं कालास्पृष्टत्वं च अन्यत्रधर्मादित्यत्र नचिकेतसा अनूदितं वक्तुरुत्साहवर्धनार्थम् । जीवप्रश्नस्य परमात्मपर्यन्तं नयनं च तयोरभेदं सूचयति ।

---

1. मु. पर्यन्तजीवस्वरूपं 2. आ. अध्यात्मयोगजन्य

तदीयस्यैव विशेषस्य पुनः पृच्छ्यमानत्वात् - पूर्वत्र हि देहादिव्यतिरिक्तस्यात्मनः अस्तित्वं पृष्टं उत्तरत्र तु तस्यैव असंसारित्वं पृच्छ्यत इति। यावद्धि अविद्या न निवर्तते तावत् धर्मादिगोचरत्वं जीवस्य जीवत्वं च न निवर्तते। तन्निवृत्तौ तु प्राज्ञ एव तत्त्वमसीति श्रुत्या प्रत्याय्यते। न च अविद्यावत्त्वे तदपगमे च वस्तुनः कश्चिद्विशेषोऽस्ति। यथा - कश्चित् संतमसे पतितां कांचिद्रज्जुं अहिं मन्यमानो भीतो वेपमानः पलायते, तं चापरो ब्रूयात् 'मा भैषीः नायमही रज्जुरेव' इति, स च तदुपश्रुत्य अहिकृतं भयं उत्सृजेत् वेपथुं पलायनं च, न त्वहिबुद्धिकाले तदपगमकाले च वस्तुनः कश्चिद्विशेषः स्यात्, तथैव एतदपि द्रष्टव्यम्। ततश्च 'न जायते म्रियते वा' इत्येवमाद्यपि भवति अस्तित्वप्रश्नस्य प्रतिवचनम्। सूत्रं तु अविद्याकल्पितजीवप्राज्ञभेदापेक्षया योजयितव्यम्।

---

यदेव इह - देहे जीवस्वरूपं, तदेव अमुत्र-आदित्यादिषु विद्यमानं परमात्मस्वरूपं, नानात्वदर्शिनस्तु मरणंप्राप्यपुनर्मरणं इत्येवंरूपस्संसारः - इति च प्रतिपादयन् यदेवेहेत्यादिर्मन्त्रो जीवपरयोर्भेदं न सहते।

अतः कठवल्लीनां प्रत्यगभिन्नब्रह्मप्रकरणत्वे श्रुतिलिङ्गादिपर्यालोचनया स्थिते, 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' इत्यादौ यत् चेतनानां बहुत्वप्रतिपादनं [1]ततश्च जीवपरमात्मनोर्भेदप्रतिपादनं तत् व्यवहारदृष्ट्या औपाधिकं अपवादशेषतया व्याख्येयम्। 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' 'मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति' इति बहुशो भेददृष्ट्यपवादात्। ततश्च, प्रत्यगभिन्नब्रह्मप्रकरणे संसारगत्यादिनिरूपणस्य निन्दाद्वारा ब्रह्मज्ञानप्रशंसार्थत्वात् उपयोगसम्भवेऽपि न तत्त्वज्ञानविरोधिनः प्रधाननिरूपणस्य सङ्गतिरिति तात्पर्यार्थः।

'येयं प्रेते' इत्यस्य [2]अन्यत्रधर्मादित्यस्य च प्रश्नस्य विषयैक्येनैकत्वे त्रयाणामितिसूत्रविरोधः शङ्कितः, तं परिहरति—**सूत्रं त्विति** ॥ ६ ॥

---

1. आ. ततश्च परमात्मनो भेद 2. मु. अन्यत्रधर्मादिति प्रश्नस्य च

एकत्वेऽपि हि आत्मविषयस्य प्रश्नस्य, प्रायणावस्थायां देहव्यतिरिक्तास्तित्वमात्रविचिकित्सनात् कर्तृत्वादिसंसारस्वभावानपोहनाच्च पूर्वस्य पर्यायस्य जीवविषयत्वमुत्प्रेक्ष्यते, उत्तरस्य तु धर्माद्यत्ययसंकीर्तनात् प्राज्ञविषयत्वमिति। ततश्च युक्ता अग्निजीवपरमात्मकल्पना। प्रधानकल्पनायां तु न वरप्रदानं न प्रश्नो न प्रतिवचनमिति वैषम्यम् ॥ ६ ॥

## महद्वच्च ॥ ७ ॥

यथा महच्छब्दः सांख्यैः सत्तामात्रेऽपि प्रथमजे प्रयुक्तो न तमेव वैदिकेऽपि प्रयोगे अभिधत्ते, 'बुद्धेरात्मा महान् परः' (क. उ. १।३।१०), 'महान्तं विभुमात्मानम्' (क. उ. १।२।२२), 'वेदाहमेतं पुरुषं महान्तम्' (श्वे. उ. ३।८) इत्येवमादौ आत्मशब्दप्रयोगादिभ्यो हेतुभ्यः। तथा अव्यक्तशब्दोऽपि न वैदिके प्रयोगे प्रधानमभिधातुमर्हति। अतश्च नास्त्यानुमानिकस्य शब्दवत्त्वम् ॥ ७ ॥

२. चमसाधिकरणम्

## चमसवदविशेषात् ॥ ८ ॥

पुनरपि प्रधानवादी 'अशब्दत्वं प्रधानस्यासिद्धं' इत्याह। कस्मात्? मन्त्रवर्णात्—

---

सत्तामात्रे। भावप्रत्ययार्थो न विवक्षितः। सन्मात्रे महत्तत्त्वे।

ननु—साङ्ख्येन 'बुद्धेरात्मा महान् परः' इत्यत्र महच्छब्दो महत्तत्त्वपर एवेत्युच्यते, ततश्च तत्र महत्तत्त्वप्रतिपादनाभावं सिद्धवत्कृत्य तद्दृष्टान्तेन अव्यक्तपदं न साङ्ख्यीयप्रकृतिपरमिति कथं वक्तुं शक्यम् - इति चेत्,

उच्यते—अनेन सूत्रेण, दृष्टान्तव्याजेन 'बुद्धेरात्मा महान् परः' इति वाक्यं न साङ्ख्यीयमहत्तत्त्वपरं-इत्येव विवक्षितम्। अपूर्वतया बोधनीयोऽप्यर्थो दृष्टान्ततया निबध्यमानः समुच्चयोपमास्थले 'इतराण्यपि रक्षांसि पेतुर्वानरकोटिषु। रजांसि समरोत्थानि तच्छोणितनदीष्विव ॥' इत्यादौ दृश्यते ॥ ७ ॥

इति आनुमानिकाधिकरणम् ॥ १ ॥

**'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः।**
**अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥'**
**(श्वे. उ. ४।५) इति।**

**अत्र हि मन्त्रे लोहितशुक्लकृष्णशब्दैः रजःसत्त्वतमांस्यभिधीयन्ते। लोहितं रजः, रञ्जनात्मकत्वात्। शुक्लं सत्वं, प्रकाशात्मकत्वात्।**

---

'अजामेकां' इत्यादिमन्त्रः श्वेताश्वतरगतः किं साङ्ख्यतन्त्रसिद्धं प्रधानं प्रतिपादयति, उत छान्दोग्ये प्रतिपादितानि तेजोऽबन्नानि प्रतिपादयति-इति संशयः।

तत्र, पूर्वस्मिन्नधिकरणे-महतःपरमव्यक्तमित्यत्र अव्यक्तपदेन साङ्ख्यतन्त्र-सिद्धं प्रधानं न ग्राह्यम्, अपि तु तस्यामेव शाखायां सन्निहितं शरीरमेव ग्राह्यम्, सन्निहितस्य वैदिकस्य ग्रहणसम्भवे विप्रकृष्टस्य तान्त्रिकस्य प्रधानस्य ग्रहणं न न्याय्यम्- इत्युक्तम्। इह तु सन्निहितं अजापदग्रहणयोग्यं किमपि नोपलभ्यते। ननु-इहापि 'देवात्मशक्तिं स्वगुणैर्निगूढाम्' एकोऽवर्णो बहुधा शक्तियोगात्' इत्यादिपूर्वमन्त्रे 'अस्मान्मायी सृजते विश्वमेतत्' 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इत्याद्युत्तरमन्त्रे च दैवी शक्तिः प्रस्तुतास्ति। तथा च सन्निहितं अजापदग्रहणयोग्यं सिद्धान्ताभिमतं अस्त्येव-इति चेत्, सत्यम्। कृत्वाचिन्तैषा न्यायव्युत्पादनार्था। ननु तथापि शाखान्तराम्नातानां वैदिकत्वेन प्रत्यासन्नानां तेजोऽबन्नानां ग्रहणसम्भवे न अवैदिकस्य प्रधानस्य ग्रहणं न्याय्यमिति चेत्, न-तत्र अजापदरूढेर्वा तद्योगस्य वा असम्भवेन तेषामपि ग्रहीतुमनुचितत्वात्। अतः अजापदेन साङ्ख्यतन्त्र-सिद्धप्रधानमेव ग्राह्यम्- इति पूर्वपक्षिणोऽभिप्रायः।

अमुं मन्त्रं साङ्ख्यतन्त्रसिद्धप्रधानपरतया योजयन् पूर्वपक्षमाह—**अत्र हि मन्त्र इत्यादि। लोहितं रजः रञ्जनात्मकत्वादिति।** अरुणिमदर्शने चित्तस्य आसक्तिरूपः कोऽपि विकारविशेषो जायते, स रजोगुणकार्यं, तज्ज-नकत्वं उभयोः साधारणो गुणः। **प्रकाशात्मकत्वादिति।** धवलवस्तु-दर्शने चित्तस्य प्रसन्नतारूपः प्रकाशाख्यः कोऽपि विकारविशेषः जायते, स सत्त्वकार्यं, तज्जनकत्वं उभयोः साधारणो गुणः। एवं आवरणात्मकत्वात् इत्यत्रापि द्रष्टव्यम्।

**कृष्णं तमः, आवरणात्मकत्वात् । तेषां साम्यावस्था अवयवधर्मैर्व्यपदिश्यते लोहितशुक्लकृष्णेति । न जायत इति च अजा स्यात्, 'मूलप्रकृतिरविकृतिः' इत्यभ्युपगमात् । नन्वजाशब्दः छागायां रूढः । बाढम् । सा तु रूढिरिह नाश्रयितुं शक्या, विद्याप्रकरणात् । सा च बह्वीः प्रजाः त्रैगुण्यान्विता जनयति । तां प्रकृतिं अज एकः पुरुषो जुषमाणः-प्रीयमाणः सेवमानो वा अनुशेते - तामेवाविद्ययाऽऽत्मत्वेनोपगम्य सुखी दुःखी मूढोऽहमिति अविवेकितया संसरति । अन्यः पुनरजः**

---

ननु - तथासति लोहितादिपदानां पूर्वपक्षिमते गौणत्वं स्यात्, सिद्धान्तिमते तु मुख्यत्वमेवेति, भूयोऽनुग्रहन्यायेन अजापदमेकं तेजोऽबन्नेष्वेव यथाकथञ्चिद्व्याख्येयम् - इति चेत्, न-लोहितादिपदानां गुणमात्रवाचकत्वेन तेजआदिधर्मिषु लाक्षणिकत्वाविशेषात् । अपि च बह्वीःप्रजास्सृजमानामिति कृत्प्रत्ययोक्तं स्वातन्त्र्यं, 'अजो ह्येको जुषमाणः, जहात्येनां भुक्तभोगामजोऽन्यः' इति जीवनानात्वं, विद्यमानाया एव प्रकृतेः त्यागश्च, जीवैकत्वं प्रकृते ब्रह्मपरतन्त्रतां ब्रह्मज्ञानबाध्यतां च वदतः सिद्धान्तिनो मते न समञ्जसम् । **मूलप्रकृतिरविकृतिरित्यभ्युपगमादिति ।** मूलप्रकृतिः-प्रधानम्, अविकृतिः - अकार्यं इति साङ्ख्यानामभ्युपगमः ।

तटस्थःशङ्कते—**नन्विति । छागायां रूढ इति ।** यद्यपि 'जातेरस्त्रीविषयादयोपधात्' [पा. सू. ४.१.६३] इति सूत्रेण छाग्यामिति भाव्यं, तथापि अजादेराकृतिगणत्वमुपेत्य छागायामित्युक्तम् ।

भुक्तभोगामित्येतदनुपपन्नम्, भोगस्य सुखदुःखानुभवलक्षणस्य भोग्यत्वासम्भवात् । न च - तथापि भुक्तपदं प्राप्त्यर्थकमस्तु, तथा च प्राप्तभोगामित्यर्थकथने न काचिदनुपपत्तिः - इति वाच्यम् । भोगस्य [1]पुरुषावसायितया प्रधाने

---

1. **पुरुषावसायितयेति**—पुरुषाश्रिततयेत्यर्थः । **निर्विशेषेऽपि पुरुषे भोक्तृत्वं** साङ्ख्यैरभ्युपगतम् । यथाऽऽहुः— "सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात् । पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च" ॥ इति । परन्तु न तत् स्वरूपातिरिक्तम्, अतो न निर्विशेषत्वहानिः-इति तेषामभिमानः ।

पुरुष उत्पन्नविवेकज्ञानो विरक्तो जहाति एनां - प्रकृतिं भुक्तभोगां-कृतभोगापवर्गां परित्यजति, मुच्यत इत्यर्थः। तस्मात् श्रुतिमूलैव प्रधानादिकल्पना कापिलानाम् - इति ।

एवं प्राप्ते ब्रूमः—न अनेन मन्त्रेण श्रुतिमत्त्वं सांख्यवादस्य शक्यमाश्रयितुम् । न ह्ययं मन्त्रः स्वातन्त्र्येण कंचिदपि वादं समर्थयितुमुत्सहते, सर्वत्रापि यया कयाचित् कल्पनया अजात्वादिसंपादनोप-

---

तत्प्राप्त्यसम्भवात् - इत्याशङ्क्य, भुक्तपदं कृतेत्यर्थकतया व्याकुर्वन् भोगपदमपि अपववर्गोपलक्षकतया व्याचष्टे—**कृतभोगापवर्गामिति** । अत्र अपवर्गपदं, अपवृज्यते अनेनेति अपवर्गः - प्रधानपुरुषविवेकज्ञानम् - इति करणसाधनं द्रष्टव्यम् । प्रकृतिविविक्ततयावस्थितस्य पुरुषस्य अपवर्गपदार्थस्य नित्यतया प्रकृतिकृतत्वानुपपत्तेः । अथवा अविवेकध्वंसोऽपवर्गपदार्थोऽस्तु । तथा च भावसाधनत्वेऽपि न काचिदनुपपत्तिः । प्रधानं हि यदा बुद्धिद्वारा सुखदुःखात्मना परिणतं भवति तदा पुरुषः तत्प्रकाशतामापन्नो भोग इत्युच्यते । अतः प्रधानकृतत्वं भोगस्य । एवं बुद्धौ विवेकात्मतया परिणतायां अविवेकः प्रतिबद्धो भवतीति, अपवर्गः करणसाधनत्वपक्षे भावसाधनत्वपक्षे च प्रधानकृतः ।

अत्र च भोगपदस्यापवर्गोपलक्षकत्वं, उभयहेतुभूतप्रधानस्य अन्यतरहेतुत्वोक्तिः निस्तात्पर्या स्यादिति, तन्निवृत्तये ।

**नानेनमन्त्रेणेति** । अयं भावः—अजापदस्य रूढ्यर्थग्रहणं न सम्भवतीति उभयोरपि सम्मतम् । ततश्च रूढ्यर्थात् प्रच्युतस्य न यौगिकत्वं कल्पनीयम्, रूढिपूर्वलक्षणाया योगमपेक्ष्यापि [1]बलवत्त्वात् । तत्र च लक्षणया कस्य ग्रहणमिति विशेषनिर्धारणाय यत्नान्तरमास्थेयं, न तु एतन्मन्त्रमात्रपर्यालोचनया झटिति साङ्ख्यप्रकृतिरिति निर्धारयितुं शक्यम् । यथा 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः तस्मिन् यशो निहितं विश्वरूपं, तस्यासत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदाना' इतिमन्त्रगतचमसादिपदेषु प्रकरणाद्यनुसारेण मुख्यार्थात् प्रच्युतेषु वाक्यान्तरं विना तन्मन्त्रमात्रपर्यालोचनया निर्धारणं [2]न भवति, तद्वत् ।

---

1. मु. बलवत्त्वाल्लक्षणया 2. मु. न सम्भवति

पत्तेः सांख्यवाद एव इहाभिप्रेत इति विशेषावधारणकारणाभावात् । चमसवत् - यथा हि 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' (बृ.उ. २।२।३) इत्यस्मिन् मन्त्रे स्वातन्त्र्येण 'अयं नामासौ चमसोऽभिप्रेतः' इति न शक्यते निरूपयितुम् । सर्वत्रापि यथाकथंचित् अर्वाग्बिलत्वादिकल्पनोपपत्तेः । एवमिहाप्यविशेषः अजामेकामित्यस्य मन्त्रस्य । न अस्मिन् मन्त्रे प्रधानमेव अजाभिप्रेतेति शक्यते नियन्तुम् ॥ ८ ॥

तत्र तु 'इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' इति वाक्यशेषात् चमसविशेषप्रतिपत्तिर्भवति । इह पुनः केयमजा प्रतिपत्तव्येति ? अत्र ब्रूमः–

## ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ ९ ॥

परमेश्वरादुत्पन्ना ज्योतिःप्रमुखा तेजोबन्नलक्षणा चतुर्विधस्य भूतग्रामस्य प्रकृतिभूता इयमजा प्रतिपत्तव्या । तुशब्दोऽवधारणार्थः । भूतत्रयलक्षणैवेयमजा विज्ञेया न गुणत्रयलक्षणा । कस्मात् । तथा ह्येके शाखिनः तेजोबन्नानां परमेश्वरादुत्पत्तिमाम्नाय तेषामेव रोहितादिरूपतामामनन्ति 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्

---

सौत्रं अविशेषादितिपदं विशेषावधारणकारणाभावपरतया व्याचष्टे—**विशेषावधारणेति** ॥ ८ ॥

'ज्योतिरुपक्रमा तु तथा ह्यधीयत एके' इत्युत्तरसूत्रमवतारयति—**तत्र तु इदं तच्छिर इत्यादि** । 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः । चमसः शिरः । तत्र निहितं विश्वरूपं यशः प्राणाः । तस्य तीरे विद्यमानाः सप्त ऋषयः-कर्णौ चक्षुषी नासिके रसना च-इति 'इदं वै तच्छिरः' इत्यादिना ब्राह्मणेनैव व्याख्यातम् । प्रकृते तु तन्निर्धारणं सन्निहितवाक्याभावेऽपि शाखान्तरानुसारेण आस्थेयमित्याह—**अत्र ब्रूम इति** । सौत्रं ज्योतिःपदं तृतीयभूतपरतया व्याचष्टे—**तेजोऽबन्नलक्षणेति** । 'जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते । ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते ॥' इत्यादौ तृतीयभूतेऽपि ज्योतिःपदप्रयोगात् ।

'एके' इति सौत्रं पदं छन्दोगाभिप्रायेण व्याचष्टे—**तथा ह्येके शाखिन**

कृष्णं तदन्नस्य' [छा. उ. ६.४.१] इति। तान्येवेह तेजोबन्नानि प्रत्यभिज्ञायन्ते, रोहितादिशब्दसामान्यात्। रोहितादीनां च शब्दानां रूपविशेषेषु मुख्यत्वात्, भाक्तत्वाच्च गुणविषयत्वस्य। असन्दिग्धेन च सन्दिग्धस्य निगमनं न्याय्यं मन्यन्ते। तथेहापि 'ब्रह्मवादिनो वदन्ति किं कारणं ब्रह्म' (श्वे.उ.१।१) इत्युपक्रम्य 'ते ध्यानयोगानुगता अपश्यन्

---

इति। अयं भावः—श्रुत्यर्थनिर्धारणे प्रसक्ते श्रुत्यन्तरानुसारेणैव निर्धारणमुचितम्, सजातीयत्वात्, न तु वैदिकत्वेनविप्रतिपन्नया साङ्ख्यस्मृत्या। [1]विशिष्य च इह लोहितशुक्लकृष्णामितिपदैरपि तत्सजातीयपदवत् 'यदग्ने रोहितं रूपं' इत्यादिवाक्यं प्रत्यभिज्ञायते। सत्त्वादिगुणेषु च लोहितादिपदानां अत्यन्तजघन्यवृत्तिराश्रयणीया। द्रव्येषु तु तेजआदिषु निरूढलक्षणा वा शक्तिरेव वा। एतैस्त्रिभिर्हेतुभिः छान्दोग्यवाक्यानुसारेणैव प्रकृतमन्त्रार्थनिर्णयो युक्तः—इति।

एवं, सन्निहितं निर्धारणोपयुक्तं वाक्यं नास्तीत्यभ्युपेत्य शाखान्तरानुसारेण निर्णयो दर्शितः। इदानीं कृत्वाचिन्तारूपतामुद्घाटयति—**तथेहापीति**। श्वेताश्वतरे हि उपक्रमोऽयं 'किं कारणं ब्रह्म कुतस्स्म जाता जीवाम केन क्व च सम्प्रतिष्ठाः। अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम् ॥' [श्वे. उ. १. १.] इति। अस्यायमर्थः—'यतो वा इमानि भूतानि जायन्ते' इत्यादावाम्नातं कारणं ब्रह्म किमिति संग्रहेण प्रथमं प्रश्नः, तस्यैव विवरणं कुतस्स्म जाता इत्यादि, लयकाले क्व च सम्प्रतिष्ठाः-सम्यक्प्रतिष्ठाः। सुखेतरेषु, सुखानि [2]इतराणि च दुःखादीनि। तत्र आक्षेपस्यायमभिप्रायः—परमात्मनस्तावत् निर्विशेषत्वात् तस्य कारणता वक्तुं न शक्यते नापि जीवादयः जगत्कारणीभूतब्रह्मत्वेनास्थातुं शक्याः, तेषामपि सृज्यत्वादिप्रतिपादनात्। अतः अस्मिन्नाक्षेपे, हे ब्रह्मविदः व्यवस्थां वदतेति। ते - ब्रह्मविदः ध्यानमेव योगः अर्थनिर्धारणप्रयोजकत्वात्, तं अनुगताः - प्राप्ताः - अर्थनिर्धारणाय परमात्मानं

---

1. मु. विशिष्येह　　2. मु. इतराणि दुःखानि

देवात्मशक्तिं स्वगुणैर्निगूढाम्' (श्वे. उ. १।३) इति पारमेश्वर्याः शक्तेः समस्तजगद्विधायिन्या वाक्योपक्रमेऽवगमात्, वाक्यशेषेऽपि 'मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्' इति 'यो योनिं योनिमधितिष्ठत्येकः' (श्वे. उ. ४।१०,११) इति च तस्या एवावगमात् न स्वतन्त्रा काचित् प्रकृतिः प्रधानं नाम अजामन्त्रेणाम्नायत इति शक्यते वक्तुम्। प्रकरणात्तु सैव दैवी शक्तिः अव्याकृतनामरूपा नामरूपयोः प्रागवस्था अनेनापि मन्त्रेण आम्नायत इत्युच्यते। तस्याश्च स्वविकारविषयेण त्रैरूप्येण त्रैरूप्यमुक्तम् ॥ ९ ॥

कथं पुनः तेजोबन्नानां त्रैरूप्येण त्रिरूपा अजा प्रतिपत्तुं शक्यते, यावता न तावत् तेजोबन्नेष्वजाकृतिरस्ति, न च तेजोबन्नानां जातिश्रवणात् अजातिनिमित्तोऽप्यजाशब्दः संभवतीति ? अत उत्तरं पठति—

---

ध्यातवन्त इति यावत्। ध्यात्वा च सत्यज्ञानादिलक्षणः परमात्मैव जगत्कारणमिति निश्चित्य परमार्थतो निर्विशेषस्यैव तस्य औपाधिकं जगत्कारणत्वमिति परिहारं कृताक्षेपस्य निर्धारितवन्तः। तदाह—**अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढामिति**। देवस्य - सत्यादिस्वरूपस्य परमात्मनः आत्मभूता - तदैक्याध्यासमापन्ना शक्तिः - कारणत्वनिर्वाहोपयुक्तसामर्थ्यविशेषरूपा स्वगुणैः-सत्त्वादिभिः निगूढा युक्ता, तामपश्यन्। योयोनिंयोनिमिति वीप्सा अविद्यानानात्ववादिनां सुगमैव। परं तु मायांतुप्रकृतिमित्यादौ एकवचनं जात्यभिप्रायं तेषां मते। तदेकत्ववादिनां तु एकवचनं यथाश्रुतम्। योनिंयोनिमिति वीप्सा अवयवसाकल्याभिप्राया ॥ ९ ॥

कृत्वाचिन्तापक्ष एवाक्षिपति—**कथं पुनरिति**। अजाकृतिः अजात्वजातिः। जातिश्रवणात्—जन्मश्रवणात्। अजातिनिमित्तः-अनुत्पत्तिनिमित्तः। ततश्च रूढियोगयोरसम्भवात् कथं तेजोऽबन्नेष्वजापदप्रवृत्तिः। न च लक्षणा। असाधारणसम्बन्धाभावादिति।

## कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥

नायं अजाकृतिनिमित्तोऽजाशब्दः। नापि यौगिकः। किं तर्हि? कल्पनोपदेशोऽयम्। अजारूपकक्लृप्तिः तेजोबन्नलक्षणायाश्चराचरयोनेरुपदिश्यते-यथा हि लोके यदृच्छया काचिदजा रोहितशुक्लकृष्णवर्णा स्यात् बहुबर्करा सरूपबर्करा च, तां च कश्चिदजो जुषमाणोऽनुशयीत, कश्चिच्चैनां भुक्तभोगां जह्यात्; एवमियमपि तेजोबन्नलक्षणा भूतप्रकृतिः त्रिवर्णा बहु सरूपं चराचरलक्षणं विकारजातं जनयति, अविदुषा च क्षेत्रज्ञेनोपभुज्यते, विदुषा च परित्यज्यते-इति।

---

**अजारूपकक्लृप्तिरिति।** अजैव, स्वात्मना अन्यं रूपयतीति रूपकं, तस्याः क्लृप्तिः-आहार्यारोपः।

ननु-रूपकस्थले आलम्बनप्रतिपादकं पदान्तरं अपेक्षितम्। यथा आत्मानंरथिनंविद्धीत्यादावात्मादिपदं, नेह तथा तेजोऽबन्नानामालम्बनीभूतानां प्रतिपादकं किञ्चित् पदमस्ति। आरोप्यालम्बनयोः सादृश्यं चापेक्षितम्। प्रकृते तु तन्नास्ति। अपि च, अस्मिन् पक्षे 'जहात्येनां भुक्तभोगामजोऽन्यः' इति वाक्येन मुक्ते अजत्वमारोपणीयम्, इदमप्यनुपपन्नम्, परमात्मना एकीभूतस्य निकृष्टप्राणित्वेन रूपणस्यानुचितत्वात्। किं च एतादृशं क्लिष्टया गत्या रूपणमपि व्यर्थम्, प्रयोजनाभावादिति चेत्,

उच्यते—'अत्यन्तसादृश्य एव रूपणम्' इति नियमो नास्ति, द्वासुपर्णेति अव्यवधानेनाम्नाते उत्तरमन्त्रे 'यत्किञ्चित्सादृश्येनापि पक्षित्वादिरूपणदर्शनात्। तादृशं यत्किञ्चित्सादृश्यं इहापि 'यथा हि लोके' इत्यादिना भाष्ये प्रतिपादितमेव। रूपकातिशयोक्तौ आलम्बनीभूतपदस्य पृथक्प्रयोगो नापेक्षित एव। यथा द्वासुपर्णेतिमन्त्र एव। प्रयोजनं च सुखप्रतिपत्तिः द्वासुपर्णेतिमन्त्रवदेव अत्रापि। यथा च तत्र विशुद्धसाक्षिणः पक्षित्वेन रूपणम्, एवमत्रापि मुक्तस्य छागत्वेन रूपणं नासङ्गतम्। अवश्यं चास्य कल्पनोपदेशपरत्वमास्थेयम्। अन्यथा, अजामिति क्वचित् स्त्रीलिङ्गनिर्देशः अन्यत्र अजोह्येक इति अजोऽन्य इति च पुंलिङ्गनिर्देशो निस्तात्पर्य एव स्यात्, द्वासुपर्णेतिकल्पनोपदेशसमभिव्याहारश्च अनुपपन्नः स्यात्।

न चेदमाशङ्कितव्यं-'एकः क्षेत्रज्ञोऽनुशेते अन्यो जहाति' इत्यतः क्षेत्रज्ञभेदः पारमार्थिकः परेषामिष्टः प्राप्नोति - इति। न हीयं क्षेत्रज्ञभेदप्रतिपिपादयिषा, किं तु बन्धमोक्षव्यवस्थाप्रतिपिपादयिषा त्वेषा। प्रसिद्धं तु भेदं अनूद्य बन्धमोक्षव्यवस्था प्रतिपाद्यते। भेदस्तु उपाधिनिमित्तो मिथ्याज्ञानकल्पितो न पारमार्थिकः। 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' [श्वे. उ. ६. ११] इत्यादिश्रुतिभ्यः। मध्वादिवत्—यथा आदित्यस्य अमधुनो मधुत्वम्, वाचश्च अधेनोर्धेनुत्वम्, द्युलोकादीनां च अनग्नीनां अग्नित्वम्-इत्येवंजातीयकं कल्प्यते, एवमिदं अनजाया अजात्वं कल्प्यत इत्यर्थः। तस्मात् अविरोधः तेजोबन्नेष्वजाशब्दप्रयोगस्य॥ १०॥

### ३ नसंख्योपसंग्रहाधिकरणम्

## न सङ्ख्योपसंग्रहादपि नानाभावादतिरेकाच्च॥ ११॥

एवं परिहृतेऽप्यजामन्त्रे पुनः अन्यस्मान्मन्त्रात् सांख्यः प्रत्यवतिष्ठते—

---

जीवनानात्वेन साङ्ख्यवादप्रत्यभिज्ञां आशङ्क्य निराकरोति—**न चेदमाशङ्कितव्यमिति**। 'इत्यादिश्रुतिभ्यः' इति आदिपदेन तत्प्रकरणगतस्य 'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः' इत्यादेः सङ्ग्रहः। बह्वीः प्रजाः सृजमानामिति स्वातन्त्र्यनिर्देशोऽपि न साङ्ख्यवादैकपक्षपाती। ईश्वराधिष्ठिताया अपि प्रकृतेः यन्त्रधिष्ठितरथस्य रथोगच्छतीति स्वातन्त्र्यनिर्देशवत् सृजमानामिति स्वातन्त्र्यनिर्देशोपपत्तेः। तत्तत्प्रयोजकप्रयोज्यानामपि कारकाणां स्वव्यापारे स्वतन्त्रत्वात्। जहातीति तु, [1]प्रकृतिबाध एव त्यागत्वेनोपचरितो भवति, तत्कृतसुखदुःखाद्यभावप्रयोजकत्वसाम्यात्, 'मत्वा धीरो हर्षशोकौ जहाति' इतिवत्। 'मध्वादिवदविरोधः' इति सौत्रमंशं व्याचष्टे—**मध्वादिवदिति**॥ १०॥

**इति चमसाधिकरणम्॥ २॥**

---

1. **प्रकृतिबाध इति** बाधः—तत्त्वसाक्षात्कारप्रयुक्तः स्वरूपोच्छेदः

'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ।
तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्' (बृ.उ.४।४।१७) इति ।

अस्मिन् मन्त्रे 'पञ्च पञ्चजनाः' इति पञ्चसंख्याविषया अपरा पञ्चसंख्या श्रूयते, पञ्चशब्दद्वयदर्शनात् । त एते पञ्च पञ्चकाः पञ्चविंशतिः संपद्यन्ते । तया च पञ्चविंशतिसंख्यया यावन्तः

---

पञ्चसङ्ख्याविषया अपरा पञ्चसङ्ख्या श्रूयत इति ।

ननु-स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नराः' इति कोशवचन-पर्यालोचनया पञ्चजनपदस्य मनुजेषु रूढत्वात् 'यस्मिन् पञ्च मनुष्याः' इत्येवार्थोऽवगम्यते । अतः कथं पञ्चसङ्ख्याविषया अपरा पञ्चसङ्ख्या श्रूयत इत्युक्तम् । जनशब्दात् प्राचीनस्य पञ्चशब्दस्य [1]अश्वकर्णपदगताश्वपदस्येव पृथगर्थाभावात्-इति चेत्,

उच्यते-तथासति वाक्यं निस्तात्पर्यकं स्यात् । न हि सर्वाधारस्य ब्रह्मणः पञ्चमनुजाधारत्वकीर्तनेन किञ्चित् प्रयोजनं लभ्यते । अतः इह पञ्चजनपदस्य रूढ्यर्थपरित्यागे सति, यदि-रूढिपूर्वकलक्षणामाश्रित्य माध्यन्दिन-शाखायामुत्तरमन्त्रे 'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं अन्नस्यान्नं मनसो ये मनो विदुः' इत्यत्राम्नाताः प्राणादयो मनोऽन्ताः पञ्च गृह्येरन्, काण्वशाखायां तु अन्नस्यानाम्नानात् 'तद्देवा ज्योतिषां ज्योतिः' इति पूर्वमन्त्रगतं ज्योतिः पञ्चानां पूरणं गृह्येत ; तदापि-निस्तात्पर्यकत्वं अविशिष्टमेव । एकस्यैव मन्त्रस्य शाखाभेदेन भिन्नार्थत्वाङ्गीकारः परं अधिको दोषः । अतो रूढिपूर्व-कलक्षणाश्रयणमप्यनुचितम् । तथा च रूढितत्पूर्वकलक्षणाभ्यां प्रच्युतस्य पञ्चजन-पदस्य यौगिकत्वे सति, पञ्चजनपदं यदि वा समासः यदि वा असमासः पक्षद्वयेऽपि सर्वप्रपञ्चसङ्ग्रहाय एवं वाच्यम्-पञ्चपदेन द्वितीयेन पञ्चसङ्ख्या-विशिष्टाः सङ्ख्येया अवगम्यन्ते । अत्र प्रथमश्रुतपञ्चपदोक्ता सङ्ख्या विशेषण-भूतायां पञ्चत्वसङ्ख्यायां वा अन्वेति, तदिदमुक्तं **पञ्चसङ्ख्याविषया अपरा पञ्चसङ्ख्येति ।** विशेष्येषु सङ्ख्येयेषु वा अन्वेति, तदिदमुक्तं **त एते पञ्च**

---

1. **अश्वकर्णेति** वृक्षविशेषसंज्ञाभूतपदाभिप्रायम् ।

**संख्येया आकाङ्क्ष्यन्ते तावन्त्येव च तत्त्वानि सांख्यैः संख्यायन्ते—**

**'मूलप्रकृतिरविकृतिः महदाद्याः प्रकृतिविकृतयः सप्त।**
**षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः' (सांख्य का॰ ३) इति। तया श्रुतिप्रसिद्धया पञ्चविंशतिसंख्यया तेषां स्मृतिप्रसिद्धानां पञ्चविंशतितत्त्वानां उपसंग्रहात् प्राप्तं पुनः श्रुतिमत्त्वमेव प्रधानादीनाम्।**

---

**पञ्चका इति।** पक्षद्वयेऽपि पञ्चविंशतिसङ्ख्याया लाभः। आद्यपक्षे पञ्चत्व-सङ्ख्यायाः पञ्चत्वेन गुणने पञ्चविंशतित्वं, द्वितीयपक्षे पञ्चसु सङ्ख्येयेषु प्रत्येकं पञ्चत्वसम्बन्धे पञ्चविंशतित्वम्। तथा च पञ्चविंशतिसङ्ख्यायामवगतायां विशिष्य तत्सङ्ख्येयेष्वपेक्षितेषु न आनुमानिकाधिकरणोक्तरीत्या सन्निहिताम्नातैराकाङ्क्षा-परिपूरणम्। तत्र अव्यक्तपदग्रहणयोग्यस्य शरीरस्येव इह पञ्चविंशतिस-ङ्ख्यावच्छेदयोग्यानां सङ्ख्येयानां सन्निधावभावात्। नापि चमसाधिकरणोक्तरीत्या शाखान्तरतस्तल्लाभः। तत्र लोहितशुक्लकृष्णामिति पदैः प्रत्यभिज्ञापितानां 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं' इत्यादिवाक्यप्रतिपाद्यानां शाखान्तरगतानां तेजोऽबन्नानामिव इह प्रत्यभिज्ञया ग्रहणयोग्यानां शाखान्तरगतानामनुपलम्भात् साङ्ख्यस्मृतिप्रतिपाद्यानां तत्त्वानामेव इह ग्रहणं न्याय्यम्। तेषां [1]पञ्चविंशतित्व-प्रसिद्धेः - इति मन्यते पूर्वपक्षी।

**मूलप्रकृतिरविकृतिरिति।** मूलप्रकृतिः - प्रधानं, सा च अकार्यं, महदाद्यास्सप्त - महदहङ्कारौ पञ्च तन्मात्राणीति सप्त महदादयः, ते प्रकृतयो भवन्ति - महत्तत्त्वमहङ्कारस्य प्रकृतिः, अहङ्कारः सात्त्विकांशमादाय इन्द्रियाणां प्रकृतिः, तामसांशमादाय तन्मात्रपदप्रतिपाद्यानां सूक्ष्मभूतानां [2]प्रकृतिः, आहङ्कारिको रजोंऽशस्तु तदीययोस्सत्त्वतमसोः प्रवृत्तिहेतुः, महत्तत्त्वं प्रकृतेर्वि-कृतिरिति सप्त प्रकृतिविकृतयः। षोडशकश्च विकार एव, पञ्च ज्ञानेन्द्रियाणि

---

1. आ. पञ्चविंशतित्वेन प्रसिद्धेः

2. **प्रकृतिरिति** एतदनन्तरं 'पञ्चतन्मात्राश्च पञ्चानां स्थूलभूतानां आकाशा-दीनां प्रकृतयः' इति वाक्येन भवितव्यम्।

ततो ब्रूमः—न संख्योपसंग्रहादपि प्रधानादीनां श्रुतिमत्त्वं प्रति आशा कर्तव्या । कस्मात् । नानाभावात् ।

नाना ह्येतानि पञ्चविंशतिस्तत्त्वानि । न एषां पञ्चशः पञ्चशः साधारणो धर्मोऽस्ति, येन पञ्चविंशतेरन्तराले पराः पञ्च पञ्चसंख्या निविशेरन् । न हि एकनिबन्धनमन्तरेण नानाभूतेषु द्वित्वादिकाः संख्या निविशन्ते ।

---

पञ्च कर्मेन्द्रियाणि [1]तन्मात्राकार्याणि पञ्च स्थूलभूतानि मनश्चेत्याहत्य षोडश । एते न कस्यापि प्रकृतयः । यद्यपि पृथिव्यादिस्थूलभूतानि घटादीनां प्रकृतयो भवन्ति, तथापि यथा प्रकृत्यादीनि अष्टौ स्वातिरिक्ततत्त्वान्तरस्य प्रकृतयो भवन्ति, नैवं एते स्थूलाः पृथिव्यादयः स्वातिरिक्ततत्त्वप्रकृतयः, घटादीनां पृथिव्याद्यपेक्षया तत्त्वान्तरत्वेन परिगणनाभावात् । एते चतुर्विंशतिः । पुरुषस्तु न प्रकृतिः - न कारणं, नापि कस्य चित् कार्यम् । तेन सह पञ्चविंशतिः ।

ननु-साङ्ख्यतत्त्वानां 'यस्मिन् पञ्च पञ्चजनाः' इत्यंशेन ग्रहणे आकाशात्मनोरपि तदन्तर्गततया, आधेयतया पृथक् आकाशस्य आत्मनश्च पृथक् आधारतया ग्रहणं अनुपपन्नं स्यादिति चेत्, न - यथा 'ब्राह्मणा आगताः वसिष्ठोऽप्यागतः' इत्यादिसमभिव्याहारे ब्राह्मणपदगृहीतस्यैव वसिष्ठस्य पुनर्ग्रहणं तस्य प्राशस्त्यद्योतनाय, तद्वत् सकलावकाशप्रदतया सर्वशेषितया च प्राधान्यद्योतनाय आकाशात्मनोः पुनर्ग्रहणमुपपन्नम् । तत् सिद्धं साङ्ख्यवादस्य वेदमूलत्वम् ।

**नैषां पञ्चशः पञ्चश इति** । नन्वत्र - साङ्ख्येन अवान्तरपञ्चसङ्ख्यानिवेशपूर्वकं [2]पुनः पञ्चसङ्ख्यानिवेशेन पञ्चविंशतित्वे प्रतिपादिते 'आन्तरालिकपञ्चसङ्ख्यायाः पञ्चसु पञ्चसु निवेशार्थं तेष्ववच्छेदकं किञ्चिदपेक्षितं, तन्न सम्भवति' इति दूषणमापाद्यते, तन्न - पञ्चसु पञ्चकेषु प्रत्येकं बाह्यज्ञानेन्द्रियत्वकर्मेन्द्रियत्वतन्मात्रत्वस्थूलभूतत्वैतदतिरिक्तत्वानां पञ्चानामवच्छेदकानां सम्भवात् - इति चेत्,

उच्यते—नायं मन्त्रः साङ्ख्यतत्त्वानुसार्येवेति निर्णयः कर्तुं शक्यते ।

---

1. मु. 'तन्मात्राकार्याणि' नास्ति  2. **पुनरिति** सङ्ख्येयेषु इति शेषः ।

**अथोच्येत - पञ्चविंशतिसङ्ख्यैवेयं अवयवद्वारेण लक्ष्यते, यथा 'पञ्च सप्त च वर्षाणि न ववर्ष शतक्रतुः' इति द्वादशवार्षिकीमनावृष्टिं कथयन्ति तद्वत् - इति–**

**तदपि नोपपद्यते - अयमेव अस्मिन् पक्षे दोषः - यत् लक्षणा आश्रयणीया स्यात् ।**

**परश्चात्र पञ्चशब्दो जनशब्देन समस्तः 'पञ्चजनाः' इति, भाषिक-**

---

यदि हि तन्त्रोक्ता एव पदार्था इह ग्राह्या इति निर्बन्धः, तदा सप्तविंशति-तत्त्ववादिनां पक्ष एव इह ग्राह्यः किं न स्यात् । तेषां साङ्ख्यवदेव पञ्चविंशति-तत्त्वानि, ततोऽप्यधिकं तत्त्वद्वयं चिच्छक्तिश्शिवश्चेति । ततश्च अकाशपदेन चिच्छक्तेर्ग्रहणं आत्मपदेन सर्वाधारस्य परमात्मनो ग्रहणमिति तेषां मते पूर्वं गृहीतयोरेवाकाशात्मनोर्ग्रहणं न क्लेशेन व्याख्येयमिति गुण एव भवति ।

एतद्दोषपरिहाराय यदि साङ्ख्यः इत्थं वदेत्—एकादशेन्द्रियाणि, पञ्च तन्मात्राणि, चत्वारि आकाशव्यतिरिक्तानि स्थूलभूतानि, महदहङ्कारौ, त्रिगुणां प्रकृतिं त्रेधा भित्त्वा एकया त्रयसम्पादनम्, आहत्य पञ्चविंशतिः आत्माकाशौ विहाय । ततश्च पञ्चविंशतावेव सप्तविंशतिसङ्ख्यायाः अवान्तरविभागेन कल्पनं, ततो गृहीतयोरात्माकाशयोर्ग्रहणमिति दोषो न प्रसज्यते । नापि वादान्तर-स्यावकाशः - इति ।

तस्मिन्नपि पक्षे, अयमेव तान्त्रिकवादो ग्राह्यो नायं-इत्यत्र नियामकं नास्तीति दूषणमस्त्येव ।

दूषणान्तरमिदमुच्यते—**नानाभावादिति** । तथा च, ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च तन्मात्राणि पञ्चेति पञ्चकत्रिके अवच्छेदकलाभेऽपि, चत्वारि स्थूलभूतानि मनसा सह पञ्च महदहङ्कारौ त्रयो गुणाः पञ्च इति तुरीयपञ्चम-पञ्चकयोः एवंकल्पने अवच्छेदकमेकं न लभ्यते ।

अवच्छेदकं विनैव अवान्तरसङ्ख्यानिवेशं दृष्टान्तेन शङ्कते—**अथोच्येतेति** ।

एवं 'पञ्चजनाः' इतिपदान्तर्गते पञ्चेतिपदे अर्थवत्त्वमुपेत्य दूषणमुक्तम् । वस्तुतस्तु पञ्चजना इति पदं समासरूपम्, स च समासः संज्ञायामेवेति

वक्ष्यते - इत्यभिप्रेत्याह—**परश्चात्रेति** । समासपक्षे नियामकमाह—**भाषिकस्वरेणेति** । भाषायां भवो भाषिकः । यथा प्रवचनशब्दो मन्त्रभागे वैदिकानां प्रसिद्धः, एवं भाषाशब्दो ब्राह्मणभागे । तथा च [1]शतपथब्राह्मणस्वरप्रतिपादकेन व्याकरणविशेषेण विहितं स्वरं पर्यालोच्य पञ्चजनशब्दः समास इति निर्णीयते । तथाहि—'यस्मिन् पञ्च पञ्चजनाः' इति मन्त्रः मन्त्रकाण्डे ब्राह्मणे च पठ्यते । तत्र ब्राह्मणे पञ्चजनशब्दे अन्तिमोऽकारः अनुदात्तः, इतरे उदात्ताः । मन्त्रे तु, अन्तिम उदात्तः, इतरे अनुदात्ताः । इयं व्यवस्था समासं विना नोपपद्यते । समासे सति 'समासस्य' इतिसूत्रेण अन्तोदात्तत्वे सति 'अनुदात्तं पदमेकवर्जं' इतिसूत्रेण, यस्य पदस्य कस्मिंश्चिदचि उदात्तः स्वरितो वा विशेषेण विधीयते तमेकमचं विहाय इतरे [2]अचः अनुदात्ता भवन्ति - इति प्रतिपादयता, अन्येषामचामनुदात्तत्वं मन्त्रकाण्डपठितान्तर्गते पञ्चजनशब्दे सिध्यति। ततश्च शतपथब्राह्मणस्वरनियमार्थं प्रवृत्ते [3]व्याकरणे पठितेन 'स्वरितोऽनुदात्तो वा' इति सूत्रेण, 'मन्त्रकाण्डे यः स्वरितोऽनुदात्तो वा स ब्राह्मणे उदात्तो भवति' इति प्रतिपादयता, नकारात् प्राग्भाविनां पञ्चजनपदान्तर्गतानामचां उदात्तत्वम्, 'उदात्तमनुदात्तमनन्त्यं' इति सूत्रेण, [4]उत्तरेणाचासंलग्नतयोच्चार्यमाणं अनन्त्यमुदात्तं मन्त्रदशायां यत् तत् ब्राह्मणे अनुदात्तं भवति-इत्यर्थकेन, नकारोपरितनस्याचः अनुदात्तत्वं सिध्यति ।

न च - एवमपि मन्त्रकाण्डे नकारोपरितनस्याकारस्य ब्राह्मणपाठनिमित्तानुदात्तस्वरस्थानितया उदात्तत्वमपेक्षितं, तत्तु समासं विनैव सिध्यति, जनशब्दस्य पचाद्यजन्ततया 'चितः' इति सूत्रेण अन्तोदात्तत्वसम्भवात्, अतः कथं समासापेक्षा - इति वाच्यम् । 'चितः' इति सूत्रापवादभूतेन 'वृषादीनां च' इति सूत्रेण वृषादिगणपठितस्य जनशब्दस्य आद्युदात्तत्वे सति, 'अनुदात्तं पदमेकवर्जं' इति सूत्रेण नकारोपरितनस्याकारस्य अनुदात्तत्वे सति, मन्त्रे अन्तोदात्तत्वाभावात् । अपि च, असमासपक्षे पञ्चेतिशब्दस्य मन्त्रे सर्वानुदात्तत्वा-

1. आ, शतपथब्राह्मणे 2. मु. 'अचः' नास्ति

3. **व्याकरणे**—भाषिकाख्यग्रन्थे । 4. **उत्तरेणेत्यादि** 'प्रतिष्ठितः' इत्यर्धावसानवद्विरामंविनोच्चार्यमाणं, अत एव अनन्त्यम्-इत्यर्थः ।

**स्वरेण एकपदत्वनिश्चयात्। प्रयोगान्तरे च 'पञ्चानां त्वा पञ्चजनानाम्' (तै. सं. १।६।१।२) इति ऐकपद्यैकस्वर्यैकविभक्तिकत्वावगमात्। समस्तत्वाच्च, न वीप्सा 'पञ्च पञ्च' इति न च पञ्चकद्वयग्रहणं 'पञ्च पञ्च' इति। न च पञ्चसंख्याया एकस्याः पञ्चसंख्यया परया विशेषणं 'पञ्च पञ्चकाः' इति। उपसर्जनस्य विशेषणेनान्वयायोगात्।**

---

लाभेन ब्राह्मणे सर्वत उदात्तत्वं न स्यात्। समासे तु 'वृषादीनां च' इत्यस्यापवादभूतेन 'समासस्य' इतिसूत्रेण पञ्चजनशब्दस्यान्तोदात्तत्वे सति पूर्वोक्तगत्या सर्वा व्यवस्था लभ्यते। तस्मात् पञ्चजनशब्दः समास इति तावत् उपेयमिति।

ननु 'जना यदग्निमयजन्त पञ्च' इत्यादौ पञ्चजनशब्दौ असमस्तावपि दृश्येते इत्याशङ्क्य, अत्र स्वरविशेषेण समासनिर्णयात् तदैकरूप्ये नातीव निर्बन्ध आस्थेय इति मनसि निधाय, श्रुत्यन्तरे पञ्चजनशब्दौ समस्तावुपलभ्येते इति तत्सारूप्यमेव प्रकृते समासोपपत्तये आस्थेयमित्याह—**प्रयोगान्तरे चेति।** ऐकस्वर्यम् - एकपदत्वप्रयुक्तस्वरत्वम्।

**न वीप्सेति।** यथा 'दश दश एकैकं चमसं उपसर्पन्ति' इत्यत्र दशशब्दे वीप्सा उपेयते, नैवमिह। अत एव न पञ्चकद्वयग्रहणमपि।

अपि च, पञ्चकद्वयग्रहणपक्षेऽपि दशानामेव लाभः स्यात्, न पञ्चविंशतेः। एवं वीप्सापक्षेऽपि न पञ्चविंशतेर्लाभः स्यात्। वीप्सा हि जनशब्दोपात्तानां प्रत्येकं साकल्येन पञ्चत्वबोधनार्थेति वक्तव्यम्। ततश्च, यथा उपसर्पणीयानां चमसानां दशत्वेन निर्णीततया दशदशैकैकंचमसमुपसर्पन्तीतिवाक्येन प्रतिचमसं दशानामुपसर्पकाणां विधानात् तेषां शतत्वं दशपेये क्रतुविशेषे सिध्यति, तथा च वाक्यशेषः—'शतं ब्राह्मणाः सोमं भक्षयन्ति' इति, एवमत्रापि पञ्चविंशतिता सिध्येत्, यदि वीप्सितपञ्चपदार्थान्वयिनां जनानां प्राक् पञ्चधा विभागः सिद्धो भवेत् केनचित् निबन्धनेन, न तु तदस्ति - इत्यपि दूषणं द्रष्टव्यम्।

एवं, समासे सति पञ्चपदस्य द्वितीयस्य अर्थ एव नास्तीति प्रतिपादितम्। इदानीं तदर्थसत्तामुपेत्यापि पूर्वपक्षिकल्पनां निराकरोति—**उपसर्जनस्य विशेषणे-**

ननु-आपन्नपञ्चसंख्याका जना एव पुनः पञ्चसंख्यया विशेष्यमाणाः पञ्चविंशतिः प्रत्येष्यन्ते, यथा 'पञ्च पञ्चपूल्यः' इति पञ्चविंशतिपूलाः प्रतीयन्ते तद्वत् ;

नेति ब्रूमः - युक्तं यत् पञ्चपूलीशब्दस्य समाहाराभिप्रायत्वात् कतीति सत्यां भेदाकाङ्क्षायां 'पञ्च पञ्चपूल्यः' इति विशेषणम्। इह तु 'पञ्चजनाः' इति आदित एव भेदोपादानात् कतीति असत्यां

---

**नान्वयायोगादिति।** 'घटो नित्यः' इत्यादिप्रयोगो हि लोकेऽसाधुः। तत् कस्य हेतोः। 'पदात् [1]स्वातन्त्र्येणोपस्थित एव पदार्थे पदार्थान्तरस्यान्वयः' इति व्युत्पत्तेः। अन्यथा हि नित्यत्वस्य घटपदाद्विशेषणतयोपस्थिते घटत्वे अन्वयसम्भवेन वाक्यस्य असाधुता न स्यात्। तथा पञ्चपदात् [2]अस्वतन्त्रतयोपस्थितायां पञ्चत्वसङ्ख्यायां न पदान्तरोपस्थितायाः पञ्चत्वसङ्ख्याया अन्वय इति।

ननु - एतद्दोषपरिहारार्थं सङ्ख्येयेष्वेव अन्वयोऽस्तु। न च - सङ्ख्येयानां पञ्चेतिपदोपात्तानां समासपक्षे जनान् प्रति विशेषणत्वेन, पञ्चेतिपदात् स्वतन्त्रतयोपस्थितत्वेऽपि न पदान्तरोपात्तपञ्चसङ्ख्याया[3] विशेष्यता सम्भवति, समासान्तर्गतस्य विशेषणस्य पदान्तरोपात्तविशेषणान्वयासहिष्णुत्वात्, अत एव 'ऋद्धस्य राजपुरुषः' इतिप्रयोगः असाधुः-इति वाच्यम्। तथापि जनपदोपात्तेषु सङ्ख्येयेषु पञ्चसङ्ख्यायाः पदान्तरोपात्तायाः अन्वये नायं दोषः - इत्यभिप्रेत्य शङ्कते—**नन्वापन्नपञ्चसङ्ख्याका जना एवेति। आदित एव भेदोपादानादिति।** भेदयतीति भेदः - विशेषणं, तदुपादानादित्यर्थः। अयं भावः—प्रथमपञ्चपदोपात्तायाः सङ्ख्यायाः जनान् प्रत्यन्वयः, किं स्वारसिक्यामेव कतीत्याकाङ्क्षायां कल्प्यते? उत रक्तःपटोभवतीत्यत्र रक्तपदवैयर्थ्यपरिहरणाय पटपदस्य यथा आकाङ्क्षामुत्थाप्य तदन्वय उपेयते तद्वत् प्रकृतेऽपि वैयर्थ्यपरिहाराय कतीत्याकाङ्क्षामुत्थाप्य?। नाद्यः - द्वितीयपञ्चपदेनैव तदाकाङ्क्षायाः परिपूरणात्। न च - पञ्चपूलीत्यत्र, पञ्चानां पूलानां समाहारः - समुदायः पञ्चपूलीति

---

1. स्वातन्त्र्येण—विशेष्यतया।　　2. अस्वतन्त्रतया—विशेषणतया।

3. **संख्याया विशेष्यता**—सङ्ख्यानिरूपिता विशेष्यता। आ. सङ्ख्यायां विशेष्यता

भेदाकाङ्क्षायां न 'पञ्च पञ्चजनाः' इति विशेषणं भवेत् । भवदपीदं विशेषणं पञ्चसंख्याया एव भवेत्, तत्र च उक्तो दोषः । तस्मात् 'पञ्च पञ्चजनाः' इति न पञ्चविंशतितत्त्वाभिप्रायम् ।

अतिरेकाच्च न पञ्चविंशतितत्त्वाभिप्रायम् - अतिरेको हि भवति

---

उपात्तयोः द्वयोस्समुदायसमुदायिनोस्सङ्ख्येययोः, समस्तया पञ्चसङ्ख्यया समुदायिनां आकाङ्क्षानिवृत्तावपि, समुदायानां समासप्रतिपादितानां कतीत्याकाङ्क्षाया अनुपशान्तत्वात् असमस्तः पञ्चशब्दः तदाकाङ्क्षां पूरयति, तद्वत् पञ्चजनाः इत्यत्रापि, पञ्चानां जनानां समाहार इति [1]समाहारसमासमुपेत्य असमस्तस्य पञ्चेतिपदस्य आकाङ्क्षापरिपूरकत्वं कल्प्यतामिति - वाच्यम् । तथा सति 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इति वचनेन पञ्चजन्यइत्येव स्यात्, न तु पञ्चजना इति । अतो नात्र स्वारसिकाकाङ्क्षा । नापि रक्तपटन्यायः । यत्र हि सजातीयं विरुद्धं वा विशेषणान्तरं श्रूयते तत्र तदनवतारात् । न हि 'रक्तो रक्तः पटः' इति भवति प्रयोगः साधुः, नापि 'मृण्मयो हिरण्मयो घटः' इति ।

ननु - न साक्षात् पञ्चेतिपदोपात्तायां सङ्ख्यायां अपरस्याः पञ्चसङ्ख्याया अन्वय उपेयते, येन 'घटो नित्यः' इतिवाक्यतुल्यता स्यात् । नापि सङ्ख्येयेष्वेव अन्वयपर्यवसानमुपेयते । येन 'रक्तो रक्तः पटः' इति वाक्यतुल्यता स्यात् । अपि तु, प्रथमं विशेष्येषु जनेषु अन्वितयोः वैयर्थ्यपरिहाराय आद्या सङ्ख्या केवलं जनेष्वन्वेति, प्रथमपञ्चपदोपात्ता तु अनन्तरमन्वयं प्रतिपद्यमाना पञ्चत्वविशिष्टेष्वन्विता विशेषणीभूते पञ्चत्वे अवतरति । अतो न कोऽपि दोषः— इत्याशङ्क्याह—**भवदपीति । तत्र चोक्तो दोष इति ।** उक्तप्राय इत्यर्थः । एतादृशक्लेशाश्रयेण पञ्चविंशतिसङ्ख्यालाभमुपेत्य प्रधानं त्रेधा भित्त्वा स्वमतरक्षणं साङ्ख्यस्य न युक्तिक्षममिति भावः ।

यदि प्रधानं त्रेधा न प्रविभज्येत, तदा दोषमाह—**अतिरेकाच्चेति ।** न च पञ्चविंशतावन्तर्भूतस्यैव पुनर्ग्रहणं प्राशस्त्यद्योतनार्थमिति युक्तम् । [2]अपि

---

1. आ. 'समाहार' नास्ति  2. आ. अपि चात्र

आत्माकाशाभ्यां पञ्चविंशतिसंख्यायाः। आत्मा तावत् इह प्रतिष्ठां प्रति आधारत्वेन निर्दिष्टः, यस्मिन्निति सप्तमीसूचितस्य 'तमेव मन्य आत्मानम्' इति आत्मत्वेनानुकर्षणात्। आत्मा च चेतनः पुरुषः। स च पञ्चविंशतावन्तर्गत एवेति न तस्यैव आधारत्वमाधेयत्वं च युज्यते। अर्थान्तरपरिग्रहे च तत्त्वसंख्यातिरेकः सिद्धान्तविरुद्धः प्रसज्येत। तथा 'आकाशश्च प्रतिष्ठितः' इति आकाशस्यापि पञ्चविंशतावन्तर्गतस्य न पृथगुपादानं न्याय्यम्। अर्थान्तरपरिग्रहे च उक्तं दूषणम्।

कथं च संख्यामात्रश्रवणे सति अश्रुतानां पञ्चविंशतितत्त्वानां

---

च पञ्चविंशतावन्तर्गतस्यैवात्मनः पुनः अधिकरणत्वेन निर्देशे स्वात्मानं प्रति स्वस्याधिकरणत्वं प्राप्नोतीति अपरो विरोधः। न च स्वमहिमप्रतिष्ठितत्वनिर्देशवत् तदुपपद्यत इति वाच्यम्। तथा सति 'यस्मिन् पञ्च पञ्चजनाः' इति वाक्येन आत्मांशे गौणोऽधिकरणाधेयभावः प्रतिपादनीयः, तद्व्यतिरिक्तेषु तु मुख्यया वृत्त्या-इति वैरूप्यं स्यात्।

ननु - 'पञ्चभिर्धाता विदधाविदं यत् तासां स्वसृरजनयत् पञ्चपञ्च' इति वाक्ये पञ्चपदद्वयनिर्देशेन पञ्चविंशतिसंङ्ख्यालाभ एषितव्यः। तथा च, सजातीयविशेषणश्रवणस्थलेऽपि यत्र वर्धनेन महासङ्ख्या लभ्यते तत्र रक्तपटन्यायः [1]अवतरत्येवेत्युपेयम्। तथा च प्रकृतेऽपि पञ्चविंशतिसङ्ख्यालाभार्थं रक्तपटन्याय आश्रीयते - इत्यत आह—**कथं चेति। सङ्ख्यामात्रश्रवणे सतीति।** पञ्चपदद्वयश्रवणे सतीत्यर्थः। न ह्यत्र [2]आहत्य पञ्चविंशतित्वं श्रुतम्, अपि तु यत्किञ्चित्सङ्ख्यावाचकं पदद्वयम्। तावता कथं पञ्चविंशतित्वलाभः। दशत्वग्रहणेऽपि [3]पञ्चपदद्वयोपपत्तेः। तासांस्वसृरिति वाक्ये तु, त्रिंशत्स्वसार इति वाक्यशेषपर्यालोचनया, पञ्चभिर्धातेति पञ्चानां गृहीतत्वात् त्रिंशत्त्वसम्पादनाय पञ्चविंशतेरपेक्षितत्वात्, तासांस्वसृरजनयत्पञ्चपञ्चेत्यस्य यथाकथञ्चित् पञ्चविंशतौ पर्यवसानमास्थीयते, नेह तथा पञ्चविंशतिग्रहणप्रयोजको वाक्यशेषोऽस्तीति भावः।

---

1. मु. अवतरतीत्युपेयम्　　2. आहत्य—साक्षात्।　　3. आ. पञ्चद्वयोपपत्तेः

उपसंग्रहः प्रतीयेत। जनशब्दस्य तत्त्वेष्वरूढत्वात्। अर्थान्तरोपसंग्रहेऽपि संख्योपपत्तेः।

कथं तर्हि 'पञ्च पञ्चजनाः' इति।

उच्यते—'दिक्संख्ये संज्ञायाम्' (पा. सू. २।१।५०) इति विशेषस्मरणात् संज्ञायामेव पञ्चशब्दस्य जनशब्देन समासः। ततश्च रूढत्वाभिप्रायेणैव केचित् पञ्चजना नाम विवक्ष्यन्ते, न सांख्य-

---

अस्तु वा यथाकथञ्चित् पञ्चविंशतिलाभः, तत्र सङ्ख्येयानि साङ्ख्यप्रसिद्धानि तत्त्वान्येव इत्यत्र किं नियामकम्। न तावत् जनपदस्य तत्त्वेषु रूढिः, असिद्धेः - इत्याह — **जनशब्दस्येति**। न च प्रकारान्तरेण सङ्ख्येयापर्यवसानमित्याह–**अर्थान्तरोपसंग्रहेऽपीति**। साङ्ख्यीयतत्त्वापेक्षया अन्य एवार्थाः तत्सङ्ख्यापरिच्छेद्या लभ्यन्ते शाखान्तरप्रसिद्धाः। तथा हि—'इन्द्रियेभ्यः परा ह्यर्थाः' इति वाक्ये पुरुषात् [1]अवराः पञ्चविंशतिपदार्था निर्दिष्टाः। इन्द्रियाणि दश, स्थूलास्सूक्ष्माश्चार्था दश, मनोबुद्ध्यात्मानस्त्रयः, अव्यक्तपदगृहीतं स्थूलं सूक्ष्मं चेति शरीरद्वयम्, आहत्य पञ्चविंशतिः। 'एतस्मिन् नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इतिश्रुतिप्रतिपन्नोऽव्याकृताकाश आकाशपदार्थः। आत्मा तु परमेश्वरः। अतो नात्र कथञ्चिदपि साङ्ख्यस्यावकाशः।

एवं पञ्चजनशब्दान्तर्गतस्य पञ्चपदस्य पृथगर्थवत्त्वमुपेत्यापि नास्ति साङ्ख्यस्यावकाश इत्युक्तम्। इदानीं पञ्चजनपदस्य समासरूपस्य संज्ञाशब्दत्वं व्युत्पादयितुं पृच्छति—**कथं तर्हि पञ्च पञ्चजना इति**। पञ्चजनशब्दः समास इति प्राक् निरूपितमेव, स च समासो 'दिग्वाचिनश्शब्दाः सङ्ख्यावाचिनश्च शब्दाः समानाधिकरणेन संज्ञायामेव समस्यन्ते' [2]इति प्रतिपादकेन 'दिक्सङ्ख्ये संज्ञायाम्' इति सूत्रेण संज्ञायामेव नियमितः, 'दक्षिणाग्निः' 'सप्तर्षयः' इति यथा। अतः पञ्चजनपदमपि संज्ञैवेत्याह—**उच्यत इति**। तस्याश्च संज्ञाया विषयोऽपि 'स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नराः' इति निघण्टुवचनेन नियमितः॥ ११॥

---

1. मु. अपराः;  2. आ. इतिनियमप्रतिपादकेन

तत्त्वाभिप्रायेण । ते कति - इत्यस्यामाकाङ्क्षायां पुनः पञ्चेति प्रयुज्यते । पञ्चजना नाम ये केचित् ते च पञ्चैवेत्यर्थः । 'सप्तर्षयः सप्त'इति यथा ॥ ११ ॥

के पुनस्ते पञ्चजना नामेति, तदुच्यते—

## प्राणादयो वाक्यशेषात् ॥ १२ ॥

'यस्मिन् पञ्च पञ्चजनाः' इत्यत उत्तरस्मिन् मन्त्रे ब्रह्मस्वरूपनिरूपणाय प्राणादयः पञ्च निर्दिष्टाः—'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः' [बृ.उ. माध्यन्दिन] इति। तेऽत्र वाक्यशेषगताः संनिधानात् पञ्चजना विवक्ष्यन्ते ।

कथं पुनः प्राणादिषु जनशब्दप्रयोगः ?

तत्त्वेषु वा कथं जनशब्दप्रयोगः। समाने तु प्रसिद्ध्यतिक्रमे वाक्यशेषवशात् प्राणादय एव ग्रहीतव्या भवन्ति। जनसंबन्धाच्च प्राणादयो जनशब्दभाजो भवन्ति। जनवचनश्च पुरुषशब्दः प्राणेषु

---

परं तु तस्यात्र ग्रहणे निस्तात्पर्यकता वाक्यस्य स्यात् - इत्यभिप्रेत्य पृच्छति—**के पुनस्ते पञ्चजना नामेति** । 'प्राणादयो वाक्यशेषात्' इति सूत्रेणोत्तरमाह—**तदुच्यत इति** । **वाक्यशेषगता इति** । न च - 'यस्मिन् पञ्च पञ्चजनाः' इत्यन्यो मन्त्रः, 'प्राणस्य प्राणम्' इत्यन्यः, उभयोरेकवाक्यत्वाभावात् कथं आद्यस्य मन्त्रस्य उत्तरो वाक्यशेष इति वक्तुं शक्यम् - इति वाच्यम् । विवरणसङ्ग्रहयोरेकवाक्यत्वोपपत्तेः । उत्तरमन्त्रे हि प्राणादीनामपि प्राणादिरूपं ब्रह्म इत्युक्तं, तत् कथं इत्यपेक्षायां, ब्रह्मणि प्राणादेः कल्पितत्वेन तेषां ब्रह्मणि प्रतिष्ठितत्वात् प्राणादिसत्ताप्रदं ब्रह्म 'प्राणस्य प्राणं' इत्यादि व्यपदिश्यत इति पूर्वमन्त्रेण प्रतिपाद्यते । निर्विशेषब्रह्मणोऽधिष्ठानत्वोपाधिः आकाशपदेन समर्प्यते । अत एव निस्तात्पर्यकतापि न, अपेक्षितार्थसमर्पकत्वात् ।

प्राणादिषु पञ्चजनशब्दस्य रूढेरभावात् कथं तेन तेषां ग्रहणमिति शङ्कते—**कथं पुनरिति** । **जनशब्देति** । पञ्चजनशब्देत्यर्थः । लक्षणया प्राणादिग्रहणं समर्थयितुं प्रतिबन्दीमाह—**तत्त्वेषु वेति** । शक्यसम्बन्धं स्वपक्षे दर्शयति—**जनसम्बन्धाच्चेति** । पञ्चजनसम्बन्धादिति यावत् ।

प्रयुक्तः 'ते वा एते पञ्च ब्रह्मपुरुषाः' (छा. उ. ३।१३।६) इत्यत्र। 'प्राणो ह पिता प्राणो ह माता' (छा. उ. ७।१५।१) इत्यादि च ब्राह्मणम्। समासबलाच्च समुदायस्य रूढत्वमविरुद्धम्।

कथं पुनः असति प्रथमप्रयोगे रूढिः शक्या आश्रयितुम्।

शक्या उद्भिदादिवत् इत्याह। प्रसिद्धार्थसंनिधाने हि अप्रसिद्धार्थः शब्दः प्रयुज्यमानः समभिव्याहारात् तद्विषयो नियम्यते, यथा 'उद्भिदा यजेत' 'यूपं छिनत्ति' 'वेदिं करोति' इति। तथा अयमपि पञ्चजनशब्दः समासान्वाख्यानादवगतसंज्ञाभावः संख्याकाङ्क्षी वाक्यशेषसमभिव्याहृतेषु प्राणादिषु वर्तिष्यते।

---

एवं पञ्चजनशब्दस्य मनुजेषु रूढस्य प्राणादिषु लक्षणया प्रयोग इति व्यवस्थापितम्। इदानीं पञ्चजनशब्दस्य प्राणादिषु रूढिरेवेति पक्षान्तरं प्रौढ्या वक्तुं शङ्कते—**कथं पुनरसति प्रथमप्रयोग इति। रूढिश्शक्येति।** प्राणादिष्विति शेषः। 'शक्योद्भिदादिवदित्याह' इति सङ्ग्रहवाक्यं विवृणोति-**प्रसिद्धार्थसन्निधाने हीति।** 'उद्भिदा यजेत पशुकामः' इत्यत्र उद्भित्पदस्य योगपर्यालोचनया उत्कृष्टभेदनकर्तेत्यर्थः प्रतीयते। स च क इति विशिष्य न ज्ञायते। तत्र यदि तृतीयायजिपदाभ्यां यागसाधनत्वे अवगते यागसाधनत्वान्वयिखनित्रादिकं प्रकृत्यर्थो वर्ण्येत, तदा 'सोमेन यजेत' इत्यादिवत् मत्वर्थलक्षणा प्रसज्येत, विशिष्टविधिगौरवं च स्यात्, तत् माभूदिति, यागस्य यत् फलजनकत्वमस्ति तदेव उद्भेदनत्वेन उपचर्य यागनामता आस्थीयते। एवं च उद्भिदेति तृतीया यागगतकरणत्वानुवादिनी भविष्यतीति प्रसिद्धयजिपदसमभिव्याहारात् उद्भित्पदं यागसंज्ञा। तथा च 'उद्भिन्नामकेन यागेन इष्टं भावयेत्' इति वाक्यार्थः। एवं 'यूपं छिनत्ति' इत्यादावपि 'खादिरो यूपो भवति' इत्यादिप्रसिद्धार्थखादिरादिपदसमभिव्याहारात् खदिरवृक्षविकारभूतः काष्ठविशेषो यूपपदार्थ इति निर्णयः। एवं 'वेदिं करोति' इत्यत्रापि वेदिशब्दः 'चतुरङ्गुलं खनति पुरीषवतीं करोति' इत्यादितत्प्रकरणगतवाक्यपर्यालोचनया खननपुरीषादिसम्पादितस्थण्डिलप्रतिपादक इति निर्धार्यते।

**केचित्तु, देवाः पितरो गन्धर्वा असुरा रक्षांसि च पञ्च पञ्चजना व्याख्याताः । अन्यैश्च, चत्वारो वर्णा निषादपञ्चमाः परिगृहीताः ।**

---

प्राणादिषु पञ्चजनपदस्य शक्तिः - इति पक्षो नातीव समीचीनः । मनुजेषु शक्तस्य पञ्चजनपदस्य लक्षणया तत्र प्रयोगसम्भवे शक्त्यन्तरकल्पनाया अन्याय्यत्वात्, प्राणादिषु एकरूपशक्यतावच्छेदकाभावाच्च । अतः प्राणादयः पञ्चजनशब्देन लक्षणया प्रतिपाद्यन्ते । तेषां च यद्यपि पुरुषभेदेन पञ्चभ्योऽधिकत्वमस्ति, तथापि वाक्यशेषोपात्तप्राणत्वाद्युपाधिभिः पञ्चत्वं द्रष्टव्यम् ।

**केचित्त्विति ।** अस्मिन् पक्षे न वाक्यशेषानुकूल्यम्, नापि पञ्चजनपदस्य मुख्यार्थत्वलाभः - इत्यस्वारस्यं द्रष्टव्यम् ।

**अन्यैरिति ।** अस्मिन् पक्षे पञ्चजनपदस्य मुख्यार्थत्वं लभ्यते ।

ननु—तेषां पञ्चभ्योऽधिकत्वात् कथं तत्र प्रथमश्रुतः पञ्चशब्दः ? न हि तत्र प्राणादिग्रहणपक्ष इव वाक्यशेषेण पञ्चावच्छेदकानि उपात्तानि - इति चेत्,

मा भूवन्। पञ्चजनशब्देन शक्त्या मनुष्येषूपस्थापितेषु तत्र पञ्चत्वोपपादनाय स्वबुद्ध्यैव कल्पनोपपत्तेः ।

इयमेव च गतिः मन्त्रान्तरेष्वप्यनुसरणीया । तथाहि - अथर्ववेदे तृतीयकाण्डे पञ्चमानुवाके समाम्नायते मन्त्रः—'यं त्वा होतारं मनसाभिसंविदुः त्रयोदश भौवनाः पञ्च मानवाः, वर्चोधसे यशसे सूनृतावते तेभ्योऽग्निभ्यो हुतमस्त्वेतत्' इति । अस्यार्थो वेदभाष्ये दर्शितः—हे अग्ने, त्वा-त्वां, होतारं-देवानाम् आह्वातारं, मनसा अभिसंविदुः-सम्यक् जानन्ति, के, त्रयोदश भौवनाः—'विश्वकर्मा भौवनः स्वात्मनि सर्वाणि भूतानि जुहवाञ्चकार' इत्यादिश्रुत्यन्तरप्रसिद्धा विश्वकर्मप्रभृतयः भुवनस्य ऋषेः पुत्राः त्रयोदशसङ्ख्याकाः, पञ्च मानवाः—निषादपञ्चमाः चत्वारो वर्णाः, गन्धर्वा देवाः पितरो रक्षांसि असुरा इत्येके, यं त्वां अभिसंविदुः तस्मै, वर्चोधसे—तेजो [1]धारयते, यशसे-यशस्विने, सूनृतावते-प्रियहितवचनयुक्ताय, तेभ्यः - प्रागुक्तेभ्यो भवद्भिर्भूतिभ्यः, अग्निभ्यश्च हुतं एतत् हविः अस्तु - इति । 'यमाय [2]हार्म्यमवपन्

---

1 आ. धारयित्रे　　2 आ. हार्म्यमावपन्

पञ्च मानवाः' 'वैवस्वतो न तृप्यति पञ्चभिर्मानवैः' इत्यादौ वेदान्तरगतेऽपि मन्त्रभागे, पञ्चमानवाः-निषादपञ्चमाश्चत्वारो वर्णाः - इति व्याख्यातारः। एतेषु सर्वेष्वपि, मनुष्येषु रूढस्य मानवशब्दस्य श्रवणात्, तेषां पञ्चत्वं बुद्धिकल्पितैः पञ्चभिरुपाधिभिः स्वीकृतम्, इहापि तथैवास्तु। एवं च अत्रत्यपञ्चजनपदस्य मन्त्रान्तरगतमानवपदैकार्थ्यमपि लभ्यते।

ननु-अस्मिन् पक्षे पञ्चजनपदस्य मुख्यता लभ्यते। परं तु पञ्चत्वसङ्ख्या स्वबुद्धिकल्पितोपाधिना नीयमाना न स्वरसा स्यात्। प्राणादिग्रहणपक्षे तु वाक्यशेषतः पञ्चानामुपाधीनां सिद्धत्वात् पञ्चशब्दः स्वरसेन व्याख्यातो भवति। प्रथमचरमश्रुतयोश्चान्यतरस्वारस्यहाने प्रसक्ते चरमश्रुतस्वारस्यमेव हातव्यम्। न च इह प्रथमश्रुतस्यापि पञ्चेतिशब्दस्य पञ्चजनार्थं प्रति विशेषणीभूतसङ्ख्यासमर्पकतया पञ्चजनपदानुसारेणैव नयनमुचितमिति - वाच्यम्। यतः 'चतुरो मुष्टीन्निर्वपति'इत्यत्र विशेषणसमर्पकस्यापि चतुरितिपदस्य प्रथमश्रुततया 'प्राजापत्यस्सप्तदशशरावो नैवारश्चरुर्भवति' इति विकृतिविशेषे अतिदेशतः प्राप्तस्य चतुर्मुष्टिपरिमितनिर्वापस्य करणे सप्तदशशरावपरिमाणस्य चरोः सम्पादयितुमशक्यतया सङ्ख्यामुष्ट्योरन्यतरबाधे प्रसक्ते चतुस्सङ्ख्यानुग्रहमङ्गीकृत्य मुष्टिबाध एवाश्रितः। एवं प्रकृतेऽपि पञ्चसङ्ख्यानुग्रह एवास्तु - इति चेत्,

उच्यते—'चतुरो मुष्टीन् निर्वपति' इत्यत्र हि चतुःपदोपात्ता सङ्ख्या [1]कारकविभक्तिसमभिव्याहारेण करणतयावगता न मुष्टिविशेषणम्, अपि तु निर्वापविशेषणम्। तथा च तत्र प्रथमश्रुतचतुःपदार्थसङ्ख्यानुसारेण मुष्टिबाधेऽपि नेह विशेषणीभूतया पञ्चत्वसङ्ख्यया पञ्चजनश्रुतेः प्राणादिषु लक्षणा अङ्गीकर्तुमुचितेति अन्येषामाशयः। चतुर्णां वर्णानां पञ्चमत्वेन निषादस्य तु ग्रहणं अग्निसम्बन्धित्वसाम्यात्। तथा चान्यो मन्त्रवर्णः जनानां अग्निसम्बन्धित्वेनैव पञ्चत्वं दर्शयति 'जना यदग्निमयजन्त पञ्च' इति।

अत्रेदमनभिमतबीजं सूत्रकृतः - वाक्यशेषपर्यालोचनया मन्त्रार्थनिर्णये सति न प्रकरणान्तरगतमन्त्रानुसार एषितव्यः। अपि च मन्त्रान्तरानुसारेण

---

1 आ. द्वितीयासमभिव्याहारेण कारकतया अवगता

क्वचिच्च 'यत् पाञ्चजन्यया विशा' (ऋ० सं० ८।५३।७) इति प्रजापरः प्रयोगः पञ्चजनशब्दस्य दृश्यते। तत्परिग्रहेऽपि इह न कश्चिद्विरोधः। आचार्यस्तु-न पञ्चविंशतेस्तत्त्वानां इह प्रतीतिरस्ति इत्येवंपरतया 'प्राणादयो वाक्यशेषात्' इति जगाद ॥ १२ ॥

भवेयुस्तावत् प्राणादयः पञ्चजना माध्यन्दिनानां, ये अन्नं प्राणादिष्वामनन्ति। काण्वानां तु कथं प्राणादयः पञ्चजना भवेयुः, ये अन्नं प्राणादिषु नामनन्ति-इत्यत उत्तरं पठति—

---

मानवपदैकार्थ्याय इह निषादपञ्चमानां चतुर्णां वर्णानां ग्रहणे वाक्यं निस्तात्पर्यं स्यात्। सर्वाधारस्य ब्रह्मणः यत्किंचिन्मानवाश्रयत्वप्रतिपादने कस्यचिदतिशय-स्यालाभात्। पञ्चजनपदेन वाक्यशेषगतप्राणादिग्रहणे अपेक्षितार्थसमर्पकतेति प्रागेवोक्तम्। न चैवमपि सर्वसत्ताप्रदस्य ब्रह्मणः 'प्राणस्य प्राणं' इत्याद्युत्तरमन्त्रेण प्राणादिकतिचित्सत्ताप्रदत्ववर्णनं निस्तात्पर्यकमिति दोषः। 'आम्नातस्यार्थं वक्तुं प्रभवामो नाम्नातं पर्यनुयोक्तुम्' इति न्यायेन, प्राणादिपदश्रवणे सति तद्ग्रहण-स्यावश्यकतया, तैरेव 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः' इत्यत्र ब्रह्मक्षत्राभ्यामिव कृत्स्नप्रपञ्चग्रहणसम्भवात्। एतदर्थप्रदर्शनार्थमेव 'यस्मिन् पञ्च पञ्चजनाः' इत्यत्र आकाशश्चेत्याकाशपदेन अव्याकृताकाशो गृहीतः अनुक्त-समुच्चयार्थेन चकारेण अन्यत् गृहीतम् - इति।

**क्वचिच्चेति।** 'यत् पांचजन्यया विशा इन्द्रघोषा असृक्षत' इति वाक्ये विशां तृतीयवर्णरूपाणां इन्द्रविषयं घोषं सृष्टवतां पाञ्चजन्येतिपदेन पञ्च-जनोत्पन्नत्वकीर्तनात्, मनुष्याः पञ्चजनपदेन विवक्षिता इति योग्यतया अवधार्यते ॥ १२ ॥

**काण्वानां तु कथमिति।** ननु तेषामपि माध्यन्दिनशाखातः अन्नस्य उपसंहारसम्भवात् न [1]पञ्चत्वविरोध इति चेत्,

सत्यम्। उपसंहारो नास्तीति कृत्वाचिन्तया परिहारं वक्तुं अयमाक्षेपः।

---

1. आ. पञ्चत्वसङ्ख्यानुपपत्तिः

## ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

असत्यपि काण्वानामन्ने ज्योतिषा तेषां पञ्चसंख्या पूर्यते। तेऽपि हि, 'यस्मिन् पञ्च पञ्चजनाः' इत्यतः पूर्वस्मिन् मन्त्रे ब्रह्मस्वरूपनिरूपणायैव ज्योतिरधीयते 'तद्देवा ज्योतिषां ज्योतिः' इति।

कथं पुनः उभयेषामपि तुल्यवत् इदं ज्योतिः पठ्यमानं समानमन्त्रगतया पञ्चसंख्यया केषांचिद्गृह्यते केषांचिन्नेति ?

अपेक्षाभेदादित्याह। माध्यंदिनानां हि समानमन्त्रपठितप्राणादिपञ्चजनलाभात् न अस्मिन् मन्त्रान्तरपठिते ज्योतिषि अपेक्षा भवति। तदलाभात्तु काण्वानां भवत्यपेक्षा। अपेक्षाभेदाच्च समानेऽपि मन्त्रे ज्योतिषो ग्रहणाग्रहणे। यथा समानेऽप्यतिरात्रे वचनभेदात् षोडशिनो ग्रहणाग्रहणे तद्वत्। तदेवं न तावत् श्रुतिप्रसिद्धिः काचित्

---

सूत्रे 'असत्यन्ने' इति अन्ने अनुपसंहृते सतीति [1]द्योत्यते। [2]तत्प्रतिपादनार्थो भाष्ये असत्यपीत्यपिशब्दः प्रयुक्तः। तद्देवा इत्यत्र तत्पदं 'यस्मादर्वाक् संवत्सरोऽहोभिः परिवर्तते' इति पूर्ववाक्यगतं कालातीतत्वेन निरूपितं ब्रह्म परामृशति। अत्र च ज्योतिषामिति षष्ठ्यन्तनिर्दिष्टं ज्योतिः पञ्चत्वसङ्ख्यापूरणाय गृह्यते। तत्र 'ज्योतिषां बहुत्वात् पञ्चभ्योऽधिकता स्यात्' इत्याशङ्कावारणार्थं, सूत्रे ज्योतिषेत्येकवचनेन निर्देशः। तथा च ज्योतिष्ट्वैनैकीकारात् न सङ्ख्याधिक्यम्। **अपेक्षाभेदाच्च समानेऽपि मन्त्रे ज्योतिषो ग्रहणाग्रहणे इति।** एतेन - एकस्यैव मन्त्रस्य शाखाभेदेन भिन्नार्थकत्वं कथमिति शङ्कापि - निरस्ता। यथा एकस्यैव मन्त्रस्य विनियोगभेदेन अनेकार्थता भवति, तद्वत् एकस्यैव मन्त्रस्य अन्नपदसन्निधानतदसन्निधानाभ्यां अर्थभेदोपपत्तेरिति।

ननु सिद्धान्ते प्राणादिषु पञ्चसु प्राणत्वादीनामुपाधीनां भिन्नत्वात् कथमेकमवच्छेदकं विना पञ्चत्वसङ्ख्यानिवेश इति चेत्,

---

1. **द्योत्यत इति**—अन्यथा 'असत्त्वादन्नस्य' इति सूत्र्येत इति भावः।
2. **तदिति**—सूत्रस्य कृत्वाचिन्तयापरिहारपरत्वेत्यर्थः।

प्रधानविषया अस्ति। स्मृतिन्यायप्रसिद्धी तु परिहरिष्येते ॥ १३ ॥

४ कारणत्वाधिकरणम्

## कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥

**प्रतिपादितं ब्रह्मणो लक्षणम्, प्रतिपादितं च ब्रह्मविषयं गतिसामान्यं वेदान्तवाक्यानाम्। प्रतिपादितं च प्रधानस्य अशब्दत्वम्।**

---

उच्यते—अन्नेन सह पञ्चत्वविवक्षायां उत्तरमन्त्राम्नातत्वं ज्योतिषा सह तद्विवक्षायां समभिव्याहृतमन्त्राम्नातत्वं एकमवच्छेदकमस्तीति न काचिदनुपपत्तिः ॥ १३ ॥

इति सङ्ख्योपसङ्ग्रहाधिकरणम् ॥ ३ ॥

इतः प्राचीनैः त्रिभिरधिकरणैः यत् प्रधानस्याशब्दत्वं 'ईक्षतेर्नाशब्दं' इत्यत्रोक्तं तत्र बाधकतया आपाततः प्रतीयमानानि कानिचिद्वाक्यानि तदबाधकानीति प्रतिपादितम्। इदानीं यत् वेदान्तानां ब्रह्मणि गतिसामान्यमुक्तं तत्र बाधकं परस्परविरुद्धार्थप्रतिपादकत्वं आशङ्कय परिह्रियते अनेनाधिकरणेन - इति दर्शयितुं वृत्तं सङ्कीर्तयन् प्रकृताधिकरणप्रतिपाद्यमाह—**प्रतिपादितं ब्रह्मण इत्यादिना।**

ननु - आनुमानिकाधिकरणारम्भगतेन 'इदंत्विदानीमवशिष्टमाशङ्क्यते' इत्यादिना 'तेषामन्यपरत्वं दर्शयितुं परस्सन्दर्भः प्रवर्तते' इत्यन्तेन भाष्येण कृत्स्नस्य आनुमानिकाधिकरणमारभ्योत्तरस्य सन्दर्भस्य प्राधानिकाशब्दत्वाक्षेपनिवारकताया उक्तत्वात् कथं प्रकृताधिकरणस्य गतिसामान्याक्षेपपरिहारार्थत्वमुच्यते-इति चेत्,

उच्यते—प्रकृताधिकरणस्य 'न जन्मादिकारणत्वं ब्रह्मणो ब्रह्मविषयं वा गतिसामान्यम्' इति भाष्यवाक्येन पारमेश्वरजगत्कारणत्वतदुपपादकगतिसामान्याक्षेपपरिहारपरतायाः प्रदर्शितत्वात् पादारम्भभाष्यं अधिकरणत्रयविषयं द्रष्टव्यम्। पादार्थस्तु [1]पूर्वोक्ताक्षेपपरिहारएवेति प्रागेवोक्तम्।

---

1. **पूर्वोक्ताक्षेपेति** पूर्वोक्तस्य-त्रिपाद्युक्तस्य आक्षेपेत्यर्थः।

तत्रेदमपरमाशङ्क्यते—न जन्मादिकारणत्वं ब्रह्मणः ब्रह्मविषयं वा गतिसामान्यं वेदान्तवाक्यानां प्रतिपत्तुं शक्यम् । कस्मात्? विगानदर्शनात् । प्रतिवेदान्तं हि अन्यान्या सृष्टिरुपलभ्यते क्रमादिवैचित्र्यात् । तथा हि—क्वचित् 'आत्मन आकाशः संभूतः' (तै. उ. २। १) इति आकाशादिका सृष्टिराम्नायते । क्वचित्तेजआदिका 'तत्तेजोऽसृजत' (छा. उ. ६।२।३) इति । क्वचित् प्राणादिका 'स प्राणमसृजत प्राणाच्छ्रद्धाम्' (प्र. उ. ६।४) इति । क्वचित् अक्रमेणैव लोकाना-

---

ननु - अस्मिन्नधिकरणे वेदान्तवाक्यानां परस्परविरुद्धार्थकत्वमाशङ्क्य परिह्रियते, नायमर्थस्समन्वयलक्षणसङ्गतः, अपि तु अविरोधलक्षणसङ्गत एव । न च - [1]स्मृतितर्कमतान्तराविरोध एव अविरोधलक्षणार्थः, न तु श्रुतिविरोधपरिहारोऽपि । स तु अत्रैव सङ्गतः । न हि परस्पराविरोधसमर्थनं विना वेदान्तवाक्यानां ब्रह्मणि समन्वयो लक्षणार्थः अनाकुलमवगन्तुं शक्यते - इति वाच्यम् । तथासति वियत्प्राणपादयोरपि द्वितीयलक्षणे सङ्गतिर्न स्यात् । अपि तु श्रुत्यविरोधसमर्थनार्थयोस्तयोः प्रथमलक्षण एव कर्तव्यता स्यात् - इति चेत्,

सत्यम् । प्रथमलक्षण एव सङ्गतयोरपि तयोः द्वितीयलक्षणे निवेशः प्रसङ्गसङ्गत्या । 'विप्रतिषेधाच्चासमञ्जसम्' इति सूत्रेण परकीयमतस्य स्वस्वप्रक्रियायामेव परस्परविरोधात् परित्याज्यत्वे कथिते, वेदान्तानामपि सृष्ट्यादिविषयाणां विरुद्धप्रक्रियत्वात्त्याज्यतेति शङ्कायां प्रसक्तायां, तयोः प्रवृत्तत्वात् । अत्र स्वरसतस्सङ्गतयोरपि तयोः 'परैरुद्भावितो दोष उद्धर्तव्यः स्वदर्शने । न तु [2]बाधितसामान्यात् उपेक्ष्यं वेददर्शनम् ॥' इति शिष्यशिक्षार्थं प्रासङ्गिकीमपि सङ्गतिमवलम्ब्य तत्र करणे सूत्रकृतोऽभिनिवेशः ।

अत्र, वेदान्तवाक्यानां ब्रह्मणि समन्वयस्सम्भवति न वेति [3]संशयः, तदर्थं तेषामविरुद्धार्थत्वं उत विरुद्धार्थत्वमिति संशयः । पूर्वस्मिन्नधिकरणे

---

1. स्मृतितर्कमतान्तरेति स्मृतिमूलं तर्कमूलं च यत् मतान्तरं तदित्यर्थः । 'स्मृतितर्काविरोधः' इति पाठः स्यात् ।

2. मु. बाधितत्वसामान्यात् 3. मु. संशय्य तदर्थं

मुत्पत्तिराम्नायते 'स इमाँल्लोकानसृजत, अम्भो मरीचीर्मरमापः' (ऐ. उ. १।१) इति। तथा क्वचित् असत्पूर्विका सृष्टिः पठ्यते 'असद्वा इदमग्र आसीत् ततो वै सदजायत' (तै. उ. २।७) इति, 'असदेवेदमग्र आसीत् तत् सदासीत् तत् समभवत्' (छां. उ. ३।१९।१) इति च। क्वचित् असद्वादनिराकरणेन सत्पूर्विका प्रक्रिया प्रतिज्ञायते—तद्धैक आहुः असदेवेदमग्र आसीत्' इत्युपक्रम्य 'कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतः सज्जायेतेति सत्त्वेव सोम्येदमग्र आसीत्' (छा. उ. ६।२।१,२) इति। क्वचित् स्वयंकर्तृकैव व्याक्रिया जगतो निगद्यते—'तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियत' (बृ. उ. १।४।७) इति। एवं अनेकधा विप्रतिपत्तेः वस्तुनि च विकल्पस्यानुपपत्तेः न वेदान्तवाक्यानां जगत्कारणावधारणपरता न्याय्या, स्मृतिन्यायप्रसिद्धिभ्यां तु कारणान्तरपरिग्रहो न्याय्यः—इति।

---

अपेक्षाविशेषात् तुल्याम्नानस्यैव मन्त्रस्य अर्थभेद इत्युक्तम्, तदस्तु, न तु एकरूपस्यैव कार्यस्य सत्कारणकत्वमसत्कारणकत्वं च सम्भवति - इति प्रत्यवस्थानात् सङ्गतिः।

'स इमान् लोकानसृजत' इति लोकसृष्टिरुक्ता, लोकानेवाह—**अम्भ इति**। द्युलोकात् परस्ताद्विद्यमाना अम्मया लोका अम्भःपदप्रतिपाद्याः, अन्तरिक्षं मरीचयः, पृथिवी मरः, [1]पृथिव्या अधस्तात् या आपः ताः अप्छब्दप्रतिपाद्याः। **तत्सदासीदिति**। यत् असत् पूर्वं स्थितं, तत् सदभूत्-किञ्चित्कार्योन्मुखमभूत्, तदेव सम्यक् वियदादिरूपेणाभवत्। तद्धेदं-तत् पुरुषसृष्टत्वेन यत् पूर्ववाक्ये प्रतिपादितं इदं-प्रत्यक्षादिसन्निहितं तर्हि-सृष्टेः प्राक् अव्याकृतं-अनभिव्यक्तनामरूपात्मकं आसीत्, तत् नामरूपाभ्यां-नामरूपज्ञाप्यव्यावृत्तिक-नामरूपविशिष्टं सत् इति यावत्। व्याक्रियत-अभिव्यक्तमभवत्। (व्याक्रियते-अभिव्यज्यते।)

---

1. मु. याः पृथिव्या अधस्तात् ता आपः। ताः

एवं प्राप्ते ब्रूमः—सत्यपि प्रतिवेदान्तं सृज्यमानेष्वाकाशादिषु क्रमादिद्वारके विगाने न स्रष्टरि किंचिद्विगानमस्ति। कुतः? यथाव्यपदिष्टोक्तेः। यथाभूतो हि एकस्मिन् वेदान्ते सर्वज्ञः सर्वेश्वरः सर्वात्मा एकोऽद्वितीयः कारणत्वेन व्यपदिष्टः तथाभूत एव वेदान्तान्तरेष्वपि व्यपदिश्यते। तद्यथा—'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ. २।१) इति। अत्र तावत् ज्ञानशब्देन परेण च तद्विषयेण कामयितृत्ववचनेन चेतनं ब्रह्म न्यरूपयत्, अपरप्रयोज्यत्वेन ईश्वरं कारणमब्रवीत्। तद्विषयेणैव

---

सत्यपीति। अनेन इत्थं सूत्रयोजना दर्शिता भवति—नसङ्ख्येति-सूत्रात् नानाभावादिति पञ्चम्यन्तं अतिरेकाच्चेति प्रकृतिमात्रं अनुवर्तते। सा च यथायोगं विपरिणम्यते। अतिरेकश्च प्रकृते विरोधो विवक्षितः। तथा चायमर्थः—वियदादेः कार्यत्वे, क्वचिदाकाशादिः क्रमः, क्वचित्तेजआदिः क्रमः, क्वचित् क्रमं विनैव सृष्टिप्रतिपादनं-इति आम्नानस्य नानाभावात्-वैलक्षण्यात्[1] अतिरेके-विरोधे सत्यपि, आत्मनः कारणत्वे विरोधो न विद्यते। सूत्रे चशब्दः अप्यर्थः 'कार्यांशे आम्नानस्य विरोधाभ्युपगमेनैव परिहारं वदामः, वस्तुतस्तु तत्रापि विरोधो नास्तीति वियत्प्राणपादयोः स्पष्टं भविष्यति' इति द्योतनार्थः। कारणत्वे इति सप्तम्यन्तम्।

एवं, कारणत्वे न चाकाशादिष्वित्यन्तेन सूत्रांशेन प्रतिज्ञां वाचयित्वा पुनः 'कारणत्वेन आकाशादिषु' इति पदयोः आवृत्तिमुपेत्य कारणत्वेनेति च[2] तृतीयान्तमुपेत्य हेतुमाह—कुत इत्यादिना। ननु ज्ञानपदेन चिद्रूपता परमात्मनस्सिध्यति, न तु ज्ञानाश्रयत्वरूपं चेतनत्वम्, इत्यत आह—परेण च तद्विषयेण कामयितृत्ववचनेनेति। तथा च, यः कामयते स ज्ञानाश्रय इति, तदन्यथानुपपत्त्या चेतनत्वं सिध्यति। कामयितृत्वाक्षिप्तमपि चेतनत्वं 'स तपोऽतप्यत' इत्यनेन पुनः स्पष्टं श्रुत्यैव दर्शितम्। ज्ञानरूपस्यापि तत् वृत्त्युपाधिकं उपपद्यत एव। अपरप्रयोज्यत्वेनेति। 'इदं सर्वमसृजत' इति स्रष्टृत्वं प्रकीर्त्य, 'भीषास्माद्वातः पवते' इत्यादिना

---

1. मु. 'वैलक्षण्यात्' नास्ति 2. मु. 'च' नास्ति

पुरेणात्मशब्देन शरीरादिकोशपरंपरया चान्तरनुप्रवेशनेन सर्वेषामन्तः प्रत्यगात्मानं निरधारयत्। 'बहु स्यां प्रजायेय' (तै. उ. २।६) इति च आत्मविषयेण बहुभवनानुशंसनेन सृज्यमानानां विकाराणां स्रष्टुरभेदमभाषत। तथा 'इदं सर्वमसृजत। यदिदं किंच' (तै. उ. २।६) इति समस्तजगत्सृष्टिनिर्देशेन प्राक्सृष्टेः अद्वितीयं स्रष्टारमाचष्टे। तदत्र यल्लक्षणं ब्रह्म कारणत्वेन विज्ञातं तल्लक्षणमेव अन्यत्रापि विज्ञायते - 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' 'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' (छा. उ. ६।२।१,३) इति, तथा 'आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किंचन मिषत्, स ईक्षत लोकान्नु सृजै' (ऐ. उ. १।१, २) इति च, एवंजातीयकस्य कारणस्वरूपनिरूपणपरस्य वाक्यजातस्य प्रतिवेदान्तमविगीतार्थत्वात्।

कार्यविषयं तु विगानं दृश्यते क्वचिदाकाशादिका सृष्टिः क्वचित्तेजआदिका इत्येवंजातीयकम्। न च कार्यविषयेण विगानेन

---

वाय्वादीनां तत्प्रयोज्यत्ववत् परमात्मनः किञ्चित्प्रयोज्यत्वाप्रतिपादनात्, अपरप्रयोज्यत्वमिति भावः।

[1]न च कार्यविषयेणेति। ननु, कार्यांशे विगाने सति तन्निरूपितायाः कारणताया अपि विगीतत्वमवर्जनीयमेव, तथा च कथं कारणतायामविगीतता - इति चेत्, यदि हि कारणत्वविशिष्टमेव ब्रह्म वेदान्तप्रतिपाद्यं भवेत्, तदा खलु विगानमप्रामाण्यावहं भवेत्, न तु तथास्ति, अपि तु कारणत्वोपलक्षितं सत्यज्ञानाद्यात्मकं ब्रह्म तात्पर्यविषयः, कारणत्वादिप्रतिपादनं तु तत्प्रतीत्युपायमात्रम्। तथा च, कार्यद्वारा कारणतायां विगाने सत्यपि, यथा [2]नानाव्याकरणग्रन्थैः विलक्षणप्रक्रियारचनद्वारा शब्दानां साधुत्वे प्रतिपाद्यमाने उपायभूतासु प्रक्रियासु विरोधे सत्यपि तात्पर्यविषयीभूते परिनिष्ठितरूपे विरोधाभावात् न अप्रामाण्यं, एवं वेदान्तेष्वपि भविष्यति।

---

1. मु. 'न च कार्यविषयेणेति' नास्ति

2. मु. नानाव्याकरणैः

कारणमपि ब्रह्म सर्ववेदान्तेष्वविगीतमधिगम्यमानमविवक्षितं भवितुमर्हतीति शक्यते वक्तुम् । अतिप्रसङ्गात् ।

समाधास्यति चाचार्यः कार्यविषयमपि विगानं 'न वियदश्रुतेः' (ब्र. सू. २।३।१) इत्यारभ्य । भवेदपि कार्यस्य विगीतत्वं, अप्रतिपाद्यत्वात् । न ह्ययं सृष्ट्यादिप्रपञ्चः प्रतिपिपादयिषितः । न हि तत्प्रतिबद्धः कश्चित् पुरुषार्थो दृश्यते श्रूयते वा । न च कल्पयितुं शक्यते, उपक्रमोपसंहाराभ्यां तत्र तत्र ब्रह्मविषयैर्वाक्यैः साकं एकवाक्यताया गम्यमानत्वात् । दर्शयति च सृष्ट्यादिप्रपञ्चस्य ब्रह्मप्रतिपत्त्यर्थताम्—'अन्नेन सोम्य शुङ्गेन अपो मूलमन्विच्छ अद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ' (छा. उ. ६।८।४) इति । मृदादिदृष्टान्तैश्च कार्यस्य कारणेनाभेदं वदितुं सृष्ट्यादिप्रपञ्चः श्राव्यत इति गम्यते । तथा च संप्रदायविदो वदन्ति—

'मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा ।
उपायः सोऽवताराय नास्ति भेदः कथंचन ॥' (मा. का. ३।१५) इति ।

ब्रह्मप्रतिपत्तिप्रतिबद्धं तु फलं श्रूयते— 'ब्रह्मविदाप्नोति परम्' (तै. उ. २।१) 'तरति शोकमात्मवित्' (छा. उ. ७।१।३) 'तमेव विदित्वाऽतिमृत्युमेति, (श्वे. उ. ३।८) इति । प्रत्यक्षावगमं चेदं फलम्, 'तत्त्वमसि' इत्यसंसार्यात्मत्वप्रतिपत्तौ सत्यां संसार्यात्मत्वव्यावृत्तेः ॥ १४ ॥

---

मृल्लोहेति । 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्' 'यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात्' 'यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः' इत्यादिभिर्दृष्टान्तैः चोदितेत्यर्थः । सः - मृदादिदृष्टान्तः आत्मनि बुद्धेरवताराय उपायः, परमार्थस्तु, भिद्यत इति भेदः स नास्तीति ॥१४॥

ननु - 'कारणीभूतस्य सत्यादिलक्षणस्य ब्रह्मणः एकरूपेण प्रतिपादनात् ब्रह्मस्वरूपबोधकेषु वाक्येषु विगानं नास्ति' इति हेतुरसिद्धः । कारणीभूतस्य वस्तुन एव क्वचिदसत्त्वप्रतिपादनात् कारणस्वरूपं असदिति प्रतीयते, तथा च

यत् पुनः कारणविषयं विगानं दर्शितं 'असद्वा इदमग्र आसीत्' इत्यादि, तत् परिहर्तव्यम् । अत्रोच्यते—

समाकर्षात् ॥ १५ ॥

'असद्वा इदमग्र आसीत्' (तै. उ. २।७) इति नात्र असत् निरात्मकं कारणत्वेन श्राव्यते । यतः 'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुः' इति असद्वादापवादेन अस्तित्वलक्षणं ब्रह्म अन्नमयादिकोशपरम्परया प्रत्यगात्मानं निर्धार्य 'सोऽकामयत' इति तमेव प्रकृतं समाकृष्य सप्रपञ्चां सृष्टिं तस्माच्छ्रावयित्वा 'तत्सत्यमित्याचक्षते' इति चोपसंहृत्य 'तदप्येष श्लोको भवति' इति तस्मिन्नेव प्रकृतेऽर्थे श्लोकमिम-

---

शून्यवादः । तन्नामरूपाभ्यामेवव्याक्रियतेति अकारणककार्योत्पत्तिप्रतिपादनात् स्वभाववादः प्रतीयते । शून्यवादिमते अभाव एव कारणं, स्वभाववादे तु न भावो नाप्यभावः कारणं, इति भेदः । अतः तद्वाक्यविरोधः सद्रूपब्रह्मकारणवादिवाक्यानाम् । न च सत्कारणप्रतिपादकवाक्यानुसारेण असद्वादस्वभाववादोपोद्बलकानि यथाकथञ्चिद्योजनीयानीत्यत्र नियामकमस्ति । अतो विनिगमनाविरहात् उभयोरपि निरर्थकत्वमस्तु । स्वाध्यायविधिपरिग्रहश्च हुंफडादिशब्दवत् जपपारायणादिषूपयोगात् भविष्यति - इति पूर्वपक्षिण आशयं अनुवदति—**यत् पुनरिति** । भवेदेतदेवं, यदि [1]असत्कारणत्ववादिवाक्यापेक्षया कारणीभूतस्य ब्रह्मणः सत्वादिप्रतिपादकानां वाक्यानां प्राबल्यं न भवेत् । उपक्रमोपसंहाराद्यनेकलिङ्गैः तेषां सत्यादिरूपब्रह्मनिरूपणे तात्पर्यमिति ईक्षत्याद्यधिकरणैः प्रतिपादितम् । तथा च तदुपक्रमोपसंहारान्तर्गतानां 'असद्वा इदमग्र आसीत्' इत्यादिवाक्यानां तदनुसारेणैव नयनमुचितम् । तात्पर्योपेतानेकसत्कारणताप्रतिपादक[2]वाक्येभ्यः तात्पर्यग्राहकोपक्रमादिलिङ्गरहितानां क्वाचित्कासत्कारणतावादिवाक्यानां दुर्बलत्वात् - इति परिहाराभिप्रायः ।

---

1. आ. असत्कारणवादि
2. आ. वाक्यापेक्षया तात्पर्य

मुदाहरति 'असद्वा इदमग्र आसीत्' इति। यदि तु असत् निरात्मकं अस्मिञ्छ्लोकेऽभिप्रेयेत ततः अन्यसमाकर्षणे अन्यस्योदाहरणात् असंबद्धं वाक्यमापद्येत। तस्मात् नामरूपव्याकृतवस्तुविषयः प्रायेण सच्छब्दः प्रसिद्ध इति, तद्व्याकरणाभावापेक्षया प्रागुत्पत्तेः सदेव ब्रह्म असदिवासीदित्युपचर्यते।

एषैव 'असदेवेदमग्र आसीत्' (छा. उ. ३।१९।१) इत्यत्रापि योजना। 'तत् सदासीत्' इति समाकर्षणात्। अत्यन्ताभावाभ्युपगमे हि तत्सदासीदिति किं समाकृष्येत।

'तद्धैक आहुरसदेवेदमग्र आसीत्' (छा. ६।२।१) इत्यत्रापि न श्रुत्यन्तराभिप्रायेण अयमेकीयमतोपन्यासः। क्रियायामिव वस्तुनि विकल्पस्यासम्भवात्। तस्मात् श्रुतिपरिगृहीतसत्पक्षदार्ढ्यायैव अयं मन्दमतिपरिकल्पितस्यासत्पक्षस्य उपन्यस्य निरास इति द्रष्टव्यम्।

'तद्धेदं तर्ह्यव्याकृतमासीत्' (बृ. उ. १।४।७) इत्यत्रापि न निरध्यक्षस्य जगतो व्याकरणं कथ्यते, 'स एष इह प्रविष्ट आनखाग्रेभ्यः'

---

यद्यप्ययमर्थः ईक्षत्याद्यधिकरणव्युत्पादितैर्न्यायैः सिद्ध एव, तथापि जगत्कारणे प्रयुक्तानां असदादिपदानां व्याख्यानाय अयं यत्नः।

'तदप्येष श्लोको भवति' इति पूर्ववाक्ये सत्यादिरूपं ब्रह्म समाकृष्य 'असद्वा इदमग्र आसीत्' इति मन्त्राम्नानात् असत्पदमनभिव्यक्तनामरूपवस्तुपरमिति तैत्तरीयवाक्ये सूत्रं योजयित्वा, 'असदेवेदमग्र आसीत्' इति छान्दोग्यवाक्येऽपि सूत्रं योजयति—**एषैव असदेवेदमग्र आसीदित्यत्रापीति**। ननु-'असद्वा इदमग्र आसीत्' इत्यादौ न अनभिव्यक्तनामरूपत्वेन कारणे असत्पदप्रयोगः, अपि तु यथाश्रुत एव शून्यवादद्योतकः। अन्यथा तद्वादस्याप्रसिद्धत्वेन छान्दोग्ये तद्वादानुवादपूर्वकं दूषणाभिधानमसङ्गतं स्यात् - इत्यत आह—**तद्धैक आहुरिति। मन्दमतिपरिकल्पितस्येति।** (असन्नेवसभवतीत्यस्य) ['असद्वा इदमग्र आसीत्' इत्यस्य] असद्वादद्योतकत्वासम्भवस्य दर्शितत्वादिति भावः। तथा च 'तद्धैक आहुः' इति श्रुतौ एके-मन्दमतयः इत्यर्थो द्रष्टव्यः।

इति अध्यक्षस्य व्याकृतकार्यानुप्रवेशित्वेन समाकर्षात्। निरध्यक्षे व्याकरणाभ्युपगमे हि अनन्तरेण प्रकृतावलम्बिना सइत्यनेन सर्वनाम्ना कः कार्यानुप्रवेशित्वेन समाकृष्येत। चेतनस्य चायं आत्मनः शरीरेऽनुप्रवेशः श्रूयते। प्रविष्टस्य चेतनत्वश्रवणात् 'पश्यंश्चक्षुः शृण्वच्छ्रोत्रं मन्वानो मनः' इति। अपि च, यादृशमिदं अद्यत्वे नामरूपाभ्यां व्याक्रियमाणं जगत् साध्यक्षं व्याक्रियते एवं आदिसर्गेऽपीति गम्यते। दृष्टविपरीतकल्पनानुपपत्तेः। श्रुत्यन्तरमपि 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' (छा. उ. ६।३।२) इति साध्यक्षामेव जगतो व्याक्रियां दर्शयति। 'व्याक्रियत' इत्यपि कर्मकर्तरि लकारः सत्येव परमेश्वरे व्याकर्तरि सौकर्यमपेक्ष्य द्रष्टव्यः। यथा 'लूयते केदारः स्वयमेव' इति सत्येव पूर्णके लवितरि।

---

**व्याक्रियत इत्यपि कर्मकर्तरि लकार इति।** अयं भावः—कर्मणः कर्तृत्वं सौकर्यसूचनाय विवक्ष्यते। यथा 'लूयते केदारः' भिद्यते कुसूलं' इति। 'लुनाति केदारं,' 'भिनत्ति कुसूलं' इति प्रयोगे हि लूञा भिदिना च विभागविशेषानुकूलो व्यापारोऽभिधीयते। स च पुरुषनिष्ठः। विभागस्तु केदारकुसूलनिष्ठः। यदा तु अल्पेनैव पुरुषव्यापारेण विभागो निष्पद्यते, तदा विभागसुकरताद्योतनाय धातुना व्यापारांशं विहाय विभागमात्रं लक्ष्यते। तथा च विभागस्य केदारकुसूलगततया धातूपात्तव्यापाराश्रयत्वात् तस्मिन् प्रयोगे तयोरेव कर्तृसंज्ञा प्राप्ता। सोऽयं कर्मकर्तेत्युच्यते। धातोः फलव्यापाररूपांशद्वयाभिधायितादशायां यत् कर्म तत् कर्ता-इति[1] व्युत्पत्तेः। तत्र छेदनाश्रयः केदारो भवति, भेदनाश्रयश्च कुसूलं भवति-इत्यर्थपर्यवसाने, 'लुनाति केदारः' 'भिनत्ति कुसूलं' इति प्रयोगे प्राप्ते 'कर्मवत् कर्मणा तुल्यक्रियः' इति सूत्रेण, 'धातोरंशद्वयाभिधायितादशायां यत् कर्म स्थितं, तत् यदा धातोः फललक्षकतया कर्तृसंज्ञं भवति, तस्मिन् प्रयोगे कर्मणि यत् कार्यं यगात्मनेपदादिकं तत् भवति' इति प्रतिपादयता, 'लूयते केदारः' 'भिद्यते कुसूलं' इति सिध्यति। इदं च सूत्रं, यत्र लकारेण कर्तृप्रतिपादनं यत्र च पुरुष-

---

1. व्युत्पत्तेः—कर्मकर्तृशब्दार्थयोगात्।

व्यापारेण कर्मणि विकारः स्पष्टमुपलभ्यते तत्रैव प्रवर्तते, न तु [1]लकारं विना अभिधानविवक्षायां, [2]नापि दृश्यादिधातुप्रयोगे। दृशिस्थले पुरुषव्यापारेण ज्ञानेन कर्मणि घटादौ विकारस्यानाहितत्वात्। तथा च 'लूयते केदारः' इत्यादौ विद्यमानस्यैव मुख्यकर्तुः अविवक्षामात्रम्, एवमत्रापि विद्यमानस्यैव कर्तुः परमेश्वरस्य अविवक्षामात्रं, न तु तदभाव एव।

ननु-भिद्यतेकुसूलमित्यादौ अविद्यमानेऽपि कर्तरि कर्मकर्तृप्रयोगोऽस्ति। न च तत्रापि भेदनकर्ता पुरुषो नियत इति वाच्यम्। यत्र चिरकालेन विश्लिष्टावयवं [3]वर्षवाताद्यभावेऽपि कुसूलं भिद्यते, तत्र अन्यस्य कर्तुरभावात्। उभयथापि च कर्मकर्तृप्रयोगः—कृचिद्विद्यमानस्यैवाविवक्षा, कृचित्त्वविद्यमानतयैव। तथा च प्रकृते [4]कर्तृकल्पनागौरववारणाय अविद्यमानतैवास्थेया— इति चेत्।

न—उक्तोत्तरत्वात् - तथासति हि, जगत्कर्तृप्रतिपादकानेकश्रुतिविरोधः, 'स एष इह प्रविष्टः' इति तच्छब्दानुकर्षणानुपपत्तिः, लौकिकनामरूपव्याकरणवैरूप्यकल्पना च - इति।

ननु-तन्नामरूपाभ्यामेवव्याक्रियतेति कर्मकर्तृप्रयोगः—इति पक्षो न साधुः, 'तद्धेदं तर्ह्यव्याकृतमासीत्' इति पूर्ववाक्ये अव्याकृतमिति हि कर्मण्येव क्तप्रयोगः। न च तत्रापि कर्मकर्तृविवक्षा। तथासति 'अव्याकृतवत् आसीत्' इति [5]क्तवतुप्रयोगापत्तेः। कर्मणि विहितक्तप्रयोगस्य, कर्मवत्कर्मणेतिसूत्रेण लकारेण कर्तुरभिधानविवक्षायामेव कर्मकार्यातिदेशस्य कृततया अप्रसङ्गात्। तत्समभि-

---

1. **लकारं विना अभिधानविवक्षायाम्**—लकारेण कर्तुः अविवक्षायाम्। तेन 'पच्यते ओदनेन' इत्यादौ भावे प्रयोगे ओदनादेः न कर्मकर्तृतेति, न ओदनादिपदोत्तरं कर्मकार्यं द्वितीया।

2. **नापि दृश्यादीति** आदिपदेन गच्छत्यादेः ग्रहणम्। तथा च 'पश्यति घटः' 'गच्छति ग्रामः' 'आरोहति हस्ती' 'अधिगच्छति शास्त्रार्थः स्मरति श्रद्धाति वा। यत्कृपालेशतस्तस्मै नमोऽस्तु गुरवे सदा॥' इत्यादौ ग्रामादेर्न कर्मकर्तृता, दर्शनगमनादिभिः ग्रामादिषु विशेषानुपलम्भात्। ततश्च न कर्मकार्यं यगादि।

3. मु. वर्षातपाद्यभावेऽपि 4. आ. कर्त्रन्तरकल्पना

5. **क्तवतुप्रयोगेति** 'कर्तरि कृत्' इति सूत्रेणेत्यादिः।

**यद्वा कर्मण्येवैष लकार अर्थाक्षिप्तं कर्तारमपेक्ष्य द्रष्टव्यः । यथा 'गम्यते ग्रामः' इति ॥ १५ ॥**

५. बालाक्यधिकरणम्

## जगद्वाचित्वात् ॥ १६ ॥

**कौषीतकिब्राह्मणे बालाक्यजातशत्रुसंवादे श्रूयते—'यो वै बालाके एतेषां पुरुषाणां कर्ता यस्य वैतत् कर्म स वै वेदितव्यः' (कौ. ब्रा. उ. ४।१९) इति ।**

---

व्याहारात् व्याक्रियतेत्यपि कर्मण्येव प्रयोग [1]उचितः । एवं च सति तदात्मानंस्वयमकुरुत [2]इत्यनेन ऐकार्थ्यमपि लभ्यते—इत्यस्वरसादाह—**यद्वा कर्मण्येवेति** ॥ १५ ॥

**इति कारणत्वाधिकरणम् ॥ ४ ॥**

**कौषीतकिब्राह्मणे बालाक्यजातशत्रुसंवाद इति ।** एवं तत्रोपाख्यायते-गार्ग्यो बालाकिर्नाम काश्यमजातशत्रुं राजानं उपेत्योवाच-'ब्रह्म ते ब्रवाणि' इति, सचाजातशत्रुरुवाच - सर्वेऽपि ब्रह्मवित्त्वेन प्रसिद्धा ब्राह्मणा जनकं प्रत्येव ब्रह्मोपदेशाय धावन्ति, त्वं तु मामुपदेशयोग्यं सम्भावयन् मत्सकाशमागतोऽसि, अतो गवां सहस्रं अस्मिन् वचने दद्मः-इति । एवं प्रतिज्ञाय, बालाकिना आदित्यचन्द्रविद्युदादिगतेषु केषुचित् पुरुषेषु उपदिष्टेषु, तान् पुरुषान् स्वविज्ञाततद्गुणोपदेशपूर्वकं अब्रह्मत्वेन निरूप्य, तावन्मात्रमुपदिश्य बालाकावुपरते 'एतावन्नु' इति तं पृष्ट्वा 'एतावदेव मया ज्ञायते' इति तेनोत्तरिते 'मृषा वै खलु मा संवदिष्ठा ब्रह्म ते ब्रवाणीति' इति बालाकिं शिक्षयित्वा, स्वयमुवाच-'यो वै बालाके एतेषां पुरुषाणां कर्ता यस्य वैतत् कर्म स वै वेदितव्यः' इति । एवमुपक्रम्य च उपसंहृतम्—'तथो एवैवंविद्वान् सर्वान् पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति' इति ।

---

1. **उचित इति** एकविषययोः 'प्रागच्छिन्नं वनं इदानीमच्छिद्यत' इति प्रयोगयोरिव एकार्थपरत्वावश्यम्भावात् इति भावः ।

2, आ. इतिश्रुत्यैकार्थ्यमपि

**तत्र - किं जीवो वेदितव्यत्वेनोपदिश्यते ? उत मुख्यप्राणः? उत परमात्मा? इति विशयः। किं तावत् प्राप्तम्? प्राण इति। कुतः? 'यस्य वैतत् कर्म' इति श्रवणात्। परिस्पन्दलक्षणस्य च कर्मणः प्राणाश्रयत्वात्। वाक्यशेषे च 'अथास्मिन् प्राण एवैकधा भवति' इति प्राणशब्ददर्शनात्। प्राणशब्दस्य च मुख्ये प्राणे प्रसिद्धत्वात्। ये चैते पुरस्तात् बालाकिना 'आदित्ये पुरुषश्चन्द्रमसि पुरुषः' इत्येवमादयः पुरुषा निर्दिष्टाः तेषामपि भवति प्राणः कर्ता, प्राणावस्थाविशेषत्वादादित्यादिदेवतात्मनाम्। 'कतम एको देव इति प्राण इति स ब्रह्म त्यदित्याचक्षते' (बृ. उ. ३।९।९) इति श्रुत्यन्तरप्रसिद्धेः।**

---

सर्वपाप्मप्रदाहादिकं च फलं मुक्तस्यैव, नान्यस्य। तथा च मुक्तिसाधनज्ञानविषयतया श्रुतः पुरुषः पूर्वपक्षे हिरण्यगर्भो जीवो वेति पर्यवस्यति। तथा च, हिरण्यगर्भाद्यतिरिक्तं ब्रह्मैव मुमुक्षुज्ञेयमिति 'तन्निष्ठस्य मोक्षोपदेशात्' [ब्र. सू. १.१.७] 'मुक्तोपसृप्यव्यपदेशात्' [ब्र. सू. १.३.२] इत्यादौ यद्व्यवस्थापितं, तत् आक्षिप्तम्।

यद्यप्यत्र पूर्वपक्षे आदित्यादिपुरुषकर्तृत्वमेव हिरण्यगर्भस्य जीवस्य वा सिध्यतीति न सर्वजगत्कारणत्वरूपं ब्रह्मलक्षणं तयोरतिव्याप्तं भवेत्, 'एतेषां पुरुषाणां कर्ता' इत्येव श्रवणात्; तथापि प्राधान्येन मुमुक्षुज्ञेयत्वरूपं यत् ब्रह्मलक्षणं तत् अतिव्याप्तं भवत्येव।

**उत मुख्यप्राण इति।** ननु-अनया कोट्या किं वायुविकारः पञ्चवृत्तिः प्राणो विवक्षितः, उत हिरण्यगर्भः। आद्ये मुख्यशब्द उपपन्नो भवति, तत्कोट्युपपादकतया परिस्पन्दलक्षणकर्मसम्बन्धित्वलिङ्गोपन्यासः प्राणश्रुत्युपन्यासश्च समञ्जसो भवति। 'ये चैते' इत्याद्युत्तरवाक्येन[1] आदित्यादिपुरुषकर्तृत्वं तु लिङ्गतयोपन्यस्यमानं तत्र न सङ्गच्छते, मुख्यप्राणे तदसम्भवात्। द्वितीये तत् उपपद्यते, हिरण्यगर्भे देवतास्रष्टृत्वस्य श्रुतिस्मृतिसम्मतत्वात्। मुख्यप्राणपदं परिस्पन्दलक्षणकर्मसम्बन्धित्वं प्राणश्रुतिश्च[2] तत्र असमञ्जसम्। तस्मात् [3]अनुपपन्नम्—इति चेत्,

---

1. **वाक्येन** - भाष्यवाक्येन। 2. **चेति** एतत् त्रितयं इत्यर्थः।
3. **अनुपपन्नमिति** मुख्यप्राणस्य पूर्वपक्षकोटित्वं इत्यादिः।

जीवो वाऽयमिह वेदितव्यतयोपदिश्यते। तस्यापि धर्माधर्मलक्षणं कर्म शक्यते श्रावयितुम् 'यस्य वैतत् कर्म' इति। सोऽपि भोक्तृत्वात् भोगोपकरणभूतानां एतेषां पुरुषाणां कर्तोपपद्यते। वाक्यशेषे च जीवलिङ्गमवगम्यते। यत्कारणं वेदितव्यतयोपन्यस्तस्य पुरुषाणां कर्तुः वेदनायोपेतं बालाकिं प्रति बुबोधयिषुरजातशत्रुः सुप्तं पुरुषं आमन्त्र्य

---

उच्यते—त्रिकोटिकोऽत्र पूर्वपक्षः। तत्र जीव इत्यनेन जीवसामान्यं जीवविशेषो हिरण्यगर्भश्चेति द्वयं विवक्षितम्। मुख्यप्राण इत्यत्र तु पञ्चवृत्तिः प्राणो विवक्षितः। मुख्यप्राणपूर्वपक्षो 'ये चैते' इत्यतः प्राक्तनेन वाक्येन दर्शितः। 'ननु मुख्यप्राण इति पूर्वपक्षो न समीचीनः, तत्र आदित्यादिदेवताकर्तृत्वस्यासम्भवात्' इत्याशङ्कायां, येचैतइतिवाक्येन हिरण्यगर्भपूर्वपक्षो दर्शितः-इति विभागः। हिरण्यगर्भे प्राणश्रुतिः परिस्पन्दलक्षणकर्मसम्बन्धित्वं च तदभिमन्तव्यप्राणद्वारकं द्रष्टव्यम्।

इदानीं जीवसामान्यपूर्वपक्षमाह—**जीवोवायमिति**। 'यस्य वैतत् कर्म' इति वाक्यं जीवे योजयति—**तस्यापीति**। ननु-कर्मशब्दः परिस्पन्दलक्षणे कर्मण्येव शक्तः, न तु धर्माधर्मयोः। अतः कथं कर्मपदेन धर्माधर्मयोर्ग्रहणम्-इति चेत्-उच्यते—'यदि ह वा अप्यनेवंवित् महत् पुण्यं कर्म करोति' [बृ. उ. १.४.१५] इति पुण्ये 'न कर्मणा लिप्यते पापकेन' इति पापे च कर्मपदसामानाधिकरण्यश्रवणेन तत्रापि शक्त्युपपत्तेः। न च परिस्पन्दलक्षणकर्मजन्यत्वात् लक्षणयैव तदुपपत्तिरिति वाच्यम्। दर्शनश्रवणादिजनितानां पुण्यपापानां परिस्पन्दजन्यत्वाभावेन लक्षणया तद्ग्रहणासम्भवात्। अतः तत्रापि शक्तिरिति भावः। 'एतेषां पुरुषाणां कर्ता' इति वाक्यं जीवसामान्ये सङ्गमयति—**सोऽपि भोक्तृत्वादिति**। जीवसामान्यग्रहणसाधकमाह—**वाक्यशेषे चेति**।

**कर्तुर्वेदनायोपेतमित्यादि**। 'स वै वेदितव्यः' इति राजोक्त्यनन्तरं एवमाम्नायते—'तत उ ह बालाकिःसमित्पाणिः प्रतिचक्रमे उपायानीति, तं होवाचाजातशत्रुः - प्रतिलोमरूपमेव स्यात् यत् क्षत्रियो ब्राह्मणमुपनयेत्, एहि व्येव त्वा, ज्ञपयिष्यामीति, तं ह पाणावभिपद्य प्रवव्राज, तौ ह सुप्तंपुरुषमीयतुः,

**आमन्त्रणशब्दाश्रवणात् प्राणादीनामभोक्तृत्वं प्रतिबोध्य यष्टिघातोत्थानात् प्राणादिव्यतिरिक्तं जीवं भोक्तारं प्रतिबोधयति । तथा परस्तादपि जीवलिङ्गमवगम्यते—'तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्ति एवमेवैष प्रज्ञात्मा एतैरात्मभिर्भुङ्क्ते एवमेवैत**

---

तंहाजातशत्रुरामन्त्रयाञ्चक्रे - बृहन् पाण्डरवासः सोमराजन्निति, स उ ह तूष्णीमेव शिश्ये, तत उ हैनं यष्ट्या विचिक्षेप, स तत एव समुत्तस्थौ - इति । तथा च [1]बुबोधयिषयोपेतं बालाकिं प्रति सुप्तजीवस्यैव राज्ञा बोधितत्वात् स एव उपक्रान्तो वेदितव्यः पुरुष इत्यवगम्यते ।

ननु - यदि सुप्तो जीवो बोधनीयः तर्हि मध्ये बृहन्नित्यादिपदैः किमर्थमामन्त्रणम् ? इत्यत आह —**आमन्त्रणशब्दाश्रवणादिति ।** प्राणादिव्यतिरिक्तस्य भोक्तृजीवस्य सर्वप्रसिद्धत्वाभावात् प्राणएवभोक्तेतिभ्रमसम्भवात् तद्व्यतिरेकं वेदितव्यस्य भोक्तुः बोधयितुं बृहन्नित्याद्यामन्त्रणम् । बृहन्नित्यादिपदानि च प्राणप्रतिपादकानि भवन्ति । 'प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च'इति श्रवणात् प्राणो बृहन् । 'किं मे वासः'इति प्राणेन पृष्टे 'आप इति होचुः'इति प्राणसंवादे श्रवणात् 'पाण्डरा आपो वासो यस्य स पाण्डरवासाः' इतिव्युत्पत्त्या पाण्डरवासाः प्राणः । 'अथैतस्य प्राणस्य आपः शरीरं ज्योतीरूपमसौचन्द्रः' इति सप्तान्नब्राह्मणे चन्द्ररूपताश्रवणात् सोमराजत्वं प्राणस्य । तथा च, यदि प्राण एव चेतनो भोक्ता स्यात् तदानीं तस्य सुप्तावनुपरतव्यापारतया आमन्त्रणशब्दं शृणुयात्, तदश्रवणात् न प्राणश्चेतनः, अपि तु तद्व्यतिरिक्तश्चेतनो भोक्ता, स एव वेदितव्यः पुरुषः । **तद्यथेति ।** श्रेष्ठी - स्वामी स्वैः-भृत्यैःभोगं प्राप्नोति, यथा वा स्वाः-भृत्याः श्रेष्ठिनं स्वामिनं भुञ्जन्ति - पालयन्ति, एवमेव एष प्रज्ञात्मा - प्रकृतो वेदितव्यः पुरुषः एतैरात्मभिः - पूर्वोपन्यस्तैरादित्यादिपुरुषैः भुङ्क्ते, एवमेव एत आत्मानः - आदित्यादयः चक्षुराद्युपकारद्वारा एतं पालयन्ति ।

ननु-यदि जीव एव वेदितव्यः पुरुषः स्यात्, तदानीं - 'क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्वैतदभूत् कुत एतदागात्' इतिवाक्यैः 'जीवस्य सुप्तिः

---

1. **बुबोधयिषयेति** स्वार्थे णिच् । बुभुत्सयेत्यर्थः । तथैव वा पाठः स्यात् ।

कुत्र, सुप्त्यनन्तरं यावत्प्रबोधं जीवश्च क तिष्ठति, प्रबोधसमये कुत आयाति' इति उपेतं बालाकिं प्रति पृष्टे, तेन च तदुत्तराज्ञाने, राज्ञा उत्तरितं- 'तासु तदा भवति यदा सुप्तः स्वप्नं न कश्चन पश्यति अथास्मिन् प्राण एवैकधा भवति तदैनं वाक् सर्वैर्नामभिः सहाप्येति' इत्यादि 'मनस्सर्वै-र्ध्यानैस्सहाप्येति' इत्यन्तं, पुनश्च 'स यदा प्रतिबुध्यते यथाग्नेर्ज्वलतः सर्वा दिशो विष्फुलिङ्गा विप्रतिष्ठेरन् एवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रति-ष्ठन्ते' इत्यादि—तदसङ्गतं स्यात्। जीवस्य निरूपणीयत्वे तमेव प्रति-पादयेत्, न तु तदधिकरणम्;

उच्यते—क्वैष इत्यत्र आद्यः प्रश्नः 'जीवस्य सुप्त्यधिकरणं किम्' इत्येवंरूपः जीवपक्षे उपपन्न एव। 'सौषुप्तजीव एव वेदितव्यः' इत्यभिप्रायं हि राज्ञः सुप्तपुरुषसमीपोपसर्पणम्। तत्र च 'जाग्रत्स्वप्नावपेक्ष्य सुषुप्तजीवस्य पाप्मा-स्पर्शरूपोऽतिशयः' इति बोधनार्थं तदाधारप्रश्नः। यतः, तदाधारतया 'तासु तदा भवति' इति हिता नाडीः बोधयति, 'हिता नाम हृदयस्य नाड्यः' इतिवाक्येन तासां [1]प्रस्तुतत्वात्। हिता नाडीः प्रविष्टस्य च पाप्मसंस्पर्शाभावो दहरविद्यायां नाडीखण्डे समाम्नातः, हिता नाडीः प्रक्रम्य 'यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानाति आसु तदा नाडीषु सुप्तो भवति तं न कश्चन पाप्मा स्पृशति' इति श्रवणात्। न तु 'जीवाधारः सुप्तौ ब्रह्म' इति बोधनार्थम्। तथा सति उत्तरे नाडीनां आधारतयाबोधनासाङ्गत्यात्। तत्र, तास्वित्यादि पश्यतीत्यन्तं आद्यप्रश्नस्योत्तरम्। 'अथास्मिन् प्राण एवैकधा भवति' इति द्वितीयप्रश्नस्य सङ्ग्रहेणोत्तरम्, तद्विवरणं 'तदैनं वाक् सर्वैर्नामभिः सहाप्येति' इत्यादिना इन्द्रियाणां सविषयाणां [2]लयाधारतया क्रियते। सुप्तौ च इन्द्रियाणां लयः वृत्त्यभावः, विषयाणां लयः तत्कृतभोगाभावः। तथा च उत्तरपर्यालोचनया द्वितीयप्रश्नः 'क्वैतत् सविषयमिन्द्रियजातमभूत्' इत्येतदर्थकः। तथा च उत्तरवाक्ये, सविषयमिन्द्रियजातं सुप्तिदशायां जीव एव लीनं भवतीति (प्रश्नप्रतिवचनाभ्यां) प्रतिपादितं भवति। इदमपि जीवलिङ्गमेव

---

1. मु. प्रकृतत्वात् 2. **लयाधारतयेति** लयाधारत्वप्रतिपादनेनेत्यर्थः। तद्वि-वरणं इत्यत्रान्वेति। 'लयाधारपरतया' इति आ. पाटेऽपि अयमेवार्थः।

आत्मान एतमात्मानं भुञ्जन्ति' (कौ. ब्रा. उ. ४।२०) इति। प्राणभृत्त्वाच्च जीवस्य उपपन्नं प्राणशब्दत्वम्।

तस्मात् जीवमुख्यप्राणयोरन्यतर इह ग्रहणीयः न परमेश्वरः, तल्लिङ्गानवगमात् - इति।

---

भवति। तत्राशङ्का 'तथासति [1]प्राणपदस्य कथं प्रयोगः' इति, तत्राह—**प्राणभृत्त्वाच्चेति**। तथा च श्रुत्यन्तरं 'स प्राणन्नेव प्राणो नाम भवति' इति प्राणशब्दत्वं जीवस्य प्रतिपादयति। [2]तृतीयप्रश्नोत्तरे अपि 'जाग्रदारम्भे इन्द्रियाणां जीवादेवाभिव्यक्तिः' [3]इति प्रतिपादनार्थे इति, न प्रश्नप्रतिवचनवाक्यानां जीवपक्षे अनुपपत्तिः।

हिरण्यगर्भपक्षे तु, जीवसामान्याधारतया [4]सुप्तौ प्राणशब्दोदितः स बोध्यत इति सिद्धान्तिवदेव प्रायशो योजना प्रश्नप्रतिवचनवाक्यानाम्।

ननु - यदि हिरण्यगर्भो वा जीवो वा वेदितव्यः पुरुषः तर्हि उपक्रमे 'ब्रह्म ते ब्रवाणि' इति ब्रह्मसङ्कीर्तनं उपसंहारे च मुक्तिरूपफलसंकीर्तनं असङ्गतं स्यात्। अतः 'यो वै बालाके' इति वाक्येऽपि पुरुषाणां कर्ता परमात्मैव प्रतिपाद्यते। 'यस्य वैतत् कर्म' इति तु कर्मशब्दः, क्रियत इति योगेन जगन्मात्रं प्रतिपादयति। तथा च सर्वजगत्कारणत्वं 'यस्यवैतत् कार्यम्' इति वचनभङ्ग्या प्रतिपाद्यते, अतः कथं पूर्वपक्षः ? अत आह—**तस्माज्जीवमुख्यप्राणयोरन्यतर इति**।

अयं भावः—'ब्रह्म ते ब्रवाणि' इति हि बालाकिना प्रतिज्ञातम्। तेन तु ब्रह्म नोक्तमेव। तच्च राज्ञैवोद्घाटितं तदुपन्यस्तानामादित्यादिपुरुषाणां ब्रह्मत्वख्यापनानन्तरं 'मृषा वै खलु बालाके मा संवदिष्ठाः ब्रह्म ते ब्रवाणीति' इति। न च मृषावादिबालाकिवचनानुसारेण राज्ञोऽपि वाक्यं व्याख्येयमित्यत्र किञ्चिन्नियामकमस्ति। उपकोसलविद्यायां अग्निवाक्यानुसारेणाचार्यवाक्यव्याख्यानं 'आचार्यस्तु ते गतिं वक्ता' इति अग्निभिरेव एकवाक्यतायाः कृतत्वात् उपपन्नम्।

---

1. आ. जीवे प्राणपदस्य
2. आ. तृतीयप्रश्नोत्तरेऽपि
3. आ. इति प्रदर्श्यत इति
4. मु. सुप्तौ यः प्राण

**एवं प्राप्ते ब्रूमः—परमेश्वर एवायं एतेषां पुरुषाणां कर्ता स्यात्। कस्मात्। उपक्रमसामर्थ्यात्। इह हि बालाकिः अजातशत्रुणा सह 'ब्रह्म ते ब्रवाणि' इति संवदितुमुपचक्रमे। स च कतिचित् आदित्याद्यधिकरणान् पुरुषान् मुख्यब्रह्मदृष्टिभाज उक्त्वा तूष्णीं बभूव। तमजातशत्रुः 'मृषा वै खलु मासंवदिष्ठा ब्रह्म ते ब्रवाणि' इत्यमुख्यब्रह्मवादितया अपोद्य तत्कर्तारमन्यं वेदितव्यतयोपचिक्षेप। यदि सोऽप्यमुख्यब्रह्मदृष्टिभाक् स्यात्, उपक्रमो बाध्येत। तस्मात् परमेश्वर एवायं भवितुमर्हति।**

---

ननु राज्ञा बालाकिं प्रति मृषावादित्वमुद्भाव्य स्वयमपि ब्रह्मणोऽप्रतिपादने उपक्रमः अत्यन्तनिरालम्बन एव स्यात्,

किं कुर्मः। राजवाक्यपर्यालोचनया हि राजा अब्रह्मविदित्यवगम्यते। ब्रह्मब्रवाणीति प्रतिज्ञायां बालाकिना कृतायां 'सहस्रमस्यां वाचि दद्मः' इति तावन्मात्रेण गुरुदक्षिणायाः प्रतिज्ञातत्वात्। न हि स्वस्यापि ब्रह्मवित्त्वे अयंमह्यं ब्रह्मोपदेक्ष्यतीत्युत्साहेन सहस्रदानप्रतिज्ञा सङ्गच्छते। 'यो वै बालाके एतेषां पुरुषाणां कर्ता' इति वादयमपि न ब्रह्मप्रतिपादनसमर्थम्। सर्वजगत्कर्तुः यत्किञ्चिदादित्यादिकर्तृत्वप्रतिपादनासामञ्जस्यात्। परिस्पन्दलक्षणस्य धर्माधर्मलक्षणस्य वा कर्मणः व्यापके निरवद्ये च असम्भवात्। न च - क्रियत इति व्युत्पत्त्या कर्मशब्देन कार्यमात्रं प्रतिपाद्यते, तत्प्रतिसम्बन्धित्वेन यस्येति तत्कर्तृत्वं सिध्यतीति सकलजगत्कारणत्वमेव अनेन प्रतिपाद्यते-इति वाच्यम्। रूढिमपेक्ष्य योगस्य दुर्बलत्वेन प्रकृते यौगिकार्थमादाय कार्यमात्रग्रहणासम्भवात्। तथात्वे च, यस्यवैतत्कर्मेत्यनेनैव सर्वकर्तृताया लब्धतया एतेषां पुरुषाणांकर्तेतिवाक्यवैयर्थ्यापत्तेः। अतो नात्र परमेश्वरः प्रतिपाद्यते।

एवं च पूर्वाधिकरणेनास्य प्रत्युदाहरणलक्षणा सङ्गतिर्द्रष्टव्या - पूर्वत्र हि एकवाक्यगतसच्छब्दानुसारेण असच्छब्दो व्याख्यातः, इह तु वक्तृभेदेन एकवाक्यताया अभावात् न बालाकिवाक्यगतब्रह्मपदानुसारेण राजवाक्यं व्याख्येयम् - इति।

**उपक्रमो बाध्येतेति।** न च - उपक्रमस्य भ्रान्तबालाकिवाक्यान्तर्गतस्य

कर्तृत्वं चैतेषां पुरुषाणां न परमेश्वरादन्यस्य स्वातन्त्र्येणावकल्पते । 'यस्य वैतत् कर्म' इत्यपि नायं परिस्पन्दलक्षणस्य धर्माधर्मलक्षणस्य वा कर्मणो निर्देशः । तयोरन्यतरस्याप्यप्रकृतत्वात्, असंशब्दितत्वाच्च । नापि पुरुषाणामयं निर्देशः । 'एतेषां पुरुषाणां कर्ता' इत्येव तेषां निर्दिष्टत्वात्, लिङ्गवचनविगानाच्च । नापि पुरुषविषयस्य

---

'मृषा वै खलु बालाके मा संवदिष्ठाः ब्रह्म ते ब्रवाणीति' इति राजवाक्येनैव बाधो दर्शितः-इति वाच्यम् । तावता 'त्वं ब्रह्म न जानासि उपक्रान्तं ब्रह्म अहं वक्ष्यामि' इति राजाभिप्रायकल्पनसम्भवात् । न च राज्ञोऽब्रह्मवित्त्वं सहस्रदानप्रतिज्ञया अवगतमिति वाच्यम् । ब्रह्मविदोऽपि राज्ञः, अन्योऽपि ब्रह्मवित् संवादकरणाय लब्ध इति हर्षेण पारितोषिकदानप्रतिज्ञाकरणसम्भवात् । एवं उपक्रमे ब्रह्मपदश्रवणात् उपसंहारे च मुक्तिफलश्रवणात् इह प्रबन्धे ब्रह्म प्रतिपाद्यमिति या बुद्धिरभवत् तदनुगुणतया आख्यायिकायोजनसम्भवे तद्विरुद्धतया आख्यायिकायोजनं न साधु ।

अपि च 'यो वै बालाके एतेषां पुरुषाणां कर्ता' इति वाक्यस्वारस्यपर्यालोचनयापि राज्ञा ब्रह्मोपदिष्टं इत्यवगम्यते - इत्याह—**कर्तृत्वं चैतेषामिति । स्वातन्त्र्येणेति** । तथा च अन्तर्याम्यधिकरणन्यायेन ब्रह्मगतमेव कर्तृत्वं ग्राह्यमिति भावः । यस्यवैतत्कर्मेत्यत्र कर्मशब्दो यद्यपि रूढ्या परिस्पन्दलक्षणस्य धर्माधर्मलक्षणस्य वा कर्मणः प्रतिपादकः, तथापि प्रकृते योगेन कृत्स्नमेव जगत् ग्राह्यम्, योगाद्रूढिर्बलीयसीत्युत्सर्गस्य एतत्पदसामानाधिकरण्येन बाधोपपत्तेः । एतत्पदेन हि असति [1]सङ्कोचकारणे कृत्स्नमेव जगत् प्रतिपाद्यते - इति मनसि निधाय तस्य अन्यपरत्वं खण्डयति—**यस्यवैतत्कर्मेत्यपीति । अप्रकृतत्वादिति** । प्राधान्येनाप्रतिपादितत्वादित्यर्थः । **असंशब्दितत्वादिति** । यथाकथञ्चिद्वा पूर्वं शब्दतोऽनवगतत्वात् इत्यर्थः । न च - पूर्वप्रकृतत्वाभावेऽपि यस्यवैतत्कर्मेतिवाक्य एव प्रकरिष्यमाणत्वात् तद्ग्रहणं किं न स्यात्, प्रकरिष्यमाणपरामर्शकताया अपि असति प्रकृते सर्वनामसु व्युत्पन्नत्वात् - इति वाच्यम् । तथासति एतत्पदवैयर्थ्यापत्तेः । 'यस्य

---

1, आ. सङ्कोचकप्रमाणे

करोत्यर्थस्य (क्रिया)[तत्]फलस्य वा अयं निर्देशः, कर्तृशब्देनैव तयोरुपात्तत्वात्। पारिशेष्यात् प्रत्यक्षसंनिहितं जगत् सर्वनाम्ना एतच्छब्देन निर्दिश्यते। क्रियत इति च तदेव जगत् कर्म। ननु जगदपि अप्रकृतं असंशब्दितं च। सत्यमेतत्। तथापि असति विशेषोपादाने साधारणेनार्थेन संनिधानेन संनिहितवस्तुमात्रस्य अयं निर्देश इति गम्यते, न विशिष्टस्य कस्यचित्, विशेषसंनिधानाभावात्। पूर्वत्र च जगदेकदेशभूतानां पुरुषाणां विशेषोपादानात् अविशेषितं जगदेव इहोपादीयत इति गम्यते।

एतदुक्तं भवति—य एतेषां पुरुषाणां जगदेकदेशभूतानां कर्ता, किमनेन विशेषेण, यस्य कृत्स्नमेव जगत् अविशेषितं कर्म-इति।

---

कर्म' इत्येव विवक्षितार्थलाभसम्भवात्। लिङ्गवचनविगानाच्चेति। पुरुषाः पुलिङ्गबहुवचनाभ्यां निर्दिष्टाः, एतत्पदं तु एकवचननपुंसकलिङ्गयुक्तम् - इति तात्पर्यम्। करोत्यर्थस्य - क्रियासामान्यरूपस्य। तत्फलस्य - उत्पत्तिरूपस्य। प्रत्यक्षसन्निहितमिति। बुद्धिसन्निहितमिति यावत्। प्रकृतप्रकरिष्यमाणपरामर्शकत्वानुपपत्तौ च बुद्धिमात्रसन्निहितपरामर्शकत्वं 'यतो वा इमानि भूतानि जायन्ते' इत्यादौ [1]व्यवस्थापितमेव, तद्वत् प्रकृतेऽपि भविष्यतीति तात्पर्यार्थः। जगदेकदेशद्वारा कृत्स्नस्य जगतः [2]प्रकृतत्वमप्यस्तीत्यभिप्रेत्याह—जगदेकदेशभूतानामिति।

ननु - यस्यवैतत्कर्मेत्यनेनैव सकलजगत्कर्तृतोक्तौ एतेषांपुरुषाणांकर्तेति पूर्ववाक्यं व्यर्थमेव स्यात्, इत्यत आह—एतदुक्तं भवतीति। एतेषां पुरुषाणांकर्तेत्यनेन हि यत्किञ्चिदादित्यादिकर्तृत्वं प्रथमतः प्रतिपाद्यते बालाक्युपदिष्टानामादित्यादिपुरुषाणां अब्रह्मत्वख्यापनाय। पुनश्च, तावन्मात्रनिर्देशे न सर्वजगत्कर्तृत्वं निर्दिष्टं भवेदिति, पुरुषकर्तुः न ब्रह्मत्वनिश्चयो झटिति स्यात्, तन्माभूदिति, 'न केवलमयं पुरुषः आदित्यादीनामेव कर्ता, अपि तु सर्वस्य जगतः कर्ता' इति पुनर्निर्देशः। एतदर्थद्योतनार्थ एव यस्यवेति वाशब्दोऽपि।

---

1. आ. व्यवस्थितमेव 2. मु. प्रकृतत्वमप्यस्तीत्याह

तथा च पूर्ववाक्योक्तमादित्यादिकर्तृत्वमपि कैमुतिकन्यायेन समर्थितं भवतीति न कस्यापि वैयर्थ्यम्। अपि च-कर्मशब्दे परिस्पन्दगोचरधर्माधर्मगोचररूढ्योः परस्परं कलहे सति प्रतिबन्धात् लब्धोन्मेषो योग एव भवति, अतो न रूढिप्राबल्यम्।

न च - योवैबालाकेएतेषांपुरुषाणांकर्तेति वाक्येन जीवस्य पुरुष-कर्तृत्वे उक्ते, 'तत् कथम्, उपादानापरोक्षज्ञानादिमत्त्वं हि तत्, न च देवेषु तादृशं [1]जीवस्य कर्तृत्वं सम्भवति' इति शङ्कायां, 'जीवादृष्टारब्धत्वात् तेषां जीवः कर्तेत्युपचर्यते' इति प्रतिपादनाय यस्यवैतत्कर्मेति वाक्यम्, तत्र धर्माधर्म-रूढिरेव लब्धोन्मेषेति न परिस्पन्दरूढेः अत्र अवकाशः, तथा च कथमत्र योगो लब्धोन्मेषः स्यात् - इति वाच्यम्। पुरुषाणांकर्तेत्यनेन हिरण्यगर्भे विवक्षिते, 'न तस्य देवादीन् प्रत्येव कर्तृत्वं अपि तु परिस्पन्दलक्षणं यत् कर्म तदपि तदीयमेव' इत्यधिकार्थबोधनाय परिस्पन्दरूढेरपि लब्धोन्मेषत्वात्। तथा च, इयमेव रूढिर्ग्राह्या नेयं इत्यत्र विनिगमनाभावेन कलहे सति योगोन्मेषो विचल एव।

अपि च कर्मशब्दस्य परिस्पन्दे वा धर्माधर्मयोर्वा न पृथक् रूढिरा-श्रयणीया, 'क्रियत इति कर्म' इति योगेनैव तस्यापि ग्रहणसम्भवात्। यत्र हि योगेन रूढ्यर्थसङ्ग्रहो नास्ति, तत्रैव पृथक् रूढिराश्रीयते, यथा अश्वकर्णादौ। यत्र तु योगेनैव रूढ्यर्थसङ्ग्रहोऽपि न तत्र पृथक् रूढिराश्रीयते, यथा प्रोक्षणीशब्दे। प्रकृष्टोक्षणसाधनत्वादेव अपां लाभे सति प्रोक्षणीशब्दस्य तत्र पृथक् रूढेरनङ्गीकारात्।

तस्मात् अजातशत्रुवाक्यमपि स्वरसतः कार्यसामान्यकर्तृत्वलिङ्गात् परमेश्वर एव पर्यवस्यति।

सूत्रस्य च अयमर्थः—'यो वै बालाके' इत्यादिवाक्यप्रतिपाद्यः पुरुषाणां कर्ता परमात्मा, कार्यसामान्यकर्तृत्वलिङ्गात् - इत्यनुमानं मनसि निधाय तत्साधक-मुच्यते जगद्वाचित्वादिति। कर्मशब्दस्येति शेषः। 'क्रियत इति कर्म' इति व्युत्पत्त्या कर्मपदेन कृत्स्नस्य कार्यरूपस्य जगतः प्रतिपादनात् उक्तहेतोर्नासिद्धिः-इति[2]। [3]एवं सति यद्यपि 'जगद्वाचित्वात्' इति सूत्रोक्तहेतुरेव पुरुषाणां कर्तुः

---

1. मु. 'जीवस्य' नास्ति 2. मु. इति भावः

3. मु. एवं च सति

वाशब्दः एकदेशावच्छिन्नकर्तृत्वव्यावृत्त्यर्थः। ये बालाकिना ब्रह्मत्वाभिमताः पुरुषाः कीर्तिताः तेषामब्रह्मत्वख्यापनाय विशेषोपादानम्। एवं ब्राह्मणपरिव्राजकन्यायेन सामान्यविशेषाभ्यां जगतः कर्ता वेदितव्यतयोपदिश्यते। परमेश्वरश्च सर्वजगतः कर्ता सर्ववेदान्तेष्ववधारितः॥ १६॥

## जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम्॥ १७॥

अथ यदुक्तं-वाक्यशेषगताज्जीवलिङ्गात् मुख्यप्राणलिङ्गाच्च तयोरेवान्यतरस्य इह ग्रहणं न्याय्यं न परमेश्वरस्येति। तत् परिहर्तव्यम्। अत्रोच्यते—परिहृतं चैतत् 'नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' (ब्र॰ सू॰ १।१।३१) इत्यत्र। त्रिविधं ह्यत्रोपासनं एवं सति प्रसज्ज्येत-जीवोपासनं मुख्यप्राणोपासनं ब्रह्मोपासनं चेति। न चैतन्न्याय्यम्। उपक्रमोपसंहाराभ्यां हि ब्रह्मविषयत्वं अस्य वाक्यस्यावगम्यते। तत्र उपक्रमस्य तावत् ब्रह्मविषयत्वं दर्शितम्। उपसंहारस्यापि निरतिशयफलश्रवणात् ब्रह्मविषयत्वं दृश्यते—'सर्वान् पाप्मनोऽपहत्य सर्वेषां (च) भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद' इति।

नन्वेवं सति प्रतर्दनवाक्यनिर्णयेनैव इदमपि वाक्यं निर्णीयेत।

न निर्णीयते। 'यस्य वैतत् कर्म' इत्यस्य ब्रह्मविषयत्वेन तत्रा-

---

परमेश्वरत्वसाधको भवत्येव, तथापि भाष्ये प्रथमत उपक्रमोपन्यासः [1]"उत्तरसूत्रपर्यालोचनया सोऽपि हेतुर्लभ्यते' इत्यभिप्रायः॥ १६॥

**सर्वेषां भूतानामिति।** अस्य 'श्रैष्ठ्यं' 'आधिपत्यं' इति पदाभ्यां अन्वयः, तयोरेव ससम्बन्धिकत्वात्। स्वाराज्यं-स्वरिति स्वरूपभूतं सुखं, तत्र राजत इति स्वराट्, स्वेन राजते-स्वप्रकाशः स्वराट् इति वा, तस्य भावः स्वाराज्यम्। अत्र न सम्बन्ध्याकाङ्क्षा। **यस्यवैतत्कर्मेत्यस्य ब्रह्मविषयत्वेन**

---

1. **उत्तरसूत्रपर्यालोचनयेति** उत्तरस्मिन्-जीवमुख्येतिसूत्रे 'तद् व्याख्यातम्' इति निराकरणभागेनोक्तस्य 'उपक्रमोपसंहाराभ्यामवगतस्य ब्रह्मविषयत्वेनैकवाक्यत्वस्य भङ्गापत्तिः' इति परिहारस्य आपाद्यव्यतिरेकनिर्णयविषयीभूतोक्तहेतुसूचकत्वं भवत्येवेति भावः।

निर्धारितत्वात् । तस्मात् अत्र जीवमुख्यप्राणशङ्का पुनरुत्पद्यमाना निवर्त्यते । प्राणशब्दोऽपि ब्रह्मविषयो दृष्टः 'प्राणबन्धनं हि सोम्य मनः' (छा. उ. ६।८।२) इत्यत्र । जीवलिङ्गमपि उपक्रमोपसंहारयोर्ब्रह्मविषयत्वात् अभेदाभिप्रायेण योजयितव्यम् ॥ १७ ॥

## अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥१८॥

अपि च, नैवात्र विवदितव्यं 'जीवप्रधानं वा इदं वाक्यं स्यात् ब्रह्मप्रधानं वा' इति । यतः अन्यार्थं जीवपरामर्शं ब्रह्मप्रतिपत्त्यर्थं अस्मिन् वाक्ये जैमिनिराचार्यो मन्यते । कस्मात् । प्रश्नव्याख्यानाभ्याम् । प्रश्नस्तावत् सुप्तपुरुषप्रतिबोधनेन प्राणादिव्यतिरिक्ते जीवे प्रतिबोधिते पुनः जीवव्यतिरिक्तविषयो दृश्यते— क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व

---

तत्रानिर्धारितत्वादिति । तथा च, 'कर्मशब्देन यौगिकार्थ एव ग्राह्यः' इति अत्रोपयुक्तो न्यायः इहैव व्युत्पाद्यत इति न तेन अस्य गतार्थता ॥ १७ ॥

[1]पूर्वत्र, 'क्वैष एतद्बालाके' इत्यादिप्रश्नप्रतिवचनानां पूर्वपक्ष्युद्भावितां जीवविषयां योजनां उपेत्य तत्सन्दर्भगतस्य जीवलिङ्गस्य सर्वात्मके ब्रह्मणि नयनं कर्तव्यम् - इत्युक्तम् । अनेन सूत्रेण 'प्रश्नप्रतिवचनसन्दर्भोऽपि न स्वरसतो जीवं प्रतिपादयति, अपि तु, जीवस्य सुषुप्तौ एकतापत्त्यधिकरणं परमात्मानमेव प्रतिपादयति' इति प्रपञ्च्यते ।

पुनर्जीवव्यतिरिक्तविषयोदृश्यत इति । क्वैषइत्यादिप्रश्नः तत्प्रतिवचनं च न 'सुप्तो जीव एव वेदितव्यः पुरुषः' इति निरूपणार्थम् । तथात्वे सुप्तजीवाधिकरणप्रश्नासाङ्गत्यापत्तेः । अतः सुप्तजीवाधारनिरूपणार्थं एव स प्रश्नः । न च - सुप्तजीवस्य प्रतिपाद्यत्वेऽपि तदधिकरणप्रश्नो हितानाडीप्रवेशेन पाप्मासंस्पर्शगुणप्रतिपादक इत्युक्तं - [2]युक्तम् । तथात्वे तासुतदाभवतीतिवाक्यानन्तरं पाप्मासंस्पर्शस्यापि प्रतिपादनं प्रसज्येत । न च तस्य शाखान्तरप्रसिद्धत्वादप्रतिपादनमिति वाच्यम् । तथात्वे नाडीप्रवेशस्यापि ततः प्रसिद्धिसम्भवात् सोऽपि न वर्ण्येत । यदि तु - क्वैषइत्यादिप्रश्नत्रयानन्तरं 'तदु ह न मेने गार्ग्यः' इति

---

1. मु. पूर्व 2. मु. 'युक्तं' नास्ति



गार्ग्यस्य श्रुत्यन्तरप्रति
इहावश्यकम् ; तथात्वे प
वेद्यत्वेन पुरुषे उपक्षि
पुरुषाङ्गभूतनाडीविषयत्वं
तथा च पुरुषस्य वेदित
प्रथमत एव इदं निर्धारि
प्रतिपत्त्यर्थः - इति ।

तथा च आचार
भवति, नाडीनां वेदितव्य
भवति' इत्यन्तम् । तथा
सोम्य तदा सम्पन्नो भवति
सुप्त्यारम्भे हिता नाडीः
बृहदारण्यके 'ताभिः प्रत्य
त्वमेव दर्शितम् । न च
शयनशब्दार्थो हि स्थू
'स्वाप्ययात्' इति सूत्रे

'क्वैतदभूत्' इ
इत्यर्थको न भवति, तत्र इ
क्वैषइतिपूर्ववाक्यात् 'एष
यावत्प्रबोधं क्वाभवत्[3] ।

तृतीयप्रश्नोऽपि '
पादयति ।

न च - यत्र सु
एवोत्थास्यतीति अर्थसिद्ध

अर्थसिद्धस्याप्यर्थ
पत्तेः । पुरुषाणां कर्तुः

---

1. आ. हितनाडी 2

गार्ग्यस्य श्रुत्यन्तरप्रतिपाद्यगोचराज्ञानोद्भावनात् [1]हितानाडीप्रवेशप्रतिपादनं इहावश्यकम्; तथात्वे पाप्मासंस्पर्शप्रतिपादनमप्यावश्यकमेव। अपि च पूर्वं वेद्यत्वेन पुरुषे उपक्षिप्ते क्वैषइतिप्रश्नस्य पुरुषविषयत्वेन प्रधानसंबन्धोपपत्तौ न पुरुषाङ्गभूतनाडीविषयत्वं कल्पनीयम्। प्रश्नश्चायमधिकरणप्रधान इति स्पष्टमेव। तथा च पुरुषस्य वेदितव्यतयोपक्षेपात् प्रश्नस्य च सुप्तजीवाधिकरणविषयत्वात् प्रथमत एव इदं निर्धार्यते - प्रश्नप्रतिवचनसन्दर्भोऽयं सुप्तजीवाधिकरणतया पुरुषप्रतिपत्त्यर्थः - इति।

तथा च आद्यस्य प्रश्नस्य 'तासु तदा भवति' इत्येतावदेव उत्तरं न भवति, नाडीनां वेदितव्यपुरुषत्वाभावात्, अपि तु 'अथास्मिन् प्राण एवैकधा भवति' इत्यन्तम्। तथा च उपक्रमानुसारेण अत्र प्राणपदं पुरुषपरम्, 'सता सोम्य तदा सम्पन्नो भवति' इति श्रुत्यन्तरानुसाराच्च। 'तासु तदा भवति' इत्येतत्तु, सुप्त्यारम्भे हिता नाडीः प्रविश्य अनन्तरं परमात्मप्राप्तिः इत्यभिप्रायम्। तथा च बृहदारण्यके 'ताभिः प्रत्यवसृप्य पुरीतति शेते' इति हितानाडीनां ब्रह्मप्राप्तिद्वारत्वमेव दर्शितम्। न च शयनप्रश्ने एकीभवतीत्युत्तरं असङ्गतमिति वाच्यम्। शयनशब्दार्थो हि स्थूलावस्थस्य जीवस्य लय एव, लयश्च एकतापत्तिरिति 'स्वाप्ययात्' इति सूत्रे [2]निर्णीतम्।

'क्वैतदभूत्' इति द्वितीयप्रश्नोऽपि 'सुप्तिदशायां इन्द्रियग्रामः क्वाभूत्' इत्यर्थको न भवति, तत्र इन्द्रियग्रामस्य कर्तृत्वेनाश्रवणात्, अप्रस्तुतत्वाच्च। किं तु, क्वैषइतिपूर्ववाक्यात् 'एषः' इत्यस्यानुषङ्गे सति, एषः - जीवः सुप्त्यारम्भानन्तरं यावत्प्रबोधं क्वाभवत्[3]। एतदिति क्रियाविशेषणं त्रिष्वपि वाक्येषु तुल्यम्।

तृतीयप्रश्नोऽपि 'प्रबोधसमये एष जीवः कुत आगात्' इति प्रतिपादयति।

न च - यत्र सुप्तः तत्रैव यावत्प्रबोधं स्थास्यति प्रबोधसमये च तत एवोत्थास्यतीति अर्थसिद्धम्, अतः पुनः प्रश्नो निरर्थकः-इति वाच्यम्।

अर्थसिद्धस्याप्यर्थस्य शङ्काविशेषनिराकरणपूर्वकं प्रतिपादनाय पुनः प्रश्नोपपत्तेः। पुरुषाणां कर्तुः असंसारिणः परमात्मनो वेदनाय उपेतं बालाकिं प्रति

---

1. आ. हितनाडी 2. आ. वर्णितम् 3. क्वाभवदिति इत्यर्थकः इति शेषः।

वा एतदभूत् कुत एतदागात्' (कौ. ब्रा. उ. ४।१९) इति। प्रतिवचनमपि 'यदा सुप्तः स्वप्नं न कंचन पश्यति अथास्मिन् प्राण एवैकधा भवति' इत्यादि, 'एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः' (कौ. ब्रा. उ. ४।२०) इति च। सुषुप्तिकाले च परेण ब्रह्मणा जीव एकतां गच्छति, परस्माच्च ब्रह्मणः प्राणादिकं जगज्जायते - इति वेदान्तमर्यादा। तस्मात् यत्र अस्य जीवस्य निस्संबो[धता][धः]स्व[च्छ][स्थ]तारूपः स्वापः - उपाधिजनितविशेष-

---

बुबोधयिषो राज्ञः [1]सुप्तपुरुषोपसर्पणं हि 'जीवस्य सुप्तौ एकतापत्त्यधिकरणतया परमात्मानं बोधयिष्यामि' इत्येतदभिप्रायम्। तत्र, प्राण एव चेतनस्य जीवस्य एकतापत्त्यधिकरणं न भवतीति प्राणस्याचेतनत्वसूचनेन ध्वनितम्। तथा च 'चेतनो जीवः सुप्तौ यत्र चेतने एकतां गच्छति स एव वेदितव्यः असंसारिपुरुषः' इति बुबोधयिषया आद्ये प्रश्ने कृते, संसारिणो जीवस्य असंसारिणा कथं एकतापत्तिः-इति प्राप्तायाः शङ्काया निराकरणमभिप्रेत्य द्वितीयः प्रश्नः। अत एव द्वितीयप्रश्नस्योत्तरे 'तदैनं वाक् सर्वैर्नामभिः सहाप्येति' इत्यादौ उपाधिलयः सुप्तौ दर्शितः। तथा च, 'संसारित्वस्योपाधिकृतत्वात् उपाधीनां च सुप्तौ लीनत्वात् स्वाभाविकैक्यप्राप्तौ न काचिदनुपपत्तिः' इति परिहारो भवति। तृतीयप्रश्नस्तु, 'यदि सुप्तावेकतां गतः परमात्मना जीवः, [2]ततः पुनरुत्थानं न स्यात्, मुक्तवत्' इति शङ्कायाः परिहारार्थः। 'एवमेवैतस्मादात्मनस्सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते' इत्युत्तरवाक्येन [3]परिहारश्च इत्थं दर्शितो भवति - मुक्तौ उपाधीनां आत्यन्तिको लयो भवति, सुप्तौ तु संस्कारावशेषेण, तथा च संस्कारावशेषेण लीनानामुपाधीनां [4]पुनरुद्बोधसम्भवात् जीवस्य पुनः परमात्मना औपाधिको[5] विश्लेषः सम्भाव्यते - इति।

अतो युक्तं प्रश्नस्य जीवव्यतिरिक्तविषयत्वम्।

---

1. आ. सुप्तपुरुषसमीपोपसर्पणं
2. आ. तदा ततः
3. आ. तत्परिहार
4. मु. पुनरुद्बोधन
5. मु. °धिको विशेषः सम्भा°



विज्ञानरहितं स्वरूपं, य
तव्यतया श्रावित इति
अपिचैवमेके शा
शत्रुसंवादे स्पष्टं विज्ञान
नमामनन्ति—'य एष
गात्' (बृ. उ. २।१।१
न्तर्हृदय आकाशः तस्मि
'दहरोऽस्मिन्नन्तराकाशः
व्युच्चरन्ति' इति च
परमात्मानमेव कारणत्वे
सुषुप्तपुरुषोत्थापनेन प्रा

व

बृहदारण्यके मैत्रे
इत्युपक्रम्य 'न वा अ
कामाय सर्वं प्रियं भव
निदिध्यासितव्यो मैत्र

---

'अपि चैवमेके'
एत आत्मानो व्युच्चर
'एवमेवास्मादात्मनः सर्वे
व्युच्चरन्ति' इति पाठः।
त्यादिनामभिरामन्त्रणेन य
प्राणव्यतिरेकः उत्थापित
अभ्युच्चय इति। सुप्तपु
पुरुषविषयत्वाभावेऽपि
इत्यभिप्रायः॥ १८॥
इ

---

1. मु. वेदितव्य

विज्ञानरहितं स्वरूपं, यतः तद्भ्रंशरूपमागमनं, सोऽत्र परमात्मा वेदितव्यतया श्रावित इति गम्यते ।

अपिचैवमेके शाखिनो वाजसनेयिनः अस्मिन्नेव बालाक्यजातशत्रुसंवादे स्पष्टं विज्ञानमयशब्देन जीवमाम्नाय तद्व्यतिरिक्तं परमात्मानमामनन्ति—'य एष विज्ञानमयः पुरुषः क्वैष तदाभूत् कुत एतदागात्' (बृ. उ. २।१।१६) इति, प्रश्ने । प्रतिवचनेऽपि 'य एषोऽन्तर्हृदय आकाशः तस्मिञ्छेते' इति । आकाशशब्दश्च परमात्मनि प्रयुक्तः 'दहरोऽस्मिन्नन्तराकाशः' (छा.उ.८।१।१) इत्यत्र । 'सर्वे एत आत्मानो व्युच्चरन्ति' इति च उपाधिमतामात्मनां अन्यतो व्युच्चरणमामनन्तः परमात्मानमेव कारणत्वेनामनन्तीति गम्यते । प्राणनिराकरणस्यापि, सुषुप्तपुरुषोत्थापनेन प्राणादिव्यतिरिक्तोपदेशः अभ्युच्चयः ॥ १८ ॥

६ वाक्यान्वयाधिकरणम्

## वाक्यान्वयात् ॥ १९ ॥

बृहदारण्यके मैत्रेयीब्राह्मणे अधीयते—'न वा अरे पत्युः कामाय' इत्युपक्रम्य 'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति आत्मनस्तु कामाय सर्वं प्रियं भवति आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेयि आत्मनो वा अरे दर्शनेन श्रवणेन मत्या

'अपि चैवमेके'इति सूत्रांशं विवृणोति—**अपि चैवमेक इति** । **सर्व एत आत्मानो व्युच्चरन्तीति चेति** । अयं माध्यन्दिनपाठः । काण्वानां तु 'एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति'इति पाठः । प्राणनिराकरणस्य - मुख्यप्राणनिराकरणस्य । बृहन्नित्यादिनामभिरामन्त्रणेन यथा प्राणव्यतिरेकबोधनं तथा प्रागेवोदितम् । तावतापि, प्राणव्यतिरेकः उत्थापितस्य जीवस्यैव सिध्यति, न तु तदधिकरणस्य, इत्यत आह—**अभ्युच्चय इति** । सुप्तपुरुषोत्थापनेन प्राणव्यतिरिक्तोपदेशस्य साक्षात् [1]वेदितव्यपुरुषविषयत्वाभावेऽपि [2]जीवैकतापत्तिप्रतिपादनद्वारा स तत्रोपयुक्तो भवत्येव- इत्यभिप्रायः ॥ १८ ॥

**इति जगद्वाचित्वाधिकरणम्** ॥ ५ ॥

1. मु. वेदितव्यपुरुषत्वाभावेऽपि  2. जीवेति प्राणव्यतिरिक्तेत्यादिः ।

**विज्ञानेन इदं सर्वं विदितम्' (बृ. उ. ४।५।६।) इति। तत्रैतद्विचिकित्स्यते—किं विज्ञानात्मैवायं द्रष्टव्यश्रोतव्यत्वादिरूपेणोपदिश्यते? आहोस्वित् परमात्मा? इति। कुतः पुनः एषा विचिकित्सा? प्रियसंसूचितेनात्मना भोक्त्रा उपक्रमात् विज्ञानात्मोपदेश इति प्रतिभाति, तथा आत्मविज्ञानेन सर्वविज्ञानोपदेशात् परमात्मोपदेश इति।**

---

पूर्वं, उपक्रमोपसंहारयोः मध्ये च ब्रह्मकीर्तनात् बालाक्यजातशत्रुसंवादस्य ब्रह्मपरत्वं दर्शितम्, अत्र तु उपक्रमोपसंहारपरामर्शेषु जीवस्यैव कीर्तनात् मैत्रेयीब्राह्मणं जीवपरमेवास्तु - इति दृष्टान्तसङ्गत्या पूर्वपक्षः क्रियते।

ननु - मैत्रेयीब्राह्मणस्य उपक्रमे न जीवः अपि तु ब्रह्मैव आम्नायते। अमृतत्वसाधनज्ञानविषयत्वरूपतद्धर्माम्नानात्। तथा ह्युपाख्यायते-याज्ञवल्क्येन प्रव्रजिष्यता, 'उद्यास्यन् वा अरे अहमस्मात्स्थानादस्मि कात्यायन्या सपत्न्या सह तव वित्तसंविभागं करिष्यामि' इति मैत्रेयीं प्रति पृष्टवता, मुमुक्षुणा पत्या सह चिरसंवासेन तत्परिचरणलब्धचित्तशुद्ध्या च सञ्जातमुमुक्षया मैत्रेय्या 'वित्तसंविभागेन मया वित्ते लब्धे तेन किमहं साक्षादेव अमृतत्वं प्राप्नुयां उत परम्परया' इत्यभिप्रायवत्या 'कथं तेनामृता स्याम्' इति पृष्टेन, 'नेति होवाच' इति वाक्येन 'वित्तेन साक्षात् स्वसाध्यकर्मद्वारा वा कथमपि अमृतत्वं नास्ति' इत्युत्तरिते, मैत्रेय्याः प्रश्नः—'येनाहं नामृता स्यां, किमहं तेन कुर्यां, यदेव भगवान् अमृतत्वसाधनं वेद तदेव ब्रूहि' इति। तथा च उपक्रमसामर्थ्यात् इदं तावत् अवगतम्-यत् अमृतत्वसाधनज्ञानविषयः तत् इह प्रतिपाद्यमिति। षष्ठाध्यायगतमैत्रेयीब्राह्मणे च 'एतावदरे खल्वमृतत्वम्' इति उपसंहारेऽप्यवगम्यते। तथा च कथं उपक्रमोपसंहारयोर्जीवविषयत्वम् - इति चेत्,

सत्यम्। अत्र हि पूर्वपक्षी ब्रह्मज्ञानस्यैवामृतत्वसाधनत्वमिति न मन्यते, अपि तु प्रकृतिविविक्तात्मज्ञानमपि मोक्षसाधनमिति। तदीयाशयानुसारेण अमृतत्वसाधनोपक्रमोपसंहारौ न ब्रह्मैकपक्षपातिनाविति, कृत्वाचिन्तया प्रवर्तितमिदमधिकरणम्। तथा च तद्व्यतिरिक्तलिङ्गबलाबलपर्यालोचनया इह निर्णयेन भवितव्यम्। तदभिप्रायेणैव भाष्ये, पत्यादिगोचरप्रीतियुक्तेन भोक्त्रा उपक्रमो जीवकोटेरुत्थापक उक्तः, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं ईश्वरकोटेरुत्थापकमित्युक्तम्।

**किं तावत् प्राप्तम्? विज्ञानात्मोपदेश इति। कस्मात्? उपक्रमसामर्थ्यात्। पतिजायापुत्रवित्तादिकं हि भोग्यभूतं सर्वं जगत्**

---

ननु - 'पतिजायादिकं सर्वं भोक्तुर्जीवस्य प्रियम्' इत्यर्थकःसन् 'न वा अरे पत्युः कामाय पतिः प्रियो भवति' [1]इत्यादिः 'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति आत्मनस्तु कामाय सर्वं प्रियं भवति' इत्यन्तः सन्दर्भो यदि जीवपरः स्यात्, तदा 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यः' इत्यादिविधिशेषो न भवेत्। तत्र हि आत्मनो दर्शनसाधनतया श्रवणादिकं विधीयते। तत्र च आत्मन एव प्रियत्वं व्युत्पादनीयं, न तु आत्मव्यतिरिक्तानां पत्यादीनाम्। अतः एवं अस्यार्थो वर्णनीयः—पत्युः जायाप्रीतिविषयत्वं तस्येष्टसाधनमिति प्रसिद्धमेव। तत्तु 'अहं जायायाः प्रियःस्याम्' इति यः पत्युः कामो वर्तते तदर्थं न भवति, अपि तु आत्मनः - ईश्वरस्य यः कामः - 'अयं पतिः एतदीयजायां प्रति प्रियो भवतु' इति, तदर्थः। अत्र च कामशब्दो यदि भावसाधनः सन् इच्छामात्रपरः, तदा [2]जायाप्रीतिविषयत्वस्य [3]तादर्थ्यं तद्विषयसाधनतामादाय द्रष्टव्यम्। यदा तु काम्यमानवस्तुपरत्वं तदा अनुपपत्तिरेव नास्ति। तथा च अयमर्थः—पत्यादीनां जायादिप्रीत्या यत् सुखं तत् आत्मनः - ईश्वरस्य इच्छया भवतीति। तादृशी इच्छा ईश्वरस्य स्वाराधकविषयैव भवतीति स्वेष्टसाधनजायादिप्रीतिप्रयोजकेश्वरानुग्रहसिद्धये ईश्वर एव आराधनीयः श्रवणादिभिः - इति। तथा च 'न वा अरे' इत्यादिसन्दर्भगतस्य आत्मपदस्य परमात्मपरत्वात् कथं जीवेन भोक्त्रा उपक्रमः? इति मनसि निधाय [4]शङ्कते—**कस्मादिति।**

परिहरति—**उपक्रमसामर्थ्यादिति।** अयं भावः—आत्मपदं यद्यपि जीवेश्वरसाधारणं, तथापि 'न वा अरे' इत्यादिवाक्येषु जीवपरमेव। पत्यादि-

---

1. मु. 'इत्यादिः' नास्ति　　2. मु. जायादिप्रीति

3. **तादर्थ्यम्**—इच्छार्थत्वम्, **तद्विषयसाधनतां आदाय** इच्छाविषयार्थत्वं विज्ञाय, द्रष्टव्यम् - ग्राह्यम्। तथा च परम्परया इच्छार्थत्वं वाक्यार्थ इत्यर्थः। परमात्मा हि तत्तत्कर्मानुसारेण जीवात्मनः प्रियमनुभावयितुमिच्छन् प्रतिनियतदेशकालपरिमाणं तत्तद्वस्तुषु प्रियत्वं आपादयति, तथा च परमात्मनः तत्तज्जीवप्रियप्रतिलम्भनं इष्टं इति भावः।

4, शङ्कितोऽयमेवार्थः विशिष्टाद्वैतिभिः सिद्धान्तत्वेन अङ्गीकृतः।

समभिव्याहारेण तत्प्रतिसम्बन्धिनो जायाद्यात्मन एव स्वरसत आत्मशब्दादुपस्थितेः। अपि चात्र वैशब्दः श्रूयते। स च प्रसिद्धिद्योतकः। तथा च सम्बोध्यां मैत्रेयीं प्रति प्रसिद्धो योऽर्थः स एव वक्तव्यः। न च 'ईश्वरसङ्कल्पाधीना सर्वस्येष्टप्राप्तिः' इति वेदाध्ययनरहितया मैत्रेय्या अवगन्तुं शक्यते। सार्वत्रिकप्रसिद्धिद्योतकत्वसम्भवे च न क्वाचित्कवैदिकमात्रप्रसिद्धिपरत्वमपि न्याय्यम्। तस्मात् अयमर्थः—सर्वमपि पत्यादिकं आत्मनः - स्वस्य कामाय - [1]काम्याय प्रियं भवति - इति। स्वेष्टोपयोगितया सर्वं प्रियं भवति - इत्यर्थस्तु मैत्रेय्या अपि प्रसिद्ध एव। अत एव तदीयां दृष्टिमनुरुध्यैव 'न वा अरे पत्युः कामाय पतिः प्रियो भवति' [2]इत्युक्तम्। अयं हि तस्य पर्यायस्याभिप्रायः—पतिव्रतायास्तव अहं - पतिः सर्वेभ्यः प्रियः, सोऽपि तु स्वशेषतयैव प्रियः तव - इति। अतः उपक्रमस्य तावत् जीवविषयत्वं स्वारसिकम्।

न च 'तथा सति दर्शनादिवाक्यैकवाक्यता न स्यात्' इत्युक्तं युक्तम्। यस्मात् आत्मार्थतया सर्वं प्रियं भवति, अतः आत्मन एव निरुपाधिकं प्रियत्वम्, न हि तस्य कदाप्यप्रियत्वम्, पत्यादीनां तु आत्मानिष्टापादकतादशायां अप्रियत्वम्, अतः सोपाधिकप्रियत्वं तेषाम् - इति पत्यादिवाक्यार्थः पर्यवसितः। अमुमर्थं श्रुत्यन्तरमप्यनुवदति—'तदेतत् प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोऽन्यस्मात् सर्वस्मात् अन्तरतरं यदयमात्मा' [बृ. उ. १. ४. ५] इति। ततश्च, निरुपाधिकप्रीतिगोचरत्वात् आत्मैव द्रष्टव्यः श्रोतव्य इति एकवाक्यतायां न काचिदनुपपत्तिः।

ननु - उपक्रमे आत्मपदमस्तु जीवपरम्, तथापि 'आत्मा वा अरे द्रष्टव्यः' इत्यादिवाक्येषु आत्मपदं परमात्मपरमेवास्तु, न च तथासति पूर्वसन्दर्भस्य तत्रैकवाक्यता न स्यादिति वाच्यम्। यस्मात् आत्मार्थतया सर्वं प्रियं लौकिकं वैदिकं

---

1. मु. 'काम्याय' नास्ति

2. **इत्युक्तमिति** पतिपर्यायः प्राथम्येनोक्त इत्यर्थः। वैदिकप्रसिद्धिमात्रग्रहणे पर्यायान्तरस्यापि प्रथमं उक्तिसंभवः, न तूक्तम्। तेन ज्ञायते मैत्रेयीं प्रति तत्प्रसिद्धार्थं प्रथमं प्रदर्श्य तद्दृष्टान्तेन तत्सम्मतियोग्यान्यर्थान्तराणि वर्णनीयानीति उपदेष्टुरभिप्राय इति। अतो मैत्रेयीप्रसिद्धार्थ एव आद्यः - इत्युपष्टम्भसङ्गतिः।

**आत्मार्थतया प्रियं भवतीति, प्रियसंसूचितं भोक्तारमात्मानं उपक्रम्य, अनन्तरं इदं आत्मनो दर्शनादि उपदिश्यमानं कस्यान्यस्यात्मनः स्यात्। मध्येऽपि 'इदं महद्भूतमनन्तमपारं विज्ञानघन एव एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति' इति प्रकृतस्यैव महतो भूतस्य द्रष्टव्यस्य भूतेभ्यः समुत्थानं विज्ञानात्मभावेन ब्रुवन् विज्ञानात्मन एव इदं द्रष्टव्यत्वं दर्शयति। तथा 'विज्ञाता-**

---

वा पत्यादिकं तस्मात् आत्मनो निरतिशयप्रीतिसाधनं यत् श्रवणं मननं निदिध्यासनं परमात्मविषयं तदेव सम्पादनीयम् - [1]इत्येकवाक्यतोपपत्तेः, इत्यत आह— **प्रियसंसूचितमित्यादि**। आत्मपदस्य उपक्रमगतस्यैव दर्शनादिवाक्ये [2]श्रवणेन प्रत्यभिज्ञया अर्थैक्यावगतेः न भिन्नार्थत्वमुचितम्। न च 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेन इदं सर्वं विदितम्' इति [3]उत्तरत्र परमात्मलिङ्गसमभिव्याहृततया आत्मपदश्रवणात् तस्य परमात्मपरत्वे तत्प्रत्यभिज्ञानात् इदमपि परमात्मपरमिति वाच्यम्। प्रथमश्रुतपत्यादिवाक्यगतात्मपदप्रत्यभिज्ञानानुसारात् द्रष्टव्यादिवाक्यगतस्य जीवपरत्वे अवधारिते चरमश्रुतात्मपदप्रत्यभिज्ञायाः अनादरणीयत्वात्। एतेभ्यः-शरीराकारपरिणतेभ्यः भूतेभ्यः हेतुभ्यः समुत्थाय - जन्म प्राप्य [4]मरणकाले तान्येव भूतानि नश्यन्ति अनुसृत्य नश्यति। इदं च वाक्यं जन्ममरणलिङ्गात् जीवपरमिति भावः।

ननु इदं वाक्यं प्रकृतद्रष्टव्यात्मविषयकं माभूत् - इत्याशङ्क्याह— **प्रकृतस्यैवेति**। अत्र वाक्ये इदंपदस्य सर्वनामतया प्रकृतात्मपरामर्शकत्वात्, महद्भूतपदाभ्यां 'अस्य महतो भूतस्य निश्वसितमेतत् यदृग्वेदः' इत्यादिवाक्यगतस्य महतो भूतस्य प्रत्यभिज्ञानाच्च। निश्वसितवाक्ये च अस्येत्यस्य प्रकृतात्मपरामर्शकत्वात्। षष्ठे च मैत्रेयीब्राह्मणे [5]एतद्वाक्यस्थाने 'अयमात्मानन्तरोऽबाह्यः

---

1. **इत्येकवाक्यतोपपत्तेरिति** अयमेकवाक्यतोपपादनप्रकारोऽपि विशिष्टाद्वैतिनामभिमतः सिद्धान्तः।

2. मु. श्रवणप्रत्यभिज्ञया  3. मु. उत्तरपरमात्म

4. मु. 'मरणकाले' नास्ति  5. मु. तद्वाक्य

रमरे केन विजानीयात्' इति कर्तृवचनेन शब्देन उपसंहरन् विज्ञानात्मानमेव इहोपदिष्टं दर्शयति। तस्मात् आत्मविज्ञानेन सर्वविज्ञानवचनं भोक्त्रर्थत्वाद्भोग्यजातस्य औपचारिकं द्रष्टव्यम् - इति।

एवं प्राप्ते ब्रूमः—परमात्मोपदेश एवायम्। कस्मात्?

---

कृत्स्नो रसघन एव' इत्येवं प्रकृतमात्मपदमेव श्रूयते। **विज्ञातारमरे केन विजानीयादिति।** ननु - विज्ञातृपदेन विशिष्टज्ञानवान् सर्वज्ञः परमात्मापि वक्तुं शक्यत इति कथमिदं जीवासाधारणमिति [1]शङ्कितुं युक्तम्। विज्ञानपदस्यान्तःकरणपरिणामभूतज्ञानविशेष एव रूढत्वात्, अस्मिन्नेव प्रकरणे 'तदितर इतरं विजानाति' 'तत् केन कं विजानीयात्' इत्यादौ जीवधर्मस्यैव[2] तेनाभिधानाच्च। तथा च उपक्रमोपसंहारैकरूप्येण वाक्यस्य जीवपरत्वे अवधारिते मध्ये एकविज्ञानेनसर्वविज्ञानादिकं ईश्वरलिङ्गतयाऽवगम्यमानं यथाकथञ्चिद्व्याख्येयम् - इत्याह— **तस्मादिति। भोक्त्रर्थत्वादिति।** यथा 'प्रधाने-राजनि अवगते सर्वे अवगता एव भवन्ति' इति प्रधानभूतस्य स्तुत्यर्थमुच्यते, एवं इदमपि वाक्यं स्तुत्यर्थमिति भावः।

ननु - तत्त्वमस्यादिवाक्यैर्जीवब्रह्मणोरभेदस्यावगततया जीवेश्वरानुयायिनश्चैतन्यस्यैकत्वात् जीवधर्मा ईश्वरे वक्तुं शक्यन्त एवेति प्रत्यगभिन्नपरमात्मपरमेवेदं वाक्यं किं न स्यात् -

न स्यात्। न हि तत्त्वमस्यादिवाक्यपर्यालोचनया जीवब्रह्मणोरभेदोऽवधारयितुं शक्यते। आत्यन्तिकाभेदाभ्युपगमे भेदघटितस्य उद्देश्यविधेयभावस्यैव असम्भवेन तत्त्वमस्यादिवाक्यानां बोधकतैव न स्यात्।

तस्मात् प्रकृतिविविक्तो भोक्ता जीव एव मुमुक्षुभिर्ज्ञेयतया मैत्रेयीब्राह्मणप्रतिपाद्य इति पूर्वपक्षः।

'अयं मैत्रेयीब्राह्मणसन्दर्भः परमात्मपर एव' इति साध्यमध्याहृत्य, वाक्यान्वयादिति सौत्रं हेतुं तत्र दर्शयितुं आकाङ्क्षामुत्थापयति—**कस्मादिति।**

---

1. **शङ्कितुमिति** शङ्कितोऽयमर्थः विशिष्टाद्वैत्यभिमतः।
2. मु. 'एव' नास्ति

वाक्यान्वयात्। वाक्यं हीदं पौर्वापर्येणावेक्ष्यमाणं परमात्मानं प्रति अन्विताचयवं लक्ष्यते। कथमिति। तदुपपाद्यते—'अमृतत्वस्य तु नाशास्ति वित्तेन' इति याज्ञवल्क्यादुपश्रुत्य 'येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान् वेद तदेव मे ब्रूहि' इति अमृतत्वमाशासानाया मैत्रेय्या याज्ञवल्क्य आत्मविज्ञानमिदमुपदिशति, न च अन्यत्र परमात्मविज्ञानात् अमृतत्वमस्ति-इति श्रुतिस्मृतिवादा वदन्ति। तथा आत्मविज्ञानेन सर्वविज्ञानमुच्यमानं न अन्यत्र परमकारणविज्ञानात् मुख्यमवकल्पते। न चैतदौपचारिकमाश्रयितुं शक्यं, यत्कारणं आत्मविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय अनन्तरेण ग्रन्थेन तदेवोपपादयति—'ब्रह्म तं परादात् योऽन्यत्रात्मनो ब्रह्म वेद' इत्या-

---

अमृतत्वस्य तु नाशास्ति वित्तेनेति याज्ञवल्क्यादुपश्रुत्येति। इदं कृत्वाचिन्तोद्घाटनम्। श्रुतिस्मृतिवादा वदन्तीति। 'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः। तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति' 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' 'तमेवं विद्वानमृत इह भवति। नान्यः पन्था अयनाय विद्यते' इत्याद्याश्श्रुतयः, तदनुसारिण्यश्च 'ज्ञेयं यत्तत् प्रवक्ष्यामि यत् ज्ञात्वाऽमृतमश्नुते' इत्याद्याः स्मृतयो निर्विशेषात्मज्ञानस्यैव[1] मुक्तिहेतुतां वदन्ति, न तु साङ्ख्याभिमतप्रकृतिविविक्तात्मज्ञानस्य। प्रत्युत निर्विशेषात्मज्ञानादन्यस्य साधनतां वारयन्ति। अतः अमृतत्वोपक्रमोपसंहारैकरूप्यात् निर्विशेषप्रत्यगभिन्नस्वरूपपरतैव अस्य सन्दर्भस्य आस्थेयेति भावः।

तिष्ठतु तावत् अमृतत्वोपक्रमोपसंहारैकरूप्यम्, मध्यगतवाक्यपर्यालोचनयापि भोक्तृस्वरूपविलक्षणात्मपरता आस्थेया इत्यभिप्रेत्याह—तथा आत्मविज्ञानेन सर्वविज्ञानमिति। उपपत्तिरूपतात्पर्यलिङ्गसद्भावात् न तस्य गौणत्वमास्थेयमित्याह—नचैतदिति। इत्यादिनेत्यादिपदेन 'क्षत्रं तं परादात्, लोकास्तं परादुः, देवास्तं परादुः, भूतानि तं परादुः, सर्वं तं परादात्, योऽन्यत्रात्मनः सर्वं वेद, इदं ब्रह्म इदं क्षत्रमिमे लोका इमे देवा इमानि च भूतानि इदं सर्वं यदय-

---

1. मु. 'एव' नास्ति

**दिना । यो हि ब्रह्मक्षत्रादिकं जगत् आत्मनोऽन्यत्र स्वातन्त्र्येण लब्धसद्भावं पश्यति तं मिथ्यादर्शिनं तदेव मिथ्यादृष्टं ब्रह्मक्षत्रादिकं जगत् पराकरोतीति भेददृष्टिमपोद्य 'इदं सर्वं यदयमात्मा' इति सर्वस्य वस्तुजातस्य आत्माव्यतिरेकमवतारयति ।**

---

मात्मा' इति वाक्यशेषो गृह्यते । तस्य तात्पर्यमाह—**यो हीति । आत्मनोऽन्यत्र स्वातन्त्र्येण लब्धसद्भावमिति ।** आत्मनोऽन्यत्, ब्रह्मसत्तातिरिक्तसत्तावच्च - इत्यर्थः ।

अयमत्र उपपादनवाक्यस्याशयः—'ब्रह्मविज्ञानेन वियदादिकं सर्वं कथं ज्ञातुं शक्यम्, न हि घटविज्ञानेन पटो विदितो भवति' इति शङ्कायां परिहारः 'ब्रह्म तं परादात्' इत्यादिना क्रियते । ब्रह्मविज्ञानेन वियदादिकं सर्वं तदा हि विज्ञातं न स्यात्, यदि घटपटयोरिव ब्रह्मप्रपञ्चयोर्भेदः, न तु तदस्ति, किं तु ब्रह्मैव अनिर्वचनीयाभिर्वियदाद्यवस्थाभिः तत्तत्प्रपञ्चात्मना अवस्थितं सर्वमित्युच्यते । तथा च ब्रह्मक्षत्रादिशब्दार्थोऽपि तत्तज्जात्यवस्थितपिण्डोपहितं ब्रह्मैव, यथा इदंरजतमिति प्रयोगे रजतपदार्थो रजतावस्थोपहिता शुक्तिरेव। ततश्च वियदादिप्रपञ्चे चिज्जडात्मरूपे सति, ब्रह्मणि विदिते जडानामवस्थानामज्ञानेऽपि तदनुगतं ब्रह्म विदितमेव भवति - इति । तथा च [1]प्रतिज्ञाव्युत्पादनाय प्रवृत्ते ब्रह्मतंपरादादित्यादिवाक्ये अन्यत्रेति त्रप्रत्ययः [2]ब्रह्मक्षत्रादिसामानाधिकरण्याय [3]द्वितीयार्थे द्रष्टव्यः । सार्वविभक्तिकत्वात् । तथा च अन्यत्र प्रथमार्थे प्रयोगो भवति 'समं समाधानं अन्यत्राभिनिवेशात्' इति । अत एव 'इदं ब्रह्मेदं क्षत्रं' इति वाक्यशेषेऽपि [4]पूर्वोक्तानां ब्रह्मक्षत्रादीनां सामानाधिकरण्यमेव आत्मपदेन दृश्यते ।

ननु सर्वस्य प्रपञ्चस्य ब्रह्मरूपता अनुगतांशमादाय व्युत्पादनीया, तत्र 'सर्वासु वियदाद्यवस्थासु अनुगतिः ब्रह्मणः कुतः सिध्येत्' इत्याशङ्कायां 'स यथा

---

1. **प्रतिज्ञा** - एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा ।
2. आ. ब्रह्मक्षत्रादिपदसामा°
3. **द्वितीयार्थे इति** एतेन 'सप्तम्यर्थे' इति वादिनो विशिष्टाद्वैतिनो निरस्ताः ।
4. आ. पूर्वोपात्तानाम्

दुन्दुभ्यादिदृष्टान्तैश्च तमेवाव्यतिरेकं द्रढयति ।

---

दुन्दुभेर्हन्यमानस्य न बाह्यान् शब्दान् शक्नुयात् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः' 'स यथा शङ्खस्य' 'स यथा वीणायै वाद्यमानायै न बाह्यान् शब्दान् शक्नुयात् ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः' इत्यादिवाक्यान्याम्नातानि ।

तत्र आद्यपर्यायस्य अयमर्थः प्रकृतोपयोगी ग्राह्यः—'इदं सर्वं यदयमात्मा' इत्यनेन योऽर्थ उक्तः स यथा विस्पष्टो भवति तथा व्युत्पाद्यते दुन्दुभेर्हन्यमानस्येति । अत्र अग्रहणेनेति पदं अध्याह्रियते । दुन्दुभिपदं [1]दुन्दुभिजनितशब्दसामान्यलक्षणार्थम्, हन्यमानपदमपि तत्तात्पर्यग्राहकम् । शब्दपदं दुन्दुभिजनितशब्दविशेषपरम्, बाह्यपदं तदर्थतात्पर्यग्राहकम् । तथा चायमर्थः— दुन्दुभिशब्दसामान्याग्रहणे तद्विशेषान् ग्रहणाय न शक्नुयात् । एवं व्यतिरेकमुक्त्वा अन्वयमाह—दुन्दुभेस्तुग्रहणेनेति । दुन्दुभिशब्दसामान्यस्य ग्रहणे तु शब्दः - दुन्दुभिविशेषशब्दः गृहीतो भवति । एवं, दुन्दुभ्याघातस्य - वीररसप्रधानो दुन्दुभिशब्दो दुन्दुभ्याघात उच्यते, तत्सामान्यस्य ग्रहणे तदवान्तरविशेषा [2]गृहीता भवन्तीति तदर्थः । एवं शङ्खवीणापर्याययोरप्यर्थो द्रष्टव्यः । तथा चायमर्थस्सिद्धः—यस्मिन् गृहीते यत् गृह्यते अगृहीते च न गृह्यते तत् तेष्वनुगतं भवति, यथा दुन्दुभिशब्दसामान्यं तद्विशेषेषु । एवं सद्रूपे ब्रह्मणि गृहीत एव वियदादिविशेषा गृह्यन्ते, अतः तत् तेष्वनुगतमिति व्याप्तिवाक्यमध्याहृत्य दृष्टान्तदार्ष्टान्तिकयोः साङ्गत्यं द्रष्टव्यम् । तदिदमाह - **दुन्दुभ्यादिदृष्टान्तैश्चेति ।** तथाच न एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा गौणीति वक्तुं शक्यते ।

अत्र [3]सर्वविज्ञानोपपादकतया उपन्यस्तं सर्वात्मत्वं स्वातन्त्र्येणापि ब्रह्मलिङ्गं भवत्येव, तद्धि 'सर्वं खल्विदं ब्रह्म' इत्यादिषु ब्रह्मण एव प्रसिद्धमिति द्रष्टव्यम् ।

---

1. **दुन्दुभीति** हन्यमानदुन्दुभीत्यर्थः ।
2. आ॰ गृहीता एव
3. आ॰ सर्वविज्ञानप्रतिज्ञोपपादकतया

**'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' (बृ. उ. ४।५।११) इत्यादिना च प्रकृतस्यात्मनो नामरूपकर्मप्रपञ्चकारणतां व्याचक्षाणः परमात्मानमेनं गमयति। तथा एकायनप्रक्रियायामपि सविषयस्य सेन्द्रियस्य सान्तःकरणस्य प्रपञ्चस्य एकायनं अनन्तरमबाह्यं कृत्स्नं**

---

द्रष्टव्यस्यात्मनो ब्रह्मत्वे जगत्कारणत्वलिङ्गमाह—**अस्य महत इति**। तस्यैव ब्रह्मत्वे सर्वलयकारणत्वं लिङ्गान्तरमाह—**तथैकायनप्रक्रियायामपीति**।

ननु-एकायनप्रक्रियायां 'स यथा सर्वासामपां समुद्र एकायनं एवं सर्वेषां स्पर्शानां त्वगेकायनम्' इत्यादिना 'एवं सर्वेषां वेदानां वागेकायनम्' इत्यन्तेन निश्वसितवाक्यानन्तरमाम्नातेन नदीसमुद्रदृष्टान्तपूर्वकं तत्तदिन्द्रियविषयाणां तत्तदिन्द्रियमायतनमुक्तं, न त्वत्र कृत्स्नस्य प्रपञ्चस्य प्रकृतात्मायतनत्वमुक्तम्। अतः कथं एकायनप्रक्रिया तस्य ब्रह्मतां गमयेत् - इति चेत्;

उच्यते—एकायनप्रक्रिया प्रकृतात्मसम्बन्धिनी तावत् अवश्यमुपेया। तत्प्रकरणगतत्वात्, तत्प्रतिपादकयोर्निश्वसितसैन्धवखिल्यवाक्ययोर्मध्यगतत्वाच्च। तथा च, नदीनां समुद्रो लयाधिकरणत्वेन 'समुद्र एकायनम्' इत्यत्र वाक्ये विवक्षितः, 'यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय' इतिश्रुत्यन्तरार्थोद्बोधात्। तदनुसारेण 'एवं सर्वेषां स्पर्शानाम्' इत्यादिदार्ष्टान्तिकवाक्यान्यपि लयप्रतिपादकानि विवक्षितानि। न च विषयाणामिन्द्रियाणि लयाधिकरणानीति, त्वगादिपदैः स्पर्शादीनां सूक्ष्मावस्था विवक्ष्यन्ते, अतीन्द्रियत्वसामान्यात्। तथा च एकायनप्रक्रियया, नदीनां यथा समुद्रे [1]लयः एवं स्थूलानां स्पर्शादीनां सूक्ष्मावस्थासु लयो भवतीति प्रतिपादितं भवति। अयं च सर्वोऽपि ब्रह्मणो लयाधारत्वे दृष्टान्तः। तत्र लयाधारत्वं [2]ब्रह्मणो व्युत्पादयितुं 'एवं सर्वेषां आत्मा एकायनम्' इति वाक्यं अध्याहर्तव्यम्।

एवं सर्वात्मत्वादिना ब्रह्मणः सप्रपञ्चत्वेन विकारित्वे निर्विकारत्वप्रतिपादकागमविरोधे प्रसक्ते सप्रपञ्चत्वस्यारोपितत्वप्रतिपादनार्थं[3] 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव एवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः

---

1, मु. विलयः 2, मु. 'ब्रह्मणो' नास्ति 3. मु. प्रतिपादनार्था

प्रज्ञानघनं व्याचक्षाणः परमात्मानमेनं गमयति । तस्मात् परमात्मन एवायं दर्शनाद्युपदेश इति गम्यते ॥ १९ ॥

यत्पुनरुक्तं प्रियसंसूचितोपक्रमात् विज्ञानात्मन एवायं दर्शनाद्युपदेश इति, अत्र ब्रूमः —

**प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥**

अस्त्यत्र प्रतिज्ञा 'आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति' 'इदं सर्वं यदयमात्मा' इति च । तस्याः प्रतिज्ञायाः सिद्धिं सूचयति

---

प्रज्ञानघन एव' इति षष्ठे मैत्रेयीब्राह्मणे श्रुतिः । तदर्थं संगृह्णाति—**अनन्तरमित्यादिना** । यथा सैन्धवपिण्डः बहिरन्तर्वा लवणरसातिरिक्तरसान्तररहितः, तथा आत्मापि बहिरन्तर्वा प्रज्ञानव्यतिरिक्तस्वरूपरहितः, कृत्स्न एव ज्ञानस्वरूपः । तथा च षष्ठ एव मैत्रेयीब्राह्मणान्ते श्रूयते 'स एष नेति नेत्यात्मा अगृह्यो न हि गृह्यते' इत्यादिना सर्वप्रपञ्चप्रतिषेधः । [1]तथा च मैत्रेयीब्राह्मणमध्यगतः कृत्स्नोऽपि सन्दर्भः अध्यारोपापवादाभ्यां भोक्तृस्वरूपातीतविशुद्धचैतन्यमात्रप्रतिपादनपरः-इत्युपसंहरति—**तस्मात् परमात्मन इति** ॥ १९ ॥

इदानीं उपक्रमगतस्य भोक्तृनिर्देशस्य गतिं वक्तुं त्रिसूत्रीमवतारयति — **यत्पुनरुक्तमित्यादिना** ॥

अयमत्र परिहाराभिप्रायः—उपक्रमोपसंहारयोः यद्यपि जीवप्रतिपादनं दृश्यते, तथापि, न तदनुसारेण मध्यगतं अनेकतात्पर्यलिङ्गोपेततया अन्यथाव्याख्यातुमशक्यं परमात्मप्रतिपादकवाक्यजातं लक्षणया भोक्त्रभिप्रायं व्याख्यातुं युक्तम् । तथा च, उपक्रमादिगतं जीप्रतिपादनमपि यदि परमात्मपरतया व्याख्यातुमयुक्तं भवेत्, तदा परं वाक्यभेद एवास्तु, न तु तदस्ति । जीवधर्माणां भोक्तृत्वादीनां परमात्मन्यपि विद्यमानतया भोक्तृत्वादिना परमात्मन एव निर्देशसम्भवात् ।

एतावति सर्वमतसाधारण्येन परिहारे स्थिते, आश्मरथ्यकल्पितपरिभाषया प्रथममाह—**अस्त्यत्र प्रतिज्ञेति** । अभेदांशेनेति अंशपदात् तन्मते जीव-

---

1. आ. ततश्च

एतल्लिङ्गं यत् प्रियसंसूचितस्यात्मनो द्रष्टव्यत्वादिसंकीर्तनम् । यदि हि विज्ञानात्मा परमात्मनोऽन्यः स्यात् , ततः परमात्मविज्ञानेऽपि विज्ञानात्मा न विज्ञात इति, एकविज्ञानेन सर्वविज्ञानं यत् प्रतिज्ञातं तत् हीयेत । तस्मात् प्रतिज्ञासिद्ध्यर्थं विज्ञानात्मपरमात्मनोरभेदांशेनोपक्रमणम् - इति आश्मरथ्य आचार्यो मन्यते ॥ २० ॥

## उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥

विज्ञानात्मन एव देहेन्द्रियमनोबुद्धिसंघातोपाधिसम्पर्कात् कलुषीभूतस्य ज्ञानध्यानादिसाधनानुष्ठानात् संप्रसन्नस्य देहादिसंघातादुत्क्रमि-

---

ब्रह्मणोर्भेदाभेदौ सूचितौ । न च तयोर्विरोधः । मृद्घटयोः भेदाभेदौ हि दृष्टौ । अत्यन्ताभेदे हि कार्यकारणभाव एव न स्यात् । अत्यन्तभेदे च, मृदेव [1]घटो भवतीति सामानाधिकरण्यप्रत्ययो निरालम्बन एव स्यात् । ब्रह्मणोऽपि जीवस्य भेदो 'नाहं सर्वज्ञः' इति प्रत्यक्षसिद्धः । अभेदश्च तत्त्वमसीत्यादिवाक्यसिद्धः । ततः प्रमाणबलात् मृद्घटयोरिव जीवब्रह्मणोरपि भेदाभेदावुपेयौ । तयोः भावाभावरूपतया प्रसक्तस्य विरोधस्य परिहारार्थं तु अवच्छेदकभेद आस्थेयः । मृद्घटयोः मृत्त्वेनाभेदः, [2]घटत्वपिण्डत्वरूपावच्छेदकभेदात् भेदः, जीवब्रह्मणोस्तु चिद्रूपत्वेन अभेदः, जीवत्वेश्वरत्वरूपावच्छेदकभेदात् भेदः । एवं स्थिते, द्रष्टव्यस्य आत्मपदोदितस्य परमात्मनः स्वधर्मेणैवोपक्रमं विहाय यत् जीवधर्मेणोपक्रमणं, तत् 'नाहं सर्वज्ञः इति लोकप्रतीत्या जीवब्रह्मणोर्भेदस्य सिद्धत्वात् ब्रह्मविज्ञानेन जीवविज्ञानासम्भवात् कथं एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा' इति शङ्का माभूदिति । जीवधर्मेण परमात्मोपक्रमे हि जीवधर्माणां ब्रह्मगतताप्रतिपादनात् शास्त्रीयः तयोरभेदः सूचितो भवतीति प्रतिज्ञा समर्थिता भवति ॥ २० ॥

एकस्यैव भेदाभेदौ विरुद्धौ । न हि मृद्घटयोर्भेदाभेदौ । घटो नाम पृथुबुध्नत्वाद्यवस्थाविशिष्टं मृद्द्रव्यमेव । तत्र द्रव्यांशे अत्यन्ताभेद एव । [3]तदालम्बनं च सामानाधिकरण्यम् । कार्यता तु प्रागसत्या पृथुबुध्नत्वाद्यवस्थया विशिष्टत्वेन । सा चावस्था अत्यन्तभिन्नैव । तस्याश्च मृद्द्रव्येण

---

1. आ. घटोऽभवदिति 2. मु. घटत्वरूपावच्छेदकभेदात् 3. आ. मृदः तदालम्बनं

ष्यतः परमात्मना ऐक्योपपत्तेः इदमभेदेनोपक्रमणम् इति औडुलोमिराचार्यो मन्यते। श्रुतिश्चैवं भवति-'एष संप्रसादः अस्माच्छरीरात् समुत्थाय परञ्ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' (छा. उ. ८।१२।३) इति। क्वचिच्च जीवाश्रयमपि नामरूपं नदीनिदर्शनेन ज्ञापयति—

'यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय।
तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्॥'

(मुण्ड. उ. ३।२।८) इति। यथा लोके नद्यः स्वाश्रयमेव नामरूपं विहाय समुद्रमुपयन्ति एवं जीवोऽपि स्वाश्रयमेव नामरूपं विहाय परं पुरुषमुपैतीति हि तत्रार्थः प्रतीयते दृष्टान्तदार्ष्टान्तिकयोस्तुल्यतायै॥२१॥

---

तादात्म्याख्यस्वरूपसम्बन्धविशेषो भवति। अतः तत्र भेदाभेदयोर्भिन्नधर्मिकत्वमेव [1]आस्थेयम्।

अस्त्वेवं मृद्धटयोः। जीवब्रह्मणोस्तु प्रत्यक्षसिद्धभेदयोः तत्त्वमसीत्यभेदः प्रतिपाद्यत इति चेत्,

अस्तु नाम। तथापि न तयोस्समानकालतामुपेत्य अवच्छेदकभेदेन परिहारः समाश्रयणीयः। शास्त्रीयस्यार्थस्य शास्त्रोक्तगत्यैव समर्थनीयत्वात्। [2]शास्त्रेण च कालभेदतो विरोधपरिहार [3]आश्रितः 'आमुक्तेर्भेद एव स्यात् जीवस्य च परस्य च। मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः॥' इति। श्रुत्यापि च मुक्तिकाल एव जीवस्य परेणैक्यमाम्नातम् - इत्याह—**श्रुतिश्चैवमिति**। तथा च तत्त्वमसीतिवाक्यमपि भविष्यद्वृत्त्या अभेदपरं व्याख्येयम्। अत्र मते, मुक्तिकालमभेदमाश्रित्य जीवत्वं परमात्मनः प्रागवस्थैव भवतीति भोक्तृत्वं भूतपूर्वगत्या परमात्मन्येव द्रष्टव्यमिति नोपक्रमविरोधः। **क्वचिच्चेति**। तथा च दृष्टान्तानुसारात् जीवेऽपि नामरूपादिकं धर्मिसमसत्ताकमिति भावः। एतेन-भिन्नयोरेव द्रव्ययोः कथमभेदः-इति शङ्का निरस्ता। [4]शास्त्रप्रामाण्यात्, भिन्नानामेव समुद्रात् नदीनां तदैक्यस्य कालविशेषे दर्शनाच्च॥ २१॥

---

1. आ. 'आस्थेयं' नास्ति
2. **शास्त्रेणेति** शास्त्रमत्र पाञ्चरात्रागमो विवक्षितः।
3. आ. आस्थितः
4. आ. श्रुतिप्रामाण्यात्

## अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

अस्यैव परमात्मनः अनेनापि विज्ञानात्मभावेन अवस्थानात् उपपन्नमिदं अभेदेनोपक्रमणम् - इति काशकृत्स्न आचार्यो मन्यते। तथा च ब्राह्मणं 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छा. उ. ६।३।२) इत्येवंजातीयकं परस्यैवात्मनो जीवभावेनावस्थानं दर्शयति, मन्त्रवर्णश्च 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते' (तै. आ. ३।१२।७) इत्येवंजातीयकः। न च तेजःप्रभृतीनां सृष्टौ जीवस्य पृथक्सृष्टिः श्रुता, येन परस्मादात्मनोऽन्यः तद्विकारो जीवः स्यात्।

---

तत्त्वमसीत्यादिवाक्यं हि न भविष्यद्वृत्त्या व्याख्यातुं शक्यम्। तथाक्लेशे नियामकाभावात्। न च उदाहृतवचनानुसारेण तथाकल्पनम्। 'आमुक्तेर्भेद एव स्यात्' इत्यागमवचनं विष्णुपुराण एव दूषितं-'परमात्मात्मनोर्योगः परमार्थ इतीर्यते। मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः॥' इति। [1]अत्र अन्यद्द्रव्यंहीत्यादिवाक्यशेषानुसारेण, 'प्राग्भिन्नयोरेव सतोः जीवपरमात्मनोः अभेदाख्यो योगो भवतीत्येतत् मिथ्या' इति हि पूर्वार्धार्थः प्रतीयते। न च नदीनां भिन्नानामेव सतीनां समुद्रेणैक्यं दृष्टान्तवाक्ये प्रतिपादितमिति वाच्यम्। यदि हि संस्थानविशेषो नदीशब्दार्थः, स समुद्रसम्पर्कात् नष्ट एवेति कथमैक्यम्। संस्थायिनां तु परमाणूनां न समुद्रेणैक्यम्, तत्सम्पर्कदशायामपि भिन्नानामेवावस्थानात्। अतः, यथा नदीनां समुद्रप्राप्त्या नामरूपपरित्यागः एवं जीवस्यापि नामरूपपरित्यागः परमात्मप्राप्तौ इत्येतावदेव 'तथा विद्वान्नामरूपाद्विमुक्तः' इत्यादिवचनार्थो ग्राह्यः। अतः न औडुलोम्युक्तगत्या भेदाभेदप्रतीत्योर्विरोधः परिहर्तुं शक्यः।

ननु - तर्हि वियदादिवत् जीवः परमात्मनः कार्यमस्तु, तत्त्वमसीत्यादिसामानाधिकरण्यं तु सत्येव भेदे अभेदांशमादाय-इत्याशङ्क्याह—**न चेति।**

---

1. **अत्रेत्यादि** अनेन - विशिष्टाद्वैतिनां सार्वदिकजीवपरमात्मैक्यनिराकरणपरतया उक्तपद्यव्याख्यानं निरस्तं वेदितव्यम्। मु. तत्र

काशकृत्स्नस्याचार्यस्य अविकृतः परमेश्वरो जीवो नान्य इति मतम्। आश्मरथ्यस्य तु यद्यपि जीवस्य परस्मादनन्यत्वमभिप्रेतं, तथापि, प्रतिज्ञासिद्धेरिति सापेक्षत्वाभिधानात् कार्यकारणभावः कियानप्यभिप्रेत इति गम्यते। औडुलोमिपक्षे पुनः स्पष्टमेव अवस्थान्तरापेक्षौ भेदाभेदौ गम्येते।

तत्र काशकृत्स्नीयं मतं श्रुत्यनुसारीति गम्यते, प्रतिपिपादयिषितार्थानुसारात् तत्त्वमसीत्यादिश्रुतिभ्यः। एवं च सति तज्ज्ञानादमृतत्वमवकल्पते। विकारात्मकत्वे हि जीवस्याभ्युपगम्यमाने विकारस्य प्रकृतिसंबन्धे प्रलयप्रसङ्गात् न तज्ज्ञानात् अमृतत्वमवकल्पेत। अतश्च स्वाश्रयस्य नामरूपस्य असंभवात् उपाध्याश्रयं नामरूपं जीवे उपचर्यते। अत एव, उत्पत्तिरपि जीवस्य क्वचित् अग्निविस्फुलिङ्गोदाहरणेन श्राव्यमाणा उपाध्याश्रयैव वेदितव्या।

यदप्युक्तम् - प्रकृतस्यैव महतो भूतस्य द्रष्टव्यस्य भूतेभ्यः समुत्थानं विज्ञानात्मभावेन दर्शयन् विज्ञानात्मन एवेदं द्रष्टव्यत्वं दर्शयति - इति - तत्रापि इयमेव त्रिसूत्री योजयितव्या—

---

सत्यपि कार्यकारणभावे न भेदाभेदौ, मृद्घटयोस्तदसम्प्रतिपत्तेः-इत्युक्तम्[1]।

प्रतिपिपादयिषितार्थानुसारादिति। भेदो हि प्रत्यक्षादिसिद्धः, न श्रुत्या प्रतिपिपादयिषितः। अज्ञातार्थबोधनस्वरसत्वात् श्रुतेः। अतः 'य आत्मनि तिष्ठन्' इत्यादौ भेदानुवादमात्रं नान्योऽतोऽस्तीत्यादिवाक्यैः प्रतिषेधार्थम्। न च नान्योऽतोऽस्तीत्यादौ अत्यन्तमितिपदाध्याहारो युक्तः। तस्मात्, भेदोऽनृतः अभेदस्तु शास्त्रप्रतिपाद्यः परमार्थः - इत्येव व्यवस्था आश्रयणीया।

जीवविषयकं लिङ्गान्तरं परमात्मनि योजयितुं उक्तामेव त्रिसूत्रीं पुनर्योजयति—यदप्युक्तमित्यादिना।

---

1. इत्युक्तम् - पूर्वसूत्रव्याख्यानावसरे 'न हि मृद्घटयोर्भेदाभेदौ' इत्यादिना उक्तम्। आ. इति ह्युक्तम्

'प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः' । इदमत्र प्रतिज्ञातम्—'आत्मनि विदिते सर्वं विदितं भवति' इति 'इदं सर्वं यदयमात्मा' (बृ.उ.२।४।६) इति च । उपपादितं च, सर्वस्य नामरूपकर्मप्रपञ्चस्य एकप्रसवत्वादेकप्रलयत्वाच्च दुन्दुभ्यादिदृष्टान्तैश्च कार्यकारणयोरव्यतिरेकप्रतिपादनात् । तस्या एव प्रतिज्ञायाः सिद्धिं सूचयत्येतल्लिङ्गं यत् महतो भूतस्य द्रष्टव्यस्य भूतेभ्यः समुत्थानं विज्ञानात्मभावेन कथितम् - इति आश्मरथ्य आचार्यो मन्यते । अभेदे हि सति एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातं अवकल्पत इति ।

उत्क्रमिष्यतएवंभावादित्यौडुलोमिः । उत्क्रमिष्यतो विज्ञानात्मनो ज्ञानध्यानादिसामर्थ्यात् संप्रसन्नस्य परेणात्मना ऐक्यसंभवात् इदमभेदाभिधानम् - इति औडुलोमिराचार्यो मन्यते ।

अवस्थितेरिति काशकृत्स्नः । अस्यैव परमात्मनः अनेनापि विज्ञानात्मभावेन अवस्थानात् उपपन्नमिदमभेदाभिधानम् - इति काशकृत्स्न आचार्यो मन्यते ।

ननु उच्छेदाभिधानमेतत् 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति' (बृ. उ. २।४।१२) इति, कथमेतत् अभेदाभिधानम् ?

नैष दोषः । विशेषविज्ञानविनाशाभिप्रायमेतत् विनाशाभिधानं न आत्मोच्छेदाभिप्रायम् । 'अत्रैव मा भगवानमूमुहत् न प्रेत्य संज्ञास्ति' इति पर्यनुयुज्य, स्वयमेव श्रुत्या अर्थान्तरस्य दर्शितत्वात् 'न वा

---

नैष दोषः विशेषविज्ञानविनाशाभिप्रायमेतदित्यादि । 'अत्रैव मा भगवानमूमुहत् न प्रेत्य संज्ञाऽस्ति' इति [1]चतुर्थे पाठः पर्यनुयोगवाक्ये ।

---

1. चतुर्थे पाठ इत्यादि उपनिषदि द्वितीयचतुर्थयोः आरण्यके चतुर्थत्वषष्ठत्वे । अत्र आरण्यकक्रमेण पाठो निर्दिष्टः । 'अनुच्छित्तिधर्मा' इत्यन्तः पाठः काण्वानाम्, 'मात्राऽसंसर्गस्त्वस्य भवति' इत्यन्तः माध्यन्दिनानाम् ।

**अरेऽहं मोहं ब्रवीमि अविनाशी वा अरेऽयमात्मा अनुच्छित्तिधर्मा मात्राऽसंसर्गस्त्वस्य भवति' इति। एतदुक्तं भवति—कूटस्थनित्य एवायं विज्ञानघन आत्मा नास्योच्छेदप्रसङ्गोऽस्ति, मात्राभिस्त्वस्य भूतेन्द्रियलक्षणाभिरविद्याकृताभिः असंसर्गो विद्यया भवति, संसर्गाभावे च तत्कृतस्य विशेषविज्ञानस्याभावात् नप्रेत्यसंज्ञास्तीत्युक्तम् -इति।**

---

षष्ठे तु 'अत्रैव मा भगवान् मोहान्तमापीपिपत् न वा अहमिमं विजानामि' इति पर्यनुयोगवाक्ये पाठः। 'स होवाच याज्ञवल्क्यः न वा अरे अहं मोहं ब्रवीमि अलं वा अरे इदं विज्ञानाय' इति चतुर्थे परिहारवाक्यपाठः। 'स होवाच न वा अरे अहं मोहं ब्रवीमि अविनाशी वा अरेऽयमात्मा अनुच्छित्तिधर्मा मात्राऽसंसर्गस्त्वस्य भवति' इति षष्ठे परिहारवाक्यपाठः। याज्ञवल्क्येन आत्मनो विज्ञानघनत्वे कथिते नप्रेत्यसंज्ञास्तीति विज्ञानविनाशे च कथिते मैत्रेय्या पर्यनुयुक्तम्। ज्ञानरूपस्यात्मन एव चेत् भूतविनाशानुसारिनश्वरत्वं, कथं तर्हि तस्य मोक्षफलभागिता, अतो नप्रेत्यसंज्ञास्तीतिवाक्येनोक्तशङ्काकलुषितान्तःकरणाया व्यामोहो मम अभवत्-इति तया पर्यनुयोगे कृते [1]विनाशकारणरहितः अविनाशी अयमात्मा उच्छित्तिशाली न भवति, नप्रेत्यसंज्ञास्तीति मद्वाक्यं तु, अन्तःकरणादिसंसर्गरूपोपाधिकृतत्वाद्विशेषविज्ञानानां तल्लये विशेषविज्ञानानामभाव इत्यभिप्रायम्, अतो मद्वाक्यं तव [2]विशिष्टज्ञानायालम्। अन्तःकरणाद्युपाधिकत्वं विशेषविज्ञानानां च, संसारदशायां तेषु सत्स्वेव द्रष्टृदृश्यदर्शनव्यवहारः मोक्षे तदभावे द्रष्टादिव्यवहाराभावः-इत्यन्वयव्यतिरेकयोः सद्भावात्-इति 'यत्र हि द्वैतमिव भवति' इत्यादिना उत्तरसन्दर्भेण व्यवस्थाप्यते। तथा च 'एतेभ्यो भूतेभ्यः समुत्थाय' इत्यादिसन्दर्भो मोक्षदशायां परमात्माभेदाभिव्यक्तिपर इति, न तद्वाक्यं निर्विशेषप्रकरणाननुगुणमिति।

---

1. पूर्वोक्तपाठद्वयाश्रयणेन परिहारश्रुतिवाक्यार्थमाह—**विनाशकारणेत्यादिना**। अविनाशिशब्दार्थः विनाशकारणरहित इति। अनुच्छित्तिधर्मशब्दार्थः उच्छित्तिशाली न भवतीति। उच्छित्तिः न स्वाभाविकी, अपि तु औपाधिकी इत्यर्थः।

2. **विशिष्टज्ञानायालमिति** विशिष्टज्ञानं—ज्ञानविशेषः, मोहनिवर्तकज्ञानमिति यावत्। अलमित्यनन्तरं 'इति परिहृतम्' इति शेषः।

यदप्युक्तं 'विज्ञातारमरे केन विजानीयात्' इति कर्तृवचनेन शब्देन उपसंहारात् विज्ञानात्मन एवेदं द्रष्टव्यत्वमिति, तदपि काशकृत्स्नीयेनैव दर्शनेन परिहणीयम् ।

अपि च 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' (बृ. उ. २।४।१४) इत्यारभ्य अविद्याविषये तस्यैव दर्शनादिलक्षणं विशेषविज्ञानं प्रपञ्च्य 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' इत्यादिना विद्याविषये तस्यैव दर्शनादिलक्षणस्य विशेषविज्ञानस्य अभावमभिदधाति । पुनश्च 'विषयाभावेऽपि आत्मानं विजानीयात्' इत्याशङ्क्य 'विज्ञातारमरे केन विजानीयात्' इत्याह । ततश्च विशेषविज्ञानाभावोपपादनपरत्वाद्वाक्यस्य विज्ञानधातुरेव केवलः सन् भूतपूर्वगत्या कर्तृवचनेन तृचा निर्दिष्ट इति गम्यते । दर्शितं तु पुरस्तात् काशकृत्स्नीयस्य पक्षस्य श्रुतिमत्त्वम् ।

---

**काशकृत्स्नीयेनैव दर्शनेनेति ।** तस्यैव प्रतिपिपादयिषितार्थानुसारित्वात् इति भावः ।

अपि च, तद्वाक्यं कर्तृत्वादेः पारमार्थिकत्वं वदतोः आश्मरथ्यौडुलोम्योः मते न प्रक्रमपर्यालोचनया योजयितुं शक्यम्-इत्यभिप्रेत्य प्रक्रमसहितस्य वाक्यस्य तात्पर्यमाह—**अपि चेति ।** अविद्याविषये - अविद्यानिबन्धनायां द्वैतावस्थायाम् । तस्याश्च आविद्यकत्वं 'यत्र हि द्वैतमिव' इति इवकारेण द्योत्यते । विद्याविषये-विद्यानिबन्धनायां आत्ममात्रपरिशेषावस्थायाम् । आत्ममात्रपरिशेषिता च विद्यावस्थायां-इत्येतत् 'एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्य अस्तं गच्छन्ति भिद्येते चासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति' इत्यादिवचनैरवगम्यते । पारमार्थिकत्वमते, इवशब्दः विद्यया आत्ममात्रपरिशेषिता च न भवेत्-इति भावः । **भूतपूर्वगत्येति ।** मोक्षदशायां नप्रेत्यसंज्ञास्तीतिपूर्ववाक्येन विशेषविज्ञानाभावस्य उपक्षिप्तत्वादिति भावः

**अतश्च, विज्ञानात्मपरमात्मनोः अविद्याप्रत्युपस्थापितनामरूपरचितदेहाद्युपाधिनिमित्तो भेदः न पारमार्थिकः-इत्येषोऽर्थः सर्वैर्वेदान्तवादिभिरभ्युपगन्तव्यः। 'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्'**

---

ननु-जीवेश्वराभेदप्रकरणे 'विज्ञातारमरे केन विजानीयात्' इत्यतः पूर्ववाक्ये 'येनेदं सर्वं विजानाति तं केन विजानीयात्' इति, जीवात् भिन्नतया परमेश्वरः किमर्थं प्रतिपाद्यते। येन - ईश्वरेण जीव इदं सर्वं विजानाति तं - परमेश्वरं केन विजानीयात् - इति हि [1]तदर्थः। तस्मात् इदं वाक्यं अत्यन्ताभेदवादिनोऽननुगुणम्-इति चेत्,

न - [2]एतदाशङ्कानिवृत्त्यर्थमेव हि उत्तरवाक्येन इदं वाक्यं व्याख्यायते। उत्तरवाक्ये हि, विज्ञेयत्वं विज्ञातृपदोदितजीवस्यैव आक्षिप्यते। तदनुसारेण पूर्ववाक्येऽपि विज्ञेयत्वेनाक्षिप्यमाणो जीव इति स्थिते, येनेति तृतीया प्रथमार्थे भविष्यति। अथ वा, येन-विशुद्धसाक्षिणा अयं प्रमाता विजानाति-इत्यर्थो द्रष्टव्यः। न च पूर्ववाक्यानुसारेण उत्तरवाक्य एव [3]विज्ञातृपदं परमात्मपरमस्त्विति वाच्यम्। तथासति उत्तरवाक्यवैयर्थ्यापत्तेः। मत्पक्षे तु, व्याख्यानरूपतया न वैयर्थ्यम्। एवं सति 'येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान्। एतेनैव विजानाति किमत्र परिशिष्यते। एतद्वै तत्' इति काठकमन्त्रेणापि ऐकार्थ्यं लभ्यते। तत्र हि, 'येन रूपादिकं जानाति एतदेव त्वत्पृष्टम्'इति प्रतिपादिते, 'यत्पदार्थः कः' इति शङ्कायां, 'एतेनैव विजानाति, किमत्र यत्पदार्थे ज्ञातव्यं परिशिष्यते' इति मध्यगतेन वाक्येन प्रतिपाद्यते। तत्र एतत्पदार्थः प्रत्यङ्ङेव, अपरोक्षत्वात्, 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्' इति पूर्वमन्त्रप्रस्तुतत्वाच्च।

**सर्वैर्वेदान्तवादिभिरभ्युपगन्तव्य इति।** शास्त्रेण हि जीवेश्वरयोरभेदे प्रतिपादिते, प्रत्यक्षसिद्धस्य भेदस्य यथाशास्त्रं व्यवस्था आस्थेया। तत्र

---

1. **तदर्थ इति** अयमेवार्थः विशिष्टाद्वैतिभिरङ्गीकृतः।
2. मु. एतादृशशङ्का
3. **विज्ञातृपदं परमात्मपरमिति** एवमेवाहुः विशिष्टाद्वैतिनः।

(छा. उ. ६।२।१) 'आत्मैवेदं सर्वम्' (छा. उ. ७।२५।२) 'ब्रह्मैवेदं सर्वम्' (मुण्ड. उ. २।२।११। 'इदं सर्वं यदयमात्मा' (बृ. उ. २।४।६) 'नान्योऽतोऽस्ति द्रष्टा' (बृ. उ. ३।७।२३) 'नान्यदतोऽस्ति द्रष्टृ' (बृ. उ. ३।८।११) इत्येवंरूपाभ्यः श्रुतिभ्यः। स्मृतिभ्यश्च 'वासुदेवः सर्वमिति' (भ. गी. ७।१९) 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत' (भ. गी. १३।२) 'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्' (भ. गी. १३।२७) इत्येवंरूपाभ्यः। भेददर्शनापवादाच्च 'अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः' (बृ. उ. १।४।१०), 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' (बृ. उ. ४।४।१९) इत्येवंजातीयकात्। 'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म' (बृ. उ. ४।४।२५) इति च आत्मनि सर्वविक्रियाप्रतिषेधात्।

---

अवच्छेदकभेदेन कालभेदेन वा व्यवस्थायामाश्रीयमाणायां, भेदनिषेधकवाक्यानां भेदनिन्दावाक्यानां च क्लेशः। आविद्यकत्वे तु भेदस्योच्यमाने न कस्यापि क्लेशः। अतः 'आविद्यकत्वात् भेदस्य न शास्त्रीयाभेदविरोधिता' इत्येव पक्षः समीचीनः। अपि च, उपबृंहणानुसारेण भेदाभेदविरोधपरिहारसम्भवे स्वकपोलकल्पनया न किञ्चिदास्थेयम्। उपबृंहणं च भेदस्याविद्यकत्वे अस्ति। तथा हि विष्णुपुराणे—'तस्मात्मपरदेहेषु सतोऽप्येकमयं हि यत्। विज्ञानं परमार्थोऽसौ द्वैतिनोऽतथ्यदर्शिनः॥ [२.१४.३१] सितनीलादिभेदेन यथैकं दृश्यते नभः। भ्रान्तिदृष्टिभिरात्मापि तथैकस्सन् पृथक्पृथक्॥ एकस्समस्तं यदिहास्ति किञ्चित् तदच्युतो नास्ति परं ततोऽन्यत्। सोऽहं स च त्वं स च सर्वमेतत् आत्मस्वरूपं त्यज भेदमोहम्॥' 'तत्याज भेदं परमार्थदृष्टिः।' [२.१६.२२.२३.२४] 'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥' [६.७.९६] इति। न च जीवब्रह्मणोर्भेदं तात्त्विकमुपेत्य एवमादिवचनजातं क्लेशेन योजयितुमुचितम्।



अन्यथा च मुमुक्षूणां
[विज्ञाना]नुपपत्तेश्च। नि
विषयमिष्यते, 'वेदान्त
च श्रुतेः। 'तत्र को मोह
इति च। स्थितप्रज्ञलक्ष
सम्यग्दर्शने 'क्षेत्रज्ञः'
परमात्मनो भिन्नः परमा

---

निरपवादविज्ञानानुपपत्ते
शास्त्रीयापवादरहितत्वम्।
विज्ञानं भेदनिषेधकशास्त्रेष्वा
यन्मते संसारदशा
नुवर्तते, न वेति। यद्यनुव
न च अभेदांशमादाय तदु
तत्कथनवैयर्थ्यात्। यदि
मप्यनुवर्तमानतया पारमार्थि
करणस्य भेदस्य अनृततया,
न च 'कालभेदेन
तथा हि-भिन्नस्य अभेद इ
मभेदः उत नष्टस्य? न
सम्भवात्। न हि घटपट
नष्टस्य अभेदः सम्भवति,
अतो जीवस्य ब्रह्म
स्थितप्रज्ञलक्षण
स्थस्य केशव। स्थितधी
इत्यादिवचनेषु विद्वान्
सुनिश्चितार्थविषयत्वं निरप

**अन्यथा च मुमुक्षूणां निरपवादविज्ञानानुपपत्तेः, सुनिश्चितार्थ(त्वा) [विज्ञाना]नुपपत्तेश्च । निरपवादं हि विज्ञानं सर्वाकाङ्क्षानिवर्तकं आत्मविषयमिष्यते, 'वेदान्तविज्ञानसुनिश्चितार्थाः' (मुण्ड. उ. ३।२।६) इति च श्रुतेः । 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' (ई. उ. ७) इति च । स्थितप्रज्ञलक्षणस्मृतेश्च । स्थिते च क्षेत्रज्ञपरमात्मैकत्वविषये सम्यग्दर्शने 'क्षेत्रज्ञः' 'परमात्मा' इति नाममात्रभेदात्, 'क्षेत्रज्ञोऽयं परमात्मनो भिन्नः परमात्माऽयं क्षेत्रज्ञाद्भिन्नः' इत्येवञ्जातीयक आत्म-**

---

**निरपवादविज्ञानानुपपत्तेः सुनिश्चितार्थविज्ञानानुपपत्तेश्चेति ।** निरपवादत्वं-शास्त्रीयापवादरहितत्वम् । सुनिश्चितत्वं अर्थस्य युक्तिसम्भावितत्वम् । भेदाभेद-विज्ञानं भेदनिषेधकशास्त्रेणापोद्यते । न च युक्त्या सम्भाव्यते स पक्षः ।

यन्मते संसारदशायामपि भेदाभेदौ, तेन वक्तव्यं—मोक्षदशायां भेदोऽनुवर्तते, न वेति । यद्यनुवर्तते, 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिशास्त्रविरोधः । न च अभेदांशमादाय तदुपपत्तिः । तस्य ज्ञानात्प्रागपि विद्यमानतया ज्ञानानन्तरं तत्कथनवैयर्थ्यात् । यदि नानुवर्तते, तथासति ज्ञानबाध्यत्वेन, मोक्षदशायामप्यनुवर्तमानतया पारमार्थिकेन स्वात्यन्ताभावरूपेणाभेदेन प्रपञ्चदशायां समानाधिकरणस्य भेदस्य अनृततया, न सिद्धान्ताद्वैषम्यम् ।

न च 'कालभेदेन भेदाभेदौ व्यवस्थितौ' इति पक्षोऽपि युक्तिक्षमः । तथा हि-भिन्नस्य अभेद इति वदता वक्तव्यं-'किं स्थितस्यैव जीवस्य मोक्षदशायामभेदः उत नष्टस्य ? नाद्यः-सतो जीवस्य प्राग्भिन्नस्य मोक्षदशायामप्यभेदासम्भवात् । न हि घटपटयोः भिन्नयोःप्राक्सतोः कदाचिदप्यभेदो दृष्टः । नापि नष्टस्य अभेदः सम्भवति, असतो विद्यमानेन ऐक्यासम्भवात् ।

अतो जीवस्य ब्रह्मणा नित्यसिद्धोऽत्यन्ताभेद एषितव्यः ।

**स्थितप्रज्ञलक्षणस्मृतेश्चेति ।** 'स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव । स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥' इत्यादिवचनेषु विद्वान् स्थितप्रज्ञत्वेन निरूप्यते । प्रज्ञायाः स्थितत्वं च सुनिश्चितार्थविषयत्वं निरपवादत्वं चेति भावः ।

भेदविषयो निर्बन्धो निरर्थकः, एको ह्ययमात्मा नाममात्रभेदेन बहुधा अभिधीयते - इति। न हि 'सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायाम्' (तै. उ. २।१) इति कांचिदेवैकां गुहां अधिकृत्य एतदुक्तम्। न च ब्रह्मणोऽन्यो गुहायां निहितोऽस्ति, 'तत् सृष्ट्वा तदेवानुप्राविशत्' (तै. उ. २।६) इति स्रष्टुरेव प्रवेशश्रवणात्। ये तु निर्बन्धं कुर्वन्ति ते वेदान्तार्थं बाधमानाः श्रेयोद्वारं सम्यग्दर्शनमेव बाधन्ते, कृतकमनित्यं च मोक्षं कल्पयन्ति, न्यायेन च न सङ्गच्छन्ते - इति ॥ २२ ॥

७ प्रकृत्यधिकरणम्

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥

यथा अभ्युदयहेतुत्वात् धर्मो जिज्ञास्यः एवं निःश्रेयसहेतुत्वात् ब्रह्म जिज्ञास्यमित्युक्तम्। ब्रह्म च 'जन्माद्यस्य यतः' (ब्र. सू. १।१।२)

---

ननु - जीवो यदि अशनायाद्यतीतब्रह्मस्वरूप एव सदा भवेत्, तदा तथा संसारदशायामप्युपलभ्येत, इत्यत आह—**न हि सत्यं ज्ञानमिति**। बुद्धिरूपगुहा-प्रविष्टत्वेन आवृतस्वरूपत्वात् संसारदशायां तथा नोपलभ्यत इति भावः। ननु-ब्रह्मा-भेदं स्वीकृत्य 'आवृतत्वात् स नोपलभ्यते' इति किमर्थं कल्प्यते, अभेद एव मास्तु, इत्यत आह—**न च ब्रह्मणोऽन्य इति**। प्रमाणसिद्धस्यार्थस्य हि उपपादनं [1]न्याय्यं, न त्वनुपपत्तिप्रतिभानमात्रेण तत्परित्यागो न्याय्यः-इति भावः। **न्यायेन च न सङ्गच्छन्त इति**। कृतकस्यापि नित्यत्वे 'यत् कृतकं तदनित्यम्' इति न्यायेन [2]असङ्गमनं इत्यर्थः ॥ २२ ॥

**इति वाक्यान्वयाधिकरणम् ॥ ६ ॥**

ननु - 'जन्माद्यस्य यतः' इति सूत्रेणैव ब्रह्मणो जगन्निमित्तत्वोपादानत्वे समर्थिते, अतो ब्रह्मोपादानत्वसमर्थनं [3]अत्र किमर्थं क्रियते - इत्याशङ्क्य, 'उपादानत्वमेव शङ्काविशेषनिराकरणपूर्वकं अत्र व्यवस्थाप्यते, तथा च, इदमधिकरणं जन्मादि-सूत्रावशिष्टार्थकथनम्'[4] इति परिहारं वक्तुं, वृत्तं कीर्तयति—**यथा अभ्युदयहेतु-**

---

1. **न्याय्यमिति** तदुक्तं श्रीविद्यारण्यस्वामिभिः - न तावत् वेदप्रतिपादिते अनुपपन्नेऽर्थे वैदिकानां बुद्धिः खिद्यते, अपि तु तदुपपादनमेव गोचरयति - इति।

2. आ. असङ्गानमित्यर्थः 3. आ. पुनरत्र 4. आ. कथनपरम्

इति लक्षितम् । तच्च लक्षणं घटरुचकादीनां मृत्सुवर्णादिवत् प्रकृतित्वे कुलालसुवर्णकारादिवन्निमित्तत्वे च समानम्, इत्यतो भवति विमर्शः - किमात्मकं पुनः ब्रह्मणः कारणत्वं स्यादिति ।

तत्र निमित्तकारणमेव तावत् केवलं स्यादिति प्रतिभाति । कस्मात् । ईक्षापूर्वककर्तृत्वश्रवणात् । ईक्षापूर्वकं हि ब्रह्मणः कर्तृत्वं अवगम्यते—'स ईक्षांचक्रे' (प्र. उ. ६।३) 'स प्राणमसृजत' (प्र. उ.

---

त्वादिति। जिज्ञासासूत्रार्थकीर्तनं जन्मादिसूत्रस्य शास्त्रादौ कर्तव्यतासूचनार्थम्। ब्रह्मजिज्ञासायां प्रतिज्ञातायां हि, प्रमाणादिषु बहुषु विचार्येष्वपि अभ्यर्हितत्वात् स्वरूपमेव प्रथमतो निरू(पितम्) [पणीयम्] । अतो जन्मादिसूत्रं न अध्यायान्ते कृतम् ।

ननु - तर्हि इदमेवाधिकरणं तच्छेषत्वात् तत्समीपे कुतो न कृतम्?

'शास्त्रयोनित्वादित्यारभ्य कृतः सर्वोऽपि विचारः उक्तलक्षणस्यासम्भवादिदोषनिरासायैव, न तु स्वातन्त्र्येण' इति द्योतयितुम्। प्रकृत्यधिकरणस्य अध्यायान्तकरणे हि कृत्स्नस्याप्यध्यायस्य लक्षणविचारोपक्रमोपसंहारान्तर्गततया उक्तार्थद्योतनं सुखेन भवति ।

शास्त्रयोनित्वादित्यारभ्य कृतस्य ब्रह्मप्रमाणविचारत्वेन स्वत एव प्रतिज्ञासङ्गतत्वात् किमर्थं जन्मादिसूत्रोक्तलक्षणमुखनिरीक्षणम् - इति तु न शङ्कनीयम्। 'ब्रह्मविदाप्नोति परम्' 'अधीहि भगवो ब्रह्म' इत्यादौ ब्रह्मनिरूपणमुपक्रम्य, 'सत्यं ज्ञानमनन्तं ब्रह्म' 'यतो वा इमानि भूतानि जायन्ते' इति लक्षणस्यैव प्रथममुपन्यासेन, 'श्रोतव्यः' इति विचारविधेः 'लक्षणमुखेनैव ब्रह्म विचारणीयम्' इति नियमपर्यवसानात् ।

ईक्षापूर्वककर्तृत्वश्रवणादिति ।

[1]ननु 'यक्ष्ये' इति ईक्षापूर्वकं यागकर्तुरेव यागं प्रति प्रकृतित्वं दृष्टम् । अनेककारणकत्वं तु जगतो निमित्तोपादानयोरभेदवादिनापि उपेतम् , मायादृष्टादीनां अन्येषामपि कारणानां उपगमात् । यथा च 'तमीश्वराणां परमं

---

1. पूर्वपक्षानुकूलयुक्तिचतुष्टयं आक्षिप्य समर्थयितुं आरभते - **नन्वित्यादिना** ।

६।४)' इत्यादिश्रुतिभ्यः। ईक्षापूर्वकं च कर्तृत्वं निमित्तकारणेष्वेव कुलालादिषु दृष्टम्। अनेककारणपूर्विका च क्रियाफलसिद्धिः लोके दृष्टा। स च न्याय आदिकर्तर्यपि युक्तः संक्रमयितुम्। ईश्वरत्वप्रसिद्धेश्च। ईश्वराणां हि राजवैवस्वतादीनां निमित्तकारणत्वमेव केवलं प्रतीयते, तद्वत् परमेश्वरस्यापि निमित्तकारणत्वमेव युक्तं प्रतिपत्तुम्। कार्यं चेदं जगत् सावयवमचेतनमशुद्धं च दृश्यते, कारणेनापि तस्य तादृशेनैव भवितव्यं, कार्यकारणयोः सारूप्यदर्शनात्। ब्रह्म च [नैवं] [अनेवं]लक्षणमवगम्यते 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' (श्वे. उ. ६।१९) इत्यादिश्रुतिभ्यः।

---

महेश्वरम्' इत्यादिशास्त्रात् ईश्वरत्वं प्रसिद्धं, तथा एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात् मृदादिदृष्टान्तैश्च उपादानत्वमपि शास्त्रेणैव प्रसिद्धम्। अतः तदपि स्वीकर्तव्यम्। उपादानोपादेययोः सारूप्यानपेक्षा तु नविलक्षणत्वादित्यधिकरणे व्यवस्थापयिष्यते। कथं च 'तदैक्षत बहु स्यां प्रजायेयेति' इत्यादिवचनानां उपादाननिमित्ताभेदप्रतिपादकानां निमित्तत्वमात्रे पर्यवसानम्-

उच्यते—[1]यागादौ गुणे कर्तुरेवोपादानत्वे सत्यपि, घटादिद्रव्यकर्तुः कुलालस्य घटं प्रत्युपादानत्वं न दृष्टम्। अतो 'द्रव्योपादानं यत् तत् कर्तृभिन्नम्' इति नियमस्तावत् सिद्धः-

न च अयं नियमः एकविज्ञानेनसर्वविज्ञानप्रतिज्ञानादिना अन्यथाकर्तुं शक्यते।

न हि एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा सिद्धान्तेऽपि यथाश्रुता आस्थातुं शक्यते। तथात्वे ब्रह्मविदो घटपटादिषु कुत्रापि संशयो न स्यात्। अतो [2]विवक्षाविशेष आस्थेयः। तथा च, यथा 'अमात्यादिषु दृष्टेषु यो धनलाभः स राजदर्शनेनैव भविष्यति' इत्यभिप्रायेण 'राजनि दृष्टे सर्वे दृष्टा एव भवन्ति' इति प्रयुज्यते, तथा ब्रह्मदर्शनेन सर्वकामावाप्तेः 'ब्रह्मणि विदिते सर्वं विदितम्'

---

1. **यागादौ गुणे इति** त्यागपर्यन्तो यागपदार्थः, इच्छापर्यन्तः त्यागपदार्थः, इत्याशयेन 'यागादौ गुणे' इत्युक्तम्।

2. **विवक्षाविशेष आस्थेय इति** आस्थितोऽयमेव विवक्षाविशेषः द्वैतिभिः।

इत्युच्यते। अत एव 'येनाश्रुतं श्रुतं भवति अमतं मतं अविज्ञातं विज्ञातम्' इति अश्रुतत्वादिकीर्तनपूर्वकमेव श्रुतत्वादिकं प्रतिपाद्यते।

नापि - 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्' इति वाक्यशेषे मृत्पिण्डलोहमणिनखनिकृन्तनानां दृष्टान्तानां उपात्तत्वात् दार्ष्टान्तिकेऽपि उपादानतयैव एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा व्युत्पादनीया-इति निर्बन्ध आस्थेयः।

मृत्पिण्डादीनां घटादिवत् मृदाद्यवस्थाविशेषत्वेन घटादिषूपादानत्वाभावात्। कार्यकालेतत्तादात्म्येनैवानुवर्तमानस्य द्रव्यस्य उपादानत्वात्, मृत्पिण्डादेरतथात्वात्। नापि मृत्पिण्डादौ विदिते सर्वं मृन्मयादिकं विदितं भवति। अतो दृष्टान्ताः [1]स्थालीपुलाकन्यायेन व्युत्पादनीयाः। तस्मात् न छान्दोग्यगतैकविज्ञानेनसर्वविज्ञानादिकं उपादानतायां प्रमाणम्।

अत एव मैत्रेयीब्राह्मणगतमपि 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेन इदं सर्वं विदितम्' इत्यादिकं न उपादानतायामात्मनः प्रमाणम्। न चोत्तरवाक्ये तदुपपादकं सर्वात्मत्वं उपन्यस्यते। 'ब्रह्म तं परादात् योऽन्यत्रात्मनो ब्रह्म वेद' इत्यादिषु त्रल्प्रत्ययप्रयोगेण सर्वस्य आत्माधिकरणताया एव व्युत्पादनात्, त्रल्प्रत्ययस्य सप्तम्यर्थ एव स्वारस्यात्, 'इदं ब्रह्म' इत्यादिना, 'इदं सर्वं यदयमात्मा' इत्यन्तेन वाक्यशेषेण सामानाधिकरण्यमपि सर्वस्य आत्मना दृश्यत इति चेत्, उपक्रमानुसारेण तदपि [2]आधाराधेयभावप्रतिपादनपरं लक्षणया भविष्यति।

नापि दुन्दुभ्यादिदृष्टान्तैः तादात्म्यं प्रतिपाद्यते। यदि हि-दुन्दुभिशब्दसामान्यज्ञानएवज्ञायमानानां दुन्दुभिशब्दविशेषाणां तच्छब्दसामान्येन तादात्म्यं दृष्टम् - इत्येवमर्थः तत्र स्वरसतोऽवगम्येत, तदा खलु तद्वाक्यं तादात्म्यव्युत्पादनोपयोगि भवेत्। [3]न तु सोऽर्थः तत्र स्वरसतः प्रतीयते। अध्याहारादिना

---

1. **स्थालीपुलाकन्यायेन**-'यथा अमात्यादिषु दृष्टेषु' इत्यादिना अनुपदोक्तरीत्या।

2. **आधाराधेयभावेत्यादि** द्वैतिभिराश्रितोऽयं प्रकारः। मु. आधाराधेयभावप्रतिपत्तिप्रतिपादन    3. मु. न च सोर्थः

तदर्थस्य प्रतिपादनीयत्वात् । अयं हि तत्र [1]स्वरसतोऽर्थः प्रतीयते—दुन्दुभौ हन्यमाने दुन्दुभिशब्दप्रतिरुद्धा अन्ये बाह्याश्शब्दा ग्रहीतुं न शक्यन्ते, दुन्दुभौ तदाहन्तरि वा निरुद्धे ते शब्दा गृहीता भवन्ति - इति । अस्ति च अस्यार्थस्य प्रकृतोपयोगः । 'यदि सर्वस्याधिकरणमात्मा तदा तथात्वेन कुतो न गृह्यते' इति शङ्कायां, 'दुन्दुभिशब्दप्रतिरुद्धा बाह्याश्शब्दा यथा न गृह्यन्ते तत्प्रतिरोधे च गृह्यन्ते, एवं इन्द्रियाणां बाह्यविषयप्रवृत्तिरूपप्रतिबन्धकात् न तथात्वेन गृह्यते, तन्निरोधे गृहीतो भविष्यति' [2]इति प्रकृतोपयोगसम्भवात् । न च आत्मनः सर्वाधिकरणत्वं अनुपपन्नमिति शङ्कनीयम् । तच्छङ्कानिवृत्त्यर्थमेव हि 'इदं सर्वं यदयमात्मा' इति वाक्यं प्रवृत्तम् । तेन हि 'सर्वं समाप्नोषि ततोऽसि सर्वः' इतिस्मृत्यनुसारेण सर्वगतत्वं व्युत्पाद्यते । तथा च सर्वगतत्वादात्मनः '[3]सर्वं आत्मनि' इत्युपपद्यते[4] इति । एवं च, अन्यत्रापि सर्वात्मत्वप्रतिपादकवाक्यानां सर्वगतत्वमेवार्थ इति, न तैरपि आत्मनः उपादानत्वं सिध्यति ।

एवं च, यत् पूर्वाधिकरणे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया मुख्यत्वमाश्रित्य मैत्रेयीब्राह्मणस्य परमात्मपरत्वमुक्तं तत् आक्षिप्तं भवतीति, अस्याधिकरणस्य पूर्वेणाधिकरणेन आक्षेपिकी सङ्गतिः द्रष्टव्या ।

'तदैक्षत बहु स्यां प्रजायेय' इत्येतदपि न मुख्यया वृत्त्या व्याख्यातुं शक्यम् । प्राक्सिद्धस्य एकस्य ब्रह्मणः बहुत्वजननयोः असम्भवात् । अतः 'प्र प्रजया पशुभिर्मिथुनैर्जायते 'प्रजायते ह वै प्रजया पशुभिः य एवं वेद' इत्यादौ यथा प्रजादीनामुत्पत्तिः स्वामिनएवोत्पत्तिरिति उपचर्यते, एवं जगत उत्पत्तिः तत्कर्तुरित्युपचर्यत इति नेदं वाक्यं उपादानत्वे प्रमाणम् ।

न च - 'शृङ्गात् शरो जायते' इत्यादौ पञ्चम्या उपादानत्वमर्थः, एवं 'आत्मन आकाशः सम्भूतः' इत्यत्रापि पञ्चमी उपादानत्वविषया स्यात् - इति

---

1. **स्वरसतोऽर्थ इति** अयमेवार्थः विशिष्टाद्वैतिनामभिमतः ।
2. **इतीति** उक्तशङ्कानिराकरणेनेति शेषः ।
3. मु, सर्वात्मनीत्युच्यते
4. **उपपद्यत इति** इत्थमेवोपपादितं द्वैतिभिः ।

**पारिशेष्यात् ब्रह्मणोऽन्यत् उपादानकारणं अशुद्ध्यादिगुणकं स्मृतिप्रसिद्धं अभ्युपगन्तव्यम्, ब्रह्मकारणत्वश्रुतेः निमित्तत्वमात्रे पर्यवसानात् - इति ।**

**एवं प्राप्ते ब्रूमः—प्रकृतिश्च-उपादानकारणं च ब्रह्म अभ्युपगन्तव्यं निमित्तकारणं च । न केवलं निमित्तकारणमेव । कस्मात्? प्रतिज्ञा-**

---

वाच्यम् । 'पुत्रात् प्रमोदो जायते' इत्यादौ निमित्तत्वेऽपि पञ्चमीदर्शनेन उपादानार्थकत्वस्यैव नियतत्वाभावात् ।

न च - 'यत्प्रयन्त्यभिसंविशन्ति' इति लयाधारत्वं आत्मनः प्रतिपाद्यते, नेदं उपादानादन्यस्य सम्भवति - इति वाच्यम् । 'भूतले घटो ध्वस्तः' इति प्रतीत्या ध्वंसापरपर्यायस्य लयस्य उपादानादन्यत्रापि दर्शनेन तथानियमाभावात् ।

न च निर्विकारस्य उपादानत्वं सम्भवति । विकारो नाम उपजनापायशालिन्यो घटपटाद्यवस्थाः, तादात्म्यापृथक्सिद्धत्वाद्यपरपर्यायेण तार्किकाभिमतसमवायस्थानाभिषिक्तेन स्वरूपसम्बन्धविशेषेण विकाराश्रयो हि उपादानम्-इत्युच्यते । यथा मृत्तन्त्वादि । ब्रह्म च 'अस्थूलमनणु' इत्यादिश्रुतिभिः 'कूटस्थमचलं ध्रुवं' इत्यादिस्मृतिभिश्च निर्विकारमवगम्यते । न च विकारस्य मिथ्यात्वात् न निर्विकारश्रुतिविरोध इति वाच्यम् । एवं हि - विकाराश्रयत्वं - उपादानत्वं मिथ्या-इति स्वीकारे, पूर्वपक्षात् [1]को विशेषः स्यात् । [2]नास्तित्वापरपर्यायत्वात् मिथ्यात्वस्य ।

अतो न ब्रह्मण उपादानत्वं सम्भवतीत्यभिप्रेत्य उपसंहरति—**पारिशेष्यादिति । स्मृतिप्रसिद्धमिति ।** अत्र, ब्रह्मणो निमित्तत्वं स्वीकृत्यैव पूर्वपक्षस्य प्रवृत्तत्वात् सेश्वरसाङ्ख्यस्मृतिपरः स्मृतिशब्दः । स च श्रुतेरप्युपलक्षणम् । श्रुतावपि 'मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्' इति मायाशब्दितस्यैव जडस्य तत्त्वस्य उपादानत्वमुच्यते, ब्रह्मणस्तु तदाधारत्वमात्रमुच्यते ।

प्रकृतिश्चेति सूत्रगतचकारार्थमाह—**निमित्तकारणं चेति ।**

---

1. आ॰ कोऽपि विशेषो न स्याद्
2. नास्तित्वेत्यादि अत्यन्तासत्त्वं मिथ्यात्वं - इति पूर्वपक्षिणो भ्रमः ।

दृष्टान्तानुपरोधात् । एवं हि प्रतिज्ञादृष्टान्तौ श्रौतौ नोपरुध्येते ।

प्रतिज्ञा तावत्—'उत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' (छा. उ. ६।१।२) इति । तत्र च एकेन विज्ञातेन सर्वमन्यदविज्ञातमपि विज्ञातं भवतीति प्रतीयते । तच्च उपादानकारणविज्ञाने सर्वविज्ञानं संभवति, उपादानकारणाव्यतिरेकात् कार्यस्य । निमित्तकारणाव्यतिरेकस्तु कार्यस्य नास्ति, लोके तक्ष्णः प्रासादव्यतिरेकदर्शनात् ।

दृष्टान्तोऽपि 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति उपादा-

---

प्रतिज्ञा तावदिति । [1]यद्यपि ब्रह्मणि विदिते विशेषाः तत्तदसाधारणस्वरूपेण अज्ञाता एव भवन्ति, तदभिप्रायेणैव 'येनाश्रुतं श्रुतं भवति' इत्युच्यते अश्रुतत्वादिकमपि । ब्रह्मविज्ञानेन श्रुतत्वादिकं तु उपादानतां विना न उपपादयितुं शक्यते । राजविज्ञानेनामात्यादिविज्ञानवाक्यप्रकाराश्रयणे तु, श्रुतत्वादिवचनं अत्यन्तं बाधितं भवेत् । [2]उपादानत्वे तु - कार्यकोटौ ब्रह्मांशस्यापि प्रविष्टत्वात् सर्वशब्दार्थो ब्रह्मापि भवति । घटपटादिकार्यं हि न अवस्थामात्ररूपम्, अपि तु अवस्थावदुपादानस्वरूपमेव । यथा हि, घटसूक्ष्मावस्था मृच्चेति अंशद्वयं उपादानकोटौ निविष्टम्, एवं घटस्थूलावस्था मृद्द्रव्यं चेति अंशद्वयं कार्यकोटिनिविष्टम् । [3]अत एव 'मृदेव घटोऽभवत्' इति लौकिकप्रत्ययः । तथा च, ब्रह्मणि श्रुते मते विज्ञाते, विशेषात्मना अश्रुतममतमविज्ञातमपि कार्यं कारणस्वरूपेण श्रुतं मतं विज्ञातं भवति इति - वाक्यं मुख्यार्थकमेव भवति । उपादानकारणाव्यतिरेकात् कार्यस्येति उपादेयनिविष्टोपादानांशाभिप्रायेणोक्तम् ।

दृष्टान्तोऽपीति । प्रतिज्ञा तावत् मृत्पिण्डादिदृष्टान्तैः उपपाद्यते ।

---

1. पूर्वपक्षिणा समर्थिताः पूर्वपक्षयुक्तीः क्रमेण निरसितुं आरभते—यद्यपीत्यादिना ।

2. उपादानत्वेत्विति 'वाक्यं मुख्यार्थकमेव भवति' इत्यत्रान्वेति ।

3. अत एव—उभयत्र उपादानांशाभेदादेव ।

(छा. उ. ६।२।१) 'आत्मैवेदं सर्वम्' (छा. उ. ७।२५।२) 'ब्रह्मैवेदं सर्वम्' (मुण्ड. उ. २।२।११। 'इदं सर्वं यदयमात्मा' (बृ. उ. २।४।६) 'नान्योऽतोऽस्ति द्रष्टा' (बृ. उ. ३।७।२३) 'नान्यदतोऽस्ति द्रष्टृ' (बृ. उ. ३।८।११) इत्येवंरूपाभ्यः श्रुतिभ्यः। स्मृतिभ्यश्च 'वासुदेवः सर्वमिति' (भ. गी. ७।१९) 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत' (भ. गी. १३।२) 'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्' (भ. गी. १३।२७) इत्येवंरूपाभ्यः। भेददर्शनापवादाच्च 'अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः' (बृ. उ. १।४।१०), 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' (बृ. उ. ४।४।१९) इत्येवंजातीयकात्। 'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म' (बृ. उ. ४।४।२५) इति च आत्मनि सर्वविक्रियाप्रतिषेधात्।

---

अवच्छेदकभेदेन कालभेदेन वा व्यवस्थायामाश्रीयमाणायां, भेदनिषेधकवाक्यानां भेदनिन्दावाक्यानां च क्लेशः। आविद्यकत्वे तु भेदस्योच्यमाने न कस्यापि क्लेशः। अतः 'आविद्यकत्वात् भेदस्य न शास्त्रीयाभेदविरोधिता' इत्येव पक्षः समीचीनः। अपि च, उपबृंहणानुसारेण भेदाभेदविरोधपरिहारसम्भवे स्वकपोलकल्पनया न किञ्चिदास्थेयम्। उपबृंहणं च भेदस्याविद्यकत्वे अस्ति। तथा हि विष्णुपुराणे—'तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत्। विज्ञानं परमार्थोऽसौ द्वैतिनोऽतथ्यदर्शिनः॥ [२.१४.३१] सितनीलादिभेदेन यथैकं दृश्यते नभः। भ्रान्तिदृष्टिभिरात्मापि तथैकस्सन् पृथक्पृथक्॥ एकस्समस्तं यदिहास्ति किञ्चित् तदच्युतो नास्ति परं ततोऽन्यत्। सोऽहं स च त्वं स च सर्वमेतत् आत्मस्वरूपं त्यज भेदमोहम्॥' 'तत्याज भेदं परमार्थदृष्टिः।' [२.१६.२२.२३.२४] 'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥' [६.७.९६] इति। न च जीवब्रह्मणोर्भेदं तात्त्विकमुपेत्य एवमादिवचनजातं क्लेशेन योजयितुमुचितम्।

अन्यथा च मुमुक्षूणां निरपवादविज्ञानानुपपत्तेः, सुनिश्चितार्थ(त्वा) [विज्ञाना]नुपपत्तेश्च। निरपवादं हि विज्ञानं सर्वाकाङ्क्षानिवर्तकं आत्मविषयमिष्यते, 'वेदान्तविज्ञानसुनिश्चितार्थाः' (मुण्ड. उ. ३।२।६) इति च श्रुतेः। 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' (ई. उ. ७) इति च। स्थितप्रज्ञलक्षणस्मृतेश्च। स्थिते च क्षेत्रज्ञपरमात्मैकत्वविषये सम्यग्दर्शने 'क्षेत्रज्ञः' 'परमात्मा' इति नाममात्रभेदात्, 'क्षेत्रज्ञोऽयं परमात्मनो भिन्नः परमात्माऽयं क्षेत्रज्ञाद्भिन्नः' इत्येवञ्जातीयक आत्म-

---

**निरपवादविज्ञानानुपपत्तेः सुनिश्चितार्थविज्ञानानुपपत्तेश्चेति**। निरपवादत्वं-शास्त्रीयापवादरहितत्वम्। सुनिश्चितत्वं अर्थस्य युक्तिसम्भावितत्वम्। भेदाभेद-विज्ञानं भेदनिषेधकशास्त्रेणापोद्यते। न च युक्त्या सम्भाव्यते स पक्षः।

यन्मते संसारदशायामपि भेदाभेदौ, तेन वक्तव्यं—मोक्षदशायां भेदोऽनुवर्तते, न वेति। यद्यनुवर्तते, 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिशास्त्रविरोधः। न च अभेदांशमादाय तदुपपत्तिः। तस्य ज्ञानात्प्रागपि विद्यमानतया ज्ञानानन्तरं तत्कथनवैयर्थ्यात्। यदि नानुवर्तते, तथासति ज्ञानबाध्यत्वेन, मोक्षदशायामप्यनुवर्तमानतया पारमार्थिकेन स्वात्यन्ताभावरूपेणाभेदेन प्रपञ्चदशायां समानाधिकरणस्य भेदस्य अनृततया, न सिद्धान्ताद्वैषम्यम्।

न च 'कालभेदेन भेदाभेदौ व्यवस्थितौ' इति पक्षोऽपि युक्तिक्षमः। तथा हि-भिन्नस्य अभेद इति वदता वक्तव्यं-'किं स्थितस्यैव जीवस्य मोक्षदशायामभेदः उत नष्टस्य ? नाद्यः-सतो जीवस्य प्राग्भिन्नस्य मोक्षदशायामप्यभेदासम्भवात्। न हि घटपटयोः भिन्नयोःप्राक्सतोः कदाचिदप्यभेदो दृष्टः। नापि नष्टस्य अभेदः सम्भवति, असतो विद्यमानेन ऐक्यासम्भवात्।

अतो जीवस्य ब्रह्मणा नित्यसिद्धोऽत्यन्ताभेद एषितव्यः।

**स्थितप्रज्ञलक्षणस्मृतेश्चेति**। 'स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव। स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम्॥' इत्यादिवचनेषु विद्वान् स्थितप्रज्ञत्वेन निरूप्यते। प्रज्ञायाः स्थितत्वं च सुनिश्चितार्थविषयत्वं निरपवादत्वं चेति भावः।

भेदविषयो निर्बन्धो निरर्थकः; एको ह्ययमात्मा नाममात्रभेदेन बहुधा अभिधीयते - इति। न हि 'सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायाम्' (तै. उ. २।१) इति कांचिदेवैकां गुहां अधिकृत्य एतदुक्तम्। न च ब्रह्मणोऽन्यो गुहायां निहितोऽस्ति, 'तत् सृष्ट्वा तदेवानुप्राविशत्' (तै. उ. २।६) इति स्रष्टुरेव प्रवेशश्रवणात्। ये तु निर्बन्धं कुर्वन्ति ते वेदान्तार्थं बाधमानाः श्रेयोद्वारं सम्यग्दर्शनमेव बाधन्ते, कृतकमनित्यं च मोक्षं कल्पयन्ति, न्यायेन च न सङ्गच्छन्ते - इति ॥ २२ ॥

७ प्रकृत्यधिकरणम्

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥

यथा अभ्युदयहेतुत्वात् धर्मो जिज्ञास्यः एवं निःश्रेयसहेतुत्वात् ब्रह्म जिज्ञास्यमित्युक्तम्। ब्रह्म च 'जन्माद्यस्य यतः' (ब्र. सू. १।१।२)

---

ननु - जीवो यदि अशनायाद्यतीतब्रह्मस्वरूप एव सदा भवेत्, तदा तथा संसारदशायामप्युपलभ्येत, इत्यत आह—न हि सत्यं ज्ञानमिति। बुद्धिरूपगुहा-प्रविष्टत्वेन आवृतस्वरूपत्वात् संसारदशायां तथा नोपलभ्यत इति भावः। ननु-ब्रह्मा-भेदं स्वीकृत्य 'आवृतत्वात् स नोपलभ्यते' इति किमर्थं कल्प्यते, अभेद एव मास्तु, इत्यत आह—न च ब्रह्मणोऽन्य इति। प्रमाणसिद्धस्यार्थस्य हि उपपादनं [1]न्याय्यं, न त्वनुपपत्तिप्रतिभानमात्रेण तत्परित्यागो न्याय्यः-इति भावः। न्यायेन च न सङ्गच्छन्त इति। कृतकस्यापि नित्यत्वे 'यत् कृतकं तदनित्यम्' इति न्यायेन [2]असङ्गमनं इत्यर्थः ॥ २२ ॥

इति वाक्यान्वयाधिकरणम् ॥ ६ ॥

ननु - 'जन्माद्यस्य यतः' इति सूत्रेणैव ब्रह्मणो जगन्निमित्तत्वोपादानत्वे समर्थिते, अतो ब्रह्मोपादानत्वसमर्थनं [3]अत्र किमर्थं क्रियते - इत्याशङ्क्य, 'उपादानत्वमेव शङ्काविशेषनिराकरणपूर्वकं अत्र व्यवस्थाप्यते, तथा च, इदमधिकरणं जन्मादि-सूत्रावशिष्टार्थकथनम्'[4] इति परिहारं वक्तुं, वृत्तं कीर्तयति—यथा अभ्युदयहेतु-

---

1. न्याय्यमिति तदुक्तं श्रीविद्यारण्यस्वामिभिः - न तावत् वेदप्रतिपादिते अनुपपन्नेऽर्थे वैदिकानां बुद्धिः खिद्यते, अपि तु तदुपपादनमेव गोचरयति - इति।

2. आ. असङ्गानमित्यर्थः 3. आ. पुनरत्र 4. आ. कथनपरम्

इति लक्षितम् । तच्च लक्षणं घटरुचकादीनां मृत्सुवर्णादिवत् प्रकृतित्वे कुलालसुवर्णकारादिवन्निमित्तत्वे च समानम्, इत्यतो भवति विमर्शः - किमात्मकं पुनः ब्रह्मणः कारणत्वं स्यादिति ।

तत्र निमित्तकारणमेव तावत् केवलं स्यादिति प्रतिभाति । कस्मात् । ईक्षापूर्वककर्तृत्वश्रवणात् । ईक्षापूर्वकं हि ब्रह्मणः कर्तृत्वं अवगम्यते— 'स ईक्षांचक्रे' (प्र. उ. ६।३) 'स प्राणमसृजत' (प्र. उ.

---

त्वादिति। जिज्ञासासूत्रार्थकीर्तनं जन्मादिसूत्रस्य शास्त्रादौ कर्तव्यतासूचनार्थम्। ब्रह्मजिज्ञासायां प्रतिज्ञातायां हि, प्रमाणादिषु बहुषु विचार्येष्वपि अभ्यर्हितत्वात् स्वरूपमेव प्रथमतो निरू(पितम्) [पणीयम्] । अतो जन्मादिसूत्रं न अध्यायान्ते कृतम् ।

ननु - तर्हि इदमेवाधिकरणं तच्छेषत्वात् तत्समीपे कुतो न कृतम्?

'शास्त्रयोनित्वादित्यारभ्य कृतः सर्वोऽपि विचारः उक्तलक्षणस्यासम्भवादि-दोषनिरासायैव, न तु स्वातन्त्र्येण' इति द्योतयितुम् । प्रकृत्यधिकरणस्य अध्यायान्तकरणे हि कृत्स्नस्याप्यध्यायस्य लक्षणविचारोपक्रमोपसंहारान्तर्गततया उक्तार्थद्योतनं सुखेन भवति ।

शास्त्रयोनित्वादित्यारभ्य कृतस्य ब्रह्मप्रमाणविचारत्वेन स्वत एव प्रतिज्ञा-सङ्गतत्वात् किमर्थं जन्मादिसूत्रोक्तलक्षणमुखनिरीक्षणम् - इति तु न शङ्कनीयम् । 'ब्रह्मविदाप्नोति परम्' 'अधीहि भगवो ब्रह्म' इत्यादौ ब्रह्मनिरूपणमुपक्रम्य, 'सत्यं ज्ञानमनन्तं ब्रह्म' 'यतो वा इमानि भूतानि जायन्ते' इति लक्षणस्यैव प्रथममुपन्या-सेन, 'श्रोतव्यः' इति विचारविधेः 'लक्षणमुखेनैव ब्रह्म विचारणीयम्' इति नियम-पर्यवसानात् ।

ईक्षापूर्वककर्तृत्वश्रवणादिति ।

[1]ननु 'यक्ष्ये' इति ईक्षापूर्वकं यागकर्तुरेव यागं प्रति प्रकृतित्वं दृष्टम् । अनेककारणकत्वं तु जगतो निमित्तोपादानयोरभेदवादिनापि उपेतम्, माया-दृष्टादीनां अन्येषामपि कारणानां उपगमात् । यथा च 'तमीश्वराणां परमं

---

1. पूर्वपक्षानुकूलयुक्तिचतुष्टयं आक्षिप्य समर्थयितुं आरभते - नन्वित्यादिना ।

६।४) इत्यादिश्रुतिभ्यः। ईक्षापूर्वकं च कर्तृत्वं निमित्तकारणेष्वेव कुलालादिषु दृष्टम्। अनेककारणपूर्विका च क्रियाफलसिद्धिः लोके दृष्टा। स च न्याय आदिकर्तर्यपि युक्तः संक्रमयितुम्। ईश्वरत्वप्रसिद्धेश्च। ईश्वराणां हि राजवैवस्वतादीनां निमित्तकारणत्वमेव केवलं प्रतीयते, तद्वत् परमेश्वरस्यापि निमित्तकारणत्वमेव युक्तं प्रतिपत्तुम्। कार्यं चेदं जगत् सावयवमचेतनमशुद्धं च दृश्यते, कारणेनापि तस्य तादृशेनैव भवितव्यं, कार्यकारणयोः सारूप्यदर्शनात्। ब्रह्म च [नैवं] [अनेवं]लक्षणमवगम्यते 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' (श्वे. उ. ६।१९) इत्यादिश्रुतिभ्यः।

---

महेश्वरम्' इत्यादिशास्त्रात् ईश्वरत्वं प्रसिद्धं, तथा एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात् मृदादिदृष्टान्तैश्च उपादानत्वमपि शास्त्रेणैव प्रसिद्धम्। अतः तदपि स्वीकर्तव्यम्। उपादानोपादेययोः सारूप्यानपेक्षा तु नविलक्षणत्वादित्यधिकरणे व्यवस्थापयिष्यते। कथं च 'तदैक्षत बहु स्यां प्रजायेयेति' इत्यादिवचनानां उपादाननिमित्ताभेदप्रतिपादकानां निमित्तत्वमात्रे पर्यवसानम्-

उच्यते—[1]यागादौ गुणे कर्तुरेवोपादानत्वे सत्यपि, घटादिद्रव्यकर्तुः कुलालस्य घटं प्रत्युपादानत्वं न दृष्टम्। अतो 'द्रव्योपादानं यत् तत् कर्तृभिन्नम्' इति नियमस्तावत् सिद्धः-

न च अयं नियमः एकविज्ञानेनसर्वविज्ञानप्रतिज्ञानादिना अन्यथाकर्तुं शक्यते।

न हि एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा सिद्धान्तेऽपि यथाश्रुता आस्थातुं शक्यते। तथात्वे ब्रह्मविदो घटपटादिषु कुत्रापि संशयो न स्यात्। अतो [2]विवक्षाविशेष आस्थेयः। तथा च, यथा 'अमात्यादिषु दृष्टेषु यो धनलाभः स राजदर्शनेनैव भविष्यति' इत्यभिप्रायेण 'राजनि दृष्टे सर्वे दृष्टा एव भवन्ति' इति प्रयुज्यते, तथा ब्रह्मदर्शनेन सर्वकामावाप्तेः 'ब्रह्मणि विदिते सर्वं विदितम्'

---

1. **यागादौ गुणे इति** त्यागपर्यन्तो यागपदार्थः, इच्छापर्यन्तः त्यागपदार्थः, इत्याशयेन 'यागादौ गुणे' इत्युक्तम्।

2. **विवक्षाविशेष आस्थेय इति** आस्थितोऽयमेव विवक्षाविशेषः द्वैतिभिः।

इत्युच्यते। अत एव 'येनाश्रुतं श्रुतं भवति अमतं मतं अविज्ञातं विज्ञातम्' इति अश्रुतत्वादिकीर्तनपूर्वकमेव श्रुतत्वादिकं प्रतिपाद्यते।

नापि - 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्' इति वाक्यशेषे मृत्पिण्डलोहमणिनखनिकृन्तनानां दृष्टान्तानां उपात्तत्वात् दार्ष्टान्तिकेऽपि उपादानतयैव एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा व्युत्पादनीया-इति निर्बन्ध आस्थेयः।

मृत्पिण्डादीनां घटादिवत् मृदाद्यवस्थाविशेषत्वेन घटादिषूपादानत्वाभावात्। कार्यकालेतत्तादात्म्येनैवानुवर्तमानस्य द्रव्यस्य उपादानत्वात्, मृत्पिण्डादेरतथात्वात्। नापि मृत्पिण्डादौ विदिते सर्वं मृन्मयादिकं विदितं भवति। अतो दृष्टान्ताः [1]स्थालीपुलाकन्यायेन व्युत्पादनीयाः। तस्मात् न छान्दोग्यगतैकविज्ञानेनसर्वविज्ञानादिकं उपादानतायां प्रमाणम्।

अत एव मैत्रेयीब्राह्मणगतमपि 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेन इदं सर्वं विदितम्' इत्यादिकं न उपादानतायामात्मनः प्रमाणम्। न चोत्तरवाक्ये तदुपपादकं सर्वात्मत्वं उपन्यस्यते। 'ब्रह्म तं परादात् योऽन्यत्रात्मनो ब्रह्म वेद' इत्यादिषु त्रल्प्रत्ययप्रयोगेण सर्वस्य अत्माधिकरणताया एव व्युत्पादनात्, त्रल्प्रत्ययस्य सप्तम्यर्थ एव स्वारस्यात्, 'इदं ब्रह्म' इत्यादिना, 'इदं सर्वं यदयमात्मा' इत्यन्तेन वाक्यशेषेण सामानाधिकरण्यमपि सर्वस्य आत्मना दृश्यत इति चेत्, उपक्रमानुसारेण तदपि [2]आधाराधेयभावप्रतिपादनपरं लक्षणया भविष्यति।

नापि दुन्दुभ्यादिदृष्टान्तैः तादात्म्यं प्रतिपाद्यते। यदि हि-दुन्दुभिशब्दसामान्यज्ञानएवज्ञायमानानां दुन्दुभिशब्दविशेषाणां तच्छब्दसामान्येन तादात्म्यं दृष्टम्-इत्येवमर्थः तत्र स्वरसतोऽवगम्येत, तदा खलु तद्वाक्यं तादात्म्यव्युत्पादनोपयोगि भवेत्। [3]न तु सोऽर्थः तत्र स्वरसतः प्रतीयते। अध्याहारादिना

---

1. **स्थालीपुलाकन्यायेन**-'यथा अमात्यादिषु दृष्टेषु' इत्यादिना अनुपदोक्तरीत्या।

2. **आधाराधेयभावेत्यादि** द्वैतिभिराश्रितोऽयं प्रकारः। मु. आधाराधेयभावप्रतिपत्तिप्रतिपादन　　3. मु. न च सोर्थः

तदर्थस्य प्रतिपादनीयत्वात् । अयं हि तत्र [1]स्वरसतोऽर्थः प्रतीयते— दुन्दुभौ हन्यमाने दुन्दुभिशब्दप्रतिरुद्धा अन्ये बाह्याश्शब्दा ग्रहीतुं न शक्यन्ते, दुन्दुभौ तदाहन्तरि वा निरुद्धे ते शब्दा गृहीता भवन्ति - इति । अस्ति च अस्यार्थस्य प्रकृतोपयोगः । 'यदि सर्वस्याधिकरणमात्मा तदा तथात्वेन कुतो न गृह्यते' इति शङ्कायां, 'दुन्दुभिशब्दप्रतिरुद्धा बाह्याश्शब्दा यथा न गृह्यन्ते तत्प्रतिरोधे च गृह्यन्ते, एवं इन्द्रियाणां बाह्यविषयप्रवृत्तिरूपप्रतिबन्धकात् न तथात्वेन गृह्यते, तन्निरोधे गृहीतो भविष्यति' [2]इति प्रकृतोपयोगसम्भवात् । न च आत्मनः सर्वाधिकरणत्वं अनुपपन्नमिति शङ्कनीयम् । तच्छङ्कानिवृत्त्यर्थमेव हि 'इदं सर्वं यदयमात्मा' इति वाक्यं प्रवृत्तम् । तेन हि 'सर्वं समाप्नोषि ततोऽसि सर्वः' इतिस्मृत्यनुसारेण सर्वगतत्वं व्युत्पाद्यते । तथा च सर्वगतत्वादात्मनः '[3]सर्वं आत्मनि' इत्युपपद्यते[4] इति । एवं च, अन्यत्रापि सर्वात्मत्वप्रतिपादकवाक्यानां सर्वगतत्वमेवार्थ इति, न तैरपि आत्मनः उपादानत्वं सिध्यति ।

एवं च, यत् पूर्वाधिकरणे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया मुख्यत्वमाश्रित्य मैत्रेयीब्राह्मणस्य परमात्मपरत्वमुक्तं तत् आक्षिप्तं भवतीति, अस्याधिकरणस्य पूर्वेणाधिकरणेन आक्षेपिकी सङ्गतिः द्रष्टव्या ।

'तदैक्षत बहु स्यां प्रजायेय' इत्येतदपि न मुख्यया वृत्त्या व्याख्यातुं शक्यम् । प्राक्सिद्धस्य एकस्य ब्रह्मणः बहुत्वजननयोः असम्भवात् । अतः 'प्र प्रजया पशुभिर्मिथुनैर्जायते 'प्रजायते ह वै प्रजया पशुभिः य एवं वेद' इत्यादौ यथा प्रजादीनामुत्पत्तिः स्वामिनएवोत्पत्तिरिति उपचर्यते, एवं जगत उत्पत्तिः तत्कर्तुरित्युपचर्यत इति नेदं वाक्यं उपादानत्वे प्रमाणम् ।

न च - 'शृङ्गात् शरो जायते' इत्यादौ पञ्चम्या उपादानत्वमर्थः, एवं 'आत्मन आकाशः सम्भूतः' इत्यत्रापि पञ्चमी उपादानत्वविषया स्यात् - इति

---

1. स्वरसतोऽर्थ इति अयमेवार्थः विशिष्टाद्वैतिनामभिमतः ।
2. इतीति उक्तशङ्कानिराकरणेनेति शेषः ।
3. मु, सर्वात्मनीत्युच्यते
4. उपपद्यत इति इत्थमेवोपपादितं द्वैतिभिः ।

**पारिशेष्यात् ब्रह्मणोऽन्यत् उपादानकारणं अशुद्ध्यादिगुणकं स्मृतिप्रसिद्धं अभ्युपगन्तव्यम्, ब्रह्मकारणत्वश्रुतेः निमित्तत्वमात्रे पर्यवसानात् - इति।**

**एवं प्राप्ते ब्रूमः—प्रकृतिश्च-उपादानकारणं च ब्रह्म अभ्युपगन्तव्यं निमित्तकारणं च। न केवलं निमित्तकारणमेव। कस्मात्? प्रतिज्ञा-**

---

वाच्यम्। 'पुत्रात् प्रमोदो जायते' इत्यादौ निमित्तत्वेऽपि पञ्चमीदर्शनेन उपादानार्थकत्वस्यैव नियतत्वाभावात्।

न च - 'यत्प्रयन्त्यभिसंविशन्ति' इति लयाधारत्वं आत्मनः प्रतिपाद्यते, नेदं उपादानादन्यस्य सम्भवति - इति वाच्यम्। 'भूतले घटो ध्वस्तः' इति प्रतीत्या ध्वंसापरपर्यायस्य लयस्य उपादानादन्यत्रापि दर्शनेन तथानियमाभावात्।

न च निर्विकारस्य उपादानत्वं सम्भवति। विकारो नाम उपजनापायशालिन्यो घटपटाद्यवस्थाः, तादात्म्यापृथक्सिद्धत्वाद्यपरपर्यायेण तार्किकाभिमतसमवायस्थानाभिषिक्तेन स्वरूपसम्बन्धविशेषेण विकाराश्रयो हि उपादानम्-इत्युच्यते। यथा मृत्तन्त्वादि। ब्रह्म च 'अस्थूलमनणु' इत्यादिश्रुतिभिः 'कूटस्थमचलं ध्रुवं' इत्यादिस्मृतिभिश्च निर्विकारमवगम्यते। न च विकारस्य मिथ्यात्वात् न निर्विकारश्रुतिविरोध इति वाच्यम्। एवं हि - विकाराश्रयत्वं - उपादानत्वं मिथ्या-इति स्वीकारे, पूर्वपक्षात् [1]को विशेषः स्यात्। [2]नास्तित्वापरपर्यायत्वात् मिथ्यात्वस्य।

अतो न ब्रह्मण उपादानत्वं सम्भवतीत्यभिप्रेत्य उपसंहरति—**पारिशेष्यादिति। स्मृतिप्रसिद्धमिति।** अत्र, ब्रह्मणो निमित्तत्वं स्वीकृत्यैव पूर्वपक्षस्य प्रवृत्तत्वात् सेश्वरसाङ्ख्यस्मृतिपरः स्मृतिशब्दः। स च श्रुतेरप्युपलक्षणम्। श्रुतावपि 'मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्' इति मायाशब्दितस्यैव जडस्य तत्त्वस्य उपादानत्वमुच्यते, ब्रह्मणस्तु तदाधारत्वमात्रमुच्यते।

प्रकृतिश्चेति सूत्रगतचकारार्थमाह—**निमित्तकारणं चेति।**

---

1. आ॰ कोऽपि विशेषो न स्याद्
2. नास्तित्वेत्यादि अत्यन्तासत्त्वं मिथ्यात्वं - इति पूर्वपक्षिणो भ्रमः।

दृष्टान्तानुपरोधात्। एवं हि प्रतिज्ञादृष्टान्तौ श्रौतौ नोपरुध्येते।

प्रतिज्ञा तावत्—'उत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' (छा. उ. ६।१।२) इति। तत्र च एकेन विज्ञातेन सर्वमन्यदविज्ञातमपि विज्ञातं भवतीति प्रतीयते। तच्च उपादानकारणविज्ञाने सर्वविज्ञानं संभवति, उपादानकारणाव्यतिरेकात् कार्यस्य। निमित्तकारणाव्यतिरेकस्तु कार्यस्य नास्ति, लोके तक्ष्णः प्रासादव्यतिरेकदर्शनात्।

दृष्टान्तोऽपि 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति उपादा-

---

प्रतिज्ञा तावदिति। [1]यद्यपि ब्रह्मणि विदिते विशेषाः तत्तदसाधारणस्वरूपेण अज्ञाता एव भवन्ति, तदभिप्रायेणैव 'येनाश्रुतं श्रुतं भवति' इत्युच्यते अश्रुतत्वादिकमपि। ब्रह्मविज्ञानेन श्रुतत्वादिकं तु उपादानतां विना न उपपादयितुं शक्यते। राजविज्ञानेनामात्यादिविज्ञानवाक्यप्रकाराश्रयणे तु, श्रुतत्वादिवचनं अत्यन्तं बाधितं भवेत्। [2]उपादानत्वे तु - कार्यकोटौ ब्रह्मांशस्यापि प्रविष्टत्वात् सर्वशब्दार्थो ब्रह्मापि भवति। घटपटादिकार्यं हि न अवस्थामात्ररूपम्, अपि तु अवस्थावदुपादानस्वरूपमेव। यथा हि, घटसूक्ष्मावस्था मृच्चेति अंशद्वयं उपादानकोटौ निविष्टम्, एवं घटस्थूलावस्था मृद्द्रव्यं चेति अंशद्वयं कार्यकोटिनिविष्टम्। [3]अत एव 'मृदेव घटोऽभवत्' इति लौकिकप्रत्ययः। तथा च, ब्रह्मणि श्रुते मते विज्ञाते, विशेषात्मना अश्रुतममतमविज्ञातमपि कार्यं कारणस्वरूपेण श्रुतं मतं विज्ञातं भवति इति - वाक्यं मुख्यार्थकमेव भवति। उपादानकारणाव्यतिरेकात् कार्यस्येति उपादेयनिविष्टोपादानांशाभिप्रायेणोक्तम्।

दृष्टान्तोऽपीति। प्रतिज्ञा तावत् मृत्पिण्डादिदृष्टान्तैः उपपाद्यते।

---

1. पूर्वपक्षिणा समर्थिताः पूर्वपक्षयुक्तीः क्रमेण निरसितुं आरभते—यद्यपीत्यादिना।

2. उपादानत्वेत्विति 'वाक्यं मुख्यार्थकमेव भवति' इत्यत्रान्वेति।

3. अत एव—उभयत्र उपादानांशाभेदादेव।

**नकारणगोचर एवाम्नायते। तथा 'एकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात्' 'एकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यात्' (छा. उ. ६।१।४,५।६) इति च। तथा अन्यत्रापि 'कस्मिन् नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' (मु. उ. १।१।३)**

---

अतः, सा प्रतीयमाने मुख्येऽर्थे उपपत्तिरूपतात्पर्यलिङ्गवत्त्वात् न लक्षणया अन्यथा व्याख्यातुं शक्यते। न च दृष्टान्ते मृत्पिण्डादीनां घटाद्युपादानत्वं न सम्भवतीति वाच्यम्। अन्वयव्यतिरेकाभ्यां मृत्पिण्डस्य घटं प्रत्युपादानत्वस्य आवश्यकत्वात्। न च निमित्ततया तौ अन्यथासिद्धौ। 'मृत्पिण्ड एव घटः कृतः' इति अबाधितप्रतीत्या तयोः उपादानविषयत्वात्। न च कार्यकाले अनुवृत्तिरहितस्य मृत्पिण्डस्य कथं उपादानत्वं सम्भवतीति वाच्यम्। पिण्डत्वावस्थाया अनुवृत्त्यभावेऽपि तदाश्रयस्य द्रव्यस्य अनुवर्तमानत्वात्। न हि 'कार्यप्राक्काले उपादाने यावत्योऽवस्थाः सन्ति तावतीनां सर्वासां कार्यकाले अनुवृत्त्या भवितव्यम्' इति नियमो वक्तुं शक्यते। तथा सति तन्तूनामपि पटे उपादानता न स्यात्, कार्यप्राक्काले वियुक्तावस्थायाः तन्तुगतायाः कार्यकाले अनुवृत्त्यभावात्। अतः, उपादानोपादेयभावस्थले यथा कार्येण कासाञ्चिदवस्थानां तिरोधानं तथा कासाञ्चिदवस्थानां उपमर्दोऽपीति स्वीकर्तव्यम्। पटेन हि निबिडघट्टितेन तन्तुत्वावस्था तिरोधीयते। तदानीं 'तन्तवः' इति प्रतीतेरभावात्। दध्यादिना तु पयस्त्वाद्यवस्था उपमृद्यते। एवं, घटादिना पिण्डकार्येण पिण्डावस्थोपमर्देऽपि तदवस्थाश्रयस्य द्रव्यस्य कार्यतादात्म्येन विद्यमानत्वात् न उपादानतायां काचिदनुपपत्तिः। एवं लोहमणिनखनिकृन्तनयोरपि द्रष्टव्यम्।

न च - एतावतापि मृत्पिण्डविज्ञानेन सर्वं मृन्मयं [1]कथं विज्ञातं भवेदिति - वाच्यम्। मा भूत्। सर्वशब्दस्य तत्तन्मृत्पिण्डकार्यसाकल्यपरत्वात्।

छान्दोग्यप्रतिज्ञादृष्टान्तावुपन्यस्य मुण्डकगतावुपन्यस्यति—**कस्मिन्नु भगव इति।**

---

1. **कथमिति**—कार्यस्य कार्यान्तराभेदाभावात् इति भावः।

इति प्रतिज्ञा । 'यथा पृथिव्यामोषधयः संभवन्ति' (मु. उ. १।१।७) इति दृष्टान्तः । तथा 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्' इति प्रतिज्ञा । 'स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः' (बृ. उ. ४।५।६,८) इति दृष्टान्तः ।

एवं यथासंभवं प्रतिवेदान्तं प्रतिज्ञादृष्टान्तौ प्रकृतित्वसाधनौ प्रत्येतव्यौ ।

यत इतीयमपि पञ्चमी 'यतो वा इमानि भूतानि जायन्ते' इत्यत्र 'जनिकर्तुः प्रकृतिः' (पा. सू. १।४।३०) इति विशेषस्मरणात् प्रकृति-

---

बृहदारण्यके तौ दर्शयति—**आत्मनि खल्वर इति । स यथा दुन्दुभेर्हन्यमानस्येति** । दुन्दुभिदृष्टान्तो वाक्यान्वयाधिकरणोक्तरीत्या तादात्म्यप्रतिपादनद्वारा प्रतिज्ञोपपादको द्रष्टव्यः । न च - 'ब्रह्म तं परादात्' इत्यत्र आधाराधेयभाव उपन्यस्तः, न तादात्म्यम् - इति वाच्यम् । त्रप्पत्ययस्य सार्वविभक्तिकतया सन्दिग्धार्थस्य वाक्यशेषेण निर्णये द्वितीयार्थतायाः प्राप्तत्वात् । न च लोके सप्तम्यर्थे प्रचुरप्रयोगेण तादर्थ्यमेव शीघ्रं निर्णीयत इति वाच्यम् । वाक्यशेषानुसारिनिर्णयसम्भवे लोकप्रसिद्धेरनादरणीयताया अत्राधिकरणे समर्थितत्वात् । अतः, [1]सन्निहिततादात्म्यवाक्योपयोगितया दुन्दुभिवाक्यस्य तदुपयोगी वाक्यान्वयाधिकरणोक्तरीत्यैव अर्थो ग्राह्यः, न तु पूर्वपक्षोक्तरीत्या, तस्य प्रकृततादात्म्यवाक्यानाकाङ्क्षितत्वात् ।

'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतौ यतइत्यादिपञ्चमीबलादपि ब्रह्मण उपादानत्वमित्याह—**यत इतीयमपीति** ।

ननु - 'जनिकर्तुः प्रकृतिः' इति सूत्रेण, जायमानस्य यो हेतुः तस्य अपादानसंज्ञा विधीयते । ततश्च 'अपादाने पञ्चमी' इत्यनेन जायमाना पञ्चमी निमित्तोपादानसाधारणहेतुत्वमात्रवाचिका, न तु उपादानकारणत्ववाचिका-इति चेत्,

---

1. मु. सन्निहिततादात्म्योपयोगितया

न - प्रकृतिपदस्य 'मायां तु प्रकृतिं विद्यात्' 'तदर्थं विकृतेः प्रकृतौ' [पा. सू. ५-१-१२] 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इत्यादिवेदवैदिकव्यवहारानुसारेण उपादानमात्रार्थकत्वात्, जनिकर्तुःप्रकृतिरितिसूत्रगतस्यापि तदर्थकत्वमावश्यकम्। अपि च - यदि जनिकर्तुरितिसूत्रे प्रकृतिपदं हेत्वर्थकं स्यात्, तदा 'कारके' इत्युनुवृत्तस्य अस्मिन् सूत्रे अन्वय एव न स्यात्। 'कारके' इति हि सप्तमी निर्धारणे। निर्धारणं च तत्रैव भवति, यत्र सामान्यधर्मावच्छिन्नात् विशेषधर्मावच्छिन्नस्य पृथक्करणम्। यथा 'गोषु कृष्णा बहुक्षीरा' इति। न तु सामान्यधर्मावच्छिन्नात् तदवच्छिन्नस्यैव नापि तदधिकधर्मावच्छिन्नस्यैव पृथक्करणे। न हि भवति 'गोषु गौर्बहुक्षीरा' नापि 'गोषु पशुर्बहुक्षीरः' इति। तदिह, यदि प्रकृतिपदेन कारकहेतुर्विवक्षितः यदि वा कारकाकारकसाधारण्येन हेतुमात्रं विवक्षितं, पक्षद्वयेऽप्यनन्वयः। आद्ये अभेदात् 'कारकेषु मध्ये यत् कारकम्, इत्यनन्वयः। द्वितीये तु, 'कारकेषु मध्ये यः कारकाकारकसाधारण्येन हेतुः' इत्युक्तौ अधिकवृत्तित्वात् हेतुत्वस्य अनन्वयः। तस्मात् प्रकृतिपदं उपादानकारणपरं इत्येव स्वीकर्तव्यम्। तथा च, क्रियान्वयिषु कारकशब्दोदितेषु मध्ये यत् उपादानत्वेन क्रियान्वयि तत् अपादानसंज्ञं भवति - इति सूत्रार्थः।

न च एवं सति 'पुत्रात् प्रमोदो जायते' इत्यादौ कथं पञ्चमी।

धूमाद्वह्निमानित्यादौ वा कथं पञ्चमी। न हि प्रकृतिपदस्य हेतुपरत्वेऽपि ज्ञापकहेतौ पञ्चमी लभ्यते।

'तदशिष्यं संज्ञाप्रमाणत्वात्' [पा. सू. १.५३] इति पाणिनिनिर्देशात् तत्र पञ्चमी भविष्यतीति चेत्,

तर्हि 'पुत्रात् प्रमोदो जायते' इत्यादावपि उपादानत्वारोपेण पञ्चमी भविष्यति। आरोपितार्थमादाय हि प्रत्यया उपलभ्यन्ते 'व्यासः पाराशर्यः' इति। अत्र हि अनन्तरापत्ये गोत्रत्वमारोप्य यञ्प्रत्ययः। अथ वा 'विभाषा गुणेऽस्त्रियाम्' इति हेतुपञ्चमीविधायके सूत्रे विभाषेति पृथक् क्रियते। तेन, अगुणे स्त्रियां च [1]प्रयोगानुसारेण हेतौ पञ्चमी भविष्यति।

---

1. **प्रयोगेति** 'धूमादग्निमान्' 'नास्ति घटः अनुपलब्धेः' इत्यादिप्रयोगेत्यर्थः।

लक्षण एवापादाने द्रष्टव्या। निमित्तत्वं तु अधिष्ठात्रन्तराभावादधिगन्तव्यम्। यथा हि लोके मृत्सुवर्णादिकमुपादानकारणं कुलालसुवर्णकारादीन् अधिष्ठातॄनपेक्ष्य प्रवर्तते नैवं ब्रह्मण उपादानकारणस्य सतः अन्योऽधिष्ठाता अपेक्ष्योऽस्ति, प्रागुत्पत्तेः 'एकमेवाद्वितीयम्' इत्यवधारणात्। अधिष्ठात्रन्तराभावोऽपि प्रतिज्ञादृष्टान्तानुपरोधादेव उदितो वेदितव्यः। अधिष्ठातरि हि उपादानादन्यस्मिन्नभ्युपगम्यमाने पुनरपि एकविज्ञानेन सर्वविज्ञानस्यासंभवात् प्रतिज्ञादृष्टान्तोपरोध एव स्यात्। तस्मात् अधिष्ठात्रन्तराभावात् आत्मनः कर्तृत्वं उपादानान्तराभावाच्च प्रकृतित्वम्॥ २३॥

कुतश्च आत्मनः कर्तृत्वप्रकृतित्वे—

## अभिध्योपदेशाच्च॥ २४॥

अभिध्योपदेशश्च आत्मनः कर्तृत्वप्रकृतित्वे गमयति 'सोऽकामयत

---

ननु - महाभाष्ये ('शृङ्गाच्छरो जायते') 'गोलोमभ्यो दूर्वा जायन्ते' इत्यादिषु प्रकृतिसूत्रोदाहरणेषु लोकबुद्धिसिद्धं उपादानकारणात् उपादेयस्य विश्लेषं उपेत्य ध्रुवमपायेऽपादानमित्यनेनैव अपादानसंज्ञाया वक्तुं शक्यत्वात् जनिकर्तुरिति सूत्रं न कर्तव्यम्-इति प्रतिपादितम्। वैवक्षिको विश्लेषो निमित्तादपि सम्भवति। अतः 'ध्रुवमपाये' इत्यनेन 'यतो वा' इत्यादौ निमित्तत्वविवक्षायामपि सम्भवत्यपादानसंज्ञा-इति चेत्,

न-लौकिकानां विश्लेषबुद्धेः उपादानकारण एव प्रसिद्धतया निमित्तकारणस्थले 'ध्रुवमपाये' इति सूत्राप्रवृत्तेः।

नन्वेवमपि विभाषेति योगविभागसिद्धैव इह पञ्चमी भवतु;

न-कारकविभक्तेः प्रत्यक्षसूत्रसिद्धायाः सम्भवे योगविभागलब्धाया उपपदविभक्तेः स्वीकर्तुमयुक्तत्वात्। हेतुपञ्चमीविवक्षायामपि, हेतुत्वस्य निमित्तोपादानसाधारण्येन, सङ्कोचकप्रमाणाभावात् आनन्त्यस्योपपादनीयत्वाच्च उभयानुगतकारणतामात्रमेव प्रकृते पञ्चम्या विवक्षितमस्तु, न तु निमित्ततायामेव सङ्कोचः-इति॥ २३॥

बहु स्यां प्रजायेय' इति 'तदैक्षत बहु स्यां प्रजायेय' इति च। तत्र अभिध्यानपूर्विकायाः स्वातन्त्र्यप्रवृत्तेः कर्तेति गम्यते। बहुस्यामिति प्रत्यगात्मविषयत्वाद्बहुभवनाभिध्यानस्य प्रकृतिरित्यपि गम्यते ॥२४॥

## साक्षाच्चोभयाम्नानात् ॥ २५ ॥

प्रकृतित्वस्यायमभ्युच्चयः। इतश्च प्रकृतिर्ब्रह्म, यत्कारणं साक्षात् ब्रह्मैव कारणमुपादाय उभौ प्रभवप्रलयौ आम्नायेते—'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तंयन्ति' (छा. उ. १।९।१) इति। यद्धि यस्मात् प्रभवति यस्मिंश्च प्रलीयते तत्

---

अभिध्यापदेन ईक्षणं कामश्चेति विवक्षितम्, तावता कार्यानुकूलेक्षणादिशालित्वेन परमात्मा कर्तेति सिध्यति, उपादानत्वं तु कथम् - इत्याशङ्क्याह— **बहु स्यामिति। प्रत्यगात्मविषयत्वादिति।** उपादानगोचरं हि कामनादिकं कार्यानुकूलं भवति। ततश्च जगत्सृष्ट्यनुकूलेक्षणादिविषयत्वं परमात्मन उपादानत्वं गमयति। अपि च, एकस्य परमात्मनः बहुत्वं विवक्षाविशेषेण वक्तव्यम्। तथा च, 'प्रजायेय' 'तत्तेज ऐक्षत' 'इदं सर्वमसृजत' इति वाक्यशेषपर्यालोचनया 'बहुत्वं तेजआद्यात्मना उत्पन्नस्य परमात्मनः' इति लभ्यते। न च अनुपादानत्वे तेजआद्यात्मना ब्रह्मैवोत्पन्नमिति वक्तुं शक्यम्। अतो बहुभवनमपि उपादानतां गमयतीति भावः।

ननु चोक्तम् - इदमुपचारतो भविष्यति पश्चाद्युत्पत्तिरिव स्वामिनः - इति,

अत्रोच्यते—छान्दोग्ये तदैक्षतेत्यादिकं हि एकविज्ञानेनसर्वविज्ञानप्रतिज्ञामुपपादयितुम्। तैत्तिरीयके सोऽकामयतेत्यादिकं आनन्त्योपयोगितया सृष्टिप्रतिपादनपरम्। अतः तत्र निमित्तत्वमात्रविवक्षा न युक्ता। उपादानस्य निमित्तादन्यस्य सत्त्वे हि एकविज्ञानेन सर्वविज्ञानस्य आनन्त्यस्य च असङ्गतत्वापातात्। अतः, इदं वाक्यं आत्मन एव निमित्तत्वमुपादानत्वं च प्रतिपादयति-इत्यवश्योपेयत्वेन लक्षणां न सहते, अयुक्तं च स्वारसिकार्थसम्भवे लक्षणाश्रयणम् ॥२४॥

**यद्धि यस्मात् प्रभवति यस्मिंश्च प्रलीयते तत्तस्योपादानमिति।**

तस्योपादानं प्रसिद्धम्। यथा व्रीहियवादीनां पृथिवी। साक्षादिति च

---

ननु - भूतले घटलयेऽपि न भूतलं घटोपादानम्। न च यस्मात्प्रभवतीति भूतलव्यावृत्तिः। निमित्तकारणेऽपि चक्रादौ [1]लयसम्भवात्।

उच्यते—नेह उत्पत्तिलयप्रतिपादनं निमित्तमात्रेण पर्यवस्यति। 'अन्तवद्वै किल ते शालावत्य साम' इत्युपक्रमात् 'स एषोऽनन्तः' इत्युपसंहाराच्च आनन्त्यव्युत्पादनार्थं 'सर्वाणि ह वा' इत्यादिवाक्यमाम्नायते। न च उपादानस्यान्यत्वे आनन्त्यं व्युत्पादयितुं शक्यम्। अतः इह उत्पत्तिलयप्रतिपादनं निमित्तोपादानत्वोभयपरम्। अत एव 'प्रकृतित्वस्यायमभ्युच्चयः' इत्युक्तम्। [2]आनन्त्यवाक्यैकवाक्यतापन्नतयैव विवक्षितार्थसाधकत्वेन न स्वत एव साधकत्वमिति [3]भावः।

ननु-उक्तार्थविवक्षायां 'उभयाम्नानात्' इत्येव सूत्रयितुमुचितं, किमर्थं साक्षादितिपदम्-इत्याशङ्क्य, अध्याहारेण अधिकार्थान्तरपरतया व्याचष्टे - **साक्षादिति चेति।** तथा च, 'आकाशादेवेत्येवकारेण, साक्षात् - मूलकारणान्तरव्यावर्तनात्' इति अध्याहारेण [4]तदर्थो द्रष्टव्यः। तेन च, 'ननु-ब्रह्मणो निमित्तत्वे उपादानत्वे च सत्यपि कथमानन्त्यम्, तदतिरिक्तस्यापि मायाख्य-

---

1. **लयसम्भवादिति** तथा च चक्रादेरुपादानत्वव्यवहारापत्तिः इति भावः। वस्तुतस्तु, चक्रभूतलादेः न घटलयाधारत्वम्; अपि तु लयाधारमृदाधारत्वमेव, मृच्च उपादानमेव। तथापि अभ्युपेत्य समाधत्ते—**उच्यत** इत्यादिना। तच्च, विशिष्टाद्वैतिभिरुच्यमानस्य भाष्यार्थदूषणस्य अनुषङ्गतो निरासाय।

2. अभ्युच्चयत्वमुपपादयति—**आनन्त्येत्यादिना** साधकत्वमित्यन्तेन।

3. **इति भाव।** इति एतेन -'उभयशब्दस्य सर्गप्रलयपरत्वं न युक्तम्। निमित्तोपादानभेदेऽपि तयोरन्यतरस्य सर्गप्रलयकारणत्वाविरोधात् तदैक्यसाधकत्वाभावात्' इति श्रुतप्रकाशिकोक्तं भाष्यार्थदूषणं—निरस्तप्रायम्।

4. **तदर्थो द्रष्टव्य इति** एतेन—'आकाशादेवेत्यवधारणस्य जगतो बहूपादानकत्वबहुकर्तृकत्वयोरन्यतरशङ्काव्यावर्तकत्वसम्भवेन निमित्तोपादानभेदनिवारकत्वाभावात्' इति श्रुतप्रकाशिकोक्तं अनुक्तोपालम्भनं द्रष्टव्यमिति - सूचितम्। 'बहूपादानकत्वशङ्काव्यावर्तकताया एवोक्तेः। 'आकाशादेवेत्येवकारेण' इत्यध्याहारः, 'मूलकारणान्तरव्यावर्तनात्' इति तु साक्षात्पदलभ्योऽर्थः।

उपादानान्तरानुपादानं दर्शयति आकाशादेवेति । प्रत्यस्तमयश्च न उपादानादन्यत्र कार्यस्य दृष्टः ॥ २५ ॥

## आत्मकृतेः परिणामात् ॥ २६ ॥

इतश्च प्रकृतिर्ब्रह्म; यत्कारणं ब्रह्मप्रक्रियायां 'तदात्मानं स्वयमकुरुत' (तै. उ. २।७) इति आत्मनः कर्मत्वं कर्तृत्वं च दर्शयति । आत्मानमिति कर्मत्वं, स्वयमकुरुतेति कर्तृत्वम् । कथं पुनः पूर्वसिद्धस्य सतः कर्तृत्वेन व्यवस्थितस्य क्रियमाणत्वं शक्यं संपादयितुम् । परिणामादिति ब्रूमः । पूर्वसिद्धोऽपि हि सन् आत्मा विशेषेण विकारात्मना परिणमयामास आत्मानं - इति । विकारात्मना च परिणामो मृदाद्यासु प्रकृतिषु उपलब्धः । स्वयमिति च विशेषणात् निमित्तान्तरानपेक्षत्वमपि प्रतीयते ।

---

स्योपादानान्तरस्य सत्त्वात्, तस्य च ब्रह्मकार्यत्वाभावेन कथं ब्रह्मण आनन्त्यम्' इत्याशङ्का निवर्त्यते । मायाया उपादानत्वेऽपि न मूलकारणत्वम् । स्वरूपलाभार्थमन्यानपेक्षं सत् यत् कार्यं जनयति, तत् मूलकारणम् । मायायाश्च परमात्मनि कल्पितत्वात् न निरपेक्षता । तथा च, वियदादिवत् मायायाः ब्रह्मणि निषेधसम्भवात् आनन्त्ये न काचिदनुपपत्तिः ।

'आत्मन आकाशस्सम्भूतः' इति 'इदं सर्वमसृजत' इति च [1]श्रुत्यैव - साक्षात् उपादानत्वनिमित्तत्वोभयाम्नानात् - इत्यपि सूत्रस्यार्थान्तरं द्रष्टव्यम् ॥ २५ ॥

ननु—स्वयमितिपदेन कृञर्थस्य स्वनिष्ठताद्योतनात् कर्तृत्वं आत्मानमिति द्वितीयया स्वस्यैव कार्यता-इति द्योतनेन प्राप्तस्य [2]कर्तृकर्मभावविरोधस्य परिहाराय, यथा 'देवदत्तः पण्डितमात्मानं करोति' इत्यत्र प्राक्सिद्धस्यैव

---

1. श्रुत्यैवसाक्षादिति साक्षादित्यस्य विवरणं श्रुत्यैवेति, शब्दशक्त्यैवेत्यर्थः। एवकारः अपिसमानार्थकः, तेन आर्थिकमात्रत्वस्य व्यावृत्तिः । आत्मन इति पञ्चम्या उपादानत्वमुक्तम्, असृजतेति आख्यातेन कर्तृत्वम् ।　　2. मु. कर्तृकर्मविरोधस्य

कर्तुर्देवदत्तस्य पाण्डित्यरूपावस्थाश्रयत्वेन कर्मत्वं एवं पूर्वसिद्धस्यैवात्मनो वियदादि विकाराश्रयतया कर्मत्वे वक्तव्ये, उपादानत्वं वियदादिषु सिद्धं भवति-इति परिणामादितिसूत्रांशेन प्रतिपाद्यते। विकारः परिणामः अन्यथाभावः इत्यनर्थान्तरम्। ब्रह्म च 'अस्थूलमनणु' इत्यादिश्रुतिवाक्यैः 'कूटस्थमचलं ध्रुवं' इत्यादिस्मृतिवचनैश्च सर्वविकारवर्जितमवगम्यते। अतः कथं 'परिणामात्' इत्युच्यते।

केचिदाहुः[1]—सृष्टिवाक्यपर्यालोचनया आत्मन उपादानत्वमवगम्यते, उपादानत्वं च अपृथक्सिद्धया विकाराश्रयत्वम्। निर्विकारत्वं च श्रुतिष्वाम्नायते। अतः उभयविरोधपरिहाराय, सृष्टिवाक्येषु आत्मादिपदानां, मायाव्यक्ताजादिपदैः प्रतिपादिता या दैवी शक्तिः तद्विशिष्टेश्वरपरत्वमुपेयते। तथा च विकारित्वाख्यमुपादानत्वं अव्यक्तरूपविशेषणांश एव पर्यवस्यति, विशेष्यभूतस्यात्मनो निर्विकारत्वप्रतिपादनेन तदंशे बाधात् - इति।

तैस्तु, वाचोयुक्त्यन्तरेण सेश्वरसाङ्ख्यपक्ष एव व्यवस्थापितो भवति। प्रकृत्यंशस्यैव उपादानत्वोपगमात्। अपि च [2]सृष्टिवाक्येष्वात्मब्रह्मादिपदानां प्रकृत्याविशिष्टलक्षणापि न न्याय्या। कथं च 'सत्यं ज्ञानमनन्तं ब्रह्म' इति विशुद्धात्मानं प्रस्तुत्य आम्नाते 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इत्यादौ प्रकृतिविशिष्टात्मलक्षणा। लक्षितेऽपि विशिष्टात्मनि पञ्चम्यर्थस्योपादानत्वस्य विशेष्यांशे स्वरसतोऽन्वितस्य विशेषणांशपर्यवसानकल्पनमपि न स्वरसम्। तस्मात्, न इयं कल्पना श्रुतिस्वारस्यानुरोधिनी।

[3]अन्ये तु - यथा प्रकृतेरुपादानत्वं एवमात्मनोऽप्युपादानत्वम्। उभयोपादानत्वस्य श्रुतिसिद्धत्वात्। परं तु - आत्मनो विकाराश्रयत्वं परम्परया, प्रकृतिः साक्षादेव विकारिणी, आत्मा तु विक्रियमाणप्रकृत्याश्रयतया विकारी। तथा च

---

1. केचित्—विशिष्टाद्वैत्येकदेशिनः। उक्तञ्च श्रुतप्रकाशिकायां परिणामादिति सूत्रव्याख्यानावसाने 'भेदाभेदपक्षेऽपि भोग्यांशेन परिणाम इति वक्तव्यम्, अत्र तु विशेषणांशेन परिणाम उच्यते' इति।

2. मु. सृष्ट्यादिवाक्येषु

3. अन्ये–विशिष्टाद्वैतसिद्धान्तिनः।

परिणामादिति वा पृथक्सूत्रम् । तस्यैषोऽर्थः—इतश्च प्रकृतिर्ब्रह्म,

---

श्रुतिः—'मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्' इति । न च तथासति परमात्मन उपादानत्वं न स्यादिति वाच्यम् । न हि 'अपृथक्सिद्धया विकाराश्रयत्वं उपादानत्वम्' इत्यत्र साक्षात्सम्बन्धेन विकाराश्रयत्वं विवक्षितम् । येन परम्परया विकाराश्रयस्य उपादानत्वं न स्यात् । गौरवेण साक्षात्त्वस्य [1]अविवक्षणात् । निर्विकारश्रुतिस्तु साक्षाद्विकारित्वं निषेधति । अतो नोभयवचनविरोधः—इति ।

एवं हि 'आत्मन आकाशः सम्भूतः' इत्यादिवचनानां स्वारस्यं परित्यक्तमेव स्यात् । उत्सर्गतः साक्षात्सम्बन्ध एव हि तत्र प्रतीयते । न च औत्सर्गिकस्य तस्य 'मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्' इति वचनानुसारेण मायाद्वारकत्वमास्थेयमिमि वाच्यम् । न हि तत्र 'उपादानत्वं मायाद्वारकम्' इत्यवगम्यते, अपि तु प्रकृतिमायाश्रयत्वमात्रम् । ततश्च, प्रतिज्ञाद्यनुरोधादुपादानत्वं मायांत्वितिश्रुत्यनुरोधात् प्रकृत्याश्रयत्वं च - इत्यस्तु । न तु उपादानत्वमपि परम्परया आश्रयणीयम् । न च निर्विकारत्वश्रुत्यनुसारेण उत्सर्गतः प्राप्तं साक्षात्त्वं परित्यज्यत इति वाच्यम् । श्रुतिद्वयस्वारस्यानुरोधेन विकारमिथ्यात्वकल्पनोपपत्तेः ।

अपि च - श्रुतिप्रतिपादितयोर्विकारित्वनिर्विकारत्वयोः श्रुत्याद्यनुसारेणैव विरोधपरिहारसम्भवे न श्रुत्यस्वारस्यापादकं किञ्चित् स्वयं कल्पनीयम् । श्रुतिश्च विकारमिथ्यात्वं प्रतिपादयति वाचारम्भणमित्याद्या । एवं पुराणमपि 'ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः । तमेवार्थस्वरूपेण भ्रान्तिदर्शनतस्स्थितम् ॥' इत्यादिना । ततश्च, विकारस्य मिथ्यात्वात् न स्वाभाविकनिर्विकारत्वविरोधिता - इत्येव श्रुतिस्मृत्यनुयायिभिः परिहार आस्थेयः ।

पूर्वं आत्मकृतेरितिहेतुसाधकतया परिणामादितिसूत्रांशो व्याख्यातः । इदानीं आत्मन उपादानतायामेव तं हेतुं व्याचष्टे—**परिणामादिति वा पृथक्सूत्रमिति** ।

---

1. मु. अनिवेशात्

यत्कारणं ब्रह्मण एव विकारात्मना परिणामः सामानाधिकरण्येन आम्नायते 'सच्चत्यच्चाभवत् निरुक्तं चानिरुक्तं च' (तै. उ. २।६) इत्यादिना-इति ॥ २६ ॥

## योनिश्च हि गीयते ॥ २७ ॥

इतश्च प्रकृतिर्ब्रह्म, यत्कारणं ब्रह्म योनिरित्यपि पठ्यते वेदान्तेषु 'कर्तारमीशं पुरुषं ब्रह्म योनिम्' (मु. उ. ३।१।३) इति । 'यद्भूतयोनिं परिपश्यन्ति धीराः' (मु.उ.१।१।६) इति च । योनिशब्दश्च प्रकृतिवचनः समधिगतो लोके 'पृथिवी योनिरोषधिवनस्पतीनाम्' इति । स्त्रीयोनेरप्यस्त्येव अवयवद्वारेण गर्भं प्रत्युपादानकारणत्वम् । क्वचित् स्थानवचनोऽपि

---

**सच्चत्यच्चाभवदिति ।** ननु-उपादानेन उपादेयस्य तादात्म्यं उत्पत्त्यैव । इह तु सृष्ट्यनन्तरमनुप्रविष्टस्य तादात्म्यमाम्नायते । 'इदं सर्वमसृजत । यदिदं किञ्च । तत् सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य, सच्च त्यच्चाभवत्' इति श्रुतेः । अतः कथं अनया श्रुत्या उपादानत्वं प्रतिपादनीयम् - इति चेत्,

उच्यते—उपक्रमे हि 'सोऽकामयत बहु स्यां प्रजायेयेति' इति स्रज्यात्मना बहुभावः परमात्मनोऽवगतः, स एव 'इदं सर्वमसृजत, यदिदं किंच' इत्यादिना स्पष्टं प्रतिपाद्यत इति वक्तव्यम् । तथा च इदंसर्वमसृजतेत्यनेन अपञ्चीकृतभूतात्मना बहुभाव उक्तः । तदेवानुप्राविशदित्यत्र तु पञ्चीकृतमहाभूतात्मना । न हि व्यापिनः परमेश्वरस्य तत्तद्वस्तुतादात्म्यं विना अन्यः प्रवेशः सम्भाव्यते । सच्चत्यच्चाभवदिति तु भौतिकात्मना बहुभावपरम् । एवं च मुख्ययैव वृत्त्या सामानाधिकरण्यसम्भवे न 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति स्मृतिमनुसृत्यैव गौणं सामानाधिकरण्यं आश्रयणीयम् । प्रत्युत, स्मृतावेव समित्युपसर्गश्रवणात् 'सम्यक्-तादात्म्येन सर्वमाप्नोषि' इत्येव व्याख्यातुमुचितम् ॥ २६ ॥

**स्त्रीयोनेरपीति ।** न च—तावता योन्येकदेशस्य शोणितस्यैव गर्भं प्रत्युपादानता भवेत्, न त्ववयविन्या योनेः-इति वाच्यम् । यथा हि तन्त्वेकदेशनिष्पन्नस्य खण्डपटस्य तन्तूपादानत्वम्, एवं योन्येकदेशनिष्पन्नस्यापि

